# श्रीमद्भागवतम् ।

## दशमस्कन्धः ।

## उत्तरार्द्धम् ।

### पञ्चाशत्तमोऽध्यायः ।

श्रीशुक उवाच ।

अस्तिः (१)प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ! ।
मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥ १ ॥
पित्रे मगधराजाय जरासन्धाय दुःखिते ।
वेदयाञ्चक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २ ॥
स तदप्रियमाकर्ण्य शोकामर्षयुतो नृप ! ।
अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि सम्वृतः ।
यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ॐ नमः कृष्णाय ।

ततः पञ्चाशत्तमे तु जरासन्धभयादिव ।
कारयित्वाऽम्बुधौ दुर्गं तत्रिनाय निजं जनम् ॥
कपटान् कपटैरेव हत्वा दैत्यानयं प्रभुः ।
अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥

अस्तिप्राप्तिसंज्ञिके ईयतुर्जग्मतुः ॥ १—२ ॥
तस्मै शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥ ३ ॥
न्यरुणदरुरोध ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णचैतन्यचन्द्राय नमः ।

महाविपन्मध्ये पतितं व्याकुलं शरणागतम् ।
चैतन्यदेव भगवन् पारं प्रापय सत्वरम् ॥ १ ॥

गोकुलं पाण्डवकुलञ्च सान्त्वयितुमुभयत्र गन्तुमर्हत्यपि श्रीभगवति नरलीलत्वावस्तत्रायाय महायुद्धादिकं ... आरभ्यते—अस्तिरित्यादिना । ... एतर्हि भीति खलु क्षत्रियकुलाणां समीपकसत्त्वया ज्ञायत एवेति भावः । दुःखेनार्ते ... सम्प्रति पतिगृहे ममत्वाभावः सूचितः । स्मेति क्वचित् पाठः ॥ १ ॥

मगधेशस्य राज इति तावद्दूरगमनं बोधयति । दुःखिते दुःखाभिव्यञ्जकरोदनादियुक्ते ॥ २ ॥

नृपः सर्वनरपतिः सम्राडित्यर्थः । नृपेति क्वचित् पाठः । अयादवीं न विद्यन्ते यादवा यस्यां तादृशीं अयादवीम् इति पाठः क्वचित् ॥ ३ ॥

अक्षौहिणीसंख्येयं । त्रयाणामपि नवकग्राम ... पदातय । । (१०९३५०) तेषु षट्शत षट्सहस्रधा अश्वाः (६५६१०) नागा रथा अपि । ... नागेन्दु हक् संख्या (२१८७०) इत्येषाऽक्षौहिणी

---

(१) प्राप्तीतीति विज० पा० वीर० पा० ॥

स्मृतेति । यदुराजधानीमिति तस्या निरोधस्य च महत्त्वे हेतुः सर्वदिङ्निरोधे विशेषः श्रीहरिवंशे जरासन्धोक्तौ—

"सर्वतो नगरी चेयं जानीधैः परिवार्य्यताम् ।
अयांयन्त्राणि मुञ्चन्तो क्षेपणीयाश्च मुद्गराः ॥
उद्गृह्णापि निपात्यन्तां प्रासा वै तोमरास्तथा ।

किञ्च मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः ।
काश्मीरराजो गोनर्दः करूषाधिपतिस्तथा ॥
द्रुमः किंपुरुषश्चैव पार्वतीयो ह्यनामयः ।
नगर्याः पश्चिमद्वारं शीघ्रमारोधयन्त्विति ॥
पौरवो वेणुदारश्च वैदर्भः सोमकस्तथा ।
रुक्मी च भोजाधिपतिः सूर्याक्षश्चैव मालवः ॥
विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्यवान् ।
छागलिः पुरमित्रश्च विराटश्च महीपतिः ॥
कौशाम्ब्यो मालवश्चैव शतधन्वा विदूरथः ।
भूरिश्रवास्त्रिगर्तश्च बाणः पञ्चनदस्तथा ॥
उत्तरं नगरद्वारमेते दुर्गसहा नृपाः ।
आरुह्य चापि मर्द्दन्तां वज्रप्रतिमगौरवाः ॥
उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः ।
एकलव्यो बृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः ॥
उत्तमौजाश्च शल्यश्च कौरवाः केकयास्तथा ।
वैदेहो वामदेवश्च साङ्केतश्च सिनीपतिः ॥
पूर्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः ।
अहञ्च दरदश्चैव चेदिराजेन सङ्गताः ।
दक्षिणं नगरद्वारं धारयिष्याम दंशिताः ॥

इति ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ।

॥ १—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीमते रामानुजाय नमः ।

व्याख्यातं दशमस्कन्धपूर्वार्द्धं मे यथाश्रुतम् ।
यथामतीतरत्तुष्यन्तु क्षाम्यन्तु गुणवत्तमाः ॥

अथ जरासन्धजयात्मकं विचेष्टितं वर्णयितुकामः तावज्जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति—अस्तिरिति सार्द्धद्वयेन । हे भरतर्षभ ! अस्तिः प्राप्तिश्चेति द्वे कंसस्य भार्ये ते भर्त्तरि कंसे हते सति भगवतोऽनिशोच दुःखार्त्ते दुःखपीडिते भूत्वा पितुः जरासन्धस्य गृहानीयतुर्जग्मतुः ॥ १ ॥

ततो मगधदेशाधिपतये जरासन्धाय स्वपित्रे दुःखिते अस्तिप्राप्ती सर्वमात्मनोः वैधव्यकारणं निवेदयाञ्चक्रतुः ज्ञापितवत्यौ ॥ २ ॥

स जरासन्धस्तद्दुहितृभ्यामावेदितमप्रियमाकर्ण्य शोकामर्षाभ्यां युतः महीं यादवाङ्कुररहितां कर्त्तुं परममुद्यमं प्रयत्नं चक्रे ॥ ३ ॥

तदेवाह—अक्षौहिणीति । त्रयोविंशत्याक्षौहिणीबलपरिवेष्टित इत्यर्थः । यदुराजधानीभूतां मथुरां चतुर्दिक्षु निरुद्धवान् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीमदानन्दतीर्थपादेभ्यो नमः ।

सच्छास्त्राभ्यासच्छलेनैव कतिपयेष्वध्यायेषु । जरासन्धेन सह सङ्ग्रामं वर्णयति—तत्वनिर्णयेन भक्तिविशेषाभ्याम् उद्बुद्धाभ्यां विहितनिर्वाणा आस्तिर्भवति तत्र प्रसञ्जयितुमाह—अस्तीति । अस्तिप्राप्तिशब्दाभ्यां अविद्याया द्विरूपे संशयविपरीतज्ञाननामनी उच्येते तत्र संशये ज्ञानसत्तामात्रमस्ति विपरीते तदपि नास्तीत्यस्तिप्राप्ती "असभुवि" "भू सत्तायाम्" इति धातोः । यद्वा, निश्चायकप्रमाणाभावेन निश्चयज्ञानाभावात्संशयविपरीतज्ञानवाच्यकावेतौ "असु निरसने" इति धातोः कंसस्य महिष्यौ "कसि हिंसायाम्" इति धातोः हिंसात्मको धर्मस्य महिमबन्धकत्वेन सम्बन्धिन्यौ "षिञ् बन्धने" इति धातोः कृष्णाख्या धर्मेण भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे हते विनाशिते स्वपितुः स्वपोषकस्य जरासन्धस्य "जॄ वयोहानौ" इति धातोर्वयोहानिहेतुभूता शैवी शास्त्रसंहिता जरेत्युच्यते तस्यां सन्धा मरणापत्तावपि न मुञ्चामीति प्रतिज्ञा यस्य स तथा तस्य गृहान् प्रमेयविशेषानीयतुः प्राप्य स्थिते शब्दशक्तिविचक्षणैः पुरुषैरध्यात्मविषयतया अत्रार्थो ज्ञातव्य इति ग्रन्थबाहुल्यभीरुणा मया न प्रदर्श्यत इति ॥ १ ॥

आत्मवैरूप्यकारणम् आत्मवैधव्यादिनिमित्तम् अन्यत्र प्रतिपादनासामर्थ्यम् ॥ २ ॥

"नॄ नये" इति धातोः नॄन् नयान् शैवशास्त्रोक्तान् पिबतीति नृपः शास्त्रज्ञः यः प्रतिसंभूमेत्यभिधानात् यो विष्णुः स यादवो दुष्टदण्डकस्तं यान्ति शरणं गच्छन्तीति यादवाः वैष्णवाः तद्रहिताम् ॥ ३ ॥

एकस्थानमारभ्य षोडशस्थाने या सङ्ख्या साऽक्षौहिणीत्युच्यते इति अन्ये गजानां सप्तसहस्राणि द्विशती साशीतिः एवं रथानामपि सङ्ख्या अश्वानामेकविंशतिसहस्री पञ्चशती विंशतिश्च पदातीनां पञ्चत्रिंशत्सहस्रं विंशतिश्चेत्यक्षौहिणीसङ्ख्यां ब्रुवते एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दशसङ्ख्यापत्तिर्नाम त्रिगुणिता पत्तिः सेनामुखमिति भिन्नं वा एवं सेनामुखस्त्रिगुणो गुल्मनामा तत्रिगुणो गणनामा गणस्त्रिगुणा वाहिनीनामा वाहिनीत्रिगुणा पृतना तत्रिगुणा चमूः त्रिगुणिता चमूरनीकिनी दशानीकिनीत्यक्षौहिणीति केचित् ।

एकेभैकरथाऽत्र्यश्वा पत्तिः पंच पदातयः ।
पत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिणी—"इत्यमरः ॥ ४—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

श्रीगोपीजनवल्लभाय नमः ॥

उत्तरार्द्धे हरेर्लीला यतः सर्वात्मना कृता ।
यदर्थमवतीर्णोऽसौ सा निरूप्या विभागशः ॥

निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्।
स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥
चिन्तयामास भगवान् हरिः कारणमानुषः।
तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥
हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम्।
मगधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥
अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः।
मागधस्तु न हन्तव्यो भूयः कर्त्ता बलोद्यमम् ॥ ८ ॥

धार्मिक जरासन्ध को धर्मयुद्ध से जीता इस कथा का वर्णन करतेहैं —

श्रीशुक उवाच।

श्रीशुकदेव जी बोले, कि–हे भरतवंशी लोगों में श्रेष्ठ! हे राजन्! अपने भर्त्ता कंस के मरने पर अस्ति और प्राप्ति जो दोनों कंसराजा की रानी रहीं सो बड़ी दुःखित होयकें; अपने पिता जरासन्ध के गृहों को जाती भई ॥ १ ॥

और वहां जाकर मगध देश के राजा जरासन्ध जो दुःखित अपने पिता उनको अपने विधवापने का सब कारण निवेदन करती भई ॥ २ ॥

हेराजन्! वह जरासन्ध राजा उस अप्रिय समाचार को सुनकर बड़ा शोक और अमर्ष (असहनता) युक्त होकर पृथिवी को बिना यादवों की करने के लिये बड़ा उद्यम करता भया ॥३॥

और तेईस २३ अक्षौहिणी सेनाको लेकर यादव लोगों की राजधानी जो मथुरा तिसको चारों तरफ से घेर लेता भया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य बलं सैन्यमुद्वेलं लङ्घितमर्यादं सागरमिव तेन तस्य बलेन संरुद्धम् ॥ ५ ॥

किम्बलमेव हन्मि न मागधं मागधं वा हत्वा बलं गृह्णामि यद्वा, समागधं सर्वं हन्मीति [चिन्]तयामास। ननु, प्रथमं कथं जेष्यामीत्येवं चिन्तयितुं युक्तं तत्राह—कारणमानुष इति। भूभारावतारकारणेन मानुषो ननु तत्त्वत इति ॥ ६ ॥

एवं त्रिधा विचिन्त्य प्रथमं पक्षं निर्धारितवांस्तदाह—चतुर्भिः हनिष्यामीति ॥ ७ ॥

बलोद्यमं कर्त्ता करिष्यतीति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

निरीक्ष्येति युग्मकम्। कारणं सर्वकारणं यत्तत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वे सर्वज्ञानादि शक्तिमत्त्वं तस्य देशस्य कालस्य चानुरूपं महासैन्येन सर्वतः श्रीमधुपुर्य्या निरोधादवध्यमेव योग्यं तत्राप्यधुना विलम्बो विनैवेत्यर्थः ॥ ५-६ ॥

तदेवाभिव्यनक्ति– हनिष्यामीति सार्द्धकेन। बलं सैन्यं हि यतः सम्यक् आहितमर्पितं भारस्वरूपं सम्यक् सर्वतः समाहृत्य प्रोत्साह्य चानीतं वश्यानां वशेस्थितानाम् अत एव पाण्डवाः श्रीभीष्मश्च नायाता इति ज्ञेयम् ॥ ७ ॥

भटादिभिर्या अक्षौहिण्यः आभिरेव ननु तासां प्रत्येकं सङ्ख्यातमित्यन्तं बाहुल्यमुक्तं मागधस्त्वित्यर्द्धकम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदा श्रीकृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन बलेन संरुद्धं स्वपुरं भयेन व्याकुलं स्वजनं च निरीक्ष्य चिन्तयामासेति सम्बन्धः ॥ ५ ॥

हरिः कारणमानुष इति हेतुगर्भं यद्यपि न तस्योपद्रवः सर्वकारणत्वेन न तद्बलसंहारे प्रयासश्च तथापि आश्रितार्तिहरत्वात्सर्वकारणत्वेपि मानुष्यत्वात् गृहीतमनुष्यरूपतत्सजातीय चेष्टितत्वान्मनुष्यवच्चिन्तयामास चिन्तयित्वा निश्चितवानित्यर्थः। किङ्कथमित्यत्राह– तद्देशेति। तद्देशकालानुगुणं यथा भवति तथा स्वावतारप्रयोजनं विचार्य्याध्यवास्यत् ॥ ६ ॥

विचार्य्य निश्चितमेव दर्शयति– हनिष्यामीति चतुर्भिः। वंशे भवाः वंश्याः तेषां सर्वेषां भूभुजां राज्ञामेतद्भूमेर्भाररूपं समाहितं समुदितं मागधेन जरासन्धेन आनीतमत्र प्रापितम् ॥ ७ ॥

अन्योपि वराहादिदेहः। धर्मरक्षार्थं प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कारणं सर्वकारणं यत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वेऽपि सर्वज्ञानादिशक्तिमत्त्वं दर्शितम् ॥ ६ ॥

वश्यानां वशे स्थितानाम् अत एव भीष्मपाण्डवाश्च नायातानिति ज्ञेयम् ॥ ७—१० ॥

---

एतदर्थोऽवतारोऽयं भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥
अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया ।
विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥
( १ ) ( एवं ध्यायति गोविन्दे मगधाधिपतिर्बली ।
मथुरां सवनोद्यानां रुरोध बहुसैनिकः ॥ ( क )
कलिङ्गश्चेकितानश्च दन्तवक्त्रविदूरथौ ।
उल्मुको वेणुदारी च शाल्वश्चैवश्च दुर्मतिः ( ख )
पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया ।
विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा ( ग )
एकलव्यो वाह्लिकश्च तथा पञ्चनदेश्वरः ।
रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः ( घ )
युधामन्युर्बृहत्क्षत्रः शाल्वो भूरिश्रवास्तथा ।
उत्तमौजाश्च रुक्मी च द्रुमश्चैव सुदक्षिणः ( ङ )

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुष्याणामयं निग्रहानुग्रहकर्ता चेति मा कथं धार्मिका अनुगृहीताः । अधार्मिकाः निगृहीताश्च स्युरिति चिन्तयामासेत्यर्थः ॥ ५—६ ॥
बलं सैन्य तद्दमं कर्ता करिष्यति ॥ ७ ॥
अन्योऽपि यथाहार्थिदेहः । धर्मरक्षायै प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते ॥ ८ ॥

भाषा टीका।

श्रीकृष्ण भगवान् भी वेला ( तट ) को बांधने वाले समुद्र सदृश उसकी सेना को देखकर, और उस सेना से घिरे भये अपने नगर ( मथुरा ) को देखकर, तथा अपने यादव लोगों को भयसे व्याकुल देखकर ॥ ५ ॥

कारणके लिये मनुष्य रूपधारण करने वाले भगवान् श्रीहरि उस देश कालके अनुगुण अपने अवतार के प्रयोजन का चिन्तन करते भये ॥ ६ ॥

भगवान् मनमें विचार करने लगे, कि—भूमि में इकट्ठी भई भाररूप यह अपने वशमें रहने वारे राजाओं की सेना को मगध देश का राजा जरासन्ध जो लाया है इसको मैं मारूंगा ॥७॥

जो सेना योधा, अश्व, रथ, और हस्तियों से मिलकर अक्षौहिणी की संख्या से गिनी जाती है, बस इस बड़ी सेना मात्र को मारना उचित है, और जरासन्ध को न मारना चाहिये, कि जिससे यह फिर भी सेना इकट्ठी करने का उद्यम करेगा ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वत एव हन्तव्यस्तत्राऽऽह एतदर्थ इति । एतदेवार्थं स्पष्टयति—भूभारहरणायेति ॥ ९ ॥
अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह—अन्योऽपीति । प्रभवत उद्भवतः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतदर्थ इति एतस्मा इत्यर्थः । कस्मै तत्राह–भूभारहरणायेत्यादि अवतारः प्रपञ्चे प्राकट्यं अयमिति तै ( स्वामि ) सम्मतः पाठः उत्तरावतारिकानुरोधात् हीति क्वचित् मे मया भूभारहरणं स्पष्टयति, संरक्षणायेति । संशब्देन स्वशक्तिप्रवर्त्तनादिना लोकद्वयेऽपि रक्षा सूचिता ॥ ९ ॥
अन्योऽपि किमुत सर्वैश्वर्यादिपूर्णोऽयमित्यर्थः सम्भ्रियते प्रकाश्यते इत्यर्थः । तथा च श्रीगीतासु "यदा यदा हि धर्मस्य ग्लानिर्भवति" इत्यादि ॥ १० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रभवतः प्रकर्षेण भवतः ॥ १०–१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु. किं वृथा बलहनने न समर्थः यो हेतुः स एव हन्तव्यः इत्याशङ्क्य तदवतरणं नार्थवदित्यादिरभिप्रायवानाह—

( १ ) इमे श्लोकाः विजयध्वजीयेऽधिकपठ्यन्ते ।

एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥११॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
दृष्ट्वा तानि हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥१२॥
पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ! ।
एष ते रथ आयातो दयितान्यायुधानि च ॥१३॥
( १ ) यानमास्थाय जह्येतद्व्यसनात्स्वान् समुद्धर ।
एतदर्थं हि नौ जन्म साधूनामीश ! शर्मकृत् ॥१४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आवयोरपि क्रम एव एवं बुद्ध्यवतारे केवलधर्मरक्षा प्रयोजनं कल्क्यवतारे अधर्मनिवृत्तिरेव परशुरामावतारे दुष्टनिग्रह एव वराहादौ भूभारहरणमेव । पृथ्व्यवतारे वर्णाश्रमपालनमेव । एवं सर्वेषु यथायथमुक्तं सर्वाणि तु भगवतेति शक्तिश्च स्वतन्त्रा अपेक्षा, तथैतस्मिन् कालकर्मादिनिरपेक्ष स्वतन्त्रतया । आश्रया वा तिष्ठन्तु किमित्येवंविधावतारणेत्याशङ्कायामाह—काले प्रभवत इति । धर्माधर्मौ कस्मिन्नेव काले प्रभवतः अतो यदा अनपेक्षितः तदा अवतीर्य निराकरणं आपन्नं वा कर्मैतं कालस्तु जनक एवेति न तेन तन्निराकरणं नियतस्योभयशक्तित्वाभावात् तस्मादेतदर्थं देवकीपुत्रत्वमेव च भक्तानुरोधेन कर्तव्यमिति ॥१०॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतदर्थोऽवतारः कृतः अर्थं विवृणोति—भूभारेति । अन्येषामसाधूनाम् ॥ ९ ॥

अन्योऽपि देहो वाराहादिः ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्यवर्चसौ प्रकाशात्मकौ ससूतौ सारथिसहितौ परिच्छदः परिकरं ध्वजकवचादिस्तत्सहितौ उपस्थितौ तद्विच्छयैव निर्जितलोकादागत्य समीपे स्थितौ ॥ ९ ॥

दिव्यान्यमानुषाणि पुराणानि पुरातनानि नवानि । अनादिसिद्धानीत्यर्थः । आयुधावतरणप्रकारः । हरिवंशे—
ततः खात्पतन्ति स्म दिव्यान्याहवसङ्कुले ।
लेलिहानानि दीप्तानि महान्ति सुहृदानि च ॥
क्रव्यादैरनुयातानि मूर्तिमन्ति गृहन्ति च ।
तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशम् ॥
दिव्यस्रग्दामधारीणि त्रासयन्ति च राक्षसान् ।
प्रभया भासमानानि पतमानानि चाम्बरात् ।
हलं संवर्तकं नाम सौनन्दं मुसलं तथा ॥
धनुषां प्रवरं शार्ङ्गं गदा कौमोदकी तथा ।
चत्वार्येतानि तेजांसि विष्णुप्रहरणानि च ।
ताभ्यां समवतीर्णानि यादवाभ्यां महामृधे
जग्राह प्रथमं रामो ललामप्रतिमं हलम् ।
सर्पन्तमिव सर्पेन्द्रं दिव्यमालाकुलं मृधे ।
सौनन्दं च तत श्रीमान् निरानन्दकरं द्विषाम् ।
सव्येन सात्वतां श्रेष्ठो जग्राह मुसलोत्तमम् ।
दर्शनीयं च लोकेषु धनुर्जलदनिस्वनम् ।
नाम्ना शार्ङ्गमिति ख्यातं कृष्णो जग्राह वीर्यवान् ।
देवैर्निगदितार्थस्य गदा तस्यापरे करे ।
निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमोदकीति सा इति ॥
प्रकरणान्तरे । तथैव श्रीसुदर्शनाद्यागमनं प्रोक्तं श्रीपाञ्चजन्यप्राकट्यं प्राक् प्रदर्शितमेव ॥ १० ॥

भाषा टीका ।

और इसी प्रयोजन के लिये तो यह हमारा अवतार है कि—पृथिवी के भार को उतारना, और साधुजनों की रक्षा करनी, तथा साधु जनों को दुःख देने वाले जो असुर हैं तिनका वध करना ॥ ९ ॥

और भी धर्म की रक्षा के लिये हम देह धारण करते हैं तथा किसी काल में होने वाले अधर्म के विराम ( नाश ) करने के लिये भी देह धारण करते हैं ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ससूतौ सारथिसहितौ परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११-१२ ॥

त्वमेवावन् रक्षको नाथो विद्यते येषां ते त्वावन्तस्तेषाम् ॥ १३—१४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमिति सार्द्धकम् । गां पृथ्वीं विन्दतीति गोविन्द इति

( १ ) यानमिति श्लो० द्वि० ।

निर्गत्य सदनात्कृष्णो वृष्णीनाहूय सर्वशः ।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम् ।
कृष्णा निर्यातयामास पूर्वद्वारेण भारत ! ॥ × ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च ।
हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् ।
हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ७ ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः ।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥
उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः ।
शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ॥ ⊛ ॥
आह दारुकमातीनं रथाग्रे माधवः स्मयन् ॥

श्रीभगवानुवाच ।

रथं वाहय धर्मज्ञ ! यत्र तौ चैद्यमागधौ ।
तर्पयामि नृपान् सर्वान् सायकैर्युद्धदुर्मदान् ॥

श्रीशुक उवाच ।

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत् ।
व्यनदत्सिंहनादं च गोविन्दः परवीरहा ॥
शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत् ।
ततोऽभूत् परसैन्यानां हृदि चिन्ता सवेपथुः ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आवश्यकतार्थमेव सैन्यस्य हननस्य च वैशिष्ट्यमाह— अर्द्धेन त्रयोविंशतिरनीकानि अक्षौहिण्यः तदाख्यं तावत्सङ्ख्यमित्यर्थः । यद्वा त्रयोविंशतिः अक्षौहिण्यः तत् सङ्ख्याकमनीकं सैन्यमित्याख्या यस्य तं भावरूपं दाशार्हाविति मनुष्यलीलापरत्वमभिप्रेतम् अत एव दर्शितौ । अल्पीयसेति जरासन्ध बलापेक्षयाल्पताभिप्रायेण तत्रापि हरिवंशोक्तविकद्रुदुर्म्मन्त्रणया सर्वेषामागमनेन च अतएवावृतौ आवरणतया चतुर्दिक्षु वेष्टितौ स्वैर्दिव्यनिजायुधैराढ्यौ युद्धे सम्पन्नौ तत्तदायुधप्रदर्शनायैव परसैन्यं क्षोभयन्ताविस्यर्थः । विशेषेण सर्वतो वैलक्षण्येन निर्गत्य यतो दारुकसारथिः तत् सारथित्वोपलक्षणया दिव्यातिदिव्यतुरङ्ग्यादिसम्पत्तिमान् हरिरिति शङ्खध्वनिनैव परेषां वीर्य्यादिहरणाभिप्रायेण ॥ १५—१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतस्त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यक्षौहिणीसैन्यव्यपदेशं केवलं भूमेर्भारमपाकुर्वपनय । एवमिति । इत्थं मिथः सम्मन्त्र्य आलोक्य दाशार्हौ रामकृष्णौ दंशिनौ कवचितौ रथिनौ रथारूढौ स्वासाधारणैरायुधैराढ्यौ युक्तौ चाल्पीयसा कतिपयेन बलेन चावृतौ च भूत्वा पुरान्मथुराया निष्क्रान्तौ । ततो हरिर्दारुकाख्यः सारथिर्यस्य सः तथाभूतः शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास ॥ १५—१६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रयोविंशत्यनीकानां त्रयोविंशदक्षौहिणीनां समुच्चयं भूमेर्भारम् ॥ १५ ॥

ब्रह्मसूत्रादयो वसुदेवादिशब्दवाच्याः ॥ + ॥

पूर्वद्वारि नृपैः सार्द्धं यदूनां कदनं महत् ।
आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत् ॥ ४ ॥
दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् ।
आसीद्यदूनां कदनं राजन्यकटकेन वै ॥८॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् ।
आसीद्राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥
ते हन्यमाना यदवो राजभिः शक्रविक्रमैः ।
न चेलुः सङ्गराद्राजन् ! लोकद्वयजिगीषवः ॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः ।
आससाद महाघोरो यत्र तौ चैद्यमागधौ ॥ )
निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ।
शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥
ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ।
तावाह मागधो वीक्ष्य हे कृष्ण ! पुरुषाधम ! ॥ १७ ॥
न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ।
गुप्तेन हि त्वया मन्द ! न योत्स्ये याहि बन्धुहन् ! ॥ १८ ॥
तव राम ! यदि श्रद्धा युध्यस्व धैर्यमुद्वह ।
हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥

श्रीभगवानुवाच ॥

न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् ।
न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुःखं मन्दयन्ति अल्पीकुर्वन्तीति दुर्मदास्तान् दुमाधमान्+
महाप्राणं महाबोधम् ॥ ७ ॥
युद्धदुर्मदान् युद्धे दुरसहान् ॥ ८ ॥
वसुदेवादिभिश्चतुर्भिः कलिङ्गयवनानां "कदहङ हिंसार्थौ"
इतिधातुः कदनं युद्धम् ॥४॥
गोविन्देनाध्मातमाश्वासितं चेतो येषां ते तथा तेषां राजन्यानां कटकेन सैन्येन सैन्येऽपि कटकोऽस्त्रियामित्यभिधानं समूहेनवा ॥८

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

परिमितमेवेति अयासाभावमाह त्रयोविंशत्यक्षौहिणीभिरिति अक्षौहिणीशब्देनाक्षौहिणी अल्पसङ्ख्याशब्दनिर्देशः अनायासेन निराकरणार्थः त्रयोविंशत्यक्षौहिण्यात्मकं भारमात्रं यस्य वस्तुतस्तु न किञ्चित् तथापि निराकर्तव्यत्वमेवेत्याह भूमेर्भारमिति॥१५॥

श्रीशुकदेवकृतसिद्धान्तप्रदीपः ।

दंशितौ बद्धकवचौ ॥ १५ ॥

भाषाटीका ।

यह तेईस अक्षौहिणी रूप भूमि के भार को दूर करें दशार्हवंशी श्रीराम कृष्ण ऐसे विचार करके कवच धारण कर रथ पर बैठ कर अपने आयुधों सहित थोड़ी सी सेना लेकर पुर से निकलते भये, और बाहर निकल कर दारुक जिन का सारथि ऐसे हरि शंख बजावते भये ॥१५—१६॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वायुधाढ्यौ शोभनायुधसम्पन्नौ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुरुषा अधमा पक्षादिति वास्तवोऽर्थः हे पुरुषोत्तमेति ॥१७॥

युद्धेन सर्वान्तरत्वाद्दर्शनानर्हेण हे ऽमन्द! बध्नातीति बन्धुरविद्या तां हन्तीति तथा हे आविद्यानिरसनेति याहि प्राप्नुहि ॥१८॥

औच्छेयदेहोऽसावितिस्वयमेव मत्वा परितोषात्पक्षान्तरमाह, यद्वा मां जहीति ॥ १९ ॥

यथाश्रुतार्थग्रहणेन भगवत उत्तरं न वै शूरा इति विकत्थन्ते श्लाघन्ते ॥२० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अत एव विशिष्टत्रासेन वेपथुः। श्रीकृष्णं साक्षात् कालरूपं मत्वा तेन सह युद्धं परिहर्त्तुमाह—ताविति सार्द्धेन ॥ १७ ॥

बालेनैकेनेति बालकेनैवेति च वा पाठः। ननु, युद्धे शक्तिरेवापेक्ष्यते न तु वय इत्याह—गुप्तेनेत्यर्द्धकेन। कंसभयेन गोकुले निवासात्। ननु, वैरिवञ्चनार्थं काले गुप्तिरेव योग्येत्यत आह, मन्द! हे अमन्देति। कुतः हे बन्धुहन्! अतो याहि धर्म्मयुद्धादितोऽपसर तत्वार्थलौर्य्याख्यातः। यद्वा, याहि स्वपुरं याहि युद्धश्रमेण ते प्रयोजनाभावादिति भावः ॥ १८ ॥

तवेति। त्वञ्चेति वा पाठः। त्वर्थे चशब्दः श्रद्धा युद्धेच्छा। यदीति मद्भयानुमापितैव यदि कथञ्चित् स्यादित्यर्थः। धैर्य्यमुपैत्यर्द्धबलादात्मानं प्रापय न जातूद्विग्नो भव न च पलायस्वेत्यर्थः। धैर्य्यमिति क्वचित् पाठः ॥ १९ ॥

आत्मना सह युद्धकौतुके तं प्रवर्त्तयितुं व्यक्तार्थमेवाश्रित्य सोल्लुण्ठमुत्तरमाह—नेति। न विकत्थन्ते नात्मानं श्लाघन्ते वै एतत् प्रसिद्धमेवेत्यर्थः। अथ तव गालिप्रदानेन वयं क्षुभ्याम इत्याह—नेति। आतुरस्य वातादिदोषव्याकुलस्य तत्रापि मुमूर्षतः सम्प्रत्येव मरिष्यतः वचो न गृह्णीम न वस्तु बुद्ध्या भावयामः कुतः कोपं कुर्म्म इत्यर्थः। राजन्निति यद्यपि राज्ञस्त्वेतदतीवानुचितमिति भावः ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

माजहि मां वा जहि ॥ १९ ॥

मुमूर्षया आतुरस्य तवेत्यर्थः ॥ २०—२२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततः शङ्खध्वनानन्तरं सैन्यानां हृदि वित्रासो भयं तेन वेपथुर्गात्रकम्पो बभूव। ताविति। तौ रामकृष्णौ अवलोक्य मागधो जरासन्ध आह, उक्तमेवाह—कृष्णेत्यादिना। गुप्तेन कर्त्तरिकः गोपयता आत्मानमिति शेषः स्वजनेनेति वा त्वया सह न योत्स्ये न युद्धं करोमि याहि गच्छ तत्र कारणं वदन् सम्बोधयति—हे मन्द, मूढ! तत्र हेतुः हे बन्धुहन्! अत एव हे पुरुषाधम! बन्धुर्मातुलस्तस्य हन्तः ॥ १७ ॥

न केवलं न योत्स्याम्येवापि तु त्वया योद्धुं नेच्छाम्यपि यथा बालेन सह लज्जया न युयुत्स्ये तद्वदित्यर्थः ॥ १८ ॥

अथ रामम् आह—त्वमिति। यदि श्रद्धा युद्धार्थमस्तीति शेषः तर्हि हे राम! युध्यस्व धैर्यमावह न तु प्रारभ्य पलायस्वेति भावः। एवं च मच्छरैर्भिन्नं देहं त्यक्त्वा स्वर् स्वर्गं याहि यास्यसीत्यर्थः। यद्वा, सर्वमेतत् मामेव जहि इति ॥ १९ ॥

एवमुक्तः प्राह भगवान्—नहीति विकत्थन्ते विविधम् आत्मानं न श्लाघन्ते शूराः किन्तु रिपूणामपि श्लाघ्यं पौरुषमेव दर्शयन्ति अतस्तवाशूरस्य मुमूर्षतः मर्तुमाशंसमानस्य अत एवातुरस्य वचो वयं न गृह्णीमः न बहुमन्यामहे इत्यर्थः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

॥ १६—२० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रकटतया कथने राजा निर्गच्छेत् स्नेहाद्वसुदेवादयः प्रतिबन्धं कुर्युः अत एकान्ते तथा सम्मन्त्र्य युद्धार्थं प्रवृत्ताविस्याह—एवं सम्मन्त्र्येति। यतो दाशार्हौ सेवकप्रियौ दर्शितौ पूर्वं बद्धकवचौ ततो रथिनौ ततः पुरान्निर्जग्मतुः ततः सुष्ठु आयुधाढ्यौ आयुधं गृहीत्वा युद्धार्थं प्रवृत्तौ तावता पूर्वं राजाज्ञाभावात् विचाराभावाच्च न सर्वं बलमेकीभूतमतोऽल्पेनैव बलेनावृतौ जातौ तत्राप्यङ्गवैकल्यं प्रत्ययार्थः आदौ पाञ्चजन्यं वादितवानित्याह—सैन्यानामुद्योगोत्साहनिवृत्त्यर्थम्। "यस्य ध्वनिर्दानवदर्पहन्ता" इति अन्तःप्रवेशाभावाय बहिर्निर्गम्य शङ्खं दध्मौ यतो हरिः अन्यथा पुरस्थानां शङ्का स्यात् दारुकः सारथिर्यस्येति सङ्कर्षणांश एवात्र विशेषाकारेण प्रवृत्त इति ज्ञापयितुं तृतीये प्रकरणे तस्याप्युपयोगः सूचनीयः यथा द्वितीये अनिरुद्धे सान्त्वनम् ॥ १६ ॥

अग्रे आयुधान्तराणामपि कार्यं भविष्यतीति ज्ञापयितुं कृतस्य नादस्य फलमाह—ततोऽभूदिति। शत्रुभूतानां सैन्यानां भाविमरणमङ्कुरे प्रतिभातमिति हृदि विशेषेण त्रासो भयं जातं तेन क[illegible] शरीरेऽप्यभूत् एवं ज्ञात्वा चतुरो जरासन्धः भगवन्तं युद्धान्निवर्त्तयितुं किञ्चिदुक्तवानित्याह—तावाहेति। ननु, सदुत्तरेणैव भगवता सह युद्धमनुचितमिति चेद्वदेत् तदा भगवान् युद्धं न कुर्यात् स्वकार्यं च भवेत् तत्परित्यज्य किमिति विषममुक्तवानित्याशङ्कायामाह मागध इति। देशदोषात्तथा बुद्धिः वीक्ष्याहेति तेजसाऽनुभवेन ज्ञात्वैत्येतदर्थम आदौ भगवता सह युद्धं न मन्यते तदाह, हे कृष्णेति। त्रिधा सम्बोधनं करोति आनन्दचित्सद्रूपः कृष्ण आनन्दपुरुषचिद्रूपः अधो मातीत्यधमः प्रपञ्चः सद्रूपः न हि सदानन्दरूपेण पुरुषार्थरूपेणात्मना स्वोपकारिणा कश्चिद्युद्धमभिकाङ्क्षते ॥ १७ ॥

अत आह—न त्वया योद्धुमिच्छामीति। किञ्च, बालकेनेति बालानामपि कं सुखं यस्माद्बाले बाले कांचा न हि ब्रह्माण्डकोटिः विग्रहेण कार्यपक्षेऽपि योद्धुं शक्यते। किञ्च, विनयतयाति-

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भावयेन यद्यपि युद्धं कर्तुं शक्यते मरणेन मोक्षो भवि- ष्यतीति तथापि लोकलज्जयापि न युद्धमुचितं लोका हसि- ष्यन्ति स्वामिना सह युद्धयतीति अतो विशिष्टलज्जयापि न योत्स्ये अन्यत्र स्वशक्तिं स्थापयसि चेत् तथापि युद्धं न करिष्यामीत्याह—गुप्तेन हीति। त्वया गुप्तः केन वा हन्तुं शक्यतं पराजयपक्षे त्वत्त एव मरणमुचितं न त्वन्यस्मात् अपकीर्तिरपि भवेत् इति अतो युक्तमेव त्वद्रक्षितेन सह युद्धम्। किञ्च, अमन्देति। अमो ब्लेशः न विद्यते मा माया यत्रेति अमं ददातीत्यमन्द इति न हि मोक्षदात्रा आराध्येन सह कश्चि- द्युद्धमभिकाङ्क्षते अतो याहि मोक्षदात! न चाहं यादव एव न तु मोक्षदातेत्याशङ्क्याह —बन्धुहन्निति यदि यादवः स्यात् तर्हि बन्धून् कंसादीन् किं हन्यात्? अतो यादवमारकत्वात् अस्मत्स्वाम्येव न तु यादव इत्यर्थः। यदापातत प्रतिभात्यन्यथा तत्प्रकरणविरुद्धत्वात् निन्दापरं वचनमुपेक्षणीयमेव भ्रामकाणि परं वचनानि॥ १८॥

एवं भगवन्तमयुद्धार्थं प्रार्थयित्वा तेनैव बलभद्रोपि निवृत्तो भविष्यतीति तं युद्धायाह्वयीत—तवेति। तुशब्दः पूर्वभाषार्थ- व्यावृत्त्यर्थः अन्यथा वधो बन्धुमारणं च तुल्यमिति कथं रामं गृह्णी- यात् तेन यादवा एव तस्य मारणीया इति सत्वव्यवहितानां सुतरामावेशिनां देहोऽस्तीति यादवत्वं सिद्धमिति वसुदेववैरं तत्पुत्रे पातनीयमिति वसुदेवयुद्धप्रतिप्रसवः तत्रापि यदि भवेत्याह—अयं हि वसुदेवानुकल्पत्वेन द्विषो भवति तथा सति यदि पितरि श्रद्धा क्षत्रियत्वेन युद्धे वा तदा युद्धस्य आवयोर्यद्यपि समानं बलं तथापि सेना महतीति तत् हृद्वा कदाचिद्भीतो भवेत् अत आह—धैर्यमुद्वहेति। भगवद्व्यतिरिक्तानां अन्यधर्मः प्रवर्तते इति अन्तर्बलमस्तीति धैर्यमस्त्येव बाह्यमपि धैर्यं सम्पादयेत्याह—उद्वहेति। ततो यद्भविष्यति तदनिश्चयेनाह — हित्वेति। एकतरानिश्चये युद्धार्थं प्रवृत्तिरेव न स्यात् अतो मच्छरैः छिन्नदेहं हित्वा धैर्यमुत धैर्येण जातां मुदं स्वर्गलक्षणां वह अथवा मच्छरैः छिन्नदेहं हित्वेति "सविशेषणे विधिनिषेधौ विशेष्ये बाधके सति विशेषणमुपसंक्रामतः" इति न्यायेन शरच्छेदनं दूरीकृत्य मां जहि अनेन प्रथममेव प्रहारं करिष्या- मीति सूचितम्॥ १९॥

एवं बलभद्रं प्रति यत्स्वपौरुषं ख्यापितं तदयुक्तं मत्वा भगवान् निषेधति—न वै शूरा इति। ये हि शूरास्ते स्वख्यातिं न वदन्ति किन्तु पौरुषमेव दर्शयन्ति यदप्युक्तं न त्वया योद्धु- मिच्छामीति ते तव वाक्यं न गृह्णीमः अनेन तद्वाक्यमप्रमाणमित्युक्तं न हीश्वरेण मतं प्रमाणं भवति तेन हि शङ्काद्वयेन युद्धं त्यक्तं मरणं भविष्यति मोक्षे प्रतिबन्धो वा भविष्यतीति तदुभयं न कर्तव्यमिदानीं न मारणीयः मोक्षश्च देय इति अत एव भगवान् सर्वस्वदानं कारयित्वा मोक्षं दत्तवान् अतो युक्तमुक्तं "न गृह्णीमो वचः" इति किञ्च हे राजन्! शूरक्षत्रियाणां युद्ध एव मुक्तिः

"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः" इति॥

ब्राह्मणक्षत्रिययोः मोक्षप्रकारस्य प्रतिपादितत्वात् तयोरेव च मोक्षोपदेशः "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इत्यत्र निरूपितः अतो मद्रक्षितेनापि त्वया युद्धं कर्तव्यम् अहं तु त्वया सह युद्धं न करिष्यामी बलभद्र एव करिष्यति बलं परं पालनीयमिति भावः। अयमुपदेशो ऽग्रे कार्यार्थः अन्यथा भीमेनापि न युध्येत्। किञ्च, आतुरस्य वचनं न श्रोतव्यं स हि स्वापव्ययमेव याचते अनेन याचितं देयमिति पक्षो निवारितः। किञ्च, मुमूर्षतः मुमूर्षां प्राप्नुवतः कृदन्तात् षष्ठी स हि मोक्षं दूरीकृत्य वृथा मरणं वाञ्छन्ति तादृशं नाङ्गी- कर्तव्यम॥ २०॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पुरुषा अधमा यस्मात् हे पुरुषोत्तमेति भवत्वभिमतोऽर्थः॥१७॥

बाले बाल एव को ब्रह्मा यस्य तेन महामहेश्वरेण लज्ज- येति मम दुर्जीवत्वेनायोग्यत्वादिति भावः। गुप्तेनेति कंसस्य भयाद्गोकुलं प्रति गतस्य एव वैश्यपालितत्वेन वैश्यसाधर्म्य- प्राप्तेः पक्षे सर्वान्तरत्वाद्दर्शनानर्हेण हे अमन्द बन्धुहन् हे मातुल- हन्तः पक्षे बध्नातीति बन्धुरविद्या तां हन्तीति तथा॥ १८॥

अच्छेद्यदेहोऽसाविति। स्वयमेव मत्वा परितोषात्। पक्षान्तर- माह—यद्वा मां जहीति। श्रीस्वामिचरणाः। यद्वा, मत्मत्तः पापा- त्मनः सकाशात् स्ववैकुण्ठं याहि किं कृत्वा शरैश्छिन्नम् अर्थात् मम देहं हित्वा त्यक्त्वा अत्रैव प्रक्षिप्येत्यर्थः॥ १९–२०॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ १६॥

रामकृष्णौ मरकौ इति वीक्ष्येति भावः मागध आह ॥१७—१८—१९॥

भगवानपि तदनुरूपमुत्तरं दत्तवान्—न वै इति। विकत्थन्ते- श्लाघन्ते॥ २०॥

---

## भाष टीका।

तिस शंख के शब्द से शत्रुसेना वाले योधाओं के हृदय त्रास के मोर कांपने लगे मगधराज जरासं ध राम और कृष्ण इन दोनो भ्राता ओं को देख कर, बोला, कि — हे कृष्ण तूं पुरुषो में अधम हैं वास्त वमें तो पुरुष हैं अधम जिन से अर्थात् हे पुरुषोत्तम! यह वाणी का अर्थ हुआ)॥ १७॥

एक तेरे बालक के साथ मै लज्जा करके युद्ध कर- ने की इच्छा नहीं करता हूं हे मन्द! हे बन्धुओं के मारनेवाले! तू गुप्त (वैश्य वा रक्षित) है इस से हम तेरे साथ युद्ध नही करेंगे तूं चला जा॥ १८॥

हे राम! यदि तेरी श्रद्धा होय तो धैर्य धारणकर युद्ध कर मेरे बाणो से छिन्न देहको छोड़कर स्वर्ग जाना अथवा मेरे को मारना॥ १९॥

श्रीशुक उवाच।

जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत्।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः॥ २१॥
सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिराममयोर्मृधे।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः सम्मुमुहुः शुचा(१)र्दिताः॥ २२॥
हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम्।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम्॥ २३॥
गृह्णन्निषङ्गादथ सन्दधच्छरान् विकृष्य मुञ्चन् शितबाणपूगान्।
निघ्नन्रथान्कुञ्जरवाजिपत्तीन्निरन्तरं यद्वदलातचक्रम्॥ २४॥

भाषा टीका।

श्रीभागवानुवाच॥

श्रीकृष्णचन्द्र बोले, कि—हे राजन्! हे राजसन्ध! शूर लोग बहुत बकते नहीं हैं किन्तु अपना पौरुष दिखाते हैं, तस्मात् आतुर और मरनेकी इच्छा वाले ऐसे तुमारे वचन को हम नहीं ग्रहण करते हैं॥ २०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

माधवौ मधुवंशभवौ महता सैन्यसमूहेनावृतवान् वायुरभ्रैः सूर्यं रेणुभिश्चाग्निं यथेत्यदर्शनमात्रमेवावरणमिति सूचितम्॥२१–२२॥

परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणं वर्षं तेन पीडितम् व्यस्फूर्जयदुज्जृम्भितवान्॥ २३॥

तदाह—गृह्णन्निति। निषङ्गादिषुधेः शरान् गृह्णन् अथ तान्गुणे सन्दधत् गुणमाकृष्य निशितबाणसमूहान्मुञ्चन् निघ्नन्प्रहरन् पत्तिः पदातिः निरन्तरमिति ग्रहणादिक्रियाविशेषणं ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वद्व्यस्फूर्जयदिति॥ २४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

श्रीशुक उवाचेति काचित्कं जरासुत इति जरा नाम राक्षस्या संहितदेहत्वात् तद्दत्तशक्तित्वेन मनुष्यातीतशक्तिरुक्ता। माधवाविति दाशार्हावितिवत् अत एवावृणोत्। सूर्य्यानलौ प्रलयकालसम्बन्धिनौ ज्ञेयौ। तत्प्रति महायोगितया तथैव भासमानत्वात्॥ २१॥

सुपर्णेति तत्तद्ध्वजादर्शनमपि सूचितम्। हरिर्निजमनोहरणात् राम इति तन्मनोरमणात्। तयोरिति परम प्रियत्वं सूचितम्। पुरस्याट्टालकं दुर्गोपरि रचितगृहं हर्म्यं श्रीमत्प्रासादं गोपुरञ्च द्वन्द्वैक्यं सम्यगाश्रिता उपर्य्यधिरूढा अपि मृधे युद्धभूमौ अलक्षयन्त्यः लक्षणैरप्यतर्कयन्त्यः शुचार्पिताः शोकेन व्याप्ताः सत्यः अर्दिता इति पाठे पीडिताः सत्यः सम्यक् मुमुहुः यतः स्त्रियः स्त्रीणां स्वभावत एव स्नेहार्द्रचित्तत्वादिति भावः॥ २२॥

हरिरिति युग्मकम्। तत्राम च परसैन्यसंहाराभिप्रायेण पीडनमत्र सम्पातेन वित्रासनमेव न तु छेदनं मुकुन्दोप्यक्षत बल इति वक्ष्यमाणात् तच्च तेन अविद्याविशेषाभिव्यञ्जनात् अहो तत्र परमाश्चर्य्यं शृण्वित्याह—गृह्णन्नित्यादिना। अथानन्तरं तत्क्षणमेवेत्यर्थः। अस्य वक्ष्यमाणस्यानेकश इत्यस्यापि सर्व्वैरेवान्वयः॥ २३॥

रथानिति तदीयांश्च ध्वजादीन् एतच्चाग्रे व्यक्तं भावि। अन्यत्तैः व्यजृम्भितवान् सटङ्कारं मुहुराकृष्य नमितवानित्यर्थः। चक्रवद्भवतीति मण्डलाकारतया सर्व्वत्र वर्त्तेत इत्यर्थः। तद्वदिति तादृशीं कृत्वेत्यर्थः। यद्वा, ततश्च यद्वदलातचक्रं तद्वदेव हरिः सर्व्वत्राप्यदृश्यतेति शेषः। किं कुर्व्वन् परेषां शितबाणपूगादीन् निघ्नन्॥ २४॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

शिलीमुखं रजः। पूरयामास॥ २३—२५॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

जरासुत इति। तौ सैन्यादि[illegible] सहितौ मधुवंशजत्वादुभयोरपि माधवौ इति निर्देशः रामस्य माधवांशत्वाद्वामाधवव्यपदेशः अभिसृत्याभिमुखमागत्य बलीयसा महता सैन्यसमूहेनावृणोत् आवृतवान् ससैन्य इत्यस्य प्रथमैकवचनान्तपाठे जरासुतविशेषणत्वं यथा वायुरभ्रैः सूर्य्यं रेणुभिश्चाग्निमावृणोति तथेति दृष्टान्तार्थः अनेनादर्शनमात्रमेव नावरणमिति सूचितम्॥ २१॥

सुपर्णेति। तदा पुरस्त्रियः पुरस्याट्टालकादीनां च समाहारः तत्समाश्रिता अधिरूढा अट्टालकाः उपरि भूमिका मृधे युद्धे सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ सञ्जातचिह्नौ हरिरामयोः रथावपश्यन्त्यः अत एव शुचा अर्पिताः व्याप्ताः सम्मुमुहुर्विचित्ता बभूवुः॥ २२॥

हरिरिति परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणं दुःसहं वर्षं तेन पीडितं

(१) अर्पिताः इति पाठान्तरम्।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वसैन्यमवलोक्य सुरैरसुरैश्च [बहुमतमत्यर्थं (अन्वर्थं) शार्ङ्गाख्यं शरासनोत्तमं धनुःश्रेष्ठं विस्फूर्जयदुज्जृम्भितवान् उद्घोषज्यायुक्तमकरोदिति वा ॥ २३ ॥

गृह्णन्निति। निषङ्गगात् तूणात् शरान् गृह्णन् धनुषीति शेषः विकृष्य सन्धिहितस्थाच्छरानाकृष्य निशितबाणसमूहान् मुञ्चन् रथाश्वादीन्घ्नन् ध्वंसयन्नचलत्स इति शेषः पत्तयः पदातयः न विद्यतेऽन्तरं विच्छेदो यस्यां ग्रहणादिक्रियायां तद्यथाभवति तथा अघ्नन्स्थ इत्यर्थः। तात्कालिकभगवच्छार्ङ्गस्य दृष्टान्तमाह—यद्वदलातचक्रमिति । यद्वद्यथा ज्वलत्काष्ठभ्रमणं चक्रवद्भाति तद्वद्धनुरासीदित्यर्थः । निरन्तरमित्यलातचक्रस्यैव वा विशेषणं विच्छेदरहितमलातचक्रं यथा तद्वद्धनुर्व्यस्फूर्जयदिति पूर्वेण सम्बन्धो वा ॥ २४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

माधवौ मधुकुले जातौ सैन्येन यानध्वजैः रथध्वजैर्वाजिभिरश्वैः सारथिभिश्च सहितौ "वाजीत्वश्वेशरे खगे" इति अभ्रैः जलधरैः रेणुभिश्च ॥ २१ ॥

सुपर्णतालध्वजाभ्यां चिह्नितौ अङ्कितौ हरिरामयोः कृष्णबलभद्रयोः रथौ विलक्षयन्त्यः पश्यन्त्यः पुरं गृहं अट्टालकं गृहोपरीष्टकादिविरचितचतुरस्रस्थलं हर्म्यं धनिनां वासः गोपुरं पुरद्वारम् अल्पवयसो अल्पसेनो कृष्णरामो मागधं प्रलयार्णवोपमसैन्यं दृष्ट्वा समुत्पन्नया शुचा ॥ २२ ॥

व्यघूर्णयत् विस्फारयामास परानीकपयोमुचां शत्रुसेनामेघानाम् ॥ २३ ॥

श्रीकृष्णस्य हस्तलाघवं कथयति—गृह्णन्निति। निषङ्गात्तूणीरात् भ्राम्यमाणमलातचक्रम् उल्मुकमण्डलं निरन्तरं छिद्रदर्शनं दुःशकं यद्वत्तद्वत् ॥ २४ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुपविष्टः युद्धं स्वार्हं मन्यमानः ससामग्रीको युद्धार्थमागत इत्याह—जरासुत इति । मातुः पुत्रोऽयं तत्रापि सा जरा सर्वानेव विरूपान् करोति कथमेनं त्यक्ष्यतीति तत्रापि राक्षसी तेनदुर्बुद्धिरप्ययं ज्ञापितः अन्यथा तदुपदेशमेव गृहीत्वा मरणं निश्चित्य तेनैव सह किं युद्धं कुर्यात् तौ कृष्णरामावभिसृत्य सर्वतः संवेष्टयित्वा महाबलौघेन. आवृणोत् माधवाविति मधुवंशोत्पन्नाविति भगवन्ताविति बन्धनं दास्येत इति वा पित्रोः स्वबलं प्रदर्शनीयमिति वा जेष्यामीति बुद्ध्या प्रवृत्त इति ज्ञापयितुं साधनाधिक्यमाह, बलीयसा महाबलौघेनेति । महत्त्वं स्वरूपेण तादृशानां बहुत्वमोघः अन्तस्सारं बलम् एवं गुणत्रयस्य विद्यमानत्वात् आवरणं कृतवान् भगवत्सहायं सर्वमेव स्वार्थं गृहीतवानिति आह, ससैन्येति । सैन्यसहितौ यानसहितौ तत्र ध्वजवाजिसारथिभिः सहितौ अनेनैवमुक्तं भवति केचन सैन्ये लग्नाः केचन रथे केचन ध्वजयोः केचनाश्वेषु सूतयोरिति एतयोरसम्भावितमावरणमिति ज्ञापयितुं दृष्टान्तमाह—सूर्यानलाविवेति । न ह्यावरणं सूर्यं स्पृशत्यग्निं वा परं पश्यतां चक्षुः प्रतिरोधकमेव वायुस्थानीयो जरासन्धः अभ्राणि सूर्यावरकाणि रेणवोऽग्नेः ॥ २१॥

अन्तःस्वरूपे फलद्वयायुक्तत्वात् दृष्टं न तज्जातं इत्याह सुपर्णतालध्वजचिह्निताविति । सुपर्णध्वजो भगवद्रथः तालध्वजो बलस्य सेनामध्ये पतिताविति रेणुभिः विजातीयध्वजादिभिश्च व्यवधानात् अलक्षयन्त्यः अपश्यन्त्यो जाताः एको दुःखहर्ता अपरो रमयतीति सुखदाता उभयोरत्यावश्यकत्वात् तद्दर्शने व्याकुलता उचितैव स्त्रियश्च तत्र मुख्यतया द्रष्टुं समागता इति युद्धानभिज्ञत्वात् रसान्तरपरिग्रहे स्ववैयर्थ्यं सूचयन्त्यः शोकेनार्पिता जाता इत्याह—स्त्रिय इति । पुरस्य अट्टालकाः अत्युच्चाः भवन्ति हर्म्याणि राज्ञां गृहाः पुरद्वारं चात्युच्चम् एतानि समाश्रित्यापि अलक्षयन्त्यः सम्यक् मुमुहुः मूर्च्छां प्राप्तवत्यः ततो जागरणे शुचा चार्पिताः कृष्णो हि भगवान् स्त्रीणामेवार्थे अवतीर्ण इति तद्बाधकत्वेनैव सैन्यं मारितवान् न चान्यथेति स्वरूपविचारासिद्ध्यर्थमुक्तम् अन्यथा सङ्कर्षणकार्ये भगवान् प्रविष्ट इति भवेत् तत्रैकादशो न पुनरुक्तम् ॥ २२ ॥

अतः स्त्रीणां दुःखनिवृत्त्यर्थं भगवान् सैन्यं निहतवानित्याह—हरिरिति । सूर्यस्थानीयो हि भगवान् तत्र मेघस्थानीयाः तदीयाः अतस्तेषां निराकरणम् अनायासेनैव भविष्यतीति निरूपयितुं तेषां सेनामनुवदति परानीकपयोमुचामिति शत्रूणाम् अनीकमेव पयोमुचः मेघा तेषां शिलीमुखान्येवोल्बणवर्षः तेन पीडितं स्वसैन्यम् अनेन महाशूरा अपि अहन्यमाना अपि यथा वृष्टौ समागतायां सर्व एव भीताः पलायन्ते न हि वृष्टिः कांश्चिन्मारयति मृता वा भवन्ति केचन तथापि महाशूरा अपि राजानमपि परित्यज्य पलायन्ते तथा अत्र जातमित्युपहासार्थं निरूपितं स्त्रीषु कृपा तेषु च हास्यरससमुत्पन्नमिति भावः। अत उभयोरपि हितचिकीर्षया स्वशार्ङ्गं गृहीतवानित्याह—सुरासुरार्चितमिति । सुराणां हितम् असुराणां मोक्षं द्वयं दास्यतीति ज्ञात्वा शार्ङ्गं धृतवान् विशेषेणास्फूर्जयत् शार्ङ्गज्यानिनादः सुराणां चित्ते भयनिवर्त्तको भवतीति प्रथमं सन्देहनिवारणार्थमाश्वासनमुक्तवान् "यज्ज्यानिनादश्रवणात् सुराणां चेतांसि निर्मुक्तभयानि सद्यो भवन्ति" इति वाक्यात् शार्ङ्ग एव शरासनेषु भगवदीयेषु उत्तमम् अनेनाशनिबाणवर्षमिति तस्य द्वितीयंमाहात्म्यमुक्तं भगवतः अनेकान्यपि धनूंषि सन्तीति बोधितं शरासनपदेन देवतारूपत्वं प्रतिषिद्धम् अन्यथा माहात्म्यमुक्तं न भवेत् ॥ २३ ॥

इदानीं भगवतो युद्धचातुर्यमाह—गृह्णन्निषङ्गादिति । अतितेजस्विनां स्वापगमेऽपि स्वशक्तिस्तिष्ठतीति क्रियाशक्तेर्व्यापकता चोक्ता भवति निषङ्गात् तूणीरात् शरान् गृह्णन् अथ तदनन्तरं तस्य योजनाप्रकारेण योजितवान् ततो विकृष्य मुञ्चन् ततः चतुरङ्गिणीं सेनां निघ्नन् जात इति प्रत्येकं वा सम्बन्धः चतुर्धा भगवत्कृतिः ।

स्थानात् प्रच्यावनं पूर्वं साधने योजनं तथा ।
फलार्थं विनियोगश्च फलसिद्धिरिति क्रमात् ॥

[१] ततः शशाङ्काकृतिपाञ्चजन्यं महारवं दैत्यकुलापचारम्।
मुखे निधायाशु पुपूर याववानाश्वासयन् क्षत्रियकूटघट्टितान्॥ क॥
नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिन्नहृदो बभूविरे।
यदुप्रवीराश्च समुद्यतायुधा रणे नृपाश्चप्युरनीकसंयुताः॥ ख॥
ततश्चतुर्द्वारगतान् महीपतीन् यदुप्रवीराः परिभूय सर्वशः।
चक्रुः शरौघैः सहसैकवाहिन आप्यायिताः शार्ङ्गरवेण शौरिणा॥ ग॥
ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः।
भर्त्सयन् कृष्ण कृष्णेति तिष्ठ तिष्ठेति चाब्रवीत्॥ घ॥
तमभ्यधावद्गोविन्दो विमुञ्चन् सायकान् बहून्।
मण्डलीकृतकोदण्डस्तैलधौतांश्छिताग्रान् शरान्॥ ङ॥
ततः पञ्चशरान् घोरानादाय दमघोषजः।
चतुर्भिस्तुरगानाशु विव्याधैकेन सारथिम्॥ च॥
भूयो वशाशु सन्धाय विव्याध मधुसूदनम्।
व्यनदत्सिंहनादं च तदद्भुतमिवाभवत्॥ छ॥
ततस्तमाह गोविन्दः साधु साध्विति पूजयन्।
भो भो चैद्य! महेष्वास! वीरोऽसि बलवानसि॥ ज॥
अतो मे पश्य दुर्बुद्धे! धानुष्मत्त्वं स्वयं रणे।
इति ब्रुवति गोविन्दे राजानः सर्व एव ते॥ झ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मोचनसमये ग्रहणमावर्त्तते चेत् तदा क्रिया अपरिच्छिन्ना भवति नान्यथेत्यत आह—निरन्तरमिति। अन्तराभावो यथा भवति तथेति चतुर्णां विशेषणं तदसंभावितं मत्वा दृष्टान्तमाह—यद्वदलातचक्रमिति। अलातचक्रं परिभ्रममाणं सर्वत्र विद्यमानमिव मण्डलाकृतिभाति तद्वन्निरन्तरमिति सम्बन्धः। यद्यपि भगवतः क्रियाशक्तौ न सन्देहः तथापि स्वयमपि वक्ष्यति लोके निरूपणे असंभावना माभवत्विति दृष्टान्तमप्याह—निषङ्गादित्येकवचनेनाक्षयतुणीरता निरूपिता अथेति भिन्नोपक्रमेण अनेन शरेण एतावत् मारयिष्यामीति पूर्वसङ्कल्पो निरूपितः तदेव च निष्पन्न् जातः अन्यथा काकतालीयवत् भगवत्प्रवृत्तिरपि स्यात् ततश्च न पराक्रमः सिद्ध्येदिति एतावदथशब्देन निरूपितं सन्दधत् सम्यक् धनुषि योजयन् शरानित्यत्रव्यावृत्य चैव अन्यथा देवताया एव सामर्थ्यं भवेत् शरानिति बहुवचनं सकृदपि बहूनां सन्धानं सूचयति विकृष्य मुञ्चन्निति मानुषक्रियैवात्र व्यापृता भगवता न त्वलौकिकं किञ्चित्प्रकाशितमिति ज्ञापितं शितास्तीक्ष्णाः ते च ते बाणाश्च तेषां पूगः समूहो येषु एकस्मिन् बाणे भगवत्क्रियाव्यापृतेति भगवता समुक्त इति अपरिच्छेदे निवृत्ते सहस्ररूपः स एव जात इति बाणस्यानन्तत्वे प्रतिपादिते तेन मोचितशरीराणामपि अनन्तत्वं फलिष्यतीति तथोक्तम् अन्यथा पुनरुक्तदोषः स्यात् सन्धितानामेव विमोकस्य सिद्धत्वात् नितरां प्रभिति सकृत् प्रहारेणैव प्राणवियोगः शरीरस्य शतधा खण्डाश्च प्रदर्शिताः चतुरङ्गसेना सर्वैव मारिता इति ज्ञापयितुं गणनामाह—रथान् कुञ्जरान् वाजिनः पत्तयः पदातयः पत्तीरिति स्त्रीप्रयोगः एको बाणः एकां पत्तिमनेकां वा मारयतीति सूचयति एकेभैकरथा अश्वा पत्तिः पञ्चपदातिकेति पत्तीनिति वा पाठान्तरं शूराणां प्राणावियोगमात्रे न सामर्थ्यं सिध्यति मर्मस्थानस्पर्शे अल्पप्रहारेणापि प्राणवियोगसम्भवात्॥ २४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

माधवौ मधुवंशोद्भूतौ वायुर्यथा सूर्यमभ्रैरभिश्च रेणुभिरावृणोति तथेत्यदर्शनमात्रमेवावरणमिति सूचितम्॥ २१॥

[१] एते श्लोकाः विजयध्वजतीर्थीये अधिकं पठ्यन्ते।

विव्यधुर्निशितैर्बाणैर्योगपद्येन माधवम्।
तांस्तान् प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः ॥ ञ ॥
सारथिं चतुरो वाहाननयद्यमसादनम्।
त्रिभिस्त्रिभिः शरैर्भूयोऽप्येकैकं नृपतीन् रणे ॥ ट ॥
वक्षस्यास्ये ललाटे च विव्याध यदुनन्दनः।
ततश्च त्रिशतां राज्ञां त्रिंशत्कार्मुकमाहवे ॥ ठ ॥
त्रिंशद्भिः सायकैराशु चिच्छेद यदुपुङ्गवः।
दमघोषसुतस्यापि धनुश्छित्वा त्रिभिः शरैः ॥ ड ॥
ध्वजं च मुकुटच्छत्रे चकर्त्त प्रहसन्निव।
ततो दशहरिर्भल्लान् शार्ङ्गे सन्धाय माधवः ॥ ढ ॥
आकर्णान्तं समाकृष्य चैद्यं विव्याधसङ्गरे।
तेन राजन्यकटकं विभ्रान्तं शरताडितम् ॥ ण ॥
कालान्तमारुतोद्भूतशैलद्रुमलतोपमम्।
त्रातारं नाध्यगच्छद्वै हताश्वरथसारथि ॥ त ॥
शरान् विमुञ्चञ्जलजं च पूरयन् विस्फूर्जयन् कार्मुकमुग्रपौरुषः।
विलोकयन् मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम् ॥ थ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

शुचार्पिताः शोकव्याप्ताः शुचार्दिता इत्यपि पाठः। स्त्रिय इति पुम्भ्यः सकाशात् कृष्णे स्त्रीणामासक्त्याधिकात् ॥ २२ ॥
परेषां शत्रूणामनीकान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणवर्षेण पीडितं व्यस्फूर्जयत् उज्जृम्भयामास ॥ २३ ॥

किं कुर्वन्नित्यत आह। निषङ्गात् इषुधेः सकाशात् शरान् एकैकान् गृह्णन्। अथ तदनन्तरं तान् गुणे सन्दधत् गुणमाकृष्य तान् मुञ्चन् तैश्च रथादीन्निघ्नन्निरन्तरमिति ग्रहणादि सर्वक्रियाविशेषणम्। तेन ग्रहणयोजनविकर्षणनिःक्षेपणप्रहरणक्रियाः क्रमेणोद्भूता अपि सदैवोद्भवन्त्य इव द्रष्टॄन् प्रति भाताः क्षणार्द्धमध्ये शतकोटिकृत्वोऽभवन्तीत्यर्थः। ततश्च अलातचक्रे ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वदेव मथुरायाश्चतुर्दिक्षु सैन्याभिमुखं भ्रमन् शार्ङ्गं व्यस्फूर्जयदिति ॥ २४-२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

माधवो मधुवंशोद्भवो अभिसृत्य अभिमुखमागत्य महाबलौघेन आवृणोत् आवृतवान् वायुरभ्रैः सूर्यं रेणुभिरग्निं यथा ऽऽवृणोति तद्वदिति अदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१—२२ ॥

हरिः स्वभक्तक्लेशहरः परस्य जरासन्धस्य अनीकानि सैन्यान्येव पयोमुचो मेघाः तच्छिलीमुखानां बाणानामत्युल्बणेन वर्षेण पीडितं स्वसैन्यमालोक्य मुहुः व्यस्फूर्जयत् उज्जृम्भितवान् ॥ २३ ॥

किं कुर्वन् व्यस्फूर्जयदित्यत आह—गृह्णन्निति। निषङ्गादिषुधेः असङ्ख्येयबाणालयात् युगपत् अनेकान् गृह्णन् अथानन्तरं तान् गुणे सन्दधत् गुणमाकृष्य तान् मुञ्चन् तैश्च रथादीन् निघ्नन् ध्वंसयन् निरन्तरमिति ग्रहणादिक्रियाविशेषणम्, ज्वलत्काष्ठभ्रमणे यथा चक्रवद्भवति तद्वत् शार्ङ्गशरासनोत्तमं व्यस्फूर्जयत् इति पूर्वेण सम्बन्धः ॥ २४ ॥

---

भाषाटीका।

श्रीशुक उवाच

श्रीशुकदेवजी बोले, कि—जरासन्ध भी सेना वाहन ध्वजा अश्व सारथि सहित कृष्ण बलदेव के समीप आकर बलवान् बड़ी सेना के समूह से घेरता भया, जैसे वायु बादर और रेणु, सूर्य और अग्नि को घेर लेवे ॥ २१ ॥

जब गरुड़ और ताल के चिन्ह वारे राम कृष्ण के रथ संग्राम में नहीं देख परने लगे, तब मथुरा पुर के

निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः ।
रथा हताऽश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥२५॥
संछिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ।
भुजाऽहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाऽऽकुलाः ॥ २६ ॥
करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः ।
अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥
प्रवर्त्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ।
विनिघ्नताऽरीन् मुसलेन दुर्मदान् सङ्कर्षणेनाऽपरिमेयतेजसा ॥ २८॥

### भाषाटीका ।

बड़ा अटारी महल गोपुरों पर चढ़ी हुई स्त्रियों शोक के मारे मूर्छित होती हुई ॥ २२ ॥

उस समय श्रीकृष्ण पराई सेना रूप बादल से बारबार बाणोंकी घोर वर्षा से पीडित अपनी सेना को देख कर देव और असुरों से पूजित जो शार्ङ्ग नामक धनुष है तिसको टङ्कारते भये ॥ २३ ॥

और तरकस से बाणों को निकालते हुए, धनुष पर सन्धान करते हुए खैंच कर पैने २ बाणों के समूह को छोडते हुए रथ हाथी घोड़े और पैदलों को मारते हुए ऐसे मालूम परते हुए, कि- जैसे निरन्तर अलात चक्र अर्थात् सिलगती हुई लकड़ी को फिरावै ऐसी शीघ्रता मालूम पडती हुई ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥

संछिद्यमाना द्विपदा इभा वाजिनश्च तेषामङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं प्रवर्तिता इति तृतीयेनान्वयः प्रसिद्धनदीरूपकमाह—भुजा एवाहयो यासु ताः पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः हता द्विपा एव द्वीपा अन्तर्वर्तितटानि हया एव ग्रहा ग्राहास्तैश्च सङ्कुला व्याप्ताः ॥ २६ ॥

करा ऊरवश्च मीना यासु ताः नराणां केशा एव शैवलं यासु ताः धनूंष्येव तरङ्गा आयुधान्येव गुल्मास्तैश्च सङ्कुलाः अच्छूरिकाश्चर्माणि चक्राणि वा तान्येवावर्तास्तैर्भयानकाः महामणीनां प्रवेका उत्तमा आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥

भीरूणां भयावहाः मनस्विनां धीराणां हर्षकर्यः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निर्भिन्नकुम्भा इत्यादिना तत्रापि योग्यायोग्यस्थान एव वेधनमिति विशेषोक्तिः ॥ २५ ॥

संछिद्येति सार्द्धद्वयम् । गुल्माः स्तम्बा अप्रकाण्डवृक्षजातयः अच्छूरिकाशब्दो वैदिकः पञ्चमस्कन्धेऽपि प्रयुक्तोऽस्ति अस्फूर्यसूतमणीत्यादौ परस्परं हर्षकरी वीरस्वाभाव्यान्मारयतां मार्यमाणानाञ्चानन्दप्रदाः प्रवर्त्तिताः श्रीभगवतैव । यद्वा ऽसृगापगा एव परस्परं प्रवर्त्तिताः मिलित्वा मर्द्दिता इत्यर्थः। तत्र प्रथमपक्षे निर्भिन्नकुम्भा इत्यादिना तत्पराक्रमवर्णनस्यैव सोत्साहमपक्रान्तत्वात् मुकुन्दोऽप्यक्षत बल इत्यादि वक्ष्यमाणात् परस्परं हर्षकरीरित्यव्यवहितान्वयाच्च । द्वितीयपक्षे तत्रैव तात्पर्य्यात् ॥ २६-२७ ॥

दुर्मदान् दुष्टाहङ्कारान् साक्षात् श्रीभगवता सह युद्धात् यद्वा, निजबलादिना महामत्तानपीत्यर्थः। तेजः पराक्रमः विशिष्टक्रीडितं लीलाविशेष इत्यर्थः । यतः लीलया वसुदेवपुत्रयोरपि अव्यभिचारिसर्वैश्वर्ययोः परमित्यनेन तत्र भूभारहरणप्रयोजनस्यानुषङ्गिकत्वं व्यञ्जितम् ॥ २८—२९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ग्रहाकुलाः ग्रहः नक्रः ॥ २६ ॥

प्रवेकः श्रेष्ठः ॥ २७—२८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति–निर्भिन्नेति निर्भिन्नानि कुंभानि कुम्भस्थलानि येषां ते करिणो गजा निपेतुः तथा अश्वाश्चानेकशः शरैर्भग्नाः कन्धरा ग्रीवाः येषां तथाभूताः निपेतुरित्यनुषज्यते हताः अश्वा, ध्वजाः सूता नायका रथिनश्च येषु ते रथाः तथा पदातयश्च छिन्ना भुजा ऊरवः कन्धराश्च येषां तथाभूता निपेतुः ॥ २५ ॥

अथ भगवच्छरनिर्भिन्नपरसैन्यतनुप्रभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति– संछिद्येति संछिद्यमानेभ्यः पदातिगजाश्वानाम् अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः शतशः प्रवर्तिताः इति तृतीयश्लोकेनान्वयः । कथंभूताः? भुजा एव अहयः सर्पा यासु पुरुषाणां शीर्षाण्येव कच्छपा यासु तथाभूताः हता द्विपा गजाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एव द्वीपा अन्तरीपभूमयः हया अश्वा एव ग्रहाः। तैश्चाकुलाः व्याप्ताः॥ २६॥

करा ऊरवश्चैव मीनाः यासु नराणां केशा एव शैवलं यासु ताः धनूंष्येव तरङ्गा आयुधान्येव गुल्मानि च तैश्च सङ्कुलाः। आस्थूरिकाश्चक्राणि ता एव आवर्त्तास्तैर्भयानकाः महामणीनां प्रवेकाः श्रेष्ठाः उत्तमाभरणानि च यथायथं शिलाः शर्कराश्च यासु ताः॥ २७॥

भीरूणां भयावहाः मनस्विनां धीराणां मिथो हर्षकारिण्यः विनिघ्नतेति किं च अङ्ग हे राजन्! अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेनारीन् शत्रून् मुसलेनायुधेन विनिघ्नता ताडयता सङ्कर्षणेन कर्त्रा॥ २८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दैत्यकुलस्यापचारं नाशकरं क्षत्रियाणां कूटेन समूहेन घट्टितान् संवेष्टितान्॥ क॥

क्रमेण तत्तद्योग्यतानुसारेण॥ ख॥

एकवाहिनः एकवाहनगतान् पृष्ठवाहनहीनानित्यर्थः॥ग—ङ॥

दमघोषजः शिशुपालः॥ च॥

सिंहनादं व्यनदत् सिंहनादं चकार॥ छ॥

वीरः शूरोऽसि बलवान् शक्तिमानसि॥ ज॥

धानुष्मत्त्वं धनुष्मतां माहात्म्यम्॥ झ॥

आशुगैः शरैः॥ ञ—ट॥

यदून्नन्दति बलेन समर्द्धयतीति यदुनन्दनः॥ ठ-ण॥

कालान्तमारुतेन प्रलयकालवायुना॥ त—थ॥

निर्भिन्नकुम्भाः विदलीकृतमूर्द्धानः अनीकशः राशिशः करिप्रभृतयो निर्भिन्नकुम्भादयो बभूवुरित्यन्वयः॥ २५॥

अङ्गप्रसूताः देहोत्पन्नाः असृगापगाः रुधिरनद्यः भुजा एवाहयो यासु तास्तथा एवमुत्तरत्रापि कच्छपाः कूर्माः द्विपा एव द्वीपाः अन्तरद्वीपाः हया एव ग्रहा ग्राहाः॥ २६॥

धनुस्तरङ्गैः आयुधगुल्मैश्च सङ्कुलाः आस्फूर्जिताः उन्नतस्थलादधः तज्जलध्वनयः तैरावर्त्तैः जलभ्रमणैश्च भयानका भयप्रदा वृत्तफलकध्वनयो वा स्फूर्जितास्त एव आवर्त्ता महामणिप्रवेकाः प्रवेका उत्तमा एवाश्मान आभरणान्येव शर्करा यासु तास्तथा॥ २७॥

सङ्कर्षणेन एवंविधा असृगापगाः प्रवर्तिता इत्यन्वयः॥ २८॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अतो भगवतः क्रियाशक्तिं बोधयितुं बाणानां महत्कार्यमाह—निर्भिन्नकुम्भा इति। करिणो हस्तिनः नितरां खण्डशो निर्भिन्नाः यद्यपि निर्भिन्नकुम्भाः करिण एव भवन्ति तथापि स्वतन्त्रकर्त्री येषामिति बहिर्व्रीहिरयनपरः करिशब्दः अनीकशः अश्वा एकैकेन शरेण वृक्णाः कन्धरास्तु केशाः सन्तीति तत्र बाणप्रचारो न भविष्यतीति कन्धरापदं रथाश्च हता अश्वा ध्वजाः सूता नायकाश्च येषां तादृशा जाताः नत्वेकमारणेन शिष्टं दैवाभूतमिति रथोऽपि अवयवशः वृक्णाः इति ज्ञातव्यम् अन्यथा निपेतुरिति क्रियासम्बन्धो न स्यात् अन्यथा जाता इति क्रियान्तरं कल्प्यं प्रसज्येत पदातयश्च निपेतुः आघातेनापि पतन्तीति तेषां विशेषणमुच्यते छिन्नाः भुजाः ऊरवः कन्धराश्च येषां उरुः स्थूला वा कन्धराः नाभेरधो बाणप्रहारस्य निषिद्धत्वात् अनेन शिरश्छेदः अर्थादुक्तः॥ २५॥

एवं चतुरङ्गसेनामारणमुक्त्वा तस्याधिक्यं वक्तुं तेन जातां रुधिरनदीं वर्णयति—संछिद्यमानेति सार्द्धाभ्याम्। चतुरङ्गेषु त्रय एव रुधिरवन्तः एकं दारुमयं अतस्त्रीन् गणयति, द्विपदाः मनुष्याः इभाः हस्तिनो वाजिनश्च तेषामङ्गैः छिन्नैः प्रसूताः शतशः असृगापगा जाताः अनेन मृतानां निर्भयत्वं सूचितम् अन्यथा भयेन रुधिरशोष एव स्यात् विजातीया अपि एकैकप्रकृतिका जाता इत्यपि। अङ्गपदं तु तेषां हनने जाते दैवकृतां रुधिरवृष्टिं व्यावर्त्तयति—प्रशब्देन मरणानन्तरमपि संस्कारेणापि भयाभावः सूच्यते अन्योन्यं प्रवाहमेलनात् पूर्वं नामान्तरमप्राप्ताः पश्चादनेकानि नामानि प्राप्नुवन्तीति शतप्रत्ययः असृगापगा रुधिरनद्यः। ननु, नदीत्वं कुतः नहि प्रवाहमात्रेण नदीत्वं भवति अन्यथा वर्षाकाले जगदेव नदी स्यादित्याशङ्क्य नदीसमानाकृतित्वसिद्ध्यर्थं वर्णयति—भुजाहय इति। भुजा एवाहयः सर्पा यत्र पूरुषशीर्षाण्येव कच्छपा यत्र एतत्सात्विकं हता ये द्विपास्त एव द्वीपप्रायाः द्विर्गता आपो यत्रेति तस्मिन् द्वीपे छिन्ना ये हयाः अश्वास्त एव ग्रहा ग्राहाः तैः कुशलाः द्वीपा एव तामसा नदीत्वव्यापकाः तथापि तत्र प्रवाहेण गच्छतां हयावयवानाम् आरोहावरोहौ द्वीपाधिक्यार्थमिव निरूपितौ आगन्तुका एवैते नदीधर्मा न तु सहजा इति॥ २६॥

साधारणान् वर्णयति—करोरुमीना इति। करा एव उरु अधिका मीना यत्र करा उरवश्च मीना इति वा मध्यच्छेदे शिष्टो भागः उरुशब्देन ग्राह्यः उरुशब्द एव वा नराणां केशा एव शैवालानि शैवाला यत्र धनूंष्येव तरङ्गाः मीनाः सात्विकाः तरङ्गास्तामसाः इति त्रयं पूर्वेण वा नरके शान्तास्त्रयः आयुधान्येव तूणीरादीनि गुल्माः तैः सङ्कुलाः अत एव धनुस्तरङ्गाश्च ताः आयुधगुल्मसङ्कुला इति कर्मधारयः अच्छूरिकान्येव आवर्त्ता तैर्भयानकाः अच्छूरिकाश्चक्राणि चर्माणि वा अनेनातिगाम्भीर्यं नद्याः प्रदर्शितं महामणिप्रवेकाः महामण्युत्तमाः तद्युक्तान्याभरणान्येव शर्करायां वा॥ २७॥

पुरातननदीस्थाने कदाचित्पतितं रुधिरं जलेन सहितं तथा जातमिति शङ्कां व्यावर्त्तयति—प्रवर्त्तिता इति। नूतनतया प्रवर्त्तिताः पूर्वस्माद्वैलक्षण्यमाह—भीरुभयावहा इति। भीरूणामेव भयावहाः मनस्विनां तु हर्षकरीः अन्येषां तु साधारणा यथा वर्णिताः परस्परमिति समयुद्धे अन्याययुद्धे तु जयशीलानां प्रायेण हर्षो भवतीति नाश्चर्यमेतत् एवं भगवत्कृतं सपर्यवसानं युद्धमुक्त्वा बलभद्रकृतमाह—विनिघ्नतारीनिति। अरयः कथञ्चित् न्तव्याः भगवतस्त्वरयो न सन्तीति बलभद्रेण एकः हलेनाकृष्य मुसलेन विनिघ्नता सङ्कर्षणेन सह भगवान् युद्धं निष्क्रान्तिस्तादि जात इति पूर्वेणैवान्वयः अथवा अरीन् विनिघ्नता सङ्कर्षणेन

बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम्।
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम ॥ २९ ॥
स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया।
न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्त्यानुविधस्य वर्ण्यते ॥ ३० ॥
हतेषु सर्वसैन्येषु जरासन्धो महाबलः।
विद्रुतेष्ववशिष्टेषु रथनैकेन सीरिणम् ॥ क ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कृत्वा नद्यः प्रवर्तिता इति हनने हेतुः दुर्मदानिति दुष्टो मदो येषां उद्धतिकरणरूपः सङ्कर्षणपदेनैव तेषामाकर्षणं निरूपितं सामर्थ्ये हेतुमाह—अपारमेयं तेजो यस्येति अन्तर्बलमस्त्येव बहिस्तेजोपि कस्याप्येतावदिति मातुमशक्यम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ततश्च संच्छिद्यमानानां द्विपदादीनाम् अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं कृष्णरामाभ्यां प्रवर्तिता इति तृतीयेनान्वयः। प्रसिद्धनदीरूपकमाह—भुजा एवाऽहयो यासु ताः हतद्विपा एव द्वीपाः अन्तर्वर्तिन उच्चप्रदेशाः हया एव ग्राहा ग्राहाश्चलास्तैराकुलाः व्याप्ताः ॥ २६ ॥

अस्थूरिकाश्चर्माणि चक्राणि वा ता एवावर्तास्तैः भयानकाः महामणीनां प्रवेकाः श्रेष्ठा आभरणानि च क्रमेण अश्मानः शर्कराश्च यासु ताः। मनस्विनां वीराणां हर्षकर्यः ॥ २७ ॥

अङ्ग हे राजन्! त्वद्बलम् अर्णववत् दुर्गं भैरवञ्च दुरन्तपारं दुःशब्दो निषेधे अन्तस्तलं पारमवधिः। विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः। वस्तुविचारे तयोस्तत् कर्म केवलं विक्रीडितं नतु पराक्रमः ॥ २८—२९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तदा शरैर्निर्भिन्नकुम्भाः करिणो शरवृक्णकन्धराः शरैश्छिन्नग्रीवाः अश्वाः तथा हताः अश्वादयो येषु ते रथाः छिन्नभुजादयो येषां ते पदातयश्च अनेकश इति सर्वेषां विशेषणं निपेतुः ॥ २६ ॥

इदानीं रामकृष्णायुधनिर्भिन्नपरपक्षगद्विपदादिदेहप्रसूतरुधिरनदीः प्रसिद्धनदीरूपकेण वर्णयति—संछिद्यमानेति। सार्द्धद्वाभ्याम्। संछिद्यमानानां द्विपदानां मनुष्याणामिभानां वाजिनां च अङ्गेभ्यः पर्वताकारेण संस्थितेभ्यः प्रसूताः असृगापगाः सङ्कर्षणेन अपरिमेयतेजसा श्रीकृष्णेन च प्रवर्तिता इति तृतीयेनान्वयः भुजा एव अहयः सर्पा यासु ताः पुरुषाणां मनुष्याणां शीर्षाण्येव कच्छपा यासु ता हता द्विपा एव द्वीपा अन्तर्गता उच्चप्रदेशास्तैः हया एव ग्राहास्तैश्चाकुला व्याप्ताः ॥ २६ ॥

करा ऊरवश्च मीना यासु ताः नराणां केशा एव शैवलं यासु ता धनूंष्येव तरङ्गा आयुधान्येव गुल्माः तैश्च तैश्च सङ्कुला अच्छूरिकाश्चर्माणि चक्राणि वर्ता एव आवर्ताः तैर्भयानका महामणिप्रवेकाः महामण्युत्तमा आभरणानि च यथायथम् अश्मानः शर्कराश्च यासु ताः ॥ २७ ॥

भीरूणां भयावहाः मनस्विनां च परस्परं हर्षकरीः हर्षकर्यः ॥ २८ ॥

भाषा टीका।

इस प्रकार जब बाण चलने लगे तब कटे भये मस्तक वाले हाथी गिरने लगे, बाणों से कटे कंधा वाले अश्व गिरने लगे, और नष्ट हुये घोडा ध्वजा सूत और स्वामी जिनके ऐसे रथभी गिरते भये, और कट गये भुजा ऊरु कंधा जिनके ऐसे पैदल भी गिरते भये ॥ २५ ॥

कटते भये प्यादे हाथी और घोडों के अंग से सैंकडो रुधिर की नदी निकलतीभई, जिनमें मनुष्यों की भुजा ही सर्प भये और पुरुषों शिर कछुवा सदृश देखने में आते रहे, और मरे हुये हाथी ही द्वीप से मालूम होते, तथा मरे भये अश्व ही ग्राह से मालूम होते, इन सबो से वे नदी व्याप्त हो रही ॥ २६ ॥

मरे मनुष्यो के हाथ पांव ही जिन में मछली से तैरते, मनुष्यों के केश ही सिमार से जान पडते वीरों के धनुष ही तिरते [illegible] तरंगों के सदृश मालूम होते नाना प्रकार के शस्त्र ही झारझंकार से जान पडते, ढालें जो तैरतीं सोइ मालूम होती कि भमर पड रहे हैं बडे२ मणि और गहने ही कंकर पत्थर से मालूम होते रहे ॥ २७ ॥

मूसल लेकर शत्रुओं के नाश करने वाले श्रीसंकर्षणजी ने अपने अपरिमित बल से संग्राम में एसी ये रुधिर की नदियें प्रकट करी, कि जो भीरुलोगों को तो भय देने वाली और वीर लोगों को परस्पर हर्ष बढाने वाली ॥२८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च, सङ्कर्षणेनापि तद्बलं क्षयं प्रणीतम् अङ्ग हे राजन्! अर्णववद्दुर्गं दुर्गमं भैरवं भयङ्करं च यतो दुरन्तपारम्

तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ ।
परस्परमयुध्येतां सामर्षौ बलशालिनौ ॥ ख ॥
मागधस्तु गदां गुर्वीमादायामर्षविह्वलः ।
भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ॥ ग ॥
तामापतन्तीं तरसा गदां शृङ्गोपमां गिरेः ।
ध्वंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥ घ ॥
व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः ।
योधयित्वा रथे क्षुब्धो निहत्य रथसारथी ॥ ङ ॥
जग्राह विरथं रामो जरासन्धं महाबलम् ।
हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ३१ ॥
बध्यमानं हताराति पाशैर्वारुणमानुषैः ।
वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तोऽत्र तलं पारमवधिः तुःशब्दो निषेधे विक्रमेणागाधं देशातश्च निरवधिकमित्यर्थः । किञ्च, मगधेन्द्रेण च पालितं बलम् यदेवंभूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः ॥ २९ ॥

न चैतदाश्चर्यमित्याह—स्थित्युद्भवान्तमिति । तर्हि किमित्याश्चर्यमिव वर्णितं तत्राह–तथापीति । मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥

किञ्च, जग्राहेति हतान्यनीकानि यस्य अवशिष्टा असव एव यस्य तं च तं च ॥ ३१ ॥

हता बहुशोऽरातयो येन तथाभूतमपि जरासन्धं बध्यमानं वारयामासेति ॥ ३२—३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, यदि जगदीशता तर्हि कथं क्षुद्रातिक्षुद्रैर्नीचैर्युद्धे रसः सिद्ध्यति न चेत्तर्हि तद्वर्णनया च किं तत्राह—स्थितीति । स्थितौ तस्य साक्षाल्लीलत्वात् तस्याः प्रथमोक्तिः य इति द्वयोरैक्यमभिप्रायेण । ननु, कथमेकोऽनन्तानां स्थित्यादि कुरुते तत्राह—अनन्ता गुणाः सार्वज्ञ्यचातुर्यादयो यस्य सः तत्र स्वकीयया लीलयैव । न च तत्साधनप्रयासादिना स्वशब्देन तत्र परमं स्वाच्छन्द्यमुक्तम् । चित्रमाश्चर्यहेतुरित्यर्थः । हेतुमति हेतुत्वोपचाराच्च लिङ्गत्यागः । एवं पूर्वपक्षमनूद्य सिद्धान्तमाह—मर्त्यानुविधस्येति । यस्तादृशालौकिककर्माण्यपि मनुष्यलीलयैव करोति नतैश्वर्याविष्कारादिना तस्येत्यर्थः ॥ ३० ॥

अतोऽन्यच्च तादृशं तच्चरितं शृण्वित्याह—जग्राहेति । ओजसा वेगेनेत्यर्थः । सिंहः सिंहमिवेति मर्त्यानुविधतया साम्याभिप्रायात् । अतो महाबलत्वमपि तदपेक्षयैव नत्वैश्वर्यापेक्षया महाबलमिति क्वचित् पाठः ॥ ३१ ॥

मानुषीयैस्त्वस्यस्तापमानार्थं । गोविन्द इति पूर्ववत् । अत एव तेन जरासन्धेन कृत्वा यत् कार्य्यं हननार्थं भूभारसैन्यसंमेलनं तस्य चिकीर्षया वारयामास महाराजोऽयं सम्बन्धी च ततोऽधुना कृतापराधोऽपि त्यज्येतेति रामस्तमवादतेत्यर्थः अत्र प्रकरणप्राप्तस्य भीतार्थानां भयहेतुरित्यनेनापादानत्वं गोभ्यो यवान् वारयतीतिवत् ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्णवं पर्वसमुद्रघोषोपमं विक्रीडितं परम उत्कृष्टमभूत् ॥ २९ ॥

मर्त्यानुविध्यस्य मर्त्याऽनुविधायिनः ॥ ३०—४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तन्निहतावशिष्टं मगधेन्द्रपालितमर्णववद्दुर्गमं भैरवं च बलं क्षयं प्रणीतं नाशितमित्यर्थः । अद्भुतमेतद्द्वाभ्यामेव त्रयोविंशत्यनीकात्मकं बलं हतमिति विस्मयमानं राजानं प्रत्याह वसुदेवपुत्रयोरिति । यदुक्तं रामकृष्णयोः कर्म केवलं जगदीश्वरयोस्तयोः क्रिडितं क्रीडामात्रमेव न तु पराक्रम इति भावः ॥ २९ ॥

न चात्र विस्मयः कार्य इत्याह—स्थितीति । स्थित्यादीनां समाहारः द्वन्द्वः यो भगवानसंख्येयकल्याणगुणः स्वलीलयैव त्रिलोक्याः स्थित्यादिकमेवेहते करोति तस्य शत्रुपक्षनिग्रहो न चित्रं नाश्चर्यविषयः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि किमिति वैचित्र्येणोपवर्ण्यत इत्यत आह तथापीति । चित्रत्वाभावेपि । मर्त्याननुविधत्ते अनुकरोतीति तथा तस्य वर्ण्यते कर्मेति शेषः मर्त्यानुविधस्यामानुषं कर्म चित्रमेवत्यभिप्रायेण वर्ण्यत इति भावः ॥ ३० ॥

जग्राहेति । हतान्यानीकानि सैन्यानि यस्य अवशिष्टा असवः प्राणा एव यस्य स चासौ स च तं विरथं जरासन्धं जग्राह ग्रहीतवान् यथा सिंहः क्षुद्रमृगं गृह्णाति तद्वत् ॥ ३१ ॥

बध्यमानमिति । हता अरातयो येन तं वारुणैर्मानुषैश्च पाशैः साधनैर्बध्यमानं जरासन्धं रामेणेति शेषः । गोविन्दः कृष्णइति शेषः वारयामास राममिति शेषः तत्र हेतुः तेन जरासन्धेन सह यत्कार्यं पुनर्युद्धात्मकं तत्कर्तुमिच्छया हेतुभूतया न्यवारयदितिसम्बन्धः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अङ्ग हे विष्णुरात ! यन्मगधेन्द्रेण पालितम् अर्णववद्दुर्गमम् अत एव भैरवं दुरन्तपारं चक्षुरविषयतीरान्तरम् अनवसितसमाप्ति वा तद्बलं कृष्णरामाभ्यां क्षयं प्रणीतमित्यन्वयः । जगदीश्वराभ्यामनायासेन कृतमेतद्युद्धमित्याह—वसुदेवपुत्रयोरिति । जगदीशयोः वसुदेवपुत्रयोः तद्युद्धं परं केवलं विक्रीडितं क्रीडामात्रमेव ॥२९॥

योऽनन्तगुणो भुवनत्रयस्य स्वलीलया स्थित्युद्भवान्तं समीहते करोति स्थितिःउद्भवश्च अन्तश्च तत्तथा मिथो विरुद्धत्वादेकवद्भावः यद्यपि तस्य हरेः परपक्षनिग्रहः चित्रं न भवति तथापि मर्त्यानुविधस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं बुद्ध्यवतारार्थं वर्ण्यते प्रशस्यत इत्यन्वयः ॥ ३० ॥

सीरिणं बलभद्रमापेति शेषः ॥ क ॥

व्यंसयित्वा वञ्चयित्वा ॥ घ ॥ ङ ॥

हतानीकश्च हतसेनश्च अवशिष्टासुश्च अवशिष्टप्राणश्च स तथा तं हतानीकावशिष्टास्विति पाठे क्रियाविशेषणं ॥ ३१—३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्थित्युद्भवः ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुक्तं युद्धमुपसंहरति—बलमिति । शीघ्रमुपसंहारे ततोऽपि महत्त्वं भवतीति बलमिति अङ्गेरन्यादिभिः अर्णववद्रूपैः दुर्गं भैरवं भयानकं च अनेन स्वरूपतो माहात्म्यमुक्तं बलस्य दुरन्ताः पाला यस्येति बलस्य रक्षकाः अङ्गे समागताः राजानः दुरन्ताः न हि तेषां मतं कश्चित्कर्तुं शक्तः ततोऽपि माहात्म्यमाह—मगधेन्द्रपालितमिति । जरासन्धेन पालितम् इन्द्रपदेन सर्वतो बलस्य समृद्धता द्योतिता एतादृशमपि क्षणमध्ये क्षयं प्रणीतं एतदपि वसुदेवपुत्रयोः विक्रीडितं यद्यपि वसुदेवपुत्रत्वेन नाट्यं कृतं तथा सति पुत्रत्वनिर्वाहार्थं प्रयासोऽपि बालक्रीडायामिव प्रकाशनीयः तथापि न प्रकाशितं किन्तु क्रीडयैव सर्वं मारितमिति, एवं करणे हेतुमाह—जगदीशयोरिति । सर्वजगत एव ईश्वरयोः नहीश्वरः सदैकरूपो भवति कदाचिदभिनयं करोतीति सर्वदा अभिनयमेव करिष्यति परमित्यनेन विशेषक्रीडायामप्यनादरः ततोऽप्यल्पमिति सूचनार्थः ॥ २९ ॥

ननु, किमित्येषा कथा वर्णिता विशेषाकारणे सामान्यत एवैतद्वक्तव्यं जरासन्धसमानीतसैन्यस्य बहुशो वधं कृतवानिति अल्पे हि पौरुषत्वेन युद्धं वर्णनीयं न तु भगवतीति चेत्सत्यम् इत्याह—स्थित्युद्भवान्तमिति । यस्त्वनन्तः सर्वतः परिच्छेदरहितः स्वरूपविचारे क्रियमाणे गुणविचारेत्वाह, अनन्तगुण इति अनन्ताः कोटिब्रह्माण्डेषु यावन्तः पदार्थाः तावद्गुणो भगवान् ततोऽप्यधिक इति मुख्यः सिद्धान्तः । कांश्चिद्गुणान् प्रकटीकरोति क्रियाविचारेत्वाह—भुवनत्रयस्य स्थित्युद्भवप्रलयं स्वस्य लीलामात्रेण समीहत इति तत्र कियदिदं बलम् अतः तस्यैतन्न चित्रं तथापि तस्य परपक्षनिग्रहो वर्ण्यते भक्तिस्थापनार्थं नत्वीश्वरे परपक्षनिग्रहव्यतिरेकेणापि महत्त्वादेव भक्तिर्भविष्यति किन्निग्रहवर्णनेनेत्याशङ्क्याह—मर्त्यानुविधस्येति । भगवान् मर्त्यानुविधानं करोति तथा सति कदाचिद्भक्तपक्षपातं न कुर्यात् अन्यधर्माभिनिवेशादिति तत्रापि चेत् भक्तपक्षपातं कुर्यात् तदा निःसन्दिग्धं भक्तिमार्गः प्रवर्त्तेतेति अत एव वर्ण्यते विशेषाकारेणेति ॥ ३० ॥

एवं दूषणं परिहृत्य जरासन्धेन बलभद्रं प्रति यद्युक्तं कृतवानित्याह—जग्राह विरथमिति । तस्य रथोऽपि छिन्नः केवलं पदातिरवशिष्टः यद्यपि शरीरेणापि महाबलः तथापि तञ्जग्राह विरथो हन्तव्यो न भवतीति बद्ध्वा गृहे नेय इति सम्बन्धनार्थं गृहीतवान् यतोयं रामः सर्वेषां रमणार्थं प्रवृत्तः न: हन्तुमप्यशक्य इति तस्य नामाह—महाबलमिति च दैवं मानुषं च बलं तस्य निरूपितं तर्हि दैवगत्या गृहीत इति चेत्तत्राह—ओजसेति । तर्हि पाशादिभिर्गृहीतो भविष्यतीति चेत् तत्राह-सिंहः सिंहमिवेति । हस्ताभ्यामेव निगृहीतः न तु हलादिना आकृष्टः तस्यामोचकाभावमाह-हतमनीकं यस्य अवशिष्टा असवो यस्येति ग्रहणानन्तरं परोपकारार्थमागतो न बन्धनीय इति ॥ ३१ ॥

बध्यमानं भगवान् निवारयामासेति आह-बध्यमानमिति । महतो बन्धनमनुचितमिति तं विशिनष्टि—हतारातिमिति । हताः अरातयो येन अनेन शत्रुभूयस्त्वात् तेषां च दुष्टत्वात् तत्सुखं भविष्यतीत्यपि मोचने तदभावो मोचने हेतुरुक्तः केवलबन्धनानि तत्र न समर्थानीति पाशैर्बद्धः ते आकृष्टाः निग्रहहेतवो भवन्ति तत्रापि वारुणैर्मानुषैश्च अरातीनां मोचनाभावाय वारुणाः पाशाः मनुष्याणामर्थे मानुषा एतादृशमपि स्वाधीनं जातं परमशत्रुं वारयामास बन्धनं न कर्तव्यमिति । ननु, कथमेवं भूभारहर्ता तं मोचयतीति चेत् तत्राह-गोविन्द इति । सिंहावलोकन्यायेन पूर्वलीलां स्मृतवान् अतस्तेनापि काचिल्लीला सेत्स्यतीति तं मोचितवान् । ननु, किमिति दुष्टो मुच्यते तत्राह-तेन कार्यचिकीर्षयेति । निरोधो हि कर्तव्यः

स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः ।
तपसे कृतसङ्कल्पो वारितः पथि राजभिः ॥ ३३ ॥
वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ।
स्वकर्मबन्धप्राप्तोयं यदुभिस्ते पराभवः ॥ ३४ ॥
हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ।
उपेक्षितो भगवता मगधान् दुर्मना ययौ ॥ ३५ ॥
मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ।
विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतदभावे सर्वे भगवत्परा राजसाः सात्विकाश्च न भविष्यन्तीति तदर्थमयं रक्षितः भक्तिप्रकर्मत्वाय च ॥ ३२ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अङ्ग, हे राजन्! तद्बलं सैन्यम् अर्णववत् दुर्गं दुःप्रवेशं भैरवं भयङ्करं च दुर्गमः अन्तो ऽग्रभागः पारमवधिस्थानं च यस्य मुखाग्रे कोपि विजिगीषुर्गन्तुं न शक्नोति तद्बलक्ष्यपारं कुतो व्रजेदेवंभूतं क्षयं प्रणीतं नाशितम् वसुदेवपुत्राभ्यामिति विभक्तिव्यत्ययेन सम्बन्धः तत् कर्म परं केवलं वसुदेवपुत्रयोर्विक्रीडितं लीलामात्रं न तु पराक्रमः ॥ २९ ॥

यतो योऽनन्तगुणो ऽसङ्ख्येयस्वाभाविकगुणः भुवनत्रयस्य स्थित्युद्भवान्तं लीलामात्रेणैव समीहते तस्य परपक्षनिग्रहः शत्रुपक्षदमनं विक्रीडितमिति किं चित्रम् तथापि मर्त्यान् शिक्षणीयान् अनुविधत्ते शिक्षकत्वेनानुकरोतीति स तस्य अत्यल्पमपि कर्माश्चर्यमिव वर्ण्यते इत्यर्थः ॥ ३० ॥

हतान्यनीकानि यस्य अवशिष्टा असवो यस्य स चाऽसौ स च तम ॥ ३१ ॥

हताः अरातयो येन तम् ते चारातयो ऽन्यत्र न तु प्रस्तुत युद्धे मुकुन्दो ऽप्यक्षतबल इति वचनात् तेन जरासन्धेन भूभारभूतानां पुनरानीयमानानां वधरूपकार्यस्य चिकीर्षया ॥३२॥

भाषा टीका ।

हे राजन् ! मगधेन्द्र जरासंध की पालित समुद्र के तरह दुर्गम भयंकर और अपार उस सेना को श्रीकृष्ण और बलदेव जी इन दोनो वसुदेव के पुत्रों ने नाशको प्राप्त करदी, सो यहभी साक्षात् दोनों जगदीश्वरों का एक खेलमात्र है कुछ वास्तव युद्ध नहींहै ॥ २९ ॥

जो श्रीकृष्ण अनंत गुणवाले होने से तीनों भुवने के पालन उत्पत्ति औ संहार को अपनी लीला मात्र से करते हैं उन को शत्रुओं की सेना का मारना कुछ विचित्र नही है, तथापि मनुष्य रूप के अनुकरण (नकाल) करने से आश्चर्य के सदृश वर्णन करतेहैं ॥ ३० ॥

श्रीशुकदेव जी कहते हैं, कि- जब सेना मारी गई प्राण मात्र रह गये और वह महा बलि जरासन्ध विरथ हो गया, तब बलदेवजी ने उसको पकड़ लिया जैसे कोई सिंह सिंह को पराक्रम से पकड लेवे ॥ ३१ ॥

जब श्रीबलदेव जी जरासन्ध को बरुण पाश से और मनुष्य के पाशों से बाधने लगे तब गोविन्द् कार्य करने की इच्छा से उसको वारण करते हुए ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः नयनैर्नीतिभिः प्राकृतैर्लौकिकैः तत्र लौकिकन्यायमाह। स्वकर्मेति यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबन्धेन प्राप्तोऽतस्त्वया न लज्जितव्यमिति ॥ ३४ ॥

बार्हद्रथो जरासन्धः ॥ ३५ ॥

मुकुन्दोऽपि ययावित्यनुषङ्गः न क्षतं बलं यस्य सः तस्यैवामृतदृष्ट्याक्षतप्रतिसन्धानादिति भावः निस्तीर्णोऽनायासेनैव तीर्णोऽरिबलार्णवो येन साधुसाधु इत्यनुमोदितश्च ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स मुक्त इति युग्मकम् । लोकनाथाभ्यामिति पूर्वोक्तरीत्या लोकहितार्थमेवेति भावः । अथ च महाशयत्वात् झटिति तद्बलनेत्वमाग्रहस्य दर्शितः । यतो वीराणां सम्मतः अतो बन्धे ततोऽपि मोचने व्रीडितः । अत एव तपसे उद्यतः । कथं यादवबलादपि मम पराजयः तत इतः क्षात्रधर्मं न करिष्यामि किन्तु तपसैव शरीरं त्यक्ष्यमीति बहिरभिप्रायज्ञापनाय । अन्तस्तु वीर्यातिशयमलाभायेति ज्ञेयम् । पथि वनवर्त्मनि तपोऽर्थमाश्रिते ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पवित्रार्थपदैः क्षत्रियस्य वार्द्धक्य एव वैराग्ये सति तपः युद्धादिकमेव मुख्यो धर्मः लज्जया तस्त्यागोऽनुचित इत्यादिलक्षणैः युद्धे कदाचित् जयः कदाचित् पराजयोऽपि तेन निर्वेदः क्षत्रियस्यायोग्य इत्यादिलक्षणैर्नयनैश्च । च एवार्थे स्वकर्मबन्धत एव प्राप्तः नतु वीर्य्याद्यभावतः भयमिति पाठेऽन्यो न भावीति भावः । अन्यत्तैः । यद्वा, तत्र पवित्रार्थपदान्याह-स्वेति । "अवश्यमेव भोक्तव्यं कृतं कर्म" इत्यादि शास्त्रीयन्यायानुगृहीतत्वात् पवित्रार्थपदत्वं प्राकृतैरिति युद्धे वीरस्य मरणमपि श्रेयः न तु तत्राशक्त्यादिना तप इत्यादिलक्षणैः अन्यत् समम् ॥ ३४ ॥

हतेष्विति त्रिकम् । नृपेति बार्हद्रथः राजचक्रवर्त्त्ययं तदपत्यमिति नामाभिव्यापक इत्यर्थः । अत एव साभिमानत्वादुपेक्षितोऽपि दुर्मनाः दुःखिताचित्तः ॥ ३५ ॥

मुकुन्द इति जरासन्धमोचनाभिप्रायेण निस्तीर्णेति मर्त्यानुविधत्वात् ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । लोकनाथाभ्यां रामकृष्णाभ्यां विमुक्तः स वीरश्रेष्ठो जरासन्धः तावत्तपसे तपश्चरितुं वनं प्रवेष्टुमिच्छुः पथि राजभिः शिशुपालादिभिः कर्तृभिः विचित्रा अर्थाः पदानि शब्दाश्च येषु तैः वाक्यैः प्राकृतैः नर्म्यार्थैश्च साधनैर्वारितः अत्रः लौकिकन्यायमाहुः—स्वकर्मेति । यदुभिरल्पकैर्महतस्ते पराभवः केवलं स्वकर्मबन्धप्राप्त इत्येवम्विधैर्नयैरिति सम्बन्धः ॥ ३३—३४ ॥

हतेष्विति सर्वेष्वनीकेषु हतेषु सत्सु बार्हद्रथो जरासन्धो राजा भगवतोपेक्षितो दुःखितचित्तो मागधान् जनपदान् ययौ ॥ ३५ ॥

मुकुन्द इति । अक्षतमविहतं बलं स्वीयं स्वकीयं यस्य निस्तीर्णोऽरीणां बलमेवार्णवो येन तथाभूतः मुकुन्दः अपि त्वर्थः मुकुन्दस्त्वित्यर्थः साधु साध्विति देवैरनुमोदितः कुसुमैर्विकीर्यमाणश्च विगतः ज्वरः शत्रुपीडात्मको येभ्यः तैरत एव मुदितचित्तैः माथुरैर्जनैरुपसङ्गम्य मिलित्वा सूतादिभिः उपगीयमानो विजयः यस्य येन तथाभूतो ययौ इति सम्बन्धः । तत्र सूताः पौरुषप्रकाशकाः मागधाः गायकाः वन्दिनः स्तुतिपाठकाः इति विवेकः ॥ ३६—३७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुक्तो विसृष्टः ॥ ३३—३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह-स मुक्त इति । अन्ये यादवाः पुनः बन्धनं करिष्यन्तीत्याशङ्क्याह-लोकनाथाभ्यामिति । त्रैलोक्यनाथाभ्यां मुक्तं को वा बद्धुं शक्तः द्विवचनेन विभक्तसामर्थ्यं सर्वमेव मोचने नियुक्तमिति सूचितम् । ननु, तादृशः शक्तोपि प्रियेतेति कथं कार्यसिद्धिरिति चेत् ? सत्यं व्रीडितः अत्र हेतुः वीरसम्मत इति, वीरेषु अयमति वीर इति सम्मतः ततः मानुषपराक्रमस्य हतत्वात् अलौकिकं पराक्रमं साधयितुं तपसे कृतसङ्कल्पो जातः ततस्तपःकरणार्थं गच्छन् पथि राजभिर्वारितः ये राजानो भारभूताः अनेन भगवच्चरित्रमलौकिकमित्युक्तम् । येषामुपकारं करोति तैस्त्यक्तः येषां चापकारं करिष्यति तैर्गृहीत इति ॥ ३३ ॥

तेषां बोधने कारणान्याह—वाक्यैरिति । त्रिविधा हि बोधकाः तत्र सात्त्विकानां वचनं पवित्रार्थपदैरिति पवित्रार्थानि पदानि येषु वाक्यैरिति त्रिष्वपि सम्बध्यते नयैः प्राकृतैरपि भगवानीश्वरः सर्वात्मा तत्र पराजयो भाग्यमेवेति पवित्रार्थपदानि नीतिवाक्यानि तु स्वदेशो न भवति विचारश्च न तु कृतः अकस्माद्युद्धे पलायनमुचितमेवेति राजसाः अतो नीतिविरुद्धं न कर्त्तव्यमित्युपदेशपरैः प्राकृतास्तु बहूनामेव महतामपि पराजयो जायत इति प्राकृतवचनैः बोधमुक्तवन्तः एते त्रिविधा अपि दृष्टन्यायेनैवोक्तवन्तो नादृष्टन्यायेन अन्ये पुनरन्तरङ्गाः अदृष्टप्रकारेण बोधयामासुरित्याह—स्वकर्मबन्धन इति । त्वया हि बहवो जिताः तत्कर्मफलं च भोक्तव्यम् अन्यथा प्रकारान्तरेण दुष्टैः सह पराजयो भवेत् यतः स्वकर्मणा बन्धनं यस्य तादृशः पराभवः अपिशब्दात् सर्वे चतुर्द्धा व्यस्तैः समस्तैश्च बोधयामासुरित्यर्थः । यदुभिः सह पराभव इति युक्तमेवैतत् यतो ज्येष्ठो यदुरित्यपि ज्ञापितम् ॥ ३४ ॥

ततो यज्जातं तदाह-हतेषु सर्वानीकेष्वपि सर्वैः पुरस्कृत इति राजचिह्नानि प्राप्य स्वदेशान् गतः जरासन्धः यतो नृपः दैवमानुषसहायः सूचितः तदा बोधनानन्तरं दृष्टसामग्र्यां च सत्यां पश्चाद्गत इत्याह—तदेति । निकटे सम्भृतिं कृत्वा प्रगल्भवचनैः सह गच्छन् पुनर्भगवता निगृहीतो भविष्यतीत्याशङ्क्याह—उपेक्षितो भगवतेति । भगवतः स्थाने यद्यप्युक्तं यद्यपि भगवत्वाच्च जानाति तथापि तानि वाक्यान्यनादृत्योपेक्ष्यमेव कृतवान् भगवत्त्वादग्रिमकार्यमेव विचारयति न तु नीतिविरोधम् उपेक्षया सुतरां दुर्मना जातः तत्त्वे अवगतेऽपि मागधत्वाच्च शरणमागतः नापि तूष्णीं स्थास्यति मागधत्वादेव मागधान् ययौ ॥ ३५ ॥

तस्य स्वगृहप्राप्तिमुक्त्वा भगवतोऽपि परमवैभवेन मथुराप्रवेशमाह—मुकुन्दोऽपीति पञ्चभिः । न क्षतं बलं यस्य एकोपि न हतः यद्यपि मोक्षदाता तानपि मारयित्वा मुक्तिं दद्यात् जरासन्धं वा मोचयेत् न हि भगवान् जयहेतुः किन्तु मोक्षहेतुः क्षीनाः केचन पुनरायास्यन्तीति शङ्काभावार्थमाह—निस्तीर्णः नितरामुत्तीर्णः अरिबलरूप एवार्णवो येन अर्णवो हि नान्यत्र समायाति महत्त्वेन पौरुषं पुनरागमनाभावश्च निरूपितः ततः कुसुमैः विकीर्यमाणः त्रिदिशैरनुमोदितो जातः अन्यथा अनन्तवधे तदधिष्ठातृदेवानां दुःखं भवेदित्याशङ्क्य तदेवार्थमेतत्कृतमित्यपि सूचितम् ॥ ३६ ॥

---

माथुरैरुपसङ्गम्य विज्वरैर्मुदितात्मभिः ।
उपगीयमानविजयः सूतमागधबन्दिभिः ॥ ३७ ॥
शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ।
वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥
सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् ॥
निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥
निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः ॥
निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ४० ॥
आयोधनगतं वित्तमनन्तं वीरभूषणम् ॥
यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लज्जितत्वे हेतुः वीरसम्मत इति ॥ ३३ ॥

पवित्राणि तत्त्वोपदेशपराणि अर्था पदानि च येषु तैः । नयनैः नीतिभिः प्राकृतैर्लौकिकैः तत्र तत्त्वोपदेशमाहुः—स्वकर्मेति । तवैतत् पराभवदुःखं ललाटे लिखितमेव तत् कथमन्यथा भवति "अवश्यमेव भोक्तव्यं कृतं कर्म" इति स्मृतेः पतङ्गास्त्वनार्येन नीतिश्चाहुः स चार्थो यथा यथैव पराभवस्ते प्रारब्धकर्माधीन एव तर्हि का ते लज्जा कः खलु बुद्धिमानतिक्षुद्रात् यादवादपि त्वां दुर्बलं मंस्यते यादवेन सह युद्धे तव ऊये सति न किमपि यशः पराजयेऽपि न काचिल्लज्जा जरासन्धसिंहो हि कृष्णसारं जित्वापि न कमप्युत्कर्षमजित्वापि न कामपि निन्दां प्राप्नोतीति वयं जानीमः समकक्षेणापि सह युद्धे जयपराजयाभ्यां क्षत्रियैः न गर्वदैन्ये धार्ये किमुत स्वतोऽतिन्यूनेनेति शास्त्रमिति ॥ ३४ ॥

बार्हद्रथोऽपि बृहद्रथपुत्रो जरासन्धः ॥ ३५ ॥

मुकुन्दोऽपि ययावित्यनुषङ्गः ॥ ३६—३८ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

राजभिर्वाक्यैर्वारित इति सम्बन्धः ॥ ३३ ॥

कथम्भूतैर्वाक्यैः नयनैः नीतिशास्त्रैः प्राकृतैः स्वोत्प्रेक्षितैश्च पवित्रार्थानि श्रोतृमोहघ्नानि पदानि येषु तैः तत्रोभयवाक्यैसारमूचुः ते त्रयोविंशत्यक्षौहिणीपतेः यदुभिः स्वल्पसङ्ख्यैरपि अयं पराभवः स्वकर्मबन्धेन स्वकर्मबन्धनेन प्राप्त इति ॥ ३४ ॥

बार्हद्रथो बृहद्रथसुतो जरासन्धः ॥ ३५ ॥

न क्षतं बलं यस्य स मुकुन्दोऽपि ययौ इत्यनुषङ्गः ॥ ३६ ॥

भाषा टीका ।

वीरों को सम्मत उस जरासन्ध को जब अखिल लोक के स्वामी श्रीकृष्ण और बलदेवजी ने छोड दिया, तब अति लज्जित हुआ और तप करने का सङ्कल्प करता हुआ परन्तु मार्गमें और राजा लोगों ने समुझाकर वारण किया ॥ ३३॥

पवित्र अर्थके कहने वाले पद जिनमें ऐसे नीति वाले और प्राकृत वाक्यों से समुझाकर राजा लोग कहने लगे, कि-तुमारा यदुलोगों से पराभव तो नहीं होना था परन्तु कुछ कर्महीं मे ऐसा लिखा रहा, इससे पराजय भया इसमें तुमारा दोष कुछ नहीं ॥ ३४ ॥

जब सब सेना नष्ट होगई और श्रीकृष्ण ने उपेक्षा करदी तब बृहद्रथके वंशवाला जरासन्ध राजा उदास होकर मगधदेश को जाता भया ॥ ३५ ॥

सेना जिनकी किञ्चित् भी नष्ट नहीं हुई, और शत्रुओं की सेना रूप समुद्रके पार उतर गये, ऐसे श्रीकृष्णचन्द्र के ऊपर देवताओं ने पुष्पों की वर्षा करके अनुमोदन करके जयर शब्द किया ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रत्युद्गतैर्मथुरावासिभिर्जनैः उपसङ्गम्य मिलित्वा ॥ ३७ ॥
तदा प्रभौ पुरं प्रविशति सति शङ्खादयो नेदुः ॥ ३८ ॥

कथम्भूतां पुरम्? तदाह—सिक्तमार्गामिति । ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादितां कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥

निचीयमानो विकीर्यमाणः प्रविवेशेति विपरिणतानुषङ्गः ॥ ४० ॥

आयोधनं रणभूमिस्तत्रत्यं वित्तम् वीराणां भूषणम् ॥ ४१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कुमुन्दोऽपि माथुरैः सहाभिमुख्येन सङ्गम्य ययाविति पूर्वेणैवान्वयः । मधुपुरीमिति शेषः । ताडनावर्णितप्राचीनाह

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पराक्रमादिभिर्न क्षतमेव बलं यस्य सः जयजयेत्याद्यनुमोदितः॥३७॥

शङ्खेति युग्मकम्। अनेकशः इत्यस्य सर्वैरप्यन्वयः॥ ३८॥

दृष्टेति। दिव्यवस्त्रादिधारणञ्च सूचयति—कौतुकेनेत्यर्थः। तृतीयालुक् छान्दसः अतः सर्वत्रापि योज्यम्॥ ३९॥

कीदृशः सन् प्रविवेश? तत्राह—निचीयेति। प्रीत्या हर्षेण उत्कलितैर्विकसितैर्लोचनैः कृत्वा अत्र टीकायां विपरिणतानुषङ्ग इति पुरं प्रविशति प्रभाविति पूर्वोक्तशतृप्रत्ययस्य सप्तम्यौश्च विपरिणामात्। यद्वा, निचीयमानः इति परेण युग्मकम्॥ ४०॥

वीराणां भूषणं गात्रालङ्करणम् अत एवानन्तं तेषामतिबाहुल्यात्तद्गणनया महासम्पत्त्वान्मूल्येन चानिरूप्यमित्यर्थः। आहृतं जनैरानायितं यदुराजाय स्वयमेव तथा स्थापितायोग्रसेनायैव प्रकर्षेण राजयोग्यादरपूर्वकमदिशत् उपहृतवान् यतः प्रभुः स्वयं तद्वैभवानपेक्षः स्वमर्यादापालनपरश्चेत्यर्थः॥ ४१॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शङ्खेति। प्रभौ भगवति पुरं प्रविशति सति शङ्खादयो नेदुर्दध्वनुः भेर्यश्च तूर्याणि च तानि परवल्लिङ्गवचना। तथा वीणावेणुमृदङ्गानीति च॥ ३८॥

पुरं विशिनष्टि—सिक्तमार्गामिति। सिक्ताश्चन्दनाम्बुभिर्मार्गाः यस्यां हृष्टा जना यस्यां तां ब्रह्मघोषेण वेदपाठघोषेण निनादितां तथा कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम्॥ ३९॥

निचीयमान इति। मालामर्हन्तीति माल्यानि कुसुमानि तत्प्रभृतिभिः निचीयमानः विकीर्य्यमाणः प्रीत्योत्कण्ठितानि भरितानि लोचनानि येषां तैर्जनैरिति शेषः। स्नेहेन सहितं यथा तथा निरीक्ष्यमाणो मुकुन्दः प्रविवेशेति विपरिणतेनान्वयः॥ ४०॥

ततः किं कृतवान्? तदाह—आयोधनगतमिति। आयोधनं रणभूमिः तत्र आसमन्तादृतं स्थितं यत्तत्सर्वमनन्तमानीतं वीराणां भूषणं यदुराजाय उग्रसेनाय प्रादिशत्समर्पितवान्॥ ४१॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पुरं प्रविशति सति दुन्दुभ्यादयो नेदुरित्यन्वयः॥ ३८॥

कौतुकाभिर्हेमदामालाभिराबद्धतोरणाम्॥ ३९॥

निचीयमानः राशीक्रियमाणः॥ ४०॥

यदुराजाय उग्रसेनाय॥ ४१॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो मानुषैरप्यनुमोदित इत्याह—मानुषैरिति। दुर्गमुद्घाट्य सर्वे समागताः यतो विज्वराः मरणशङ्कारहिताः ज्वरो हि समीगत एव मरणशङ्कामुत्पादयति तेषां स एव ज्वरः, प्राप्त इति कालदेहादिधर्ममर्यादा तु पूर्वमेव निवारिता। किञ्च, बहिर्मुखा अपि मुदितात्मानो जाताः ततः सूतमागधवन्दिभिः उपगीयमानविजयो जातः॥ ३७॥

शङ्खा दुन्दुभयश्च नेदुः ततः शनैः गमनसूचनाय वीणावेणुमृदङ्गान्यपि वादितानि यतः प्रभुः पुरं प्रविशति सति लौकिकमेतदिति सूचितम्॥ ३८॥

अतः पुरं वर्णयति—सिक्तमार्गामितिद्वाभ्याम्। सिक्ताः सर्वे मार्गा यस्यां गन्धोदकैः सेकः हृष्टा जना यस्यां पताकाभिः जयलेखाङ्किताभिरलङ्कृतामिति। अधो मध्ये उपरि च शोभा निरूपिता। नितरां घुष्टा ब्रह्मघोषेण वेदपाठेनेति। प्रत्यागाशिषो मन्त्राः प्रवेशे पठनीया इति पुरप्रवेशे तदर्थमेव ब्राह्मणैः ब्रह्मघोषः पठितः वेश्यानां विशेषणद्वयमाह—कौतुकैराबद्धानि तोरणानि यस्यामिति॥ ३९॥

सर्वाभिरेव नारीभिः माल्यादिभिः विकीर्यमाणो जातः दध्यक्षताः विकीर्णाः यवाङ्कुराश्च एवं तासां क्रिया भगवति निरूपिता त्रिविधा। ज्ञानमपि तथा निरूपयति—निरीक्षमाण इति। स्नेहो बन्धुभावेन प्रीतिः पुरुषभावेन उत्कण्ठा कामभावेनेति. एवं त्रिसभावैर्लोचनैर्निरीक्ष्यमाणो जातः स्नेहः पृथक् कृतो लौकिकदोषाभावाय॥ ४०॥

ततः प्राप्तधनस्य राजन्येव विनियोगं वदन् स्वस्य तदाज्ञया युद्धादिकरणं सूचयति—तद्दुःखाभावाय आयोधनागतमिति. आयोधनं युद्धभूमिः तत्र योधैरानीतं द्रव्यमाभरणादिप्रकारेण अनन्तं बहुधा बहव एव हता इति। अनन्तत्वे हेतुमाह—वीरभूषणमिति। यावदाहृतं तत्सर्वं यदुराजाय प्रादिशत् प्रकर्षेण बोधितवान् रक्षास्थापनादिकं तु स्वकृत्यमेवेति निवेदनमात्रं राज्ञे निरूपितं प्रभुत्वात् न सह गतानां यथेष्टं द्रव्यविनियोगः॥ ४१॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पुरं विशिनष्टि—सिक्तमार्गामित्यादिना॥ ३९॥

निचीयमानः विकीर्यमाणः प्रभुः प्राविशदिति विपरिणतानुषङ्ग इति श्रीस्वामिचरणाः। यद्वा, प्राविशदिति परेणान्वयः॥४०॥

आयोधनं युद्धभूमिस्तत्र पतितं वीराणां भूषणं गात्रलयम्॥४१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अभिसङ्गम्य मिलित्वा॥ ३७॥

प्रभौ भगवति पुरं प्रविशति। शङ्खादयो नेदुः दध्वनुः॥ ३८॥

कथम्भूतं पुरमित्याकाङ्क्षायां पुरं विशिनष्टि—सिक्तमार्गामित्यादिना। कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम्॥ ३९॥

मालामर्हन्तीति माल्यानि कुसुमानि तदादिभिर्निचीयमानः अवकीर्यमाणः प्रीत्या उत्कलितानि लोचनानि येषां तैर्जनैरिति शेषः। सस्नेहं स्नेहेन सहितं यथा भवति तथा निरीक्ष्यमाणः

विजयध्वजतीर्थीयपठितश्लोकाः।

राजानः सहसोत्सृज्य दृष्ट्वा सैनिकसङ्क्षयम्।
विना रणोपस्करणं चक्रुः केवलं सङ्गरम्॥ २४॥
केचिद्विसृज्य शिबिरं विविशुर्गहनं वनम्।
कैश्चिन्मागधमासाद्य विजयस्वेति चाब्रुवन्॥ २५॥
रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम्।
जघान सुबहून् वीरान् सायुधान् सरणोद्यमान्॥ २६॥
सङ्कर्षणोऽपि बलवान् महत्या सेनया वृतः।
बलं प्रविश्य वामेन मर्दयामास मागधम्॥ २७॥
शैनेयोऽपि महाबाहुर्दक्षिणेनैव वर्त्मना।
प्रविश्य चतुरङ्गेण सैन्येन महता ऽर्दयत्॥ २८॥
एवं सा व्यथिता सेना मागधेन्द्राभिरक्षिता।
दुद्राव त्रास्यमाना वै क्षणमात्रं दिशो दश॥ २९॥
तामनुद्रुत्य वार्ष्णेयः सात्यकिः पञ्चयोजनम्।
निहत्य मागधं सैन्यं जयी व्यावर्तताऽहवात्॥ ३०॥
मतङ्गजान् पर्वतसन्निभान् बहून्निगृह्य सोपस्करतोमराङ्कुशान्।
रथांश्च शस्त्रध्वजवाजिसंयुतानिनाय कृष्णो मथुरां मनोरमाम्॥३१॥
छत्राणि हेमाम्बररत्नमिश्रितान्यनेकबालव्यजनानि माधवः।
किरीटपट्टाङ्गदकुण्डलांशुकान्यवाप कृष्णोऽगणितानि संयुगे॥३२॥
हलायुधो मागधकोशवाहनप्रजावरोधायुधभूषणादिकम्।
नियोजितः कंसभिदा रणाजितं यदुप्रवीराय धनं न्यवेदयत्॥३३॥

इति श्रीभागवते महापुराणे दशमस्कन्धे
अधिकपाठे प्रथमोऽध्यायः॥ १॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रणोपस्करणं युद्धसाधनम्॥ २४—२९॥

मगधस्य अधिपतिः मागधः तस्य मागधस्य विद्यमानमपि मागधं सैन्यम् अन्यथा मागधं निहत्येत्यनन्वितं स्यात्॥ ३०—३१॥

हेमाम्बरादीनि छत्राणीत्यस्य विशेषणानि॥ ३२—३३॥

*अधिकपाठे प्रथमोऽध्यायः॥१॥
(विजयध्वजतीर्थीयरीत्या पञ्चाशत्तमोऽध्यायः।)

---

श्रीशुक उवाच।

(मूलम्) मागधस्तु रणश्लाघी माधवेन पराजितः।
जगाम शोणितपुरं बाणं द्रष्टुं बलेः सुतम्॥ १॥
तं तथा यान्तमाकर्ण्य वृतराजन्यमण्डलम्।
मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः॥ २॥
अलङ्कृतैर्गजैरश्वैर्विविधैस्स्यन्दनैर्भटैः।
वारकान्ताकदम्बैश्च सूतमागधवन्दिभिः॥ ३॥
ध्वजैः पताकैश्छत्रैश्च माङ्गल्यैः पटहस्वनैः।
सुवर्णतोरणैश्चित्रैर्दीपैः कलशदर्पणैः॥ ४॥
उपतस्थे जरासन्धं बाणो बाहुसहस्रवान्।
तौ दृष्ट्वा परमस्निग्धौ परस्परमनोऽनुगौ॥ ५॥
पूजां चक्रतुरन्योन्यमन्योन्यप्रियकारिणौ।
ततोऽब्रवीज्जरासन्धो बाणमाभाष्य संसदि॥ ६॥
दानवेन्द्र निबोधेदं गोपेनाधर्मचारिणा।
राज्ञौ चौर्यप्रतापेन वञ्चितोऽस्मि दुरात्मना॥ ७॥
गृहीता बहवस्तुङ्गा मातङ्गा मदशालिनः।
तुरङ्गमाश्च बहवो रथाश्च सपरिच्छदाः॥ ८॥
द्वन्द्वेन सज्जमानं मामिमे भूपा न सेहिरे।
निरुद्धस्तैरहं भूपैरेतैः समसुखासुखैः॥ ९॥
त्वत्सन्निधिमिहायातः साहाय्यं कुरु मे प्रभो!।
इत्युक्तस्तं निजपुरं प्रवेश्य बलिनन्दनः॥ १०॥
स राजमण्डलायाशु कारयामास सत्क्रियाम्।
भोजनस्नानशयनगन्धताम्बूलपूर्वकैः॥ ११॥
अर्हणैरर्हयामास स राजन्यं जरासुतम्।
तम्भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम्॥ १२॥
अलङ्कृतं सहनृपैरासीनं काञ्चनासने।
उवाच दानवपतिर्नृपानाभाष्य सादरम्॥ १३॥

बाण उवाच।

जरासन्ध! निबोधेदं न मृषा कथ्यते मया।
एते गजा इमे अश्वा इदं राज्यमिमाः प्रजाः।
त्वदधीनमिदं विश्वं यच्चान्यद्वस्तु विद्यते॥ १४॥

श्रीशुक उवाच।

इत्युक्त्वा प्रददौ तस्मै मागधाय बलेः सुतः।
गजानां षष्टिसाहस्रं रथानां नियुतं तथा।
प्रयुतं चतुरङ्गाणां मनोमारुतरंहसाम्॥ १५॥
दानवानां प्रसिद्धानां मायासङ्ग्रामवेदिनाम्।
त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेः सुतः॥ १६॥
विचित्रशिबिकाछत्रव्यजनाकल्पवाससाम्।
असङ्ख्यातं ददौ राजन्! भाण्डशय्यासनादिकम्॥ १७॥
कुम्भाण्डं कूपकर्णं च मन्त्रिणौ दैत्यसत्तमौ।
आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह!॥ १८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रणश्लाघी अत्युत्कटरणमाकाङ्क्षमाणः॥ १—२॥

वारकान्ताकदम्बैः गणिकाश्रेणिनिकरैः॥ ३॥

माङ्गल्यैर्मङ्गलद्योतकैः॥ ४—८॥

द्वन्द्वेन युद्धेन॥ ९—१०॥

सत्क्रियां सत्कारम्॥ ११॥

राजसैन्यसहितं दृष्टं दर्शनकौतुकं स्वप्नकौतुकं येन स तथा. स्वप्ने कौतुकं दृष्ट्वा कौतूहलबुद्धिर्भवति तथा बाणसम्पदं दृष्टवानित्यर्थः। "दर्शनं चक्षुषि स्वप्ने बुद्धिशास्त्रोपलब्धिषु" इति॥ १२—१४॥

रथानां नियुतं लक्षम्॥ १५—१८॥

---

विजयध्वजतीर्थीयपठितश्लोकाः ।

क सुरासुरसङ्घातसंहारणपटुर्हरिः ।
कुम्भाण्डकूपकर्णौ क वराकौ बाणमन्त्रिणौ ॥ १९ ॥
अजानतो विष्णुशक्तिं भूपाला विनाशिष्णवः ।
चक्रुर्भूयो रणोद्योगं मागधेन प्रचोदिताः ॥ २० ॥
बाणेन समनुज्ञातो मागधः शोणितात् पुरात् ।
निर्गत्यानेकभूपालचतुरङ्गबलान्वितः ।
दिनैः कतिपयैर्भूयो मथुरामन्वपद्यत ॥ २१ ॥
सन्निरुध्य पुरद्वारं गोपुराट्टालतोरणैः ।
दीर्घिकोपवनोद्यानैरुपेतं सालभूषितम् ॥ २२ ॥
कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः ।
कर्षणस्थैश्च पाषाणैर्बभञ्ज परितः पुरम् ॥ २३ ॥
भज्यमाने पुरे तस्मिन् श्रुत्वा मागधमागतम् ।
सन्नाहभेरीः सन्नाद्य रामकृष्णावमर्षिणौ ॥ २४ ॥
रथाश्वकुञ्जरानीकैः सायुधैः सपरिच्छदैः ।
सात्यकिं कृतवर्माणमुग्रसेनं तथा गदम् ॥ २५ ॥
आहुकं वसुदेवं च पुरस्कृत्य महाबलौ ।
निर्जग्मतुरसम्भ्रान्तौ दीप्तौ केसरिणौ यथा ॥ २६ ॥
मथुराया विनिर्गत्य कृष्णः कमललोचनः ।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ रिपुभीषणम् ॥ २७ ॥
ततः प्रववृते युद्धं यदूनां क्षत्रियैः सह ।
कुम्भाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ ॥ २८ ॥
दैत्यसैन्येन महता वृतौ मायाविशारदौ ।
युयुधाते महावीर्यौ मायया वृष्णिभिः सह ॥ २९ ॥
स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः ।
विज्ञानास्त्रेण तन्मायामपास्य निमिषान्तरे ।
सात्यकिं कृतवर्माणं प्रोवाचाहवलालसौ ॥ ३० ॥
नाभ्यां भवन्तो रणदुर्मदाभ्यां रणं सुघोरं कुरुतं रणप्रियौ ।
नावेव मुक्तौ कदनं भयानकं महाबलौ सम्प्रति चक्रतुर्नृप!॥३१॥
चापेनैकेन गोविन्दः क्षत्रियैः शतसम्मितैः ।
युयुधे न हि तच्चित्रं राजन्! विश्वात्मनो हरेः ॥ ३२॥
केचिद्धताः समापेतुः कुञ्जराश्छिन्नपुष्कराः ।
निपेतुर्बहवो राजंस्तुरङ्गाः कृत्तकन्धराः ३३
विशीर्णैरास्तृता पृथ्वी स्यन्दनैश्छिन्नबन्धनैः ॥ ३४ ॥
भटाश्च रुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः ।
पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः ॥ ३५ ॥
शार्ङ्गमुक्ताः शरगणाः कङ्कबर्हिणवाससः ।
तैलाक्ता नतपर्वाणः स्वर्णपुङ्खा अयोमुखाः ।
एकैकस्मिन् दश दश भटे चाश्वे शतं शतम् ॥ ३६ ॥
रथे रथे च साहस्रमयुतं च गजे गजे ।
अदृश्यन्त परानीके तदद्भुतमिवाभवत् ॥ ३७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ जरासन्धेन सह योद्धुं श्रीकृष्णस्याशक्यमिति मन्दाशङ्कां परिहरति—क्वेति । वराकौ षण्ढतिलनिःसारौ ॥ १९-२१॥

सालैः प्राकारैः भूषितञ्च ॥ २२ ॥

दण्डभारैर्दीर्घीकृतनिशितप्राग्रचर्ममयदण्डैः कर्षणस्थैः पाषाणयन्त्रनिहितैः ॥ २३—२५ ॥

दीप्तौ क्रोधेन ज्वलितौ ॥ २६—२९ ॥

आहवलालसौ युद्धोत्सुकौ ॥ ३०—३१ ॥

शतसम्मितैः शतसङ्ख्यापरिमितैः ॥ ३२ ॥

छिन्नपुष्कराः द्विधा कृतहस्ताः ॥ ३३—३५ ॥

कङ्कानां लोहपृष्ठानां बर्हिणां मयूराणां पक्षा एव वासांसि येषां ते ॥ ३६ ॥

---

मू० ) तथा तैरर्द्यमानेषु चतुरङ्गेषु मागधः ।
रथेन क्रोडचिह्नेन बलभद्रमुपाद्रवत् ॥ ३८॥
स पूर्ववैरं नृपतिः स्मरन् तथा रथं महाकाञ्चनतालकूबरम् ।
आलक्ष्य दूरादधिगम्य रंहसा जरासुतः प्राह हलायुधं गदी॥३९॥
आदत्स्व ते मुसलं राम! तूर्णं येनाहितानिच्छसि जेतुमाहवे ।
बलं च बाह्वोस्तव दर्शयाशु मे यावद्गदां न प्रहराम्यहं त्वयि ॥४०॥
इत्येवमुक्तो मगधेश्वरेण सङ्कर्षणोऽमर्षणविह्वलेक्षणः ।
आदाय घोरं मुसलं तडित्प्रभं दण्डं यथा सूर्यसुतो युगक्षये ॥४१॥
आवर्तयित्वा मुसलं हलायुधः सहस्रकृत्वो रिपुदर्पहारिणम् ।
धूमाङ्कुरोद्गारिणमाशु तस्मै चिक्षेप राजन्! व्यमदद्धरिर्यथा॥४२॥
रामबाहुविमुक्तेन मुसलेन जरासुतः ।
साश्वसूते रथे क्षुब्धे क्षणेन व्यसितः स्वयम् ॥४३ ॥
ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम् ।
बिभ्रद्रुषा पदा पृथ्वीं चालयन्नभ्यगाद्बलम् ॥ ४४ ॥
तमापतन्तमालोक्य विरथं रोहिणीसुतः ।
तमेवाभ्यद्रवत्पद्भ्यां विसृज्य स्यन्दनं रणे ॥ ४५ ॥
पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः ।
आवर्तयन् गदां गुर्वीमयःसारमयीं दृढाम् ॥
अभ्येत्य गदया रामं प्रजहार ननाद च ॥ ४६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रोडचिह्नेन वराहलक्षणेन ध्वजेन ॥ ३८ ॥

काञ्चनतालश्च कूबरः युगन्धरश्च यस्मिन्स तथा ॥ ३९—४० ॥

सूर्यसुतो यमः ॥ ४१ ॥

हरिः सिंहः ॥ ४२ ॥

स्वयं मागधो व्यसितो वञ्चितः ॥ ४३ ॥

कालायसीं कृष्णायोमयीम् ॥ ४४—४६ ॥

---

तां गदां पतितां वक्षस्यद्मकुड्मनिभां दृढाम् ।
वामेन जगृहे रामः स्वहस्तेन कुरूद्वह! ॥ ४७॥
विसृज्य स गदां तूर्णमुरस्याहत्य मागधम् ।
जग्राहाश्लिष्य बलिनं बलवान् रोहिणीसुतः ॥ ४८ ॥
बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः ।
चकार कुक्षौ तत्कण्ठे ततस्तौ पेततुर्भुवि ॥ ४९ ॥
तयोर्निपतितोरा जन्तुपर्यासीद्धलायुधः ।
तं मागधः क्षणेनाधश्चकारामितविक्रमः ॥ ५० ॥

विजयध्वजतीर्थीयपठितश्लोकाः।

तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ।
भूयो जग्राहतुर्घोरौ मत्तौ द्वाविव कुञ्जरौ ॥ ५१ ॥
तावुभौ परमक्रुद्धौ परस्परवधैषिणौ।
उद्बलोरः समाहत्य भीमौ चक्रुषतूरणे ॥ ५२ ॥
एवं धनुःशतशतं तावाकृष्य परस्परम्।
निकटस्थान् द्रुमान् शैलांश्चूर्णयामासतुर्नृप ! ॥ ५३
तं विसृज्य जरासन्धो गदामादाय दुर्मदः।
उत्तस्थिवदमेयात्मा रामोऽपि स महाबलः।
क्षणादादाय मुसलं प्रहर्तुमुपचक्रमे ॥ ५४ ॥
तं कामपालो मुसलेन मूर्ध्नि जत्रुण्यंसे भुजयोर्नाभिदेशे।
ऊरौ च जानौ जठरे च वक्षस्यनेकशो वै प्रजहार युद्धे ॥ ५५ ॥
तं मागधो वक्षसि कन्धरे च मुखे ललाटे चुबुके तथांऽसे।
नाभौ नितम्बे च तथैव पार्श्वे समं स मानी प्रजहार रामम् ॥ ५६ ॥
एवं प्रहरतोस्तत्र राममागधयोर्मृधे।
राजानो रणसंविग्ना बभूवुर्भृशपीडिताः ॥ ५७ ॥
क्रमेण ते विमनसो निवृत्तकदनोद्यमाः।
आसन्नासन्ननिधनं मन्वाना मागधेश्वरम् ॥ ५८ ॥
सात्यकिस्तु महातेजाः सङ्गरे बाणमन्त्रिणा।
युध्यमानस्त्रिभिर्बाणैः कुम्भाण्डेन स मर्दितः ॥ ५९ ॥
सोऽतिविद्धो महाबाहुः क्रुद्धः सर्प इव श्वसन्।
आददे पञ्च नाराचान् कुम्भाण्डं हन्तुमाहवे ॥ ६० ॥
ततो हाहारवो जज्ञे सेनायां दैत्यमन्त्रिणः।
सात्यकिस्तं महाबाहुराकृष्याकर्णमाशुगैः ॥ ६१ ॥
विव्याध कुरुशार्दूल ! कुम्भाण्डं बाणमन्त्रिणम्।
नाभौ कण्ठे ललाटे च हृदि मूर्ध्न्यपि दानवम् ॥ ६२ ॥
अभिविद्धो रथोपस्थे निषसाद विचेतनः।
तं विचेतनमालोक्य दुर्मनास्तस्य सारथिः ॥
अपोवाह रणात्तूर्णं रथेन भरतर्षभ! ॥ ६३ ॥
कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा।
गतं कुम्भाण्डमालोक्य प्राप्तं च प्राणसंशयम्।
विसृज्य कृतवर्माणमपायात् समराङ्गणात् ॥ ६४ ॥
तौ विसृज्य रणं दैत्यावनापृच्छ्य च भूपतिम्।
अविसृष्टौ मागधेन हतशेषबलान्वितौ।
दैत्यौ तेनैव मार्गेण जग्मतुः शोणितं पुरम् ॥ ६५

इति श्रीभागवते महापुराणे दशमस्कन्धे
अधिकपाठे द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अश्मकूटनिभाम् अश्मसारसमाम् ॥ ४७—५४ ॥
कामपालो बलभद्रः जत्रुणि वक्षःस्कन्धयोर्मध्ये शङ्खे स्कन्धमूले ॥ ५५—६४ ॥
अनापृच्छ्य गमिष्यामीत्यनुक्त्वा ॥ ६५ ॥

अधिकपाठे द्वितीयोऽध्यायः ॥ २ ॥
( विजयध्वजतीर्थीयरीत्या एकपञ्चाशत्तमोऽध्यायः ) ॥ ५१ ॥

---

श्रीशुक उवाच।

बाणसेनां गतां दृष्ट्वा शस्त्रौघेण भृशार्दिताः।
राजपुत्रा विमनसो बभूवुर्नृपसत्तम ! ॥ १ ॥
गतांश्च दानवीं सेनां भ्रान्तांश्च धरणीपतीन्।
दृष्ट्वा कृष्णं च युद्ध्यन्तं रामस्य ववृधे बलम् ॥ २ ॥
स मागधं गृहीत्वाऽसौ मौलौ वामेन पाणिना।
प्रहर्तुमैच्छच्छिरसि मुसलेन हलायुधः ॥ ३ ॥
ततोऽन्तरिक्षे घनघोषघर्घरां शुश्राव वाणीं विशदाशरीरिणीम्।
न राम वध्यो भवता जरासुतः सुखी निवर्तस्व रणादिति स्फुटम् ॥ ४ ॥
वचस्तदाकर्ण्य हलायुधो बली विसृज्य चास्थाय रथं रणाङ्गणात्।
न्यवर्तत ब्रह्मर्षिसिद्धसङ्घैरभिष्टुतो मागधसूतबन्दिभिः ॥ ५ ॥
जरासुतः सम्प्रति नम्रकन्धरो नृपैश्च युद्धाभिजितैः समन्वितः ॥
हतावशिष्टाल्पबलेन संवृतो निवृत्तयुद्धः प्रययौ स्वकं पुरम् ॥ ६ ॥

श्रीशुक उवाच।

गोविन्दस्तु महातेजाः सपत्नाञ्छरसञ्चयैः।
आच्छाद्य भूपान्विद्राव्य हत्वा च सुबहून्रणे ॥ ७ ॥
संस्तूयमानः सन्तुष्टैः सूतमागधबन्दिभिः।
ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भिरुच्चकैः ॥ ८ ॥
अन्वीयमानो भगवान् प्राविशन्मथुरां पुरीम्।
हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारतोरणाम् ॥ ९ ॥
चलत्कदलिकोपेतां दीपाङ्कुरविराजिताम्।
प्रविशन्राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः ॥ १० ॥
पुष्पैश्च लाजाञ्जलिभिः कीर्यमाणो व्यराजत।
उपायनानि दिव्यानि पुष्पस्रगनुलेपनान् ॥ ११ ॥
प्रियङ्करा माधवाभ्यामुपजह्रुः पुरौकसः।
एवं स राजमार्गेण गत्वा यादवसत्तमः ॥ १२ ॥
सभां प्रविश्य विपुलामुपविश्य वरासने।
रामेण सहितो वीरः शैनेयेन च धीमता ॥ १३ ॥
पूजितो यदुभिर्विप्रैः दिवि शक्र इवामरैः।
तत्रासीनैर्वृष्णिभिरन्धिर्यदुवृद्धैर्महात्मभिः ॥ १४ ॥
उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः।
समाभाष्याभ्यनुज्ञातः सङ्कर्षणसहायवान् ॥ १५ ॥
द्रष्टुकामो महादुर्गं गोमन्तं पर्वतोत्तमम्।
निर्गम्य मथुरां प्रातर्दक्षिणाभिमुखो ययौ ॥ १६ ॥
स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः।
देशान् बहूनतिक्रम्य पर्वतान् सरितो गिरौ ॥ १७ ॥
गच्छन् कश्चिद्वनोद्देशे वृक्षमूलनिवासिनम्।
ददर्श कञ्चमुनिं जटामण्डलमण्डितम् ॥ १८ ॥
चीरकृष्णाजिनधरं कमण्डलुविराजितम्।
माधवौ समुपाविष्टं तेजसा भास्करोपमम् ॥ १९ ॥
फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम्।
दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती ॥ २० ॥
प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ।
इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ॥ २१ ॥
नमस्ते भार्गव ! श्रीमन् ! जामदग्न्य ! तपोधन ! ।
रामकृष्णौ स्मृतावावां कच्चित्ते श्रवणं गतौ ॥ २२ ॥
इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः।
निरीक्ष्य माधवौ प्राह प्रीत्योत्फुल्लमुखेक्षणः ॥ २३ ॥

विजयध्वजतीर्थीयपठितश्लोकः।

स्वागतं ते यदुश्रेष्ठ! साग्रजाय महात्मने।
जाने त्वां यदुभूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥

श्रीमद्विजयध्वजकृतपदरत्नावली।

विमनसः युद्धविरतमनसः ॥ १ ॥
दानवस्य बाणस्य विद्यमानाम् ॥ २ ॥
मौली संयतकेशे "मौलिः संयतकेशेषु चूडायां मुकुटेप्ययम्" इति ३॥
घर्घरां गम्भीरां "गाम्भीर्ये नूपुरारावे घर्घरः समुदाहृतः" इति अशरीरिणीं शरीरहीनां दैवीमित्यर्थः ॥ ४—७ ॥

सम्यक् प्रीतपुरुषैः महती विद्या शास्त्रविषया येषां ते तथा तैः ॥ ८—१५ ॥

मथुरां रक्षितुं निर्गम्य निर्धार्य पञ्चम्यर्थे वा द्वितीया ॥ १६ ॥

गिरौ वनेऽद्देशे वने उन्नतप्रदेशे वृक्षमूले निवासिनं कृतावासं कञ्चन लोकविलक्षणम् ॥ १७—१९ ॥

फलं लाभः आनन्दः चेतनस्य मूलं ज्ञानं ते एव कृते पूर्णे आहारो यस्य स तथा तम् ॥ २० ॥

प्रणामं चक्रतुरित्यादिना प्रतीयमानः कृष्णभार्गवरामयोः नम्यनन्तृभावो भेदाविनाभावं गमयति तत्कथमुभयोर्विष्णुत्वे सङ्गच्छत इत्याशङ्का।

"सर्वावताराभिन्नोऽपि सर्वशक्तिरपि स्वयम्।
पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनाम् ॥
अखण्डैकरसो विष्णुर्दर्शयेत्तत्र तत्र हि।
इति पाड्गुण्यवचनेन परिहरणीयेति ॥ २१-३० ॥

मू०) कार्याणां कारणं पूर्वं जगतामादिपूरुषम्।
नमस्ते पुण्डरीकाक्ष विश्वलोकैककारण! ॥ २५ ॥
किमर्थमिह सम्प्राप्तौ भवन्तौ विश्ववन्दितौ।
इत्युक्तौ जामदग्न्येन प्राहतू रामकेशवौ ॥ २६ ॥
गोमन्तं द्रष्टुमिच्छावो दुर्गहेतोरिह प्रभो!।
तदाकर्ण्याब्रवीद्रामो जामदग्न्यो जनार्दनम् ॥ २७ ॥
एवमस्तु महाबाहो! गोमन्तं गच्छ साग्रजः।
करवीरपुरं नाम तन्मूले परिपालितम् ॥ २८ ॥
शृगालवासुदेवेन स युवां न सहिष्यति।
तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ ॥ २९ ॥
इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ।
तमनुज्ञाप्य सर्वज्ञं जग्मतुर्दक्षिणामुखौ ॥ ३० ॥
तौ तथा यदुशार्दूलौ गच्छन्तौ दक्षिणापथम्।
ददर्शतुश्च गोमन्तमभ्रङ्कषमहाद्रुमम् ॥ ३१ ॥
करवीरपुरं चैव तन्मूले तुङ्गतोरणम्।
दृष्ट्वा विचित्रप्राकारं हर्म्यप्रासादगोपुरम् ॥ ३२ ॥
शङ्खमाध्मापयामास शङ्खचक्रगदाधरः।
तस्य शङ्खध्वनिं श्रुत्वा बभूव क्रोधविह्वलः ॥ ३३ ॥
शृगालो वासुदेवाख्यः प्रत्यगाद्यदुनन्दनौ।
सोऽभ्येत्य बहुपादातितुरङ्गरथकुञ्जरः ॥ ३४ ॥
अभ्यवर्षच्छरौघेण छादयन्निव माधवौ।
सदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ ॥ ३५ ॥
योधयामासतुर्वीरौ व्रावेवाजौ पदातिनौ।
सैन्यं च बाणपूगेन व्यथितं भृशविह्वलम् ॥ ३६ ॥
दृष्ट्वा शृगालभूपालस्तावधावदमर्षणः।
तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकम्।
न्यवारयद्वासुदेवो वेलेव वरुणालयम् ॥ ३७ ॥
तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ।
युयुधाते तथाऽन्योन्यमन्योन्यवधकाङ्क्षिणौ ॥ ३८ ॥
स तथा विद्यमानस्य वासुदेवस्य सङ्गरे।
शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम् ॥ ३९ ॥
ततस्तत्सैनिकाः सर्वे हतशेषाः कुरूद्वह!।
कृष्णेन स्वामिनि हते दुद्रुवुः सर्वतो दिशम् ॥ ४० ॥
ततस्तौ रामगोविन्दौ करवीरपुरं महत्।
प्रविश्य पूजितौ विप्रैर्वणिग्भिश्च यथा प्रियैः ॥ ४१ ॥
तद्गजाश्वरथानीककोशादिधनसञ्चयम् ॥
मथुरां प्रेषयामास तदीयैर्भृत्यपूरुषैः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
अधिकपाठे तृतीयोऽध्यायः ॥ ३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अभ्रङ्कषा महान्तो द्रुमा यस्मिन् स तथा तम् अभ्राणि मेघान् कषन्त्युल्लिखन्तीत्यभ्रङ्कषाः कषतेर्धातोरभ्रादिषूपपदेषु खश् प्रत्ययो भवति ॥ ३१ ॥ —॥ ३५ ॥

पदातिनौ पादैः सञ्चरमाणौ रथादिरहिताविल्यर्थः ॥ ३६-३७ ॥
वासुदेवौ वसुदेवपुत्रौ कृष्णशृगालौ ॥ ३८ ॥
वासुदेवस्य शृगालनाम्नः ॥ ३९ ॥ ४० ॥
प्रियसुहृद्यथा तथा पूजितौ ॥ ४१ ॥
तदीयैस्तस्य विद्यमानैः ॥ ४२ ॥

अधिकपाठे तृतीयोऽध्यायः ॥ ३ ॥
(विजयध्वजतीर्थीयरीत्या द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥)।

श्रीशुक उवाच।

मू०) गोमन्तं पर्वतश्रेष्ठं तुङ्गद्रुमलतान्वितम्।
सालतालतमालाढ्यं प्रियालाशोकशोभितम् ॥ १ ॥
कदम्बनिम्बहिन्तालपूगपुन्नागशोभितम्।
आरुह्य कदलीषण्डमण्डितं मत्तकोकिलम् ॥ २ ॥
भ्रमद्भ्रमरसङ्घातझङ्काराकम्पितद्रुमम्।
फलभारनतैः स्कन्धैर्नारिकेलैर्विराजितम् ॥ ३ ॥
बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम्।
रम्यं ददृशतुर्वीरौ प्रदेशं रामकेशवौ ॥ ४ ॥
तत्र प्रवर्षणं नाम शृङ्गं पर्वतमूर्द्धनि।
अवापतुर्यत्र मेघा नित्यं वर्षन्त्यविक्लवाः ॥ ५ ॥
तत्रारुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशो दश।
रममाणौ यथाकाममूषतुः पर्वतोत्तमे ॥ ६ ॥
एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे।
निवासे देवदेवस्य शङ्खचक्रगदाभृतः ॥ ७ ॥
उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः।
जहार देवदेवस्य किरीटं रत्नचित्रितम् ॥ ८ ॥

एवं सप्तदशकृत्वस्तावत्यक्षौहिणी बलः।
युयुधे मागधो राजा यदुभिः कृष्णपालितैः॥ ४२॥
अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा।
हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः॥ ४३॥

विजयध्वजतीर्थीयपठितश्लोकः।

इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम्।
पद्मरागमहानीलमुक्ताफलविराजितम्॥ ९॥
पुष्परागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम्।
हृतं दानववीरेण विदित्वा पुरपालकः।
तमन्वधावत्त्वरितं वैनतेयो विहङ्गराट्॥ १०॥
तमन्तरे समासाद्य दानवेन्द्रं दुरासदम्।
कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम्॥ ११॥
गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम्।
आगच्छन् ददृशे देवं देवकीनन्दनं हरिम्॥ १२॥
वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे।
तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम्।
प्रणम्य पादयोर्मूर्ध्ना स्तोतुं तमुपचक्रमे॥ १३॥

गरुड उवाच।

नमो नमः कारणपूरुषाय नारायणायाखिलवल्लभाय।
सुरारिसंहारणकारणाय नारायणायाखिलकर्मसाक्षिणे॥ १४॥
हिरण्यगर्भत्वमुपेत्य मूले सृजस्यशेषं भुवनं स एव।
नारायणात्मन् परिपासि भूयो जहार चान्ते भगवन् शिवात्मन्॥ १५॥
तं त्वा यदोर्वंशकरं सुरेशं जानेऽवतीर्णं भुवने वृषाकपिम्
अहं हि भृत्यस्तव वैनतेयो ब्रूहि क्रियां किङ्करवाणि देव!॥ १६॥

श्रीशुक उवाच।

इत्युक्त्वा देवदेवेशं प्रणिपत्य विहङ्गराट्।
जानुनी धरणीं कृत्वा तस्थौ प्राञ्जलिरग्रतः॥ १७॥
तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुङ्गवम्।
प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गं तदुत्तमम्॥ १८॥
गच्छ भद्र यथाकाममेहि काले मया स्मृतः।
इत्युक्त्वा तं विसृज्योभावीश्वरौ रामकेशवौ॥ १९॥
फलमूलकृताहारौ पीतनिर्झरवारिणौ॥
अवरुह्य गिरेः शृङ्गात्करवीरपुरं गतौ॥ २०॥
तत्र तौ चतुरो मासानुषित्वा भरतर्षभ!॥
महत्या सेनया सार्धं जग्मतुर्मथुरां पुरीम्॥ २१॥
शृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः॥
आजगाम कुरुश्रेष्ठ! महत्या सेनया वृतः॥ २२॥
तेन सार्धमभूद्युद्धं तत्राहं रामकृष्णयोः।
तदा पराजितो युद्धे मागधो बहुसैनिकः॥ २३॥
जगाम मागधानेव बहुभिः क्षत्रियैः सह।
रामकृष्णौ च धर्मज्ञौ स्तूयमानौ बन्दिभिः॥ २४॥
स्तूयमानौ विविशतुः सानुगौ मथुरां पुरीम्।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नमोनम इति पुनरुक्तिरादरार्था पुरुषायेत्युक्ते जीवावेति शङ्का स्यात् अतस्तन्निरासार्थं कारणेति "कारणं बन्धमोक्षयोः" इति श्रुतेः। जीवस्यापि कारणताप्रतीतेर्निरस्तुपत्वेन शङ्कानिवृत्तये नारायणायेति अयंशब्दो देवदत्तादिशब्दवत्साङ्केतिको न भवति किन्तु गुणनिबद्ध इति भावेनाह-अखिलेति। न तर्हि शौर्यादिगुणयोगोस्त्येत्यत्राह- -सुरारिराक्षसवत्संहारीचेन्न कोप्येन-माश्रयतीत्यत्राह-नारायणेति। नारो नरसमुदायस्तदाश्रयो नारायणः तस्मै। ननु, सर्वाश्रयत्वं राजवद्बाहिस्थत्वेनोतान्तःस्थत्वेनाहोस्वि-द्वायुवदुभयरूपेण? नाद्यः। "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतिव्याकोपात्। न द्वितीयः कर्मभोगप्राप्तेः। न तृतीयः अखण्डात्मनो द्वितीयत्वानुपपत्तेरिति तत्राह—अखि-लेति॥ १४॥

सृष्टिसंहारयोश्चतुर्मुखपञ्चमुखहेतुत्वोक्तेरस्याखण्डहेतुत्वं कथ-मिति तत्राह—हिरण्यगर्भत्वमिति। मूले आदिकाले हिरण्य-गर्भं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यत्वमुपेत्य भूयः पश्चा-न्नारायणात्मन्नारायणनामपरमात्मन् पुनः शिवात्मानं सृष्ट्वा तदन्त-र्यामित्वेन तन्नाम वाच्यं तदुक्तं "ब्रह्मस्थो ब्रह्मनामासौ रुद्रस्थो रुद्रनामकः" इत्यादि॥ १५॥

एवंविधो विष्णुस्त्वमित्याह—तं त्वेति। भुवने प्रसिद्धं वृषाकपिं विष्णुमवतीर्णं तत्सृष्ट्यादिहेतुं च जान इत्यन्वयः। "विष्णौ रुद्रे वृषाकपिः" इत्यतो यदोर्वंशकरमित्यादिक्रियाविशेषणं कर्तव्यं धर्मप्रेरकत्वेन फलवर्षणाद्वृषः अकस्यासुखस्य पातृत्वा-त्कपिः यद्वा, अकाद्दुःखात् शरणागतं जगत्पातीति वृषाकपि-रिति॥ १६—१७॥

तस्य उत्तममङ्गम् उत्तमाङ्गं शिर इत्यर्थः॥ १८—२५॥

(एतावत्पर्यन्तं विजयध्वजतीर्थीयपठितश्लोकाः)

श्रीधरस्वामिकृतभावार्थदीपिका।

तावतीतिच्छेदः तावति पराजये वर्तमाने ऽप्यक्षौहिण्यो बलं यस्य सः सप्तदशकृत्वः सप्तदशवारान् युयुधे॥ ४२॥

अक्षिण्वन् क्षयं निन्युः॥ ४३॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवमित्यनेन प्रतिवारं त्रयोविंशत्यक्षौहिण्यो ज्ञेयाः तादृशं युद्धादिकं बलगमनोद्यमश्च अन्वर्तः यद्वा तावतीत्यत्र पुंस्त्वश्चावा-भाव आर्षः। तावत्यः त्रयोविंशतिसङ्ख्याः अक्षौहिण्यो बलं सैन्यं ताभिर्वा युद्धसामर्थ्यं यस्य सः कृष्णपालितैरिति पूर्ववदक्ष-तत्वादिकं बोध्यते॥ ४२॥

अष्टादशमसङ्ग्राम आगामिनि तदन्तरा ।
नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥ ४४ ॥
रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ।
नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसम्मितान् ॥ ४५ ॥
तं दृष्ट्वाऽचिन्तयत्कृष्णः सङ्कर्षणसहायवान् ।
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥ ४६ ॥
यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः ।
मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति ॥ ४७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वृष्णय एव नतु पूर्ववत् श्रीकृष्णः श्रीरामो वा नतु तत्र च सात्विकयादीनां प्राधान्यं क्रमशो ज्ञेयम् कृष्णतेजसेति वह्निना ज्वालानामिव श्रीकृष्णेन समवाय एव तेषां तेजो वर्द्धत इत्यभिप्रायेणैव नतु तदभावापेक्षया "नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसम्मितान्" इति वक्ष्यमाणात् अत एवारिभिर्वृष्णिभिरेव त्यक्तः श्रीकृष्णाभिप्रायेणेति भावः। किम्वा अरिभिर्हतेषु पूर्ववत् । श्रीभगवता त्यक्तः सन् ॥ ४३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । इत्थं पुनःपुनः तावत्यः त्रयोविंशतिसङ्ख्याका अक्षौहिण्यो बलं यस्य तथाभूतः सप्तदशवारं कृष्णपालितैर्यदुभिः सह युयुधे ॥ ४२ ॥

अक्षिण्वन्निति कृष्णतेजसा हेतुभूतेन वृष्णया यदवः तस्य जरासन्धस्य बलं सर्वमक्षिण्वन्नाशितवन्तः इत्थं सर्वेष्वनीकेषु हतेषु सत्सु नृपो जरासुतो ऽरिभिः रामादिभिः त्यक्तो जगाम॥४३॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ ४२ ॥
अक्षिण्वत अक्षीयत ॥ ४३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमेव प्रकारेण भगवतो जयं निरूप्य जयान्तरेष्वपीमं प्रकारमतिदिशति—एवं सप्तदशकृत्व इति । अनेनापि सह सप्तदश एकः सप्तदशधा आवृत्त इति सर्वसमत्वाद्यकृत्वच् प्रत्ययः देशदोषात् न विवेक उत्पद्यते इति मागध इत्युक्तं सम्पत्तिस्तु राजत्वात् अन्यत्रापि भगवान् न स्वयं युयुधे तथा सति लोकप्रतीत्या सर्वदा क्लेश एव भवेत् किन्तु कृष्णरक्षितैर्यदुभिः सह युयुधे ॥ ४२ ॥

एवं च तद्बलमक्षिण्वन् न केवलं रक्षार्थमेव भगवद्विनियोगः किन्तु निराकरणार्थमपीत्याह—कृष्णतेजसेति । पुनःपुनः तस्यापि गमनवाक्यैरधिकरोषेणैव वेति वक्तुमाह—हतेष्विति । यतो नृपः राज्ये हते हि स निवृत्तो भवेत् तद्भगवान् न करोति इति स निवर्तत इत्यर्थः। ब्रह्माण्डे हि प्रजापतिरध्यक्षः सकालात्मा [illegible]त्मा च स सप्तदशो भवति स पराजित एव अतः परं प्रमाणरूपाः ब्राह्मणा अवशिष्यन्ते शिवश्च वेदरूपः उभयबलमाश्रित्य ॥ ४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तावत्यः त्रयोविंशतिसङ्ख्या अक्षौहिण्यो बलं सैन्यं यस्य सः पुंवद्भावाभाव आर्षः ॥ ४२ ॥

अक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं तावत्यः त्रयोविंशतिसङ्ख्याकाः अक्षौहिण्यो बलं यस्य स पुम्वद्भाव आर्षत्वान्नेति बोध्यम् सप्तदशकृत्वः सप्तदशवारान् युयुधे ॥ ४२ ॥

कृष्णतेजसा वृष्णयः अल्पसङ्ख्याकाः अपि तस्य जरासन्धस्य बलम् अक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥

---

भाषा टीका ।

इस प्रकार सत्रह वार उतनी ही अक्षौहिणी सेना को लेकर मगध देश का राजा जरासन्ध, कृष्ण पालित यदु लोगों के साथ युद्ध करता हुआ ॥ ४२ ॥

सत्रहों वार कृष्ण के तेज से यादव लोगों ने उसकी सेना को क्षीण करदी जबर उसकी सेना नष्ट होती गई और यादव वैरी लोग उसको देह मात्र से छोड़ते गये, तबर जरासन्ध अपने घर को जाता हुआ ॥ ४३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशमेऽष्टादशे संग्रामे भाव्ये तन्मध्येऽकस्मात्कालयवनः प्राप्तः ॥ ४४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मसम्मितान् स्वतुल्यान् ॥ ४५ ॥

वृजिनं दुःखम् उभयतो यवनाज्जरासन्धाच्च ॥ ४६ ॥

तदाह-द्वयेन । निरुन्धे निरुणद्धि ॥ ४७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रत्यदृश्यत सहसैवाभिमुख्येन माथुराणां दृष्टिविषयो बभूव अतिशीघ्रं प्राप्त इत्यर्थः । नारदेन प्रेरित इत्यादौ विशेषः श्रीविष्णुपुराणे—

"गार्ग्यं गोष्ठे द्विजं श्यालः षण्ड इत्युक्तवान् द्विजः ।
यदूनां सन्निधौ सर्वे जहसुर्यादवास्ततः ॥
ततः कोपसमाविष्टो दक्षिणापथमेत्य सः ।
सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥
आराधयन् महादेवं सोऽयश्चूर्णमभक्षयत् ।
ददौ वरञ्च तुष्टोऽसौ वर्षे द्वादशमे हरः ॥
सभाजयामास च तं यवनेशोऽप्यनात्मजः ।
तद्योषित्सङ्गमाच्चास्य पुत्रोऽभूदलिसन्प्रभः ॥
तं कालयवनं नाम राज्ये यवनेश्वर ।
अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ।
स च वीर्यबलोन्मत्तः पृथिव्यां बलिनो नृपान् ।
पप्रच्छ नारदश्चास्मै कथयामास यादवान्" ॥ इति

प्रेषित इति पाठः क्वचित् ॥ ४४ ॥

अप्रतिद्वन्द्वः प्रतियोधरहितः श्रुत्वा श्रीनारदादेव ॥ ४५ ॥

सङ्कर्षणसहायवानिति मथुरातो दूरगमने तस्य सम्मतिग्रहणार्थं तेन सहेत्यर्थः । मर्त्यानुविधत्वादेवेति भावः । अत एवाह—अहो इत्यादि "अहो खेदे हि निश्चितम्" ॥ ४६ ॥

नितरां रुन्धे आवृणोति यतो महाबलः अत इत्यतोपसर्तुमपि न शक्यत इति भावः ॥ ४७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ अष्टादशमे युद्धे आगामिनि भाविनि सति तदन्तरा तन्मध्येऽष्टादशसङ्ग्रामात्पूर्वमित्यर्थः । नारदेन प्रेषितः कालयवनाख्यो वीरः प्रत्यदृश्यत माथुरैर्जनैरिति शेषः ॥ ४४ ॥

रुरोधेति । मनुष्यलोके न विद्यते प्रतिद्वन्द्वस्तुल्यबलो यस्य तथाभूतः कालयवनः यदून् स्वात्मना तुल्यबलसम्मितान् श्रुत्वा नारदमुखादिति शेषः । तिसृभिर्म्लेच्छानां कोटिभिः सहागत्य मथुरां सर्वतो निरुद्धवान् ॥ ४५ ॥

तमिति । तं कालयवनं दृष्ट्वा श्रीकृष्णश्चिन्तयामास, चिन्तामेवाह—अहो इति सार्द्धद्वयेन । उभयतो यवनाज्जरासन्धाच्च वृजिनं दुःखं महत् यदूनां प्राप्तम् ॥ ४६ ॥

तदेवाह—यवन इति । महद्बलं यस्य स यवनोऽधुनाऽस्मान्निरुन्धे निरुणद्धि अद्यास्मिन्नहनि वा श्वः परस्मिन्नहनि वा परश्वस्तदनन्तरे अहनि वा मागधोऽप्यागमिष्यति ॥ ४७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ ४४—४५ ॥

उभयतो मागधाद्यवनाच्च प्राप्तं वृजिनं दुःखम् ॥ ४६—४७॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अष्टादशे पर्याये समागमिष्यतीत्याह—अष्टादशम इति । एवं पुराणान्तरे कथा बहुधा सर्वैः सम्प्रार्थितोऽपि सप्तदशे पर्याये पराजितः तपस्तु तप्तुं गतः तत्र समाराधित शिवः पश्चात् प्रसन्नेन शिवेन ब्राह्मणसमाराधानार्थं निरूपितः ब्रह्मण्यः कृष्णो न ब्राह्मणवाक्यमन्यथा करिष्यतीति ततः स्वनगरीं समागत्य ब्राह्मणानाहूय सिंहासने उपवेशितवान् ततः प्रीतैर्ब्राह्मणैः पुनस्तस्मै सिंहासनं दत्त्वा वरोपि दत्तः शत्रुञ्जेष्यसीति अजेयश्च त्रैलोक्यस्य भविष्यसीति एतत् ज्ञात्वा नारदः मध्ये कालयवनं च प्रेषितवान् सोऽपि सर्वयादवनिराकरणार्थं प्रतिज्ञां चक्रे स चेत्पश्चादागच्छेत् द्वारकां गच्छेदिति तस्य तत्र निराकरणं मर्यादापालकेनाशक्यमिति उभयमेकहेलया निर्वहत्विति मध्ये देवगुह्यकर्त्ता नारदो यवनं प्रेषितवान् स हि वृद्धगर्गस्य पुत्र महायवनोऽप्रज आसीत् तेन पुत्रार्थं प्रार्थितो वृद्धगर्गः तदा तद्भार्यायां पुत्रमधात् अजेयश्च तव पुत्रो भविष्यतीत्याह—ततः कालान्तरे यदुसभायां स एव वृद्धगर्गो यदुभिरुपहसितः स्वपुत्रं प्रार्थितवान् यादवा मारणीया इति एवं वैरे सिद्धे नारदेन तेषु प्रविष्ट एव सन्धिकालोऽयं शीघ्रं गम्यतामिति तं प्रेषितवान् तदाह—आगामिनि अष्टादशमे सङ्ग्रामे तदन्तरा नारदेन प्रेषितो यवनः वीरत्वाद्युद्धरसाविष्टः प्रत्यदृश्यत प्रतिकूलतया समागतो दृष्टः ॥ ४४ ॥

तस्य प्रतिकूलतामाह—रुरोधेति । स्वयं समागत्य म्लेच्छकोटिभिः मथुरां रुरोध तत्र कारणमाह—त्रैलोक्ये अप्रतिद्वन्द्वः चकारादनुभावेनापि वृष्णींश्च आत्मसम्मितान् तुल्यान् श्रुत्वा नारदात् तदसहमानो रुरोधेति सम्बन्धः ॥ ४५ ॥

तदा भगवान् तत्स्थानपरित्यागार्थं निरोधं चिन्तयामासेत्याह—तं दृष्ट्वेति । इदं त्वप्रकटचिन्तनम् अतो गूढाभिप्रायेणैव चिन्तयति अभिप्रायस्तु स्थानात् परित्याजनीयाः ये निरोद्धव्याः यथा गृहवनात् निष्कासिताः तथा मथुरातोऽपि निष्कासनीयाः यदि देशान्तरं न गच्छेयुः तदा निरुद्धा एव न भवेयुः लोके तथा दर्शनात् अतो भगवानेतानन्यत्र नेतुं विचारयति तत्सम्मतिव्यतिरेकेण नयने मन्त्रभेदः स्यादिति मर्मज्ञेन बलभद्रेण सह मन्त्रयामास यतोऽयं कृष्णः निरोधार्थमेव प्रवृत्तः अन्यथा सदाऽऽनन्दः तेषां न भवेत् बहिश्चित्तत्वादिति सङ्कर्षण एव सहायो यस्येति अतस्तेन सह चिन्तनं, चिन्तनवाक्यान्याह—अहो इत्यादिसार्द्धैः त्रिभिः । अहो इत्याश्चर्यं कथमयमकस्मात् आगत इति कथं वा सन्धिकालं ज्ञातवानिति यदूनां वृजिनं दुःखमुभयतोऽपि प्राप्तमिति ज्ञातवान् ॥ ४६॥

तन्निरूपयति—महान् यवनोऽयमद्य निरुन्ध इति । अस्मानिति तैः सहाभेदः कार्यार्थे निरूपितः स्वरूपतोपि महान् महाबलश्च अद्य महाबल इति उभयोर्ब्राह्मणवाक्यं बलमिति सूचितम् । यावज्जरासन्धो नायाति तावदनेनैव निरुद्धा इति तर्हि जरासन्धस्थाने अयमेव जातः तत्र को विशेष इति चेत् तत्राह—

आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः।
बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥ ४८ ॥
तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम्।
तत्र ज्ञातीन् समाधाय यवनं घातयामहे ॥ ४९ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मागध इति। मागधो ऽप्यद्यैवागमिष्यति तर्हि तद्बुद्धेः प्रेरणीया यथाऽद्य नायातीति चेत् तत्राह–श्वो वा समागमिष्यतीति। तर्ह्यन्तर्यामी वक्तव्यः श्वोऽपि नानेतव्यस्तत्राह–परश्व इति। तर्हि कालो वक्तव्य इत्याशङ्क्य अज्ञिकतयापि कोऽपि वक्तुं न युक्त इति वाशब्दं प्रयुक्तवान् किमद्य श्वोवचनेन आगमिष्यतोऽयत्र तु न सन्देहः अत उपाय एवं कर्त्तव्य इत्यर्थः ॥ ४७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नारदप्रेरित इति विष्णुपुराणे कथा। यथा, कदाचिद्गार्ग्यः स्वश्यालेन षण्ड इति परिहसितः तत् श्रुत्वा यदवो बहु जहसुः ततस्तेषां हास्येन बहु कुपितो गार्ग्यो दक्षिणापथं गत्वा यादवभयङ्करो मे पुत्रो भवत्विति सङ्कल्प्य अयश्चूर्णं भुञ्जानो महादेवमाराध्य द्वादशवर्षान्ते तस्मात् स्वाभीष्टं वरं प्राप्य हृष्यन् स्वगृहमागच्छन्नपुत्रकेण यवनेश्वरेण पुत्रार्थं स वृतस्तद्भार्य्यायाम् कालयवनं पुत्रं जनयामास स च कालयवनः महाबलोन्मत्तः पृथिव्यामिदानीं के बलिनो नृपा इति नारदं पप्रच्छ स च यदून् प्राह एवं नारदप्रेषितो मथुरायां दृष्टो बभूव ॥ ४४–४५ ॥

कृष्णो यादवस्नेहाविष्टत्वादचिन्तयत् उभयतो यवनात् जरासन्धाच्च ॥ ३६–४७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अगामिनि भाव्ये तदन्तरा तन्मध्ये अष्टादशमसङ्ग्रामात्पूर्वमेव यवनः प्रत्यदृश्यत नारदप्रेषित इति। एवं हरिवंशे कथा

"वृष्णीनामन्धकानाञ्च गुरुर्गार्ग्यो महातपाः।
ब्रह्मचारी पुरा भूत्वा न स दारान् स विन्दति ॥
तथा हि वर्तमानं तमूर्ध्वरेतसमव्ययम्।
श्यालोऽभिशप्तवान् गार्ग्यमपुमानिति राजनि ॥
सोऽभिशप्तस्तदा राजन्! नगरे त्वजितं जये।
लिप्सुः पुत्रं ततो गत्वा तपस्तेपे सुदारुणम् ॥
ततो द्वादश वर्षाणि अयश्चूर्णमभक्षयत्।
आराधयन् महादेवमचिन्त्यं शूलपाणिनम् ॥
रुद्रस्तस्मै वरं दत्वा समर्थं युधि निग्रहे।
वृष्णीनामन्धकानां च सर्वतेजोमयं सुतम् ॥
ततः शुश्राव तं राजा यवनाधिपतिर्वरम्।
पुत्रप्रसवजं देवादपुत्रः पुत्रकामुकः ॥
स नृपस्तमुपामन्त्र्य सान्त्वयित्वा द्विजर्षभम्।
तं घोषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥
गोपालीत्वप्सरा तत्र गोपस्त्रीवेषधारिणी।
धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युतम् ॥
मानुष्यां राजभार्यायां नियोगाच्छूलपाणिनः।
स कालयवनो नाम जज्ञे शूरो महाबलः ॥
अपुत्रस्याथ राज्ञस्तु ववृधेऽन्तःपुरे शिशुः।
तस्मिन्नुपरते राजन्! स कालयवनो नृपः ॥
युद्धाभिकामो नृपतिः पर्यपृच्छद्द्विजोत्तमान्।
वृष्ण्यन्धककुलं तस्य नारदेन निवेदितम् ॥
विज्ञाय वरदानं तं नारदान्मधुसूदनः।
उपप्रेक्षितवान् तेजस्वी वर्द्धन्तं यवनेषु तम् ॥
स वृद्धो हि यदा राजा यवनानां महाबलः।
तत एनं नृपा म्लेच्छाः संश्रित्याऽनुययुस्तदा ॥
शकास्तुषारा दरदाः पारदास्तङ्गणाः खशाः।
पल्हवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ॥
स तैः परिवृतो राजा दस्युभिः शलभैरिव।
नानावेषधरैर्भीमैर्मथुरामभ्यवर्तत" ॥

इति ॥ ४४ ॥

आत्मसम्मितान् आत्मतुल्यान् ॥ ४५ ॥

वृजिनं दुःखम् ॥ ४६–४७ ॥

### भाषा टीका।

आगामी अठारहवां संग्राम होने वाला रहा तिसके बीच में नारद जी का भेजा हुआ एक बड़ा वीर यवन देख पड़ता हुआ ॥ ४४ ॥

वह यवन अपने साथ बराबर प्रतिद्वन्द्वी लड़ने वालेको कहीं नहीं देखकर यादवों को अपने बराबर सुनकर तीन कोट म्लेच्छों को साथ लेकर मथुरा को घेरता हुआ ॥ ४५ ॥

बलदेवजी सहाय वाले जिन के ऐसे श्रीकृष्ण उस यवन को देख कर बड़ा विचार करते हुए, कि अहो! देखो यादव लोगों को कैसा दोनो तरफ से सङ्कट प्राप्त हुआ ॥ ४६ ॥

क्योंकि? महाबली यह यवन इस समय हमको घेर रहा है, और आज कल अथवा परसों मगधराज जरासन्ध भी आने वाला ही है ॥ ४७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अस्य अनेन ॥ ४८–४९ ॥

इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ।
अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ।
रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ।
हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥ ५२ ॥
राजताऽऽरकुटैः कोष्ठैर्हेमकुम्भैरलङ्कृतैः ।
रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥
वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ।
चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ५४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

समुद्रमध्ये दुर्गं तन्मध्ये नगरं कृत्स्नाद्भुतं सर्वाश्चर्यमयम् अचीकरत्कारयामास ॥ ५० ॥

त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रियाकौशलम् तदाह—सार्द्धैस्त्रिभिः, रथ्येति । रथ्या राजमार्गाः पुरतः वीथ्य उपमार्गाः पश्चिमतः उभयतोऽपि चत्वराण्यङ्गणानि तन्मध्ये कोष्ठास्ततोऽप्यन्तः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुम्भा इति बहुभूमिकम् यथावास्तु वास्तुगृहादिनिर्माणस्थानं तदनतिक्रम्य निर्मितम् ॥ ५१ ॥

सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितम् हेममयानि शृङ्गाणि येषु तैः दिविस्पृग्भिरत्युच्चैः स्फाटिका अट्टाला उपरि भूमिकागोपुराणि च द्वाराणि तैर्निर्मित मित्युत्तरेणान्वयः ॥ ५२ ॥

राजतारकुटैः रजतं च आरकुटं च पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालाऽन्नशालादिभिः कथम्भूतैः? हेमकुम्भैरलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥ ५३ ॥

किञ्च, नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैः राजगृहैरुल्लसच्छोभमानम् ॥ ५४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आवयोः सगणयोरिति शेषः। बन्धून् अयोद्धॄन् तत्रस्थवृद्धबालादीन् व्रजस्थगोपांश्च तेषामवध्यत्वमनुसन्धायाह—नेष्यत इति ॥ ४८ ॥

अत्रैव विधास्यामः बहुत्वं विनयेन श्रीरामाद्यपेक्षया स्वस्य च स्थिरतया सुखम् आधाय स्थापयित्वा आतवामहे इत्यन्य-



कर्त्रपेक्षया तद्वचरपालनार्थम् अत्र श्रीहरिवंशोक्तिरियमपि भगवतां हेतूक्तिः—

"इयञ्च माधुरी भूमिरल्पागम्या परस्य तु ।
वृष्णिश्चैव पराऽस्माकं बलतो मित्रतस्तथा ॥
कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये ।
एषामपीह वसतां सम्मर्दमुपलक्षये" ॥

इत्यादि अत्रेदं विमृशामः यादवावासान्तःपुरीयोग्यसमुद्रान्तःस्थ द्वादशयोजनात्मकपरागम्यद्वारकातो मथुराभूमेर्विस्तीर्णत्वान्नायं केवलयादवानधिकृत्य श्रीभगवतः परामर्शः किन्त्वयं निगूढोऽभिप्रायः सम्प्रति यादवज्ञातिकतया तदादिसाहाय्येन भूभारहरणाय लीलान्तरमारब्धाः स्मः अतः श्रीगोपानां स्वस्मिन्नेव निश्चितमज्ज्ञातिभावानां नित्यमेव वर्द्धमानैर्यादवैर्भाविनी सङ्कीर्णता न युक्ता दुष्टोपद्रवाशङ्का च तेषामप्युपस्थिता श्रीमदुद्धवद्वारा मदीयतत्रत्यनित्यलीलास्फोरणेन विरहदुःखसमाधान प्रायश्च तेषां कृतवानस्मि ततो दुष्टान् प्रति तेषु निजौदासीन्यव्यञ्जनाय यादवानां गोपालकेन ये च मर्त्यानुविधस्य मम विदूरदुर्गगमनमेव युक्तमिति ॥ ४९ ॥

समुद्रस्यान्तर्द्वादशयोजनं [illegible]श्चाष्टादशयोजनमन्यत्र ज्ञेयम् एवं त्रिंशद्योजनं श्रीद्वारकापुरं ख्यातं योजनञ्चोक्तम् "अष्टभिर्यवमध्ये स्यादङ्गुलं द्वादशाङ्गुलम् । तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते ॥ किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम् । क्रोशः क्रोशौ तु गव्यूतिः गव्यूती द्वे तु योजनम्" इति अचीकरद्विश्वकर्मणा कारितवान् कृत्स्नाद्भुतमिति कृत्स्नमपि वस्त्वद्भुतं यत्र ॥ ५० ॥

कृत्स्नाद्भुतत्वमेव दर्शयति—दृश्यत इति चतुष्केण । हि एव यत्रैव विज्ञानं शिल्पधीः शिल्पाभिज्ञातेत्यर्थः । शिल्पनैपुण्यं हस्तक्रियाकौशलञ्च दृश्यते परा काष्ठापन्नतया विभाव्यते तदानीं भगवत्प्रसादेन परमशक्तिलाभादिति भावः । अन्यत्तैः तत्र तन्मध्ये कोष्ठा इत्यादिकं वक्ष्यमाणश्लोकोक्तानां संस्थानं ज्ञेयम् उद्यानोपवनयोः पुष्पफलप्रधानत्वेन भेदः आरकुटैरिति ह्रस्वत्वमार्षं चातुर्वर्ण्यं चत्वारो वर्णाः यदुदेवा यादवश्रेष्ठाः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णबलदेववसुदेवोग्रसेनाः अत्रेदं वासस्थानं ज्ञेयम् परितस्तावत्समुद्रः पुरतः सक्रमार्थमालिः समुद्राभ्यान्तरे तीरे सुखविहारार्थं परितश्चत्वराणि तदन्तर्दुर्गप्राचीरालिः तत्कोणेषु तन्मध्येषु च यथाशोभं रत्नकूटाः तदुपरि हेमश्रृङ्गाः तदुपरि हेमकुम्भाः पताकाश्च ज्ञेयाः दुर्गचतुर्दिक्षु गोपुराणि बहिः अवलोकाय तदुपरि स्वच्छस्फटिकभित्तिमयाट्टालिकाः दुर्गान्तः पुरश्चत्वराणि तदन्तरुद्यानोपवनानि तदुपलक्षितानि वापीकूपादीनि च तदन्तर्वास्तोष्पतिगृहाः तदन्तर्यथाभ्यन्तरमश्वाश्वगृहादयः कोष्ठाः तदन्तःपुरभागे ब्राह्मणगृहाः पश्चात् शूद्रगृहाः वामे वैश्यगृहाः दक्षिणे क्षत्रियगृहाः मध्ये सुधर्म्मामग्रे विधाय श्रीकृष्णबलदेववसुदेवोग्रसेनगृहाः गृहाणामधो मरकतस्थली उपरि वलभ्यो हेमकुम्भादयश्च यथाशोभं सुधर्मामारभ्य रथ्या वीथयः तदुपमार्गाश्च तत इति ॥ ५१—५४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्विपददुर्गमं मनुष्यदुष्प्रवेशम् ॥ ४६—५० ॥

त्वाष्टं त्वष्टृसम्बन्धि ॥ ५१—५२ ॥

आरकुटैः पित्तलैः ॥ ५३—५८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आवयोर्यवनस्य च मम च मिथो युध्यतोः सतोर्जरासुतो ग्रद्यागमिष्यति स तर्ह्यस्मद्बन्धून् यदून् हनिष्यत्यथवा तान् स्वपुरं प्रति नेष्यति प्रापयिष्यति यतः स बली ॥ ४८ ॥

अथ विचार्य्य निश्चितमाह–तस्मादिति । द्विपदैर्मनुष्यैर्दुःखेनापि गन्तुमशक्यं दुर्गं जलदुर्गं विधास्यामः करिष्यामः तत्र दुर्गे ज्ञातीन् यदून् समाधाय निधाय यवनं मारयामहे घातयामहे ॥ ४९ ॥

इत्थं सम्मन्त्र्य विचार्य निश्चित्य भगवान् समुद्रमध्ये दुर्गं तत्र नगरञ्चाचीकरत् कारयामास विश्वकर्मणेति शेषः। नगरं विशिनष्टि–द्वादशयोजनविस्तीर्णं कृत्स्नादद्भुतं सर्वाश्चर्यमयम् ॥ ५० ॥

यत्र नगरे त्वाष्टं विश्वकर्मणः सम्बन्धि विज्ञानसूचकं क्रियाकौशलं दृश्यते, तदाह–सार्द्धैस्त्रिभिः रथ्येति । रथ्या राजमार्गाः पुरतो वीथ्यः उपमार्गाः पुरतः पश्चिमत उभयतोऽपि चत्वराण्यङ्गणानि तन्मध्ये कोष्ठाः ततोऽप्यन्तः स्वर्णभवनानि तदुपरि स्फटिकाट्टालकास्तदुपरि हेमकुम्भाः इति बहुभूमिकं यथावास्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य निर्मितम् ॥ ५१ ॥

सुराणां द्रुमाः लताश्च येषु तानि उद्यानानि विचित्राण्युपवनानि च तैरन्वितं हेममयानि शृङ्गाणि येषां तैर्दिवस्पृग्भिरत्युच्चैः स्फाटिकाट्टालका उपरि भूमिकाः गोपुराणि चत्वराणि तैः ॥ ५२ ॥

राजतारकुटैः रजतञ्चारकुटञ्च पीतलोहं पित्तलमिति यावत्, ताभ्यां निर्मितैः कोष्ठैरश्वशालागजशालादिभिः, कथम्भूतैः ? हैमैःकुम्भैः समलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः सौवर्णैः महान्ति मरकतस्थलानि येषु तैर्गृहैश्च जुष्टं सेवितम् ॥ ५३ ॥

किञ्च, नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैः वलभीभिः चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैरुल्लसच्छोभमानम् ॥ ५४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्येति षष्ठी तृतीयार्थे अनेन सह चावयोर्युध्यतोः ॥४८॥

दुःखकृच्छ्रत्यस्मिन्निति दुर्गं "सुदुरोरधिकरणे" इति गमेर्डप्रत्ययः विशिनष्टि, द्विपदेति । द्वे पदे येषां ते तथा द्विपदः पदेति, निपातो विवक्षितः मनुष्यैरगम्यमित्यर्थः ॥ ४९—५० ॥

त्वष्टुर्विश्वकर्मणो विद्यमानं त्वाष्ट्रं किं तद्विज्ञानमत्राह, शिल्पनैपुणमिति शिल्पविद्यापटुत्वं रथ्या राजमार्गः वीथीः वणिजां मार्गं यथावास्तु वास्तुलक्षणमनतिक्रम्य ॥ ५१ ॥

दिविस्पृग्भिः "इद्युभ्यामुपसङ्ख्यानम्" इत्यलुक्समासः ॥ ५२ ॥

राजतैः रजतमयैरारपुटैर्लोहविशेषैः कृतैः कोष्ठैरन्तर्गृहैः रत्नकूटैः रत्नशृङ्गैः ॥ ५३ ॥

वास्तोष्पतीनां वास्तुदेवतानाम् ॥ ५४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

३१ ॥ ४९ ॥

अचीकरत् अविर्भावयामास ॥ ५० ॥

दृश्यते यत्रेति ब्रह्मज्ञानेन सर्वविज्ञानवत् "यत्कर्म्मसुमोर्चत राजसूये" इत्यादिवच्चेति भावः ॥ ५१ ॥

अत एव नित्यस्थितस्यैव तस्याविर्भाव इति दर्शितः अत एव वक्ष्यते चातुर्वर्ण्यजनाकीर्णमिति ॥ ५२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि उभावपि मारणीयाविति चेदत्राह–आवयोर्युध्यतोरिति उभावजेयौ अतः प्रधानपरिहारेण केवलहनने विलम्बो भवतीति यवनेन सह आवयोर्युध्यतोः सतोः प्रक्रान्तस्य त्यागायोगात् यदि मध्ये जरासन्धः चतुरः समागच्छेत्तदा अस्मानत्रासक्तान्विहाय बन्धून् वसुदेवादीन् हनिष्यति स्वपुरं वा बध्वा नेष्यति पश्चान्मोचनार्थं बहुकर्त्तव्यं पतेत् मारयितुमशक्य एवेत्याह–बलीति ॥ ४८ ॥

एवं सति यत्कर्त्तव्यं तदाह–तस्मादिति । द्विपदानां मनुष्यमात्रस्य दुर्गमं दुर्गं विधास्याम इति मन्येतावद्बली [illegible] यः करोति स तानेव कथमन्यथा न करोति किमिति [illegible] त्याजयतीति चेत् ? मैवं द्वारकादिनिर्माणे न काचिन्मर्यादा बाध्यते अन्यत्र तु ब्राह्मणवाक्यानि बाध्यन्ते एतदर्थमेव द्वारकानिर्माणमिति न तत्र ब्राह्मणवाक्यं प्रभविष्यति सर्वत्राधिकप्रयत्नः साधारण्यं निराकरोतीति अत एव पूर्वं बलीति पदमत्र च द्विपदमिति अतो ब्राह्मणा अपि द्विपदा एवेति तेषामपि सुदुर्गम एव पश्चाभिर्भये स्थाने ज्ञातीन् वसुदेवादीन् समाधाय यवनं घातयामहे तदा विलम्बो न बाधक

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इति अन्यथा भगवत्यन्यत्र गते मुचुकुन्दगुहायां वसुदेवादयो भीताः खेदं प्राप्नुयुः ॥ ४९ ॥

एवं निर्द्धारिते मन्त्रे यदासीत्तदाह—इति सम्मन्त्र्येति। यतो दाशार्हो भक्तरक्षकः अनेन क्लिष्टकरणदोषोऽपि परिहृतः। ननु, कालादिभिरनिर्मितं कथं निर्मास्यति ? तथासति कालादयो वा कथं न प्रतिबन्धं करिष्यन्तीत्याशङ्क्याह—तद्दुर्गमेव करिष्यति जलादिदुर्गाः प्रसिद्धाः अतो नालौकिकं करिष्यति ? किञ्च, कालहितमपि करिष्यतीति आह—द्वादशयोजनमिति। द्वादशात्मा हि कालः प्रतिपक्षतया वा करिष्यति किन्तु भूमिवत् नगर्यप्यन्तरिक्षे समुद्रमध्ये जलोपरि तिष्ठति अन्यथा नीचे स्थिता भवेत् तत्र वैलक्षण्यं सम्भविष्यतीति तन्निराकरणार्थं नगरमिति, तत्रापि विशेषः अद्भुतमिति। कृष्ण इति सदानन्दः तेन कृतं स्थानं तत्प्रापकं भविष्यतीति ज्ञापितम्। अचीकरदिति स्वयमेव चकार विश्वकर्मणा कृतमस्येके स्थाद्भूमिति पदात् वस्तुतस्तु विश्वकर्मणो यावन्नैपुण्यं तावत्तत्र भगवतैव निर्मितमिति; स हि जले कर्तुं न शक्नुयात् अन्यथा इति भगवति क्रमेण षड्गुणेष्वपि गतेषु सप्तमे दिवसे तं न प्लावयेत् समुद्रः विश्वकर्मणो विद्यमानत्वात् अस्तु वा विश्वकर्मणा कारितमिति अचीकरद्विश्वकर्मणेति करणं वा ॥ ५० ॥

यत्र नगरे त्वाष्ट्रं विज्ञानमनेकचातुर्ययुक्तं दृश्यते शिल्पं नैपुण्यं यस्मात् विज्ञानादिति ज्ञानप्रमायां हेतुरुक्तः। किञ्च, रथ्याचत्वरवीथीभिः सहितं यथावास्तु शास्त्रसहितं विशेषेण निर्मितं चित्रादिरहितेपि सामान्यनिर्माणेपि वैशिष्ट्यायाप्युक्तं दैविकं लौकिकं शास्त्रीयं च ज्ञानं नगरे तस्मिन् निर्माणप्रष्ठितमिति वर्णनावधित्वम् निरूपितम् ॥ ५१ ॥

विशेषतो वर्णयति—सुरद्रुमाः पारिजातादयः ते उद्यानेषु यत्र उद्यानं पुष्पप्रधानम् उपवनं फलप्रधानं तैरन्वितमिति। सर्वत उभयेषां सम्बन्ध उक्तः अन्तर्नगरे वैशिष्ट्यमाह—हेमशृङ्गैः दिविस्पृग्भिरिति। एकविंशतिगृहोपरि सुवर्णशृङ्गानि सुवर्णकलशस्य परितः स्थापितानि अत एव दिवं स्पृशन्ति तत्र निदानप्रस्तरानाह—स्फाटिकेति। स्फाटिकैरेव निर्मिताः अट्टालाः गोपुराणि च ॥ ५२ ॥

दुर्गत्वादसङ्ग्रहार्थं रजतैरारकुटैश्च निर्मितानि रजतारकूटशब्दावण् हेमकुम्भैश्च सर्वतः अलङ्कृतं घृतदध्याद्यर्थं राजतानि कोष्ठानि अन्नार्थं तु पैत्तलनिर्मितानि सर्वधातूपलक्षणमारकूटपदमाद्यन्तयोः रजतसुवर्णयोरुपादानात् उपरि शोभातिशयमुक्त्वा मध्ये शोभामाह—रत्नकूटैर्गृहैर्हैमैरिति। सर्वत्र गृहाः रत्ननिर्मितपदकवत् सौवर्णा भूमिश्च मत्कृतशिलाभिः निर्मितेत्याह—महामारकतानि स्थलानि येष्विति ॥ ५३ ॥

अनुपयुक्ता अपि धर्मसाधकाः कौतुकसाधकाश्च गृहाः सन्तीत्याह—वास्तोष्पतीनां वास्तुदेवताधिपतीनाम् इन्द्रादीनां वस्तून्यस्मिन्निति वास्तुदेवताभूमिः तस्याः पतयः सर्वे लोकपालाः चकारात् दुर्गादीनामपि अनेन मध्ये भगवतः परितआशापालानां गृहा इत्युक्तं भवति वलभीभिरिति सर्वत्रेच्छया निर्माणम् अनेनाग्रे निर्माणक्रिया कापि नापेक्षितेति सूचितं किञ्च चातुर्वर्ण्यजनाकीर्णं चातुर्वर्ण्यजनैः पूर्वमेवाकीर्णं तेन ते भगवत्कृता एव जना निरूपिताः अन्यथा इतो गतानां वन्ध्यामिव पातो भवेत् ते हीदानीमपि तिष्ठन्ति अतस्तत्सान्निध्यानेन सर्वदा विद्यमानत्वासाम्यात् भगवद्गृहमाह—यदुदेवगृहेण उल्लसदिति मध्ये भगवद्गृहं चतुर्दिक्षु चतुष्टयानाम् आकीर्णमिति किमीरितत्वं निरूपितम् ॥ ५४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अस्य अनेन ॥ ४८—४९ ॥

समुद्रमध्ये द्वादशयोजनमिति। "अष्टभिर्यवमध्यैः स्यादङ्गुलं द्वादशाङ्गुलम्। तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते॥ किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम्। क्रोशः क्रोशा तु गव्यूतिर्गव्यूती द्वे तु योजनम् ॥ इति तन्मध्ये नगरम् ॥ ५० ॥

त्वाष्ट्रं विज्ञानं विश्वकर्मणः पाण्डित्यं शिल्पे शिल्पकर्माणि नैपुण्यं यतस्तत्, नगरं विशिनष्टि—सार्द्धैस्त्रिभिः। रथ्या-राजमार्गाः चत्वराण्यङ्गणानि वीथ्य उपमार्गाः वास्तुगृहादिनिर्माणस्थानं तमनतिक्रम्य निर्मितं राजतं च आरकूटं पीतं लौहं च ताभ्यां निर्मितैः रत्नकूटैः पद्मरागादिशिखरैः वास्तोष्पतीनां देवानां वलभीभिश्चन्द्रशालाभिः यदुदेवः श्रीकृष्णः तस्य गृहैरुत्कर्षेण लसत् ॥ ५१—५४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अस्य अनेन ॥ ४८—४९ ॥

अन्तःसमुद्रे समुद्रमध्ये दुर्गं तन्मध्ये कृत्स्नाद्भुतं सर्वाश्चर्यमयं नगरं च अचीकरत् कारयामास ॥ ५० ॥

यत्र नगरे त्वष्टुर्विश्वकर्मणो विज्ञानं शिल्पनैपुण्यं क्रियाकौशलं च दृश्यते लक्ष्यते, पुरं वर्णयति—रथ्येत्यादिना, रथ्याः राजमार्गाः चत्वराण्यङ्गणानि वीथ्य उपमार्गा तैः वास्तुगृहादिनिर्माणस्थानं तमनतिक्रम्य निर्मितम् ॥ ५१ ॥

सुराणां द्रुमाः लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितं हेममयानि शृङ्गाणि दिविस्पृग्भिरत्युच्चैः स्फाटिकाः अट्टालाः उपरिभूमिकाः गोपुराणि च पुरद्वाराणि तैर्निर्मितमित्युत्तरेणान्वयः ॥ ५२ ॥

रजतं च आरकुटं पीतलोहं च ताभ्यां निर्मितैः कोष्ठैः अश्वशालान्नशालादिभिः तथा हेमकुम्भैरलङ्कृतैः रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि येषु तैः गृहैश्च ॥ ५३ ॥

तथा नगरगृहादौ वास्तोष्पतीनां देवानां गृहैः वलभीभिश्चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैरुल्लसत् ॥ ५४ ॥

---

भाषा टीका।

हम दोनों इस यवन के साथ युद्ध करने लगें और इतने में ही यदि जरासन्ध आजावे तो वह हमारे बंधु लोगों को मार डालेगा अथवा अपने पुरको पकडकर ले आयगा क्योंकि? वह बली है ॥ ४८ ॥

सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ।
यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥ ५५ ॥
❋ (यत्प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः ॥०॥
श्यामैककर्णान् वरुणो हयान् शुक्लान् मनोजवान् ।
❋ (ददौ सहस्रसङ्ख्यातान् देवदेवाय तोयराट् )
अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान् ॥ ५६ ॥
❋ ( तथान्ये लोकपालाश्च ददुः स्वाधिकृतं धनम् )
यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ।
सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ! ॥ ५७ ॥
तत्र योगप्रभावेन नीत्वा सर्वजनं हरिः ।
प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ।
निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे दुर्गनिवेशनं नाम
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

भाषा टीका ।

तस्मात् दोपांय वाले जो मनुष्य और दैत्य हैं तिनों को दुर्गम अर्थात जहां वे न जा सकें ऐसा अब एक किला बनावेंगे और अपने जाति के लोगों को उस स्थान में अच्छी तरह रख कर फिर यवन को मरवावें ॥ ४९ ॥

भगवान् इस प्रकार चिंतमन कर समुद्र के भीतर सबही अद्भुत ऐसे एक द्वादश योजनके नगर को रचते भये ॥ ५० ॥

कैसा वह नगर बसाया कि- जिस नगर में त्वष्टा ( विश्वकर्मा ) की कारीगरी की चतुराई की देख पडती है। और राजमार्ग चौक रास्ता गलीयें सब जहां तहां यथा शास्त्र बनाये गये हैं ॥ ५१ ॥

फिर वह नगर कैसा है, कि--कल्पवृक्ष लता उद्यान ( बगीचा ) और उपवन इन से शोभित है । फाटकों पर अट्टा और गोपुरों पर सोंने के कलश आकाश से लग रहे हैं ॥५२॥

चांदी और पीतल के जिस्में अन्न धरने के कोठी कुठीले बन रहेहैं जिनके ऊपर सुन्दर अलंकार युक्त सुवर्ण कलश धरे हैं । रत्नोंके जडाऊ सुवर्ण के जहां गृह बने हैं जिनमें मरकत मणि की धरती है ॥ ५३ ॥

और जहां तहां देवताओं के मंदिर बने हुए हैं अटारी बडी२,ऊंची जहाँ बनी हैं ऐसे चारों वर्ण के जनों से व्याप्त और उग्रसेन महाराजाधिराज के महल से वह नगर अति दीप्ति को प्राप्त हो रहा है ॥ ५४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पारिजातं च प्राहिणोत्प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वभावित्वाद्भूतनिर्देशः मर्त्यधर्मैः क्षुत्पिपासादिषड्भिर्मिभिः ॥५५॥

निधिपतिः कुबेरः अष्टौ कोशान्निधीन्—

"पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथैवकः ।
नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः ॥

इति प्रसिद्धान् निजोदयान्निजविभूतीः ॥ ५६ ॥

अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासीत्तत्सर्वं प्रत्यर्पयामासुरिति ॥ ५७ ॥

यथा कालयवनो न वेत्ति न चासौ जनस्तथा योगप्रभावेन नीत्वा त्वमत्र स्थित्वा प्रजाः पालयाहं पलायिष्य इति समनुमन्त्रितः कृतानुमन्त्र इत्यर्थः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुधर्म्मामिति युग्मकम् । पारिजातं प्राहिणोदिति तैर्य्यौक्त्यात् तत्र प्रस्थापनं नाम परित्याग एव ज्ञेयः यद्याग्रे स्वयं श्रीभगवता स्वर्गादानीय पारिजातादस्य न्यूनत्वेन भेदः कल्प्यः सुरद्रुमलतोद्यानेति वर्णितत्वात् सुधर्म्मायास्त्वेकत्वेन नाम्ना

❋ इति विजयध्वजीये—पठ्यन्ते

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गतिरितीन्द्रस्तथा 'भाकरोदिति ज्ञेयम हरेर्हरयेऽन्यथा बलात् स्वयमेव हरेदिति विभाव्यैवेति भावः । लोकपाला अन्येपि॥५५-५६॥

हरौ क्रीडार्थं निजाशेषविभूतिसमाहरणकौतुकिनि भगवति "यतः" भूमिगते तादृशविनोदार्थमेव पृथिव्यामवतीर्णे एवं परमकौतुकेन सम्बोधनं नृपेति श्रीद्वारकानिर्माणादिविस्तारः ( विधिः ) श्रीहरिवंशे दृश्यः ॥ ५७ ॥

योगोऽचिन्त्यैश्वर्य्यं तस्य प्रभावेण माहात्म्येन तथा च पाद्मोत्तरखण्डे-

"सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्द्दनः ।
उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः ।
हेमहर्म्यतले विष्ट्वा विस्मयं परमं ययुः" ॥ इति

हरिरिति तथानयनात् त्वमत्र स्थित्वा प्रजाः पालयेति नैर्यत् व्याख्यातं तत्तु द्वारकानीतप्रजाभ्योऽवशिष्टबहिरङ्गप्रजागतमेव ज्ञेयं निजपार्श्वरक्षितसैन्यगतमेव वा यद्वाऽस्य यादवैरवध्यत्वान्माशङ्कां कृथाः त्वमत्र स्थित्वा पुरं पालय अहन्तु मुचुकुन्देन एनं घातयिष्यामीत्येव मन्त्रो ज्ञेयः । रामेण सह सम्यगनुरूपश्च मन्त्रः सोऽस्यसञ्जात इति तारकादित्वादितच् अत्र सर्वजनं हरि रितिपाठे स्वान् भगवान् हरिरिति क्वचित् । मथुरामेत्येति पाठे प्रजापालनेति क्वचित् पूर्वत्र द्वारकानिर्माणार्थं तत्र गमनं योगप्रभावेणैव वा ज्ञेयम पद्ममालीति श्रीनारदोक्तलक्षणापेक्षया निरायुध इति पलायनमननार्थम ॥ ५८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषण्यां
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये ।
पञ्चाशत्तमोऽध्यायः ॥५०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुधर्मा नाम सभां पारिजातं च महेन्द्रो हरये प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्सम्वादात्पूर्वभावित्वाद्भूतनिर्देशः सुधर्मा विशिनष्टि-यत्रेति । मर्त्योऽपि यत्र सुधर्मायां स्थितो मर्त्यधर्मैरशनायापिपासाशोकमोहजरामरणादिभिर्न युज्यते ॥५९॥

वरुणस्तु श्यामः एककर्णो येषां तान् सर्वतः शुक्लान् मनोजवान् अश्वान्प्राहिणोदित्यनुषङ्गः निधिपतिः कुबेरस्त्वष्टौ कोशानिधीन्-

"पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथापरः ।
नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" ॥

इत्युक्तान् प्राहिणोत् ॥ ५६ ॥

तथाऽन्ये च लोकपाला निजोद्वाविजविभूतीः तथान्ये च क्षित्यादयो यत्स्वाधिकारसिद्धये भगवता दत्तमाधिपत्यं तत्सर्वं भगवति भूमिगते भूमाववतीर्णे सति तस्मै प्रत्यर्पयामासुः ॥ ५७॥

तथेति । यथा कालयवनो माथुराश्च जना न जानीयुस्तथा योगप्रभावेन योगमायात्मिकाश्चर्य्यशक्तिप्रभावेन माथुरं सर्वं जनं तत्र दुर्गे नीत्वा प्रापय्य पुनरागत्य अथ रामेणानुमन्त्रितः आलोचितो भगवान् पद्ममालाधरो निरायुधश्च भूत्वा पुरद्वारात् निष्क्रान्तवान् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मर्त्यधर्मैर्जरादिलक्षणैः ॥ ५५ ॥
क्षीरोदशायिनो विष्णोर्यत्प्रियं हयं तदपि ददौ ॥ ० ॥
निधिपतिः कुबेरः अष्टौ कोशान्निधीन् अविक्षयानव्ययान् ॥ ५६ ॥
स्वाधिकृतं स्वकीयत्वेनाभिमतम ॥ ० ॥
क्षीरोदधिमथने हरिणा दत्तम ॥ ५७ ॥
योगप्रभावेण मथुरास्थितपदार्थराशिर्यथा द्वारकास्थितो भवति तथा करणसामर्थ्येन रामेण समनुमन्त्रितः सहितः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥
( विजयध्वजरीत्या त्रिपञ्चाशत्तमः ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ ५१--५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवता स्थाने निर्मिते विशेषतो निर्माणे कृते पारिजातादीनाम अनन्यत्वप्रतिष्ठा गमिष्यतीति लोकपालाः सर्वं स्वस्वसमृद्धिं प्रेषितवन्त इत्याह--सुधर्मामिति त्रिभिः । यदग्रे पारिजातहरणं तन्मतान्तरभाषया निरूपितं तदग्रे विस्तरेण वक्ष्यामः सुधर्मा देवसभा नवरत्ननिर्मितैव भूमिरूपा काचित् देवता सुधर्मेत्युच्यते तत्रोपवेशनमात्रेणैव धर्माधर्मफलञ्च भवतीति चकारादन्येऽपि सुरद्रुमाः इन्द्रः सिंहासनादिकं च प्रस्थापितवानिति उभयोर्माहात्म्यं वर्णयति--यत्रचेति । यत्र सुधर्मायां चकारात् पारिजातादयश्च अनेन समीपे विद्यमानः सर्वदा नियतमरणधर्मोपि तैः स्वाभाविकैः मर्त्यधर्मैः न युज्यते अनेन पूर्वदोषपरिहारोऽप्युक्तः गुणास्तु धर्मा सुधर्मापदेनैवोक्ताः ॥ ५५ ॥

अन्यामपि सम्भूतिमाह--श्यामैककर्णानिति । एकः कर्णः श्यामः दक्षिणः शिष्टः सर्वोऽपि कुन्दसन्निभः उच्चैःश्रवस एतद्वैलक्षण्यम अयं स्वर्गः कर्म चेति उभयं बोधनार्थं प्रवृत्तिशास्त्रस्थाने श्यामता निरूपिता ते चाश्वाः सैन्धवा एवेति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ज्ञापयितुं वरुणेन प्रस्थापितमित्युक्तम्, अन्यत्र वर्णान्तरसम्मावना स्यादिति तन्निवृत्त्यर्थं शुक्ला इति अत एव तेषां श्लाघ्य इति शुक्लाश्च ते मनोजवाश्चेत्युक्तं शुक्ले जवाभावमाशङ्क्य समास उक्तः निधिपतिर्धनदोऽष्टौ निधीन् प्रेषितवानिति गम्यते अष्टौ लोकपालाश्च कोशान् भण्डारवस्तूनि निजस्य स्वस्य स्वस्य अभ्युदयांश्च ॥ ५६ ॥ ॥

ननु, स्वयमनेकसुकृतेन प्राप्तं भोगसाधनमधिकारज्ञापकं च किमिति दत्तवन्त इत्याकाङ्क्षायामाह—यद्भगवता दत्तमिति। न हि तानि वस्तूनि धर्मोपार्जितानि किन्तु भगवता दत्तानि यतस्तदाधिपत्यम् ईश्वरेणैव ह्याधिपत्यं दीयते तथापि प्रतिदाने को हेतुरिति चेत् तत्राह—स्वसिद्धय इति। स्वस्य सिद्धये अधिकारो ईश्वरेच्छयैव भवति सा चाज्ञातुमशक्येति यथा तन्नियतं भवति तथोपायः कर्त्तव्यः तद्भगवति दान एवाक्षयं भवति अतः स्वस्य धनस्य अधिकारस्य वा सिद्धये सम्यङ्निष्पत्त्यर्थं सर्वं प्रत्यर्पयामासुः। ननु, भगवता तत्कथं ग्राह्यमिति चेत् तत्राह—हरौ भूमिगते इति। भूमिरपि दत्ता ब्रह्मणे मनवे वा पुनर्भक्तोद्धारार्थं स्वयमप्यागतः तन्न्यायेन सर्वामपि समृद्धिं भक्तेभ्यो दातुं प्रदर्शयितुं वा अपेक्षेतेति प्रत्यर्पणमुचितम् एतदभिज्ञानाय नृपेति सम्बोधनं यदर्थमेतन्निर्माणं तत्राह—तत्रेति। अणिमादयो हि योगस्य सहजफलानि इह तु वक्ष्यमाणं योगस्यानुभावस्य फलं यथास्थितान् शयानान् सर्वानेव तेषां दुःखनिराकरणार्थं तत्र द्वारकायां नीत्वा स्वयं पुनरागतः तत्रत्यप्रजानां देशवर्त्तिनां दुःखनिवृत्त्यर्थं बलभद्रं निरूप्य प्रजापालने अङ्गीकृते तेन प्रजापालनेन वस्तुतोपि रामेण रत्युत्पादकेन कृष्णः स्वयं सदानन्दः नातः परमत्र मथुरायां स्थेयमिति ज्ञापयन्निव साधनानुमतिं गृहीत्वा फलरूपः ॥ ५७ ॥

ततो निवृत्त इत्याह—निर्जगामेति। नितरां गमनं नित्यसन्निधिरूपेणापि ततो निर्गत इति ज्ञापयितुं नित्यक्रियारूपेण तु वर्त्तेत इति न काप्यनुपपत्तिः पुरद्वारादिति निर्गमनं सर्वजनीनं भवत्विति निर्गच्छता भगवता द्वयं ज्ञापितमिति विशेषणद्वयमाह—पद्ममाली निरायुध इति। ततः कीर्त्तिर्नीता रक्षा तु कृतेति एवं निर्गमनस्य प्रयोजनमग्रे स्पष्टं भविष्यति ॥ ५८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मज श्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे प्रथमाध्याय विवरणम् ॥ १ ॥ ५० ॥

(पञ्चाशत्तमोऽध्यायः) ॥ ५० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पारिजातं च प्राहिणोदिति शुकपरीक्षित्सम्वादात् पूर्वभूतत्वाद्भूतनिर्देशः ॥ ५५ ॥

निधिपतिः कुबेरः कोशान् निधीन्—

पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथौदकः।
नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्त्तिताः ॥ इति

निजोदयान् स्वीयसम्पत्तीः ॥ ५६—५७ ॥

योगो योगमाया तत्प्रभावेन तत्प्रकारः पाद्मोत्तरखण्डे यथा।

सुषुप्तान् मथुरायां तु पौरांस्तत्र जनार्दनः।
उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः।
हैमहर्म्यतले विष्टा विस्मयं परमं ययुः ॥ इति

रामेण सह समनुमन्त्रितः त्वमत्रैव मुहूर्त्तं तिष्ठ अहमनया युक्त्या इमं घातयिष्ये इति कृतमन्त्रण इत्यर्थः ॥ ५८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
दशमे सङ्गतः पञ्चाशत्तमः सङ्गतस्सताम् ॥ ५० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सुधर्मां देवसभां पारिजातं च देवद्रुमं प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वभूतत्वाद्भूतनिर्देशः ॥ ५५ ॥

कोशान् निधीन्—

"पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथौदकः।
नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्त्तिताः"। इति

प्रसिद्धान् अन्ये ऽपि लोकपालाः निजोदयान् निजविभूतीः ॥ ५६ ॥

अन्ये च सिद्धादयः यत्स्वाधिकारसिद्धये आधिपत्यं भगवता दत्तं तत्तत्सर्वं प्रत्यर्पयामासुः ॥ ५७ ॥

तत्र योगप्रभावेनेति योगः नरलोकानुरूपो मौहूर्त्तिकस्तत्प्रभावेन तत्प्रकारः हरिवंशे दर्शितः—

"एतस्मिन्नन्तरे चैव यदूनां नन्दिवर्द्धनः।
केशवः पुनरेवाह यादवान् सत्यसङ्गरः ॥
अद्यैव दिवसः पुण्यो निर्याम सबलानुगाः।
ततो निश्चक्रमुः सर्वे यादवाः कृष्णशासनात्।
ओघा इव समुद्रस्य बलौघप्रतिनादिताः।
प्रगृह्य ते कलत्राणि वसुदेवपुरोगमाः ॥
सुसज्जैर्गजैरश्वैः रथैरश्वैश्च दंशिताः।
आहत्य दुन्दुभीः सर्वे सधना ज्ञातिबान्धवाः ॥
निर्ययुः यादवाः सर्वे मथुरामपहाय वै" ॥

इत्यादिना—

निवेद्य द्वारकां राजन्! वृष्णीनां स्वस्य चैव ह।
पदातिः पुरुषव्याघ्रो बाहुप्रहरणस्तदा ॥
आजगाम महायोगी मथुरां मधुसूदनः।

इत्यन्तेन। योगो योगमाया तत्प्रभावेन वा युज्यते इति योगः सङ्कल्पस्तेन स्वसङ्कल्पप्रभावेन वा तत्प्रकारः पाद्मोत्तरखण्डे दर्शितः—

"सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः।
उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः।
हैमहर्म्यतले विष्टा विस्मयम्परमं ययुः" ॥ इति ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चाशत्तमाध्यायार्थप्रकाशः ॥ ५० ॥

---

भाषा टीका ।

उस नगर में इन्द्र ने श्रीकृष्णचन्द्र के लिये पारिजात वृक्ष पहुंचाया, और सुधर्मा सभा पहुंचाई जिस सभा में बैठे हुए मनुष्यों को जरा वृद्धत्वादिक मनुष्यों का धर्म नहीं व्यापता है ॥ ५५ ॥

एक कर्णश्याम जिनका और सब वर्ण सफेद जिनका और मन के बराबर वेग वाले ऐसे घोडे वरुण जी ने भेजे, और लोकपाल कुबेरजी ने आपको निज उदयके देने वाले, आठों सिद्धि अर्थात् खजाने भेज दिये ॥ ५६ ॥

हे नृप ! जिसर देवता को जो जो मालिकी जहां२ का अधिकार दिया है अपने कार्य की सिद्धिके अर्थ जब भगवान् भूमि में आये तब सबने अपना२ वैभव भगवान् को समर्पण कर दिया ॥ ५७ ॥

ऐसे उस नगर में सब मथुरा वासी जनों को भगवान् अपने योग प्रभाव से लेजा कर, प्रजा पालन करने वाले श्रीबलदेवजी के साथ श्रीकृष्ण चन्द्र सलाह करते हुए और सलाह करके कमलों की माला पहिर कर निरायुध अर्थात् हाथमें कुछ शस्त्र नही लेकर मथुरा पुर के द्वार से निकलते हुए ॥ ५८ ॥

इति श्रीमद्भागवत दशमस्कन्धोत्तरार्द्ध में पंचासवें अध्यायकी, श्रीवृन्दावन पं० भागवताचार्य कृत भाषा टीका समाप्त ॥ ५० ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

# एकपञ्चाशत्तमोऽध्यायः ।

---

## श्रीशुक उवाच ।

तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ।
दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥
नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ।
मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥
वासुदेवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः ।
चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकपञ्चाशत्तमेहन्मुचुकुन्ददृशा हरिः ।
यवनं मुचुकुन्देन स्तुतः सम्नन्वकम्पत ॥
यवनेन्द्रसुतात्कालयवनाद्यदुभीषणात् ।
हरिर्हरगिरः स्वैरं पालनायापलायत ॥

यदा गार्ग्यः श्यालेन षण्ढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान् ततश्च यवनेन्द्रेणापुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनादिति पुराणप्रसिद्धम् । पुरद्वारान्निष्क्रान्तम् उज्जिहानमुद्गच्छन्तम् ॥ १—२ ॥

नित्यप्रमुदितमित्यादिमुखारविन्दविशेषणम् ॥ ३—४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमिति षट्कम् । विनिष्क्रान्तमिति विशब्देन सम्यक् निष्क्रम एव तस्य निश्चयोऽभूदिति ज्ञापितम् उज्जिहानमित्यादिना श्रीकृष्णमाधुर्य्यवर्णनं स्वप्रेमतस्तत्स्वभाववर्णनापेक्षयैव ननु यवनस्यानुभावापेक्षया तत्र सति वैरासम्भवात् "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीताभ्यश्च यथातिक्कादिरुचिस्वभावाः खण्डादिमाधुर्य्यं नानुमोदन्त इति तद्ग्रहणाभास एव तेषां तद्वत् तदेवमहो पश्यन्तोपि न पश्यन्तीति भावः । पृथुदीर्घचतुर्बाहुमिति श्रीनारदोपदेशानुसारेणोदयात् तेन तथोपदेशश्च विलक्षणलिङ्गेन शीघ्रं निश्चिनोत्यसाविति नवकञ्जे इव अरुणे ईक्षणे यस्य तं "अव्यक्तरागस्त्वरुणः" इत्यमरः । श्रीमत्कान्तियुक्तं प्रशंसायां मतुप् सुकपोलमित्यवयवसौष्ठवस्योपलक्षणं शुचिस्मितमिति विलासस्य स्फुरदित्यादिर्वेषस्य षट्केऽपि वासुदेव इति सार्द्धमवान्तरमन्वितम् इतिं एतैर्लक्षणैर्वासुदेव एवायं भवितुमर्हति नत्वन्य इति सम्बन्धः लक्षणान्येवाह-पुमानित्यादिना । तस्मान्निरायुध इति इतीति वासुदेव इत्यादिपरामर्शकं प्रकर्षेण लीलाविशेषेण च आ ईषद्द्रुतगत्या द्रवन्तं चलन्तं जिघृक्षुरिति तस्यगर्वितत्वं दुरापमित्युपहासास्पदत्वं च व्यञ्जितम् ॥ १ ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उज्जिहानम् उद्गच्छन्तम् ॥ १—३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुष्कृन्निग्रहसाध्वनुग्रहाविवेकेन भगवच्चेष्टितेन दर्शयन् कथाशेषमाह-तमित्यादिना । पुरद्वाराद्विनिष्क्रान्तं तं श्रीकृष्णमवलोक्य नारदोक्तैरेतैर्लक्षणैरयं पुमान् वासुदेवो नान्यो भवितुमर्हत्ययं च निरायुधोऽनेन पद्भ्यामेव चलन्निरायुधश्चाहं योत्स्यामीति निश्चित्य पराङ्मुखं प्राद्रवन्तं तम् अन्वधावदित्यन्वयः तं कथंभूतम् ? उज्जिहानं उद्गच्छन्तम् उडुपं चन्द्रमिव स्थितमतीव दर्शनीयं पीते कौशेये वाससी यस्य तम् ॥ १ ॥

श्रीवत्सो वक्षसि यस्य भ्राजता कौस्तुभेनाऽऽमुक्ता बद्धा अलङ्कृतेति यावत् सा ग्रीवा यस्य पृथवः पीनाः दीर्घाः चत्वारो बाहवो यस्य नवकञ्ज इवारुणे ईक्षणे यस्य तम् ॥ २ ॥

नित्यप्रमुदितेत्यादि । मुखारविन्दविशेषणं श्रीमत्सौन्दर्यसम्पद्युक्तोभनौ कपोलौ यस्मिन् शुचि विशुद्धं स्मितं यस्मिन्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्फुरन्ती मकराकारे कुण्डले यस्मिन् तथाभूतं मुखारविन्दं बिभ्राणम् ॥ ३ ॥

श्रीवत्सो लाञ्छनं चिह्नं यस्य चत्वारो भुजा यस्य अरविन्दे इवाक्षिणी यस्य वनमालाऽस्यास्तीति तथा श्रीह्लादित्वाभ्मत्वर्थीयः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उज्जिहानमुद्यन्तम् ॥ १ ॥ ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उज्जिहान इत्यादिना श्रीकृष्णमाधुर्य्यवर्णनं स्वप्रेमतस्तत्स्वभाववर्णनापेक्षैव येन तु यवनस्यानुभावापेक्षया तत्र वैरासम्भवात् अतस्तिक्तादिस्वभावानां खण्डादिचर्व्वणवदेवेदं ज्ञेयम् ॥ १—७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

श्रीहरिर्जयति ।

॥ १—५ ॥

चिन्तयामासेत्यादि हरिः कारणमानुष इति कारणरूपः सर्वस्य हेतुरूपः मानुषः मानुषाकारो द्विभुज इत्यर्थः ॥ ६—९ ॥

धर्मरक्षार्थं अन्योऽपि देहो मूर्त्तिर्मया ध्रियते इदानीं स्वयमेवावतीर्णो यद्धर्मं रक्षिष्यामि तत्किमित्यर्थः ॥ १०—१३ ॥

एतदर्थमित्यादि । नौ आवयोर्जन्म प्रादुर्भावः ॥ १४—१६ ॥

तावाहेत्यादि । हे कृष्ण ! पुरुषाधमेति पुरुषा अधमा यस्मात् स तथा पुरुषोत्तमेत्यर्थः ॥ १७—५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

॥ अथ एकपञ्चाशत्तमोऽध्यायः ॥

१—५७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निग्रहं प्रथमेऽध्याये निरूप्य हरिणा कृतम् ।
द्वितीयेऽनुग्रहं प्राह मुचुकुन्दाय यत्कृतम् ॥
तामसी हननाख्या हि राजसी नगरोद्यमा ।
सात्त्विकी नयनाख्याच निर्गुणा निर्गमस्तथा ॥
निर्गुणस्य निमित्तत्वं न तु कर्तृत्वमीर्यते ।
प्रबोधोमद्यच्चैव सम्वादश्च यथाक्रमात् ॥
स्तुतिश्च निर्गुणा प्रोक्ता तदग्रे हि फलिष्यति ।
अतो निर्गुणलीला ऽत्र द्वितीये विनिरूप्यते ॥
विषयभगवतो ज्ञेया गुणेषु स्वे यतः स्थिता ।

पूर्वाध्यायान्ते तत्त्वानि परित्यज्य केवलं तं व्यामोहयितुं कीर्तिमयीं वनमालां बिभ्रत् निर्गत इत्युक्तं कालयवनस्य मुक्त्यर्थं नारदोपदेशो गृहीतवतः साक्षात्कारः ततस्तदनुसरणं ततो इच्छया ज्ञानरूपेण ज्ञानाग्निना सङ्घातनाशश्च निरूप्यते निर्गुणक्रियाया मोक्षपर्यवसानात् परं तस्य काल एव मुक्तिरिति निरूपयितुं द्वादशभिर्निरूप्यते तं विलोक्येति । तं विलोक्य वासुदेवोऽयमिति निश्चित्य तं जिघृक्षुरन्वधावदिति षष्ठेन सम्बन्धः तत्रादौ त्रिभिस्तद्दृष्टं रूपं वर्णयति पञ्चदशकलापूर्णमिव तावद्भिर्विशेषणैः अतः प्रथमतः चन्द्रदृष्टान्तेनैव निरूपयति, विशेषेण निष्क्रान्तं यथा उदयाद्रेश्चन्द्रः नतु राहोर्मुखात् नापि मेघेभ्यः तथापि भगवानपि न मारयितुं नापि भयमुत्पादयितुं भयेन वेति तदाह—उज्जिहानमिति । प्रथमदर्शनापेक्षया द्वितीयदर्शने अधिककान्तियुक्तः प्रतीयत इति. ननु, विशेषकान्तिप्रदर्शनं किमर्थमित्याशङ्क्याह—उडुपमिवेति । चन्द्रो हि नक्षत्राणां रक्षकः यदि तत्तन्नक्षत्रे न गच्छेत् गत्वा वा तं न प्रकाशयेत् तदा नक्षत्राणां वैयर्थ्यमेव स्यात् तथा भगवान् नारदादीनां रक्षार्थं तदुपदिष्टेषु स्वानुभावं व्यापयितुं प्रतिक्षणं रूपवैशिष्ट्यं प्रकाशितवानित्यर्थः । किञ्च तस्मिन् दृष्टे युद्धार्थं समागतानां क्रोधः कदाचिद्भवेत् ततश्चासन्मत्या मोक्षो न भवेदिति भगवान् स्वस्वरूपं सुन्दरत्वेनैव प्रकाशितवानित्याह—दर्शनीयतममिति । दर्शनीयोतिसुन्दरः अत्याश्चर्यं हि परस्मै प्रदर्श्यते स्वस्यापि पुनः पुनर्द्रष्टव्यो भवति श्याममिति रसात्मकता निरूपिता, सर्ववेदयुक्तत्वमाह—पीतकौशेयवाससमिति । नग्नाज्ञमुक्तिरिति वैदिकः सिद्धान्तः आद्यन्तमध्ये यज्ञो हि वेदेनामृतमश्नुत इति कच्छाशिखोपवीतानि बन्धनान्याह—वेदतः पीतवर्णं कौशेयं वासो यस्येति वेदो यज्ञो देवाश्च पदत्रयेण परिगृहीताः छन्दोमयं पीतमिति । "कौशेयं क्षौमं स्तैम्यं वै क्षौमम्" इति श्रुतेः । "सर्वदैवत्यं वासः" इति विशेषवैयर्थ्यं च ॥ १ ॥

एवं धर्मरूपतां निरूप्य अर्थरूपतामाह—श्रीवत्सवक्षसमिति । श्रीवत्सो वक्षसि यस्येति दक्षिणावर्तरोमरेखायां सुवर्णरेखावत् तेजोविशेषः श्रीवत्सशब्देनोच्यते 'वक्षसि जीवः सन्निहितः' इति तत्रैव भगवता अर्थः स्थापितः सुतरां दक्षिणः ततोधर्मो भवतीति धर्मप्रतिष्ठित एवार्थो भगवता परिगृहीतः अत एव तत्र जीवप्रतिष्ठामाह—भ्राजत्कौस्तुभेनामुक्ता कन्धरा यस्येति पुरुषः कामयत इति कामस्तन्निरूपणेन निरूपितः । मोक्षस्तु स्वेनैव दीयते इति प्रसङ्गादन्यदानमपि चतुर्भुजत्वेन निरूपयति पृथुदीर्घेति पृथवो दीर्घाः चत्वारो भुजा यस्येति कृपया ज्ञानमपि प्रयच्छतीति ज्ञापनार्थमाह—नवकञ्जारुणेक्षणमिति । नवकमलवदरुणे ईक्षणे यस्य नूतनत्वेन कालाग्रासः कञ्जत्वेन सात्त्विकता अरुणेन राजसता च ईक्षणस्य निरूपिता तेन सदया ज्ञानदृष्टिर्भगवदीया भक्तिं साधयतीति पञ्चमोपि पुरुषार्थो निरूपितः ॥ २ ॥

प्रार्थनावसर इति व्यापयति--नित्यप्रमुदितमिति । एवं सर्वपुरुषार्थदातारं भगवन्तं निरूप्य मुखारविन्दमपि पञ्चभिर्विशेषणैः विशिष्टं पञ्चपर्वविद्यारूपं स्वतन्त्रभक्तिमार्गत्वेन निरूपयन्नाह—श्रीमदिति । मुखारविन्दं बिभ्राणमिति । भगवद्विशेषणं सन्मार्गो भगवतैव स्थाप्यत इति व्यापयितुं तदपि श्रीयुतं भवति परमसुन्दरं भगवान् इति सुष्ठु कपोले यस्येति ।

लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ।
निरायुधश्चलन् पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥
इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ।
अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥
हस्तप्राप्तमिवाऽऽत्मानं हरिणा स पदेपदे ।
नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥
पलायनं यदुकुले जातस्य तव नोचितम् ।
इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

प्रवृत्तिनिवृत्तिप्रकारेणापि रसानुभवस्थानयुक्तं शुचि शुभ्रं स्मितं यस्मिन्निति सेवनार्थमेव समीचीनं मोहं सम्पादयति नान्यथेति निरूपितं स्फुरती मकरसदृशे कुण्डले यस्येति बहिर्निर्गमने प्रासार्थं स्थापिताविव मकरतुल्यौ वेदौ निरूपितौ मोक्षदित्सया गच्छन् भगवन्मार्गं भक्तिमार्गं च स्थापयतीति निरूपितम् ॥ ३ ॥

एतादृशो भगवानेव भवतीति नारदशिक्षया ज्ञातवानित्याह—वासुदेवो ह्ययमिति । सत्वे आविर्भूतः मोक्षदाता वा अयमेव वासुदेव इति निश्चयं कृतवान् कथं निश्चय इत्याशङ्क्य असाधारणानि षड्गुणरूपाणि षड्विशेषणान्याह—इति निश्चयार्थः यतः पुमान् न तु प्रकृतिः दिव्यदृष्ट्या हि पश्यतीति सर्वजगतः प्राकृतत्वं भगवतः पुरुषत्वं च दृष्टवान् अनेनैश्वर्यमपि निरूपितं "विष्णोस्तु त्रीणि रूपाणि" इति वाक्यात् तेषां पुरुषरूपत्वं च न बाधकं प्रत्युत मूलस्य पुरुषत्वे तेषां पुरुषरूपत्वमुपपद्यत इति साधकत्वमेव श्रीवत्सो लाञ्छनं यस्येति क्रियाशक्तिः पूर्णवीर्यत्वेन निरूपिता भगवत्येव सा यतः ततो यशो निरूपयन् सर्वपुरुषार्थदातृत्वे तद्भवतीति चतुर्भुजत्वमाह—ततो दृष्ट्यैव तापहारकत्वं भक्तिप्रदत्वेन निरूपयन् श्रियं निरूपयति-अरविन्दाक्ष इति । रविव्यतिरिक्तान् सर्वानेव द्यति खण्डयति महातेजस्विनमेव स्थापयतीति तादृशमक्षि निरूपयन् श्रियं भक्तिं च निरूपितवान् वनमाला अन्तःप्रविश्य ज्ञानवत्तिष्ठतीति ज्ञाननिरूपणेन पूर्णता निरूपिता अतिसुन्दरः सर्वथा कल्मषाभावात् देशपरित्याग एव हि वैराग्यमिति अतः कारणात् वासुदेव इति निश्चयः॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकपञ्चाशत्तमे श्रीमुचुकुन्दो दृशाऽदहत् ।
यवनं तुष्टुवे कृष्णं स तुष्टोऽस्मै वरं ददौ ॥

उज्जिहानमुद्गच्छन्तं प्रकटितमपि अन्यैर्यथायोगमास्वाद्यमानमपि भगवन्माधुर्य्यमसुरा वैरभावादेवानुभवितुं चक्षुर्भ्यां पश्यन्तोऽपि न शक्नुवन्तीति ज्ञापयितुं दर्शनीयेत्यादिना सौन्दर्यं वर्णितं प्राद्रवन्तं पलायमानम् ॥ १—६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकपञ्चाशत्तमे कालयवनस्य प्रतिकूलभक्तस्य हरितत्प्रकाद्विषो वधो मुचुकुन्दे हरिभक्ते भगवदनुग्रहश्च वर्ण्यते-तं विलोक्येति । तं श्रीकृष्णं पुराद्विनिष्क्रान्तम् विलोक्य नारदप्रोक्तैर्लक्षणैरयं पुमान् वासुदेवः अयं च निरायुधः । अतोऽहमपि पद्भ्यां चलन् अनेन निरायुध एव योत्स्ये इति निश्चित्य तं पराङ्मुखं प्राद्रवन्तमन्वधावदिति षण्णामन्वयः दर्शनीयः क्षरो देहादिः दर्शनीयतरो क्षरो जीवः । दर्शनीयतमः पुरुषोत्तमस्तम् ॥ १ ॥

श्रीवत्सो वक्षसि यस्य तं भ्राजता कौस्तुभेन आमुक्ता बद्धा कन्धरा यस्य तम् ॥ २ ॥

नित्यप्रमुदितं मुखारविन्दं बिभ्राणम् ॥ ३—६ ॥

———

भाषा टीका ।

ॐ मुचुकुन्दप्रसादकाय नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-पुर से बाहर निकलने वाले अत्यन्तही देखने योग्य श्रीकृष्ण को कालयवन ने पीतांबर पहिने हुये देखा निकलते समय पर कैसे मालूम होते, कि-मानो बद्दल में से चन्द्रमा निकल कर जा रहा है ॥ १ ॥

और फिर कालयवन ने श्रीकृष्ण चन्द्र को कैसे देखे ? कि-वक्षस्थल मे श्रीवत्स का चिन्ह है, दीप्ति युत कौस्तुभ मणिको गले में पहिने हैं, बडे पुष्ट लम्बे चार बाहु जिनके हैं नवीन कमल सदृश अरुणारे नेत्र जिनके हैं ॥ २ ॥

सदा ही मोद ( आनन्द ) से भरे हुये हैं, शोभा युक्त सुन्दर कपोल, सुन्दर मन्द हँसन वाला जिनका मुखारविन्द, चंचल मकराकृति कुण्डलों को कानों में धारण किये हैं ॥ ३ ॥

कालयवन ने विचार किया कि-श्रीवत्सचिन्ह वालां, चारभुजाओंवाला, कमल सदृश नेत्र वाला, वनमाला को पहिने हुये अत्यन्त सुन्दर यह पुरुष वासुदेव ही है ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

नारदोक्तैरेतैर्लक्षणैरयं पुमान्वासुदेव एव नान्यो भवितुमर्हति अयं च निरायुधोऽतोऽनेन पद्भ्यामेव चलन्निरायुधोऽहं

श्रीधरस्वामिकृतभावार्थदीपिका ।

योत्स्यामीति निश्चित्य तं पराङ्मुखं प्राद्रवन्तमन्वधावदित्यन्वयः ॥ ५—६ ॥

आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः ॥ ७ ॥

अहताशुभोऽक्षीणकर्मा ॥ ८—९ ॥

———

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

श्रीभगवतस्तु तत्रापि चातुर्य्यं दर्शयति–हस्तेति । पदे-पदे दर्शयता ॥ ७ ॥

तथाप्यप्राप्यं विलोक्य खिरीकर्त्तुं परुषमाह—पलायनमिति । यदुकुल इति । यादवानां सुप्रसिद्धमहावीरत्वादिति भावः क्षिपन्नुपलभमानः अनुगतम् अनुगच्छन्नपि न प्रकर्षेण स्पर्शेनापि तत्र हेतुः । अहताशुभ इति, अस्यापातप्रतीतार्थता चेत्तर्हि तदप्राप्तौ हेतुत्वं वक्तुं महदेवानुचितं यवनस्यास्य यदि भाग्यमप्रतिहतमभविष्यच्च तर्हि सोऽयं तच्छत्रुर्हस्तगतश्चाभविष्यदिति शोचन् प्रतिपस्या विरुद्धमतिकृत्यप्रतिपत्तेः न च यवनस्य मुक्तिक्रिया प्रपत्या शोचनमिदमिति वक्तव्यं तन्मुक्तेरनन्तरभावित्वात् तच "येच प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः" इत्यादेर्द्वितीयस्कंधेऽभिधानात् नच प्रसिद्धाशुभहानिमात्रेण तत्प्राप्तियोग्यता वक्तव्या "यत्पादपांसुर्बहुजन्मकृच्छ्रतो-धृतात्मभिर्योगिभिरप्यलभ्यम्" इत्यात्रासम्मतत्वात् "भक्त्याहमेकया ग्राह्यः" इति विलक्षणसाधनान्तरस्य प्रतिपन्नत्वाच्च तस्मादपरे हतपाप्मानो "व्यजनैः समवीजयन्" इत्यत्र हतपाप्मा तया यथा समस्तेन तदंशेन प्रतिपक्षेण भावेन रहितायां परमभक्तायेव पर्य्यवसानं तथात्राप्यहताशुभातायास्तद्विरुद्धभाव एव पर्य्यवसितिरितीत्थमेव साक्षात्तत्प्राप्त्यभावे हेतुता गम्यते यथा श्रीव्रजेश्वरी पश्चाद्धावन्ती तं पराद्रवन्तमपि प्राप्तवन्त्येव तथासोप्ययं कथं प्राप्नुयादित्यभिप्रायात् ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंविधैर्नारदप्रोक्तैर्लिङ्गैर्वासुदेव एवायमित्यन्वयः ॥ ५ ॥

इतितिः । इत्थं निश्चित्य यवनः पलायमानं पराङ्मुखं च भगवन्तं गृहीतुम् इच्छुरन्वधावत् तस्य दुष्प्राप्यतां वक्तुं विशिनष्टि योगिनामपि दुरापं योगविशुद्धमनसामपि दुर्प्राह्यम् ॥ ६ ॥

हस्तेति । प्रतिपदमात्मानं हस्तप्राप्तमिव दर्शयतो भगवता दूरं नीतः स यवनाधीशोऽन्ततोऽद्रिकन्दरं प्रापित इत्यर्थः ॥ ७ ॥

यदुकुले जातस्य तव पलायनमनुचितमित्येवं क्षिपन्नभिमन्यमानोऽनुगतोपि यवन एनं भगवन्तं न प्राप तत्र कारणं वदंस्तं विशिनष्टि—अहताशुभोऽक्षीणदुष्कृतः ॥ ८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जिघृक्षुर्ग्रहीतुमिच्छुः ॥ ६ ॥

दूरमद्रिकन्दरं प्रति नीतः पदेपदे हस्तप्राप्तमिवात्मानं दर्शयित्वेति शेषः । दर्शयता आत्मानमिति शेषः ॥ ७ ॥

अहताशुभः अनष्टपापः ॥ ८–१२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनुगतः अनुगच्छन्नपि न प्रकर्षेण स्पर्शेनापि यस्मादहताशुभः तत्स्पर्शबाधकापराधाक्षयादित्यर्थः ॥ ८—९ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च लक्षणैर्नारदोक्तैः वासुदेवादन्यो भवितुं नार्हति पुराणान्तरादत्र कथानुसन्धेया, गतो हि नारदः कालयवनमाह यादवाः त्वत्सदृशाः इति परं कृष्णः रक्षकः स च सर्वथा ज्ञातुमेवाशक्यः कुतो जय्यः कथमशक्य इत्याकाङ्क्षायां नूतनान्यनेकानि रूपाणि सम्पादयतीति उक्त्वाऽऽह तं त्वं न ज्ञास्यसीति, ततो विशेषजिज्ञासायां लक्षणानि निरूपितवान् स एकाकी निरायुधः अयुध्यमानः सर्वाभरणभूषितः पदातिर्निर्गमिष्यतीति तं यः सायुधः अश्वाद्यारूढो ऽनुगच्छेत् तं पापं प्रसर्पेदिति कालयवनस्यापि स्वपापादेव भयं नान्यत इति निरूपितं अतोऽस्मिन् नारदोक्तलक्षणानि वर्त्तन्त इति वासुदेवश्च तर्हि किं करिष्यसीत्याशङ्कायामाह—निरायुध इति । यतोऽयं निरायुधः पद्भ्यां च चलन् गच्छति अतो ऽहमपि निरायुध एव गमिष्यामीति पद्भ्यामेव चलन् ततो योत्स्ये मल्लप्रकारेण अनेन सह युद्धार्थमेव यतः समागतमिति अहमपि निरायुधो ऽयमपीति ॥ ५ ॥

एवं निश्चित्य पराङ्मुखमपि भगवन्तं प्राद्रवत् नारदो हि हितप्रश्ने उक्तवान् यथा भगवान् करोति तथा कर्त्तव्यमिति तदा ते जयः जीवनं च भविष्यतीति तदनेनान्यथा बुद्धं भगवान् पराङ्मुखः अयं भगवत्सम्मुखो भूत्वा समुपसर्पणं कृतवानिति वाक्यात् ज्ञाने हेतुमाह—यवन इति जातिदोषात् न ज्ञातवानित्यर्थः । यदि गच्छति भगवति तूष्णीमयं तिष्ठेत् बलभद्रेण वा युद्धं कुर्यात् तदा जयो भवेदपि भगवांश्च सम्मुखमागच्छेत् तथा गमने प्रयोजनाभावात् अतः पराङ्मुखमपि भगवन्तं प्राद्रवन्तं जिघृक्षुस्सन् स्वयमन्वधावत् ननु जिघृक्षया गमनमुचितमेवेत्याशङ्क्याह—योगिनामपि दुरापमिति । अत्र प्रमाणं, तमिति तथैव प्रसिद्धम् ॥ ६ ॥

ननु, कियद्दूरं गत्वा अप्राप्तौ कथं न निवृत्त इति चेत्तत्राह—हस्तप्राप्तमिवेति । स हि हरिणा नीतः तर्हि वञ्चयतीति कथं न ज्ञातवान् ? तत्राह—पदे हस्तप्राप्तमात्मानं भगवन्तं मन्यमान इति हस्तमात्रगमनानन्तरं भगवान् प्राप्यते इति स जानन् गतः न हि कश्चित् हस्तमात्रादुदासीनो भवति अत आकाङ्क्षा न निवृत्ता यदा हि प्राणी क्रियया आत्मानं प्राप्स्यामीति मन्यते स हि भ्रान्त एव भवति । ननु, भगवता वा किमर्थं नीतीति इति चेत् तत्राह–हरिणेति । स हि हरिः तस्याप्यविद्या हर्त्तव्या मुचुकुन्दस्य च निद्रेति भगवान् हि यः स्वात्मानमनुसरति तं नोपेक्षत इति पदेपदे तथा बुद्धिमुत्पादितवान् तदाह—दर्शयतेति । पदेपदे आत्मानं हस्तप्राप्तं दर्शयता उभयत्रापीदं वाक्यं युज्यते अतो गन्तुर्नेतुश्च इच्छाया अनिवृत्तत्वात् दूरं नीतः तत्र अद्रेः कन्दरा यत्र तत्स्थानमपि नीतः नन्वेतावदपि दूरे अप्राप्तिश्चेत् तदा नीतिशास्त्र-

एवं क्षिप्तोपि भगवान् प्राविशद्गिरिकन्दरम् ।
सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥
नन्वसौ दूरमानीय शेते मामिह साधुवत् ।
इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥ १० ॥
स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ।
दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥ ११ ॥
स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत !
देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

विचारेणापि "शिथिलाश्च सुबद्धाश्च" इति न्यायेन कथं न निवृत्त इति चेत् तत्राह--यवनेश इति। दुष्टानां स्वामी न नीतिज्ञः मथुरातः दशयोजनान्ते धवलपुरमिति प्रसिद्धमिदानीं पूर्वन्तु सा मुचुकुन्दगुहा ॥ ७ ॥

क्रियया प्राप्त्यभावमाशङ्क्य जयादिनेव वचनाद्भगवान् प्राप्तव्य इति मत्वा मध्ये वचनमप्युक्तवानित्याह--पलायनं यदुकुल इति। चतुर्हि धर्मात्मा अन्यथा असत्सदृशत्वेन कथमुक्तो भवेत् तादृशवंशे जातस्य सर्वागम्यस्यापि अवतारधर्मानुसरणमुचितमिति पलायनमनुचितमित्यर्थः। ननु, भगवान् कथमेतद्वाक्यं न गृहीतवान्? तत्राह--इति क्षिपन्ननुगत इति। स हि न यथार्थतया वदति किन्तु तिरस्कारार्थं वदतीति यदुकुले तस्य श्रद्धाभावात् किं तस्याग्रे यदुकुलप्रतिष्ठारक्षणेनेति युक्तमेव भगवतस्तद्वाक्यानङ्गीकरणम् अत एव नैनं प्राप अन्यथा भगवदनुगमने भगवान् प्राप्तः स्यात् तेन वचनेन पापमपि जातमित्याह--अहताशुभ इति। यतः अशुभमपि न निवृत्तम् अतो न प्राप पूर्वाशुभमिति केचित् तद्भगवद्दर्शनेनानुगमनेन च निवर्त्येत एवेत्युपेक्षणीयम् आहतः अशुभेनेति वाक्यजनितपापेन पृष्ठतस्ताडितः न भगवन्तं प्रापेत्यर्थः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः ॥ ७-८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पदेपदे आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा स दूरं दूरे वर्तमानमद्रिकन्दरं नीतः ॥ ७ ॥

क्षिपन् अभिभवन् अहताशुभः अक्षीणदुष्कृतः ॥ ८ ॥

---

भाषा टीका ।

क्योंकि? नारदजी के कहे हुये लक्षण इसमें सभी मिलते हैं उन लक्षणों से यह दूसरा नहीं हो सकाहै, किन्तु अब यह निरायुध रिक्तहस्त पाँव से चला आ रहा है तो हम भी कोई आयुध को न लेकर रीते हाथ ही इस से युद्ध करेंगे ॥ ५ ॥

कालयवन ऐसा निश्चय कर पराङ्मुख होकर भागने वाले श्रीकृष्ण के पीछें उनके पकड़ने की इच्छा से दौड़ता भया, कि-जो योगियों को भी बडे कष्टसे प्राप्त होते हैं ॥ ६ ॥

अब हाथमें आया अब हाथसे पकड़ा इस प्रकार अपने को पग पगमें दिखाते हुये श्रीकृष्णचन्द्र उस काल यवन को बहुत दूर एक पहाड की गुफा के समीप ले गये ॥ ७ ॥

अरे कृष्ण! यदुकुल में उत्पन्न होंने वाले एसे तेरे लिये रण को छोड कर भागना उचित नहीं है, इस प्रकार आक्षेप करता हुआ काल यवन पीछे२ दोड़ा गया परंतु पापों के नष्ट नहीं होंने से श्रीकृष्ण को नहीं प्राप्त हुआ ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तं शयानमच्युतं मत्वाऽताडयदिति ॥ १०-११ ॥
तस्य क्रुद्धस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेन ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवान् सर्वज्ञः गिरिगुहान्तःशायिमुचुकुन्दस्य प्रभावं भक्तिं च जानन्नित्यर्थः। प्राविशदिति प्रविश्य मुचुकुन्दस्य शिरः प्रदेशेऽतिष्ठदिति ज्ञेयम्. तथाच श्रीहरिवंशे ।
शिरःस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः ।
सन्दर्शनपथं मुक्त्वा तस्थौ बुद्धिमतां वरः ॥ इति
कालयवनस्य तत्रावकाशाय प्रथमतः स्वगोपनाय चेति भावः अन्यमेव ददृशे न तु तत्रैव स्थितं भगवन्तम् ॥ ९ ॥

ननु वितर्के अच्युतमिति अतोऽन्यत्र श्रीभगवत्प्रयाणस्य तेनाममनाभिप्रायेण न तु अनुगम्यमानः सद्यः कथं तथा सुप्यादिति विचारयोग्योऽप्यसौ दृष्टचतुर्भुजत्वादिरूपादस्मात् विलक्षणरूपं नरं दृष्ट्वाऽप्यच्युतं कथममन्यत? तत्राह-मूढः गुहातमसा व्याप्तः क्रोधादिना च हततद्विचार इत्यर्थः ॥ १० ॥

चिरमिति वैवस्वतमन्वन्तरायचतुर्युगे त्रेतायां जातस्य तस्य साम्राज्ये देवसाहाय्यात् शनैरिति बलाधिक्याभावेन पूर्णत्वाप्रसक्त्यात् ॥ ११ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यावदग्राक्षीत्तावदेवेति दाहस्य दर्शनसमकालतोक्ता क्षणादिति च भस्मसाद्भवने श्रीमता भारतेति महावंशजातेन भवता इति महावंश्यानां तादृशप्रभावे किमप्याश्चर्यं न मन्तव्यमिति अतस्तस्येति तस्य महापुरुषस्य क्रोधदृष्ट्याग्निनैव दग्धः देवादिवरस्तूपलक्षणमिति श्रीबादरायणेर्मतम् अत एव स नात्र प्रस्तूयते "स्वपन्तं यो गुहामध्ये" इत्येतदग्रे पद्यं तु विगीतमसंलग्नं च श्रीपराशरवैशम्पायनमते तु वरादेव तत् तथा च श्रीविष्णुपुराणे—

प्रोत्क्रम्य देवैः संस्तुतं यस्त्वामुत्थापयिष्यति।
देहजेनाग्निना सद्यः स तु भस्मीभविष्यति इति।

श्रीहरिवंशे च देवेषु तत्प्रार्थने—

प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः।
चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः।

एवमस्त्विति तं शक्र उवाच त्रिदशैः सह॥ इति अनेन स्वनिद्राप्रार्थनमिदं भगवद्दर्शनं यावद्भविष्यति तावन्मम निद्रैव समीचीना न तु जागरणमित्यभिप्रायेण जागरणहेतुमाह प्रार्थना च पूर्ववदसुरसेनानाशनार्थमसौ भक्तोपि मां न जागरयेदित्यभिप्रायेण॥ १२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

भगवांस्त्वित्थं क्षिप्तो ऽपि तूष्णीं गिरिकन्दरं प्राविशत् स तु यवनस्तत्र गिरिकन्दरे प्रविष्टस्तत्रान्यं शयानं कञ्चित्पुरुषमद्राक्षीत्॥ ९॥

तं शयानं पुरुषमसौ वासुदेवो मामित्थं दूरमानीय साधुवदधुना तूष्णीं शेते नूनमसौ श्रीकृष्ण एवेति मूढस्सन्नच्युतमेव मत्वा तं पदा पादेनाताडयत्॥ १०॥

स ताडितः पुरुष उत्थाय चिरं सुप्तः हेतुगर्भमिदं तत्वात् शनैर्लोचने उन्मील्य दिशोऽवलोकयन् पार्श्वस्थितं यवनं ददर्श॥ ११॥

हे भारत! स यवनः रुष्टस्य क्रुद्धस्य तस्य पुंसः दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेन तावत्तदैव क्षणाद्भस्मीबभूव॥ १२॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मूढः हतविचारः॥ १०—१८॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवान् पुनः वराहो हिरण्याक्षवाक्यमिव सर्वसमर्थोऽपि कार्यगौरवं मन्यमानोऽपि न निवृत्त इत्याह—एवं क्षिप्तोपीति। यथानुकल्पः सद्रोहे भग्नद्रोहे बन्धः स्मृत इति यथानुकल्पमेव कर्तुं गिरिकन्दरं प्राविशत् एतावानेव भगवद्व्यापारः निर्गुणो हि फले निमित्तमिति ज्ञापयितुं निरूपितः तद्भगवति फलितमित्याह—सोपि प्रविष्ट इति। यदा भगवान् गिरिकन्दरं प्राविशत् तदा सोऽपि प्रविष्टः प्रवेशानन्तरं तस्य भ्रमो जात इत्याह—तत्रान्यं शयानं नरं ददर्श इति नरत्वमेव तत्र प्रतीतं न त्वन्यद्वैलक्षण्यं यद्यपि ससामग्रीकः शेते तथापि पूर्वमेव शयनार्थं सामग्रीं प्रेषयित्वा पश्चादागत्य शयनं कृतवानिति तस्य बुद्धिः॥ ९॥

ननु, भगवान् शयनार्थं चेदागतः तदा तदागमनमनुचितमिति सुतराम अतिक्रमोऽनुचित इत्याशङ्क्य तस्य भ्रान्तस्याभिप्रायमाह—नन्वसाधिति। स्वयमागच्छतु नाम कथं नोक्तवान् शयनार्थं गच्छामीति युद्धं वा न करिष्यामि वेति यो हि यमनुधावति तस्यानिषेधे अप्रतिषिद्धमनुमतम्भवतीति न्यायेन दूरे गत्वा युद्धं करिष्यतीत्यभिप्रायो भवति निकटे स सहायो बलवान् भवतीति तस्मादेवं भ्रमं जनयित्वा एतावद्दूरमानीय युद्धमप्यकृत्वा साधुवत् शेते यो हि वञ्चयति स न साधुः असाधोरनिद्राणस्योत्थापनं न दोषायेति दुर्बुद्धिः शयानं भगवन्तं मत्वा पदा समताडयत् पादयोरन्यथा जनितेति महांश्चातिक्रमो भवत्विति शयानोद्बोधनं पादताडनमतिक्रमार्थमच्युतबुद्धिश्चेति त्रयो दोषाः। ननु महानयं महतश्चोपदेशं प्राप्य कथमेवं दुर्बुद्धिर्जात इति चेत् तत्राह—मूढ इति। स्वभावतो मूढः अच्युत इति तद्बुध्या ताडितत्वाभ्महतोऽपि पादप्रहारेण राज्ञः कश्चित् अपकारो जात इति सूचितम्॥ १०॥

ततो यज्जातं तदाह—स उत्थायेति। पादप्रहारेण चिरं सुप्तोऽप्युत्थाय सर्वा दिशो विलोकयन् पार्श्वे तं कालयवनमद्राक्षीत् स तु प्रथमतः तत्प्रतिकूलां दिशं दृष्टवान् अतः क्रमेण दृष्टिं प्रसारयन् द्वितीयपार्श्वे अवस्थितमुत्थिते पश्चात् ददर्श॥ ११॥

ततः कोऽयमिति प्रतिप्रश्नात् पूर्वमेव दर्शनमात्रेण स भस्मसाज्जात इत्याह—स तावत्तस्य रुष्टस्येति। निरपराधस्ताडित इति तस्य क्रोधः अतो रुष्टस्य दृष्टिपातेन निमित्तेन कालयवनदेहस्थित एवाग्निः काष्ठस्थितो वह्निर्वह्निस्पर्शेनेव प्रादुर्भूतः ततो देहजेनैवाग्निना दग्धः सन् क्षणमात्रेणैव भस्मसादभवत् बहिः स्थितोऽग्निः दवानल इवाल्पमेव दहेत् पलायनं वा कुर्यात् अन्तः स्थितोऽग्निरिति सर्वव्यापारं दूरीकृत्य भस्मसादेव कृतवान्॥ १२॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सोऽपि कालयवनोऽपि अन्यं नरं ददर्श॥ ९—११॥

तस्य क्रुद्धस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेनेति तथैव तद्वरप्रार्थनात्तद्वरदानाच्च. तथा हरिवंशे—

"प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः!।
चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः"॥ इति

अत्र निद्राप्रार्थनमिदं वृद्धगर्गोक्तकृष्णदर्शनं यावद्भविष्यति तावन्निद्रैव मम सुखाय न तु जागरः तद्दर्शनसमुत्कण्ठस्य मम बहुतरचतुर्युगावच्छिन्नःकालो जागरेण यापयितुमशक्यः निद्रया तु तावानपि कालः क्षणप्राय एव भविष्यतीत्यभिप्रायेण क्रोधकरणकदाहप्रार्थनं तु शक्रं भीषयितुमेवान्यथा स्ववैरिघातनार्थं

राजोवाच ।

को नाम स पुमान् ब्रह्मन् कस्य किं वीर्य एव च ॥
कस्माद्गुहां गतः शिश्ये किं तेजो यवनार्दनः ॥ १३ ॥

श्रीशुक उवाच ।

स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ॥
मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥ १४ ॥
स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे ।
असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥
लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् ।
राजन् ! विरमतां कृच्छ्राद्भवान्नः परिपालनात् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुनरपि तं शक्रो जागरयेदित्यभिप्रायेण, ततश्च तद्वरो विष्णुपुराणे यथा--

"प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति ।
देहजेनाग्निना सद्यः स तु भस्मीभविष्यति" ॥

इति ॥ १२ ॥

---

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोऽपि यवनेन्द्रोऽपि प्रविष्टः सन् अन्यं नरं ददर्श अद्राक्षीत् ॥ ९ ॥

तं पुरुषमच्युतं श्रीकृष्णं मत्वा ॥ १०—११ ॥

हे भारत ! स यवनेन्द्रः रुष्टस्य तस्य पुरुषस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेन क्षणाद्भस्मसादभवत् तथा हरिवंशे-

"प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः ।
चक्षुषा क्रोधदीप्तेन एवमुक्त पुनः पुनः" ॥ इति

वैष्णवे च देवानां वाक्यम् ।

"सुषुप्तं नो वरेणाऽथ यस्त्वामुत्थापयिष्यति ।
देहजेनाग्निना सद्यः स तु भस्मीभविष्यति" ॥

इति ॥ १२ ॥

---

भाषा टीका ।

इस प्रकार उस कालयवन ने भगवान् को फटकारे भी तथापि भगवान् श्रीकृष्ण चन्द्र उस पर्वत की कन्दरा में प्रवेश करते हुए। पीछे २ कालयवन भी उसी गुफा में घुस-गया और वहां पर एक सोते हुए मनुष्य को देखता हुआ ॥ ९ ॥

और उस मनुष्य को देख कर कालयवन विचार ने लगा कि-देखो यह मेरे लिये इतनी दूर लाकर फिर इस भी साधु की तरह सो रहा है, ऐसे उस मनुष्य को वह मूढ कालयवन श्रीकृष्ण मानकर एक लात मारता हुआ ॥ १० ॥

बहुत काल से सोया हुआ वह मनुष्य भी उठकर धीरे से नेत्र खोल कर सब दिशाओं की तरफ देखने लगा, तो अपने बगल में उस कालयवन को खड़ा हुआ देखता भया ॥ ११ ॥

हे राजन् ! इतने में जागने से क्रोध को प्राप्त होने वाले उस पुरुष की दृष्टि के पड़ने से, अपने देह से उत्पन्न होने वाले अग्नि से वह काल यवन क्षणमात्र में भस्म हो गया ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यवनमर्दयति हिनस्तीति तथा स कस्य वंश्यः किम्वीर्यः कीदृक्प्रभाववान् किन्तेजः कस्य वीर्यं पुत्र इत्यर्थः । शिश्ये अशयिष्ट ॥ १३ ॥

सत्यः सङ्गरो युद्धं प्रतिज्ञा वा यस्य सः ॥ १४—१५ ॥

गुहं कार्तिकेयम् स्वःपालं स्वर्गपालकं सेनान्यम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

को नाम किं नामेत्यर्थः । यद्वा, नामप्रकाश्ये कः केन आख्यादिना प्रसिद्धः किं जातिः किं नामचेत्यर्थः ॥ १३ ॥

महान् महाभागवतः ॥ १४ ॥

आत्मरक्षणे निमित्ते याचितः चिरं कतिचिच्चतुर्युगानि ॥ १५ ॥

अथ कार्त्स्न्ये कृच्छ्रात् दुःखैककपात् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र शयानस्य पुरुषस्य कुलनामवीर्यशयनकारणादिबुभुत्सया पृच्छति राजा—को नामेति । हे ब्रह्मन् ! स यवनार्दनो मुचुकुन्द

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हन्ता शयानः कोवा नाम किं तस्य नामधेयमित्यर्थः। कस्य सम्बन्धी कस्य कुले जातः किं कीदृशं वीर्यं यस्य सः कस्मात्कारणाद्गुहां प्राप्तः शेतेस्म किं कीदृशं तेजो यस्य स तथाभूतः ॥ १३ ॥

तत्रोत्तरमाह मुनिः—स इति नवभिः। ब्रह्माणि ब्रह्मकुले साधुः ब्रह्मण्यः सत्यो धर्म्यः सङ्करो युद्धं यस्य सः ॥ १४ ॥

स इति। सच मुचुकुन्दः असुरेभ्यो भीतैरिन्द्राद्यैर्देवैरात्मनः रक्षणे निमित्ते सहायत्वेन याचितश्चिरं तेषां रक्षामकरोत् ॥ १५ ॥

तदा ते देवाः गुहं कार्त्तिकेयं स्वःपालं स्वर्गपालकं सेनान्यं लब्ध्वा ऽथ मुचकुन्दमब्रुवन् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कस्य पुत्र इति शेषः। यवनमर्दितवान् हिंसितवान् ॥ १३-१४ ॥

तेषां सुराणां रक्षाम् ॥ १५ ॥

स्वःपालं स्वर्गरक्षाकरं परिपालनाज्जातात्कृच्छ्रात् ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रकृते भगवता यवनो यथा कथञ्चिन्मारित इति विवक्षितत्वाद्विशेषं न कथयिष्यतीत्याशङ्क्य सावधानं च शृणोतीति ज्ञापयितुं राजा पृच्छति—को नामेति। प्रसिद्ध्याऽज्ञानं वारयति, अन्यमिति। पुल्लिङ्गात् पुंस्त्वं ज्ञातमेव अन्येषां चार्था ज्ञातव्याः

नामसम्बन्धरूपाणि निमित्तं शयने तथा।
दाहकत्वं दृष्टिमात्रात् ब्रह्मविद्भाऽस्यते परम् ॥

कस्य सम्बन्धी किं वीर्यं यस्य अन्यथा एकाकी सिंहादिसम्भाविते देशे कथं शयीत? कस्माद्वा हेतोः उत्तमस्थानेषु गुहां गतः शेते किं वा तस्य तेजो यस्येति किं तेजः यतो यवनार्दनो जातः अग्निसूर्यादीनामपि नैवम्विधं तेजः सम्भवति यवनपक्षेन तस्यापि महत्त्वमुक्तं विशेषतो वक्तव्ये वैषा कथेति ॥ १३ ॥

एतदर्थमेव भगवानागत इति तस्य विशेषमाह—स इक्ष्वाकुकुल इति सप्तभिः। भगवत्त्वमग्रे तस्य भविष्यतीति भगवत्कथैवेति ज्ञापयितुं च अन्यथा भगवद्व्यतिरिक्तकथा न श्रोतव्येति श्रोतॄणां विरक्तिः स्यात् इक्ष्वाकोः कुले जातः मनोः पुत्राणां मध्ये मुख्य इक्ष्वाकुः मान्धाता चायोनिजः केवलमुसवनजलाज्जातः प्राकृतबीजजोऽपि स्वरूपतोऽपि महान् कुलोत्कर्षः पितृत्कर्षः स्वरूपोत्कर्षश्चोक्तः तस्य नामोत्कर्षमाह—मुचुकुन्द इति ख्यात इति। तस्य वैदिकं सहजञ्च धर्ममाह—ब्रह्मण्यः सत्यसङ्गरः इति। ब्राह्मणानां हितश्चेत् सर्वोपि वैदिको धर्मः सेत्स्यति सत्यः सङ्गरो युद्धं यस्य एवं बहुगुणयुक्त इति ॥ १४ ॥

इन्द्रादैरात्मरक्षणे स याचितः अनेन भगवत्तुल्यतेव निरूपिता स्वरूपतो लोकतः कार्यतश्च गुणानामुत्कर्षो निरूपितः संसारात्तीता महापुरुषमिव प्रार्थितवन्तो भविष्यन्तीत्याशङ्क्याह—असुरेभ्यः परित्रस्तैरिति। ये हि देवानपि मारयन्ति तानपि मारयित्वा रक्षां कृतवान् इत्याह—तद्रक्षामिति। दैत्यानां पलायने पुनरागमनशङ्का भवतीति। चिरकालं रक्षामकरोत् यावदिन्द्रादयो अतिपुष्टाः क्षत्रियस्यायमेव धर्मः यज्ञादेरप्यधिक उक्तः सा च रक्षापर्यवसानपरा जातेति ॥ १५ ॥

रक्षाया अवधित्वं निरूपयन्नाह—लब्ध्वा गुहमिति। कार्त्तिकेयः कश्चिदुत्पन्नः पश्चात्तारकादयो हता इति तस्य सेनापतित्वे जाते पश्चाद्विरामं प्रार्थयामासुः अनेनास्य राजन्यायेन स्वार्थाभावः सूचितः। अथ स्वस्थाः सन्तः भिन्नप्रक्रमेण राजानमब्रुवन् पूर्वं भीताः इदानीं सन्तुष्टा इति भिन्नः क्रमः तेषां वाक्यान्याह—राजन्निति। क्रियमाणमादौ व्यावर्त्तयन्ति। नोऽस्माकं परिपालनरूपात् कृच्छ्रात् विरमतामिति यद्यपि स्वर्गे स्थितः तथाऽपि भोगाभावात् सर्वदा युद्धकरणाच्च क्लेश एव ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कस्य वंश्यः किम्वीर्यः किं प्रभावः किं तेजः कस्य वीर्यं कस्य पुत्र इत्यर्थः ॥ १३—१५ ॥

गुहं कार्त्तिकेयम् ॥ १६—१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे ब्रह्मन्। स यवनमर्दयति हिनस्तीति तथा यवनहन्ता कस्य वंश्यः किं वीर्यः किं प्रभावः किं तेजः कस्य वीर्यं कस्यापत्यमित्यर्थः ॥ १३ ॥

सत्यो धर्म्यः सङ्गरो युद्धं यस्य सः ॥ १४—१५ ॥

गुहं कार्त्तिकेयं स्वःपालं स्वर्गपालं सेनान्यं लब्ध्वा ॥ १६ ॥

---

भाषा टीका।

राजोवाच ॥

राजा परीक्षित् बोले, कि—हे ब्रह्मन्! ऐसा वह कौन पुरुष था, और कौन का कौन था, उसका ऐसा पराक्रम कैसे रहा? और वह उस पर्वत की गुहामें किस कारण से सोता रहा, और उस का ऐसा कैसा तेज रहा, कि-जिस से कालयवन भस्म होगया ॥ १३ ॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि-हेराजन्! वह पुरुष इक्ष्वाकु महाराज के कुलमें उत्पन्न और चक्रवर्ति श्रीमान्धाता महाराज का पुत्र था, और बड़ा महान् तथा मुचुकुन्द इस प्रकार लोक में विख्यात और बड़ा ब्रह्मण्य अर्थात् ब्राह्मणों को मानने वाला और सत्य प्रतिज्ञा वाला रहा ॥ १४ ॥

उस मुचुकुन्द राजा से अपनी रक्षा के लिये इन्द्रादिक देवताओं ने याचना की क्योंकि? वे इन्द्रादिक देव लोग असुरों से बहुत ही डरते रहे तब मुचुकुन्द महाराज ने

नरलोके परित्यज्य राज्यं निहतकण्टकम् ।
अस्मान् पालयतो वीर ! कामास्ते सर्व उज्झिताः ॥ १७ ॥
सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः ।
प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः ॥ १८ ॥
कालो बलीयान् बलिनां भगवानीश्वरोऽव्ययः ।
प्रजाः कालयते क्रीडन् पशुपालो यथा पशून् ॥ १९ ॥
वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥ २० ॥

भाषाटीका ।

असुरों से संग्राम में लडकर उन को जीत कर देवताओं की बहुत दिवस तक रक्षा करी॥ १५ ॥

तत्पश्चात् जब उन देवताओं को स्वामिकार्तिक सेनापति मिल गये तब उन्हों ने मुचुकुन्द महाराज से कहा, कि-हे राजन् ! आपने हमारे पालन करने में बडा कष्ट पाया अब आप जाकर विश्राम लीजिये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उज्झितास्त्यक्ताः गता इत्यर्थः ॥ १७ ॥

किञ्च, सुता इति तुल्यकालीयास्त्वत्समानकालीनाः कालिता विचालिताः ॥ १८ ॥

मत्प्रजाः कोऽन्यः कालयेदिति चेदत आहुः— काल इति । कालयते इतस्ततश्चालयति ॥ १९ ॥

तस्य कैवल्यस्य ॥ २०—२१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कामाः विषयाः राज्यं चेति पाठे राज्यं नीतिकचित् पाठः ॥ १७ ॥

अमात्याः पार्षदाः मन्त्रिणस्तद्विशेषाश्च तुल्यकालीना इति कचित् ॥ १८ ॥

भगवानिति श्रीनारायणशक्तित्वेन तदभेदात् अत एवेश्वरः नियन्ता नव्येतीत्यव्ययः अनाद्यनन्तप्रवाहः कालयते अन्यत्र नयति । ननु, किमर्थम् ? तत्राह-क्रीडन् तादृश्येव तस्य क्रीडेत्यर्थः । इति तस्य बलीयस्त्वातिशयो दर्शितः पशुपाल इति तेषु तस्य स्वाच्छन्द्ये दृष्टान्तः ॥ १९ ॥

भद्रं त इति सामान्यतस्तावन्मङ्गलं तव भूयात् विशेषतस्तु वरं वृणीष्वेत्यर्थः । कैवल्यं संसारनिवृत्तिपूर्वकं परमपदप्राप्तिः विष्णुरेवैक ईश्वरः प्रदानसमर्थः तत्र हेतुः भगवान् सर्वशक्तियुक्तः असङ्ख्येभ्यस्तदादिदानेभ्योऽव्ययः नत्वस्मदादिवदल्पशक्तिः तप आदिव्ययेन सव्ययो वा ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—राजन्निति, सार्द्धैश्चतुर्भिः । हे राजन् ! नोऽस्माकं परिपालनात्मकात् कृच्छ्राच्छ्रमाद्भवान् विरमतां विरामं प्राप्नोतु हे वीर ! शत्रुरहितं राज्यं नरलोकं च त्यक्त्वा केवलमस्मान्पालयतस्ते कर्त्तरि शेषे षष्ठी त्वया सर्वे कामाः भोगाःउज्झिता स्त्यक्ताः ॥१७॥

किञ्च, तव सुतादयः त्वत्तुल्यकालीनाः प्रजाश्च कालिताः कालवशीकृताः अधुना न सन्ति किन्तु: कालवशङ्गता मृता इति यावत् ॥ १८ ॥

कोऽसौ मत्तो बलयान् कालो नामेति शङ्कायामाब्रह्मस्तम्बपर्यन्तकृत्स्नजगतः कालवश्यतां कालस्य बलीयस्त्वं च वक्तुं कालो नाम नेश्वरात्पृथग्भूतः किन्तु कालशरीरक ईश्वरएव कलयतीत्याहुः-काल इति । कालः कालशरीरकः अव्ययः कालकृतनाशादिविकाररहित ईश्वरः सर्वनियन्ता भगवान् स्वयं क्रीडन् प्रजाः कालयते वशीकरोति यथा पशुपालः पशून् वशीकरोति तद्वत् ॥ १९ ॥

वरमिति । अतस्त्वम् अद्य नोऽस्मात्प्रति वरमभिमतं वरय तर्हि मुक्तिं प्रयच्छतेत्यत्राहुः-ऋते कैवल्यमिति । कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिम् इतियावत् ततोऽन्यं वरं वरयेत्यर्थः कैवल्यस्यावरणीयत्वे हेतुं प्राहुः-एक एवेति । तस्य कैवल्यस्येश्वरः अधिपतिर्दातेति यावत् भगवान् विष्णुरेक एव अतो न वयं कैवल्यं दातुं प्रभव इतिभावः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उज्झितास्त्यक्ताः ॥ १७ ॥

तुल्यकालीनास्तत्समानकालजाताः कालिताः कालेन विनाशिताः ॥ १८ ॥

कालयते उभयपदी कालः कः ? इति तत्राह-भगवानिति । अव्ययः स्वरूपतोऽवयवो गुणतोपि नाशरहितः ॥ १९-२६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काल इति भगवान् नारायणशक्तित्वेन तदभेदात् कैवल्यम् । संसारनिवृत्तिपूर्वकपरपदप्राप्तिः ॥ १९—२७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न केवलं देहक्लेशैः अस्मत्परिपालने किन्तु सर्वस्वमपि तव नष्टमित्याहुः—नरलोकं परित्यज्येति द्वाभ्याम् । भोगो भोगसाधनानि च गतानीति जन्मभूमिः सहजा च सर्वेषां सुखदा अतो नरलोकपरित्यागोऽपि दुःखहेतुर्भवति हतकण्टकं च राज्यमिति । शूरत्वात् अजेयत्वेऽपि एतदधीनमेव राज्यमित्यस्मिन्नेव भोगः प्रतिष्ठितः एवं सर्वथा निषिद्धं भोगं परित्यज्य अस्मानेव पालयतः ते सर्व एव कामा उज्झिताः त्वया सर्वेऽपि कामास्त्यक्ताः । तत्र हेतुः—वीरेति । वीररसप्रधानः नान्यं कामं सुखत्वेन मन्यत इति ॥ १७ ॥

एतत्कीर्तनं महानुपकारः त्वया ऽस्मासु कृत इति ज्ञापनार्थं दैहिका अपि निवृत्ता इत्याह—सुतामहिष्य इति । दिवसस्य स्वर्गे वर्षात्मकत्वात् तस्य कालज्ञानं यथा ब्रह्मसभायां गतस्य रैवतस्य अतो ज्ञापयन्ति महिष्यः स्त्रियः ज्ञातयो भ्रात्रादयः अमात्याः सेवकप्रभवः मन्त्रिणश्च एते राज्यसम्बन्धिन उभये तुल्यकालीनाः प्रजा मित्राणि अधुना ते त (व) त्र न सन्ति यतः कालिताः कालेन भक्षिताः अनेन तत्र गन्तव्यमिति शङ्का निवर्त्तिता ॥ १८ ॥

तर्हि भवद्भिः कथं तेषां रक्षा न कृता देवा ह्यायुषः प्रभवो भवन्तीत्याशङ्क्याहुः—कालो बलीयानिति । बलिनां बाधासम्यगुणानां मध्ये ततोऽपि बलीयान् तत्र हेतुर्भगवानिति । ननु, धर्मे क्रियमाणे भक्तिष्टकर्मा भगवान् कथमसदीयान् भक्षितवानित्याशङ्क्याह—ईश्वर इति । नहीश्वरे नियमोऽस्ति तर्हि भगवान् भक्तस्य कथमेवं कृतवानित्याशङ्क्याह—अव्यय इति । अक्षरात्मा सः न तु पुरुषोत्तमात्मा तेन न तस्य भक्तपक्षपातः पक्षपातेऽपि अव्ययमेव पदं दास्यतीति पुत्रादीन् दूरीकृतवान् तस्यायमेव स्वभाव इत्याह—क्रीडन्नपि प्रजाः कालयत इति । स हि यतस्ततः स्थितान् स्वस्मिन् कालयति स्वगृहे रोधयति तस्मिन् दोषबुद्धिर्भविष्यति इति दृष्टान्तमाहुः पशुपालो यथा पशूनिति बहिःस्थिताः पशवो यथा व्याघ्रादिभिः हन्यन्त इति तथा कालोऽपि बहुकालं बहिःस्थिताः उत्पथा भविष्यन्तीति बहिर्न स्थापयति अतः अशक्यप्रतीकारास्ते गताः ॥ १९ ॥

तस्य मनःसन्तोषार्थं वरम्वरयेत्याहुः—वरमिति । ननु, कालस्त्वेन्मामपि गृहीष्यतीति तदा किं वरेणेत्याशङ्क्य प्रार्थितमपि कालग्रासं तु तुभ्यं दास्याम इति सूचयन्त आहुः, भद्रन्त इति । ते भद्रमेव न कालग्रासो ऽनिच्छत इत्यर्थः । तर्हि कालव्यामन्तरं मोक्षो दीयतामित्याशङ्क्याहुः—ऋते कैवल्यमिति । वयं हि स्वज्ञातस्वामिनो देवास्तस्वांशाः अतोऽस्माकं नात्मन्यधिकारः कैवल्यं चात्मनः देहादेस्तु कैवल्यमपुरुषार्थत्वादप्रार्थ्यं यद्यप्याधिदैविकाश्चेत् सर्वे निवृत्ता भवेयुः तदा केवलता भवेयुः सिद्ध्यतीति कैवल्यमपि दैवाधीनमेव प्राणिनां दुःखनिवृत्तिरभिप्रेता न परमानन्दप्राप्तिः "आत्मलाभात् न परं विद्यते" इत्यादिश्रुतिभिश्च सिद्धत्वाच्चात्मनः प्राप्ताप्राप्तविवेकेन स्मृतिन्यायेन कैवल्यमपि दैवाधीनं भवति तथापि भगवदाज्ञया प्रवृत्तिस्वभावा एवैते प्रवृत्तावेव यथाभिलषितं दातुं समर्थाः न तु स्वतो निवृत्तौ तथा ,सतीश्वरस्यापराधो भवेत् भगवदानन्दो वा रूपकैवल्यम् आनन्दाभिव्यक्तिर्वा अतः कैवल्यव्यतिरिक्तं प्रार्थनीयम् आत्मपदात्मविहितातिरिक्तं च प्रार्थनीयमिति सूचितम् तर्हि कैवल्यसिद्धिः कथमित्याशङ्क्य तत्प्रभुं निर्दिशन्ति—एक एवेति । तस्यात्मकैवल्यस्य एक एव प्रभुः सर्वं सर्वेभ्यो दत्वा आत्मार्थं तत्स्थापितवानिति यतो भगवान् स्वतः सिद्धाम्यैश्वर्यवानिति ननु, तमसः परस्तात् पुरुषोत्तमो विद्यमानः अनधिकारित्वात् कथमात्मार्थं तत् स्थापितवान्? तथा सति कस्याऽपि मोक्षो न स्यादित्याशङ्क्याह—विष्णुरिति । स एवात्र मोक्षं दातुं विष्णुरिति प्रसिद्धः ततो विष्णोर्भगवत्त्वमाधिकाररूपत्वं चेति द्वयमुक्तं तेन कालातिक्रमोऽपि भवतीति सूचयितुमाहुः—अव्ययमिति । स व्ययरहितः अनेन तस्य निरपेक्षतापि सूचिता अनेन पालनाधिकारेऽपि निवृत्तिमपि कारयिष्यतीति बोधितं तेन देवानां कैवल्यादाने तस्य च कैवल्यदाने हेतुरप्युक्तः ॥ २०-२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालिताश्चालिताः ॥ १८ ॥

केन कालिता इत्यत आहुः—काल इति ॥ १९ ॥

तस्य कैवल्यस्य दातेत्यर्थः ॥ २० ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उज्झिताः त्यक्ताःगता इत्यर्थः ॥ १७ ॥

तव सुतादयः तुल्यकालीनाः तत्समानकालीनाः न सन्ति यतः कालिताः किञ्चालिताः कालेन नष्टा इत्यर्थः ॥ १८ ॥

कालः प्रजाकालयते इतस्ततश्चालयति । ननु, जडस्यैतत्कथं सङ्गच्छते? इत्यत आह-भगवानिति । शक्तिशक्तिमतोरभेदनिर्देशः कालशक्त्या भगवानेव सर्वाः प्रजाः इतस्ततश्चालयतीत्यर्थः ॥ १९ ॥

तस्य कैवल्यस्य दाता भगवान् विष्णुरेव हरिवंशेऽपि "मुक्तिः प्रदाता सर्वेषां विष्णुरेव न संशयः" इति ॥ २०-२१ ॥

---

भाषा टीका ।

देखो हे वीर! आपने मनुष्य लोक में अपना निष्कण्टक राज्य छोडकर हमारा पालन करतेर अपने सब संपत्ति और मनोरथों को त्याग दिये ॥ १७ ॥

देखो राजन्! आपके पुत्र, रानी, और ज्ञाति के लोग तथा अमात्य मन्त्रि लोग और आपके समय की आप की प्रजा वे सब ही अब इस समय कोई भी नहीं रहे, वे सब काल के वेग में चले गये ॥ १८ ॥

भगवान् की विभूति रूप यह काल बडेर बलवानों के बीचमें भी बलवान् हैं, और वस्तुओं के परिवर्त्तन करने में बडा समर्थ और अव्यय अर्थात् अनाश्य है, यह क्रीडा करता हुआ प्रजाओं का परिवर्त्तन किया करता है जैसे कि पशुपाल पशुओं को इधर उधर चलाता रहता है ॥ १९ ॥

एवमुक्तः स वै देवानभिवन्द्य महायशाः ।
* ( अयाचत गुहाविष्टो निद्रान्तु बहुकालिकीम् ।
तथेत्युक्तस्तु तैर्देवैर्मुचुकुन्दो महामनाः ॥० ॥
( १ ) ( निद्रामेव ततो वव्रे स राजा श्रमकर्शितः ॥ २१ ॥
यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः ! ।
स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा ) ।
अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २२ ॥
( २ ) स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः ।
स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥ २३ ॥
यवने भस्मसान्नीते भगवान्सात्वतर्षभः ।
आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २४ ॥

भषा टीका ।

ऐसा कह कर देवता मुचुकुन्द महाराज से बोले, कि-हे राजन् ! अब तुम वर मागलो तुमारा कल्याण हो, परंतु एक मोक्ष को छोड कर क्योंकि ? उस मोक्ष देने को समर्थ तो एक अव्यय श्रीविष्णु भगवान् ही हैं ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुहायां प्रविष्टः शेते स्म ॥ २२—२७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

महायशा इत्यस्यायं भावः श्रीविष्णुरेवैकः कैवल्यदाता वेत्स्वहेतैरन्यैर्वा किं प्रत्युतान्यदर्शनमप्ययोग्यम् अतस्तद्दर्शनं यावत्तत्प्रियतमश्रीमथुरान्तिके विविक्ते स्वप्तुमेवार्हामीति निद्राया एव वरणात् सर्वतो महायशो विततानेति एवं देवैरपि तदनुमोदमाद्दरत्वेन दत्तया तच्छयनगुहा तु श्रीमथुरामण्डलस्य दक्षिणसीमायां धवलपुरगिरिमध्ये लोकप्रसिद्धा या तु मथुरापरिक्रमप्रसङ्गे श्रीवराहदेवेन पुर्य्यान्तरेवोक्ता सा तदनुकारिदेवालय एव ज्ञेयः श्रीयशोदालयवत् गिरिगह्वर इति वक्ष्यमाणात् ॥ २१—२३ ॥

धीमते तद्भक्त्यैकनिष्ठत्वात्प्रशस्तबुद्धये ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । देवैस्तर्हि बहुकालमनिद्रस्य मम शयनार्थं निर्जनं प्रदेशं प्रदर्शयतेत्युक्तैरित्यर्थसामर्थ्यादत्र शेषो बोद्धव्यः एवं स्वपन्तं यस्त्विति वक्ष्यमाणोक्तप्रकारेणोक्तो महायशाः स मुचुकुन्दो देवैः प्रदर्शितायां तस्यां गुहायां प्रविष्टः देवैर्दत्तया विघ्नानुपहतीकृतया निद्रया अध्ययनेन वसतीतिवदित्थंभूतलक्षणे तृतीया अशयिष्ट शायितवान्निमित्तभूतया वा ॥ २१ ॥ २२ ॥

एवं शब्दविवक्षितं प्रकारमाह—स्वपन्तमिति । अचेतनोऽजानन्यः कश्चित्स्वपन्तं शयानं त्वां प्रतिबोधयति आप्रदयवत्वां प्रापयिष्यति सपुमांस्त्वया कर्त्रा दृष्टिमात्रेण करणेन त्वद्दृष्टिप्रसरणमात्रेणेति पदद्वयफलितोऽर्थः तत्क्षणादेव भस्मीभवत्विति ॥ २३ ॥

प्रश्नस्योत्तरमुक्त्वा प्रकृतां कथामाह—यवन इत्यादिना, भस्मसान्नीते भस्मतां प्रापिते सति सात्वतर्षभो भगवान् श्रीकृष्णः धीमते मुचुकुन्दायात्मानं दर्शयामास ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मनस्तु बहुकालिकीं बहुकालभोग्याम् ॥ ० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनुक्तमप्यत्रापेक्षितमर्थादुक्तं ज्ञातव्यं तत्र स विष्णुः कथं प्राप्तव्य इत्याशङ्कायां सोऽवतरिष्यति मोक्षमेव दातुं तदा तस्य अनुवृत्तौ तदाज्ञाकरणे वा मुक्तिर्भविष्यतीति प्रतिवचने कदा अवतरिष्यतीति पुनर्जिज्ञासायामष्टाविंशतिमे युगे अवतरिष्यतीति अभिज्ञाय तावत्पर्यन्तं तूष्णीं स्थितौ कामादयः क्षुत्पिपासादयश्च बाधका भविष्यन्तीति समाधावप्येतदुःखमिति सुषुप्ति-

* इत्यधिकं पठ्यते विज० ये ॥ ( १ ) क्वचित्पुस्तके सार्द्धपद्यमधिकं पठ्यते ।
( २ ) स्वपन्तं त्वां यस्तु मध्ये बोधयेत्त्वामचेतनः । प्रतिबोधयति त्वां वै बोधयेत्त्वामचेतनः ॥
इति च पाठभेदः वीर० ।

तमालोक्य घनश्यामं पीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २५ ॥
चतुर्भुजं रोचमानं वैजयन्त्या च मालया ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २६ ॥
प्रेक्षणीयं (१) नृलोकस्य सानुरागस्मितेक्षणम् ।
अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २७ ॥
पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः ।
शङ्कितः शनकै राजा दुर्द्धर्षमिव तेजसा ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

समाध्योः तुल्यआनन्दानुभव इति फलदाता विष्णुरेवेति भोगादीनाम् अप्रयोजकत्वात् प्रपञ्चाधिक्येन क्लेशसम्भवाच्च सुषुप्तिमेव प्रार्थयामास ततो देवाः स्वकीयां निद्रां ददुः तेह्यक्षमाः ॥ २२ ॥

अर्थात् सुषुप्तिरेव भवतीति वरत्वेन निद्रां प्राप्य विघ्नकर्त्ता दर्शनमात्रेणैव भस्मासाद्भविष्यतीत्यपि वरं प्राप्य अष्टाविंशतियुगपर्यन्तं निद्रां कृतवानित्याह—अशयिष्टेति । गुहायां शीतवाताद्युपद्रवाभावात् तत्राविष्टः अशयिष्ट निद्रां कृतवान् ॥ २३ ॥

एवं प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—यवन इति । देवानामभिवन्दनं तत्प्रत्याशया स्थितत्वं भगवन्माहात्म्यश्रवणेन श्रद्धा चेति गुणत्रयं तस्य दृष्ट्वा भक्तहितमपि प्रसङ्गात् कृतं ज्ञात्वा यवने भस्मसाद्भूते भगवान् सर्वज्ञः सर्वसमर्थश्च सात्वतानामृषभः स्वामी तादृशाय चेत् कृपां कुर्यात् तदा भक्तानां दुःखमपि भवेदिति भक्तहितकारित्वं स्वतन्त्रत्वं चावलम्बितवानित्याशयेनाह—सात्वतर्षभ इति, तत्र प्रथमं हितचर्यामाह—आत्मानं दर्शयामासेति । ननु, प्राकृताय सर्वसाधनं परित्यज्य निद्राणाय कथमात्मानं दर्शितवानित्याशङ्क्याह—मुचुकुन्दायेति । सर्वत्र उकारः दोषाभावसूचकः मकारः पुरुषः आनन्दः मुदं वा परमानन्दः चुशब्देन तन्निष्ठं चैतन्यं कुशब्देन निर्दुष्टः सदंशः सच्चिदानन्दरूपं पूर्वं ज्ञानादिद्वारा लोकेभ्यो दत्तवानिति तादृशाय स्वरूपं प्रदर्शनीयमेव ज्ञापनं नापेक्ष्यत इति विरुद्धं वा नमस्यन्त इति अत आह—धीमत इति बुद्धिमान् पूर्वोपदेशमपि स्मरतीत्यपि सूचितम् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रूप?तमिति पद्यं न सर्वसम्मतम् ॥ २३ ॥ २७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अशयिष्ट शेते स्म ॥ २२-२७ ॥

भाषा टीका ।

जब देवताओं ने मुचुकन्द महाराज से इस प्रकार कथन किया तब बड़े यशस्वी मुचुकुन्द महाराज देवताओं को दण्डवत कर देवताओं से केवल निद्रा का ही वरदान मांगते हुये, क्योंकि? वे बहुत दिनों से श्रम से थके हुये रहे ॥ २१ ॥

तब राजा ने देवताओं से यह वर मांगा, कि—"हे सुरोत्तम हो! जो कोई हमारी निद्रा का भङ्गकरे वह तत्काल भस्म हो जाय" तब देवताओं ने यह वरदान तथास्तु कह कर दिया इस प्रकार देवताओं की दी हुई निद्रासे मुचुकुन्द महाराज गुहा में प्रवेश कर सोते हुए ॥ २२ ॥

निद्रा आने पीछे सोये हुए तुमको जो कोई अचेतन सदृश जड़ (मूढ़) पुरुष जगावेगा वह तुम्हारे देखने मात्र से उसी क्षण भस्म हो जायगा ॥ २३ ॥

जब कि--इस रीति से कालयवन भस्महो चुका तब भक्तों के अथवा यादवों के स्वामी भगवान् श्रीकृष्ण महाबुद्धिशाली मचुकुन्द महाराज को अपने दर्शन देते हुए ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्षितोऽभिभूतः दुर्द्धर्षमप्रधृष्यम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्सौन्दर्यविशेषाकृष्टचित्तः पुनर्मुचुकुन्दभाग्यप्रशंसागर्भं वर्णयति-तमिति चतुष्केण । भ्राजता भ्राजमानेन तद्वक्षोलब्धकान्तिविशेषेण कौस्तुभेन विराजितं विशब्दो भूषणान्तरापेक्षया पूर्वोक्ता पद्ममालैवापादलम्बित्वेन वनमालेति पूर्वं निर्दिष्टा सम्प्रत्यस्मिन् गर्गोपदेशानुसारेण वैजयन्ती तया स्फुरदिति ज्ञेयम् • इयन्तु पञ्चवर्णपुष्पा इति सर्वतद्भूषणानां भगवद्वदनन्तरूपत्वं व्यञ्जितम्

(१) त्रिलोकस्य इति विज० वीर० सुबो०

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

अपीच्यं सुन्दरतरं वयो नवयौवनरूपं यस्य तम् ॥ २५—२७ ॥

राजा तस्य तेजसा धर्षितः सन् शनकैः पर्यपृच्छत् यतो महाबुद्धिरिति श्रीभगवद्वेषेण नायमन्यो मां भ्रमयति मद्विधधर्षकर्त्वकप्रभाववत्त्वाभावादन्यस्येति विचारसमर्थश्च इत्यर्थः। अत एव शङ्कितः क्रमशः खण्डनाय प्रथमं नानावितर्कं कृतवानित्यर्थः। शनकैरित्यत्र हेतुः, तेजसा हेतुना दुर्धर्षं प्रश्नविषयमपि कर्तुं दुःशकम् तमिति शेषः। इवेति वाक्यालङ्कारे तथापि परि सर्वतोभावेनेति महाबुद्धित्वादेवेति भावः। महत्त्वञ्चात्र श्रीप्रह्लादस्येव भक्तिबलं ज्ञेयम् ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति। तस्य भगवतस्तेजसा धर्षितः अभिभूतः अत एव शङ्कितः कस्येदं तेज इत्यादि शङ्कमानः तेजसा दुर्धर्षम् अधृष्यमिव स्थितं तं भगवन्तं शनकैरवलोक्य महती विपुला बुद्धिर्यस्य स राजा मुचुकुन्दः पर्यपृच्छदिति सम्बन्धः। तं कथम्भूतम्? घनमिव श्यामं पीतकौशेय वाससी यस्य श्रीवत्सो वक्षसि यस्य तं भ्राजता कौस्तुभेन विराजितम् ॥ २५ ॥

वैजयन्त्या वनमालया शोभमानं च विराजितमित्युक्तसमुच्चयार्थश्चशब्दः अनुक्ताभरणान्तरसमुच्चयार्थो वा चारु सुन्दरं प्रसन्नं च वदनं यस्य तम् ॥ २६ ॥

त्रिलोकस्य प्रेक्षणीयं दर्शनीयं सुन्दरतमम् इतियावत्। अपीच्यं सुन्दरम् वयो यस्य तं प्रादुर्भूतवयसमिति भावः। मत्तस्य सिंहस्येवोदारो विक्रमः पराक्रमः पादविक्षेपो यस्य तम् ॥२७-२८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिलोकस्य मध्ये दर्शनीयगुणम् ॥ २७ ॥
अतितेजसा अधिकतेजसा ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शङ्कितः क्रमशः खण्डनीय प्रथमं नानावितर्कं कृतवानित्यर्थः ॥ २८ ॥ ३९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—तमालोक्येति चतुर्भिः। तमालोक्य पर्यपृच्छदिति चतुर्थेन सम्बन्धः तस्य कालातिक्रमेण मोक्षसिद्ध्यर्थं भगवन्तं वर्णयति—त्रयोदशधा तावद्भिः विशेषणैः घनश्याममित्यादिभिः केवलं रसात्मकत्वे दुःखसहितं सुखं न पुरुषार्थत्वायेति घनश्यामता निरूपिता मेघवत् श्यामः स हि तापहारको भवति क्रियाफलदाता आप्यायकश्च एवं गुणत्रयसहितो रसः भगवान् फलरूपो निर्दिष्टः संसारं निवर्तयन् कर्म च सफलं कुर्वन् परमानन्ददाता पीतकौशेयवाससमिति व्याख्यातम् एवं प्रमेयप्रमाणरूपं निरूप्य तेनैव मोक्षधर्मौ सूचयित्वा अर्थकामावाह—श्रीवत्सयुक्तं वक्षो यस्य भ्राजत्कौस्तुभेन विराजितञ्च ॥ २५ ॥

एवं चतुर्विधपुरुषार्थरूपं निरूप्य तद्दातृत्वमप्याह—चतुर्भुजमिति। सेवमानेभ्यः तान् प्रयच्छतीति प्रथमतः प्रवृत्तिसिद्ध्यर्थं कीर्तेरुपयोगमाह—वैजयन्त्या मालया रोचमानमिति कीर्त्या रुच्युत्पादकः वैजयन्तीपदेन कीर्तेः सानुभावत्वमुक्तम् एवं सोपपत्तिकं सर्वपुरुषार्थदातृत्वं निरूप्य भक्तिदातृत्वमाह—चारु प्रसन्नवदनं यस्य अत्रापि चारुत्वं मनोहरत्वं प्रसादः फलसाधकः साधनफलसहिता भक्तिरत्र निरूपिता स्फुरन्मकरकुण्डलमिति। पूर्ववच्च प्रवृत्तिनिवृत्तिशास्त्रे अङ्गभूते निरूपिते ॥ २६ ॥

एवं शास्त्रीयोत्कर्षमुक्त्वा लोकोत्कर्षमाह—प्रेक्षणीयं त्रिलोकस्येति। लोको हि दृष्टमेव मन्यते लौकिकः त्रिलोकस्यापि स एव प्रेक्षणीय इति नान्यः केनचित्स्वीकर्तव्यः तेषां दृष्ट्वा प्रवृत्तौ फलसिद्धिमाह—सानुरागस्मितेक्षणमिति। अनुरागपूर्वकं स्मितपूर्वकमीक्षणं यस्येति अनुरागेति सफलं काम्यं कर्म स्मितमित्यल्पमोहा भक्तिः ईक्षणं ज्ञानं तेन त्रितयमपि भगवान् प्रयच्छतीति सूचितम् पुरुषाणामेव साधनफलान्युक्त्वा स्त्रीणामाह—अपीच्यवयसमिति। प्रियः स्त्रीणाम् अपीच्य इति परमप्रीतिविषयं वयो यस्य एतेन तासां प्रवृत्तिरुक्ता फलतामाह—मत्तमृगेन्द्रोदारविक्रममिति। मत्तो यो मृगेन्द्रः सिंहः न हि सिंहाक्रान्तं सिंहगुहं कश्चित् प्रवेष्टुमर्हति न केवलं सम्बन्धमात्रेण पाति किन्तु उदारः यथेष्टमनःपूर्तिपर्यन्तं विक्रमः पराक्रमः तासामभीष्टो यस्य उदारत्वात् मोक्षपर्यवसायित्वमपि सूचितम् ॥ २७ ॥

एवं वैदिकलौकिकैः सर्वैरेव विशेषणैः मुख्यः भगवानेक एव फलसाधनरूप इति तादृशं दृष्ट्वा प्रवृत्त्यर्थं सम्वादेन परिचयं कृत्वा पश्चाद्भजनीय इति प्रथमतः पृच्छति—पर्यपृच्छदिति। नन्वेवं भावः कथं वर्ण्यते अज्ञात्वैव लौकिकन्यायेन कथं न दृष्टवानित्याशङ्क्याह—महाबुद्धिरिति। महती तस्य बुद्धिरिति चतुरः एतदर्थमेव सुषुप्तिं साधयित्वा स्थितः किञ्च तेजसा तस्य धर्षितः भगवत्तेजसा पराहतः स स्वात्मानं जानातीन्द्रादिभ्योऽप्यधिकतेजस्विनं स चेत् तस्य तेजसा तिरस्कृतः तदा कथं न जानीयादयं पुरुषोत्तम इति तस्मात्परिचयार्थं प्रश्नः ननु प्रश्नोपि। धार्ष्ट्यकरः कथं पुरुषोत्तमे सम्भवतीति आशङ्क्याह—शङ्कितः शनकैरिति। प्रश्नेपि शङ्कां प्राप्तवानेव तथापि समागतो भगवानिति अल्पं धार्ष्ट्यमवलम्ब्य शनैरपृच्छत् किञ्च राजनीतिमपि जानाति महांश्च राजसगुणोपि तस्य धार्ष्ट्ये सहाय इति केचित् तेजसा दुर्धर्षमिवेति भगवन्तं दृष्ट्वा राजत्वेपि तत्तेजसा स दुर्धर्ष इति शनैरेवोक्तवान् विज्ञापनापूर्वकम् आयुधानि सेवकाः सामग्री च न दृष्टेति स्वयमेव राजेति इवेत्युक्तम् अन्यथा पादयोरेव पतेत् भगवान् वा तथा सम्बोधनविषयमात्मानं प्रकाशितवानितीवशब्दः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शङ्कितः किमयमीश्वर एव वेत्यागतशङ्कः दुर्धर्षमधृष्यम् इवेति वाक्यालङ्कारे ॥ २८ ॥

---

मुचुकुन्द उवाच ।

को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे ।
पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥ २९ ॥
किंस्वित्तेजस्विनां तेजो भगवान् वा विभावसुः ।
सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥ ३० ॥
मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ।
यद्बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ३१ ॥
शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ! ।
स्वजन्म कर्म्म गोत्रं वा कथ्यतां यदि रोचते ॥ ३२ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धर्षितः अभिभूतः शङ्कितः किमयं भगवानिति जातशङ्कः दुर्द्धर्षमधृष्यं श्रीकृष्णं पर्य्यपृच्छत् इवेति वाक्यालङ्कारे ॥ २८—२९ ॥

भाषा टीका ।

मुचुकुन्द महाराज ने उन श्रीकृष्णचन्द्र को कैसा देखा, कि पीताम्बर को धारण किये हैं, वक्षःस्थल में श्रीवत्स का चिन्ह, और शोभमान कौस्तुभ मणि को कण्ठमें धारण किये, चार जिनकी भुजा, वैजयन्ती माला से दीप्यमान, सुन्दर प्रसन्न जिन का मुखारविन्द, दोनों कर्णों में मकराकृत कुण्डल शोभा दे रहे हैं, सम्पूर्ण मनुष्य लोक के दर्शन करिवे के योग्य, और अनुराग तथा मन्द मुसकाँन सहित कटाक्षों की भरी भई जिनकी चितवन है, नूतन है अवस्था जिनकी, मत्त मृगेन्द्र के सदृश उदार है पराक्रम जिनका, तेज से दुर्धर्ष अर्थात् जिनके तेज से मनुष्य भय भीत हो जावें, ऐसे श्रीकृष्णचन्द्र को, उनके अपार तेज से धर्षित होकर शङ्का को प्राप्त होकर महाबुद्धिशाली मुचुकुन्द महाराज बड़े विनीत होकर पूछते भये ॥ २५—२८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विपिनेऽरण्ये तत्रापि गिरेर्गह्वरे दुष्प्रवेशस्थाने तत्राप्युरुकण्टके पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसीति ॥ २९ ॥
तेजो मूर्तिः प्रभावो दीप्तिर्वा ॥ ३० ॥

सर्वथापरितोषादाह—मन्य इति। पुरुषर्षभं श्रीविष्णुम् गुहाध्वान्तमन्धतमः ॥ ३१ ॥

[illegible]। वंशाभिप्रायेण बहुवचनं तेष्वहं मुचुकुन्द इति युवनाश्वो मान्धातुः पिताऽतो मान्धाता यौवनाश्वः ॥ ३२—३८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रश्नमेवाह—कोभवान् इत्यादिद्वाभ्याम्। तैर्व्याख्यातं च तत्रोरुकण्टक इत्यनन्तरं सम्प्राप्त इति तत्रापि पद्मेत्यादियोज्यं पद्भ्यामित्यादिना स्नेहो व्यञ्जितः प्रभावश्च तर्कितः ॥ २९ ॥

स्वित् वितर्के किं तेजस्विनामखिलानां पुञ्जीभूतं तेजः अपि तु नेत्यर्थः। तदपेक्षया तावतोप्यल्पप्रमाणत्वादिति भावः एवमुत्तरत्रापि अत्र टीकायां तेजोमूर्त्तिरिति तेजोरूपा मूर्त्तिरित्यर्थः। प्रभावो दीप्तिर्वेति तत्र तेजः प्रभाव उच्यते दीप्तिर्वेत्यर्थः। तेजःशब्दो हि न मूर्त्तिवाची "तेजो बले च दीप्तौ च तेजो धाम्नि पराक्रमे। प्रभावरेतसोश्च" इत्येतावन्त एवार्थो विश्वप्रकाशादौ दर्शिताः मूर्त्तिरित्यत्र मूर्त्त इति निष्ठान्तो वा पाठः तस्य प्रभावदीप्ताभ्यां प्रत्येकमन्वय इति महाभूततेजोंशरूपं तत्तेजोऽपि कियदित्याह—भगवान् भगवद्विभूतिरूपो महाभूततेजोऽधिष्ठातृदेवो विभावसुरपि नेत्यर्थः। त्रयीतनुत्वेन ततोऽपि महिष्ठमन्यत्तद्वितर्क्य तमप्यल्पप्रमाणत्वेन खण्डयति—सूर्य्य इति। तेषामतापहारकत्वमनाह्लादकत्वं चाशङ्क्य चन्द्रं वितर्क्य तमपि यथा खण्डयति—सोम इति। प्रभावार्थमालम्ब्य महेन्द्रमपि तथा खण्डयति महेन्द्रस्तत्तत्सर्वदेवानामधिपोऽपि ततोऽन्यत्रात्यन्तमनास्थयाह—लोकेति। वाशब्दः कटाक्षे ॥ ३० ॥

तेभ्य ऊर्द्ध्वमपि विविच्याह—मन्ये इति। त्रयाणां मध्ये पुरुषर्षभं विष्णुत्वमारभ्य महाभगवत्तापर्यन्तवैभवत्वात् सर्वपुरुषश्रेष्ठो यस्तं गुहयोः बाह्याभ्यन्तरयोः गिरिकन्दरहृद्रूपयोः ध्वान्तं यथा स्वमन्धकारं दुःखं च प्रभया तेजसा प्रदीप इवेति शश्वत् सर्वानुभूतत्वेन दृष्टान्तितं न तु योग्यत्वेन ॥ ३१ ॥

नरपुङ्गवेति भूमिस्पर्शादिमनुष्यलीलाभिप्रायेण अत एवाव्यलीकं निजप्रियं त्वज्जन्मादिशुश्रूषतामस्माकं सकाशे कथ्यतां भवतेति शेषः। तदनुक्तिः कर्मणिप्रयोगश्च गौरवेण "व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि" इति विश्वः गोत्रं नाम यद्वा अव्यलीकं निष्कपटं कथ्यतामित्यन्वयः वा समुच्चये। यद्वा, विकल्पे गुप्तत्वेप्येकतरमपि कथ्यतामित्यर्थः यदि रोचत इति विनयोक्तिः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं प्रश्नमेवाह—क इत्यादिना वयमिच्छत्यतः प्राक्तनेन । इह सम्प्राप्तो भवान् कः ? किं देवः ? उत मानुषः ? इहेति विवक्षितमाह—विपिने अरण्ये तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने तत्राप्युरूणि कण्टकानि यस्मिंस्तस्मिन् पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसि ॥ २९ ॥

किंस्विदिति । किं वा त्वं तेजस्विनां यत्तेजस्तदेव मूर्त्तीभूतः किं वा भगवान् विभावसुरग्निः ? अथवा सूर्यः ? यद्वा, सोमेन्द्रयोरन्यतमः ? उत वरुणादन्यतमो लोकपालः ॥ ३० ॥

सर्वत्रापरितोषादाह--मन्य इति । देवानाम् इन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां त्रयाणां मध्ये यः पुरुषोत्तमो भगवांस्तं त्वामहं मन्ये, कुतः ? यद्यस्माद्गुहाध्वान्तं हृदयगुहास्थमपि ध्वान्तमज्ञानं च बाधसे विधुनोषि यथा दीपः स्वप्रभया अन्धन्तमः तद्वत् ॥ ३१ ॥

शुश्रूषतामिति।यद्यपि चतुर्भुजत्वादिलिङ्गैः परमात्मासाधारणैः पुरुषर्षभं मन्ये इति पुरुषोत्तमत्वं निश्चित्य नरपुङ्गवेति सम्बोधनानुपपत्तिः तथापि पुनस्तथैव द्विभुजत्वादिविशिष्टरूपेणावस्थितं तमवलोक्य तथा सम्बोधितं नरशब्दस्य पुरुषमात्रपरत्वं वा स्वस्य जन्म कर्म गोत्रं वाशब्दश्चार्थकः श्रोतुमिच्छतामस्माकमव्यलीकं निष्कपटं यथा तथा कथ्यतां यदि रोचते न वयं विधातुं प्रभव इति भावः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गिरिगह्वरे प्रवेष्टुमशक्ये ॥ २९ ॥

तेजस्विनां ज्योतिष्मतां पुञ्जीभूतमेकं तेजः किंस्वित् सामान्योक्तं विशिनष्टि—भगवानिति ॥ ३० ॥

त्रयाणां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं पुरुषश्रेष्ठं विष्णुं मन्ये यदिति,गुहाध्वान्तमित्युपलक्षणं ब्रह्माण्डगुहाव्यापितिमिरमपि प्रदीपो गृहान्तर्वर्त्तिज्योतीरूपं परं न गृह्यते किन्तु सूर्योपि॥३१॥
अव्यलीकं सत्यं शुश्रूषतां श्रोतुकामानाम् ॥ ३२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रश्नमाह—को भवानिति अष्टाभिः । प्रश्ने हेतून् वदति अन्यथा कृत्रिमत्वमाशङ्क्येतेति स्ववृत्तान्तमपि कथयति—भगवतोपि स्ववृत्तान्तकथनार्थम् अष्टैश्वर्यं भगवति सिद्धं तथा सति विशेषाज्ञाते प्रतिपत्तिरयुक्तेति स्वयं च फलार्थी न भवतीत्यष्टभिः प्रश्नः । प्रश्नत्रयं निरूपयति, स्वरूपक्रियाप्रकाराणां तत्राविरोधस्थापनार्थम् एतादृशं रूपं सहजं भवेत्येवाकृत्रिममन्येषामपि भवतीति को भवानिति स्वरूपप्रश्नः अस्तु वा विशेषः एतादृशो विपिने अरण्ये तत्रापि गिरिसम्बन्धेन गह्वरे स्थाने कथं सम्प्राप्त इति क्रियाप्रयोजनः प्रश्नः पद्भ्यां पद्मपलाशाभ्यामिति प्रकारे प्रश्नः इयं हि भूमिरसंस्कृतेति उरूणि कण्टकानि भवन्ति पलाशपत्रादपि कोमलाभ्यां पद्भ्यां तादृशस्थाने ऽपि चलनं महत्कार्यव्यतिरेकेण न भवतीति ॥ २९ ॥

किं तादृशं महत्कार्यमिति प्रकारप्रयोजनप्रश्नतर्केण आमीहीस्याशङ्कायां तर्कमाह—किंस्वित्तेजस्विनामिति द्वयेन । आद्यावहमेव वितर्के सर्वेषामेव तेजस्विनां तेजः एकीभूतमेतदिति अथवा यत्पूर्वं कारणत्वेन तेजः सृष्टं तत्तेजो सृजतेति तद्वा भगवान् जगत्कारणत्वात्तस्य भगवत्त्वं तेनाप्याप: सृष्टा इति अथवा त्वं विभावसुरग्निः मूर्त्तीभूतः सर्वस्यापि तेजस एकीभावे कारणाभावात् द्वितीयः पक्षः ततो मूलभूतस्य अत्रागमनासम्भवात् तदधिष्ठातृदेवताप्रश्नः एवमाधिभौतिकादिभेदेन विकल्पत्रयमप्येतद्राजसमिति सात्त्विकं त्रितयमाह — सूर्यः सोमो महेन्द्रो वेति । एक एव सूर्योदेवतेति "सूर्य आत्मा जगतः तस्थुषश्च" इति "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः" इति च । सूर्यो भवितुमर्हति चतुर्भुजत्वदर्शनात् ततोऽपि शीतरश्मिरमृतमयः सुन्दर इति सोमः ततोप्यैश्वर्यदर्शनान्महेन्द्रो भविष्यसि एवम् सात्त्विकभेदानुक्त्वा मनुष्याकृतिमिव पश्यन् तृतीयं गुणं कल्पयन्निव तत्रोत्तमं सम्भावनया निरूपयति, अपरो वा लोकपाल इति वा वायुवरुणादीनाम् अन्यतमः तेहि रक्षार्थं परिभ्रमन्ति वेत्यस्य पक्षस्यानादरे ॥ ३० ॥

एवं कार्यकारणरूपाणि सम्भावयित्वा तान् पूर्वपक्षे निधाय परमकारणरूपं पुरुषोत्तमं तं सम्भावयति--मन्ये त्वामिति। देवानामपि देवानां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं विष्णुं त्वां मन्ये तेषां वा पुरुषर्षभः तेषां पुरुषः नारायणः तस्य ऋषभः पुरुषोत्तम इति वा श्रद्धयैवं कल्पयतीत्याशङ्क्य तत्र साधिकामन्यथानुपपत्तिमाह—यद्बाधस इति । गुहान्धकारः न केनचित् दूरीकृतः उत्पत्तिशिष्टः सः यो हि व्यवधायकं न मन्यते तेन दूरीकर्त्तुं शक्यः अतः पूर्वोक्तानां भगवत्तेजः सहितानामपि नात्र पराक्रमः मूर्त्तीभूतानां तु बहुधा समागतानां गुहाध्वान्तनिराकरणं न दृष्टमिति । य एवास्माभिर्न दृष्टः पूर्वं स भगवान् भवितुमर्हतीति निश्चीयते । किञ्च, प्रदीप्तोऽप्यग्निर्भगवत्सहितोपि एवंविधप्रभायुक्तो न भवति एकैव हि तत्र भगवच्छक्तिः प्रदीपे तु शक्तिद्वयम् अत एव कारीषात् दारुमयाच्च दीपस्य प्रभा महती स्नेहाग्निस्थानाग्निसंयोगैः वर्त्तिका अग्निस्थानम् अग्नेस्तुषाधानमिति श्रुतेः एतद्वा अग्नेस्तेजो यद्घृतमिति घृतमपि तथा अग्निः मत्र संयुक्त इति अतस्तस्य प्रभाकलिकामात्रस्यापि सर्वगृहव्यापिनी भवति तथा भवत्तेजः गुहाभ्यन्तरस्थानं यत्कदापि न दृष्टं तद्दर्शयतीति पुरुषोत्तम एव भवितुमर्हसि उत्कृष्टप्रभाव्यवहाराय दृष्टान्तत्वेनाभिमतेति दीपो दृष्टान्तः अथवा त्वमेव प्रकृष्टो दीपः यतः स्वया प्रभया ध्वान्तं बाधस इति अदृष्टपूर्वत्वेन पुरुषोत्तमत्वासिद्धिः ॥ ३१ ॥

तर्हि ज्ञात्वा कथं प्रश्न इति चेत्तत्राह—शुश्रूषतामिति । व्यलीकं सन्देहः तद्रहितं यथा भवति तथा कर्तुमिच्छतांऽस्माकम् असमानत्वादसम्भाव्यस्त्वमित्याशङ्क्याह—नरपुङ्गवेति । नराकृतिर्दृश्यत इति संव्यवहार्यो नरा इति वयमपि संव्यवहार्याः नराकृतित्वं च सहेतुकं प्रतिभातीति विशेषान् पृच्छति, स्वजन्म कर्म गोत्रं चेति । स्वस्य जन्म किं रूपं कथं प्रादुर्भूत इति कारणप्रश्नः कर्मेति प्रयोजनप्रश्नः गोत्रमिति कास्मिन् वंशे प्रादुर्भाव इति वंशप्रश्नः वेति अन्यदपि वक्तव्यमित्यभिप्रायसूचकम् एवं गुणत्रयस्वभावमिव पृष्ट्वा स्वस्य नियोजकत्वाभावायाह—कथ्यतां यदि रोचत इति ॥ ३२ ॥

---

वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः।
मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ! ॥ ३३ ॥
चिरप्रजागरश्रान्तो निद्रयाऽपहतेन्द्रियः।
शयेऽस्मिन् विजने कामं केनाप्युत्थापितोऽधुना ॥ ३४ ॥
सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना।
अनन्तरं भवाञ्छ्रीमाँल्लक्षितोऽमित्रशातनः ॥ ३५ ॥
तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः।
हतौजसो महाभाग ! माननीयोऽसि देहिनाम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पद्मपलाशतुल्याभ्यां पद्भ्याम् ॥ २९—३० ॥

गुहयोर्गिरिकन्दरमदन्तःकरणयोर्ध्वान्तं तमस्तत्राान्धकार-मविद्यां च प्रदीपो मणिमयः ज्ञानमयश्च ॥ ३१ ॥

शुश्रूषतामिति बहुवचनेन स्वगौरवप्रख्यापनं तत् प्रति-वचनश्रवणार्थमेव स्वस्य निकृष्टत्वे प्रत्युत्तरानर्हत्वात् ॥ ३२ ॥

श्रीशुकदेवकृतसिद्धान्तप्रदीपः।

पुरुषर्षभं पुरुषोत्तमम् ॥ ३१ ॥

देवानां त्रयाणां पुरुषर्षभं त्वां मन्ये इत्यनेन पुरुषोत्तम-सम्भावनामात्रमुक्त्वाऽथ नरश्रेष्ठमात्रदृष्ट्या तज्जन्मादि पृच्छति—शुश्रूषतामिति। बहुवचनेन कुलतः पराक्रमतश्च स्वस्यापि नरश्रेष्ठत्वं दर्शितम् हे नरपुङ्गव ! नरश्रेष्ठ ! स्वजन्मादिकं कथ्यताम् ॥ ३२ ॥

भाषा टीका।

मुचुकुन्द उवाच।

श्रीमुचुकुन्द महाराज बोले, कि-हे भगवन् ! आप इस पर्वत के गहन वन में कैसे प्राप्त हुए, और आप कौन हैं, आपके कमल के कोमल पल्लवों (पत्तों) के सदृश तो चरण हैं, और आप इस कांट कटीली भूमि वाले वन में विचर रहे हो ॥ २९ ॥

क्या आप तेजस्वी पुरुषों के तेज तो नहीं हो? अथवा भगवान् विभावसु अर्थात् मूर्त्तिमान् अग्नि तो नहीं हो? अथवा सूर्य चन्द्र महेन्द्र इनमें से तो कोई नहीं हो? अथवा और कोई लोक पाल तो नहीं हो? ॥ ३० ॥

नहिं नहिं हे देव ! मैं तो आपको तीनों देवोंमें उत्तम देव मानता हूं अर्थात् पुरुषोत्तम श्रीविष्णु आप को ही जानता हूं क्योंकि? आपने इस गुहा के अन्ध कारको अपनी क्रान्तिसे आपने नष्ट करदिया है, जैसे, कि-दीपक अपनी प्रभा से अन्धकार को दूर कर देताहै ॥ ३१ ॥

हे नरोत्तम ! हम निष्कपट होकर आप के जन्म कर्म और गोत्र (नाम) के सुनने की इच्छा वाले हैं, यदि आप के मन में रुचे तो आप अपना जन्म कर्म और गोत्र कहिये ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो महत्तमस्य जन्मादिप्रश्ने नीचस्य का शक्तिः? कथं वा तेन नीचे तत्कथ्यताम् अतः आत्मनः समर्पणार्थमात्मन एव जन्मादिकं कथयेयं तत्प्रसङ्गादसौ स्वयमपि तत्कथयेच्च यतो नरलील इति गूढाभिप्रायेणाह-वयमिति। तुशब्दो निजाल्पतामननाद्विक्षेपक्रमे ऐक्ष्वाकाः इक्ष्वाकव इत्यर्थः। क्षत्रबन्धवो नीचक्षत्रिया इत्यपि विनयाभावात् ॥ ३३ ॥

एवं जन्म नाम च कथयित्वा विनयाद्विना स्वस्यान्तरं भावं गोपयन् बाह्यं शयनकारणं कथयन् निजकर्माऽऽह—चिरेति। प्रजागरकारणाकथनं च विनयादेव ॥ ३४ ॥

नूनं वितर्के आत्मीयेनैवेति स्वापराधः परिहृतः विनयश्च व्यञ्जितः स्वस्यापराधाभावे परमभाग्यदर्शो च व्यञ्जयति, अनन्तरमिति। श्रीमानिति श्रीमन्निति वा पाठः, भवतैव निजशत्रुरसौ बुद्ध्या घातित इत्यपि बुद्धमित्याशयेनाह-अमित्रं शातित दण्डयतीति तथा सः अमित्रशातन इति पाठेऽपि स एवार्थः ॥ ३५ ॥

तव तेजसा हतम ओजः प्रभावो येषां तथाभूताः वयं भूरिकिमर्थमत्रागतोऽसि कुत्र वा यास्यसि किंवा ऽधुना करिष्यसि इत्यादिकं बहु प्रष्टुं न शक्नुमः वक्तुमिति वक्तव्ये हतौजस्त्वादेव भावावरणाशक्तेः प्रष्टुमित्युक्तं द्रष्टुमिति पाठे द्रष्टुमपि कुतो वक्तुं प्रष्टुं वेत्यर्थः। एतावत् निर्णीतमित्याह-देहिनां ब्रह्मादीनामपि माननीयोऽसीति। तच्च युक्तमेवेति सम्बोधयति-महत् लोकोत्तरं भागं माहात्म्यसमूहो यस्य हे तथाविधेति भगशब्दात्समूहेऽण् प्रत्ययः ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

ऐश्वर्यप्रसरणेन समर्थतेजसा हतौजसो वयं न शक्नुम इत्यन्वयः ॥ ३६—३८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि तव जन्मादिकं कथयेत्यत आह-वयन्त्विति । वयमिति वंश्याभिप्रायकं बहुवचनं हे पुरुषव्याघ्र ! तावद्वयं क्षत्रबन्धवः क्षत्रेण वर्णेन बध्यन्ते इति क्षत्रबन्धवः क्षत्रिया इत्यर्थः । तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः "दाण्डिनायन" ६।४।१७४ )सूत्रे निपातनात्साधुः बहुषु लुगभावआर्षः तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्यापत्यं यौवनाश्वो मान्धाता तस्यात्मजः पुत्रः मुचुकुन्द इति ख्यातः ॥ ३३ ॥

चिरं बहुकालं प्रजागरेण श्रान्तः अत एव निद्रयोपहता-न्यभिभूतानीन्द्रियाणि यस्य सोऽहमस्मिन्निर्जने देशे कामं यथेच्छं शये शयितवानस्मि अधुना केनापि केनचिदुत्थापितश्च ॥ ३४ ॥

यो मामुत्थापितवान् सोऽपि स्वीयेनैव पापेन हेतुना नूनं भस्मीकृतः अस्मद्दृष्टिप्रसारस्तु निमित्तमात्रमिति भावः। अनन्तरम् अस्य भस्मीभावादनन्तरममित्रशातनः शत्रूणां शास्ता श्रीमान् शर्वाल्लक्षितः दृष्टः मयेतिशेषः ॥ ३५ ॥

सोढुमशक्येन त्वत्तेजसाभिभूतदृष्टयो वयं त्वां भूरि चिरं प्रष्टुं न शक्नुमः महाभाग हेभगवन् ! हतमोजः सामर्थ्यं येषां तेषां कर्म सङ्कुचितज्ञानात्मकसामर्थ्यानामज्ञानां मादृशां देहिनां माननीयोऽसि पूज्योऽसि भजनीयोऽसीति यावत् ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऐक्ष्वाका इक्ष्वाकुकुले जाताः ॥ ३३—३५ ॥

हतौजसः नष्टतेजसः ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नरत्वेपि तुल्या एव सम्भाष्या इत्याशङ्क्य स्वजन्मकर्म-गोत्राणि निरूपयति त्रिभिः—वयञ्चेति । चकारोर्थविशेषे वयमपि नात्यन्तं हीनाः असम्भाष्याः किन्त्वैक्ष्वाकाः इक्ष्वाकुषु जनपदेषु आविर्भूताः "जनपदशब्दात्" इत्यञ् ( ४।१।१६६ )दाण्डिनायनेति निपातनादुकारालोपः अतो देशेन कुलेन प्रसिद्धिरुक्ता पुरुषव्या-घ्रेति पुरुषश्रेष्ठो मन्यत इति, लौकिकन्यायेनापि विश्वासार्थमुक्तं क्षत्रबन्धव इति गर्वपरिहारः पितृपितामहयोः स्वस्य च नामाह-मुचुकुन्द इति ख्यात इति । प्रसिद्धिरपिसत्कीर्तिसत्वेन निरू-पिता युवनाश्वः पितामहः यौवनाश्वो मान्धाता पिता तस्या-त्मज इत्यौरसः प्रभो ! इति सम्बोधनं नियन्तरि ॥ ३३ ॥

अन्यथा कथनाभावाय तादृशस्यात्रागमने हेतुं वदन् स्व-पौरुषमपि ख्यापयति-चिरप्रजागर इति । बहुकालं देवरक्षार्थं चिरं प्रजागरो जातः ततः श्रमोऽपि जातः ततो निद्रयोपहतानि इन्द्रियाणि च जातानि अतो निद्रोपभोगार्थं विजनेऽस्मिन् स्थाने शये यथा न केनापि उत्थाप्येत तदत्रयं देवदत्तनिद्रया शयनं करोमीति न कथयति तथा सति व्याप्ततया प्रभृति सर्वं परि-त्यज्य तामस्यवस्था किमित्यङ्गीकृतेत्युपालभ्यः स्यात् तदर्थं स्वखेदमेव वर्णयति, अतः कामं यथेष्टं शये अत्रापि कश्चि-दागत्योत्थानं कारितवानित्याह-केनाप्युत्थापितोऽधुनेति । स्वाप-राधशान्त्यर्थं तद्दानकथनम् ॥ ३४ ॥

तस्य च दण्डो मया न कृतः किन्तु स्वपापेनैव जात इत्याह—सोपि भस्मीकृत इति । आत्मीयेनैव स्वकृतेनैव पापेन "शयानं न प्रबोधयेत्" इति निषेधोल्लङ्घनेन भस्मीकृतः नून-मिति नात्र कोऽप्यस्मदपराधः इति निरूपितं तदनन्तरमेव भगवद्दर्शनं जातमित्यतोऽपि हेतोः न ममापराधः अन्यथा तव दर्शनं न स्यात् एतदर्थमेव पुनर्भगवन्तं वर्णयति—श्रीमानिति । सर्वसौन्दर्ययुक्तः लक्ष्मीवांश्च अमित्रशासन इति शत्रुमारकत्व-मेवेति त्वयैव प्रायेण मारितः ॥ ३५ ॥

तर्हि यथैतावन्निर्णीतं तथा जन्मकर्माण्यपि योगबलेनैव कथं न निर्णीयत इत्याशङ्क्याह—तेजसा ते विषह्येणेति । अवि-षह्येण निकटेपि स्थातुमशक्येन ते तेजसा भूरि पुनः पुनः द्रष्टु-मपि न शक्नुमः तस्य निदानजिज्ञासा दूरापास्तेति अन्त-र्दृष्ट्या द्रष्टव्यमित्याशङ्क्याह—हतौजस इति । हे महाभाग ! ते तेजसैव हतम् ओजो मनःशक्तिर्येषाम् अतो दूरापास्तैव योगेन चिन्तनकथा अन्यत् ज्ञातयस्तु नवा द्वयं ज्ञायत इत्याह— हे महाभाग ! देहिनां च त्वं माननीय इति । त्रैलोक्यादधिकं भाग्यं दृश्यते अत एव देहग्रहणमात्रेणैव अवश्यमिष्टमपेक्षित-मिति सर्वेष्टपूरकः त्वं सर्वेषामेव माननीयः पूज्यः सेव्यश्चे-त्यर्थः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदपि मौनमालक्ष्य स्वोत्कर्षमपि व्यञ्जयन् तं परिचाययति वयन्त्विति । क्षत्रबन्धव इति स्वस्य निकर्षोपि निरहङ्कारित्व-ज्ञापनया प्रकर्ष एव ॥ ३३—३४ ॥

अमित्रशासनेति मन्ये मद्द्वारेण त्वयैव स्वशत्रुर्घातित इति भावः ॥ ३५—३७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदि तव जन्मादिकथने कश्चित् सङ्कोचस्तर्हि अस्माकं शृण्वित्याशयेनाह—वयं त्विति । अत्र बहुवचनम् इक्ष्वाकुवंश्याभि-प्रायेण तेष्वहं मुचुकुन्द इति निरभिमानत्वं क्षत्रबन्धव इत्यनेन द्योत्यते ॥ ३३—३८ ॥

---

### भाषाटीका ।

हे पुरुषश्रेष्ठ ! यदि आप हमसें पूछें चाहें तौ हम तौं इक्ष्वाकुवंशी एक छोटे से क्षत्री हैं, और मुचुकुन्द यह हमरा नाम हैं, और हे प्रभो ! हम युवनाश्व महाराज के पुत्र जो मान्धाता हुए हैं उनके पुत्र हैं ॥ ३३ ॥

सैकड़ों हजारों वर्ष के जागने से हम थक गये और हमारी इन्द्रियें शिथिल हो गईं, इस कारण से हम इस विजन वनमें सोते रहे, परन्तु हम को अबहीं किसी पुरुष ने आकर उठा दिया है ॥ ३४ ॥

और वह भी अपने पापसे, आपही भस्म हो गया तिसके अनन्तर अपार शोभा के सागर, शत्रुओं के नाश करने वाले आप भी दिखाई दिये ॥ ३५ ॥

एवं ( १ ) सम्भावितो राज्ञा भगवान् भूतभावनः ।
प्रत्याह प्रहसन् वाण्या मेघ ( २ ) नादगभीरया ॥ ३७॥
श्रीभगवानुवाच ।
जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ।
न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयाऽपि हि ॥ ३८ ॥
क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः ।
गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥ ३९ ॥
कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ।
अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥ ४० ॥

भाषा टीका ।

हे प्रभो ! आपके असह्य तेज के मारे हम आपकी तरफ बहुत देखने को समर्थ नहीं हैं, आप के तेज प्रभाव से हमारा प्रभाव सब नष्ट हो गया, आप देह धारियों के मानने योग्य हो ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्वचित्कदाचित्कश्चिद्यद्यपि रजांस्यपि विममे गणितवांस्तथापि जन्मानि कर्माणि न विमिमीते ॥ ३९-४२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनुकम्पया भूतमात्रं भावयितुं पालयितुं प्रवृत्तः किमुत तादृशमिति तथा अत एव प्रहसन् मेघेति स्वभावानुवादः ॥ ३७ ॥

तानि च सहस्राणि अनुसङ्ख्यातुं सङ्ख्यातसादृश्यमपि कर्तुम् "अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि" इति विश्वः हि निश्चितम् ॥ ३८ ॥

विममे विमिमीते तथापि मे जन्मानि न विमिमीतेत्यर्थः। कीदृशानि ? गुणैः कर्मभिश्चाभिधानानि नामानि यत्र तादृशानि टीकायां जन्मानीति कर्माण्युपलक्षयति-उत्तरानुरोधात् न मे जन्मानीत्यन्वय इति तु विच्छुकः ॥ ३९ ॥

कालेति सार्द्धकम् । कालत्रये उपपन्नानि सिद्धानि भूते वा भविष्यति वा वर्त्तमाने वा कानिचिदपीत्यर्थः। कर्माणीति गुणनाम्नामुपलक्षणम् अनुक्रमन्तः क्रमेण गणयन्तः न गच्छन्ति "यतो वाचो निवर्तन्ते" इत्यादेः एव निर्द्धारणे परमर्षयः वेदान्ता अपि तथापि भवदनुरोधेनाद्यतनानि लाघवतानि परमगुरूहाण्यपि गदतो मम कथयतो मत्तः श्रवणाच्छृणुष्व मात्रं न तु तत्त्वतः परिमाणतो वा ज्ञातुमिच्छेत्यर्थः ॥ ४० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कचिज्जन्मभिः उपलक्षितः रजांसि लोकान् ॥ ३९—४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । राज्ञा मुचुकुन्देनैवमुक्तो भगवान् प्रहसन् मेघगर्जितवद्गम्भीरया गिरा प्रत्युवाच ॥ ३७ ॥

उक्तिमेवाह-जन्मेत्यादिना, इत्युक्त इत्यतः प्राक्तनेन । तावद्यत्पृष्टं स्वजन्मकर्मेत्यादि तस्योत्तरमाह, जन्मेति । अङ्ग हे मुचुकुन्द ! मम जन्मादीनि सहस्रशः सन्ति अतस्तान्यत्राधुना मयाऽपि सङ्ख्यातुम् एतावन्तीति परिच्छिद्य वक्तुं न शक्यन्ते ननु, किमनादिसंसरणशीलैरस्मदादिभिरिव विस्मृतत्वान्न शक्यन्त इत्याशङ्कावारणायानन्तत्वान्ममापीत्युक्तम् अयं भावः । यद्यपि भवज्जन्मादीनि कर्म सङ्कुचितज्ञानैर्भवद्भिर्विस्मृतत्वाद्बहुत्वाच्च न सङ्ख्यातुं शक्यन्ते तथापि सर्वज्ञेन मया तु शक्यन्त एवास्मज्जन्मादीनि त्वानन्त्यत्वान्नैव शक्यन्ते नचैवं सर्वज्ञत्वहानिरानन्त्यानामानन्त्यज्ञानमेव हि सर्वज्ञत्वावहं नतु तेषां परिच्छिन्नत्वज्ञानं तस्यायथार्थत्वेनाज्ञत्वावहत्वादिति ॥ ३८ ॥

दुःसङ्ख्येयत्वमेवोपपादयन्ति-क्वचिदिति । यद्यपि क्वचित् कदाचित् कश्चित्सूक्ष्मबुद्धिमान् बहुभिः जन्मभिः पृथिव्याः सम्बन्धीनि रजांसि विममे गणयेत्तथापि मम गुणकर्माभिधानानि न विममे न गणयितुं शक्नुयादित्यर्थः । "विष्णोर्नुकं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि" इति श्रुत्यर्थोऽत्रानुसंहितः ॥ ३९ ॥

तथाहि परमर्षयः पराशरवैशम्पायनशौनकादयः कालत्रयोपपन्नानि कालत्रयोपयुक्तानि कालत्रयगोचराणि इति यावत् जन्मानि कर्माणि च अनुक्रमन्तः अनु वर्णयन्तोऽद्याप्यन्तं पारं नैव गच्छन्ति ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ह्रादः निःस्वनः ॥ ३७ ॥

मातुं सङ्ख्यातुं न शक्यन्ते कुतः अनन्तत्वात् अतोऽनन्तानामनन्ता इत्येव परिसंख्यानमन्यथानन्तत्वहानिः ॥ ३८ ॥

( १ ) सभाजितः इति वीर० । ( २ ) ह्राद इति विज० वीरराघ० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनन्तत्वमाह—कश्चिदिति। कश्चित् क इव ब्रह्मेव सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे ॥ ३९ ॥
अनुक्रमन्तः निरन्तरं पठन्तः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कालत्रयोपपन्नानि भूतो वा भविष्यति वा वर्तमाने वा कानिचिदपीत्यर्थः ॥ ४०-५४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं तस्य विज्ञापितमाकर्ण्य तदर्थमेव समागत इति तत्रोत्तरमुक्तवानित्याह—एवं सम्भावित इति। सम्यक् भावितः राजेति सोऽपि महान् राजप्रश्ने वावश्यमुत्तरं देयमिति निरूपितं तं भगवांश्च निरूपित एवोत्तरे तस्य कृतार्थता भविष्यतीति जानाति अतस्तथोत्तरं दत्तवान् यद्यपि प्रकारान्तरेणापि तदुद्धारं कर्तुं शक्तः तथापि तत्कृपयापि तथोक्तवानित्याह—भूतभावन इति। प्रहसन्निति विशेषेण मोहितवान् तर्हि अहितकारित्वं स्यादित्याशङ्क्याह—मेघनादगम्भीरयेति। मेघनादादपि अधिकगम्भीरया सर्वथा तापनाशिकया ॥ ३७ ॥

भागवद्वाक्यान्याह—जन्मेति अर्द्धाधिकाष्टभिः। तदुक्तं भगवानर्जमेव फलं तस्य दास्यामीति ज्ञापितवानिति आदौ यत्तेन पृष्टं जन्मकर्माभिधानानि वदेति तत्र कानि वक्तव्यानीत्याकाङ्क्षामिव वदन् आदौ जन्मनामसङ्ख्यातत्वमाह—मे जन्म कर्माभिधानानि सहस्रशः सन्तीति नन्विदानीन्तनेषु पृष्टेषु किमिति व्यधिकरणमुत्तरं दत्तवान् ततश्चायं प्रतारणीय एव भवति इति शङ्का च स्यात् इति चेत् सत्यं भगवान् प्रथमतः स्वरूपे ज्ञाते जन्मकर्माभिधानानि ज्ञातव्यानि इति मन्यते अतः स्वरूपं वदन् स्वभावं ख्यापयितुं जन्मान्याह—अङ्गेति। स्वरूपं वक्तव्यं तस्य कथं जन्मेत्याकाङ्क्षायां भक्तिप्रतिपादकोऽपि स भवतीति भक्तिसिद्ध्यर्थं कर्माणि करिष्यन् भक्तिपरिपालनार्थं कर्माणि च करिष्यन् बहून्येवावताराणि करोतीति वक्तव्यं तस्मिन्ननुक्ते तस्य बोधनार्थं उक्तमप्यनुक्तं स्यात् अतः तदुक्तं मे जन्मकर्माभिधानानि सहस्रशः सन्तीति अङ्गेत्यप्रतारणाय सम्बोधनं सन्तीत्यनेन सर्वेषामेव विद्यमानता निरूपिता सर्वद्वीपेषु विद्यमानानां वा सहस्रत्वमुच्यते तर्हि, भक्तिसाधकत्वात्तानि कथयेत्याशङ्क्याह—न शक्यन्तेऽनुसङ्ख्यातुमिति आनुपूर्व्येण सङ्ख्यातुं मयापि न शक्यते ॥ ३८ ॥

तदेवासङ्ख्यातत्वेनोपपादयत्यज्ञानव्यावृत्त्यर्थं कश्चिद्रजांसीति कदाचित् पार्थिवान्यपि रजांसि कश्चिद्विममे अहं वा उरुजन्मभिरपि विमानं सम्भवत्यन्यस्य यद्येक एव ब्रह्मपर्यायेण सर्वेषु ब्रह्माण्डेष्ववतरति तदा तत्रत्यानां परमाणूनां सृज्योपयोगित्वेन गणनां करोति अन्यथा अव्यवस्था स्यात् ततश्च ब्रह्मणा गणयितुं शक्याः मयापि सृष्ट्यादौ ज्ञानपूर्वकं सृजामीति गणितुं शक्या एव कश्चिदिति सृष्टिविशेषे गुणकर्माभिधानानि मदीयानि तु कदाचिदपि गणयितुमशक्यानि एकस्मिन् जन्मनि कोटिशः कर्माणि नामानि च भवन्ति एकस्मिन् दिवसे ब्रह्माण्डकोटिषु द्वीपादिदेशविशेषेषु कोटिशो जन्मानि भवन्ति अतःपरमिति तत्त्वात् जन्मादीनां परिगणनाभावः युक्तः ॥ ३९ ॥

बहुभिर्मिलितैः गणना भविष्यतीत्याशङ्क्याह—कालत्रयोपपन्नानीति। भूतानि एव बहूनि वर्तन्ते भविष्याणि च म इति ब्रह्मणः जीवो हि परिच्छिन्न एकदा एकस्मिन् देहे एकं देहं गृह्णाति सदेहः शतवर्षाणि तिष्ठति भगवतस्तु देहाभावात् स्वरूपं यथासुखं प्रदर्शयतीति एकस्मिन्नपि क्षणे बहुभिर्बहुधा दृश्यत इति अनेकरूपाणि भवन्ति बलेन च मायायवनिकायाः स्थलान्तरे उद्गमस्य भिन्नत्वात् चलनमात्रेणैवानेकानि रूपाणि भवन्ति सदाकाशशरीरः सर्वतः पाणिपादान्तत्वेन मूर्त्यानन्त्यात् अनन्तरूपत्वं युक्तमेव अत आह, भगवान् कालत्रयोपपन्नानि मदीयानि अनुक्रमिष्यन्तः आनुपूर्व्येण गणनां कुर्वाणाः अन्तं न गच्छन्तीति नृपेति सम्बोधनं महत्त्वेन वञ्चनाभावाय तत्रापि कालत्रयस्य योग्यानीति कर्मणामानन्त्यं कालत्रयस्य उपमर्दनसमर्थानीमानि कालत्रये उपपन्नान्यनन्तान्येव ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

परमनिरहङ्कारित्वेपि मद्वचनश्रवणार्थमेव स्वोत्कर्षमसौ द्योतयत्यतोऽहमपि परमनिरहङ्कारोऽपि निजसुखेनैवास्मै स्वोत्कर्षमभिधास्यामि "ये यथा मां प्रपद्यन्ते" इति मदुक्तेरिति विमृश्याह—जन्मेति ॥ ३८ ॥
विममे कश्चिद्गणयामास ॥ ३९—४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कश्चित् कदाचित् कश्चिदुरुजन्मभिः यद्यपि रजांसि विममे गणितवान् तथापि मे गुणादीनि न विमिमीते तथा च श्रुतिः "विष्णोर्नुकं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि" इति ॥ ३९—४२ ॥

---

### भाषा टीका।

श्रीशुकदेव जी बोले, कि—भूतभावन! ( प्राणियों के जन्म देने वाले ) भगवान् श्रीकृष्ण चन्द्र से राजा मुचुकुन्दने जब इस प्रकार प्रश्न किया, तब हँस कर मेघ के नाद ( शब्द ) सदृश गम्भीर वाणी से श्रीकृष्ण भगवान् बोलते हुए ॥ ३७ ॥

### श्रीभगवानुवाच।

श्रीभगवान् श्रीकृष्णचन्द्र बोले, कि—हेराजन्! हमारे जन्म कर्म और नाम तो हजार हों ही हैं जिनकी अनंत होने से हम भी गणना नहीं कर सके हैं ॥ ३८ ॥

कदाचित् कोई बहुत जन्मों तक गिनने से पृथिवी के रजों को गिन सके, परन्तु हमारे गुण कर्म नाम

तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ।
विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये ।
भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ ४१ ॥
अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ।
वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥ ४२ ॥
कालनेमिर्हतः कंसः प्रलम्बाद्याश्च ( १ ) सद्द्विषः ।
अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥ ४३ ॥
सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ।
प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ॥ ४४ ॥

भाषा टीका ।

और जन्मों कोई को भी पुरुष कभी भी नहीं गिन सकता है ॥ ३९ ॥

हे नृप ! हमारे तीनों काल में होने वाले जन्म और कर्मों को बडे बडे ऋषि लोग गिनते हुए भी पार को नहीं प्राप्त होते हैं ॥ ४०

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥ ४१—४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विज्ञापित इति सार्द्धकम् । धर्मगुप्तये साधूनां रक्षणायेत्यर्थः ॥ ४१ ॥

आदौ जन्माह—अवतीर्ण इति । नामाह—वदन्तीत्यर्द्धेकेन वासुदेवेतीति । "सह सुपा"(२।१।४)इति सामान्यः समासः । ननु, "वसन्ति तत्र भूतानि" इत्यादिना तव नामेदं पूर्वमपि प्रसिद्धमेव सत्यं किन्तु मध्ये मध्ये तिरोभूतेन प्रवृत्तिनिमित्तविशेषेणाधुनिकमिव प्रतीयत इत्याह—वसुदेवसुतमिति । हि प्रसिद्धौ श्रीरामादि*ष्वन्येष्वपि तत्पुत्रेषु सत्सु प्राधान्यान्मय्येव तत्प्रसिद्धिरित्यर्थः ॥ ४२ ॥

कर्माह—कालनेमिरिति मयेति शेषः ॥ ४३ ॥

न च तद्धननार्थमेवागतोऽस्मि अन्यथाऽपि तस्य शक्यत्वात् किन्तु त्वत्कृपार्थमेवेत्याशयेनाह—स इति । तादृशमाहात्म्योऽप्यहम् उप दाक्षिण्येनागतः "उप सामीप्यदाक्षिण्यदोषाख्यापनात्ययेष्वपि" इति विश्वः । प्रचुरं यथा स्यात्तथा प्रकर्षेण शुद्धभावादिनाऽर्थितः द्रष्टुं याचितः वाञ्छित इत्यर्थः ॥ ४४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अयं चेति ते तिग्मचक्षुषा उपकरणभूतेन मयैव दग्ध इत्यर्थः ॥ ४३—४६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यप्येवं तथाप्यङ्ग हे मुचुकुन्द ! अद्यतनान्याधुनिकानि मम जन्मादीनि गदतो मत्तः शृणु धर्मपरित्राणार्थं भूमेर्भारभूतानामसुराणामासुरसम्पत्त्याभिजातानां क्षयाय च ब्रह्मणा प्रार्थितोऽहं यदुकुले तत्राप्यानकदुन्दुभेर्वसुदेवस्य गृहे गृहिण्यामिति भावः । अवतीर्णवानस्मि ज्ञानशक्त्यादिस्वस्वभावमजहदेव जात इत्यवतीर्णशब्दप्रयोगाभिप्रायः एवमाधुनिकं जन्म प्रोक्तम् । अथ नामधेयमाह—वदन्तीति । वसुदेवसुत इत्यस्य हेतुत्वद्योतको हिशब्दः वसुदेवसुतत्वाद्वासुदेवेति वदन्ति सन्धिरार्षः प्रातिपदिकमात्रानुवादो वा तस्यैव नामधेयत्वात्प्रदर्शनीयत्वाद्विभक्तेः साधुत्वार्थत्वाच्च ॥ ४१—४२ ॥

अथाधुनिकानि कर्माण्याह—कालनेमिरिति । हे राजंस्तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन मयैवायं यवनो दग्धः धर्मगुप्त्याद्यर्थं प्रार्थितत्वाद्युक्तत्वैव तदुपयुक्तसार्वज्ञत्वसर्वशक्तित्वादिगुणानामुक्तप्रायत्वाच्च पृथग्गुणोक्तिः ॥ ४३ ॥

तर्हीह किमर्थमागत इत्यत्राह—सोहमिति । स उक्तविधोऽहं त्वामनुग्रहीतुम् इमां गुहां प्रति समुपागतः तर्हि सर्वानपि जनान् किं नानुगृह्णासीत्यत आत्मानं विशिनष्टि । भक्तवत्सल इति । नाहं भक्त इत्यतः विशिनष्टि पूर्वजन्मनि त्वया अहं प्रचुरं यथा तथा प्रार्थितः आराधितः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भारायमाणानां भारवदाचरतां "कर्तुः क्यङ्सलोपश्च" ( ३ । १ । ११ ) इति पाणिनिः ॥ ४१ ॥

गृहे भार्यालक्षणे निमित्तं कथयति—वसुदेवेति ॥ ४२ ॥

तिग्मचक्षुषा चण्डनेत्राग्निना ॥ ४३—४६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं त्रिभिः स्वस्य ब्रह्मत्वं निरूप्य धर्माणामपि ब्रह्मत्वेनानन्त्यमुक्त्वा अव्यक्तत्वमुपपाद्य तथापि राजकृपया राज्ञो

---

* अनेकेषु इति पाठान्तरम् ।

( १ ) विद्विषः वीरराघवीये ।

वरान् वृणीष्व राजर्षे ! सर्वान् कामान् ददामि ते ।
मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४५ ॥

श्रीशुक उवाच ।

इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदाऽन्वितः ।
ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४६ ॥

मुचुकुन्द उवाच ।

विमोहितोऽयं जन ईश ! मायया त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः ॥ ४७ ॥
लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चि ( १ ) दव्यङ्गमयत्नतोऽनघ ! ।
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ ४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दुर्ज्ञेयमपि वक्ष्यामीत्यभिप्रायेणाह-तथापीति । अद्यतनानि जन्मकर्माभिधानानि शृणुष्व यद्यपि त्वां प्रति न वक्ष्यामि तथापि मे गदतः सतः त्वया सावधानतया श्रोतव्यम् आदौ जन्महेतुमाह—स एव पृष्ट इति । पुरा विरिञ्चयेन विज्ञापितः ब्रह्मणा प्रार्थितः सन् धर्मरक्षा कर्त्तव्येति भूमेर्भाराबमाणानामसुराणां क्षयार्थं च अनेन द्वयं गृहीतं भूमिभारहरणमसुराणां क्षयश्चेति चकाराद्भक्तिसिद्ध्यर्थं च ॥ ४१ ॥

यदुकुल इति गोत्रमुक्तम् आनकदुन्दुभेर्गृह इति विशेषोप्युक्तः । नामाह—वदन्ति वासुदेवेति । सन्त्येव बहूनि नामानि एकस्यापि नाम्नः बहून्येव निर्वचनानि सन्ति तथापि एकं नाम एकप्रकारनिर्वचनं लोका वदन्ति वासुदेवेति नाम वसुदेवसुतमिति निर्वचनं हीति युक्तश्चायमर्थः यतो मां वदन्ति मया च तथा कृतमिति ॥ ४२ ॥

कर्माण्याह-कालनेमिर्हत इति । कंसो मातुल इति तस्य हननं निषिद्धमिति पूर्वं स कालनेमिः स्थित इत्युक्तम् प्रलम्बादयोऽपि हताः यतस्ते सद्विषः अनेन सद्रक्षार्थं प्रलम्बादयो हताः न तु तेषां हनने स्वतन्त्रं कार्यमस्तीति भावः । प्रकृतकृत्यं द्विरूपमाह—तत्र यवनः ते तिग्मचक्षुषा बाणप्रायेण करणेन मयैव दग्धः चकारः कर्तृसमुच्चयार्थः राजन्निति सम्बोधनं तथैव सम्मत्यर्थं द्वितीयं भक्तिलक्षणं धर्मलक्षणं वा ॥ ४३ ॥

प्रयोजनमाह—सोहमिति । अनेकार्थेऽवतीर्णो यतोहम् अतस्त्वाप्यनुग्रहः कर्त्तव्य इति एतां गुहामुपागतः अन्यथा प्रकारान्तरेण भ्रममुत्पाद्य कालयवन एवात्रानीतः स्यात् ततश्च स्वयमेव स भस्मीभवेत् अतस्त्वदर्थमेवास्मिन् सङ्कटे देशेपि समागतः तत्र हेतुः प्रार्थितः प्रचुरः पूर्वमिति बहुवारं पूर्वजन्मसु त्वयाऽहं प्रार्थितः अनेन यत्सामर्थ्यं त्वयीदानीम् उपलभ्यते तत्केवलं मदनुभावेनेत्यपि ज्ञापितं तथापि स्वक्लेशेनाप्यागमने स्वस्यासाधारणं धर्ममाह—भक्तवत्सल इति । अहं स्वभावतो भक्तवत्सलः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥४३—४५ ॥

भाषा टीका ।

तथापि हे राजन् ? इस समय के हमारे जन्म और नामों को तुम से हम कहते हैं सो तुम श्रवण करौ प्रथम हमको धर्म की रक्षा के लिये ब्रह्माजी ने विज्ञापन किया और इस भूमि के भार रूप जो असुर लोग हैं उनके नाश करने के लिये ब्रह्माजी ने प्रार्थना करी ॥ ४१ ॥

तब हमने यदुकुल में वसुदेवजी के गृह में दिव्य जन्म लिया, इसी कारण से महात्मा जन हम को वसुदेवजी के पुत्र वासुदेव ऐसे कहते है ॥ ४२ ॥

पूर्व जन्म में जो कालनेमि रहा उस कंस को मारा और जो हमारे वैरी प्रलम्बादिक रहे उनको मारे और हे राजन् ! तुम्हारे तीक्ष्ण चक्षु से इस कालयवन को जलाया ॥ ४३ ॥

हे मुचुकुन्द ! वही मैं तुम्हारे ऊपर अनुग्रह करने को इस गुहा में आकर प्राप्त हुआ हूं, क्यौंकि ? मै भक्तवत्सल हूं और मेरी तुमने पूर्व कालमें बहुत ही प्रार्थना करी रही, इसी कारण से हमने तुमको दर्शन दिये ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपूर्णोऽहमिति शोचितुं यद्वा, अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु यथा शोचति नैवं मां प्रपन्नः मद्दत्तवराणामक्षय्यत्वादिति भावः ॥ ४५ ॥

अष्टाविंशतिमे युगे भगवानवतरिष्यतीति इदं गर्गवाक्यमनुस्मरन्नित्यर्थः ॥४६ ॥

( १ ) दव्यङ्गमयत्नतस्तव ॥ इति वीरराघ० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वद्भक्तिरेव केवलं दुर्लभा कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाभक्तानां संसारमष्टभिः प्रपञ्चयन् स्तौति–विमोहित इति । हे ईश ! योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थदृक् अनर्थे संसारे दृक् दृष्टिर्यस्यासौ । यद्वा अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा अतस्त्वां न भजति किन्तु परस्परं वञ्चितः सन् सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जति इति ॥ ४७ ॥

किञ्च कामसुखं सूकरादिष्वपि सम्भवति भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्तिमूढ इत्याह—लब्ध्वेति । अत्र कर्मभूमौ अव्यङ्गमविकलाङ्गम् किञ्च, असति विषयसुखे मतिर्यस्य सः गृहमेवान्धकूपस्तस्मिन्निपतितः यथा पशुस्तृणलुब्धोऽन्धकूपे पततीति ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे राजर्षे इति राज्ञ ऋषेश्च योग्यान् सर्वानेवेति भावः प्रपन्नः शरणागतोऽपि किं पुनर्भक्तिमांस्तादृश इत्यर्थः । न भूय इति तस्मात्तुच्छो वरो न मृग्य इति तु निगूढो भावः ॥ ४५ ॥

इति एतदुक्तः सन् गर्गवाक्यमनुस्मरन् तं नारायणं देवं स्वयं भगवन्तं कृष्णं ज्ञात्वा सुष्ठु निश्चित्य मुदाऽन्वितः प्रणम्य साष्टाङ्गं नत्वाऽऽह ॥ ४६ ॥

त्वदीययेति दुर्लङ्घत्वमभिप्रेतम् अयमिति एतच्च प्रत्यक्षमेवेत्यर्थः । गृहेषु तेषु तत्सम्बन्धिपुत्रधनादिषु च सज्जते आसक्तो भवति न च साक्षात् दुःखेपि कदाचिन्निर्विण्णः स्यात् इत्यादिना प्रतारणादित्याह—वञ्चित इति ॥ ४७ ॥

मानुषं मानुष्यम् अनघ हे यत्किञ्चिद्भजनेन सर्वदुःखनिवर्त्तक ! कथञ्चित्पूर्वादृष्टेन लब्ध्वा पादारविन्दं त्वदीयमिति प्रकरणबलात् साक्षादनुक्तिः सम्भ्रमेण अयत्नतो न भजति अप्रयासेन तस्य तद्भजनं तदपि न कुरुते अभजने हेतुः यथा पशुस्तथैवासन्मतिः विवेकरहितः अतो गृहान्धकूपे पतितश्च भवति ॥ ४८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

योषित्पुरुषश्च योषिदात्मकः पुरुषात्मकश्च लोक इत्यर्थः ॥ ४७–५० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कोऽसावनुग्रह इत्यत आह–वरानिति । हे राजर्षे ! ते तुभ्यं सर्वान् काम्यन्त इति कामास्तानिष्टान् ददामि नन्वित्थं प्रचोदितेन मया देवाः प्रत्याख्याताः इति सर्वज्ञः त्वं किं न जानासीत्यत्राह, मामिति । भूयः पुनः शोचितुं संसर्तुं नार्हति किन्तु मुक्तिमेवार्हतीति भावः । मुक्तिन्दास्याम्येव किन्तु ततोऽन्येपि यदि कामा प्रार्थ्यास्तानपि प्रार्थयस्वेति भावः ॥ ४५ ॥

इतीति । इतीत्थम्भगवतोक्तो मुचुकुन्दः तं श्रीकृष्णं तदेव तत्रापि नारायणं ज्ञात्वा तदुक्तिभिरिति शेषः । गर्गस्य वृद्धगर्गमहर्षेर्वाक्यमष्टाविंशतितमे युगे भगवान् वसुदेवगृहेऽवतरिष्यतीत्येवम्विधमनुस्मरंश्च मुदा हर्षेण युक्तः प्रणम्योवाच ॥ ४६ ॥

उक्तिमेवाह—विमोहित इत्यादित्रयोदशश्लोकात्मिकां यदुक्तं "वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते" इति तस्योत्तरोपयुक्तमाह—विमोहित इति । विषयाभिलाषेणैव निदानेनेदृशसंसृतिरूपानर्थं प्राप्तोहं भूयो विषयानेव वरयेति चोदयता त्वया वञ्चितः स्यामतो भक्तवञ्चनं तवानुचितमिति मैवं वादीरित्यभिप्रायः । हे ईश ! त्वदीयया मायया विमोहितो योऽयं मत्प्रभृतिर्योषिच्च पुरुषश्च योषिदात्मकः पुरुषात्मकश्चेत्यर्थः । जनस्त्वां निरतिशयपुरुषार्थभूतं न भजति किन्तु स्वानर्थविषये दृग्बुद्धिर्यस्य तथाभूतः वस्तुतोऽनर्थहेतुमप्यर्थवन्मन्यमानः प्रभवन्त्येभ्य इति प्रभवाः दुःखस्य प्रभवाः तेषु दुःखैकनिदानेषु गृहेषु सुखलेशाभासप्रभवेषु सुखाय सज्जते सक्तो भवति स जनः पूर्वमेव त्वया वञ्चित इत्यर्थः ॥ ४७ ॥

नन्वित्थं जनं वञ्चयन्नहं निर्घृणो विषमश्च किमित्यत आह, लब्ध्वेति । हे अनघ ! न विद्यते यद्भजनादघं तथाभूतेत्यर्थः अयत्नतः स्वप्रयत्नमन्तरेणापि केवलमनुजिघृक्षैकस्वभावत्वत्सङ्कल्पादेव हेतोरत्र कर्मक्षेत्रे दुर्लभमपि मानुषमङ्गं शरीरं त्वदाराधनोपयुक्तं प्राप्याप्ययं जनस्त्वत्पादारविन्दं निरतिशयपुरुषार्थरूपं तत्प्राप्त्युपायभूतं च न भजति । किन्त्वसन्मतिः प्रकृतिपरिणामात्मकदेह एव मतिरात्माभिमानो यस्य तथाभूतः केवलं गृहमेवान्धकूपः तस्मिन् पतितो भवति यथा पशुरजानंस्तृणावृते कूपे जिघृक्षया गतस्तत्र पतितो भवति तद्वत् नह्येतावता तव वैषम्यादिकमापादयितुमुचितं केवलमनुजिघृक्षयैव स्वाराधनोपयुक्तकरणकलेवरादिप्रदानादितिभावः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनर्थदृक् स्वपुरुषार्थदर्शी न भवतीत्यर्थः । यद्वा, अनर्थं संसारमर्थं पश्यतीति दुःखप्रभवेषु दुःखहेतुषु पुरुषेण वञ्चिता योषित् तया पुनः पुरुषश्च वञ्चितः ॥ ४७ ॥

मायया मोहितत्वमुपपादयति–लब्ध्वेति । अत्र कर्मभूमौ मानुषमङ्गं देहम् असत्सु विषयेषु मतिर्यस्य स तथा अन्धकूपे पतितः पशुर्यथा स्वरूपं न भजति तथा गृहलक्षणान्धकूपे ॥ ४८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आगतस्य प्रयोजनमाह—वरान् वृणीष्वेति । ये वरणीयाः तवाभीष्टाः तान् बहूनपि वृणीष्व यतस्त्वं राजर्षिः राजा च ऋषिश्च राजधर्मं वैदिकं च धर्मं कृतवानिति अस्मिन् जन्मनि सर्वानेव कामान् दास्यामि न तु मोक्षमिति भावः । तर्हि किं वरेणेत्याशङ्क्याह–मां प्रपन्न इति । यस्तु शरणागतः स भूयः शोचितुं नार्हति यस्मिन् जन्मनि प्रपद्यते तस्मिन् जन्मनि कश्चिच्छोचितुमर्हति न सर्वः अतः सर्वेषां शोकः प्रपत्तिमात्रेण निवर्त्तते अजनश्च भवति जनश्चेत् मदिच्छया तथापि भूयः शोचितुं नार्हति एष विकल्पः राज्ञ एवार्थे अतः कामितं

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वमेव दास्यामि मुक्तिमपि एकजन्मव्यवधानेनेति भावः ॥ ४५ ॥

एवं वचनेन यदर्थं स्वयं स्थितः स एवायमिति निश्चित्य स्तोत्रं कर्तुमियेषेत्याह-इत्युक्त इति । भगवता वरं प्रार्थयेत्युक्तः स्तुत्यैव वरः प्रार्थनीय इति तं प्रणम्य स्तुतिमाह---यतोऽयं मुचुकुन्दः प्रसिद्धः मुदा चान्तरन्वितो जातः भगवद्वाक्येन सन्तोषोप्येका भगवत्स्तुतिः तदा गर्गवाक्यमनुस्मरन् भगवद्वाक्येन तस्यापि स्मरणे जाते नारायणोऽयमिति निश्चित्य स्तोत्रं कृतवान् अनेन नारायणः पुरुष एव ज्ञातः । ननु पुरुषोत्तमः अथवा पुरुषभावे पुरुषोत्तमत्वं मन्यते भगवद्वाक्यं गर्गवाक्यस्मारकत्वेन जातमिति न फलसिद्धः अनेनैवाभिप्रायेण भगवतापि कामान् ददामीत्युक्तम् ॥ ४६ ॥

भगवन्तं स्तौति त्रयोदशभिः--विमोहित इति । अत्र द्वादशधा कालो निरूप्यते तदतिक्रमार्थं च एकेन भगवत्प्रतिपत्तिरिति तत्र कालेन सर्वे व्यामोहिता इति प्रथमं तामसराजससात्त्विकान् मुग्धान् गणयति त्रिभिः तत्राप्याद्येन तामसमोहो निरूप्यते अयं जनः त्वदीयया मायया विशेषेण मोहितः । ननु, कालेनैव मोहितोऽस्तु किं भगवन्मायाविमोहनेनेत्यत आह, ईशेति । भवानेवेशः तेन कालरूपोभूत्वा तान् विमोहयसीत्युक्तं भवति । अन्येनैतावत्कर्तुं न शक्यत इति न ह्यन्यः भगवद्भजनं निवारयितुं शक्नोति अपराधी स्यात् अन्ये व्यामोहाः कालकृता भवन्तु नाम भगवद्भजनहेतुः कालो भगवानेव तदाह, यस्त्वां न भजतीति । ननु, परमानन्दे कथं विचारकाणामप्रवृत्तिरितिचेत् तत्राह---अनर्थदृगिति । अनर्थ एव दृक् यस्य, यद्धि पश्यति तज्जानाति उभयश्चेत्पश्येत तारतम्यं च जानीयात् अयं तु अनर्थमेव पश्यति । ननु, सर्वोपि दुःखान्निवर्त्तते सुखदुःखे चात्मानुभववेद्ये अत. कथमनर्थदर्शनमिति चेत् तत्राह, सुखाय दुःखप्रभवेषु सज्जत इति । प्रवृत्तिस्तु स्वसमानप्रकारज्ञानजन्यैव परं तज्ज्ञानं भ्रान्तं तेन फले विपर्ययः यत् दुःखस्थानं यतो दुःखमेवोत्पद्यते तत्र सुखं भविष्यति इति यतः प्रवर्त्तते तत्राप्यासज्जते तत् स्थानं निर्दिशति गृहेष्विति दुःखप्रभवत्वमुपपत्त्योपपादयति योषित् पुरुषश्चेति गृहे हि स्वयमेवास्ति द्वयमप्यन्योन्यतः सुखापेक्ष्यं यद्येकस्मिन् सुखं भवेत् तत्रापि पुष्कलं तदात्वन्यस्मै प्रयच्छेत् इतरेतराश्रयं कार्यं च न सिद्ध्यत्येव अतस्तयोर्दुःखमेव सहजं तदनुवृत्तौ दुःखमेव भवेत् न हि नद्यामग्निः प्राप्यते नन्वनुभूयते सुखं कथमिति चेत्तत्राह, वञ्चित इति केनचिद्वञ्चितः सुखं मन्यते न हि युक्तिवाञ्छितं प्राणवाञ्छितं च कश्चित्सुखं भवति अनुभवस्तु भ्रान्तानुभवतुल्यः अतो लौकिकं युक्तिवाञ्छितं न प्रमाणं वैदिकश्रुतिरेव प्रमाणमिति अन्योन्यसुखापेक्षित्वेन प्रवृत्तेः सुखाभावस्तत्र सिद्धः पुन्नाम्नो नरकात्त्रायते इति वाक्यात् पुत्रशब्देन नरक उच्यते योषिच्छब्देन च सुतरां नरकं "शालावृकाणां हृदयान्येता इति स सोमो नातिष्ठत" इत्यादिश्रुतिभिः स्त्रीणां निन्दाश्रवणात् "प्रजापतिरमृतमानन्द उपस्थे" इति उपासनार्थं निरूपितं लोकप्रतिपन्नं दृष्टान्तीकर्तुं वा आविर्भूते वा रसे तद्भवति गृहत्वादेव परिच्छिन्नत्वान्नरभावः उभयोः परिगणनायाः कृतत्वात् तत्रेतराभावः सिद्धः यत उभयोः सुखं भवेत् चकारात्तदपत्यानि च ते च द्व्याश्रयवत् ताभ्यामेव सुखेप्सवः अतो युक्तिप्रमाणाभ्यां बाधादन्योन्यप्रवृत्तौ वञ्चित एव समुदायश्चेति निराकर्तुं वञ्चित इत्येकवचनम् ॥ ४७ ॥

एवं गृहासक्तस्य तामसस्य वञ्चनामुक्त्वा शास्त्रादिज्ञस्यापि विवेकिनोऽपि राजसस्य वञ्चितत्वमाह-लब्ध्वा जनो दुर्लभमिति । विवेकसहितं मानुष्यमपि देहं प्राप्य कथञ्चिन्महता कष्टेन अव्यङ्गं सर्वाङ्गसहितं सर्वेन्द्रियसहितं सर्वबुद्धिसहितं च महता शास्त्रप्रयासेन जनत्वात् सर्वदा जायमानः विशिष्टं कदाचिदेव प्राप्नोतीति तादृशमपि प्राप्य भगवन्तं न भजतीति असन्मतिरेव प्राप्तसामग्र्या अन्यथा उपयोगाभावात् इन्द्रियाणामनुपयोगः अनुपयोगश्च पूर्वं निरूपितः "बिले बतोरुक्रमविक्रमान् ये सा वाग्यया तस्य गुणान् गृणीते" इति च अतः भगवत्पादारविन्दाभजने असन्मतिरेव भवति असन्मतित्वाद्वा अभजनमत एव गृहान्धकूपे पतति उपर्युद्गमाभावात् तत्र च पदार्थदर्शनाभावात् अन्धकूपत्वं विवेकी कूपेऽपि पतितः कदाचिदुपायेनोद्गच्छति तदपि नास्तीति दृष्टान्तमाह---यथा पशुरिति । पशुश्च तत्र व्याकुलोऽपि भवति । यतोऽधिकमेव दुःखं प्राप्नोति निर्गमनोपायं च न वेद ॥ ४८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शोचितुं नार्हतीत्यन्यैर्दत्तेषु वरेषु क्षीयमाणेषु सत्सु यथा शोचति नैवं मां प्रपन्नः मद्दत्तवराणामक्षयत्वादिति भावः ॥ ४५ ॥

अष्टाविंशतितमे युगे भगवानवतरिष्यति तं त्वं द्रक्ष्यसीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः ॥ ४६ ॥

त्वद्भक्तिं परिहाय कामा यतः प्रियन्ते पत्रैव तव मायेत्याशयेनाह---विमोहित इति । योषिच्च जनः पुरुषश्च जनो वञ्चित इत्यन्वयः ॥ ४७ ॥

अहो त्रिचतुर्वराटिकामूल्येनायं चिन्तामणिं विक्रीणातीत्याह---लब्ध्वेति । अत्र भारतभूमौ अव्यङ्गमविकलाङ्गम् ॥ ४८ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जन्मकर्माभिधानानीत्यादिभगवद्वाक्येन तं भगवन्तं नारायणं देवम ज्ञात्वा अष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन् मुदा·हर्षेण युक्तः प्रणम्य आह ॥ ४६ ॥

वरान् वृणीष्वेति यदुक्तं तत्र प्राकृतपदार्थविषयकं वरं न कामये तव भक्तिमेव कामये इति वक्तुं तत्र कारणं दर्शयितुं प्राकृतपदार्थासक्तेः संसारहेतुत्वं भगवद्भक्तेः मोक्षहेतुत्वं चाह-विमोहित इति नवभिः । हे ईश! योषित् पुरुषश्चेत्युभयविधो जनः त्वदीयया मायया प्रकृत्या मोहितः अनर्थे अनात्मनि देहे स्वकीये गृहादौ च दृक् अहन्तारूपा ममतारूपा च दृष्टिर्यस्य सः त्वां मुक्तिप्रदं न भजति अन्योन्यवञ्चितः सुखाय अत्यल्पसुखाय जैह्म्यौपस्थ्यानन्दाय दुःखानां तापत्रयाणां प्रभवेषु गृहेषु सज्जते ॥ ४७ ॥

अत्र त्वत्पादारविन्दभजनार्हे मनुष्यलोके अव्यङ्गमवि-

ममैष कालोऽजित ! निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४९ ॥
कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटं [ १ ]स्त्वाऽगणयन् सुदुर्मदः ॥ ५० ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५१ ॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसञ्ज्ञितः ।
स एव कालेन दुरत्ययेन [ २ ] ते कलेवरो विट्कृमिभस्मसञ्ज्ञितः ॥ ५२ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कलाङ्ग भवत्पादारविन्दभजनार्हं मानुषं शरीरं लब्ध्वापि असति तुच्छे विषये मतिर्यस्य सः पादारविन्दं न भजति किन्तु तृणजिघृक्षया पशुर्यथा कूपे पतति तद्वद्विषयजिघृक्षया गृहान्धकूपे पतितो भवति ॥ ४८ ॥

---

भाषा टीका ।

हे राजर्षे ! अब तुम वरदान मांगलो तुम्हारे सब अभीष्ट मनोरथों को हम देवेंगे । क्योंकि ? मनुष्य मेरी शरण आकर फिर कोई भी शोच करने के योग्य नहीं रहता है ॥ ४५ ॥

श्रीशुक उवाच ।

श्रीशुकदेव जी बोले, कि—श्रीभगवान् राजा मुचुकुन्द को जब ऐसी आज्ञा दी तब मुचुकुन्द महाराज बडे आनन्द में निमग्न होकर "अट्ठाइस में युग में भगवान् अवतार लेवेंगे" इस वृद्ध गर्ग के वाक्य का स्मरण करके श्रीकृष्ण चन्द्र को साक्षात् नारायण देव जानते हुए, और श्रीकृष्ण को साष्टाङ्ग प्रणाम कर मुचुकुन्द महाराज स्तुति करते हुए ॥ ४६ ॥

मुचुकुन्द उवाच ।

राजामुचुकुन्द बोले, कि–हे ईश ! अनर्थ (विषयादि में दृष्टिवाला यह पुरुष आप की माया से मोहित हो रहा है, इसी कारण से आप को नहीं भजता है, और जिनो में नित्य नये दुःख पैदा होवैं ऐसे इन घरों में सुख भोगने के लिये आसक्त होता है इस प्रकार इस संसार में स्त्री क्या पुरुष सबही परस्पर वंचित हो रहे हैं ॥ ४७ ॥

हे भगवन् ! इस संसार में ये सब जीव किसी प्रकार परम दुर्लभ इस मनुष्य जन्म को इस भारत भूमि में पाकर भी आपके चरण कमल को नहीं भजते हैं क्योंकि ? इन की मति असत् विषयादिको में लगीहै इसी कारण गृह रूप अन्धकूप में पड़े हुए हैं, और अपने पुरुषार्थ को नहीं जानते हैं जैसे कि–पशु नहीं समुझता है और तृण के लोभ से अन्ध कूप में गिर पडता है ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलमस्य जनस्येयं गतिः किन्तु ममापि तथैवेत्याह—ममैष इति । मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममात एव सुतादिष्वासज्जमानस्य ॥ ४९ ॥

उन्नद्धमदत्वं प्रपञ्चयति—कलेवर इति । घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभवमतो ममैष कालो निष्फलो गत इति ॥ ५० ॥

त्वामगणयन्तं त्वमाक्रमसीत्याह--प्रमत्तमिति । प्रमत्तमनवहितं त्वामन्तकमविगणय्य देहादिष्वासक्तमिति यावत् कुतः प्रमत्तम् इतिकृत्यचिन्तया एवमेवं करणीयमिति मनोरथपरम्परया मनोरथे भग्नेऽपि विषयेषु लालसमुत्सुकं प्राप्तेऽपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमन्तकस्त्वमभिपद्यसेऽभिभवसीत्यर्थः । क्षुधा सृक्किणीलेलिहानोऽहिराखुं मूषकमिवेति ॥ ५१ ॥

किञ्च कालात्मना त्वयाऽभिपन्नो देह एवं भवतीत्याह--पुरेति । श्वसृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसञ्ज्ञितो दग्धो भस्मसञ्ज्ञितो भवति इति बुद्ध्या विचार्यैवम्भूतशरीरे ममतां कुर्वन्तो जना हरिं नाराधयन्ति ते आत्मानि शत्रुभूता ज्ञेयाः सततं यतः—

"योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वम् ।
सुखावहं ये न भजंति विष्णुं ते वै मनुष्यात्मनिशत्रुभूताः ॥
इति ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मम तु तत्र विशेष इत्याह---ममेति । एष बहुयुगलक्षणः निष्फलत्वे हेतुः अजित, हे मद्विधबहिर्मुखावशीकृत ! भक्तिविघ्न हेतुः भूपतेः सर्वपृथ्वीशाभिमानिनः अतो राज्यश्रिया उन्नद्धः सम्वृद्धो मदो यस्य तस्य अतो, मर्त्यात्मबुद्धेः अत एव च सुतादिष्वप्यासज्जमानस्य तत्रापि "इदमद्य मया लब्धम्" इत्याद्युक्तदुरन्तचिन्तया अपारचिन्तनेन । यद्वा, दुःखमन्ते यस्यास्तया तादृशचिन्तया अतो न केवलं निष्फलत्वं किं तु दुःखदत्वमपीति भावः ॥ ४९ ॥

अस्मिन् सर्वदोषास्पदे अगणयन् विस्मरणादिभिरनाद्रियमाणः ॥ ५० ॥

---

[ १ ] त्वामगणय्यदुर्मदः इति वीरराघ० । [ २ ] चेत् इति च वीरराघवीये ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रलोभित इति तैर्व्याख्यातं तत्र प्रमादश्चिन्तान्तरं तथा न भवस्यंवेत्यनन्तरम् इति तद्विद्धीति शेषः एकान्तभक्तानामुपासनान्तरकामनानन्तरशून्यानाम् आशिर्भिः कामनाभिः (कर्म्माभिः) न भिद्यते न प्रविश्यते तासु नासज्जत इत्यर्थः । एतद्दर्शनायैव प्रलोभितोसीति भावः अप्रमादाय अप्रमादभावाय ॥ ६१ ॥

मार्गान्तरे तु कामत्यागयत्नवतामपि प्रमादः स्यादित्याह—युञ्जानानामिति । समादधानानां क्रमात्तादृशानिष्टाजनकस्य भक्तिमार्गस्याभावादेव न क्षीणा विषयादिवासना यस्य तत् ॥ ६२ ॥

इतः परं कृतकृत्य एव त्वमित्याह—विचरस्वेति । मय्यावेशितमानसस्त्वं कामं यथेष्टं विचरस्व विहर यतः अस्त्वेवेति अस्त्येवेति पाठे यथास्ति तथैवास्तीत्यर्थः ॥ ६३ ॥

क्षात्रेति तैरवतारितं तत्र भीषयन्निति सहजसौशील्येन तद्गुणमनूद्य पुनरतिकारुण्यात् स्वस्मिन् । तस्य प्रेमविशेषसम्पादकोत्कण्ठावर्द्धनार्थं कालविलम्बनेनेति भावः आनुषङ्गिकप्रयोजनमाह—लोकसङ्ग्रह इति । अतः भीषयन्नित्यार्ष इव प्रयोग आर्षानुगामित्वादिति ज्ञेयम् यद्वा, तदर्थमेव कृत्यशेषाभासं प्रदर्शयन्नाह, क्षात्रेति । तपसा मयि चित्तैकाग्र्येण अघं मूर्च्छितां तादृशवासनाम् ॥ ६४ ॥

तथैवाह—जन्मनीति । उत्तरपक्षे तथैव प्रारब्धादिति भावः त्वदभीष्टं मामेव केवलं न तु त्वदनभीष्टं विभूत्यादिकमपि उप सामीप्ये नैष्यसि प्राप्स्यसि साक्षाद्विचित्रमत्परिचर्य्यां करिष्यसीत्यर्थः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उत्थितं विषयेषु प्रवृत्तम् ॥ ६२—६३ ॥
मृगयादिभिः लोकरक्षाऽनुपयुक्तव्यापारैः ॥ ६४—६५॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये—
एकपञ्चाशत्तमोऽध्यायः ॥५१॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वरैः प्रलोभित इति यत्तदप्रमादाय विद्धि बुद्धेरप्रमादार्थं विजानीहि । ननु, प्रलोभनात्कदाचिद्बुद्धिप्रमादोऽपि स्यात्तत्रश्च भ्रश्येदत आह—न धीरिति । मय्येकभक्तानामनन्यप्रयोजनभक्तानां मतिः क्वचित्कदाचिदपि आशीर्भिः कामैः न भिद्यते न विहन्यते ॥ ६१ ॥

अभक्तानां तु भिद्यत एवेत्याह—युञ्जानानामिति । प्राणायामादिभिरुपायैर्युञ्जानानां नियुञ्जानानाम्मनोनियमनं कुर्वतां तु मन अक्षीणवासनम् अक्षीणा वासना यस्य तत् हेतुगर्भमिदं तस्मात् । क्वचिद्विषये कदाचिद्वा उत्थितं विषयप्रवणं दृश्यते ॥ ६२ ॥

विचरस्वेति मय्यावेशितं मानसं येन तथाभूतस्त्वं महीं कामं यथेच्छं विचरस्व नित्यम् अनपायनी भक्तिस्त्वस्त्येव तथानुगृह्णामीति भावः ॥ ६३ ॥

ननु, भक्त्यैकलभ्यो भवांस्तामन्तरेणाप्यधुना प्रत्यक्षितः किमिति मुक्तिं विलम्बयसीति विदिततदभिप्रायः प्राह—क्षात्रेति । क्षात्रवर्णोचितधर्मनिष्ठो मृगयादिभिर्लोकरक्षानुपयुक्तमृगयादिव्यापारैर्जन्तून् हतवानसि ततस्त्वमहमेवापाश्रयः संश्रयो यस्य सः मद्भक्तिनिष्ठः संस्तपसा मत्प्राप्तिप्रतिबन्धनिवर्तकेन भक्तियोगोत्पत्तिप्रतिबन्धकनिवर्त्तकेन वा तपसा तज्जन्तुवधप्रयुक्तं पापं जह्यपनय प्रत्यक्षितपरमात्मनामप्यघे प्रारब्धे तपसानुभवेन वा विनाशिते सत्येव परमात्मप्राप्तिरिति भावः ॥ ६४ ॥

कदा तदघक्षयः त्वत्प्राप्तिश्चेत्यत आह—जन्मनीति । अनन्तरे एतज्जन्माव्यवहितोत्तरजन्मनि त्वं द्विजश्रेष्ठो भूत्वा सर्वभूतसौहार्दवान् समः कृत्स्नं जगद्ब्रह्मात्मकं पश्यंश्च केवलं प्रकृतिमण्डलात्परतः स्थितं मामुपैष्यसि प्राप्स्यसि वै नूनम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरैः प्रलोभित इति यत्तदप्रमादाय विद्धि नैतच्चित्रमित्याशयेनाह—नेति ॥ ६१ ॥

क्षीणा दुष्कर्मवासना यस्मिंस्तत्तथा उत्थितं विषयाभिमुखम् ॥ ६२—६४ ॥

केवलं मां "केवलो निर्गुणश्च "इति श्रुतेः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
( विजयध्वजरीत्या चतुःपञ्चाशत्तमः ५४ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वदभीष्टं मामेव केवलं नतु त्वदभीष्टं विभूत्यादिकमपि उपसेवार्थं सामीप्ये नेष्यामि ॥ ६४—६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भगवानपि तथैवान्वमोदतेत्याह—प्रलोभित इत्यादिवरैः प्रलोभितोपि यत्त्वम् अप्रमादाय प्रमत्तो नाभूरित्यर्थः । विद्धि जानीहि तत् मयि एकान्तभक्तानाम् आशिर्भिः क्वचिदपि न भिद्यते तेन त्वमेकान्तभक्तोसि तस्मान्मत्पदाब्जं विना नान्यं मोक्षादिकमपि यदभिलषसि तत्तदुचितमेवेति वाक्यार्थः ॥ ६१ ॥

व्यतिरेके दोषमाह—युञ्जानानमित्यादि । अभक्तानां प्राणायामादिभिर्मनो युञ्जानानामपि अक्षीणवासनं मनः पुनरुत्थितं दृश्यते

श्रीमज्जीवगोस्वामीकृतबृहत्क्रमसन्दर्भः ।

मद्भक्तानान्तु मनो मयि लीनत्वान्न पुनरुत्तिष्ठतीति वाक्यार्थः ॥ ६२ ॥

तस्मात्त्वया यदभिलषितं तदेवास्त्वित्याह—अस्त्वेवमित्यादि । भक्तिर्मय्यनपायिनीति । अनपायिनी कैवल्यनिरपेक्षिणी ॥ ६३-६४

भूत्वा द्विजवर इत्यादि । द्विजवरस्त्वं क्षत्रियश्रेष्ठत्वं भूत्वा उत्पत्य स्थितः अचिरात् अचिरेणैव माम् अवाप्स्यसि अवापः अतीतार्थे भविष्यत्प्रयोगः यद्वा हे द्विज ! क्षत्रियत्वे वरो भूत्वा अप्राकृतो भूत्वा प्राप्स्यसि इदानीं तु प्राप्तवानसि किं त्वन्ते देहः प्राकृतः ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, स्वामिना कथमेवं प्रलोभ्यते तत्राह—प्रलोभित इति । यद्यपि वरैस्त्वं प्रलोभितः । तदप्यप्रमादायैव भगवदीयस्य कदाचिदिच्छा स्यात् विषया न दृष्टा इति तदन्यदत्तैर्विषयैः स्वाभाविकैर्वा दुष्टं न भवतीति मयैव दीयन्ते ततो विषयभोगः प्रमादाभावश्च सिद्ध्यति विद्धीति नात्र सन्देहो विधेयः हेत्वन्तरमप्याह—न धीर्मय्येकभक्तानामिति । एकभक्ता एकस्यैव भक्ताः न मार्गान्तरप्रेप्सवः किन्तु भक्ता एवेति आशीर्भिर्वरप्राप्तौ तत्रापि भगवतः सकाशात् क्वचिदित्यस्य पक्षस्याव्यभिचार उक्तः ॥ ६१ ॥

एवं भोगमोक्षावविरुद्धौ भगवन्मार्ग एव नत्वन्यत्रेति तदेव पक्षान्तरं दूषयति-युञ्जानानामिति । भक्तिमार्गव्यतिरेकेण केवलानामभक्तानां प्राणायामादिभिर्मनोयुञ्जानानां मनोनिरोधार्थं यतमानानां क्वचिदुत्थितं दृश्यते यथा सौभरिप्रभृतीनां तत्र हेतुः अक्षीणवासनमिति राजन्निति सम्बोधनं वासनाक्षयाभावानुभवार्थं भक्त्या तु वासना क्षीयते तत्र अलौकिकप्रकारं धारयितुं कामा दीयन्ते तदुपद्रवाभावश्च सम्पाद्यत इति भगवता भक्तिमार्गः स्तुतः ॥ ६२ ॥

एवं स्तुत्वा तन्मार्गं प्रविष्टस्य भयाभावः सिद्ध एवेति वदन् कामविहारं बोधयति—विचरस्वेति । यतो महांस्त्वमतोऽन्यथा विहारः स्वत एव निवृत्तः । किञ्च, मय्यावेशितमानसः सन् विचरस्व कीदृशी जगति भगवल्लीलेति जिज्ञासुरिव । चरणसेवामेव प्रार्थये नान्यदिति यदुक्तं तत्राह—अस्त्वेवेति अत्र भक्तिदानं नापेक्ष्यते त्वयि भक्तिः सहसैवास्ति उत्कर्षोऽपि भक्तेः सहज एवेत्याह—अनपायिनीति नित्यदेति च देशकालवस्तुपरिच्छेदा निवारिताः अपायः स्वतो देहतश्च यद्यपि कालनिषेधोऽप्यायाति तथापि निषेधमात्रपरत्वाभावाय निमित्तभूतः कालः भक्तेरनुगुण इति ज्ञापनार्थं नित्यदेत्युक्तं तुभ्यमिति सम्प्रदानत्वेनैव पूर्वं दानं सूचितं मय्यनपायिनीति वा मद्विषयिणीमत्कृपया वा अग्रेऽपि न निवर्तिष्यतं इति वरदानम् ॥ ६३ ॥

ननु सायुज्यं कुतो न दीयत इत्याशङ्क्याह—क्षात्रधर्मस्थित इति । क्षत्रियाणां धर्मः जातिप्रयुक्तो घोरो द्विविधः युद्धे भ्रातरमपि हन्यात् पापर्द्धौ पलायमानानपि मृगान् हन्यात् । अतस्तस्य दोषस्य परिहारः कर्तव्यः जन्तूनिति तेषामपराधाभावः सूचितः आदिशब्देन भ्रममुत्पाद्य मारणं वागुरादिना वा तस्य निराकरणोपायमाह—समाहित इति । जितेन्द्रियान्तःकरणः सन् तत्पापं तपसा जहि ननु तपस्यपि पापं श्रूयते कियान् वार्थः स्वपरद्रुहा धर्मेण, मां चैवान्तःशरीरस्थमित्यादिवाक्यैः तत्राह—मदुपाश्रय इति । मामेवाश्रित्य तपःकरणे अन्तर्गतक्लेशजननाभावात् न दोषो भविष्यतीति भावः ॥ ६४ ॥

ततो यद्भाव्यं तदाह—जन्मन्यनन्तर इति अनन्तरे जन्मनि त्वं द्विजवरो भविष्यसि अन्यथा पुरुषेषु कालरूपे वा लयो भवेत् लीलासहिते वा ततो लीलार्थं पुनरागमने आगमनमपि स्यात् केवलं पुरुषोत्तमे तु आगमनशङ्काभावः अस्य च प्रमाणे श्रद्धा महती स्थितेति पुष्टिमार्गेण योजितवान् मर्यादायां ब्राह्मणस्यैव मुक्तिः तथापि कैवल्यमिति "ये यथा मां प्रपद्यन्ते" इति सिद्धान्तान्न कोऽपि दोषः ॥ ६५ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मज श्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
द्वितीयाध्यायविवरणम् ॥ २ ॥ ५१ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अप्रमादाय तवाप्रमादं द्रष्टुमन्योपासकान् दर्शयितुमिति वा "क्रियार्थोपपदस्य" ( २।३।१४ ) इत्यादिना चतुर्थी यतो न धीरित्यादि ॥ ६१ ॥

अन्योपासकानां तु प्रमादो भवत्येवेत्याह—युञ्जानानामिति । अभक्तानां मद्भक्तभिन्नानां योगिनां ज्ञानिनां चेत्यर्थः । प्राणायामशमदमादिभिः उत्थितं विषयाभिमुखं भवति ॥ ६२ ॥

तुभ्यमिति पूर्वमधुनापि विशेषतो ददैव ॥ ६३ ॥

हा हा अतः परमपि मां स्वमङ्घ्रियोजयितुमिच्छामि नैव नैवमिति तस्य महोत्कण्ठामालक्ष्य भगवता विचारितम् अयमस्मिन्नवतारे स्वसङ्गे नेतुमनर्हः मदीयलीलापरिकरा हि द्वापरान्ते एवा उद्धवाक्रूरादयो युधिष्ठिरार्जुनादयश्च इममेतन्मन्वंतरप्रथमसमयभवमतिप्राचीनं दृष्ट्वा अहो कोऽयमतिदीर्घतमोऽतिस्थूलतमो अस्मदननुरूपो मानुष इत्युक्त्वा हसिष्यन्ति तथा सम्प्रत्येव जरासन्धाद् पलायनलीलायां तथाग्रिमासु रुक्मिणीहरणादिलीलासु जरासन्धादिभिः शाल्वादिभिश्च सङ्ग्रामे नायं स्वसंगानुरूपो भवितुमर्हति अयं हि तान् मद्विपक्षान् मशकानिव करतलाभ्यामेव धृत्वा वधिष्यन्तीत्यत इमं स्वसङ्गाद्वियोजयितुं कां युक्तिं करोमीति विचिन्त्य केवलमलीकोक्तिमयं तत् प्रत्यायकं किमप्याह—क्षात्रेति ॥ ६४ ॥

ननु, तर्हि त्वत्सङ्गी कदा भविष्यामीत्यत आह—जन्मनीति । अयमर्थः अतः परं देहान्ते त्वं मद्धाम वैकुण्ठं यास्यस्येव त्वद्वैरिभ्योऽप्यस्मिन्नवतारे मोक्षं वैकुण्ठवासं च ददामि किं पुनस्तुभ्यं परमभक्ताय किं त्ववतारान्तरे त्वां स्वसङ्गिनं लीलापरिकरं च करिष्यामि यदा त्वां स्वं च तुल्यकाल एवाभिर्भावयिष्यामीति अनन्तरे जन्मनि मम च तव चेत्यर्थः सर्वभूतानामुपकारकत्वात् यथायोगं विद्यामैत्रा

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नाम सुहृत्तमः द्विजवरः परमादरणीयो विप्रो भूत्वा मां केवलं वैराग्यत्वाभिप्परिग्रहमुपैष्यसि मत्सङ्गे एवस्थास्यसीत्यर्थः ॥ ६५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः ॥ ५१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वं वरैः प्रलोभित इति यत् तदप्रमादाय अप्रमादख्यापनाय विद्धि जानीहि आशीर्भिः प्राप्ताभिरपि न भिद्यते न सज्जते दीयमानाभिर्वा न भिद्यते न चाल्यते इत्यर्थः ॥ ६१ ॥
उत्थितं विषये प्रवृत्तम् ॥ ६२ ॥
तुभ्यं तव ॥ ६४ ॥
केवलमनुपमं प्रकृतिमण्डलात् परतः स्थितम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकपञ्चाशत्तमाध्यायार्थप्रकाशः ॥ ५१ ॥

---

भाषा टीका ।

और हमने जो तुम्हारे लिये वरदान का लोभ दिया सो तुम्हारी सावधानी के अर्थ जानो, और यह भी तुम स्मरण रक्खो कि-हमारे मात्र विषयमें ही एक भक्ति वाले पुरुषों की बुद्धि कभी मनोरथों से भिन्न ( खंडित ) नहीं होती है ॥ ६१ ॥

हे राजन् ! और जो लोग हमारे भक्त न होकर केवल प्राणायामादि योगांगो से ही मन की शुद्धि का प्रयत्न करते हैं उनके मन की वासना क्षीण नही होती, अत एव किसी समय, विषयों के सन्निधान होने से उन लोगों का मन चलायमान होता हुआ देख पडता है ॥ ६२ ॥

इस लिये तुम मेरे विषे मन को लगाकर यथेष्ट पृथवी में विचरो, और मेरे विषे तुम को सर्वदा अनपायिनी ( विघ्नरहित ) भक्ति होवे यही तुमको हमारा वर है ॥ ६३ ॥

और इस जन्म में तो तुम ने क्षत्रिय धर्म में स्थित हो के मृगया इत्यादिक से बहुत से जन्तुओं का वध किया है, इस कारण अब तुम सावधान होकर मेरा आश्रय लेकर तप करके उस पापको नष्ट करो ॥ इस श्लोक में शिकार खेलने को क्षत्रियों का धर्म कहा, और पश्चात् उसको पाप कहकर तप के द्वारा दूर करने को भी कहा, इससे यह निश्चय करना चाहिये कि-विशेष धर्म के आगे सामान्य धर्म पाप सदृश ठहरता है ॥ ६४ ॥

हे राजन् ! तदन्तर फिर दूसरे जन्म में तुम प्राणि मात्र के परम सुहृद ऐसे ब्राह्मण होकर केवळ हमारे गुण गान करके हमको प्राप्त हो जाओगे ॥ ( वही राजा मुचुकुन्द, विप्र वर श्री जयदेव कवि हुए ऐसी जनश्रुति लोक में सुनी जाती है ) ॥ ६५ ॥

इति श्रीमद्भागवत दशमस्कन्धोत्तरार्द्ध में इकावन अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्य कृत
भाषा टीका समाप्ता ॥ ५१ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशत्तमोऽध्यायः ।

---

श्रीशुक उवाच ।

इत्थं सोऽनुगृहीतोऽङ्ग ! कृष्णेनेक्ष्वाकुनन्दनः ।
तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात् ॥ १ ॥
संवीक्ष्य क्षुल्लकान् मर्त्यान् पशून्वीरुद्वनस्पतीन् ।
मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥
तपःश्रद्धायुतो धीरो निःसङ्गो मुक्तसंशयः ।
समाधाय मनः कृष्णे प्राविशद्गन्धमादनम् ॥ ३ ॥
बदर्याश्रममासाद्य नरनारायणालयम् ।
सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम् ॥
अन्वमोदत सन्देशं रुक्मिण्या द्विजवर्णितम् ॥ १ ॥ १

क्षुल्लकानल्पप्राणान् ॥ २ ॥
तपसि श्रद्धायुतः ॥ ३ ॥
तत्र च बदर्याश्रमम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णेन साक्षात् स्वयं भगवतानुऽगृहीतः अत इक्ष्वाकुकुलनन्दनः सम्यक् साष्टाङ्गं बहुशो नत्वा एवमस्य पूर्वमेव निष्क्रामणे श्रीभगवदाज्ञया महादरेण शैघ्र्यात् श्रीभगवता च स्वसङ्गेनानिष्क्रामणं तस्य तत्रांऽथतानवाप्तेः प्रथममेव निष्क्रामणञ्च स्वोपदिष्टस्य शीघ्रानुष्ठानबोधायेति ज्ञेयम् ॥ १ ॥

वीरुधो वनस्पतींश्च उत्तरामिति श्रीनरनारायणाश्रमममनस्यभिप्रायेण तत्र हि कलिर्न प्रभवतीति यद्यपि—

"यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् "

इति द्वादशोक्तानुसारेण श्रीकृष्णप्राकट्ये तत्रापि तत्प्रभावो नासीत् तथापि चिरं तत्प्राकट्यं न स्यादित्यभिप्रायेण तथा कृतमिति ज्ञेयम् ॥ २ ॥

धीरः विवेकनिपुणः अतो मुक्तसंशयः शास्त्रादिभिः कृतपरमनिश्चयः अतो निःसङ्गः अन्योपासनाफलाकाङ्क्षारहितः । यद्वा, मुक्तसंशयत्वादेव तपसि भगवदेकाग्रचित्तत्वे श्रद्धायुक्तः अत एवात्र निः सङ्गः अतः कृष्णे मनः समाधिनिष्ठं कृत्वेत्यर्थः । अथवा तपसि भगवत्येव चित्तैकाग्र्ये श्रद्धायुतः सादरः अतः कृष्णे स्वयं भगवति तस्मिन्नेव मनः सम्यक् तदेकनिष्ठत्वेनाधाय अत एव प्रकर्षेण सर्वोत्कृष्टप्रकारेणाविशत् ॥ ३ ॥

बदर्य्याश्रमेऽपि नरनारायणालयमासाद्येत्यर्थः । यद्वा, नरनारायणयोरालयः आश्रमो यस्मिन् तम् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥
क्षुल्लकान् । अल्पपरिमाणान् ॥ २--१५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथावशिष्टं मुचुकुन्दवृत्तान्तमित्थं मुचुकुन्दमनुज्ञाप्यानुगृहीतवतो भगवतोऽनन्तरचेष्टितं चाह—इत्थमिति । अङ्ग हे राजन् ! श्रीकृष्णेनेत्थमनुगृहीतो मुचुकुन्दस्तं श्रीकृष्णं प्रदक्षिणीकृत्य प्रणम्य च गुहाद्वारान्निर्गतवान् ॥ १ ॥

स मुचुकुन्दः क्षुल्लकानल्पपरिमाणान् मर्त्यादीनवलोक्य कलियुगं प्राप्तं विज्ञायोत्तरांदिशं प्रतिजगाम तपस इति शेषः ॥ २ ॥

धीरो जितेन्द्रियः देहतदनुबन्ध्यादिष्वासक्तिरहितः मुक्तसंशयः सेत्स्यामि वा न वेत्येवंविधो येन सः श्रद्धायुतः कर्तव्यविषयत्वरायुक्तः कृष्णे भगवति स्वमनः सम्यगाधाय स्थिरीकृत्य गन्धमादनं पर्वतं प्राविशत् ॥ ३ ॥

तत्रापि बदर्याश्रमं नरनारायणयोरालयं स्थानं प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा शान्तः जितमनाः हरिमाश्रितबन्धहरं भगवन्तं तपसाऽऽराधयामास ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इक्ष्वाकोर्वंशं नन्दयतीति इक्ष्वाकुनन्दनः सम्प्रम्य सम्यक् नत्वा ॥ १ ॥

क्षुल्लकान्। गुणतः परिमाणतश्चाल्पमानान् ॥ २ ॥

इदं तत्त्वमुतातत्त्वमिदमिति संशयो मुक्तो येन स तथा ॥ ३—४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—६ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १—१५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पुरुषाऽनुग्रहं पूर्वमुक्त्वा भगवता कृतम्।
अनुग्रहः कालतुल्यस्ततो द्वादशधोदितः ॥
तत्र मुख्या तु लक्ष्मीः स्यात् तस्यां त्रेधा हरेः कृपा।
मानसेनाथ कायेन वेदेनेति निरूप्यते ॥
गान्धर्वो मानसः प्रोक्तः दूरत्वाद्वचनामिधा।
कृष्णानुग्रहयुक्तानां कृतार्थत्वे ततः परम् ॥
स्त्रीणां मुक्तिर्निरूप्येति मुचुकुन्दतपःकथा।
प्रसङ्गात्तामसानां हि वधो देवहिताय हि।
पलायनं लीलयैव सोऽप्यनुग्रह ईर्यते ॥
सात्त्विके राजसे चैव तामसे च हरेः कृपा।
इति दर्शयितुं राज्ञो वृत्तं लक्ष्म्याः शिवस्य च ॥

तृतीये अध्याये अनुग्रहनिरूपणप्रस्तावे मुचुकुन्दस्य लक्ष्म्याश्च हितं कृतवानिति निरूप्यते कायिकवाचिकमानासिकभेदेन प्रथमं सात्त्विके भगवान् मुचुकुन्दे कृपां कृतवानिति तस्य भगवद्वाक्येन तपःकरणमुच्यते, इत्थमिति चतुर्भिः। एवं प्रकारेण भगवता अनुगृहीतः मुचुकुन्दः तपोमिमित्तं गुहातो निर्गतः भगवदनुग्रहव्यतिरेकेण भगवद्वाक्ये श्रद्धा न भवतीति भगवदनुग्रहः कारणत्वेनोच्यते इक्ष्वाकुनन्दन इति इक्ष्वाकुरत्यन्तं भक्त इति तद्वंश्योऽयमिति कृपाया हेतुत्वेनोक्तं ततस्तं भगवन्तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य ततः सम्यक् नत्वा साष्टाङ्गं प्रणम्य पूर्वमेव शयनस्थानात् गुहामुखे प्रकाशयुक्ते स्थित इति ततोऽपि निश्चक्राम ॥ १ ॥

ततस्तपः कचित् कर्त्तव्यमिति विचार्य भारतखण्ड एव युगधर्माणां प्रवृत्तिरिति विरुद्धकालयुक्ते देशे तपो न कर्त्तव्यमिति वर्षान्तरं गन्तुम् उत्तरदेशे गत इत्याह—सम्वीक्ष्येति। स हि सत्ययुगे शयनं कर्तुं प्रवृत्तः कलियुगे उत्थितः यदैव भगवता मथुरा त्यक्ता तदैव कलिः प्रवृत्त इति मुख्यः सिद्धान्तः पञ्चविंशतिमे वर्षे कलिरायास्यतीत्येवं निश्चित्य भारतखण्डं परित्यज्य समुद्रमध्ये द्वारकां कृतवान् ततो भगवति तत्र गते कलिः सम्यक् प्रविष्टः कालाभिमानिनी देवता तु भगवति स्वस्थानं गते समायास्यति अयं विचारो द्वादशे कर्त्तव्यः कलिस्त्विदानीं प्रविष्टः सन्ध्यासमयोऽयं वा मध्यकाल एवाग्रे निर्णय इति कालप्रवृत्तौ नियतं हेतुं दृष्टवानित्याह—स मुचुकुन्दः क्षुल्लकान् अल्पप्रमाणान् कालेन न ह्रासम्प्राप्तान् मनुष्यान् अनेन तेषां मरणमपि शीघ्रं कालेनेति सूचितं वीरुधः लतागुल्मादीन् वनस्पतीन् वृक्षानपि चतुर्विधान् अप्यायुःप्रमाणाभ्यां ह्रासयुक्तान् विलोक्य कलेरेवायं धर्म इति साधारणत्वाद्विनिश्चित्य उत्तरां दिशं जगाम ॥ २ ॥

ततो विधानपूर्वकमिदं देशमतिक्रम्य गत इत्याह—तपः श्रद्धायुत इति। तपः सर्वेन्द्रियनिग्रहः श्रद्धा च भगवद्वाक्ये ताभ्यां युतः दृष्टापि विषयान् विघ्नत्वेन प्राप्तान् वा मुग्धः। किन्तु धीर एव जातः ततो गच्छन् राजेति यं कश्चिदनुवर्त्तमानमपि परित्यज्य निःसङ्ग एव सन् शरीररक्षादौ मुक्तसंशयः। इतस्ततो दर्शनाद्यर्थं विक्षिप्तमपि मनः कृष्णे समाधाय गन्धमादनं पर्वतं प्राविशत् गरुडगङ्गातः उत्तरभागे बदरिकाश्रमपर्यन्तं सर्वतोऽपि पर्वतो गन्धमादनः ॥ ३ ॥

ततस्तत्रापि बदर्याश्रममासाद्य यत्र नरनारायणयोरालयं तत्र शीतादिबाधा महतीति तन्निवृत्त्यर्थं यत्नकरणे तपो न युज्यते इति तदर्थमाह—सर्वद्वन्द्वसह इति। अन्तरपि शान्तः तपसा हरिमाराधयन् हरिपदेन यथैव तस्य तपसा आराधनं सिद्ध्यति तथैव कृतवानिति लक्ष्यते ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

द्विपञ्चाशत्तमे वैरिदुर्लक्ष्यत्वं हरेर्गिरेः।
प्रवर्षणस्य दाहश्च भैष्मी सन्देशवाक्श्रुतिः ॥ १ ॥
प्राप्तम् आसन्नत्वात् प्राप्तप्रायमित्यर्थः ॥ २—४ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्विपंचाशत्तमे मुचुकुन्दस्य श्रीकृष्णाराधनपरत्वं श्रीकृष्णस्य म्लेच्छवधप्रवर्षणगिरिप्रवेशजरासन्धविमोहनं द्वारवतीप्रवेशरुक्मिणीसन्देशश्रवणादिचरितं च वर्ण्यते तत्र तावन्मुचुकुन्दवृत्तं वर्णयति—इत्थमिति चतुर्भिः। ॥ १ ॥
मर्त्यादीन् क्षुल्लकान् अल्पपरिमाणान् प्राप्तं प्राप्तप्रायम् ॥ २ ॥
तपसि कृष्णाराधनप्रधाने श्रद्धायुतः ॥ ३—४ ॥

भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे राजन्! इस प्रकार इक्ष्वाकुनन्दन मुचुकुन्द महाराज पर जब श्रीकृष्ण भगवान् ने अनुग्रह किया, तब राजा मुचुकुन्द श्रीकृष्णचन्द्र को परिक्रमा दे प्रणाम कर उस गुहा से निकलते हुए ॥ १ ॥

बाहर निकल कर मुचुकुन्द महाराज ने मनुष्यों को छोटे२ देखे, तथा पशु वृक्ष वनस्पतियों को छोटे२ देख कर, कलियुग को आने वाला समझकर राजा उत्तर दिशा को जाते हुए ॥ २ ॥

भगवान्पुनराव्रज्य पुरीं यवनवेष्टिताम् ।
हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥
नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ।
आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥

विजयध्वजपाठः (ततो राजा जरासन्धः कालान्तानलसन्निभः ।
विधाय मकरव्यूहं रथनागाश्वपत्तिमत् ।
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे ॥ क ॥
ततो विलोक्य गोविन्दो वृक्षमुत्पाट्य रंहसा ।
गजान् रथान् हयान् युद्धे पातयामास दुर्मदः ॥ ख ॥
कृष्णेन हन्यमानास्ते वृक्षेण रिपुकुञ्जराः ।
पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः ॥ ग ॥
रथाश्च रथिभिर्युक्ताः सतुरङ्गाः सचोदकाः ।
निष्पिष्टा इव न क्वापि दृश्यन्ते कुरुसत्तम ॥ घ ॥
रामस्तु मुष्टिना चाजौ कुञ्जरान्मदशालिनः ।
जघान कुपितः शैलान् वज्रेणेव सुरेश्वरः ॥ ङ ॥
राममुष्टिप्रहारेण विकीर्णस्यन्दना नृप ! ।
न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत् ॥ च ॥
यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु ।
निहत्य यादवान्विश्वांस्तद्गृहीत्वा जरासुतः ॥ छ ॥
अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह !।

भाषा टीका।

तप में श्रद्धा वाले बड़े धीर निःसङ्ग संशय रहित होकर श्रीकृष्णचन्द्र में मन को लगा कर गन्धमादन पर्वत में प्रवेश करते हुए ॥ ३॥

वहां पर श्री नर नारायण का आलय ( स्थान ) जो श्रीबदरिकाश्रम है, उसको प्राप्त होकर सब सुख दुःखादि द्वंद्वों को सहते हुए शांत होकर श्रीहरि का आराधन करते हुए ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

निन्ये नयन्मार्गे चलति स्म ॥ ५—६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मथुरां यवने हते इति पुरीं यवनवेष्टितामिति पाठक्रमः ॥ ५ ॥

चकारादुष्ट्रादिभिश्च तदीयैरेव प्रतिवारं त्रयोविंशतिसङ्ख्यानामक्षौहिणीनां न तु न्यूनाधिकानां सप्तदशसु राजभ्यस्तावत्तावत्सैन्यादाननिर्णयात् ॥ ६॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ मुचुकुन्दानुग्रहोत्तरं भगवच्चेष्टितमाह—भगवानित्यादिना यवनैरावृतां मथुरामागत्य म्लेच्छानां बलं हत्वा । तदीयं म्लेच्छसम्बन्धि सर्वं धनं द्वारकां प्रतिनिन्ये प्रापयामास ॥ ५ ॥

अच्युतेन चोदितैर्नृभिः कर्तृभिर्गोभिः साधनैश्च धने नीयमाने सति पूर्ववत्त्रयोविंशत्यक्षौहिणीसेनाधिपतिर्जरासन्ध आजगाम ॥ ६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रकृतमनुसरति—भगवानिति । यवनेनाहृतमानीतम् ॥ ५ ॥
त्रयोविंशत्यनीकपः त्रयोविंशदक्षौहिणीपतिः ॥ ६ ॥

विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ।
विजयध्वज पाठः (तं चापतन्तमालोक्य सहितं सबलैर्नृपैः ।
कीर्यमाणौ शरौघेण वृष्ट्येव करिपोतकौ ॥
विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ) ।
मनुष्यचेष्टामापन्नौ राजन् ! दुद्रुवतुर्द्रुतम् ॥ ७ ॥
विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ।
पद्भ्यां पद्मपलाशाभ्यां चेलतुर्बहुयोजनम् ॥ ८ ॥
पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ।
अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥
विजयध्वज पाठः (प्रद्रुत्य वीरौ विश्रान्तौ करवीरपुरे निशि ।
तावारुरुहतुर्वीरौ गोमन्तमुदिते रवौ ॥ क ॥
सिद्धचारणगन्धर्वविद्याधरनिषेवितम् ।
आरुह्य शैलं गोमन्तं रामकृष्णौ त्वरान्वितौ ॥ ख ॥
प्रवर्षणाख्यन्तच्छृङ्गं यत्राब्दा नित्यवर्षिणः ।
तत्र तावासतू राजन् ! फलमूलाशनौ सुखम् ॥ ग ॥
जरासन्धस्तु दुष्टात्मा तावनुद्रुत्य माधवौ ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रथनागाश्वपत्तिमदिति क्रियाविशेषणं रथादिमन्तमिति व्यत्ययेन वा योज्यम् ( क )

दुर्मदो यथा जन्तून्हन्ति तथा लुप्तोपमम् ( ख )

अद्रयो गिरयः "अद्रयोऽर्कगिरिद्रुमाः" इति ( ग )

सतुरङ्गाः सचोदकाः ससादिनः निष्पिष्टाः हताः ( घ—च )

यादवैर्द्वारकां गच्छन्तं नीयमानं यवनस्य विभ्रं धनं दृष्ट्वा अनुद्रुत्य यादवानभिद्रुत्य निर्जित्य ( छ )

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्य व्यवस्थामुक्त्वा भगवतोपि द्वारकायां गमनमाह—भगवानिति दशभिः । मध्ये तामसस्य शिवस्य ब्राह्मणानां वाक्यं कृतवानिति निरूप्यते यवनवधानन्तरं भगवान् पुनर्मथुरामागत्य यवनैर्वेष्टितां दृष्ट्वा मथुरामिमिसं म्लेच्छबलं हत्वा तदीयं धनं हतानां मुकुटादिरूपं द्वारकां निन्ये ॥ ५ ॥

वृथैव धनं परित्याज्यमिति राज्ञे देयमिति यवनधनं च ग्राह्यमित्युभयं साधयितुं किञ्चित् दूरं गृहीत्वा गतवानित्यर्थः तत्कटकस्था एव वाहकाः पदातयो बलीवर्दाश्च ते सर्वे भगवता प्रेरिताः जरासन्धस्य सुखार्थं जये हि किञ्चित्प्राप्यत इति तस्मै दानार्थं नीतवन्तः । एतस्मिन् समये भगवदिच्छयैव समागतो जरासन्धः त्रयोविंशत्यक्षौहिणीयुतः । अधिकानयने सर्वोपि प्राकृतः क्षीणो भवेदिति प्रकृतिं परित्यज्य प्राकृतं सर्वमेव गृहीत्वा समायातीति ख्यापनार्थं सर्वत्र त्रयोविंशत्यक्षौहिण्य उच्यन्ते ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निन्ये नेतुमुपचक्रमे ॥ ५—६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निन्ये नृभिर्गोभिश्च नेतुमुपचक्रमे ॥ ५—६ ॥

---

भाषा टीका ।

भगवान् श्रीकृष्णचन्द्र भी फिर यवनों से घेरी हुई मथुरा पुरी में आते हुए और म्लेच्छों की सेना को मार कर सेना के धन को द्वारका को पहुंचाते हुए ॥ ५ ॥

जब तक कि, उस सेना के धन को भगवान् की आज्ञा से मनुष्य बैलों से द्वारका को भर २ कर लेजाते रहे, इतने में ही तेईस २३ अक्षौहिणी सेना को लेकर जरासन्ध आ पहुंचा ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वेगरभसं वेगोद्रेकम् ॥ ७ ॥

रुरोध शैलं गोमन्तं महत्या सेनया वृतः ॥ घ ॥
स भूपालान् समाहूय स्वानुगान् युद्धदुर्मदान् ।
कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा ॥ ङ ॥
जयद्रथं सिन्धुपतिं सोमदत्तं च कौरवम् ।
गान्धारराजं शकुनिं वैदर्भं रुक्मिमेव च ॥ च ॥
सुदक्षिणञ्च काम्बोजं विराटं मत्स्यभूपतिम् ।
एतानाज्ञापयामास पूर्वस्यान्दिशि भूपतीन् ॥ छ ॥
पाञ्चालराजं द्रुपदं दमघोषं च चेदिपम् ।
ब्रह्मदत्तं च शाल्वेशमेकलव्यं निषादपम् ॥ ज ॥
बाह्लिकं च कुरुश्रेष्ठं युधामन्युं च दुर्जयम् ।
विन्दानुविन्दावावन्त्यौ काशिराजं च पौण्ड्रकम् ॥ झ ॥
आज्ञापयामास नृपानेतान् वीरो जरासुतः ।
गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो ! ॥ ञ ॥
द्रुमं किम्पुरुषाधीशं दन्तवक्त्रं सहानुजम् ।
वीरं विदेहराजानं भूरिश्रवसमेव च ॥ ट ॥
करूषेशं बृहच्चापं दाशार्णं च शतध्वजम् ।
शैब्यं सुवीरराजानं दरदं च महारथम् ॥ ठ ॥
एतान्महीपतीन् राजा जरासन्धोऽमितद्युतिः ।
प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतं ॥ ड ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भीरुभीतवद्धीरोरपि भीतवत् अतिभीतवदित्यर्थः । चेलतुः पलायेतां बहुयोजनं देशम् ॥ ८ ॥

अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा ॥ ९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

माधवौ क्रीडाविशेषार्थं मधुकुले जातौ श्रीरामकृष्णौ मधुरायां पुरा रक्षितेन श्रीरामेण सङ्गतैः आपन्नौ स्वीकृतवन्तौ तथाच श्रीविष्णुपुराणे–

"मनुष्यधर्मशीलस्य लीला सा जगतः पतेः ।
अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ॥
मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
तथापि ये मनुष्याणां धर्मास्तदनुवर्त्तनम् ।
कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥
सामं चोपप्रदानं च तथा भेदं प्रदर्शयन् ।
करोति दण्डपातं च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते ।
लीला जगत्पतेस्तस्य छन्दतः सम्प्रवर्त्तते" ॥

इति । हे राजन्निति महाकौतुकात्सम्बोधयति ॥ ७ ॥

विशेषेण पुनर्लिप्सारहित्येनेव हित्वा कुतः ? प्रचुरं विरास्य प्राचुर्य्यात् शत्रोर्लोभनेन विलम्बनायेत्यर्थः । यद्वा, प्रचुरमपि अभीतावपि भीरुभीतवदिति महाभीतो यथा पलायते तथैवेत्यर्थः । अत एव पद्मपलाशाभ्यामपीति दुःखोक्तिः ॥ ८ ॥

अत्र प्रमाणं विभुत्वं बलादिभिरपरिच्छेद्यत्वमिति यावत् अनुपश्चादधावदित्यादिना तस्य तत्क्रमग्रहणं निरस्तम् अतस्तत्क्रमं श्रीद्वारकायामायातमेव ज्ञेयं तथा च श्रीहरिवंशे—

"निवेदयामास ततो नराधिपे ।
तदुग्रसेने परिपूर्णमानसः ॥
जनार्दनो द्वारवतीं तदा ( च तां ) पुरी-
मशोभयत्तेन धनेन भूरिणा" ॥

इति ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

माधवौ रामकृष्णौ जरासन्धसैन्यस्य वेगरभसं वेगोद्रेकम्-

त्रिगर्त्तं च सुशर्माणं बलिनं वेणुदारिणम्।
कुलिन्दं च महासत्त्वं केकयानपि भूपतीन्॥ ढ॥
शिशुपालं च भूपालं भीष्मकं चापि दुर्जयम्।
पुरस्कृत्यारुरोहाशु कौवेर्यां मागधो दिशि॥ ण॥
एवं गोमन्तमारुह्य सर्वर्तुफलपादपम्।
विचित्य तत्र सर्वत्राप्यधःशृङ्गात्प्रवर्षणात्॥ त॥
चिच्छिदुः सकलान्वृक्षान्नापश्यन् राममाधवौ )।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अवलोक्य मनुष्यचेष्टां प्राप्तौ चिकीर्षन्तौ हेतुगर्भं वा तत्त्वात् हे राजन्! द्रुतं त्वरितं यथा तथा दुद्रुवतुः पलायितवन्तौ॥ ७॥

तदेवाह, विहायेति। प्रचुरं प्रभूतं यावनं वित्तं विहाय भीतादपि भीतवत् पद्मपत्रसदृशाभ्यां पद्भ्यां बहुयोजनं देशं चेरतुर्जग्मतुः॥ ८॥

मागधो जरासन्धस्तौ दृष्ट्वा बली स्वबलोपेतः दैहिकबलोपेतो वा ईशयो रामकृष्णयोरप्रमाणवित् ईशयोः प्रमाणं स्वरूपरूपगुणानन्त्यरूपं तन्न वेत्तीति तथाभूतः रथानीके रथिकसैन्यैः सहान्वधावदनुदुद्राव॥ ९॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वेगरभसं योगसम्भ्रमम्॥ ७—८॥

प्रमाणं ज्ञानबलेयत्तां न वेत्तीति अप्रमाणवित्॥ ९—क॥

गोमन्तं पर्वतमारुह्य॥ ख॥

प्रवर्षणाख्यं तस्य शृङ्गमापतुरितिशेषः। तत्र शृङ्गे आसतुः उपविविशतुः॥ ग-१०॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ते च सर्वे लब्धवराः पूर्वापेक्षयापि वेगवन्त इति देवानां वाक्यं परिपालनीयं मनुष्यैरिति, मनुष्यचेष्टामापन्नौ मनुष्यभावस्वीकारे हि ब्राह्मणवाक्यं शिववाक्यं च माननीयं भवति। भागवते चास्या ऽकथनं लोकव्यामोहनार्थं राजन्निति क्रोधेन सम्बोधनं प्रमानुत्पादनार्थं द्रुतं यथा भवति तथा दुद्रुवतुः पलायितवन्तौ॥ ७॥

भारवाहकास्तु गन्तुमसमर्था इति तान् विहायैव प्रचुरमपि वित्तं विहाय अभीतावप्येतौ भीतेभ्योऽपि भीताविव रथाश्वादिकमपि यवनवधात् प्राप्तं विसृज्य पद्भ्यामेव भूमिसुखार्थं पद्मपलाशाभ्यां बहुयोजनं चेरतुः चित्रकूटमार्गेण गतौ॥ ८॥

ततो मागधोऽपि भगवल्लीलामज्ञात्वा बरेण दृप्तः पृष्ठतोऽन्वागमदित्याह—पलायमानाविति। तौ रामकृष्णौ। ननु, बहुवार धृत्वा मुक्तः तयोर्बलं जानन्नपि कथं तत्सङ्गे गत इति चेत्तत्राह—मागध इति। देशदोषेण नष्टमतिरित्यर्थः। ततः प्रहसन् बलसहितः सेनासहितः अन्वधावत् रथानीकैः रहंति ये शीघ्रगामिनो रथास्तानारुह्य तादृशैः सह गत इत्यर्थः। अनेन रथानां सेनायाश्च महान् क्लेशो निरूपितः स क्लेशः सार्थको भविष्यतीत्याशङ्क्याह—ईशयोरप्रमाणविदिति। कृष्णरामयोः प्रमाणं सामर्थ्यमादरणीयत्वं वा ब्राह्मणादिवाक्यं प्रमाणीकृत्य भगवान् गच्छति न त्वशक्तः सन्निति भगवत्प्रमाणं न ज्ञातवान् ईशयोरिति पूर्णाशक्तिर्विभक्तेति एकस्याप्यनङ्गीकारे विप्रादीनां वाक्यमप्रमाणं भवेदिति उभाभ्यां तत्प्रमाणीकृतमित्यर्थः॥ ९॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

वेगरभसं वेगोद्रेकम्॥ ७॥

मनुष्यचेष्टामापन्नाविति तस्य स्वभाव एवोक्तः नतु पलायने ऽयमेव सिद्धान्तः मनुष्यचेष्टामापन्नत्वेपि बहुशः सर्वज्ञत्वसर्वशक्तित्वदर्शनात् तत्र प्रियजनस्य कस्याप्यभावान्नापि प्रेममौग्ध्यं च व्याख्यातुं शक्यं नापि भयस्यानुकरणमेवैतदिति व्याख्येयं खिद्यति धीर्विदामपीत्युद्धवोक्तेः तस्माद्दुर्गाश्रयो ऽधारिभयात् पलायनमित्युद्धव एव तमेव दृष्ट्वास्य सिद्धान्तं ज्ञास्यतीति ज्ञेयम् अभीताविति भयाभावः प्राप्तः भीरू भयशीलावप्यौ जनौ भीतौ यथा स्यातां तथा भीताविति भयं च प्राप्तमिति विरोध एवोक्तः॥ ८॥

अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा॥ ९—११॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वेगरभसं वेगोद्रेकम् जरासन्धविमोहनार्थं मनुष्यचेष्टाम् आपन्नौ अनुकुर्वन्तौ द्रुतं त्वरितं यथा तथा दुद्रुवतुः पलायितवन्तौ॥ ७॥

तदेव प्रपञ्चयति—विहायेति। भीरुभीतवत् भीरोरपि भीतो यथा कश्चित्तद्वत् बहुयोजनं देशं चेरतुः जग्मतुः॥८॥

जरासन्धविमोहमाह—पलायमानौ दृष्ट्वा प्रहसन् अन्वधावत् इयं लीला स्वोत्कृष्टजरासन्धवधकर्तॄणां स्वभक्तानां पाण्डवानां

प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् ।
प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति ॥ १० ॥
गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ! ।
ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥ ११ ॥
तत उत्पत्य तरसा दह्यमानतटादुभौ ।
दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥ १२ ॥
अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ।
स्वपुरं पुनरायातौ समुद्रपरिखां नृप! ॥ १३ ॥

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शौर्य्यख्यापनार्था तत्समानीतसैन्यस्य भूभारस्य तु संहृतत्वात् ॥ ६ ॥

भाषाटीका ।

श्रीकृष्णचन्द्र और बलदेव जी ये दोनों भ्राता रिपुसेना के वेग को देखकर मनुष्य चेष्टा को प्राप्त होकर हे राजन् ! रण को छोड़ कर भागते हुए॥ ७ ॥

सेना के प्रचुर ( बहुत ) धन को छोड़ कर निर्भय होकर भी भयभीत के तरह कमल दल सदृश कोमल चरण कमलों से बहुत योजन पर्यंत भागते हुए ॥ ८ ॥

जरासन्ध ने जब उन दोनो श्रीकृष्ण और बलदेव को भागते हुए देखे तब वह रथ और सेना लेकर उन के पीछे से दौड़ा क्योंकि ? वह दोनो ईश्वरों का प्रमाण तो जानता ही न रहा इसी से दौड़ा ॥ ९ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

तुङ्गमेकादशयोजनोन्नतम् प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्या यस्य तं ददाह—भगवानिति । भगवानिन्द्रः ॥ १० ॥

तत्र विचिन्वन्नपि तयोः पदं निलयस्थानमनधिगम्य ॥११॥

ततो गिरेः दशचैकं च योजनानि तावदुत्तुङ्गान्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥ १२-१४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रवर्षणाख्यमिति तद्गिरेरग्निदाहशङ्कापि निरस्ता ॥ १० ॥

नाधिगम्येति तैर्व्याख्यातम् । यद्वा, आज्ञायेत्यत्र हेतुः तयोः पदं पादचिन्हमन्वन्नप्राप्येति ददाह दग्धुमारेभे नृप इति तत्र शास्त्रातिशयः सूचितः ॥ ११ ॥

दह्यमानं तटं प्रान्तभागमात्रं यस्य तस्मात् अधो गिरेः तत्रापि भूप्रदेशो न तु कण्टकजलादौ अनेन निःशब्देन च सुदूरे तयोः सुखपतनमभिप्रेतम् ॥ १२ ॥

अलक्ष्यमाणाविति धूमावृतसर्वदिक्त्वात् रिपुणेति । रिपुत्वात्सावधानेनापीत्यर्थः । तत्रापि सानुगेन महासैन्येनापि सह यदूत्तमाविति यादवानन्दयन्ताविति भावः ॥ १३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तौ रामकृष्णौ प्रद्रुत्य पलायित्वा श्रान्तौ तुङ्गमुन्नतं प्रवर्षणाख्यं गिरिमारूढवन्तौ । आख्याया अन्वर्थमाह, भगवान्पर्जन्यो यत्र गिरौ नित्यदा वर्षति प्रकृष्टं नित्यमभिवर्षतीति प्रवर्षणः अधिकरणे ल्युट् ॥ १० ॥

स जरासन्धः हे नृप ! पदं रामकृष्णयोः पादाङ्कितं तत्र तत्र भूप्रदेशमधिगम्यावलोक्य तेन लिङ्गेन गिरौ विलीनावन्तर्हिताबाज्ञाय अनुमाय नाधिगम्येति पाठे तत्र विचिन्वन्नपि तयोः पदं नियतस्थानमज्ञात्वा केवलं तत्र विलीनौ ज्ञात्वा तं गिरिं सर्वतो दशयोजनम् एधोभिः काष्ठैश्चितिं कारयित्वेति शेषः तत्राग्निमुत्सृजन् ददाह ॥ ११ ॥

तदा दह्यमानानि तटानि यस्य तस्माद्गिरेरुत्प्लुत्य दशैकं च योजनानि यानि तावदुत्तुङ्गाद्गिरेर्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥ १२ ॥

ततो रिपुणा मागधेनाऽदृश्यमानौ रामकृष्णौ समुद्र एव परिखा यस्यास्तां पुरीं द्वारकां प्रति पुनराजग्मतुः ॥ १३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एधोभिः काष्ठैः ॥ ११—१२ ॥

समुद्र एव परिखा खातं नदी यस्याः सा तथा ॥ १३—१४

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो रामकृष्णौ पर्वतेन प्रार्थितवतौ तत्प्रियार्थं तुङ्गं गिरिमारुहतां स हि पर्वतः सर्वदा शीतेन व्याप्तः भगवन्तं शीतनिवृत्त्यर्थं विज्ञापयामास तत्र हि न कदाचिदपि सूर्योऽग्निसम्बन्धः मेघानां तत्प्रियं स्थानम् अतो मेघाच्छन्न एव तिष्ठतीति न सूर्यसम्बन्धः वर्षतीति नाग्निसम्बन्धः ततो भगवान् पूर्वं तस्मै

सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ।
बलमाकृष्य सुमहन्मगधान्मागधो ययौ ॥ १४ ॥
आनर्त्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम्।
ब्रह्मणा चोदितः प्रादाद्बलायेति पुरोदितम् ॥ १५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वरं दत्तवान् अहमागत्य ते शीतं निवारयिष्यामीति ततो भगवतः अद्भुतकर्मत्वं प्रतिपादयितुं भ्रान्तिमुक्त्वा पर्वतारोहणं वदति, प्रद्रुत्येति। न हि कश्चित् दूरं प्रद्रुत्य तुङ्गं गिरिम् आरोहति। उच्चारोहणं ह्यभ्रान्तमपि श्रमयति। भगवतः सहस्रोपायानां विद्यमानत्वात् निलीय स्थित्यर्थं किं पर्वतारोहणमुच्चस्थानमपेक्ष्यते प्रत्युत उच्चस्थितं सर्वोपि पश्यति अतोऽत्र भगवतः अद्भुतलीलां कथयन् विरोधप्रकारेण कथयति दूरं प्रद्रुत्य धावनं कृत्वा सम्यक् भ्रान्तौ जातौ न हीशयोः शीघ्रगमनं श्रमो वा सम्भवति तत्रापि तुङ्गमत्युच्चं गिरिम् आरुहतां गुप्ततया तत्रारोहणप्रकारमाह—प्रवर्षणाख्यमिति। प्रकर्षेण वर्षणं यत्रेति रूढिभ्रमव्युदासाय स्वयमेव योगं प्रदर्शयति, भगवान् नित्यदा यत्र वर्षतीति। तत्र हि सर्वदा भगवान् वर्षति मेघा हि कदाचित् क्वचिद्वर्षन्ति तेषामधिष्ठातृरूपो भगवान् "विष्णुः पर्वतानामधिपतिः" इति श्रुतेः। स्वयमेव तत्र वर्षति अन्यथा लोके वृष्टिप्रवृत्तिर्न स्यात् ॥ १० ॥

ततो भ्रान्तस्य जरासन्धस्य कृत्यमाह—गिराविति। पर्वतारोहणे कैश्चित् दृष्ट एव तत्रापि अग्रे न गत इत्यत्र विचारमपि कृतवानित्याह—नाधिगम्येति। ततः पर्वतादग्रे पदं गमनचिह्नं नाधिगम्य अप्राप्य दाहे भगवता हेतुः सम्पादितः स सत्य एव जात इति वक्तुं तस्य निलीनाविति ज्ञानमुत्पादितं ततो दाहार्थमेव तथा प्रयत्नः कृत इति सत्यसङ्कल्पस्य भगवतः इच्छया गिरिमेधोभिर्ददाह सर्वत्र वृक्षान् छित्वा वरितस्तृणादिना दाहं कारितवान् ॥ ११ ॥

ततो भगवान् पर्वतप्रार्थितं विधाय ततोऽग्रे गत इत्याह—तत उत्पत्येति। तरसा शीघ्रमेव यावदग्निः प्रज्वलति भगवति विद्यमाने अग्निः पर्वतं न दहेदिति न तु दाहभयात् दह्यमानाः तटाः यस्य सर्वत्र दाहे उद्भूते उभौ पूर्णशक्तिर्भगवान् दशैकयोजनोत्तुङ्गादिति एकादशयोजनं स उत्तुङ्गः तत उभावपि अधः पर्वतस्य प्रस्तरभागमपि परित्यज्य भूभागे निपेततुः ॥ १२ ॥

केचित्तु अतिदाहे पुनः पर्वतप्रार्थनायां तं भूमौ नेतुं उपर्युत्थाय पादपीडनेन तं भूमौ प्रवेशयन्नेव स्वयं दूरे गत इत्याहुः— ततः पुनरपि तस्य मद्व्याप्तिः स्यादिति पूर्वमपि स्वेच्छयैव स प्रद्रुत इति ज्ञापयन् तेनालक्ष्यमाणावेव द्वारकां गतौ तत्र न भगवता कश्चनाधिकः प्रयत्नः कृतः स मा पश्यत्विति किन्तु स्वदोषेणैव स न दृष्टवानिति ज्ञापयितुमाह—रिपुणेति। दुष्टबुद्धेव न दृष्टवान् तत्सम्बन्धादन्यैरपि न दृष्टमिति सानुगेनेत्युक्तम्। ननु, कार्यस्य सर्वस्यापि कृतत्वात् अन्तर्द्वीपे तदैव कुतो न गतौ द्वारकागमने को हेतुरिति चेत्तत्राह—यदुसमा-

विति। अन्यथा यदुकुले अवतारं न कुर्यात् अतो यादवहितार्थं स्वपुरं यातौ पुनरायातामित्यनेन पूर्वमुभावपि स्वयं गत्वा तान् स्थापितवन्ताविति विज्ञायते तस्य भिन्नद्वीपत्वं कलिप्रवेशाभावाय निरूपयन्नाह—समुद्रपरिखामिति। समुद्र एव परिखा यस्येति विस्तारो ऽप्यनेन सूचितः नृपेत्यप्रतारणाय सम्बोधनम् ॥ १३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ततो गिरेः दश च एकं च यानि तावदुत्तुङ्गात् अधः मागधसैन्यसंरोधदेशमतिक्रम्य परतो निपेततुः ॥ १२—१३—१४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवानिन्द्रः ॥ १० ॥
पदं प्रवेशस्थानम् ॥ ११ ॥
दश चैकञ्च यानि योजनानि तावदुत्तुङ्गात् ॥ १२—१४ ॥

भाषा टीका।

दोनों भाई दौड कर जब श्रांत से हुए, तब एक बडे ऊंचे पर्वत पर चढजाते भये, जिस्का कि प्रवर्षण ऐसा नाम रहा नित्य ही भगवान् इन्द्र जिस पर वर्षा करते हैं ॥ १० ॥

हे राजन्! उस समय जरासन्ध ने यह तौ जान लिया कि-ये दोनो इस पर्वत में छुप गये हैं, परन्तु ढूंढने पर पता नहीं चला, तब चारों तरफ से इन्धन जोडकर जरासन्ध अग्नि लगा देता हुआ ॥ ११ ॥

जब कि उस पर्वत में अग्नि बढी और उस्के दोनो तरफ से तट जरने लगे तब ये दोनों भ्राता वेग से उछल कर ग्यारह योजन ऊंचे पर्वत से पृथिवी में नीचे कूदते हुए ॥ १२ ॥

हे नृप! इस प्रकार यदुकुलोत्तंस श्रीकृष्ण बलदेव दोनों भ्राताओं को न जरासन्ध ने ही देख पाया और न उसके किसी अनुचरने देखा, और वे दोनों भ्राता समुद्र जिसकी परिखा ( खाई ) हो रहा है ऐसे द्वारका नगर में आकर प्राप्त होते हुए ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रीकृष्णस्य विवाहान्निरूपयितुं बलदेवविवाहं नवमस्कन्धोक्तमनुस्मारयति, आनर्त्तेति ॥ १५ ॥

भगवानपि गोविन्द उपयेमे कुरूद्वह ! ।
वैदर्भीं भीष्मकसुतां (१) श्रियो मात्रां स्वयंवरे ॥ १६ ॥
प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ।
पश्यतां (२) सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥ १७ ॥

राजोवाच ।

भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननाम् ।
राक्षसेन (३) विधानेन उपयेम इति श्रुतम् ॥ १८ ॥
भगवन् ! श्रोतुमिच्छामि कृष्णस्यामिततेजसः ।
यथा मागधशाल्वादीन् जित्वा (४) कन्यामुपाहरत् ॥ १९ ॥
ब्रह्मन् ! (५) कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः ।
कोऽनु तृप्येत (६) शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मात्रां कलाम् ॥ १६ ॥

गरुडो यथा देवान्प्रमथ्य सुधा महरत्तथेति ॥ १७ ॥

"राक्षसो युद्धहरणात्" इति स्मृतेः । राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेनोपयेमे परिणीतवानिति श्रुतं पूर्वमेव वा ॥१८॥

सामान्यत एव श्रुतं विशेषं तु श्रोतुमिच्छामि ॥ १९ ॥

श्रवणौत्सुक्यमाविष्करोति-ब्रह्मन्निति । पुण्या महाफला माध्वीः श्रुतिसुखाः लोकस्य मलापहाश्च शृण्वानः शृण्वन्नित्यर्थः । श्रुतज्ञः श्रुतसारवित् नित्यनूतनाः प्रतिक्षणमाश्चर्यवत्प्रतीयमानाः ॥ २०-२४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

बलकेशवाविति सामर्थ्यसूचकं सुमहदिति तदा सर्वस्यापि श्रीभगवदुपेक्षितत्वात उपेक्षा च रुक्मिणीहरणपराक्रमकौतुकपोषणार्थं तत्साक्षादरिवर्गनिर्जयेन तस्याः प्रहर्षार्थञ्चेति ज्ञेयम् । ननु, कथं महापावनान् माथुरानेवं स्वराज्यत्वेन गृहीत्वा नोवास तत्राह—मागधः नीचदेश्यानां तत्रैवाभिरुचेरिति भावः । तदेवं पलायनेऽपि जयो दर्शितः अनेकसहस्रैर्महारथादिभिरनुगन्तुमशक्यत्वात् सर्वांस्तानतिक्रम्योत्प्लुतत्वाच्च ॥ १४ ॥

श्रीमान् ब्रह्मलोकगमनेन सप्तविंशतिचतुर्युगेष्वतीतेष्वपि सर्वसम्पत्तिमान् इति योगादिबलं सूचयति, अतः प्रकर्षेणादात् रैवतो रेवतसुतः ककुद्मी ॥ १५ ॥

भगवान् इति युग्मकं भगवान् स्वयं भगवान् तथा तथा नित्यविहारी श्रीकृष्णः तदानीं च गोविन्दः गां पृथिवीं विन्दतीति क्रीडाविशेषार्थं तस्यामवतीर्ण इत्यर्थः । अतः श्रियो मात्रां माति प्रविशत्यस्यां सर्वमिति परिपूर्णां मूर्त्तिं भगवद्वदेवावतरीतुमर्हत्वात् तथा च श्रीविष्णुपुराणे "एवं यथा जगत्स्वामी देवदेवो जनार्दनः । अवतारं करोत्येषा तथा श्रीस्तत्सहायिनी" इति । अत एव वक्ष्यते सदृशीमिति उपयेमे विवाहलीलया निकटे निनाय अपिः पूर्वोक्तसमुच्चये । यद्वा, गोविन्दो गोकुलेन्द्रः गोकुलचक्रवर्त्तिगोपीजनविरहेणान्तःखिन्न इत्यर्थः । यथैव श्रीमदुद्धवं प्रति निजकरुणावाष्पमुद्गिरतिस्म गच्छोद्धव व्रजमित्यादिभिः यथैवोद्गरिष्यति सर्वप्रकटलीलान्ते ऽपि "तास्ताः क्षपाः प्रेष्ठतमेन नीताः" इत्यादिभिः तादृशः सन्नप्युपयेमे कुतः? श्रियो मात्राम् अंशं मूर्त्तिभेदम् इति यावत् । ततश्च "श्रियः कान्ताः कान्तः" इत्याद्यनुसारेण गोपीनामपि श्रीत्वात् "नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः" इत्याद्यनुसारेण प्रसिद्धश्रीतोऽप्युत्कृष्टतमत्वेनैव कुरुषु पाण्डव--शब्दवच्छ्रीषु गोपीति नामान्तरप्राप्तत्वात् तदेकतत्त्वादित्यर्थः तास्वपि मुख्याया श्रीराधाया एव मात्रामिति वा "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इति श्रीभगवदुक्त्यनुसारेण यादवादिनिजगणविशेषसुखार्थमपि तादृशीमेव स्वीकारेति भावः । एवमेवोक्तं पाद्मकार्त्तिकमाहात्म्ये "कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" इति । स्कान्दादौ च "रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने" इति तथा शक्तिवैचित्रीबोधनार्थमाह-भगवानिति । यद्वा, यो गोविन्दः "मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गवमात्तवेणुः" इति नारायणवर्माद्यनुसारेण तथा नित्यविहारी सोऽपि वैदर्भीमुपयेमे तत्कथं ? तत्राह-भगवानचिन्त्यशक्त्या तत्र चात्र च युगपत्प्रकाशवान् यथैव सान्त्विता उद्धवद्वारा व्रजदेव्य इति भावः । स्वयंवर इति श्रीहरिवंशोक्तं तद्वृत्तं स्मारयति—ततश्च श्रीभगवदुक्त्या स्वयम्वरे निवृत्ते शिशुपालाय दातुं निश्चितायां तस्या महार्त्तिविषयत्वेण सन्देशादिना हरणादिकं वृत्तमिति । यद्वा, स्वयमेव वैदर्भ्यां पुरोहितपुत्रप्रेषणेन वरः पतित्वेन श्रीकृष्णवरणं तस्मिन् ॥ १६ ॥

(१) इन्दिरांशाम् ।   (२) सर्वभूतानाम् ।   (३) विवाहेन ।
(४) तत्पारमागमत् ।   (५) विष्णुकथाः इतीमे विजयध्वजपाठाः ।   (६) शृण्वानृवा, भृणुवान्, इति वा पा० वीरर० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तरसा सद्यः प्रमथ्य निर्जित्य जरासन्धस्य मुख्यत्वेपि शाल्वादित्वं सर्वैराजभिः श्रीकृष्णप्रपत्तौ सम्मतायामपि शाल्वस्यैव बुधा युद्धप्रवृत्या तत्र तस्यैव मुख्यत्वात् तच्च श्रीहरिवंशे व्यक्तं चैद्यस्य पक्षगान् सहायान् सर्वलोकानामन्येषां पश्यतामित्यनादरे षष्ठी इति राज्ञामतिलज्जादिकं बोधयति तार्क्ष्यः कश्यपः ॥ १७ ॥

राक्षसेनेति धीरैः प्रशस्यतयायोग्येनैवेति विवक्षितं रुचिराननाम् अर्थात् श्रीकृष्णवदेवेति। यद्वा, श्रीकृष्णस्यापि मनोहरमुखीमिति महासौन्दर्यमुपलक्षयति—ततः श्रीकृष्णेन विवाहसौख्यं च सम्मतम्॥ १८ ॥

यथोपाहरत् तथा तत्प्रकारं श्रोतुमिच्छामः अत एव निर्गलितार्थस्तैर्व्याख्यातो विशेषतस्त्यति। अमिततेजसोऽपि इति सद्यः संहर्त्तुं शक्तावपि कौतुकेन मधुरलीलाभिप्रेता ॥ १९ ॥

कथारूपत्वेन सुखसाध्या अपि पुण्याः सर्वधर्ममूलरूपाः को धर्मार्थी तावच्छृण्वस्तृप्येत् यथा माध्वीः परममधुररसार्थरूपाः कोऽर्थार्थी कामार्थी वा शृण्वंस्तृप्येत् तथा लोकमात्राणां मलस्य पापाद्यविद्यान्तदोषस्यापहन्त्रीः को मोक्षार्थी शृण्वंस्तृप्येत् तथा नित्यनूतनाः "सतामयं सारभृतां निसर्गः" इत्यादिन्यायेन प्रतिपदं प्रोन्मीलत्प्रेमानन्दः को वा भक्त्यर्थी शृण्वंस्तृप्येत् शृण्वन्निति श्रवणमात्रेण लभमान इत्यर्थः। श्रुतज्ञ इति यदि तत्तत्तात्पर्यं वेदेत्यर्थः श्रवणपरमात्र इति वा ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मात्राम् अंशाम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सोऽपि मागधोऽपि रामकृष्णौ दग्धाविति मृषा यथा तथा मन्वानो बलं सैन्यमाकृष्यादाय मागधान्देशान्प्रत्याजगाम ॥ १४ ॥

अथ श्रीकृष्णस्य विवाहान्निरूपयितुकामस्तावद्बलभद्रविवाहं नवमस्कन्धोक्तमनुस्मरति—आनर्तेति। स्पष्टोऽर्थः ॥ १५ ॥

अथ भगवद्विवाहान्निरूपयितुकामस्तावद्रुक्मिणीकल्याणं तद्विस्तरबुभुत्सामुत्थापयन्सङ्ग्रहेणाह--भगवानपीति द्वाभ्याम्। हे कुरूद्वह! श्रियो लक्ष्म्या मात्रामंशभूतां भीष्मकस्य राज्ञः सुतां वैदर्भीं यथा तार्क्ष्यपुत्रो गरुडः सुधामाजहार तद्वत् स्वयंवरे सर्वभूतानां पश्यतां सतां चैद्यपक्षपातिनः सर्वाञ्छाल्वादीन् राज्ञः क्षत्रियान्तरसा बलेन प्रमथ्यालोक्याभिभूयेति यावत् आहृतामिति शेषः उपयेम इत्यन्वयः १६—१७ ॥

तत्र तद्विस्तरबुभुत्सया पृच्छति राजा भगवानिति, रुचिरं सुन्दरमाननं यस्यास्ताम् उपयेमे विवाहितवानिति श्रुतं मयेति शेषः। त्वन्मुखादधुना श्रुतम् इति भावः। नियुध्यानीताया विवाहो राक्षसविवाहः "राक्षसो युद्धहरणात्" इति स्मृतेः। यद्वा, युद्धे हरणमेव राक्षसो विवाहः तथापि च राक्षसेन विवाहेन हेतुभूतेन पश्चाद्यथावदुपयेम इत्यर्थः ॥ १८॥

भगवानिति यथा येन प्रकारेण मागधादीनेक एव सन् जित्वा पुनरागमत् वैदर्भीमादायेति शेषः। तममिततेजसः कृष्णस्य जयागमनादिप्रकारं श्रोतुम् इच्छामि ॥ १९ ॥

आत्मनः श्रवणौत्सुक्यम् आविष्करोति—ब्रह्मन्निति। हे ब्रह्मन्! श्रीकृष्णस्य कथाः पुण्याः शृण्वतां वदतां च पुण्यावहाः माध्वीः श्रुतिसुखावहाः न केवलं पुण्या एव अपि तु शृण्वतो गदतश्च जनस्य मलापहाः पापघ्नीश्चाऽतस्ताः श्रुतज्ञः श्रोत्रेन्द्रियविषयसुखसारासारविवेकी चेत्को वा पुमान् * शृण्वान् उपधावेर्घश्चार्थः न सेवेत तथाज्ञश्चेत्सर्वोऽपि सेवेतेत्यर्थः सत्यं सेवेतेति सकृच्छ्रुत्वा पुनर्न सेवेतेत्यतस्ता विशिनष्टि–नित्यनूतना इति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इत आरभ्य विजयध्वजीयमूलपठितश्लोकाः

अष्टादश तु सङ्ग्रामे जित्वा यादवसत्तमौ ॥
हतः स्वराष्ट्रं न्यवसज्जितादृक्मगडलो नृप!।
माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम् ॥
स्तूयमानौ दिवारात्रं सूत मागधवन्दिभिः।
वृतावानन्दबहुलैर्बन्धुभिः सुखमूषतुः ॥
इतिश्रीभा०म०द०पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

श्रीशुक उवाच ॥

कदाचिद्देवकीपुत्रो रामशैनेयसंयुतः।
सेव्यमानः सभायां वै नाना देशेश्वरैर्नृपैः ॥ क ॥
पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे।
बद्धं शुश्राव कौरव्य! ब्राह्मणैः सत्रयाजिभिः ॥ ख ॥
तच्छ्रुत्वा हृष्टहृदयः कृतवर्माणमच्युतः।
नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥
स गत्वा हस्तिनपुरं वृद्धं कुरुपितामहम्।
ददर्श द्रोणविदुरधृतराष्ट्रैः परिवृतम् ॥
युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम्।
सभाजयामास भृशं कुन्तीं च हृदिकात्मजः ॥
युधिष्ठिरोऽपि पप्रच्छ सानुगं कंसमर्दनम्।
हतं च कालयवनं जरासन्धं च निर्जितम् ॥
वासुदेवं च निहतं करवीरपुरेश्वरम् ॥
द्वारवत्याश्च करणं नगर्या वरुणालये ॥ छ ॥
हतौ च हंसडिभकौ ब्रह्मदत्तं च दुर्जयम्।
श्रुत्वा हार्दिक्यवचनाद्यथार्थेन युधिष्ठिरः ॥
मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम्।
समाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः ॥
पाण्डुपुत्रैस्तथा कुन्त्या सौहार्दस्नुतबाष्पया।
हार्दिक्यस्ताननुज्ञाप्य बान्धवान् पृथया सह ॥
मातृष्वसेयान्धर्मज्ञानभिवाद्य यथावयः।
गाङ्गेयेनाभ्यनुज्ञातो धृतराष्ट्रेण चानघ! ॥
विदुरेणाङ्गराजेन द्रोणेन च कृपेण च।
प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च ॥
कृतवर्माऽभ्यनुज्ञातो निर्गत्य गजसाह्वयात्।
द्वारकां वृष्णिनिलयामाजगाम दिनात्यये ॥
स प्रविश्य सभां दिव्यामनेकनृपसेविताम्।

* यदा शृणुवान्, इति पाठस्तदा उपच दीर्घश्चेति टीका ज्ञेया।

श्रीविजयध्वजीयमूलपठितश्लोकाः ।

दृष्ट्वा गोविन्दमासीनं काञ्चने परमासने ॥
वीज्यमानं चामरसङ्घातसहितं वनमालिनम् ।
आचचक्षेऽखिलं तस्य यथादृष्टं यथा श्रुतम् ॥
वृत्तान्तं कौरवेयाणां नगरे गजसाह्वये ।
तदाकर्ण्य हरिः सर्वं वृत्तान्तं जगदीश्वरः ॥ १६ ॥
पौरुषं पाण्डुपुत्राणां बभूवानन्दनिर्भरः ॥

इतिश्रीभागवते महापुराणे दशमस्कन्ध उत्तरार्द्धे
षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

राजोवाच ॥

रेवतो नाम राजासौ ब्रह्मणा चोदितः कथम् ।
तदहं श्रोतुमिच्छामि विस्तरेण महामुने ! ॥

श्रीशुक उवाच ॥

रेवतो नाम राजासीत्पुरा धर्मार्थतत्त्ववित् ॥
रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी ॥ ख ॥
स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति ।
अदत्त्वा याच्यमानोऽपि नानाजनपदेश्वरैः ॥ ग ॥
सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हाहाहूहू ।
तस्मिन्नगायतां काले ग्राममूर्च्छाविचक्षणौ ॥ घ ॥
राजाऽतिष्ठद्‌द्रुहिः किञ्चित्तद्विरामप्रतीक्षया ।
गीतावसाने पप्रच्छ प्रणिपत्य पितामहम् ॥ ङ ॥
एषा मे भगवन् ! कन्या कस्मै दास्य इमामिति ।
तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते ॥ च ॥
तत्रान्यांश्च महीपालानाचक्ष्वेति कुरूद्वह ! ।
ततस्तान् रेवतः प्राह भूपालान्विषयेश्वरान् ॥
स तानाकर्ण्य नृपतीन्प्रहस्योवाच रेवतम् ।
युगानि तु बहून्यत्र गतानि तव भूपते ! ॥ ज ॥
क्षणमात्रमिवाश्राव्यं शृण्वतो गीतमेतयोः ।
केदानीं तव ते भूपाः सुतायाः सदृशा वराः ॥ झ ॥
इदानीं राजशार्दूल ! यदुवंशविवर्द्धनौ ।
वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू ॥ ञ ॥
तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते ! ।
इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः ॥
रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने ।
तामादियुगसम्भूतां दीर्घदेहां महाभुजः ॥ ठ ॥
आकृष्य लाङ्गलेनांसे समां चक्रे हलायुधः ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"परापूर्वेषां सख्यां वृणक्ति वितर्तुराणो अपरेभिरेति" इत्यादिश्रुत्यर्थं दीपकन्यायेन । दर्शयत्यस्मिन्नध्याये तत्र श्रीकृष्णो युद्धे कुन्तीसुतैर्बद्धं पाञ्चालभूपतिं श्रुत्वा दृष्टस्तद्वृत्तान्तविवित्सया तत्समीपे कृतवर्माणं प्रेषयामासेति कथयति, कदाचिदिति ॥ क ॥

ब्राह्मणैरुक्तम् ॥ ख ॥

वासुदेवं शृगालनामानं वरुणालये समुद्रे ॥ छ ॥

आनन्दनिर्भरः आनन्दपूर्णो बभूवेत्यनेन पूर्णानन्दत्वं सदातनं न कादाचित्कमिति सूचयति "भू सत्तायाम्" इति धातोः सत्तायाः सदातनत्वादिति ॥ त ॥

इतिश्रीभागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थकृतपदरत्नावल्याम् ।
षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

अनित्यत्वात्संसारो हेयस्तदर्थं कामक्रोधादिनिलयाद्देहात्स्वस्मिन्नेवाहर्तव्येति दर्शनायोत्तराध्यायत्रयस्य प्रारम्भः आनर्तविषयाधिपतिः ॥ १५---१८ ॥

धर्मार्थौ धर्मविषयो विष्णुस्तस्य तत्त्वं वेत्तीति धर्मस्य अर्थस्य च तत्त्वं वेत्तीति धर्मस्यार्थस्य तत्त्वं हरिविषयत्वलक्षणं वेत्तीति वा ॥ ख ॥

येयं मम कन्या तां प्रति याचकत्वसम्भवात् कुतो न दत्तेत्यत्राह---अदत्त्वेति । ब्रह्मणः सर्वस्य गुरुत्वात् गुर्वनुज्ञापूर्वकं क्रियमाणं सर्वं फलवदित्यभिसन्धाय याचकेभ्यो न दत्तेति भावः ॥ ग ॥

तत्र तस्मिन्नवसरे ग्राममूर्च्छाविचक्षणौ सप्तस्वरगानविशेषविदग्धौ स्वराणां मण्डलं ग्रामः आरोहावरोहः मूर्च्छा सप्तस्वरास्त्रयो ग्रामा एकविंशतिमूर्च्छना इति भरतः ॥ घ ॥

अल्पार्थे किञ्चिदित्यव्ययम् अल्पकालमित्यर्थः ॥ ङ ॥

त्वदभीष्टवरो नास्ति तदानींतनकालीयानामतीतत्वादिति ब्रह्मा वक्ति, तं प्राहेति ॥ च ॥

तव ते तुभ्यं मनुष्यस्य सुबहूनि युगानि क्षणमात्रमिव गतानीति तत्र निमित्तमाह---आश्राव्यमिति ॥ ज---झ ॥

तर्हि किं कर्त्तव्यमिति तत्राह---इदानीमिति ॥ ञ ॥

आदियुगं कृतं नाम ॥ ठ ॥

तेषां पारं यथा तस्य हरेर्विवाहलक्षणं चरितं श्रोतुमिच्छामि ॥ १९ ॥

माध्वीः मधुराः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ ७—१५ ॥

मात्रामिति माति प्रविशत्यस्यां सर्वमिति भगवद्देवावतरीतुमर्हत्वेन परिपूर्णाम्मूर्त्तिं यद्वा, गोविन्दो गोकुलेन्द्रः गोकुलवर्त्तिगोपीविरहेणान्तःखिन्न इत्यर्थः । तादृशः सन्नुपयेमे कुतः श्रियो मात्रामंशं मूर्त्तिभेदमिति यावत् ततश्च "श्रियः कान्ताः कान्तः परम पुरुषः" इत्याद्यनुसारेण गोपीनामपि श्रीत्वात् तदेकतत्त्वादित्यर्थः । तास्वपि मुख्यायाः श्रीराधाया एव मात्रामिति वा "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इति भगवदुक्तेर्यादवादिनिजगणसुखार्थमपि तादृशीमेव स्वीचकारेति भावः । एवमेवोक्तं पाद्मे कार्त्तिकमाहात्म्ये "कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" इति । स्कान्दादौ च "रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने" इति । यद्वा, यो गोविन्दः गोकुलेन्द्रत्वेन नित्यविहारी सोऽपि वैदर्भीमुपयेमे तत्कथं तत्राह ॥ १६—१७ ॥

भगवान् अचिन्त्यशक्त्या तत्र चात्र च युगपत् प्रकाशवान् यथैव सान्त्विता उद्धवद्वारा व्रजदेव्य इति भावः । स्वयं द्विजप्रेषणेन वरणं वरः तस्मिन् सदृशीं स्वरूपशक्तित्वात् अत एव मनो दधे । यद्वा, सदृशीं तादृशगुणादिभिर्लक्षणैः राधाद्येकात्मकत्वादिति भावः ॥ १८—२४ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

स्वसदृशं स्वोपमम्। अथवा कन्या सम्बन्धिभिरेव कुलादिभिः स्वसदृशं कन्यासदृशं काले कालं प्राप्य यथासमयम् अधुना मे तथैव समयो जातः यत्र स्वयं दौत्यमेव शोभते इति भावः हे नृसिंह! पुरुषसिंह नरलोकमनोऽभिरामं नरलोकानां मनोऽभिरामं यस्मात् ॥ ३८ ॥

ननु योग्यास्तावत् मां स्वयं दौत्येन वृण्वन्तु नाम कथमयोग्या भवती तथा करोतीत्याशङ्क्याह--तन्मे वृत इत्यादि। हे अम्बुजाक्ष! श्रीकृष्ण मे मया त्वं पतिर्वृत एव अद्य व्रियसे इति न भवतो, भवते आत्माद्यार्पित एव अद्यार्पित इति न। ननु कुत इदं निगद्यते इत्याशङ्क्याह--जाया तव पत्नी मा लक्ष्मीरहमिति भावः। अहमित्यध्याहार्य्ये हे विभो! अत्र वचसि तद्विधेहि तदुचितं यद्भवति तदित्यर्थः। स्वजाया केनोपेक्ष्यते तस्मात्तदुचितं तद्विधेहीत्यर्थः। किं तदुचितमित्यपेक्षायामाह--मा वीरभागेत्यादि वीरस्य तव भागरूपां मां चैद्य आराभिकटे मा अभिमर्शतु मा स्पृशतु मृगपतेर्बलिं गोमायुवदिति यद्यप्यसंशाव्यमिदं तथापि अतिकटुत्वेनासह्यमिति कृत्वा मम वैयग्र्यं तेन स्वयमेव दूतः प्रेषित इत्यर्थः ॥ ३९ ॥

एवं लक्ष्मीत्वेनात्मानं प्रतिपाद्य पुनर्विचारितम् अहो असौ स्वजनगर्वासहनः तदिदं न समीचीनं लिखितमिति तद्दोषपरिहारार्थं पुनः सविनये यल्लिखितं तद्वाचयति--पूर्त्तेष्टदत्तेत्यादि पूर्त्तं खातादि इष्टं यज्ञः दत्तं दानं तदादिभिर्यदि अलमत्यर्थं परेशो भगवानाराधितस्तदा गदाग्रजः श्रीकृष्ण एत्य मे मम पाणिं गृह्णातु। यद्वा। पूर्त्तेष्टादिभिरलं पर्याप्तम् एतेषां नेदं फलं यदि परेशो भगवान् गदाग्रजः श्रीकृष्ण आराधितः श्रीरूपया मया आराधितः तदा एत्य पाणिं गृह्णातु अन्यथा पूर्त्तादीनां किमीदृशं सामर्थ्यं यदेवं विधं फलं जनयिष्यति नैवेत्यर्थः। अतो न दमघोषसुतादयोऽन्ये ते तुच्छाः किं मृगपतेर्बलिं गोमायुवद्धन्तीति पूर्वोक्तिस्वरसः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

शिष्टं सर्वमुक्त्वा रुक्मिणीवाक्यानि स्वतः पत्रिकातो वा निरूपयति--श्रुत्वा गुणानिति सप्तभिः। षड्गुणाः भगवांश्च एते चेत्प्रार्थ्याः तदा निष्प्रत्यूहं कार्यं भवतीति सप्तभिर्विज्ञापना आदौ भगवन्तं धर्मिणं विज्ञापयति। श्रुत्वा गुणानिति। त्वयि चित्तं विशतीति मनोवृत्तिं निरूपयति आत्मा तु त्वदीय एव। इन्द्रियाणि चेदन्यपराणि भवेयुः अन्तःकरणं शरीरं वा तदा सर्वनाश इति विनिश्चित्य इन्द्रियाणां त्वत्परत्वे मनोऽपि त्वत्परं जातमिति शरीरमपि त्वत्परं कर्त्तव्यमिति ममोद्योग इति प्रघट्टकार्थः। क्रमेण गुणा निरूप्यन्ते भगवदैश्वर्यं चैतदिति सूचितं गुणद्वारा स्वतोऽपि चित्तवशीकरणमैश्वर्याद्न्यैश्वर्यं भगवदीयानां कान्तिगुणस्वरूपाणां माहात्म्यं निरूप्यते। हे भुवनसुन्दर! भुवनेष्वेक एव सुन्दर अनेन कान्त्याधिक्येन स्त्रीणां स्वतश्चित्तवृत्तिवत्का ते गुणान् शृण्वतां कर्णविवरैरन्तर्निर्विश्य अङ्गतापं हरतः सतः रूपं च दृशिमतामखिलार्थलाभं यतः अतः त्वयि मे चित्तमाविशति। बहिरिन्द्रियद्वयमेव नियामकमन्तरिन्द्रियस्य श्रोत्रं च चक्षुश्च श्रुतावपि "अक्षिण्वन्तः कर्णवन्तः" इत्यत्र तथैव निरूपितम। उभयेषामुपकारं त्वद्गुणा त्वद्रूपं च करोति तत्रैकमान्तरं तापं हरति। एकं च बहिः सर्वपुरुषार्थान् प्रयच्छति श्रवणमात्रेऽपि क्रियमाणे प्रयत्नं विना त्वद्गुणाः स्वत एवान्तर्निविष्टाः तेषामपि निवेशेन प्रतिबन्धाभावायाह--कर्णविवरैरिति। अपावृतानि कर्णरन्ध्राण्यपेक्ष्यन्ते अन्यथा न प्रविशन्तीत्येतावत्पुरुषकर्त्तव्यमुपदिष्टम् अतः कर्णविवरैः पातालविवरवत् प्रसिद्धैः अन्तर्निर्विश्य अङ्गानां तापं हरन्ति गुणाः। अङ्गेति सम्बोधनं वा आत्मत्वेन रूपं च ये दृशिमन्तः दर्शनयुक्ताः येषां चक्षुः कार्यमस्ति रूपभेदविद् इति प्रथमा कक्षा सर्वात्मना दृश्यगुणापरिज्ञानमन्तिमा तेषां दृशां चक्षुषां अखिलार्थानां लाभो यस्मात् चतुर्विधपुरुषार्थाः चक्षुषा सिद्ध्यन्ति चक्षुषः सूर्यभावो मोक्षः रूपपानं कामः रूपग्रहणमर्थः। तत्रावगाहनं धर्म इति फलवतामेषां फलान्यप्यूह्यानि। तत्रापि पुरुषार्था न सम्पादनीयाः किन्त्वकस्मादुपलब्धा निधय इव प्राप्यन्ते। यत्रैवमिन्द्रियाणामुपकारं त्वद्धर्माः कुर्वन्ति तत्र चित्तमपि ममापि तथा भविष्यतीति त्वयि निर्विशति चित्तस्य हि द्वयं प्रतिबन्धकं लोको वेदश्च तत्र लोकमतिक्रम्य वर्त्तन इत्याह--अपत्रपमिति। अपगता त्रपा यस्मात् लज्जा हि लोके नियामिका ॥ ३७ ॥

वैदिकं दोषं परिहरति--का त्वेति। वेदोऽपि लोकानुसारी भवतीति हि विज्ञायते अतः लोके यदविरुद्धं सर्वथा व्यवहारे अविगीतं तद्वेदेऽप्यविरुद्धमिति। एतादृशोऽर्थः मयैव कृत इति चेत् तदा विरुद्धो भवेत् किन्तु सर्वैरेव क्रियत इतीममर्थं व्यतिरेकेण साधयते। का वा कन्या त्वां न वृणीते सर्वस्यापि यद्यपि मोक्षोऽभिप्रेतः तथापि स्त्रीयोनिरतितुच्छेति तत्परित्यागार्थं स्त्रिया अत्यर्थमपेक्षितः। नन्वस्ति लोके मोक्षसाधनमिति चेत्तत्राह--महतीति। महत्त्वं प्राप्ता न सर्वं परित्यक्तुं शक्नोति यथातिवृद्धा अतस्तस्या गृह एव चेन्मोक्षदाता भवति तदैव मोक्षः सिद्ध्येत्। किञ्च धर्मार्थकामार्थमपि त्वमेव भजनीय इत्याह--कुलेति। सप्त धर्माः समा ययोः तयोरेव विवाहः विवादश्चेति कुलं तुल्यमपेक्ष्यते तत्सोमवंशित्वाद्यावयोः तुल्यं तथा रूपमपि मदर्थमेव रूपं गृहीतमिति मद्योग्यमेव भवितुमर्हति तव रूपमहमपि त्वदर्थमेव रूपं गृह्णामीति ममापीति तथा वयश्च योग्यमेव गृहमत्र पितृगृहं प्रसिद्धस्य कन्येति चतुष्टयं निर्विवादं लोकप्रतीत्या द्रविणमपि तुल्यं विद्या समानेति चिद्रूपेति वा विद्यायामपि तुल्यता महती श्रद्धा भगवति वर्त्तत इति "यो यच्छ्रद्धः स एव सः" इति ऐक्यादनुरोधाद्वा शीलमपि तुल्यं शीलं स्वभावः शान्तोग्रादिः आचारो वा उभयमप्यत्र बाह्याभ्यन्तरं ग्राह्यम्। ननु भगवान् शान्तः विलम्बेन च कार्यं करोति मायातु सत्वरेति वैधर्म्यस्य विद्यमानत्वात् कथं तुल्यतेति चेत् तत्राह--धीरेति मयापि धैर्यमवलम्बनीयं भगवत्कार्यानुरोधेनेति। ननु भगवति भजने न तुल्या अपेक्ष्यन्ते किन्तु भगवदुत्कर्षं ज्ञात्वैव प्रवर्त्तेत इति किमिति तुल्यत्वं निरूप्यत इति चेत्तत्राह--पतिमिति। पतित्वेन स्वीकारे तुल्यता वक्तव्या अन्यथा दासीत्वं भवेत्। नन्वस्तु को दोष इति चेत तत्राह--कुलवतीति। कुलस्थाः तथा सति खेदं प्राप्नुयुरिति भावः किञ्च कन्येति अवश्यं कन्यया वरणीयः कश्चित् पतित्वेनाव-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रणे स्वयं न गृह्णीयात् विनियोगार्थमन्याधीनां वा कुर्यात् किञ्च उपपत्तौ सत्यां तत्परित्यागे कारणाभाव इत्याह—काले नृसिंहेति अवसरे तत्परित्यज्य अन्योच्छिष्टा भूत्वा पश्चाद्भगवदर्थं यत्ने क्रियमाणे असमञ्जसं स्यात् अयोग्यत्वात् शक्यत्वे तु नस्त इत्याह—हे नृसिंहेति नरत्वाद्योग्यत्वं सिंहत्वात्समर्थत्वमिति । किञ्च नरलोके मनसोऽयमेवाभिरामः अतो वरणे अभिराम एव वरणीय इति योग्यत्वाद्यविचारेणापि त्वमेव वरणीय इत्यर्थः ॥ ३८ ॥

एवं योग्यतां निरूप्य विज्ञापनामाह—तन्मे भवान् खलु वृत इति । अत्रापि गृहे सर्वदा मयोच्यते कृष्ण एव पतिर्मम मान्य इति एतत्सर्वेऽपि जानन्ति तथापि बलात् प्रवर्त्तन्त इति खलु पदार्थः । किञ्च पूर्वमपि लक्ष्मीस्वयम्बरे अमृतमथने मया भवानेव वृतः सैवाहमिति भावः । उपाध्यन्तरं निवारयन्नाह—पतिरिति । एवं स्वकृतमुक्त्वा भगवन्तं प्रार्थयते । जायां विधेहि इति । अङ्गेति स्नेहसम्बोधनमन्यथा धार्ष्ट्यमनुचितं स्यात् अङ्गस्य वा जायां विधेहि अन्यथा भगवान् सर्वपतिरिति प्रकारान्तरेण वा जायात्वं स्यात् जायापदेन यावानर्थः स सर्वोऽपि विधेयः । ननु भगवान् भगवदिच्छाव्यतिरेकमर्थं न गृह्णाति इति कथं त्वां ग्रहीष्यतीति चेत्तत्राह—आत्मार्पितश्चेति । आत्मा मदीयसङ्घातः तुभ्यं समर्पितः अतो यथेष्टविनियोगे न कापि चिन्ता चकारात्सर्वमेव अस्मत्सम्बन्धि समर्पितमिति सर्वत्रैव तव कामचारः अतस्तदपेक्षा तेषां प्रतिबन्धो वा न घटत इत्युक्तं भवति भवत एवात्मा अतो भवते समर्पित इति नालौकिकं किञ्चित् अङ्गीकृते शीघ्रमागमनार्थं बाधकमाह—मा वीरभागमिति । वीरस्यैव भागोऽहं शौर्येणैव लक्ष्मीः प्राप्यत इति तेनैव दत्ता अन्यस्य भवति अत एव य एव शूरः स एव राज्यमुपभुङ्क्ते तथा सति चैद्यस्य अशूरत्वात् भोगाभावेऽपि केवलं काकवत्स्पर्शो भवेत् तदा महतोऽपि भोगाभावात् जन्मवैयर्थ्यम् अनेन महती आपदा उपस्थितेति न कापि वाक्ये दूषणं मन्तव्यमिति भावः । आरात् दूरादपि अभिमानेनापीत्यर्थः । दानानन्तरं हरणे अभिमानोऽपि भवेत् वाग्दानं तु "अनृतं वै वाचा वदती"ति श्रुतेरप्रमाणमेव अन्यथा पुण्यपापव्यवस्थायां वाङ्मनसस्य अप्रामाण्यं न स्यात् एतदर्थमेव श्रुतिः प्राह "वाङ्मनसयोरनृतत्वमि"ति । ननु स जानाति न मदीया त्वमिति त्वया वा वक्तव्यः ततः कथं स्प्रक्ष्यतीत्याशङ्क्याह—गोमायुवदिति । त्वदनागमने मृतप्रायां मृतां वा दैवकल्पितं स्वभागं ज्ञात्वा स्प्रक्ष्यतीति भावः । नन्वेवमस्तु को दोष इति चेत्तत्राह—मृगपतेरिति । मरणे यद्यपि नानुपपत्तिः तथापि तदनन्तरं स्पर्शे महदनौचित्यं नहि सिंहाय तद्भक्तैः निवेदितं शृगालो भक्षयितुमर्हति अम्बुजाक्षेति दृष्ट्यैव तापनाशकत्वमप्युक्तम् । तेन वरणमप्ययुक्तमिति भावः ॥ ३९ ॥

एवं दृष्टसामग्र्या भगवत्प्रार्थनामुक्त्वा स्वस्य सर्वेणापि धर्मेण शपथमपि वदन्ती प्रार्थयते—पूर्तेति । बाल्ये खातादिकं कर्तुं शक्यत इति इष्टात् पूर्वं निर्देशः । पूर्तं खातादि इष्टं यागादि दत्तं तुलादानादि नियमाः परित्यागरूपाः व्रतानि ग्रहणरूपाणि देवानां विप्राणां गुरूणां चार्चनानि । एवमष्टविधान्युद्दिश्य काण्डत्रयमपि सङ्गृह्य स्मार्त्तपौराणिकान् धर्मान् आदिशब्देन सङ्गृह्णाति । एवं सर्वैरेव धर्मैः भगवानेव सेवयाराधितः ननु कामनार्थं किञ्चिदपि विनियुक्तं तदा भगवान् स्वयमेत्य पाणिं गृह्णातु केवल एव आराधित इति न दमघोषसुतादयः स्पर्शमप्यर्हन्तीति गदाग्रज इति विषयप्रियत्वमुक्तं तास्मिन् समागते कंसे हते पश्चाद्भव उत्पन्न इति । भगवदाविर्भावानन्तरमपि तेन पित्रादेर्वंशः कारित इति वंशकरणे तस्येच्छा सूचिता अत एव एत्य स्वयमागत्य पाणिं गृह्णातु इति । स्वकृतधर्मेषु भारारोपः । ननु "मद्भक्तपूजाभ्यधिके"ति भगवद्भक्तानां वा ग्रहणे को दोष इति चेत्तत्राह—अन्य इति । ते भगवत्प्रतिपक्षाः, अन्यथा तु दासीदासभावेनापि भजनं भवतीति नात्यन्तमाग्रहो भवेत् अन्यथा अपघातमरणे यमादयो वा मा गृह्णन्त्विति अन्यनिषेधः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम् । मुद्रामुन्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत् । ब्राह्मणः श्रीकृष्णाज्ञया वाचयतीति श्रीस्वामिचरणाः । नन्वदृष्टाश्रुतचरीं नृपकन्यां त्वां महां वराय पत्रिकां स्वविवाहार्थं लिखन्तीं निर्लज्जां कथमङ्गीकरोमीति चेत् सत्यमहमपि स्वदुर्वशस्य स्वचित्तस्य स्वभावमेवावेदयामि तत् श्रुत्वा अपेक्षस्व उपेक्षस्व वा अनुगृहाण निगृहाण वा तत्र खलु दुर्लभस्य तव लाभालाभाभ्यां सदा सुखं जीविष्यन्त्या अद्य श्वो वा मरिष्यन्त्या मम न भयलज्जे इत्याह—श्रुत्वेति सप्तभिः । हे अच्युत ! तव गुणान् रूपं च श्रुत्वा मम चित्तमपत्रपं विगतलज्जं सत् त्वयि आविशतीति मच्चित्तस्य निस्त्रपीकरणे तव गुणरूपे हेतू मम च कर्णावित्यावयोरुभयोरेव दोष इति न त्वयाहमुपालम्भनीया नापि मया त्वमुपालम्भनीय इति भावः । हे अच्युतेति मच्चित्तं निस्त्रपी भूयापि त्वय्याविशति तस्मात्त्वं च्युतो न भवसि न जाने किमपरं चिकीर्षतीति भावः । नन्वन्यस्यापि पुरुषस्य गुणरूपे प्रकृष्टे भवत एवेति स किं न दृश्यते तत्र नैवं वाच्यमिति वदन्ती प्रथमं गुणान् विशिनष्टि—शृण्वतां श्रवणवतां कन्याजनानां कर्णविवरैर्निर्विश्याङ्गतापम् अङ्गयोः स्थूलसूक्ष्मयोरुभयोरेव तापं समस्तमेव हरतो नाशयत इत्येवंभूताः गुणाः कस्यान्यस्य पुंसो वर्त्तन्ते त्वं वदेति भावः । रूपं विशिनष्टि—दृशिमतां चक्षुष्मतां जनानां दृशां दृगिन्द्रियाणाम् अखिला अन्यूनाः श्रेष्ठा ये अर्थाः विषयाः नीलमणिनीलोत्पलादीनां कनककुङ्कुमादीनां पद्मरागबन्धूकादीनां चन्द्रकान्तचन्द्रादीनां च ये वर्णा नीलपीतरक्तशुक्लास्तेभ्यः सकाशादपि महामाधुर्यसम्बन्धी लाभो यत्र तत् रूपं त्वदीयगात्रस्तनाधरनखादिसौन्दर्यं तस्मादेवं भूतं रूपं कस्यान्यस्य वर्त्तते इति भावः । अत एवानुरूपं सम्बोधयति हे भुवनसुन्दर ! भुवनेषूर्ध्वाधोवर्तिषु प्राकृताप्राकृतेषु लोकेषु सुन्दर प्रकृत्याचाकृत्या च शोभमान ! ॥ ३७ ॥

नन्वस्तु मल्लक्षणः पुरुष एव त्रिजगत्यस्मिन्निरुपमः किं कन्यापि श्रीनेत्रवती जगत्यस्मिंस्त्वमेवैका वर्त्तसे यत एवमन्या न निर्लज्जावतीति तत्राह—का त्वेति । हे मुकुन्द ! मुखे कुन्दवद्धासो यस्येति मामेव हसितुं प्राप्तावसरेऽस्यपि । का

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

महती रूपगुणवती धीरा बुद्धिमती कुलवती त्वां पतिं न वृणीत। तेन कुरूपा दुःशीला कुबुद्धिरनभिजातैव अशृण्वती वा त्वां न वृणीते इति भावः। कीदृशं कुलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः। काले स्वसमये इति अन्या अपि मनुष्याः बह्व्य एव कन्याः स्वसमय एव त्वां वरिष्यन्ति नत्वधुनैव मत्समय इति भावः। हे नृसिंह! नरश्रेष्ठ हे सिंह-वद्दुर्धर्षेति न मे त्वद्वशीकारे कापीच्छास्तीति भावः। तदपि नरलोकमात्रस्यैव त्वं मनोऽभिरमयसीति मन्मनसः कोपराध इति भावः॥ ३८॥

यस्मादेवं तत्तस्मात् मया भवान् पतिर्वृतः प्रथममेव नत्व-धुना म्रियसे आत्मा जीवो देहश्चार्पितः। पत्रीप्रेषणं तु भव-न्मनो निर्द्धारज्ञापनार्थमेव भवतोऽङ्गीकारे सतीमं पालयामि अनङ्गीकारेतु ज्वालयामि नतु कस्मैचिदपि ददामि यदि स्वयं प्राप्याप्यागत्य स्वयं वरेदिति भावः। किन्त्वात्मनश्चैतन्नामिदं मे बलिराजवन्न निर्भावमेव किन्तु सभावमेवेत्याह — हे विभो! भवतो जायां विधेहि। यथा कश्चित् कस्मैचित् किमपि भोज्यं दत्त्वा इदं त्वया स्वयं भोक्तव्यमेवेति ब्रूते इत्यतो निर्भावात् स्वभावमात्मनिवेदनं प्रेमस्पर्शित्वाच्छ्रेष्ठमिति ज्ञेयम्। किञ्च स्वस्याङ्गी-कारमनङ्गीकारं वा ब्राह्मणं शीघ्रं प्रेष्याहं ज्ञापनीयेत्याह-मेति। वीरस्य तव भागमिमं चैद्यो माभिमर्शतु। मयि त्वदाशया देहमिममव-हन्त्यामकस्मात् चैद्य आगत्य यदि स्पृशेत् तत्क्षण एव त्वदा-शायां निवृत्तायां त्वद्विरहाग्निरेवाति प्रज्वलित एनं भस्मीभूतं कुर्यादेव। किन्तु तवाप्रतिष्ठा भाविनीति मे भयमिति भावः। अप्रतिष्ठामेवाह — मृगपतेर्बलिं गोमायुः शृगाल इवेति। अम्बुजा-क्षेति तदानीं त्वन्नयनकमलं ध्यायन्त्या मम तु देहे दह्यमाने-ऽपि न तापो भावीति भावः॥ ३९॥

अये महाद्दुर्लभपुरुष! त्वं नैकजन्मसुकृतलभ्यस्तस्मात् सामा-न्यतस्त्वत्प्राप्तिकामया निष्कामया वा यदि मया पूर्वपूर्व-जन्मसु बहूनि सुकृतानि कृतानि तदा तेषामेष एव फलविशेषो भूयादिति प्रार्थयते। पूर्तेति। पूर्तैर्देवैर्भगवत्सम्प्रदानकै-र्नियमैस्तीर्थस्नानादिभिः व्रतैरेकादश्यादिभिः देवविप्रगुर्वर्चनै-र्भगवदर्चनाङ्गैः यदि मया भगवान् अलमतिशयेनाराधितस्तदा मानुष्या मे मानुष एव भगवान् गदाग्रजः आगत्य पाणिं गृह्णातु नत्वन्ये नारायणादयोऽपि देवा मानुषा चेत्यर्थः। दम-घोषसुतस्य तत्रादित्वेनोल्लेखस्तु तद्विवाहस्य प्रस्तुतत्वादेव॥ ४०॥

श्रीशुकदेवकृतसिद्धान्तप्रदीपः।

श्रीरुक्मिण्युवाचेति। हे भुवनसुन्दर! निरतिशयसौन्दर्यालय हे अच्युत! नित्यैश्वर्य सम्बोधनाभ्यां भगवत्याः अनावृतज्ञान-वत्ता द्योतिता हे अङ्ग भर्तः अनेन सम्बोधनेन भगवत्याः भगवता भर्त्रा सह नित्यसम्बन्धो द्योतितः। अपगता त्रपा यस्मात्तन्मे चित्तं त्वय्याविशति श्रीमत्पुरुषोत्तमस्य स्वभर्तुः प्रार्थनायां मम का त्रपेत्यर्थः। एवं स्वभावत एव देव्याः ज्ञाना-तिशयः तद्वाक्येन सूच्यते। अथवावतारलीलानुरूपेण तद्वाक्येन तस्याः ज्ञानातिशयः सूच्यते गुणानुरूपं च श्रुत्वा त्वयि चित्त-माविशतीति। अनेन अन्तःपुरगताया देव्याः यस्मात्कस्मा-च्चिदपि जनात् यथा कथञ्चिदपि श्रवणेन यथावद्भगवद्गुण-रूपधारणशक्तिर्द्योत्यते कथम्भूतान् गुणान् शृण्वतां ब्रह्मादि-श्वपचपर्यन्तानां कर्णविवरैरन्तः प्रविश्य तापं संसारतापं हरतः। अनेन श्रीकृष्णगुणश्रवणं ब्रह्मादिश्वपचान्तजीवसंसार-निवर्तकमिति द्योत्यते। कथम्भूतं रूपम् दृशिमतां सर्वेषां ब्रह्मा-दिश्वपचान्तानां दृशामखिलानामर्थानां लाभो यस्मात्॥ ३७॥

ननु महाकुलप्रसूतायास्तथैवं लोकविरुद्धमनुचितमत आह-केति। कुलवती तत्रापि धीरा धैर्य्यवती किं बहुना कुलं परि-वारः शीलं सुस्वभावः रूपं सौन्दर्य्यं विद्या यथार्थज्ञानं वयोऽ-वस्था द्रविणं वित्तं धाम पुण्यार्जितं लोकद्वयं च तैर्महती। एवम्भूता का नाम कन्या आत्मतुल्यमनुपमम् अतः लोकमनोऽभि-रामं सर्वलोकानां मनांसि अभिरमयतीति तथा सर्वबुद्धिप्रेरकं वेदमात्रार्थभूतं हे मुकुन्द! मुक्तिप्रद हे नृसिंह! भक्तमनोरथपूर-णार्थं नृसिंहादिरूपेण कृतावतार त्वा त्वां पतिं न वृणीतेत्य-न्वयः॥ ३८॥

हे विभो! सर्वव्यापक सर्वसाक्षिन् तत्तस्मान्मे मया भवान् खलु पतिर्वृतः आत्मा च भवतोऽर्पितः अतः हे अङ्ग! त्वम-त्रागत्य मां भवतो जायां विधेहि हे अम्बुजाक्ष! मृगपतेः सिंहस्य बलिं गोमायुवत् वीरस्य तव भागं माम् आरात् शीघ्रमा-गत्य मा अभिमर्शतु मा स्पृशतु॥ ३९॥

यदि पूर्तादिभिरलमाराधितः भगवान् परेशो गदाग्रजः तर्हि मे पाणिं गृह्णातु अन्ये जीवा दमघोषसुतादयो न गृह्णन्तु तत्र कूपादिनिर्माणं स्मार्तं कर्म पूर्तम् यज्ञादि वैदिकं कर्म इष्टम् दत्तं विविधं दानम् अन्यत्स्पष्टम्॥ ४०॥

भाषाटीका।

विजयध्वज वीरराघव

ब्राह्मण बोले हे पुरुषोत्तम! मेरे को रुक्मिणी जी ने आपके पास भेजा है उनके संदेश को सुनकर फिर जो कुछ करना हो सो आप कीजिये॥ ०॥

इतना कहकर ब्राह्मण ने उस पत्र को रख कर श्रीकृष्णजी के चरणों में प्रणाम किया जगन्नाथ श्रीकृष्णजी ने उस पत्र को लेकर सुन्दर नेत्रों से प्रसन्न होकर हँसकर बड़ी चाहना से पाठ किया क्योंकि आप बड़े धर्मात्मा हैं॥ ०॥

पत्र में लिखत रुक्मिणीजी के वचन ये हैं रुक्मिणीजी कहती हैं हे अच्युत! हे सुन्दर! श्रीकृष्ण जो मनुष्य आपके गुणों को सुनते हैं तभी गुणों के कर्ण द्वारा हृदय में पैठने से उनके शरीरों के सब ताप मिटजाते हैं जो आपके रूप का दर्शन करते हैं तिनके सब मनोरथ पूरे होजाते हैं उन आपके गुणों को सुनकर मेरा चित्त निर्लज्ज होकर आपके विषे लग्न होगया है॥ ३७॥

हे मुकुन्द! नृसिंह! पुरुषों में श्रेष्ठ ऐसी धीर कुलवती उत्तम कौनसी कन्या होगी जो कि-कुल शील रूप विद्या धन महल आदि से सब के मन को हरनेवाले अपने सदृश आपको विवाह के समयपर वरण न करेगी॥ ३८॥

श्वो भाविनि त्वमजितोद्वहने विदर्भान्गुप्तः समेत्य पृतनापतिभिः परीतः १।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ ४१ ॥
अन्तः२पुरान्तरचरीमनिहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम्।
पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥
विज० पाठः (तत्रैत्य मां रथपदातिगजाश्वयुक्तः संमथ्य शाल्वमगधान्सहचैद्यभूपान्।
आदाय मां सहचरीभिरथो रमेशो गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ॥)
यस्यांङ्घ्रिपङ्कजरजः३स्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमो४पहत्यै।
५यर्ह्यम्बुजाक्ष ! न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः ६स्यात् ॥ ४३॥

(श्रीशुक उवाच

विज० पाठः इति पत्रगतं विश्वं विमृश्य मधुसूदनः।
संदेशं राजकन्यायास्तं ब्राह्मणमैवेक्षत ॥

ब्राह्मण उवाच।

इत्येते गुह्यसन्देशा यदुदेव ! मया हृताः।
विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे रुक्मिण्युद्वाहे
द्विपञ्चाशत्तमोऽध्यायः॥५२॥

भाषा टीका।

आप जो लक्ष्मीके पति हो तिनको मैने वरण किया है आप-भक्तोंके प्रिय हो ईश्वर हो इस बात को जान कर आप इस आपकी चरण दासी का मनोरथ पूरा करो हे प्रियतम ! आप के चरणों में मैं प्रणाम करती हूं ॥०॥

हे भगवन् ! तिससे मैंने आपको पति करके वरणन किया है अपने आत्मा को आपके अर्पण किया है इस अवसर पर आप मेरे को अपनी भार्या बनाओ हे वीर ! हे कमल नेत्र ! जैसे सिंह के भाग को स्यारके लेजाने से परिहास होवे तैसे आपके भाग मो को शीघ्र शिशुपाल मत ले जावे ॥ ३९ ॥

मैने यदि पूर्व जन्म में कुवा वावडी बनाये होवें तथा यज्ञ किये होवें दान व्रत नियम देव गुरु ब्राह्मणों की सेवा करके परमात्मा नारायण की आराधना कीनी हो तो गदा-ग्रज श्रीकृष्णचन्द्र जी आकर मेरे हस्त को ग्रहण करें और शिशुपालादिक कोई मत छुवें ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु चैद्याय बन्धुभिरर्पितायां त्वयि किमधुना करणीय-मित्यपेक्षायामाह—श्वो भाविनीति। हेअजित ! श्वोभाविनि उद्व-हने विवाहे प्रथमं गुप्तोऽलक्षित एवागत्य पश्चात्पृतनापतिभिः परिवृतः संमैद्यादिबलं निर्मथ्य प्रसह्य बलाद्वीर्यं प्रभाववदेव-मेव शुल्कं वैवाहिकं देयं यस्यास्तां माम् अनेन राक्षसविधि-नोद्वहेत्युपदेशरहस्यम् ॥ ४१ ॥

ननु भवतु शिशुपालादिबलप्रमथनमन्तःपुरमध्यगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तःपुरेति। पुरा-द्बहिर्वर्तमानां गिरिजामम्बिकाम् अम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४२ ॥

ननु किमनेनानर्थकारिणा निर्बन्धेन चैद्योऽपि तावत्प्रख्या-तगुणकर्मा योग्य एव वर इति तत्राह—यस्येति। हे अम्बुजाक्ष ! यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनमात्मनस्तमसोऽपहत्यै उमा-पतिरिव महान्तो वाञ्छन्ति तस्य भवतः प्रसादं यर्ह्यहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून्प्राणान् जह्यां

(१) समेतैः। (२) पुरान्तरचरामपि। (३) स्नपनं। (४) निहत्यै। (५) यद्यम्बुजाक्ष। (६) स्यात्।
इति विजयध्वजपाठः।

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्यजेयं ततः किमित्यत आह—शतजन्मभिरिति । एवमेव वारं वारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति ॥ ४३ ॥

अथ यत्कर्तुं करणीयं तद्विमृश्य क्रियतां तदनन्तरमेव क्रियतामिति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्विपञ्चाशत्तमोऽध्यायः॥ ५२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निजातिवैयग्र्येण स्वयमेवोपायमभ्युपदिशति द्वाभ्याम् श्व इति । गुप्तः ख्यापितैर्नामदेशभाषान्तरैः केनाप्यनुपलक्षितः सम्यक् एत्य अन्तः प्रविश्येत्यर्थः । पृतनानां पतिभिरिति । सैन्यस्य तत्पतीनां च बाहुल्यमभिप्रेतं तव स्नेहस्वाभाव्येन तत्र तु हे अजितेति एतादृशमेरणोत्साहसे हेतुत्वकः तत्र मगधेशबलस्यापि निर्मथनं वैद्यसहायत्वात् निर्मथ्येति बलस्य समुद्रत्वं व्यज्यते तेन च पूर्वं यथा समुद्रं निर्मथ्यमामुद्धृतवानसि तथाधुनापि चैद्यादिबलार्णवं निर्मथ्य समुद्धरेति । वीर्यशुल्कामिति । राक्षसविवाहस्यैव योग्यता प्रार्थनादिनिरपेक्षता चोक्ता कार्यसिद्धिस्त्वजितत्वादेव भविष्यतीति ॥ ४१ ॥

ततोऽप्यतिव्यग्रा श्वो भाविनीत्यत्र कारणं विवृण्वती पुनर्विशेषतोऽप्युपदिशति । अन्तःपुरस्यापि मध्यप्रकोष्ठं यत्तचरीमितीति अत्रेत्यर्थः । पूर्वेद्युः विवाहपूर्वदिवसे कुलदेवयात्रेति तस्या आवश्यकत्वमुक्तम् । ननु पूर्वेद्युरपि कस्मिंश्च क्षणे भवेदिति कथं ज्ञेयं तत्राह—महतीति । महावाद्यायुत्सवेन सा सुव्यक्तैवेत्यर्थः । उपेयात् पूजार्थमन्तिके आगच्छतीति विधिरस्तीत्यर्थः ४२ ॥

स्नपनशब्देन रजसां गङ्गाप्रभवत्वादिना सर्वतीर्थमयत्वं व्यज्यते । यद्वा रजसः स्नपनं क्षालनोदकमित्यर्थः । महान्तः श्रीब्रह्मादयः आत्मनस्तमः अज्ञानं तस्य हत्यै मूलतो विनाशाय उमापतिरिवेति दृष्टान्तः तस्य गङ्गाधरत्वेन रजःस्नपनवाञ्छायाः सुप्रसिद्धत्वात् तस्य च तमस्तमोगुणाधिष्ठातृत्वं तस्यापहत्यै उमायाः पतिरिति यथात्मारामेणापि श्रीशिवेन तद्भक्तिवशात्तया जन्मान्तरेऽप्युमा यत्नेनोढोढा तथा त्वयाप्यहमुद्वोढव्येति भावः । एवं परममहत्त्वेन त्वमेव पतिर्योग्यो. नत्वन्यः कश्चिदिति भावः । तथा परमसौन्दर्येणापीत्याह—हे अम्बुजाक्षेति । तस्येति यच्छब्दाक्षेपात् भवदिति छान्दस एव षष्ठ्या लुक् यदि भवतः प्रसादं पत्नीत्वेन स्वीकारलक्षणं न लभेय तदा जह्यामिति हेतुहेतुमतोर्लिङ् तत्र जह्यामिति कामप्रवेदने प्रौढ्या सम्भावने च स्यात् त्यागप्रकारमाह—व्रतकृशान् शतेति एवं कृपार्थं दुःखमरणं बोध्यते । यद्वा स्वत एव त्वदर्थे व्रतैः कृशान् अधुना त्वत्प्रसादालब्ध्या स्वयमेव निर्गच्छतोऽसूनायासेनैव जह्यामित्यर्थः । इति मरणस्य सुकरत्वमुक्तं ततश्चैवं शतजन्मभिरपि स्यादिति व्रतकृशेति पाठे स एवार्थः शतशब्दोऽत्रानिर्णयसङ्ख्यत्वे अन्यत्वैः किन्तु स्वस्या नरकन्यालीलाभिव्यक्तिरियम् । यद्वा ननु त्वमेव न पत्नीयोग्यासीति कथमुद्वहेयमिति चेत् सत्यमेव यतः श्रीब्रह्मादीनामपि दुर्लभोऽसि काहं क्षत्रियकन्या तथापि बहुलजन्मसु प्राणपरित्यागेनापि त्वदर्थं यतिष्य इत्याह—यस्येति । वाञ्छन्त्येव न त्वेवापि लभन्ते अतः सम्भावनायामेव लिङ् शतजन्मभिर्वा प्रसादः स्यादित्येतदर्थमित्यर्थः । कुतस्तदाह—हे अम्बुजाक्षेति । परममाधुर्येण मनोव्याकुलताविधानादेवेति भावः । अथवा । नन्वहमनन्तगोपिकाविरहदूनो न करिष्याम्येव विवाहं तस्मादन्यमेव गुणरूपाभ्यां महान्तं कञ्चिद्वृणु इत्याशङ्क्य उपायान्तरमपश्यन्ती दुरन्तां मरणपर्यन्तां निजकृच्छ्रपरम्परामुद्दिश्य करुणया धर्मभयेन च तं प्रत्यावर्तयति—यस्येति ॥ ४३ ॥

गुह्यत्वेन सन्देशानां गौरवं बहुवचनेन नानाप्रकारत्वायुक्तिमत्त्वं स्वस्य च परमविश्वसनीयत्वं निःशेषवक्तृत्वं च व्यक्तं तथा त्वयापि गोपनीया एवेति । अन्यथा बन्धुषु तस्या लज्जाद्युत्पत्तेः मया आहूता आनीता इति मम तु कृत्यमेतावदेवेति भावः । विमृश्येति । विनयभरेण सच सम्यक् प्रवर्तनार्थः वयं ब्राह्मणा ऋजवः सर्वोपरि बुद्धिस्तु तवैवेति भावः । तत्र गुह्यत्वे सति यदुभिर्मन्त्रणं विना न स्वयं कर्तुमुत्सहे इति न वाच्यं यतः हे यदुदेव ! तव बुद्धिबलाधीना एव तेऽपीति भावः । तस्माद्यत्कर्तव्यं तदनन्तरमेव क्रियतां प्राप्तावसरत्वान्मन्त्रणादिविलम्बं न सहत इति भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कथमुद्वहे इति चिन्तयन्तमुपायं वदामीत्यर्थः । शतजन्मभिः स्यां तस्य तव स्वामित्यर्थः ४३—४४ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्विपञ्चाशत्तमोऽध्यायः ॥५२॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु बन्धुभिश्चैद्यायार्पितायां त्वयि किमधुना मया विधेयमित्यत्राह—श्वो भाविनीति । हे अजित ! श्वो भाविन्युद्वहने विवाहे त्वं तावद्गुप्तः अलक्षित एवागत्य ततः सेनापतिभिः परिवृतः सन् चैद्यादिबलं निर्मथ्य पराभूय प्रसह्य हठाद्वीर्यप्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां मां राक्षसेन विधिनोद्वहेत्युपदेशरहस्यम् ॥ ४१ ॥

ननु भवतु शिशुपालादिबलप्रमथनमन्तःपुरगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तरिति । अन्तःपुरमध्यचरीं त्वां बन्धूनहत्वा कथमुद्वहे इति चेत्तत्रोपायं वदामि पूर्वेद्युः विवाहदिनादिति शेषः । महती कुलदेवयात्रास्ति यस्यां यात्रायां बहिः पुरादिति शेषः नववधूरहं गिरिजामम्बिकामुपेयां गच्छेयं दर्शनार्थमिति शेषः । अम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु किमनेनानर्थकारिणा निर्बन्धेन चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इत्यत आह– यस्येति । हे अम्बुजाक्ष ! यस्य तव भवतोऽङ्घ्रिरजोभिः स्नपनमात्मनस्तमसोऽपहत्यै उमापतिरिवान्येऽपि महान्तो वाञ्छन्ति तस्य भगवतः प्रसादं यद्यहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून् प्राणान् जह्यां त्यजेयं ततः किमित्यत आह– शतजन्मभिरपि त्वयां तवाहं भार्या स्यामित्यर्थः ॥ ४३ ॥

इत्थं वाचिकं पठित्वाथ स्ववचनमप्याह– इतीति । हे यदुदेव ! इत्येवं विधाः गुह्यतमाः संदेशा मया अहृताः यदत्र कर्त्तव्यं तद्विमृश्य क्रियतां तच्च समनन्तरमेव क्रियतामिति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उद्वहने विवाहे श्वो भाविनि श्वः प्रभाते भविष्यति सति समेतैः पृतनापतिभिः गुप्तान् विदर्भान्समेत्य राक्षसेन विधिना बलात्कन्याहरणलक्षणेन वीर्यं शुल्कं मौल्यं यस्याः सा तथा तां माम् ॥ ४१ ॥

नववधूर्दर्शनाय ॥ ४२ ॥

यथोमापतिः श्रीहरिचरणसरसिजस्तुतिं करोति तस्य तव यदि भवत्प्रसादं पूज्यानुग्रहं न लभेय तर्हि असून्प्राणान् जह्यां त्यक्ष्यामि किञ्च शतजन्मभिः व्रतकृशा तव भार्यैव स्यामित्यर्थः ॥ ४३—४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

नन्वेवमेवानुग्रहीष्यामि मान्यथा शङ्किष्ठा इति चेत् शीघ्रमेवागन्तव्यं नैकाकिना च बलयुक्तेनैवेति पुनः सोत्कण्ठमाह— श्वोभाविनीत्यादि । पृतनापतिभिः परीत एव तत्रापि गुप्त एव अलक्षित एव लक्षिते सति राजानः सावधाना भविष्यन्ति तत्रापि श्वोभाविनि उद्वहने उद्वाहदिनस्य पूर्वेऽहनि अन्यथा अत्रागत्य बहुकालावस्थानमत्यनुचितम् अकस्मादेवागत्य मां हरे-स्यर्थः । वीर्य्यमेव शुल्कं यस्यास्ताम् एतेनाक्रुक्रान्तरमपि नास्तीत्याह—राक्षसेन विधिना हठाहरणरूपो हि रक्षोविधिः ॥ ४१ ॥

ननु चैद्यमगधेशबलं निर्मथ्येति यदुक्तं तत्र त्वद्भ्रातापि तेषां सपक्षः सोऽप्युत्थास्यते तदा सोऽपि मे वध्यः स्यात् भ्रातृहनने तथापि दुःखं भविष्यतीत्याशङ्क्याह—अन्तःपुरान्तरचरीमित्यादि । बन्धून् त्वद्भ्रात्रादीन् अनिहत्य त्वां कथमुद्वहे इति चाशङ्कसे तदोपायं वदामीत्यर्थः । पूर्वेद्युर्विवाहदिनस्य पूर्वेऽहनि देवयात्रास्तीति नः कुलाचारः यस्यां नववधूर्नववधूत्वेन भाविनी कन्येत्यर्थः गिरिजां पुरबहिः स्थितां दुर्गां पूजयितुम् उपैति तेन तं समयमासाद्यैव बन्धुहननं विनैव मां हरेत्युपदेशः ॥ ४२ ॥

ननु ज्ञातं तव भ्रातरं प्रति महती दया स तु मे महान् विपक्षः कथमेवं स्वजनादिसापेक्षस्य जनस्य मल्लाभो भवेदित्याशङ्क्याह—यस्याङ्घ्रीत्यादि । यस्य तव अङ्घ्रिपङ्कजरजःस्नपनं महान्तो वाञ्छन्ति उमापतिरिव श्रीमहेश इव हे अम्बुजाक्ष ! तस्य भवतः प्रसादं यदि न लभेयं तदा व्रतकर्षणात् असून् जह्यां त्यजेयम् अतः प्राणेभ्योऽधिको नहि स्वजनः स्वेनस्वप्रतिपक्षस्तदा सोऽपि हेय एव । ननु प्राणत्यागे किम्भविष्यति तत्राह— शतजन्मभिः जन्मनां शतेनापि स्यां तव परिगृहीता भविष्यामीत्यर्थः । श्रुत्वेत्यादिनाभिलाषः का त्वा मुकुन्देत्यादिना मतिः तन्मे भवानित्यादिना गर्वः पूर्वेत्यादिना वितर्कः श्वोभाविनीत्यादिना विवेकः अन्तःपुरान्तरचरीमित्यादिना पुनर्मतिः यस्याङ्घ्रीत्यादिना औत्सुक्ये विश्रान्तिः ॥ ४३—४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उद्वाहमात्रं प्रार्थयित्वा प्रकारमपि प्रार्थयते । श्वो भाविनीति । स्पष्टतया समागमने कदाचित्ते गोपनं कुर्युः लग्नात्पूर्वमेव वा शिशुपालाय प्रेषयेयुरविधानेन वा दद्युरिति । अतो यथा तेषु परिज्ञानं न भवति तथैवागत्य नेया अन्यथा उपक्रमात्प्रभृतिफलपर्यन्तं मध्ये कालविलम्बे शरीरपातोऽपि भवेदिति तथा प्रार्थनादेशेऽपि न पूर्वमागन्तव्यमित्याह---श्वो भाविनि उद्वाहे प्रथमतस्त्वमेकाकी गुप्तः समागत्य पृतनाश्च भिन्नतया समानीय तत्रापि पृतना यादवरूपैव ननु विजातीया आनेया अन्यथा मन्त्रभेदः स्यात् पश्चात् पुरप्रवेशे तैः परीतः अन्यथा स्वस्य चिन्ता स्यादिति यद्यपि त्वमजितः । अथवा अजितत्वादेव पक्षान्तराभावात् चैद्यमगधेशयोर्बलं निर्मथ्य मध्ये प्रतिबन्धकत्वेन स्थितमपसार्य तदर्थं प्रसह्य बलात्कारमपि कृत्वा मामुद्वह । नन्वेवं सति कामार्थं मुक्त्यर्थं विवाहो भवेत् न धर्मार्थमित्याशङ्क्याह---राक्षसेन विधिनेति । क्षत्रियस्य स एव धर्मः गान्धर्वस्तु पूर्वमुक्त एव तन्मे भवान् खलु वृत इत्यनेन अतो मद्विवाहे उभयं भविष्यतीति भावः । ननु एवं हरणे परस्वादानं भवेदित्याशङ्क्याह---वीर्यशुल्कामिति । नहि मूल्ये दत्ते परस्वादानमस्ति क्षत्रियाणां वीर्यमेव सर्वत्र शुल्कं पराक्रमं कृत्वा मारयित्वा य एव हरति तस्यैव तदिति क्षत्रियधर्मानुसरणे न परस्वादानमित्यर्थः ॥ ४१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

बाधकाकुल्या प्रकारमुपदिश्य तत्रापि स्फुरितं बाधकमनूद्य परिहरति—अन्तःपुरान्तरचरीमिति। बन्धूननिहत्य अन्तःपुरमध्ये वर्तमानां त्वां कथमुद्वहामीति चेत् तत्रापि सन्ति बहव उपायाः तथाप्यविकल्प उच्यत इत्याह—प्रकर्षेण उपायं वदामीति। केनचिद्व्याजेन स्वयं बहिरागच्छेत् भगवान् वा वेशं कृत्वा गच्छेत् आकर्षणं कुर्यात् वा प्रेरयेत् अन्यथा सर्वेषां सर्वेष्वपि पक्षेषु क्लिष्टं भवेत् तस्मादन्यदकृत्वा गौरीपूजनार्थमेव गतायाः हरणं कर्त्तव्यमिति प्रार्थना तत्र गमनमावश्यकमित्याह—पूर्वेद्युः विवाहात् पूर्वदिवसे महती यात्रा वर्त्तते सा अनुल्लङ्घनीया ततः कुलदेवतायाः। महतीत्यनेन दूरे गमनमुक्तं किमतो यद्येवमिति चेत् तत्राह—यस्यां बहिर्नववधूरिति। नववधूः नूतना वधूः संरक्ष्यापि लोकप्रसिद्ध्यर्थं भोगात्पूर्वं भागयोग्या नववधूर्भवति सा गिरिशां पार्वतीं द्रष्टुमुपेयादिति विधिः स्वयमपि गिरीणामीशभूतेति अकारान्तात् टाप् नित्यं संज्ञाछन्दसोर्वा ङीप् टाप् तयोर्बहिः स्थिता तत एव नेयेति भावः। अतो विवाहदिवस एव द्वारकायां विवाहो भविष्यतीति न ज्योतिःशास्त्रस्याप्यप्रामाण्यम् ॥ ४२ ॥

एवं स्वरूपप्रकारप्रार्थनां कृत्वा तदकरणे बाधकमाह—यस्याङ्घ्रिपङ्कजेति। यर्हि प्रसादं न लभेय तर्हि जह्यामसून्। ननु कोऽयं निर्बन्ध इति चेत् उत्तमफलत्वादित्याह—यस्य भगवत अङ्घ्रिपङ्कजस्य रजसा स्नानं महान्तोऽपि वाञ्छन्ति तत्र निदर्शनमुमापतिः सहि केवलं रजसा स्नानमलभमानः रजोयुक्तचरणोदकेन स्नानं करोतीति उमापतिपदेन उमयापि वृतः शिवः तस्यापि स एवाभिप्रेत इति तदेवोत्तमं फलम् किञ्च आत्मतमोऽपहत्यै आत्मनस्तमोगुणो गच्छत्विति अहमपि माया त्रिगुणात्मिका तत्रापि रुक्मिप्रभृतिभिः सह अवतीर्णेति तमःप्रधानैव ततश्चैतत्सम्बन्धेन दूरीक्रियते तदा पुनर्नैकृष्टजन्म भविष्यतीति तदर्थं प्रयत्नोऽवश्यं कर्त्तव्यः। तत्रायमुपायः सुगमः उत्तमः एतदभावे तु शरीरं वा त्यक्ष्यामि अयं संसर्गो गच्छतीति। किञ्च व्रतेन कृशा सती उत्तरोत्तरजन्मसु शतजन्मभिः अयमर्थः कदाचित्स्यात् "स्वधर्मनिष्ठः शतजन्मभि"रिति वाक्यात् अम्बुजाक्षेति सम्बोधनं दृष्ट्यैव तापहारकः कथमेवं करिष्यतीति बोधनार्थम् ॥ ४३ ॥

एवं रुक्मिणीवाक्यान्युक्त्वा उपसंहरति ब्राह्मणः—इति गोप्या एते सन्देशाः यदुदेवेति सम्बोधनात् विवाहः कर्त्तव्य इति सूचितं मयैवाहृता इति सुतरां गोप्यं कदाचिदेतत्पत्रमन्यस्य करप्राप्त्यात् भवेदिति शङ्कास्य स्यात् तदर्थमाह—एतद्विमृश्य कर्त्तुं यच्चात्र सिद्ध्यति तत्क्रियतां चकारात् यद्वक्तव्यं तदुच्यतामिति विमर्शानन्तरं कर्त्तव्यम् अथवा तदनन्तरमेव कर्त्तव्यं किङ्कुर्यं करवामेत्यस्यैतदेवोत्तरमित्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे तृतीयाध्यायविवरणम् ॥३॥ ५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सत्यं कृतैः पूर्वसुकृतैस्त्वमङ्गीकार्य्यैव मया किन्तु बधाय बन्धुभिः हास्यमानायां त्वयि किमधुना करणीयमित्यपेक्षायां स्वयमेवोपायमुपदिशति—श्व इति। हे अजित ! त्वं कैरपि जेतुमशक्य इत्यर्थः। अतो निर्भयत्वात् श्वोभाविनि उद्वहते विवाहे प्रथमं स्वसैन्यरहित एव गुप्तोऽलक्षित एवागत्य कुण्डिनपुरीं प्रविश्य पश्चादेव स्वशोभाख्यापनार्थं पृतनापतिभिः परीतो भव। अन्यथैतत्पुरप्रवेशो झटिति दुष्करः। अत्रत्यैर्वीरैर्दूरादेव त्वया सह योद्धुं प्रयास्यतेऽवश्यमिति भावः। पुरप्रवेशे तु सति मया विवाहशोभा प्रेक्षणार्थमेवागतमिति वदता त्वया सह यदि वीरा योद्धुं कारणाभावादेव न प्रक्रंस्यन्ते तदा त्वया सुखेनैवाहं हरणीया। यदि चानिष्टाशङ्किनो योत्स्यन्त एव तदा स्वशौर्य्यमाविष्कार्यमेवेत्याह—निर्मथ्येति। समुद्रं निर्मथ्य यथा लक्ष्मीर्गृहीता तथैवेति भावः। प्रसह्य हठादेव वीर्य्यं प्रभावदर्शनमेव शुल्कं वैवाहिकदेयं यस्यास्तां माम् ॥ ४१ ॥

ननु चैवं भवतु शिशुपालादिबलप्रमथनमन्तःपुरस्थायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तःपुरेति। कथमितीत्यनन्तरं ब्रूवे चेदिति शेषः। पुराद्बहिर्वर्त्तमानां गिरिजामम्बिकामम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥४२॥

यदि चैवं ब्रूषे भो राजपुत्रि ! मत्प्रापकप्राचीनसुकृतानि न ते सन्ति कथं मत्प्रसादं लप्स्यसे इति तर्हि भाविनि जन्मनि त्वत्प्राप्त्यर्थमेतज्जन्मनि ब्रह्मचारिणी सती तपः करिष्ये यदि चैकजन्मतपसा न पर्य्याप्तिस्तर्हि कोटिजन्मपर्य्यन्तमपि तपः करिष्ये। मम त्वत्प्राप्त्याग्रहस्तु मया दुर्वार एव यदि च वक्ष्यसे मत्प्राप्तिप्रतिबन्धकानि बहूनि ते दुरितानि सन्तीति तर्हि तपसैव लभ्याभिस्त्वच्चरणधूलिभिस्तान्यपि ध्वंसयिष्याम्येवेत्याह—यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनम् आत्मनस्तमसोऽपहत्यै उमापतिरिव महान्तो वाञ्छन्तीत्यहमपि तपोलब्धैस्तैरेव स्नात्वा स्वदुष्कृतानि नाशयिष्यामीति भावः। भवदिति षष्ठ्या लुगार्षः। तस्य भवतो यर्हि यदि प्रसादं न लभेय तदा व्रतैरुपवासादिभिः कृशान् प्राणान् जह्यां त्यजेयं ततः किमित्यत आह—शतजन्मभिरिति। एवमेवं वारं वारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति हे अम्बुजाक्षेति तव सुन्दरनयनावलोकलिप्सैव ममैतादृशकृच्छ्रकरणे हेतुरिति भावः ॥ ४३ ॥

गुह्यसन्देशा इति। भगवन्मम शपथो न कथ्येते प्रकाश्यास्तर्हि तस्या लज्जा भविष्यतीति भावः। यदुदेव इत्यत्रार्थे यदुभिरपि सह मन्त्रणा न कार्य्या। यतस्तेषामपि त्वमेव देव इति स्वयमेव स्वबुद्ध्या विमृश्य यत् कर्त्तुं कर्त्तव्यं तत्क्रियताम् अनन्तरमिति कार्य्यमिदं विलम्बं न सहत इति भावः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
द्विपञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ५२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विवाहोऽनेकप्रकारः वराद्गोमिथुनग्रहणेनार्षः बहुवित्तग्रहणेनासुरः कन्यावरयोरन्योन्यसंमत्या गान्धर्वः यथाशक्तिधनालङ्कारसहितकन्यादानं ब्राह्मः प्रमत्तेषु कन्याबन्धुषु चौर्य्येण कन्याग्रहणं पैशाचः यज्ञे कन्यादानं दैवः बहुषु वरेषु सत्सु कन्येच्छयैकस्मै तद्दानं स्वयंवरः प्रबलान्प्रमथ्य कन्याहरणं राक्षसः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथाप्यिमौ विशेषतः क्षत्रियविषयौ तत्रापि बलात्प्रमथ्य कन्याहरणलक्षणः राक्षसो विवाहः क्षत्रियस्यातिधर्म्यः तथाह भीष्मः ।

स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च ।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ॥
इति ॥

तत्र लोकहिताय क्षत्रियकुलाविर्भूतयोः स्वयं देवीदेवयोरनुरूपं चरमं विवाहं प्रार्थयते—श्वो भाविनीति । हे अजित ! श्वोभाविन्युद्वहे विवाहे प्रथमं त्वं गुप्तः अलक्षितो विदर्भान् देशान् एत्य पश्चात्पृतनापतिभिः परीतः सन् चैद्यमगधेन्द्रबलं निर्मथ्य प्रसह्य हठात् वीर्य्यशुल्कां वीर्य्य प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां मामेवं रूपेण राक्षसेन विधिनोद्वहेति प्रार्थनारहस्यम् ॥ ४१ ॥

पूर्वेद्युः विवाहादितिशेषः । यस्यां कुलदेवयात्रायां बहिरन्तःपुरादिति शेषः गिरिजागृहात्मम हरणं कुर्विति भावः ॥ ४२ ॥

यस्याङ्घ्रिपङ्कजरजोभिः स्नपनं स्नानमुमापतिरिव उमापतिर्यथा करोति तद्वत् महान्तो वाञ्छन्ति किमर्थम् आत्मतमसः स्वसंसारस्यापहत्यै तस्य भवतः प्रसादं यदि न लभेय न प्राप्नुयां तर्हि यावच्छतजन्मभिरपि भवत्प्रसादः स्यात्तावत् व्रतोपवासादिभिःकृशान् मन्दीभूतान् असून् नित्यविग्रहवत्याः जन्ममरणासंभवाच्छरीराणि जह्यामिति नोक्तं किन्तु बहुभिः आविर्भावतिरोभावैः प्राणान् प्राणायामप्रकारेण गृहीत्वा त्यजेयमित्यर्थः ॥ ४३ ॥

एवं सर्वं भगवत्याः वाक्यं सर्वं भगवति निवेद्य स्वेच्छया किञ्चित्प्रार्थयते-इतीति । इतिशब्दः हेतुवाचकः एते गुह्यसन्देशाः अतो हेतोः केवलं मयाहृताः न त्वन्यत्र प्रकाशिताः हे यदुदेव ! त्वयापि यादवेष्वपि न प्रकाशनीया इति सम्बोधनाभिप्रायः । अत्र यत्कर्तुं युक्तमिति शेषस्तत्स्वयं विमृश्य अनन्तरं शीघ्रमेव क्रियताम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

भाषा टीका ।

हे अजित ! श्रीकृष्णजी कल के दिन विवाह होने [illegible] है तिसमें आप पहिले छिप कर आओ फिर सेना के सहित शिशुपाल मगधदेश के राजा की फौज कूं जीत कर पराक्रम रूपी मूल्य सें राक्षस विवाह की विधी सें मो को ग्रहण करो ॥ ४१ ॥

यदि आप कहैं कि-तुमती रनवास में रहने वाली हो तब तुमारे बंधून कूं मारे बिना तुमारा विवाह कैसे करेंगे तो इसका उपाय मैं बताती हूं सो सुनिये विवाह के पहिले दिन बडी भारी कुलदेवी की यात्रा होगी, जिसमें नई बहू पार्वती के पूजन कूं बाहर निकलतीहै वहां मैं आऊंगी, तब आप मेरे को हरण करना ॥ ४२ ॥

तहां पर लक्ष्मीपती रथ प्यादे हाथी घोडों के सहित आकर शाल्व मगध चेदी राजाओं को जीत कर [illegible] के सहित मोंकों लेकर अपनी पुरी में लेजाकर मेरे हाथ को ग्रहण करें ।

हे कमललोचन ! जिन आपके चरन रज का स्नान करने से अपने पाप के छुडाने के लिये महादेव जी की नाईं बडे महात्मा लोग इच्छा करते हैं तिन आपके प्रसाद कूं यदि मैं नहीं प्राप्त होगी तो व्रतों से सुखा कर इन प्राणों को त्याग करूंगी सौ जन्म तक कभी तो आपके चरणके [illegible] होगा ॥ ४३ ॥

शुक उवाच ।

इस प्रकार सें मधुसूदन भगवान् उस पत्री की सब बातों को विचार कर राज कन्या का संदेश कूं जान कर उस ब्राह्मण को कृपा से देखते भये ॥ ० ॥

ब्राह्मण बोले हे यदुनाथ ! इतने गुप्त संदेश लेके आपके ला दिये इन को विचार कर तिसके पीछे जो [illegible] होय सो कार्य शीघ्र कीजिये ॥ ४४ ॥

इति श्रीभागवत दशमस्कन्ध उत्तरार्ध का ५२ अध्याय ॥ ५२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

# त्रिपञ्चाशत्तमोऽध्यायः ।

—•◆•):*:(•◆•—

श्रीशुक उवाच ।

वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना * पाणिं प्रहस (१) न्निदमब्रवीत् ॥ १ ॥

श्रीभगवानुवाच ।

श्रीवीरराघवाचार्यैरधिकं पठ्यते, ( यथा सा रुक्मिणी नित्यं मच्चित्ताऽऽस्ते सुशोभना )।
तथाऽहमपि तच्चित्तो निद्रां (२) च न लभे निशि ।
वेदाऽहं रुक्मिणा द्वेषान् ममोद्वाहो निवारितः ॥ २ ॥
तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥ ३ ॥

श्रीशुक उवाच ।

उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिपञ्चाशत्तमे गत्वा विदर्भानच्युतेरितः ।
रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥ १ ॥

निद्राया अलाभे कारणान्तरं वेदेति तथा अकथितमप्यहं जानामीति ॥ २ ॥

आनयिष्ये आनेष्यामि राजन्याऽपसदाराजसुहीनान् उन्मथ्याऽऽनयने दृष्टान्तः एधस इति ॥ ३ ॥

उद्वाहर्क्षमिति परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमत् "श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य" इति रुक्मिणीसन्देशात् ४

———•

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तुशब्दः क्रमप्राप्तश्रीकृष्णभाववर्णनरूपे प्रकरणभेदे नथैवाऽभिव्यञ्जयति—प्रगृह्येति । प्रकर्षेण पुलकादिप्रेमविकारेण गृहीत्वा पाणिना वेदं पाणिग्रहणं सत्यसम्पादनाय तत्र हार्दमभिव्यञ्जयितुम् ईषद्व्रीडामाहितेन प्रहर्षेण भावविशेषेण च प्रकृष्टं हसन् यदुनन्दन इति रुक्मिणीपरिग्रहात् यदुकुलस्यानन्दनवैशिष्ट्याऽभिप्रायेण ॥ १ ॥

सा यथा मच्चित्ता तथा तल्लक्षणमाह— निद्रां च निद्रामपि कुतोऽन्यदुपभोगादिसुखमित्यर्थः । अत्र विघटननिदानस्यापि मम ज्ञातत्वात् मया स्वयमेव तत्समाधानं कर्त्तव्यमित्याह—वेदेति सार्द्धेन ॥ २ ॥

तामानयिष्य इति एतावन्तं कालं तस्या एवाभिप्रायं प्रतीक्षे इति भावः । तर्हि ममाऽनागमने भवांस्तामुपेक्षेतैव ? न तदीयमहागुणाकृष्टत्वान्ममेत्याभिप्रायेण तां विशिनष्टि—मत्परामिति, पदद्वयेन । मत्परत्वे सर्वसद्गुणवत्तासिद्धेरेव "यस्यास्ति भक्तिर्भगवत्यकिञ्चना" इत्यादेः । एवं "श्रुत्वा गुणान्" इत्यादिना तदुक्तनिजगुणरूपवत्तस्या अपि गुणरूपे बोधिते उन्मथ्येति निर्मथ्येति तदुक्तानुसारेण तदुक्तप्रतिपालनपरताबोधिता, राजन्यापसदानिति मुहुर्निर्जयादिनाऽपमानेनापि लज्जाद्यभावात् दुर्बुद्धितानपगमाच्च मृध इति युद्धमध्ये साक्षादेव न तु मायान्तर्धानादिनेत्यर्थ इति निजपराक्रमः सूचितः । एधस इति दृष्टान्तेन यज्ञीयाग्निशिखावद्दारुणा छन्नत्वेऽपि परिश्रमेणाविर्भावयोग्यत्वं ध्वनितम् एवं तद्‌शेषसन्देशप्रत्युत्तरमप्यूह्यम् ॥ ३ ॥

यद्यपि पूतनापतिभिः परीत इति तया ब्रह्मत्वभावेन सन्दिष्टं तथापि प्रतिवीरेष्वविश्वासया गुप्तः समेत्येति तस्या युक्तमुक्तं रक्षितुमिच्छया तस्याः स्वस्य च लोकतो लज्जया स पुनरेकाक्येव प्रस्थित इति वक्तुमाह— उद्वाहर्क्षमिति । इत्यादित्रयस्यैकमेव वाक्यार्थस्तैर्दर्शितः । किञ्च, विशेषेण ज्ञात्वा वहिस्तस्माद्विप्रात् ज्योतिःशास्त्राच्च अन्तस्तु सर्वज्ञत्वादभिध्याय मधुसूदनः सूचि-

---

* पाणौ (१) द्विजमब्रवीत् (२) नाध्यगममिति विज० पा० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ओदैत्यानुपलक्षणसर्वदैत्यकुलहर्तैत्युरसाहसाम्राज्यं दर्शितम् भाविजयश्च सूचितः । श्लेषेण भ्रमरो यथा पद्मिन्याः परिमले लब्धे धैर्यं न कर्तुमीष्टे तद्वदिति द्योतितम् । सम्यक् अलङ्कारादिपूर्णतया युज्यताम् ॥ ४ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—१७ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

वैदर्भ्या इति ततः सभगवान् यदुनन्दनस्तु वैदर्भ्याः सन्देशमाकर्ण्य स्वपाणिना द्विजं पाणौ गृहीत्वोवाच ॥ १ ॥

उक्तमेवाह-यथेति मामपि तेति निद्राया अलाभे हेतुः तथा तच्चित्तम् इत्यपि हेत्वन्तरं चाह, वेदेति मयि द्वेषाद्धेतोः रुक्मिणा ममोद्वाहो निवारित इत्यहं वेद्मि अतश्चाहं निद्रां न लभ इत्यर्थः ॥ २ ॥

अधुना तु राजन्याधमान्युद्धे उन्मथ्यानवद्यानि निर्दुष्टानि शोभनान्यङ्गानि यस्याः अहमेव परो यस्यास्तां मच्चित्तां वा तां रुक्मिणीमानयिष्यामि उन्मथ्यानयने दृष्टान्तः एधसो दारुणोऽग्निशिखामिवेति ॥ ३ ॥

इति ब्राह्मणमुक्त्वाथ सूतमाहेत्याह—उद्वाहेति । मधुसूदनो रुक्मिण्या उद्वाहर्क्षे परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय सारथिमाह—दारुकेति । हे दारुक ! रथः संयुज्यतामश्वैः संयुक्तः क्रियताम् इति ॥ ३ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १ ॥

मम द्वेषाद्रुक्मिणा विवाहो निवारित इतीममर्थम् अहं वेद वेद्मि ॥ २ ॥

एधसः काष्ठादग्नेः शिखां ज्वालाम् ॥ ३ ॥

उद्वाहर्क्षे विवाहनक्षत्रम् ॥ ४ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालविलम्बासहिष्णुतया न्यमीलयत् निमील्यैव स्थिता १-३०॥

———

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तथाहमपीत्यादि । निद्रां च न लभे निशीत्यस्यायं भावः निशि उपगतां निद्रारूपां नायिकां न लभे न स्वीकरोमि रुक्मिण्युद्वाहो यावन्न भवति तावत्त्वमपि न मे भोग्येति निद्रामपि निरस्यामीति भावः ॥ १—२४ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शतार्द्धे वा चतुर्थे वा भगवान् भार्यार्थितम् ॥
विप्रार्थितं च कृतवानिति सम्यङ्निरूप्यते ॥ १ ॥
प्रसङ्ग कन्याहरणमुद्योगावधि वर्ण्यते ॥
कायवाङ्मनसामत्र ह्येकमत्यं निरूप्यते ॥ २ ॥

पूर्वाध्यायान्ते यत्कर्तव्यं यद्वा वक्तव्यं तदुच्यतां क्रियतामिति ब्राह्मणविज्ञापना निरूपिता, ततो भगवान् तत्सन्तोषार्थं स्वमानसं वाक्यं च निरूपयितुमारम्भं कृतवानित्याह—वैदर्भ्या इति । सा ह्यत्यन्तकुलीना भक्तिप्रधाना यदुरपि भक्तिप्रधानः सुपन्दः शङ्कानिवृत्त्यर्थः नात्र शङ्का सम्भवति ततोऽहमपि जात इति वक्ष्यति सन्देशश्चावश्यं श्रोतव्यः । इदं श्रवणं विचारपूर्वकं सादरं च ततो ब्राह्मणः गुह्यकर्तेति तेन सह मैत्रीमिव कर्तुं पाणिना पाणिं प्रगृह्य भार्यासम्बन्धमयमिति औदासीन्यं परित्यज्य प्रहसन्निदं वक्ष्यमाणमब्रवीत् ॥ १ ॥

आदौ स्वमनोवार्तामाह— तथाहमपि तच्चित्त इति । यथा सा मच्चित्ता एवमहमपि तच्चित्तः अनेन सर्वाणि तस्या वाक्यानि मद्वाक्यसदृशानीति निरूपितं विशेषमप्याह—निद्राश्चेति । रात्रावावश्यकी निद्रा सापि चिन्तया न जातेति भार्येच्छया वा तन्त्रैव चिन्तायां किङ्कारणमित्याकाङ्क्षायामाह, वेदाहमिति । नात्र किञ्चित्सन्दिग्धं यतोऽहं वेद सर्वगुणसम्पत्तावपि केवलं द्वेषात् रुक्मिणा एकेन ममोद्वाह आहूय कन्यादानलक्षणः प्रयत्नेन निवारितः ॥ २ ॥

एवं प्रामाण्यं मानसं चोक्त्वा प्रतिजानीते— तामानयिष्य इति । भार्येति निश्चित्य न नाम गृह्णाति प्रतिबन्धकानामल्पत्वमाह राजन्यापसदान् राजन्येषु अधमान् अपगता सत्सभा येभ्य इति क्षत्रियगोष्ठ्यां परिगणनारहिताः अधमाः ते ह्यतिक्षुद्रा इति न मारणमपेक्ष्यते किन्तु उन्मथनमेव कर्तव्यम् । अलौकिकद्वारा निवारयति—मृध इति । युद्ध एव तानुन्मथ्य तामानयिष्यामीति भावः । एवं करणे हेतुमाह—मत्परामिति । "अहं भक्तपराधीन" इति भक्तिमार्गानुसारेणापि तामानयिष्ये अनवद्याङ्गीमिति-निर्दुष्टत्वादपि निर्दुष्टत्वं हि भगवान् गृह्णातीति अङ्गपदेन वाक्येन दोषो निरूपितः यतः सा दत्ता इयं धर्मोपयोगिनी भविष्यतीति राक्षसविवाहं करिष्यामीत्याह, एधसोऽग्निशिखामिवेति । दारुणि ज्वलन्ती अग्निशिखा नात्यन्तं प्रकाशमेति सैव चेत् वर्तिसहिता भवेत् तदा दीपरूपा अतिप्रकाशते तथा तां प्रकाशयुक्तां करिष्यामीत्यर्थः ॥ ३ ॥

एवं वाचनिकमुक्त्वा कायिकार्थं प्रयत्नमाह— उद्वाहर्क्षमिति । विवाहे नक्षत्रमेव मुख्यमिति भार्याप्रधानमिति चन्द्रग्रहांश्चानुगुणान् परित्यज्य नक्षत्राणां मुख्यता निरूपिता विवाहनक्षत्रं ब्राह्मणमुखादेव विज्ञाय रथः संयुज्यतामित्याह — सम्यक्योगो युद्धार्थः तत्र हेतुः रुक्मिण्या इति रुक्मिणो भगिनीति सेनासङ्ग्रहाभावं स्वत एव सामर्थ्यमाह—मधुसूदन इति । आशु संयुज्यतामनेन समयः सन्निहित इति, ज्ञापितं दारुकेति सम्बोधनं वैकुण्ठादागतस्य चातुर्यं भयाभावश्च प्रदर्शितौ ॥ ४ ॥

———

स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥
आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ।
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥
राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ।
शिशुपालाय स्वां कन्यां दास्यन् कर्माण्यकारयत् ॥ ७ ॥
पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ।
चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम् ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिपञ्चाशत्तमे कृष्णो गत्वा कुण्डिनमार्थितः ।
भीष्मकेणाहरद्रुक्मीं देव्यर्चायै विनिर्गताम् ॥

रुक्मिणी कथंकथिता वाहिरन्तर्व्याकुलैवास्ति स्म स कृष्णस्तु रुक्मिण्येकाचित्तत्वादन्तर्व्याकुलोपि प्रहसन् प्रहासेन स्वहर्षमाविष्कुर्वन् ॥ १ ॥

वेद वेद्मि ॥ २ ॥

एधसोऽग्निशिखामिवेति एधांसि वर्तमानाऽग्निशिखाप्रकटीभूता यथा एधं एव ज्वालयति तथैव रुक्मिण्यपि प्रभृतिदुष्टराजन्यकुलमावृता सैव तत् सर्वं ज्वालयिष्यति अहं तु निमित्तमात्रं भविष्यामीति भावः ॥ ३ ॥

उद्वाहर्क्षमिति परश्वो राज्ञो विवाहनक्षत्रमिति विप्रमुखाद्विज्ञाय ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिपञ्चाशत्तमे श्रीरुक्मिणीहरणात्मिकां श्रीकृष्णलीलां वर्णयति--तत्र श्रीरुक्मिणीसन्देशश्रवणानन्तरं भगवान् किं कृतवानित्यत्राह— वैदर्भ्या इति ॥ १ ॥

वेद वेद्मि ॥ २ ॥

आनयिष्ये आनेष्यामि काष्ठेभ्यो यथाऽग्निशिखास्वरूपादिभिरत्यन्तविलक्षणा तथा प्राकृतशरीरेभ्यो जीवेभ्यः स्वरूपविग्रहगुणादिभिः भगवती नित्याऽद्भुतविग्रहवती भगवदात्मिकाऽत्यन्तविलक्षणेत्याह—एधसोऽग्निशिखामिवेति ॥ ३ ॥

स दारुकः । अश्वानां वर्णाः पाद्मे उक्ताः—

"शैब्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः ।
मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहक." ॥

इति ॥ ५—६ ॥

---

भाषाटीका ।

श्रीरुक्मिणीप्राणनाथाय नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि विदर्भराज की पुत्री श्रीरुक्मिणीजी के उस सन्देश को यदुनन्दन श्रीकृष्णचन्द्र सुन कर अपने श्रीहस्त कमलसे ब्राह्मण के हाथ को पकड कर हँसते हुए उस ब्राह्मण से बोले ॥ १ ॥

श्रीभगवानुवाच ।

श्रीकृष्णचन्द्र बोले, कि हे विप्र ! जैसे रुक्मिणीजी का चित्त सदा हमारे विषय में लगा है, तैसा हमारा भी चित्त उनके विषय में संलग्न हो रहा है, और मैं यह भी जानता हूं, कि—रुक्मी ने द्वेष से मेरे विवाह का निवारण कियाहै ॥ २ ॥

परश्व मैं तो संग्राम में उन दुष्ट राजाओं को मथकर निर्दोष सुन्दर अङ्गवाली रुक्मिणी को ऐसे ले आऊंगा, कि—जैसे काष्ठों में से मथकर अग्निकी शिखा को वर्त्ती में जोडकर पृथक् ग्रहण करलते हैं । और तब ही वह अग्निशिखा प्रकाशित भी अधिक होती है ॥ ३ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—रुक्मिणीजी के विवाह के नक्षत्र को जानकर श्रीकृष्णचन्द्र, सारथी से बोले, कि—हे दारुक ! तुम शीघ्र रथ जोडदो देर न करो ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शैब्येत्यादीनि चत्वार्यश्वनामानि ॥ ५--६ ॥

पुत्रस्य रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा अनेन शिशुपालेऽनभिरुचिं द्योतयति, कर्माणि पुरालङ्कारपितृदेवार्चनादीनि ॥ ७ ॥

तान्येवाह-पुरमित्यादिचतुर्भिः । सम्मृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तत् चित्रा ध्वजेषु पताकास्ताभिः समलङ्कृतमकारयत् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सन्नेति चशब्देन तात्कालिकत्वं बोध्यते सैब्येत्यत्र शैब्येति पाठः साम्प्रतः। एषां वर्णां यथा पाद्मे—

' शैब्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः ।
मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहकः ' इति ॥

युक्तं सन्तं सुग्रीवपुष्पकं नाम रथम् उप समीपे आनीय भक्त्या शिरसि बद्धत्वात्प्रकृष्टोऽञ्जलिर्यस्य स ॥ ५ ॥

द्विजं रुक्मिण्या प्रहितमारोप्येति तस्य सुखगमनाय तस्याः प्राणरक्षार्थं शीघ्रं तदन्तिके प्रेषणाय च शौरिरिति, साक्षाद्भगवत्त्वेऽपि मनुष्यलीलत्वात्तथैव यानमुचितमिति भावः ॥ ६ ॥

स परमसाधुत्वेन प्रसिद्धोऽपि स्वां स्वाधीनामपि अकारयत् स्वभृत्यपुरोहितादिभिः पुत्रेति तैर्व्याख्यातम् । तत्र " वश इच्छा वशः कान्तौ "इत्यमरः । तत्र मूलत एव स्पष्टम बन्धूनामिच्छतामित्यादेः वेदाहमित्यादेश्च स्नेहशब्दात् तेन मरणवनवासाद्युद्यमः कृत इति गम्यते ॥ ७ ॥

पुरमिति युग्मकम् । "मार्गः साधारणं वर्त्म रथ्या पण्यवीथिका" चिरजाम्बरेति रजःशब्दोऽकारान्तोऽपीति स्वोपुरुषैः प्राचीनैः विवाहोत्सवार्थमागन्तुकैश्च तथा श्रीमद्भिर्वितानादिशोभावाद्भिर्गृहैश्च तादृशीं तुम्बमकारयदिति शेषः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो दारुकः शैब्याद्यारूयैश्चतुर्भिः श्रेष्ठैरश्वैर्युक्तं रथम् उप समीपमानीयाऽग्रतः पुरतः बद्धाञ्जलिस्तस्थौ ॥ ५ ॥

आरोप्येति तावत् द्विजमारोप्य ततः स्वयमपि स्यन्दनं रथमारुह्यानर्त्तात् स्वदेशाद्विदर्भान् देशान् हयैस्तुरङ्गैरेकरात्रेणाऽगमत् तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमदित्यर्थः । "श्वोभाविनि त्वमजितोद्वहने " इत्यादिरुक्मिणीसन्देशात् ॥ ६ ॥

राजेति कुण्डिनपतिर्भीष्मकः पुत्रस्य रुक्मिणः स्नेहवशं गतः पुत्रस्नेहेन तत्परतन्त्रीभूत इत्यर्थः । दास्यन् लक्षणहेत्वोरिति शत्रादेशः दातुमित्यर्थः । कर्माणि पुरालङ्कारपितृदेवार्चनादीनि कारयामास ॥ ७ ॥

कर्माण्येवाह—पुरमिति चतुर्भिः । संमृष्टाः संसिक्ताश्च मार्गा दयो यस्मिंस्ताञ्चित्रध्वजेषु पताकाभिस्तोरणैश्च सम्यगलङ्कृतमकारयत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हयैर्युक्तम् ॥ ५ ॥ ६ ॥

कार्याणि विवाहयोगकार्याणि अकारयत् ॥ ७ ॥

उक्तमेव स्पष्टयति— पुरमिति । प्राक्सम्मृष्टास्त्यक्तावस्कराः पश्चात्संसिक्ताः गोमयोदकादिप्रोक्षिता मार्गादयो यस्मिंस्तथा ॥ ८— १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शीघ्रमेव दारुककृत्यमाह— स चाश्वैरिति । यद्यपि भगवतः बहवश्चाश्वाः रथाश्च बहवः तथापि सारथित्वप्रयोगात् गरुडध्वज एव रथो गृहीतः तादृशोऽपि सैन्यादीनेव चतुरोऽश्वान् योजितवान् तेषामन्वर्थानि नामानि तत्राद्यः सैन्यरूप एव असकृत् ख्यातसैन्येन यावत्कार्यं तावदनेनैव भवतीति. द्वितीयः सुग्रीवः यथा वानराधिपतिः सीतासमानयने रामकार्यसाधकः तादृशोऽयमिति. सुग्रीव इति शोभना ग्रीवा यस्येति नास्य कदाचिदपि पराङ्मुखता सूचिता. मेघपुष्पस्तृतीयः वृष्टिवत् सर्वानेव व्याप्य पततीति. बलाहकश्चतुर्थः स मेघवत् पक्षिवद्वा क्षणमध्ये समायात्यपगच्छति च एवं तैर्युक्तं सम्यग्योजितं रथमुपानीय यावद्विनियोगं कृत्वा स्वकृतं ज्ञापयन्निव अग्रतः प्राञ्जलिस्तस्थौ ॥ ५ ॥

एवं ब्राह्मणाय स्ववाक्यबलसामर्थ्यं दर्शितं ततः कुण्डिनपुरं गत इत्याह— आरुह्येति स्यन्दनमतिवेगगामि शौरिरिति पितामहनाम्ना व्यपदेशः अलौकिकसामर्थ्यप्रकाशनाभावार्थः तमपि द्विजं तत्रैवारोप्य एकरात्रेणैव स्वदेशात् देशं प्रविष्टः यथा मध्यदेशेषु न परिज्ञानं भवति अन्यथा तत्रत्यैर्ज्ञापने रुक्मी ब्राह्मणाय भगिन्यै वा अपकारं कुर्यात् तथैव च रुक्मिण्या प्रार्थितः ॥ ६ ॥

भगवतो नगरप्रवेशं वक्तुं नगरवर्णनार्थं भगवदागमनं प्रवृत्ति निमित्तत्वेनाह— राजाथकुण्डिनपतिरिति । राजत्वाद्भीष्मकत्वात् कुण्डिनमिति अलगत्वत् नगरनाम निरूपितन्त स्थितत्वाच्च पुत्रस्नेहवशत्वाच्च शिशुपालाय शिशुं बालबुद्धिमेव पालयतीति बुद्ध्या कन्यां दातुं कर्माणि पुरसंस्काररूपाणि सेवकैरकारयत् अनेन देशे भगवद्गमनेऽपि न तेषां विपरीतशङ्का काऽपि जातेति निरूपितम् ॥ ७ ॥

भगवत्प्रवेशार्थं पुरीं वर्णयति— द्वाभ्याम् पुरमिति । प्रथमतः सम्यक् मृष्टं रजोनिवारणेनोज्ज्वलीकृतं ततः संसिक्तं चन्दनादिभिः मार्गा राजमार्गाः रथ्या हट्टस्थिताः चतुष्पथं सर्वतो मार्गाः तेषु संसिक्तमित्यर्थः । एवमधः शोभा निरूपिता उपरि शोभामाह—चित्रध्वजेति । त्रिविधैरपि सम्यगलङ्कृतम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शैब्यादीनां वर्णो यथा पाद्मे—

" शैब्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः ।
मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहकः " ॥

इति ॥ ५ ॥

एका चासौ रात्रिश्चेत्येकरात्रस्तेन सन्ध्यायां रुक्मिणीसन्देशात् श्रुत्वा तदानीमेव रथमारुह्य गच्छन् प्रातः कुण्डिनं प्रापेत्यर्थः ॥ ६ ॥

पुत्रस्य स्नेहेन वशः अत एवानुगश्च कर्माणि पुरालङ्करणादीनि ॥ ७—८ ॥

---

स्रग्गन्धमाल्याभरणैर्विरजोऽम्बरभूषितैः ।
जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥
पितॄन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृप ! ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥ १० ॥
(१) सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।
अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥ ११ ॥
चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वविद्वै जुहाव महशान्तये ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स भीष्मकः पुत्रस्य रुक्मिणः स्नेहेन वशः अत एवानुगः कर्माणि पुरालङ्कारपितृदेवार्चनादीनि अकारयत् कारयामास ॥ ७ ॥

कर्माण्येवाह, पुरमिति चतुर्भिः ॥८—९—१० ॥

भाषा टीका ।

वह दारुक भी शैब्य सुग्रीव मेघपुष्प बलाहक इन चारों घोड़ों को रथ में जोड़कर रथको समीप लाकर भगवान् के आगे हाथ जोड़कर खड़ा होता हुआ ॥ ५ ॥

श्रीकृष्णचन्द्र भी आप रथ पर बैठकर हाथ पकड़ कर धीरे से उस ब्राह्मण को बैठा कर बड़े शीघ्र गामी घोड़ाओं से आनर्त्तदेश ( द्वारकादेश ) से एक रात में विदर्भ देशमें पहुंच गये ॥ ६ ॥

वहां कुंडिन पुरमें कुंडिनपति विदर्भराज श्रीभीष्मक महाराज भी पुत्र के स्नेह के वश होकर, अपनी कन्या रुक्मिणीको शिशुपाल के देने के लिये वैवाहिक कर्म कराते हुए ॥ ७ ॥

उस समय कुंडिन पुर में भी सर्वत्र परिष्कार किया गया राजमार्ग वीथी और चौकों में बुहारी लगकर छिड़काव किये गये, तथा चित्र विचित्र ध्वजा पताकाओं से तथा तोरणों से वह पुर सुन्दर रीति से अलंकृत किया गया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः । यद्वा, स्रग्गन्धमाल्यान्याऽऽबिभ्रतीति तथा तैः तथा विरजोऽम्बरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टं तथा श्रीमद्भिर्गृहैश्च जुष्टम् ॥ ९ ॥

यथान्यायमन्यांश्च कन्यां प्रतिमङ्गलं वाचयामास ॥ १० ॥

कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् अहतं नवीनं भूषणोत्तमैश्च भूषिताम् ॥ ११ ॥

वध्वास्तस्याः कन्यायाः अथर्वविदथर्वणमन्त्रवित् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

॥ ९ ॥

पितृदेवानिति युग्मकम् । विप्रांश्च समभ्यर्च्य भोजयित्वा च विधि वत् विधियुक्तं यथा स्यात् यथान्यायं विवाहे कन्यां प्रतियन्मङ्गलं वाचयितुं युज्यते तदित्यर्थः । कन्यां प्रतीत्युत्तरेणान्वयः अत्रानन्यगत्या द्वितीयाबलात् प्रतीत्यध्याह्रियते तृतीयाबलात् सहशब्दवत् सुदतीं ताम्बूलरागापसारणेन सहजलावण्यप्रकाशाच्छोभमानरदाम् "आहतं गुणितेऽपि स्यात्ताडिते च नवेऽपि च । स्यात्पुरातनवस्त्रे च" इति विश्वोक्तेः । आहतं सद्यो यन्त्रनिर्मुक्तमंशुकं ज्ञेयम् अहतेत्यपि पाठे स एवार्थः तस्यैव माङ्गलिकत्वात् यथाचोक्तम् "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयं भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा" इति । यद्वा, सुस्नातामित्यादि पद्यस्य चक्रुरित्यनेनोत्तरेणैव वान्वयः काकाक्षिन्यायेन ॥ १०–११॥

वै प्रसिद्धौ अथर्ववित्त्वेन प्रसिद्धः आथर्वणमन्त्राणां ग्रहशान्तीप्राच्युर्य्यात् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थीय अर्श आद्यच् द्रष्टव्यः स्रगादिमद्भिः तथा विरजोऽम्बरैश्च भूषितैः स्त्रीपुरुषैर्जुष्टं तथा श्रीमद्भिरगुरुणा धूपितैश्च गृहैर्जुष्टम् ॥ ९ ॥

पितॄन् देवांश्च सम्यगभ्यर्च्य हे नृप ! सविसर्गपाठे भीष्मकः विप्रान्यथाविधि भोजयित्वा विधिवत्समभ्यर्च्येति वा यथान्यायं भोजयित्वा रुक्मिणीं प्रति मङ्गलं वाचयामास यथान्यायमन्यांश्च कन्याः प्रति मङ्गलं वाचयामासेति वा ऽर्थः ॥ १० ॥

कथम्भूतां सुस्नातामिति कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् अहतयोर्नवीनयोरंशुकयोर्युग्मेन भूषणोत्तमैश्चालङ्कृतां चक्रुरिति ॥ ११ ॥

वध्वास्तस्याः कन्याया सामादिभिर्मन्त्रैः रक्षाञ्चक्रुः अथर्वमन्त्रैः रक्षाञ्चक्रुरथर्ववित्पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव ॥१२॥

(१) अत्र पद्ये द्वितीयान्तानां प्रथमान्तत्वं विज॰ पाठरीत्या ज्ञेयम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुस्नाताऽभूदिति शेषः कृतं कौतुके कुतूहले महोत्सवे मङ्गलं यस्याः सा तथा । यद्वा, कृतं कौतुकं हस्तसूत्रलक्षणं मङ्गलं यस्याः सा तथा "आबध्नन्ति करे सूत्रं माङ्गल्यार्थं नवस्त्रियः" इति "कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले । कामे ख्याते मङ्गले च" इति यादवः । अहतांशुकयुग्मेन नूतनवस्त्रयुगलेन "अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः" इति च ॥ ११ ॥

गृहानेतान् रक्षया विवृणोमीत्याद्यथर्ववेदोक्तवित् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अलङ्करणमाह—स्रग्गन्धेति । स्त्रीपुरुषैः गृहैश्च जुष्टमिति अनेन तस्मिन् नगरे केवला व्यापारिणः ये सुतरामनङ्गलरूपाः तेपि भूषिता इत्याह—स्रग्गन्धमाल्याभरणैर्युक्ताः स्रग्गन्धे माल्यानामेवाभरणानि येष्विति विरजानि अम्बराणि भूषणानि येष्विति श्रीमद्गृहेष्विति गृहे सर्वसम्पत्तिर्निरूपिता अगुरुधूपिनैरिति विशेषसम्पत्तिः विवाहोत्सवप्रयुक्तिश्च निरूपिता ॥ ९ ॥

एवं लौकिकसमृद्धिमुक्त्वा वैदिकार्थसमृद्धिमाह— पितॄन् देवान् समभ्यर्च्येति । पितरो देवाश्च नान्दीमुखदेवताः सम्यक् पूजिताः अन्यथा प्रथमत एव कन्याहरणे विवाहो विगुणः स्यादतः कर्तव्यं कृतमिति वक्तव्यं विप्रांश्च सम्यगभ्यर्च्य पुण्याहवाचने विधिवदिति तेभ्यो वस्त्रालङ्करणादिदानेन नृप इति सामर्थ्यं तेषां सन्तोषः भोजनप्रधान इति भोजयित्वा यथान्यायमित्युक्तम् । नान्दीमुखे विधानपूर्वकं भोजयित्वा सुमङ्गलं पुण्याहवाचनम् ॥ १० ॥

यदर्थं भगवानागतः तां देवत्वेन भूषितां चक्रुरित्याह-सुस्नातामिति । मङ्गलस्नानं कारितवन्तः ततो दन्तसंस्कारमपि शुभ्रवस्त्रा न द्रष्टव्येति केषाञ्चिद्देशाचारः कन्यामित्युक्तां प्रायेण सूचित एव शिशुपालः वाङ्निश्चयोऽप्यत्र एव भविष्यति दाक्षिणात्यास्त इति विवाहपूर्वक्षण एव कन्यावरणं कृतं कौतुकरूपं मङ्गलं यस्यां हरिद्रया कपोलयोः रेखादिनिर्माणं तद्विवाह एव भवति नान्यदा वस्त्रमपि तादृशमेव परिधापितवन्त इत्याह—अहतांशुकयुग्मेन भूषितामिति । अहतं तन्तुसारितम् अच्छिन्नं नूतनमिति केचित् तेषां मते पाषाणे प्रहारः न हतन्वं सम्पादयतीति अनुपभुक्तमित्यन्ये अंशुकं पट्टवस्त्रम् एकं परिधापितम् अपरं प्रावृतमिति भूषणैरपि भूषितं सकृत्यालङ्कृतां कन्यां यो ददाति सकृकुद इति कुकुत्स्वार्थमलङ्करणमुक्तं कुद्यावापृथिव्यौ कुकुन्सिते यस्यागोदर्सीदानापेक्षयापि तादृकन्यादानं विशिष्टमिति द्योतितम् ॥ ११ ॥

तस्यां विवाहदेवतासान्निध्यमाह— चक्रुरिति । वेदत्रयमन्त्रैः रक्षासूत्रं बद्धा द्विजोत्तमा मन्त्रद्रष्टारः ऋषयः भगवद्धर्ममेव यथा कोऽपि न स्पृशति इष्टादृष्टप्रकारेण तथा रक्षां चक्रुः, देवा हि द्विविधाः केचन हुतादः अन्ये अहुतादः तत्र याचनादिना ये अहुतादः ते प्रीणिताः होमेनाग्न्येषां प्रीतिमाह—पुरोहितोऽथर्व विदिति । होमे पुरोहितो मुख्यः स हि हितमेव विचारयति अथर्वणवेदेनक्षत्रकल्पः शान्तिकल्पश्चोक्तः अतोऽथर्ववित् शान्तिं जानाति ये कन्यायाः भगवन्तं त्याजयित्वा चैद्यसम्बन्धं कारयितुमुद्युक्ताः तेषां ग्रहणं शान्त्यर्थं जुहाव अन्यथा ग्रहैर्वा प्रतिबन्धो भवेत् भगवांश्च लौकिकं प्रकटीकरोति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्रग्गन्धमाल्यानि आविभ्रतीति तैः ॥ ९ ॥

अहतं सद्यो यन्त्रनिर्मुक्तं यदंशुकयुग्मंतेन "अहतं यन्त्रनिर्मुक्तमुक्तवासः स्वयम्भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा इति स्मृतेः । आहतेति पाठे स एवार्थः "आहतं गुणितेऽपि स्यात्ताडितेऽपि नवेऽपि च" इति विश्वप्रकाशात् । भूषितां चक्रुः रक्षां चक्रुरित्यावृत्त्या उभयत्राप्यन्वितम् ॥ १० ॥

अथर्ववित् आथर्वणमन्त्रवित् आथर्वणमन्त्राणां ग्रहशान्त्यादिप्राचुर्यात् ॥ ११—१२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्तां कन्याम् । अहतांशुकयुग्मेन भूषणोत्तमैश्च भूषितां चक्रुरित्यग्रिमेणान्वयः अहतलक्षणं स्मृतौ "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयं भुवा । शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा" इति ॥ ११ ॥

वध्वाः कन्यायाः रक्षां चापि चक्रुः अथर्ववित् आथर्वणमन्त्रवित् ॥ १२—१४ ॥

भाषा टीका ।

पुष्पों की माला चन्दन मुक्तादिकों की मालायें तथा निर्मल वस्त्रों से विभूषित जो स्त्री और पुरुष, तिनसे वह पुर बड़ी शोभा को प्राप्त होता हुआ, एवं अगरु की धूप जिनमें खेई गई है ऐसे शोभा युक्त गृहों से शोभित होता भया ॥ ९ ॥

हे नृप ! पितृयों को देवों को तथा विप्रों को विधिवत् पूज कर और यथा न्याय सबों को भोजन कराकर, राजा भीष्मक स्वस्ति वाचन कराते हुए ॥ १० ॥

सुन्दर दांतों वाली कन्या ( रुक्मिणीजी ) को सुन्दर स्नान करा कर, मंगल सूत्रादिकों से मंगल किया है जिस्का, ऐसी उसी कन्याको अखंडित नूतन युगल वस्त्र पहिना कर उत्तम २ भूषणों भूषित करते हुये ॥ ११ ॥

तदनन्तर उस कन्या को उत्तम द्विज लोगों ने साम और यजुः के मंत्रोंसे रक्षा बन्धन किया, फिर अथर्ववेद का वेत्ता पुरोहित, ग्रह शांति के लिये हवन करता हुआ ॥ १२ ॥

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १३ ॥
एवं चेदिपती राजा दमघोषः सुताय वै ।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥
मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ।
पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १५ ॥
तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभ्युदये उचितम् ॥ १४ ॥

ततश्चतुरङ्गसैन्यैः परीतः परिवृतः कुण्डिनं भीष्मकस्य पुरं ययौ मदं च्यवन्ते इति मदच्युतस्तैः स्यन्दने रथैः हेमरचिता माला विद्यन्ते येषु तैः ॥ १५ ॥

कल्पितं निर्मितं यदन्यनिवेशनं तस्मिन् ॥ १६-१७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रकर्षेणा ऽऽदरादिना अदात् राजव्यवहारतो नात्यादृतयोरपि तिलगुडयोर्दानं विधिविस्वादेव सुवर्णरजताद्युपकरणसहिततिल पर्वतादिकं वा ॥ १३ ॥

सोपहासमाह—एवमिति भीष्मकवदेवेत्यर्थः । अस्येदं कर्म कुण्डिन पुरादनतिदूरे स्थित्वेति ज्ञेयम् । पूर्वविनकृत्यत्वात् तथापि तस्य स्वतोभगवत्समर्पणोत्सुकत्वात्सार्थकं बभूव अस्य तु तत्प्रातिकूल्यात् प्रतिकूलमेवेति भावः ॥ १४ ॥

तस्य वरपितृत्वेनान्यतः सत्यप्यारम्भवैशिष्ट्ये तस्यापि वैयर्थ्यज्ञापनायाह—मदेति दमघोष इति पूर्वेणान्वयः ॥ १५ ॥

विदर्भाधिपतिर्भीष्मकः मुदा सह यथा समुदितो भवति तथा तं निवेशयामासेति लौकिकता दर्शिता । यद्वा, रुक्मी तस्यैव प्राधान्यात् मुदो विवक्षिताः ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हिरण्येति विधिविदां विधिज्ञानां वरो राजा भीष्मकः हिरण्यादीन् धेनूश्च विप्रेभ्यः प्रादात् ॥ १३ ॥

एवं यथा रुक्मिण्ये तथा दमघोषःसुताय शिशुपालाय सर्वमभ्युदयोचितं कर्म मन्त्रज्ञैर्द्विजैः कारयामास ॥ १४ ॥

ततो मदजलानि स्रवद्भिर्गजानामनीकैर्हेम्नो माला एषां सन्तीति तथा तैरथैः पदातिभिरश्वैश्च सङ्कुलैर्व्याप्तैः सैन्यैश्च परिवृतश्चैद्य इति शेषः । कुण्डिनं पुरं ययौ तं चैद्यं समभ्येत्याभिपूज्य च कल्पितं निर्मितं यदन्यन्निवेशनं तस्मिन्मुदा निवेशयामास ॥१५—१६ ॥

श्रीमद्विजयध्वजकृतपदरत्नावली ।

रूप्यं रजतम् ॥ १३ ॥

सुताय शिशुपालाय ॥ १४ ॥

पूर्वोक्तयात्राशेषं कथयति—मदच्युद्भिरिति । मदच्युद्भिः मदजलस्राविभिः ॥ १५ ॥

तदर्थं कल्पिते ऽन्यस्मिन् निवेशने गृहे ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दानेन सर्वदोषनिवृत्तिरिति दानान्यपि कृतवानित्याह—हिरण्येति । हिरण्यं सुवर्णं तत्सार्वकामिकमग्निदैवत्यं रूप्यं सोमदैवत्यं वासश्च सर्वदैवतमिति गन्धर्वदैवतं वा तेन त्रयो भागिनः कन्यायाः व्यावर्तिताः तिलमोदकदानं तु सर्वदोषहरमिति गुडमिश्रितान् तिलांश्च ददौ चकारात् केवलानपि कन्यायाः समृद्ध्यर्थं धेनूश्च प्रादात् विप्रेभ्यश्च त एव हि विशेषेण पूरकाः राजा समृद्धः विधानेन दत्तं फलपर्यवसायि भवतीति तदर्थमाह— विधिविदां श्रेष्ठ इति ॥ १३ ॥

एवं पुरं कन्यां च निर्दुष्टतया निरूप्य मध्ये निराकार्याणां वृत्तान्तमाह—षड्भिः । भगवद्धर्मैरेव तेषां निराकरणार्थं प्रथमं विवाहः संस्कार इति पित्रैव तस्य संस्काराः क्रियन्त इति निरूपयति—यथा रुक्मिण्याः तत्पित्रा कृतम् एवं चेदिपतिरपि दमघोषः सुताय शिशुपालाय विवाहो भविष्यतीति विनिश्चयेन कारयामास तस्याऽपि सामर्थ्यं राजेति दमघोष इति दमस्य शान्तेः घोष एव न तु तस्य दमः नहि श्रद्धान्तेन कृतं सफलं भवति, अक्षरव्यत्यासो वा मदघोष इत्यर्थः सिद्धवत् अत उन्मादात् भगवन्तमविचार्य तथा कृतवान् अभ्युदये उचितमेव नत्वभ्युदयम् ॥ १४ ॥

एतादृशस्य उन्मत्तसेनायुक्तस्य पुरं प्रतिगमनमाह—मद-

तत्र शाल्वो जरासन्धो दन्तवक्त्रो विदूरथः।
आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥ १७ ॥
कृष्णरामद्विषो यत्ता कन्यां चैद्याय साधितुम्।
यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥
योत्स्यामः संहतास्तेन इति निश्चितमानसाः।
आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥
श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम्।
कृष्णं चैकं गतं हर्त्तुं कन्यां कलहशङ्कितः ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मदच्युद्भिरिति षाष्टिहायनैः मत्तगजैः सह गजानामनीकरूपत्वार्थं तथोक्तं सुवर्णमालायुक्तानि च स्यन्दनानि भटाः अश्वाश्च एवं चतुरङ्गसेनायुक्तः युद्धार्थमेव कुण्डिनपुरं ययौ नतु विवाहार्थम् अन्यथा विवाहसामग्रीमपि नयेत् ॥ १५ ॥

तस्याग्रे निराकरणार्थमादौ सम्माननामाह— तं वै विदर्भाधिपतिरिति विदर्भदेशस्याधिपतिः विशेषानभिज्ञः तं निश्चयेन समभ्येत्याग्रे गत्वा अभिपूज्य गृहागताय यथा पूजा विधेया चकारात् विशेषाभावं च कृत्वा मुदा हर्षेण कल्पिते अधिवेशने न तु सहजे उत्कृष्टे आ ईषत् कल्पिते वा अकल्पिते वा वाटिकादौ स्थापितवान् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सुताय सुतविवाहार्थम् ॥ १४ ॥
मदानां च्युत् क्षरणं येषुतैः ॥ १५—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मदं च्यवन्ते इति मदच्युतस्तैः ॥ १५-१७ ॥

भाषा टीका।

विधि जाननेवालों में श्रेष्ठ राजा भीष्मक महाराज भी ब्राह्मणों को सोना चांदी वस्त्र एवं तिल मिश्रित गुड तथा धेनुओं का दान करते हुए ॥ १३ ॥

इसी प्रकार चंदेरी का पति राजा दमघोष भी अपने पुत्र का अभ्युदयके उचित सर्व कार्य मंत्रज्ञ ब्राह्मणों से कराता हुआ ॥ १४ ॥

और एसे सब मांगलिक कार्य करा कर मदस्रावी गजोंकी सेना को और सुवर्ण की रचित मालाओं से सजे हुए रथों को, एवं पैदल और अश्वोंसे व्याप्त इस प्रकार की सेना को,लेकर कुंडिन पुर को आता हुआ ॥ १५ ॥

उस राजा दम घोष को विदर्भ देश के अधिपति भीष्मक महाराज बाहर लिवाने को आये, बडीदूर से उनको मिलकर पूजन कर, कल्पन किया गया जो अन्य जनवासा तिसमें ठहराते हुए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यदि श्रीकृष्णो हरेदिति शङ्किता। कन्यां साधयितुमित्यर्थः ॥ १८—२१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

तत्रेत्यादियुग्मकम्। यत्ता उद्युक्ताः ॥ १७-१८ ॥

योत्स्याम इत्यादि पद्यन्तेषामसम्मतं हरेदिति शङ्किता इति पूर्ववाक्यथेनैव सम्बध्य वाक्यसमापनात् तथापि समस्तपुस्तकेषु दृश्यमानत्वाद्व्याख्यायते तत्र यदीत्यादिसार्द्धमन्वितं समग्रं सर्वाङ्गैः पूर्णं बलं सैन्यं वाहनं च येषान्ते वाहनस्य बलान्तर्गतत्वेऽपि पृथगुक्तिः सर्वेषामेव योधानां बाहुल्ये न उत्साहनत्वाभिप्रायेण समर्थबलेति क्वचित्पाठः ॥ १९ ॥

श्रुत्वेति युग्मकम्। जनपरम्परयैतत्पूर्वोक्तं श्रुत्वा एतत्किन्तत्राह—विपक्षीयेत्यादि तत्र पूर्वं तद्देशादागततया जनपरम्परया उत्तरं तु तदनुमिम अनया अन्तःपुरगामिन्येति ज्ञेयम्। अतः कलहे शङ्कितः सन् कर्त्तरि क्तः तारकादित्वादितज्वा शङ्काया निदानमाह—भ्रातृस्नेहपरिप्लुतः तदीयतादृशासम्बन्धमाधुर्य्यमयप्रेमसिन्धौ मग्नोऽन्यानुसन्धानाऽसमर्थ इत्यर्थः। कथम्भूतोऽपि भगवान् सर्वज्ञानक्रियाशक्तियुक्तोऽपि अत एव गजादिभिश्चतुर्भिरङ्गैरुपलक्षितं यत् तेन महता बलेन सैन्येन सार्द्धं त्वरितः प्राय प्रहरार्द्धानन्तरं चलितोऽपि श्रीकृष्णेन सहैव

बलेन महता सार्द्धं भ्रातृस्नेहपरिप्लुतः ।
त्वरितः कुण्डिनं प्रागाद्गजाश्वरथपत्तिभिः ॥ २१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विदर्भनगरे ससैन्यप्रवेशादिति शीघ्रः सन् प्रागात् इति तेन स्नेहेनेतरशङ्केरावरणेऽपि स्वानुकूलशङ्केः प्रकाशमन्वर्शितम् ऐश्वर्याज्ञानतो बन्धुभावस्या ऽऽधिक्यं च अत एव भ्रातृशब्दप्रयोगः ॥ २०—२१ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथागत्य हरेत् तदा चैद्याय साधितुं यत्ता इत्यन्वयः ॥१८-२१॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रेति कृष्णरामौ द्विषन्तीति तथा ते चैद्यपक्षानुवर्तिनः शाल्वादयः पौण्ड्रकाद्याश्च सहस्रशः ॥ १७ ॥

यत्ताः सन्तः चैद्याय कन्यां साधयितुमाजग्मुः कथम्भूताः रामादिवृष्णिभिः परिवृतः श्रीकृष्ण आगत्य यदि कन्यां हरेत् तर्हि सर्वे वयं सङ्घीभूताः तेन श्रीकृष्णेन सह योत्स्यामः चैद्याय कन्यां साधयिष्याम इतीत्थं कृतो निश्चयो यैस्तथाभूताः तथा अन्ये च भूभुजो राजानः समग्राणि बलानि वाहनानि येषां तथाभूता आजग्मुरित्यर्थः ॥१८—१९ ॥

बलवान्प्रशस्तबलसम्पन्नः रामः विपक्षीयाणां शत्रुपक्षीयाणां राज्ञां समुद्यमं प्रयत्नं श्रुत्वा कन्यामाहर्तुं गतमेकमसहायं श्रीकृष्णं च ज्ञात्वा नूनं तत्र कलहो भविष्यतीति शङ्का सञ्जाताऽस्येति तथाभूतः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र कुण्डिनपुरे ॥ १७-२१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्रैव सर्वे दुरात्मान एकीभूता इत्याह—तत्र शाल्व इति । विदूरथः दन्तवक्त्रश्चेत्वा चत्वारो मुख्याः गणिता अन्ये चैद्यपक्षीयाः आययुः पौण्ड्रकाद्याश्च मिथ्यावासुदेवादयोऽपि तत्रैव निविष्टाः ॥ १७ ॥

तेषामेकत्र स्थितौ एकं धर्ममाह—कृष्णरामद्विष इति । नहि तेषामागमने किञ्चिदन्यत् कृत्यमस्ति, एकाकिनो वयमसमर्थाः केनचिन्मिषेण भगवान् जेतव्य इति चैद्ये लोपकारं च ख्यापयितुमरिमित्रन्यायेन समागता इत्याह, यत्ताः सन्तः कन्यां चैद्याय साधितुं समागताः । नन्वाऽऽहूय कन्या दीयते कः सन्देह इति चेत्तत्राह, यद्यागत्येति । तेषां हृदये भगवान् तथैव ज्ञापितवान् कृष्णो हि स्त्रीणां हितकर्तेति रामादिवृष्णिभिः सहागतः यदि हरेत् ॥ १८ ॥

तदा योत्स्याम एव नत्वन्यत्सामर्थ्यमस्तीति भावः इत्येवं निश्चितं मानसं येषाम् अत एव सर्वे समग्रबलवाहनाः सन्तः आजग्मुः भूभुज इति तेषां सा सम्पत्तिः सहजा ॥ १९ ॥

एषा वार्त्ता सर्वजनीना जातेति ज्ञापयितुं बलभद्रादयो भगवता अनुक्ता अपि समागता इत्याह—श्रुत्वैतदिति द्वाभ्याम् । श्रुतस्य सत्यत्वाय भगवानिति राम इति साधनरूपः विपक्षीयाः विपक्षस्य शिशुपालस्य सम्बन्धिनः तेषां बलस्योद्यमं श्रुत्वा एक एव च भगवान् कन्यां हर्तुं गत इति कलहे शङ्कां प्राप्तः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

साधितुं साधयितुम् ॥ १८-१९ ॥

जनपरम्परयैव श्रुत्वा भगवान् सर्वज्ञस्वसर्वशक्तित्वादियुक्तोपि कलहशंकितः अवश्यभाविनि कलहे भ्रातृशङ्कुः तत्र हेतुः भ्रातृस्नेहाब्धौ सर्वतो भावेन मग्नः "अनिष्टाशङ्कीनि बन्धुजनहृदयानि भवन्ति" इति न्यायेन प्रबलितस्य स्नेहस्य सर्वज्ञत्वाद्यावरणसामर्थ्यात् ॥ २०-२२ ॥

श्रीशुकदेवकृतसिद्धान्तप्रदीपः ।

साधितुं साधयितुम् ॥ १८—२१ ॥

भाषाटीका ।

उस शिशुपाल की बरात में राजा जरासन्ध दन्तवक्त्र विदूरथ एवं शिशुपाल के पक्षीय लोग पौण्ड्रकादिक और भी हजारहों आते भये ॥ १७ ॥

श्रीकृष्ण और बलदेवजी के द्वेषी लोगोंने विचारा, कि-यदि बलदेवादि यदुलोगों को साथ लेकर कृष्ण कन्या का हरण करेगा, तो हम लोग शिशुपाल के लिये कन्यां को दिवायेंगे इसीसे सब लोग बडे सावधान होकर आये ॥ १८ ॥

और हम सब लोग मिलकर उस कृष्णसे युद्ध करेंगे इस प्रकार मनमें निश्चय कर समग्र सेना और वाहनोंको लेकर वे सब राजा लोग आये ॥ १९ ॥

भगवान् श्रीबलदेवजीने विपक्षीय राजाओं के इस प्रकार के उद्यम को सुनकर और कृष्ण को कन्या हरण के लिये इकले गये हुये सुनकर कलहकी शंका करी ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सूर्योदयात्पूर्वमेवौत्सुक्येन रुक्मिण्यचिन्तयदित्याह—भीष्म-

भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ।
प्रत्यापत्तिमपश्यन्ती द्विजस्याऽचिन्तयत्तदा ॥ २२ ॥
अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ।
नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ।
सोऽपि नावर्त्ततेऽद्यापि मत्सन्देशहरो द्विजः ॥ २३ ॥
अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ।
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कन्येति । प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥

त्रियामा रात्रिस्तावन्मात्रेणाऽन्तरितः अल्पराधसो मन्दभाग्यायाः ॥ २३ ॥

जुगुप्सितं धार्ष्ट्यादि अपीति शङ्कायां नायाति हि कृतोद्यम इति अयमर्थः आदौ कृतोद्यमत्वात्तं न प्रस्थापितवान् प्रस्थानावसरे च किञ्चिन्मयि जुगुप्सितं मत्वा प्रत्याचष्ट अतः सोऽपि द्विजो नूनं नाऽऽयातीति ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नव सङ्गमरसोल्लासन्दर्शयितुं पुनः श्रीरुक्मिण्याः पूर्वरागविशेषोदयं वर्णयति—भीष्मेति सार्द्धपञ्चभिः । भीष्मकन्येति तस्यापि भाग्यं सूचयित्वा तदुचितान्तःसंस्कारोऽप्यस्तीति दर्शयति—वरः श्रेष्ठ आरोहः कान्तत्वेन श्रीकृष्णस्य यो लोभस्तल्लक्षणा सर्वोर्द्ध्वभूमिकाप्राप्तिर्यस्याः सेत्येव श्रीमन्मुनेर्विवक्षितम् । यद्वा, वरः श्रेष्ठ आरोहः नितम्बो यस्या इति वयःप्रकाशव्यञ्जनया भावस्यातिशयैर्योग्यतां व्यञ्जयति—अत एव हरेर्निज मनो हरतः आत्मानमपि हरिष्यतो भगवत आगमनमाकाङ्क्षन्ती नित्यमेव वाञ्छन्ती सम्प्रति च द्विजस्य प्रत्यापत्तिं तद्वृत्तिज्ञापिकामपश्यन्ती अचिन्तयत् चिन्तां प्राप ॥ २२ ॥

अहो खेदे त्रियामाशब्दप्रयोगोऽल्पकालत्वविवक्षया अल्पराधस्त्वे हेतुः नागच्छति अधुनापि न प्राप्त इत्यर्थः । तत्राल्पराधस्त्वं विना तु कारणान्तरं न पश्यामि तस्य सर्वशक्तिमत्त्वात् प्रपन्नपालकत्वाच्च विप्रस्य च प्रत्यागमनाभावे तदेककारणमित्याह—सोऽपीति । मय्यतिकृपालुरपि यदि द्विजस्याऽप्याऽऽगमनमभविष्यत् तदा प्राण ( रक्षण )त्यागाऽत्यागयोरेकतरं निरबोध्यमिति भावः ॥ २३ ॥

महार्तिस्वभावेन श्रीभगवतो द्विजस्य वाऽनागमने कारणान्तरमुद्भावयति—अपीति । हि यतः अनवद्यात्मा काठिन्यादिदोषरहितचित्तोऽपि नायाति तस्मात्तदनागमनं नूनं वितर्को मम किञ्चिज्जुगुप्सितमेव दृष्ट्वेत्यर्थः । (दयालुत्वादापाततः कृतोद्यमोऽपि नायातीत्यर्थः ) । यद्वा, कृतोद्यम इति हरिवंशोक्तं तस्याः स्वयंवरोद्यमं श्रुत्वा श्रीकृष्णस्य मथुरातः परावृत्तं कुण्डिनपुरागमनं भावयति—यत्रेन्द्रकृते तस्य राजेन्द्राभिषेके जाते जरासन्धशिशुपालादयः सर्वे पलायिताः अतो विप्रोऽपि तत्कृत्यविलम्बाद्रेतोर्यत्काले नायाविति भावः ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रत्यापत्तिं पुनरागमनम् ॥ २२ ॥

अल्पराधसः मन्दभाग्यायाः ॥ २३ ॥

जुगप्सितम् अपराधम् ॥ २४—२९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

भ्रातरि कृष्णे स्नेहेन व्याप्तः महता विपुलेन बलेन सैन्येन सह, बलमेव प्रपञ्चयति—गजाश्वरथपत्तिभिरिति । त्वरितः सञ्जातत्वरः कुण्डिनं पुरं प्रति प्रागात् ॥ २१ ॥

ततः पूर्वमेव रुक्मिण्यौत्सुक्यादचिन्तयदित्याह—भीष्मकन्येति । हरेरागमनमाकाङ्क्षमाणा द्विजस्य प्रेषितस्य प्रत्यापत्तिं प्रत्यागमनमपश्यन्ती चाऽचिन्तयत् ॥ २२ ॥

चिन्तामेवाह—अहो इति चतुर्भिः । [त्रियामा रात्रिस्तावन्मात्रान्तरितो मन्दभाग्याया मम विवाहः अरविन्दाक्षो भगवानधुनापि नागच्छति अत्रानागमने कारणमहं न वेद्मि यश्च मत्सन्देशहरः द्विजः सोऽप्यद्यापि नावर्तते नागच्छति॥ २३ ॥

अपि किम्वाऽनवद्यात्मा मुकुन्दः किञ्चिन्मयि जुगुप्सितं धार्ष्ट्यादिकमपि दृष्ट्वा मत्पाणिग्रहणे निमित्ते कृत उद्यमः प्रयत्नो येन तथाभूतोऽपि नूनं नायाति नाऽऽगच्छत्येव किमित्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरो वरणीय आरोहो जघनप्रदेशो यस्याः सा तथा प्रत्यापत्तिं पुनरागमनम् ॥ २२ ॥

त्रियामान्तरितः रात्रिमात्रव्यवहितः अल्पराधसः मन्दीभूतकार्यसिद्धेः ॥ २३—२५ ॥

दुर्भगायां न मे धाता नाऽनुकूलो महेश्वरः ।
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥ २५ ॥
एवं चिन्तयती बाला गोविन्दहृतमानसा ।
न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाऽऽकुले ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कलहो भविष्यतीति निश्चित्य महता बलेन सार्द्धं त्वरितः कुण्डिनं ययौ। ननु, भगवति कः सन्देहो भवेत् किमिति गत इत्याशङ्क्याह—भ्रातृस्नेहेन परिप्लुत इति। लौकिकदृष्ट्या स्नेहेन च गत इत्यर्थः ॥ २१ ॥

एवं सर्वसन्निधानमुक्त्वा अत्यन्ताकाङ्क्षायामेव भगवान् समायातीति रुक्मिण्याः आकाङ्क्षां निरूपयति—भीष्मकन्येति, सप्तभिः सार्द्धैः। भीष्मकन्येति न स्वातन्त्र्येण स्थातुं शक्नोति स हि पिता भयानकः कन्या चाऽस्वतन्त्रा कन्यात्वादेव लोकाविगानं वरारोहेति भोगयोग्यावस्था निरूपिता तेन दानसमनन्तरमेव सर्वनाशः सूचितः अतोतिदुःखिता उपायान्तरमलभमाना हरेरेव दुःखहर्तुः आगमनं काङ्क्षन्ती जाता। ततः स्वस्य प्रत्यापत्तिमपश्यन्ती तदा द्विजस्य द्विजमचिन्तयत् द्विजस्य वा प्रत्यापत्तिः प्रत्यापत्तिर्नाम स्थानात् प्रच्युतस्य पुनः स्वस्थानागमनं स्वयमपि भगवतः सकाशात् प्रच्युता पुनर्भगवत्प्राप्तिमलभमाना प्रापकं द्विजमेवाचिन्तयत् ॥ २२ ॥

तस्याश्चिन्तामाह—अहो इति सार्द्धैः। गुणेभ्योप्यधिकेति स्थापयितुं त्रियामा रात्रिः तथैवान्तरित उद्वाहः एकैव रात्रिर्मध्ये वर्त्तत इत्यर्थः। त्रियामात्वेनाल्पकालता सूचिता. अतोग्रिमे दिवसे महाप्रलय एवेति चिन्ता. अल्पराधस इति अल्पसिद्धियुक्तायाः भाग्यसिद्धिश्चेन्महती भवेत् तदा शीघ्रमेवेष्टसिद्धि सन्देहादल्पवचनं चिन्तायां द्वितीयां कोटिमाह—नागच्छत्यरविन्दाक्ष इति। इष्टैव तापनाशकः अत्र कारणमहं न वेद्मि नन्वागमनसमयो न जातः किमिति चिन्त्यत इति चेत्तत्राह—सोऽपि नावर्त्तत इति। आगच्छतीति ज्ञाते चिन्ता न भवेत् आगमनकालश्च सन्निहितः तत एकतरनिश्चये अस्वास्थ्यं वा उत्पाद्यं भवति येन श्वोविवाहो न भवेत् अपि शब्दाद्वन्यो वा प्रेषितः स्यात्तेनापि वा अद्यापीति सन्निहितः समयः। ननु, ब्राह्मणः कश्चित्तपः करिष्यति को नियमः तेषामागमन इति चेत्तत्राह—मत्सन्देशहरः इति। सन्देशं यो नयति तत्रापि द्विजः सत्यवादी द्वितीयं जन्म सत्यार्थमेवेति ॥ २३ ॥

तत्र स्वयमेव हेतुं कल्पयति—अपीति, सम्भावनायां भगवाननवद्यात्मा किञ्चित् भ्रातृपक्षपातलक्षणं जुगुप्सितं दृष्ट्वा तत्कारणभूतं पूर्वजन्मस्थितं वा मत्पाणिग्रहणे प्रथमत उद्यमं कृत्वापि ब्राह्मणमपि स्थापयित्वा सज्जेन भेष्यामीति पश्चात्तापगतः ततो ब्राह्मणोऽपि शीघ्रमागन्तुमसमर्थः नागत इति तदाह—मत्पाणिग्रहणे कृतोद्यमोऽपि नूनं नायाति ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सूर्योदयात् पूर्वमेवौत्सुक्यभयादितिरुक्मिण्यचिन्तयदित्याह—त्रियामा अद्यतनी रात्रिस्तथैवान्तरितः श्वस्तन्यां रात्रौ तु विवाहलग्नमेवेति भावः। अल्पराधसः मन्दभाग्यायाः ॥ २३ ॥

अपीति शङ्कायां नायाति हि कृतोद्यमः इति प्रथममत्रागन्तुमुद्यमः कृत एव अत एव विप्रमपि स्वसङ्ग एवाऽऽनेतुं न प्रथमं प्रस्थापितवान् प्रस्थानावसरे तु मयि किञ्चित् जुगुप्सितं शरीरबुद्ध्यादिगतं दृष्ट्वा प्रत्यावृत्त यतोऽनवद्यात्मा निर्दोषदेहान्तःकरणादिः मम सदोषायास्तत्स्वार्योत्वानर्हत्वमिति भावः। अतः सोऽपि द्विजो नूनमकृतार्थो मत्तनुत्यागभयान्नायातीति ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥

अल्पराधसः अल्पभाग्यायाः ॥ २३—२५ ॥

भाषा टीका ।

भ्राताके स्नेह में डूबकर गज रथ तुरग पदातियों वाली चतुरंगिणी बडी भारी सेना को लेकर, श्रीबलदेवजी बडी जल्दी कुंडिनपुर को जाते हुए ॥ २१ ॥

भीष्मक महाराजकी पुत्री श्रीरुक्मिणीजी भी श्रीहरि के आगमन की आकांक्षा करती हुई उस समय अपने भेजे हुए ब्राह्मणको लोटके आया हुआ न देख कर बडी चिन्ता करने लगी ॥ २२ ॥

रुक्मिणीजी मनमें विचारने लगी, कि—देखो मो मन्दभागिनी के विवाह को एक रात बीचमें है, और कमलदललोचन श्यामसुन्दर अब तक भी नहीं आये, इसमें क्या कारणहै? सो मैं नहीं जानती हूं। और अब तक वह ब्राह्मण भी नहीं लोट कर आया जो मेरे सन्देश को ले गया रहा ॥ २३ ॥

सर्व प्रकार दोष रहित उज्वल स्वरूप वाले श्रीकृष्णचन्द्र ने मेरे विषय में कुछ निन्दित तो नहीं देखा? इसी कारण उद्यम करके मेरे पाणिग्रहण के निमित्त नहीं आये यही मेरे निश्चय होता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्वा, ततो निर्गतोऽपि श्रीकृष्णो महेश्वरवैमुख्यात्कथित्प्रतिबद्धो भवेदित्याह—दुर्भगाया इति ॥ २५ ॥

एवं वध्वाःप्रतीक्षन्त्या गोविन्दागमनं नृप ! ।
वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ॥२७॥
अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ।
अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कालज्ञा नाधुनाऽपि गोविन्दाऽऽगमनकाल इति मन्वाना किञ्चिदाश्वस्तचित्ता सती चिन्तास्तब्धे लोचने निमीलितवतीत्यर्थः ॥२६ ॥

प्रियभाषिणः प्रियसूचकाः ॥ २७ ॥

पुरोपवनं प्राप्तेन श्रीकृष्णेन विनिर्दिष्टः प्राप्तं मां कथयेत्या दिष्टः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनस्तस्या अनवद्यात्मत्वेन दोषदर्शनमप्यमत्वा निजालपराधस्वमेव कारणं स्थापयति—दुर्भगाया इत्यर्द्धेन । अनेन ब्रह्मरुद्रावपि तदर्थमनयोपास्यमानौ स्त इति गम्यते धातृत्वान्महेश्वरत्वात् तदुपासनेन सुभगत्वमपि जायेतेत्याशङ्क्य पक्षान्तरमाह—देवी वेति। अस्मत्कुलदेव्यपि गौरी विमुखा तदुचितभजनाभावेनेति भावः । अतस्तस्याः परमापेक्ष्याया वैमुख्येनैव तावपि नानुकूलौ जाताविति गमितं तत्र तस्या धात्राप्यपेक्ष्यत्वे कारणमाह—रुद्राणीति । महेश्वरापेक्ष्यत्वे गिरिजा सतीति सती पूर्वं दक्षजा भूत्वा पुनर्गिरिजा ऽभवत् सेत्यर्थः । पूर्वं तन्निन्दाश्रवणेन प्राणत्यागात् पश्चात्तदप्राप्त्या प्राणत्यागव्यवसायात्तदुचितमेवेति भावः गिरिशेति पाठे गिरौ शयनात्तादृशतप एव लक्ष्यते एवं बहुशो रुरोदेति ज्ञेयम् । अश्रुकलाकुले इति वक्ष्यमाणात् ॥ २५ ॥

गोविन्दो गवामिन्द्रः श्रीमति गोकुले तादृशमाधुर्य्यतया वर्णितो यः तेन हृतं मानसं यस्याः सा अत एव बालापि एवमीदृशं चिन्तयन्ती एवमिति शोकभरेण तादृशमन्यदप्यचिन्तयदिति द्योतयति—अश्रूणां कला बिन्दवः तैराकुले व्याप्ते विवशे वा जलाकुलेति पाठेऽपि स एवार्थः । अन्यैस्तैः तत्र नाधुनापीत्यादिकं देवयाभाय्येव कृतावसरत्वात् ॥ २६॥

वध्वाः सन्निहितविवाहाया कन्यायास्तस्याः प्रतीक्षन्त्याः प्रतीक्षमाणायाः उर्वादीनां यथोत्तरमुर्कृतापेक्षया प्रियभाषित्वे श्रेष्ठ्यम अस्फुरन्निति बहुत्वेनैकदैव सर्वैरन्वयः । सचैकदैव स्फुरणाभिप्रायेण प्रियभाषिण इत्येकशेषत्वेन क्लीबत्वे प्राप्तेऽपि पुंस्त्व मार्षम ॥ २७ ॥

स एव योगत्वान्निर्दिष्टः श्रीकृष्णेन नत्वन्यः निर्देशस्तु मां प्राप्तं कथय तामचैव नेष्यामीतिप्रकारको ज्ञेयः । प्रथमं स एव द्विजसत्तमस्तां रुक्मिणीं ददर्श नतु सा तमित्यर्थः । तत्र हेतुः । अन्तः पुरचरीं विप्रवर्त्मनिरीक्षणाय तस्मिन्नितस्ततो भ्रमन्तीं व्यग्रांचित्तामित्यर्थः । कीदृशीं ददर्श ? देवीं वैवाहिकालङ्कारमङ्गलकर्माद्विना द्योतमानां ददर्श ह हर्षे विप्रकर्तृकदर्शनस्य यत् प्रथमत्वं तदुल्लेखोऽसौ रुक्मिकौटिल्येन स्वस्य तद्दर्शनं सम्प्रति भवेन्नवेति पथि तान् तान् सूचयति, तदुल्लाससूचकत्वात् ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किंवा धाता तु विश्वकर्म्महेश्वरो दुर्भगाया मम नानुकूल एव किंवा रुद्रस्य स्त्री मम विमुखी प्रतिकूला एव ॥ २५ ॥

एवमितीत्थं चिन्तयती बाला रुक्मिणी गोविन्देन हृतं मानसं यस्याः सा कालज्ञा नाधुनापि गोविन्दागमनकाल इति मन्वानाऽश्रुबिन्दुभिराकुले स्तब्धे लोचने न्यमीलयत निमीलितवती ॥ २६ ॥

हे नृप ! इत्थं गोविन्दागमनं गोविन्दागमनवार्त्ताहरं द्विजं तदागमनद्वारं च प्रतीक्षन्त्याः रुक्मिण्याः वामा उर्वादयः प्रियशंसिनः कृष्णागमनरूपप्रियसूचकाः अस्फुरन्स्खलितवन्तः ॥२७॥

अथ ततः पूर्वमात्मना प्रेषितः स एव द्विजः श्रीकृष्णेनाऽऽदिष्टोऽन्तःपुरचरीं रुक्मिणीं ददर्श ह ॥ २८ ॥

---

### श्रीमद्विजयध्वजकृतपदरत्नावली ।

"गौरो ऽरुणे सिते पीते" इति गौरीशब्दस्याऽदन्तस्यानेकार्थवाचित्वेनानिश्चय इत्यतो रुद्राणीति सामान्यविवक्षायां गङ्गाया अपि तत्पत्नीत्वेन संशयानिस्तार इत्यतो गिरिजेति गिरिजा मेनकात्मजेत्यभिधानं नन्वभिधानस्य योगबलानुसारित्वेन प्रवृत्तेर्नद्या अपि गिरिजात्वादित्यतः सतीति सती सती योगविसृष्टदेहा "तां जन्मना शैलवधूं प्रपेदे" इति ध्यानकालज्ञा ॥ २६ ॥

वाम ऊरुरस्फुरत् नेत्रभुजावस्फुरतां प्रियभाषिणः अभीष्टकार्यशंसिनः ॥ २७—२८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ २५--३० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

देवी वा विमुखीत्यादि देवी वा विमुखी यतः प्रेषितो विप्रोऽद्यापि नायात इति काऽसौ देवी ? तत्राह—गौरी तस्याः कथं वैमुख्यं यतो रुद्रानुतोषत्वात् सापि तथा अस्ति वैमुख्ये

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

कारणे गिरिजात्वमित्याह—गिरिजा गिरेः कठिनत्वात् नेत्याह, सतीति। सा प्रसिद्धा कोमलैव पत्युरपमानदृष्ट्या सद्यः प्राणत्यागकारित्वात् सा परस्या अपि पतिलाभाय सम्मुखी, निजनाम्ना-माधुर्ये समाधानम् ॥ २५ ॥

एवञ्चिन्तयन्तीत्यादि, कालज्ञा त्रिकालज्ञा भीत्वात् श्रीगोविन्द आयास्यति भवति जानामीति नेत्रे निमील्य चेतसि चिन्तयामासेत्यर्थः। अश्रुकलाकुले इति अद्यापि नायात इति पूर्वं दुःखेनैवाश्रुजातं कालज्ञेति तदागमनं जानन्त्यास्तदेवानन्दजमभूदिति अश्रुकलाभ्यां दुःखजानन्दजाभ्याम् आकुले नेत्रे न्यमीलयतेत्यर्थः ॥ २६ ॥

एवमित्यादि एवं गोविन्दागमनं प्रतीक्षन्त्या प्रतीक्षमाणायाः वाम ऊरुर्वामभुजो वामनेत्रम् अस्फुरन् प्रियं श्रीकृष्णं तदागमनं वा भाषितुं शीलं येषाम् ॥ २७ ॥

अथेत्यादि राजपुत्रीं ददर्शेति ब्राह्मण एवाग्रे तां ददर्श तस्या निमीलितनयनत्वात् कृतकृत्यतया परमानन्देनाविज्ञाप्यैवान्तःपुरप्रवेशेन सर्वैरलक्षित इति ज्ञेयम्। तेन न केनापि विप्रोऽयामगत इति कथितपूर्वः सः ॥ २८—४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, सदुष्टा अपि केचन परिगृह्यन्ते ननु सर्वथा निर्दुष्टा भवन्ति तथा सति कस्यापि परिग्रहो न स्यादिति चेत्सत्यं तत्र अदृष्टादिकं प्रेरकं सम्पद्यते मम तु तस्याप्यभाव इत्याह, दुर्भगाया इति। पतिस्तु कृष्ण एव अनागमने यथा कथञ्चित् भ्रान्तापि भूत्वा तत्र गमिष्यामि यतो ब्रह्मा पतित्वेन भगवन्तमेव विचारितवान् परं दुर्भगा भविष्यामि अतो दुर्भगत्वमपि न भवेत्। ननु, सौभाग्यं शिवाधीनं पार्वत्यधीनं वा तत्राह—नानुकूलो महेश्वर इति। देवतारूपा दुर्भगा वा विमुखा अनाराधनात् सा हि गौरी गुरोः पत्नी गुरुरुपदिशति तच्छास्त्रभाग्ये सम्पादयतीति तमेव सम्बन्धं प्रकटयति—रुद्राणीति। रुद्रो हि गुरुः स्वयमपि गिरिशा सती पातिव्रत्यबलमपि तस्याः सूचितम् ॥ २५ ॥

एवं चिन्तयः कियति काले अतीते चिन्ताधिक्ये उत्पन्नज्ञाने मध्ये तद्विघातकं शकुनं जातमित्याह—एवं चिन्तयतीति। बाला मुग्धा तथापि गोविन्देन हृतमानसा विह्वला सती रोदने प्रादुर्भूते कृतमङ्गलायाः तदनुचितमिति अश्रुकलाकुले नेत्रे अमीलयत्। नन्वेतादृशेऽर्थे रोदनमुचितं तत्कथं निमीलनमिति चेत्तत्राह—कालज्ञेति। सा ह्ययं शुभकाल इति जानाति ग्रहानुगुण्यात् अतो भगवानेवाऽऽयास्यति इति निश्चित्य तथा कृतवतीत्यर्थः ॥ २६ ॥

किञ्च, न केवलं कालज्ञानेनैव तूष्णीं स्थिता किन्त्ववयवस्फुरणेन शकुनमपि प्राप्तवतीत्याह—एवं वध्वा इति। वधूर्विवाहसमयस्था सर्वतो रक्षायुक्ता वा गोविन्दागमनं प्रतीक्षन्त्याः वाम ऊरुर्भुजः नेत्रं च प्रास्फुरन् वामे अङ्गे ऊर्वादित्रयस्फुरणं



स्त्रीणां शुभसूचकं प्रियभाषिण इति त्रयाणां विशेषणम् शुभसूचका इत्यर्थः। अन्यतरस्यामिति नपुंसकशेषो न भवति अथवा प्रियभाषिणः सम्बन्धीनि एतानीति प्रियं श्रोष्यामीति भावः ॥ २७ ॥

ततस्तदनन्तरमेव ब्राह्मणः समागत इत्याह—अथेति। तस्य तत्समय एव समागमनं काकतालीयं चेत् तदा भगवदर्थमेव तस्याः आकाङ्क्षा निरूपितेति न स्यादतः तद्व्यावृत्त्यर्थं भगवानेव तस्मिन् समये "ये त्यक्तलोकधर्माश्च मदर्थे" इति वाक्यात् भगवानेव प्रेषितवानित्याह—कृष्णविनिर्दिष्ट इति। तद्विनिश्चयात् उभयविधादपि विशेषेण समागत इति भिन्नप्रक्रमोऽप्यथशब्दः भगवतैव तथा कृत इतिज्ञापनार्थः। द्विजसत्तम इति अत्यन्तमन्तरङ्गो भगवद्भक्तः अतः तेन सर्वतापनिवृत्तिर्युक्तैव. द्विज एव मित्रं तथापि सन्देशहारी विशिष्टः तथापि तत्र गतो भगवत्सख्यं प्राप्तः सत्तमो भवति अत एवाऽन्तःपुरचारीमपि राजपुत्रीमपि स्वयमेव ददर्श भगवच्चिन्तनाद्देवतैव तदावेशनाज्जाता यथा ब्राह्मणे धर्मत्रयं तथा तस्यामपि अध्यात्मिकादिधर्मत्रयं वक्तुं विशेषणत्रयं हेत्याश्चर्ये ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पुनरपि बहुतरं संशयानेवाह— दुर्भगाया इति। धाता मे नानुकूल इति मत्प्रतिकूलेन विधात्रैव वा वर्त्मन्येव क्वचित् स प्रतिबन्धितः तत्प्रातिकूल्ये हेतुर्न दृश्यते इति महेश्वरो वा कदाचिन्मत्पूजामप्राप्य कुपितः महैश्वर्य्यास्तस्य मयि बालिकायां निकृष्टायामज्ञायां कोपो न युज्यत इत्यहो प्रत्यहमाराध्यमानापि गौरी देवी वा विमुखा हन्त हन्त कमपराधं मे सा प्राप्ता यन्मयि वैमुख्यं गता तस्याः सांसर्गिकोऽयं वा दोष इत्याह—रुद्राणीति। तत्पतिः सर्वजनान् रोदयेत् सा तु मामिति रोदयतु नाम हन्त ममैतादृक्वैक्लव्यं प्राणजिहासापर्य्यन्तमपि दृष्ट्वा कथं न द्रवति? तत्र पैत्रिकं दोषं सम्भावयन्त्याह—गिरिजा पाषाणपुत्री कथं द्रवेत् अतः सा मद्देहं त्याजयिष्यत्येवेति निश्चिनोमि यतः सती पूर्वजन्मनि स्वयमेव देहं तत्याजेति ॥ २५ ॥

कालज्ञेति भोश्चञ्चलचित्त! सम्प्रति तनुत्यागोपायं मा कुरु यतो नाऽधुनापि तस्याऽऽगमनकालो व्यतीतस्तस्मात्तनुत्यागात् पूर्वमधुना ध्यानेनैव तन्मुखमेकवारमवलोकयानि माऽत्र त्वं मे प्रतिबध्नानेति नेत्रे न्यमीलयत मुद्रितवती ॥ २६ ॥

उर्वादयोऽस्फुरन् प्रियभाषिणः शुभसूचकाः। एकशेषे सति पुंस्त्वमार्षम् ॥ २७ ॥

कृष्णेन विनिर्दिष्टः पुरोपवने प्राप्तं मां शीघ्रं कथयेत्यादिष्टः देवीं ध्यानप्राप्तकृष्णदर्शनानन्देन द्योतमानां ध्यानावेशोद्रेकादेव कृष्णपार्श्वम् गन्तुम् अन्तःपुराच्चरतीति तथा ताम् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु, "अहो त्रियामान्तरितः" इत्यादिसार्द्धत्रिभिः श्लोकैरनु-

सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ।
आलक्ष्य लक्षणाऽभिज्ञा समपृच्छच्छुचिस्मिता ॥ २९ ॥
(१) तस्या आवेदयत्प्राप्तं शशंस यदुनन्दनम् ।
उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ३० ॥
तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ।
न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥
प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ।
अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वर्णिता चिन्ता सर्वेश्वरपत्न्यां सर्वज्ञायां सर्वदेवपूज्यायां कथं युज्येत ? इत्यत आह—एवमिति । गोविन्दहृतमानसा बाला भगवदिच्छयैव बालचेष्टां गता एवं चिन्तयती सती नेत्रे न्यमीलयत निमीलितवती ॥ २६ ॥

प्रियभाषिणः मनोरथसिद्धिसूचका ॥ २७ ॥

कृष्णविनिर्दिष्टः मां प्राप्तं कथयेत्येवं तेन विनिर्दिष्टः आदिष्टः ॥२८॥

### भाषा टीका ।

मेरे मन्दभागिनीके ऊपर विधाता अथवा महेश्वर अनुकूल नहीं है, अथवा सती रुद्राणी गिरिजा देवी मेरे ऊपर विमुख हो रही है ॥ २५ ॥

श्रीगोविन्दके विषे हरण हुआहै मन जिसका ऐसी वह रुक्मिणी गोविन्दके आगमन कालको जानकर कि अभीतक आवनेका समय नहीं बीता ऐसा जान कर अश्रुओं से व्याकुल नेत्रों को बन्द करलेती हुई ॥ २६ ॥

हेनृप ! इस प्रकार गोविन्दके आगमन की प्रतीक्षा करने वाली दुलहन के शुभ सूचन करने वाले बाये उरु भुजा और नेत्र फरकने लगे ॥ २७ ॥

तदनन्तर 'आए हुए हमको रुक्मिणी जी से जनादो' इस प्रकार श्रीकृष्ण की आज्ञा पाकर वहीं द्विज श्रेष्ठ भीतर महलों में आकर राज पुत्री को देखता हुआ ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न व्यग्रा आत्मनो देहस्य गतिर्यस्य तं लक्षणाऽभिज्ञा दूतस्य लक्षणं तत्तत्कार्यसूचकमभिजानातीति तथा ॥ २९ ॥

तस्यै प्राप्तं यदुनन्दनमावेदितवान् तं च शशंस आत्मोपनयनं प्रति आत्मना स्वयं श्रीकृष्णस्याऽऽनयनं प्रति तेन द्विजेन सत्यवचनं प्रोक्तमिति आत्मनः प्राणेश्वरस्येति वा । यद्वा, आत्मनस्तस्या उपनयनं प्रति श्रीकृष्णेन यदुक्तं सत्यवचनं "तामानयिष्ये" इत्यादि तच्च शशंसाऽवर्णयदित्यर्थः ॥ ३० ॥

तं श्रीकृष्णम् अस्मिन्कार्ये सर्वस्वार्पणमप्यपर्याप्तमिति तदुचितं प्रियमपश्यन्ती तदा केवलं ननाम पश्चात्तु ददावित्यर्थः । यद्वा, मां श्रियं ये नमन्ति ते तावत्सर्वसम्पदामास्पदं भवन्ति किं पुनर्मयि प्रणतायामिति ततोऽधिकमन्यत् प्रियमपश्यन्ती ननामेति ॥ ३१—३३ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शुचिस्मिता हर्षोदयात् यतो लक्षणाभिज्ञा यतः सती सर्वगुणैरुत्तमा सम्यक् सर्वतः क्षेमं किमित्यादरादिना अपृच्छत् अन्यत्तैः । यद्वा, अव्यग्रा सती आत्मनो गतिं श्रीकृष्णमपृच्छत् स कुत्रास्ते किं वा ऽवददित्येवं व्यग्रो ऽपृच्छदित्यर्थः ॥ २९ ॥

यदूनन्दयतीति तथा तमिति अन्यत्तैः । तत्र तच्च शशंस तुष्टाव रुक्मिणीति शेषः । ब्राह्मण इति वा अत्र तेनेति [illegible] मित्यर्थः । पक्षान्तरेत्ववर्णयद्ब्राह्मण इति शेषः । यद्वा, आवेदयदित्यस्यैव विवरणं प्राप्तमित्यादि उक्तञ्चेत्यादि च ॥ ३० ॥

समाज्ञाय दृढतया ज्ञात्वा सा तथा व्यग्रा न पश्यन्तीति नञो लोपाभावः आर्षः अन्यत्तैः । तत्र पश्चात्तु ददावित्यर्थः । [illegible] कायामनन्तविभववती सत्यनन्तमेव दद्त्यासीदित्यर्थः । [illegible] पूर्वं यच्च ननाम तत्त्वानन्देनैव विस्मृतमिति ज्ञेयम् । यद्वा, [illegible] यतादृगुपकारस्य प्रत्युपकारहेतु प्रियं स्वाभिरुचितं [illegible] दपश्यन्ती स्वपराजयं मत्वा ननामैव केवलमित्यर्थः ॥ ३१ ॥

उद्वाहेति ताभ्यां तथैव ज्ञापितत्वात् तत्तु तेनापि, तदुद्वाहप्रेक्षणाय सर्वेषामाकारितत्वात् एवं गुप्तत्वं भूतनाश[illegible] च सिद्ध्येदिति तादृशः श्रीरुक्मिणीसन्देशश्चानुगमितः । [illegible] शब्देन तस्य परमहर्षं द्योतयति—अयोग्यस्यापि स्वस्य [illegible] विवाहप्रेक्षणे तयोरुत्सुकतयात्मनः परमधन्यत्वमननात् । यद्वा श्रीकृष्णोऽवश्यं हरिष्यत्येवेतिनिगूढभावाद्वा, समर्हणैस्तत्पूजाद्रव्यैः सहाऽभ्ययात् भीष्मक इति शेषः ॥ ३२ ॥

(१) आवेदयामास तस्यै सम्प्राप्तं यदुनन्दनमिति विज० पा० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आवेदयत् वाक्यसम्प्राप्तं कथमित्यपेक्षायां यदुनन्दनं प्राप्तं शशंसेत्याह ॥ ३० ॥

श्रुत्वेति भीष्मक इत्यध्याहारः ॥ ३३—५५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा रुक्मिणी न व्यग्रा आत्मनो देहस्य गतिर्यस्य प्रहृष्टं वदनं यस्य तं द्विजमालक्ष्य लक्षणाभिज्ञा कृतलक्षणतत्कार्याभिज्ञाऽत एवं शुचिस्मिता सती सम्यगपृच्छत् ॥ २९ ॥

तस्यै पृच्छन्त्यै रुक्मिण्यै रामेण सहितं कृष्णं प्राप्तमागतमावेदयत् शशंस आत्मोपयनं प्रति आत्मनो रुक्मिण्याः उपनयनं स्वसमीपप्रापणं प्रति भगवता यत्सत्यवचनमुक्तम् ।

"तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ।

मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव" ॥

इत्युक्तं सत्यवचनं शशंसेत्यर्थः ॥ ३० ॥

ततस्तं श्रीकृष्णमागतं ज्ञात्वा हृष्टं मानसं यस्याः सा रुक्मिणी ब्राह्मणाय प्रत्युपकर्तुं प्रियं योग्यं वस्त्वपश्यन्ती केवलं ननाम ॥ ३१ ॥

प्राप्ताविति स्वदुहितुरुद्वाहप्रेक्षणे निमित्ते उत्सुकौ प्राप्तौ उद्वाहदिदृक्षया आगतावित्यर्थः । श्रुत्वा तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्याजगाम ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अव्यग्रात्मगतिमसम्भ्रान्तनिजगमनम् ॥ २९—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नमनादन्यत् प्रियमपश्यन्ती तस्य स्वयं भगवता पूर्ववर्णितया स्वलाभसन्तुष्टया नैरपेक्ष्यात् किन्तु स्वसाहाय्यमात्राय सापेक्षत्वात् ननाम तेन तद्वशीभावमेव स्वस्य द्योतयामासेत्यर्थः ॥ ३१—५० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह— सा तमिति । कुत्र मानसचिन्तनं कुत्र च कार्योपस्थितिरिति तादृशं दुर्लभमिव सा तं दृष्ट्वा समपृच्छत् नन्विङ्गितज्ञानेनैव कथं न निश्चयः ? तत्राह— प्रहृष्टवदनमिति, ब्राह्मणे धर्मद्वयं दृष्ट्वा विवाहस्वीकारः समागमनं च लक्षितवती मुखहर्षात् स्वीकारः शनैरागमनात् कर्तव्यान्तराभावसूचकं समागमनमिति तस्या अपि लक्षणज्ञाने हेतुद्वयमाह— सती लक्षणाभिज्ञेति । पातिव्रत्यधर्मे शास्त्रानुसारेणापि ज्ञानं तर्कितमेतच्च [illegible]र्मितमिति प्रमानिरूपणार्थं मालस्यापि समपृच्छत् शुद्धं स्मितमिति हर्षात् मन्दहासः स च ब्राह्मणं प्रति शुद्ध एव अथवा इष्टपूरणात् लौकिकवत् स्मितं भविष्यतीति तद्व्यावृत्त्यर्थं शुद्धता निरूपिता ॥ २९ ॥

ततो ब्राह्मणस्य वचनद्वयमाह— तस्या आवेदयदिति । प्राप्तं भगवन्तं आवेदयत् अन्यार्थमप्यागमनं सम्भवतीति तन्निवृत्त्यर्थमुक्तं च आवेदयत् सराममिति कलहेऽपि शङ्काभावाय तन्मनोरथपूर्त्यैव यदुनन्दनमिति, तथा करणे भक्तकृपालुत्वं हेतुरुक्तः योऽहि पितुराज्ञोल्लङ्घनकर्त्तारं भक्तत्वाद्यदुमानन्दयति तेनैव भावेन त्वामप्यानन्दयति "स्त्रीषु नर्मविवाहे च" इति वाक्यात् कदाचिदसत्यमपि वदेत्तद्व्यावृत्त्यमाह—सत्यवचनमिति । चकारात् स्वाभिप्रायनिवेदनमपि यद्भगवता कृतं तदप्युक्तत्वात् न केवलमुद्वाहार्थं किन्तु उपनयनं प्रति समीपे नेष्यामीति यथाभिलषितसिद्धिः उपगमनपदेऽपि च एवार्थः ॥ ३० ॥

ततः पूर्णमनोरथा तस्मै वरं दत्तवतीत्याह—तमागतमिति, भगवति समागते स्वयं भगवदीयैवेति सर्वं भगवति समर्पितमिति वैदर्भीत्वादेव न कर्म ब्राह्मणस्य सफलं करिष्यति हृष्टमानसेति स्वार्थं न किञ्चित् प्रार्थितवती येन किञ्चिद्दत्वापि तुष्टो भवेत् मोक्षदातारमपि यो दत्तवान् तस्मै किं देयमिति वैभवमपि न देयमित्याह— ब्राह्मणायेति । अत एवान्यत्प्रियं नास्तीति सा ननाम नमो नम इत्येतावत् सदुपशिक्षितमिति यत्र न कोऽपि प्रतीकारः तत्र नमस्कार इति भगवांश्च ब्रह्मण्यदेव इति ब्राह्मणनमस्कारः भगवद्भार्याया युक्त एव अनेन देयाभावे सर्वत्रैवमेव कर्त्तव्यमिति साधनं निरूपितम् ॥ ३१ ॥

भगवान् नगरमध्ये समागतः ब्राह्मणोऽन्तःपुरे ततः समागतयोः विवाहात्पूर्वं कर्त्तव्यं वक्तव्यमिति पितुरदाने हरणं चायुक्तमिति प्रसह्य हरणेऽपि मातापित्रोः दानमावश्यकमिति अन्यथा न धर्म्यः स्यादिति पितुर्दानार्थं गोप्यार्थं च तादृशीं कथामाह— प्राप्तौ श्रुत्वेति त्रिभिः। स्वदुहितुरुद्वाहप्रेक्षणे सम्बन्धित्वादुत्सुकौ समागताविति लोके भ्रममुत्पाद्य स्वयं दातुमेवागतः स्वदुहितुः पती प्राप्तौ प्रकर्षेणाप्तौ एकः पतिरपरो भावुक इति एकस्तूद्वाहोत्सुकः अपरः प्रेक्षणोत्सुक इति अत एव अनाकारितावप्यागतौ लोकेऽप्युत्सुकानां नाकारणं तथाप्यग्रिमकृत्यं कर्त्तव्यमिति तूर्यघोषेण समर्हणैः सह आभिमुख्येन गतः शिशुपाले तु "तं वै विदर्भाधिपतिः" इति अग्रे गमनम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुनन्दविप्रोऽहं त्वत्प्रियपार्श्वाद्यायातो मां पश्येत्युच्चैरुक्तवन्तं प्राप्तध्यानभङ्गा सापि तं ददर्शेत्याह--सेति । न व्यग्रा आत्मनो मनसो गतिर्यस्मात्तं विप्रस्य यद्महर्षदर्शनेन तस्या मनसो वैयग्र्यं शान्तमभूदित्यर्थः । यतो लक्षणाभिज्ञा लक्षणं कार्यसिद्धिसूचकं दूतहर्षं स्ववामनेत्रादिस्पन्दनम् अभिजानातीति सा शुचि शुद्धं हर्षद्योतकं स्मितं यस्याः सा पूर्वं तु दुःखेऽपि भावगोपनार्थं कपटस्मितैवासीदिति भावः ॥ २९ ॥

प्राप्तं यदुनन्दनं तस्यै आवेदयत् आत्मनः स्वस्य उपनयनं समीपप्रापणं प्रति यत् सत्यवचनमुक्तं कृष्णेन "तामानयिष्य उन्मथ्य" इत्यादि शशंस ॥ ३० ॥

मधुपर्कमुपानीय वासांसि (१)विरजांसि सः ।
उपायनान्यभीष्टानि विधिवत्समपूजयत् ॥ ३३ ॥
तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ।
विज० पा० ( बाह्योद्याने कुण्डिनस्य यथायोगं सुविस्तृतम् ।
आवेष्ट्य पूर्णनगरं जरासन्धादिभिर्नृपैः )
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥ ३४ ॥
एवं राज्ञां समेतानां यथा वीर्यं यथा वयः ।
यथाबलं यथा वित्तं सर्वैः कामैः समर्हयत् ॥ ३५ ॥
कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किमस्मै पारितोषिकं ददामीति विमृशन्ती केवलं ननाम यतः प्रणामाद्न्यत् सर्वस्वार्पणमपि प्रियमस्मिन्नर्थे समुचितं न पश्यन्ती प्रणत्या तु स्वस्य ऋणित्वमेव व्यञ्जयामास ततश्च तदैव-ब्राह्मणस्य गृहं सार्वकालिकसर्वसम्पत्तिपूर्णं बभूव महालक्ष्म्या अपि ऋणित्वादिति ज्ञेयम ॥३१—३३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न व्यथा आत्मगतिर्यस्य तं लक्षणं साधितार्थस्य दूतस्य प्रहृष्टत्वादि अभिजानातीति तथा ॥ २९ ॥

तस्यै प्राप्तं यदुनन्दनम् आवेदयत् आत्मनः श्रीरुक्मिण्याः उपनयनं प्रति समीपानयनं प्रति यदुनन्दनेन यदुक्तं सत्य-वचनम् "तामानयिष्ये उन्मथ्य" इत्यादि तच्च शशंस ॥ ३० ॥

तं श्रीकृष्णं समाज्ञाय हृष्टं मानसं यस्याः सा अन्यत् प्रियं न पश्यन्ती केवलं ननाम "यस्याः स्ववीक्षणकृतेऽन्यसुर-प्रयासः" सा यदा यं प्रति प्रणता भवेत्तस्य किं वर्ण्यते भाग्य-मिति भावः ॥ ३१ ॥

तूर्यघोषेण समर्हणैः पूजासाधनैश्च सहाऽभ्ययात् ॥ ३२-३३ ॥

भाषा टीका ।

और लक्षणों के जानने वाली रुक्मिणी सती ने भी अविकल देहको गति वालेहर्षित मुख उस ब्राह्मणको देखकर, सुन्दर हँसकर आप उस ब्राह्मणसे पूँछती भई ॥ २९ ॥

उस ब्राह्मणने भी रुक्मिणीजी के लिये आये हुए श्रीयदु-नन्दन को कहा, और अपने (रुक्मिणीजी के) ले जाने के लिये जो भगवान् ने प्रतिज्ञा करी रही उसको भी कहा ॥ ३० ॥

भगवान् को आये हुए जानकर रुक्मिणी जी के मनमें बडा हर्ष हुआ । उस समय रुक्मिणीजी ने उस ब्राह्मण के देने के योग्य संसारमें कुछ न देख कर ब्राह्मण की ऋणी होकर रुक्मिणीजी ने केवल नमस्कार किया, अब जानना चाहिये, कि लक्ष्मीजी जिसकी ऋणिया भई उसका कितना वैभव भया होगा ॥ ३१ ।

भीष्मक महाराज भी अपनी पुत्रीके विवाह देखनेके लिये आये हुये राम कृष्णको सुन कर, बाजे गाजे से लेने को जाते हुए ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

महामतिरित्यनेन श्रीकृष्णो वाढं कन्यामुद्वोढुमेवाऽगतः स्यादिति वरोचितेन विधिना समपूजयदिति सूचितम् यथ यथावत् ॥ ३४ ॥

समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हितवा नित्यर्थः ॥३५ ॥

श्रीकृष्णे भाविकर्मसूचकं जनाऽनुरागं दर्शयति—कृष्ण मागतमिति त्रिभिः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तान्येवाभिव्यञ्जयंस्तत्प्रयोजनमाह—मधिवति ॥ ३३ ॥

श्रीमद्गृहपरिष्कारोपभोगसाधनेन च निवेशनं प्रासादं उपकल्प्य भक्त्या समर्प्य ॥ ३४ ॥

वीर्य्यं प्रभावः बलं सैन्यं कामैरुपभोगैः ॥ ३५ ॥

तन्मुखपङ्कजं पपुरिति तस्मादुच्छलितं सौन्दर्य्यमाध्वीकम स्वादितवन्त इत्यर्थः । पेयतदाधारयोरभेदनिर्देशाच्च पेयप्राचुर्य

(१) रुचिराणि इति वि० पा० ।

विवक्षया। किञ्च, नेत्रस्याऽञ्जलिताकृपकं तत्राभ्यतिशयमविच्छेदं च द्योतयति-तथैव पिबतां तृष्णायाश्च तस्मादहो किं नाम तद्-पूर्वं पङ्कजमिति भावः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः स भीष्मको मधुपर्कादीनि समर्प्य यथाविधि सम्यगपूजयत्, तत्रोपायनानि श्रेष्ठवस्तूनि ॥ ३३ ॥

महामतिर्भीष्मकः तयो रामकृष्णयोः श्रीमत्भोग्यभोगोपकरणादिसमृद्धिमत् निवेशनं गृहमुपकल्प्य सभृत्ययोस्ससैन्ययोश्च तयोर्यथावदातिथ्यं चक्रे ॥ ३४ ॥

इत्थमन्येषामपि सर्वेषां समुदितानां राज्ञां तत्तद्वीर्यवयः-प्रभृत्यनुरूपं सर्वैः कामैरपूजयत् ॥ ३५ ॥

कृष्णमिति ।विदर्भपुरवासिनः कुण्डिनपुरवासिनो जनाः कृष्णमागतं श्रुत्वा इतस्ततः स्थित्वेति शेषः। तस्य कृष्णस्य मुखपङ्कजं मुखपङ्कजस्थलावण्यसुधां नेत्ररूपैरञ्जलिभिः पपुः पीतवन्तः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

किमिति नगरप्रवेशाप्रदानं कृष्णरामयोरिति तत्राह—आवेद्येति। जरासन्धादिराजभिर्नगरं पूर्णं निबिडमनवकाशमित्यावेद्य विज्ञाप्य ॥ ३१—४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः आभिमुख्येन सम्मुखमागतस्य यादृशी पूजा यथा कथञ्चित् स्थापनमिति तथा अग्रे सर्वेषामेव वक्ष्यति मध्ये तु भगवतो विशेषाकारेण यथा वराय क्रियते गमन एव वाद्यसहितः वरपूजार्थं सम्पादितद्रव्यैः सह ततो मधुपर्कानयनं ततो विरजानि वासांसि विरजानीति शोभार्थं दानव्यतिरेक उक्तः अन्येभ्यस्तु स्वख्यापनार्थं राजसगुणाद्दीयते इति वस्त्राण्यविरजान्येव भवन्ति नूतनानि तु प्रक्षालितानि सभ्येभ्य एव दीयन्त इति विशेषणं व्यर्थं स्यात्। अथवा कन्यां दातुं आदौ अखण्डानि शुभ्राण्येव वस्त्राणि दत्तवान् यदप्यग्रे देयं तदपि दत्तवानित्याह—उपायनानीति। अभीष्टानि वरवध्वोः विधिवदिति यथाविवाहविधिः ॥ ३३ ॥

ततो निवेशनमपि यथा जामातुर्दीयते तादृशं श्रीमदिति उप समीप एव कल्पयित्वा यथा भगवान् निकट एव रुक्मिणीसहितो भवतीति। ननु, कथमेवं ज्ञातवान् तत्राह—महामतिरिति ततो वरयात्रिकाणां भोजनमपि दत्तवानित्याह—ससैन्ययोरिति। सैन्यमसहभोजि अनुगास्तु सहभोजिन इति आतिथ्यं प्रत्येकं धर्मयुक्त्या आवश्यकयुक्त्या वा ॥ ३४ ॥

तदनन्तरं तदर्थमन्येषामपि पूजां कृतवानित्याह— एवं

राज्ञेति। यादृशे रूपे यादृशानि वस्त्राणि यादृशं वयः तादृशवेशसम्पादकं यावच्च बलं सेना तावत्सम्भृत्याधिक्यं यावच्च स्वस्य वित्तम् एवं यथायोग्यं चतुर्धा पूजयामास ॥ ३५ ॥

राजपत्न्या अभिरुचिरस्ति नवेति सन्देहे तन्निराकरणार्थं सामान्यत स्त्रीणामभीष्टता निरूप्यते, कृष्णमागतमितित्रिभिः। कायिकवाचिकमानसिकानुवृत्तिभेदात् तत्रकायिकमाह—कृष्णं स्वभावत एव स्त्रीप्रियं तद्गृहेऽपि गत्वा द्रष्टव्यं स्वगृहे समागतं कथं न पश्येदिति विदर्भपुरवासिनः सर्व एव समागत्य नेत्राञ्जलिभिस्तन्मुखपङ्कजं पपुः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महामतिरित्यनेन कृष्णो वाढं कन्यामुद्वोढुमेवागतः स्यादिति स्वचेतःप्राप्ताश्वासो वरोचितेन विधिनैव समपूजयदिति सूचितम् ॥ ३४—३५ ॥

मुखपङ्कजं पपुरित्यत्यमपारं माधुर्य्यमेव पपुर्लक्षणया पेयप्राचुर्य्यं तथा अनेककर्तृकपानादेकस्यैव पङ्कजस्याऽपरिमितमधुत्वादद्भुतत्वं च व्यञ्जितम् ॥ ३६ ॥

---

श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महामतिरयमेव रुक्मिण्या वर इति ज्ञानवान् अतो यथा यथावदातिथ्यं विदधे ॥ ३४ ।

एवमन्येषां समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हयत् ॥ ३५—४३ ॥

---

भाषाटीका ।

मधुपर्क और विरज वस्त्रों को तथा नाना प्रकार की भेटों को धरकर विधि पूर्वक राम कृष्ण की पूजा करते हुए ॥ ३३ ॥

महामतिमान् भीष्मक महाराज ने उन दोनों को उत्तम शोभायुक्त निवास स्थान दिया, एवं सेना और अनुचरों सहित उनका यथा योग्य सत्कार किया ॥ ३४ ॥

इसी प्रकार आये हुए अन्य राजाओं का भी वीर्य के अनुरूप वय के अनुरूप बलके अनुरूप और वित्त के अनुरूप सर्व कामों से यथोचित सत्कार किया ॥ ३५

विदर्भ नगर निवासियोंने श्रीकृष्ण को आए हुए सुनकर निवासस्थान पर आकर अपने नेत्र रूप अंजलियों से श्रीकृष्ण के मुख कमल की शोभा रूप अमृत का भली प्रकार पान किया ॥ ३६ ॥

---

अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ।
असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३७ ॥
किञ्चित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३८ ॥

*( श्रीशुक उवाच । )

एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ।
कन्या चाऽन्तःपुरात् प्रागाद्भटैर्गुप्ताम्बिकालयम् ॥ ३९ ॥
पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ।
विजयध्वज पाठः ( परिवारैः कतिपयैर्युक्ता यादवनन्दनः )
सा चानुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि तत्रैकस्मिन् व्यतिरेकप्रदर्शनमुपलक्षणार्थं नापरेति, नच वाक्यभेददोषः अनूद्य विधेयभेदेन विभिन्नानामेव वाक्यानां सह प्रयोगात् ग्रहं सम्मार्ष्टीत्यादिवदिति ॥३७॥

अयमेवानुग्रह इति निर्दिशन्ति—गृह्णात्विति ॥ ३८ ॥

प्रेम्णः कला लेशस्तेन बद्धा वदन्ति स्म सम्पूर्णं प्रेम तेषां हृद्येवाऽवर्त्तत इत्यर्थः ॥ ३९ ॥

गमनं विशिनष्टि—द्वयेन । पद्भ्यामिति ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च तयोः सर्वोत्तमयोः परस्परयोग्यतासौष्ठवदर्शनेन सर्वेषामपि चित्तमाक्रान्तम् अत एवं वदन्ति स्मेति त्रिकेणाह—अस्यैवेति । तैर्व्याख्यातं तत्र तत्रेत्याद्यनुसारेणैवं योज्यम्, अस्यैव नापरस्य रुक्मिण्येव नापरा, अर्हत्येव नतु नार्हति असावेव नापरः भैष्म्या एव नापरस्याः सम्यगेवोचितः नत्वीषदप्यनुचित इति वाक्यभेदः खल्वेकस्यैव वाक्यस्यार्थभेदाय नानात्वकल्पनं तस्य च दोषत्वं कल्पनागौरवात् अर्थमात्रस्यैव भेदेऽप्येकवाक्यस्य नानाप्रतिपाद्यत्वेन तात्पर्य्यनिर्णयासिद्धेः "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति नयविरोधाच्च । सिद्धान्तमाह—अनूद्येति । अयमर्थः न तावदत्रैकमेव वाक्यं कुत्रापि किमप्यनूद्य विधीयते कुत्रापि किमपीति विभिन्नानामेव वाक्यानां वाग्मितया सह प्रयोगात् । तथा हि अस्यैव भार्य्या भवितुं रुक्मिण्यर्हति नापरस्येति प्रथमं वाक्यं रुक्मिण्येवास्य भार्य्या भवितुमर्हतीत्यादि द्वितीयमित्यादि, एवकारावृत्तिभेदेन वाक्यभेदे दोषं परिहरन्ति—ग्रहमिति । दशापवित्रेण ग्रहं सम्मार्ष्टीति तु पूर्ण(पूर्व)वाक्यं दशापवित्रं वासःखण्डः ग्रहो यज्ञीयपात्रविशेषः तेन तं सम्मृज्यादित्यर्थः । तत्र हि ग्रहमिति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते ग्रहं प्रति गुणः सम्मार्जनं प्रति प्रधानं च गुण आवर्त्तनीय इति न्यायेन तत्रोपयुक्तं सर्वं ग्रहं प्रति मार्जनक्रियावृत्तिः कर्त्तव्या, तत्र एकत्वं चाविवक्षितं ग्रहशब्दो ह्यत्र जातिद्वारा द्रव्यलक्षक इति सर्वोऽपि गृह्येत किन्तूपयुक्तावन्यत्र वैयर्थ्यमिति तत्रस्येष्वेवावर्त्यते आवृत्तौ च वाक्यभेदः स्यादेव किन्तु तत्र दोषस्यानभ्युपगमः वाक्य(द्वै)वैविध्यस्यैव न्यायसिद्धत्वात् एवमत्रोद्देश्यतया प्रयोजनवत्तया च यद्यत् प्रधानं विवक्ष्यते, तत्तदेव गुणभूतेन तन्निर्द्धारवाचकेनैवकारेण सम्बन्ध्यते, यथा प्रथमवाक्ये इदमीयत्वमुद्देश्यं प्रयोजनवच्च तदेवानूद्य भार्य्यात्वं विधीयते द्वितीयवाक्ये च रुक्मिणीत्वमुद्देश्यमित्यादि, ततो ग्रहवाक्यवदत्रापि न वाक्यभेददोष इति सर्वत्रैवैवशब्दान्वयेन व्यञ्जितायामन्योन्यमनन्ययोग्यतायां हेतुः अनवद्यात्मेति इदं हि द्वयोरेव विशेषणमिति ततश्च रागातिशयोदयवाक्यम् ॥ ३७ ॥

किञ्चिदिति इह पूर्वेषु च जन्मसु यत्किञ्चिदित्यर्थः । त्रिलोककृदिति तस्य परमसामर्थ्यं द्योतितं जीवार्थं तत्सुहृद्दयालुत्वं च अच्युत इति समग्ररूपगुणवत्त्वं वैदर्भ्या इति स्वसम्बन्धोल्लेखः त्रिलोककृदच्युतयोर्भेदेनोक्तिः नरलीलामाधुर्य्याक्रान्तचित्तत्वेन ततो वैलक्षण्य(स्म)स्फुरणात् वदन्तिस्म परस्परमविच्छेदेन कथयामासुरित्यर्थः ॥ ३८ ॥

ननु, रुक्म्यादिभ्यो भयं कथमत्यजन् ? तत्राह—प्रेम्णः कला कलना "कलनाकालयोः कला" इति नानार्थात् कलना चात्र भावना "कलि(ह)वली कवीनां कामधेनूः" इत्यभ्युपगमात् । यद्वा, कलालेशः प्रेमा चायमनुमोदनात्मकः स पुनरिह वरे (रसे) सखीभावयोग्यः परममहानेव च सः तया बद्धा इति तस्याः श्रृङ्खलात्वं तेन दार्ढ्यं च ध्वनितम् । एवं तल्लेशसाम्यप्राप्त्यापि तेषामेवावस्था

* इति विजयध्वजीयेऽधिकं पठ्यते ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किमुत तासामित्यर्थः । कन्या चेति चकारात् समकालता प्रतीतिस्तादृशप्रेमोत्कण्ठायोग्यमेवेदमिति सूचयति । किञ्च, पुरौकसां तादृशोक्तिश्रवणात्तस्या महाप्रीतिं तदुक्तमङ्गलोपश्रुतित्वादभीष्टसिद्धिं च द्योतयति, अत एव प्रकर्षेण चित्तप्रसादादिना अगात् ॥ ३९ ॥

तदेव विस्तरेणाभिव्यञ्जयति—पद्भ्यामिति, सार्द्धचतुर्भिः । तत्राद्यद्वयं युग्मकं स्यापि सापि तादृशमाहात्म्यापि पद्भ्यामेव विनिर्ययौ तत्र भवानीभक्तिरेव हेतुरित्याह—द्रष्टुमिति । पादपल्लवमित्यपि तद्भक्त्यनुसारेणैवोक्तम् । ननु, साक्षाल्लक्ष्म्यास्तस्यां कथमेतादृशी भक्तिर्युज्यते तत्राह—मुकुन्दचरणमेवाम्बुजं परमकोमल्यादिगुणतया स्फुरितं सम्यक् तन्माधुर्योपरक्तत्वेनैव अनु निरन्तरं ध्यायती ध्यायन्ती सोत्कण्ठं स्मरन्तीति नात्मनस्तस्य वा महिमांशो ऽस्फुरदिति भावः ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चैवमित्थं प्रेमकलाबद्धाः प्रेमाश्रुगद्गदस्वराः सन्तः पुरौकसः पुरवासिनो जनाः ऊचुः किमिति असौ कृष्णः अनवद्यात्मा सुन्दरतरतनुः अपिशब्दो भैष्म्या अप्यनवद्यात्मत्वसमुच्चयार्थः समुचितोऽनुरूपः पतिः अत्राऽस्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि ॥ ३७ ॥

योऽस्माभिः किञ्चित्सुचरितं स्वनुष्ठितं यद्यस्माकं प्राचीनं पुण्यमस्तीत्यर्थः । तेन सुचरितेन तुष्टः प्रीतस्त्रिलोककृत् ब्रह्मा वैदर्भ्याः पाणिमच्युतो गृह्णात्वित्यनुगृह्णात्विति ॥ ३८ ॥

एवं स्थिते तदा भैष्मी कन्या भटैर्गुप्ता सती अन्तःपुरादम्बिकागृहं प्रति भवान्याः पादपङ्कजं द्रष्टुं पद्भ्यामेव निर्जगाम कथम्भूता सा रुक्मिणी ? मुकुन्दवदनाम्बुजं सम्यग् ध्यायन्ती ॥ ३९—४० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां वाक्यमाह—अस्यैवेति । कोऽपि कस्मैचित् प्रयच्छतु भार्यात्वमस्यैव भवितुमर्हति अनेन स्वरूपयोग्यता निरूपिता, योग्यं योग्येन सम्बध्यते इति तेषामभिप्रायः । ननु, दत्ते यमन्यस्मै अन्या भगवते तथा सति देयेत्याशङ्क्याह—नापरेति । अन्या तु न योग्यैव न हि लक्ष्मीव्यतिरिक्ता भगवद्योग्या भवति लोकश्च प्रमाणमिति यथा दैवी वाक् तथा वदति अयमपि रुक्मिण्या एवार्हति यतः अनवद्यात्मा पुरुषोत्तमत्वात् निरवद्यरूपः सा हि निर्दुष्टमेव पतिं मन्यते भगवानीश्वरत्वेन सर्वेषामेवोचितः पतित्वेन त्वस्या एवोचितः यत इयं भक्तिप्रधाना ॥ ३७ ॥

एवं बाधनिकमुक्त्वा बाधकमत्र प्रवृत्तमित्याशङ्क्यातन्निवारणार्थं भगवन्तं प्रार्थयन्ति—किञ्चिदिति । यद्यस्माकं किञ्चित्सुचरितमस्ति तेनादौ भगवान् तुष्टो भवतु ततस्त्रिलोककर्त्ता स एवेति अन्येषामपेक्षाभावात् स्वयमेवाऽनुगृह्णात्वस्मान् अनुग्रहानन्तरं यत्कर्त्तव्यं तदाहुः—गृह्णातु वैदर्भ्याः पाणिमिति । अत्र एवमेवेति निर्बन्धहेतुमाह—अच्युत इति । आदौ भर्त्ता स्वरूपतो धर्मतः च्युतिरहितो मृग्यते तथा भोगेऽपि ॥ ३८ ॥

एवं तेषां प्रेमातिशयमुक्त्वा सर्वसम्मतौ मातुरपि सम्मतिर्जातेत्यभिप्रायेणोपसंहरति—एवं प्रेमकलाबद्धा नानाविधस्नेहप्रकारैर्वशीकृताः वदन्ति स्मेति प्रसिद्धिः प्रमाणत्वेनोक्ता. पुरवासित्वाच्च मुखमुद्रणं केनापि शक्यम् एवं सर्वामेव हरणे सम्भूतिमुक्त्वा पूजार्थं तस्या बहिर्निर्गमनमाह—कन्या चेति । यथा पुरवासिभिः स्वसर्वकर्मसमर्पणेन रुक्मिणीविवाहार्थं भगवान् प्रार्थितः एवं रुक्मिण्यपि भगवान् गृह्णात्विति महादेवं प्रार्थयितुं निर्गतेति चकारार्थः अन्तःपुरादिति गुप्तस्थानात् प्रकटस्थाने निर्गता यथा बन्धुपीडामकृत्वा भगवान् विश्रामतया गृह्णाति प्रकर्षेणागादिति मनःसन्तोषः प्रदर्शितः भटैर्गुप्तेति यथा तावदन्यो न स्पृशति अम्बिकालयमिति स्त्रीदेवतागृहे स्त्रिय एवाध्यक्षा इति तत्र पुरुषसम्बन्धाभावो निरूपितः । अम्बिकापदेन मातृत्वं प्रोक्तम् ॥ ३९ ॥

रथस्थाया ग्रहणं रथान्तरेस्थितस्य दुष्करं भवतीति पद्भ्यामेव निर्गतेत्याह—पद्भ्यामिति । भवान्याः पादपल्लवमिति लोके तद्भक्तत्वं स्वस्य ख्यापयति अभिप्रेतार्थस्त्वन्य एव तमेवान्तर्गतमाह—सा चानुध्यायतीति । तत्सम्बन्धिन्यः स्त्रियः सा च मुकुन्दचरणाम्बुजमेव अनुध्यायन्ती जाता मुकुन्दस्य मोक्षदातुरेव चरणाम्बुजमनेन विशेषतो भगवदाकाङ्क्षायां हेतुरुक्तः पितृगृहेऽपि बन्धनम् अन्यत्राऽपि अवरोध एव स्थितिरिति मुकुन्दावरोधस्य मोक्षरूपत्वात् तन्न हेयम् ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्यैव नापरस्य भार्य्यैव नतु भोग्या दासी रुक्मिण्येव नापरा भवितुमर्हत्येव नतु नार्हति । असावेव नान्यः भैष्म्या एव नापरस्याः सम्यगेवोचितः नत्वीषदप्यनुचित इति सप्तावधारणानि तत्रैकस्मिन् व्यतिरेकप्रदर्शनमुपलक्षणार्थं नापरेति अत्र वक्तृबाहुल्याद्वाक्यबाहुल्यमतः सप्तानामेव वाक्यानामेकत्र योजनमिदं ज्ञेयम् अत्र चास्यैव भार्य्याभवितुं रुक्मिण्यर्हति नापरस्येत्येके वदन्तिस्म. अस्य भार्य्यैव भवितुं रुक्मिण्यर्हतीत्यन्ये. अस्य भार्या भवितुं रुक्मिण्येवार्हति नापरेत्यपरे. एवमन्यान्यपि चत्वारि वाक्यान्यत एव वाक्यत्वस्याऽसम्भवान्न वाक्यभेददोषो ज्ञेयः । यदुक्तं "सम्भवत्येकवाक्यत्वे वाक्यभेदो हि गौरवम्" इति ॥ ३७ ॥

यत्किञ्चित् सुचरितं सुकृतं चेदस्माकमस्ति तेन तुष्ट इति तत्तन्स्वस्वसुकृतमस्माभिरस्यै रुक्मिण्यै दत्तमिति भावः ॥ ३८ ॥

अत एव च एवं प्रेमकलया रुक्मिणीविषयकप्रेमप्रवृत्त्या बद्धा वशीभूता इत्यर्थः । "कलामूले प्रवृद्धौ स्याच्छिल्पादावंशमात्रके" इति मेदिनी "कलिवली कामधेनू च" इति कवयः ॥ ३९ ॥

स्वपुराद्भवान्या आलयपर्य्यन्तं नरयानेन सुखपालेनागत्य आलयाभ्यन्तरगतांश्चतुःपञ्चप्रकोष्ठान् पद्भ्यामेव ययौ राजभटैर्भवान्यालयाद्बहिः सर्वदिक्षु स्थितैः । जघ्निरे आहता वादिता इत्यर्थः ॥ ४०—४३ ॥

———

यतवाङ्मातृभिः सार्द्धं सखीभिः परिवारिता।
गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः।
विश॰ पा॰ ( वेत्रझर्झरहस्तैश्च वृद्धैः कञ्चुकिभिस्तथा )
मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे॥ ४१॥
नानोपहारबलिभिर्वारमुख्याः सहस्रशः।
स्रग्गन्धवस्त्राऽऽभरणैर्द्विजपत्न्यः स्वलङ्कृताः॥ ४२॥
गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः॥ ४३॥
आसाद्य* देवीसदनं धौतपादकराम्बुजा।
उपस्पृश्य शुचिः शान्ता(१)प्रविवेशाम्बिकान्तिकम्॥ ४४॥

भाषा टीका।

और सब लोग नर नारी क्या बोले, कि-रुक्मिणीजी तौ इनही ( श्रीकृष्ण ) की भार्य्या होने योग्य है, और की नहीं, रुक्मिणीही भार्या होने योग्य हैं दूसरी नहीं, भार्याई होने योग्य है अन्यथा नहीं, निर्दोष विग्रह ये श्रीकृष्ण ही रुक्मिणी के पति भले उचित हैं और कोई नहीं, रुक्मिणी के ही उचित है दूसरी के नहीं, भली प्रकार ही उचित हैं जैसे तैसे नहीं, उचित ही हैं अनुचित नहीं। अर्थात् विधाता इन दोनो की जोडी न जोडता, तौ इन दोनो के रूप का विधान भी व्यर्थ हो जाता॥ ३७॥

तस्मात् जो कुछ हमारा सुकृत होय तिससे यदि तीनो लोकों का कर्त्ता विधाता हमारे ऊपर प्रसन्न हो तौ हम यही बर मागते हैं, कि—रुक्मिणी का पाणिग्रहण श्रीकृष्ण ही करैं॥ ३८॥

इस प्रकार प्रेम के फन्दे में फसे हुये सब पुरवासी कहने लगे। इतने ही में भीतर महलों में से योधा लोगों से रक्षित कन्या भी अंबिकाभवन के जाने को निकलती भई॥ ३९

रुक्मिणी जी भवानी के पदकमल के देखने को उभाने पायन से चलती भई, परंच भली भांत मुकुन्द चरणारविन्द का ध्यान करती हुई चलती भई॥ ४०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अपि च मृदङ्गेत्यादि, जघ्निरे आहताः वादिता इत्यर्थः॥ ४१॥
वारमुख्या गणिकोत्तमाः॥ ४२—४३॥
उपस्पृश्याऽऽचम्य॥ ४४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

भक्तावनुध्याने च वक्षणं यतवागिति, इयमेव च निर्याणे विशब्दस्यार्थव्यक्तिः। तस्यास्तादृशाचरणमाहात्म्येन दुर्लभतामुत्कण्ठिताञ्च विशेषतो व्यञ्जयन् वर्णयिष्यमाणमाकस्मिकश्रीकृष्णलाभं रसयितुं बीजं वपति—मातृभिरित्यादिभिर्मातृभिरिति। मात्रा तुल्याभिः राजभटैः श्रीकृष्णभिया रुक्मिनियुक्तैः अत एव शूरैः किञ्च, सन्नद्धैर्गृहीतकवचादिभिस्तथैव उद्यतायुधैः विशेषणानामेतेषां यथोत्तरं गोपनप्रकारे श्रैष्ठ्यम्॥

मृदङ्गेत्यर्द्धकं मृदङ्गाः मुरजाः पणवा अन्तस्तन्त्रीकाः तूर्य्याः तूर इति प्रसिद्धाः एते आनकभेदाः भेर्य्यश्च सुषिरभेदा आनकभेदाश्चेति द्विविधाः॥ ४१॥

नानेति युग्मकम्। नानाविधैरुपहारैरुपढौकनैः बलिभिश्च नियतपूजाद्रव्यैः सह गायकाः गायन्तः सूतादयश्च स्तुवन्तः इति विवेचनीयं वाद्यानां वादका वाद्यानि वादयन्त इति शेषः॥ ४२-४३॥

पूर्ववद्भवानीभक्तिं विवृणोति—आसाद्येत्यादिषड्भिः। देवसदनं देव्याः प्रासादं कुकुद्यादीनामण्डादिषु पुम्वद्भावात् भवादीनामपि तत्र स्थितत्वेनैकशेषत्वाद्वा शान्ता समाहितचित्ता॥ ४४॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उद्यतान्युद्धृतानि आयुधानि यैस्तैः सन्नद्धैरायतैः शूरैः राजभटैर्गुप्ता तदा मृदङ्गादयो जघ्निरे ताडिताः ( वादिताः ) इत्यर्थः॥ ४१॥

नानाविधैरुपहारैर्नैवेद्यैर्बलिभिः पूजासाधनैश्च सह स्वलङ्कृताः द्विजपत्न्यः गणिकोत्तमाश्च॥ ४२॥

तथा गायका गायन्तः स्तुवन्तः सूतादयः वाद्यादीनां तूर्य्यादीनां वादका वादयन्तश्चेति शेषः। वधूं कन्यां परिवार्य्य परिवेष्ट्य जग्मुः॥ ४३॥

* देवसदनमिति पाठान्तरम्। (१) प्रविवेशाम्बिकागृहमिति वीर॰ पा॰।

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥ ४५ ॥
नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ ४६ ॥
अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४७ ॥
विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ।
लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आसाद्येति देवसदनमम्बिकापतिगृहमुपगम्य तत्र धौते प्रक्षालिते पादाम्बुजे कराम्बुजे च यस्याः सा उपस्पृश्याऽऽचम्याऽत एव शुचिः शान्ता समाहितचित्ता चाम्बिकागृहं प्रविवेश ॥४४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वेत्राणि शर्शराश्च राजाज्ञासूचकयष्टयश्च हस्तेषु येषां ते तथा तैः कञ्चुकिभिः दौवारिकैः छन्नलिङ्गैः । धौतपादकराम्बुजा प्रक्षालितपादहस्तपद्मा ॥ ४ २—४४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कायमनोव्यापारौ निरूप्य वाचिकव्यापाराभावमाह—यतवागिति, मातृभिः सार्द्धमिति । भगवतो मनसि यथा अनौचित्यं न भवति तदर्थमेव कृतवती सखीभिश्च परिवारिता अनुमत्यर्थं हरणे पश्चात्तापाभावार्थं शोभार्थञ्च बहिर्भटैर्गुप्ता-शूरैरित्यन्यःसामर्थ्ये सन्नद्धैरुद्यतायुधैरित्यर्थः । स्वरक्षापरपीडार्थं साधनसम्पत्तिः । एवमावरणचतुष्टयं तस्या निरूपितं सर्वदोषाभावाय ॥ ४१ ॥

ततो मङ्गलवाद्यानामपि वादनं शुभनिमित्तं शाकुनमपि जातमित्याह—नानोपहारबलिभिः वारमुख्याश्च परिवार्य वधूं जग्मुरिति सम्बन्धः, नानोपहाराः भवान्यर्थं फलादयः बलिः पूजा साधनानि एतानि सङ्गे गतानीति पृथक् सहार्थतृतीयया ज्ञातव्यं वारमुख्यास्तु भिन्नाः वराणां समूहो वारं वारं मुख्यं यासामिति प्रत्यहं बहवो वराः वेश्यानामेव भवन्तीति सहस्रश इति तासामुत्सवो निरूपितः नित्यनूतनो भगवान् द्रष्टव्य इति ब्राह्मणस्त्रियो व्यवहारादाशीर्दानार्थं भगवदिच्छया सहैव गताः विशेषेण पूजा तासां कर्त्तव्येति पूर्वमेव तासां पूजां निरूपयति—स्रग्गन्धवस्त्राभरणैरिति । चतुर्विधैरप्यलङ्कृताः ॥ ४२ ॥

अन्योऽपि महानुत्सवो जात इत्याह—वधूं परिवार्येति दर्शनार्थं लाभार्थं च गमनमुक्तं सूतादयो विद्योपजीविन उक्ताः ॥ ४३ ॥

ततो भगवान् मर्यादां स्थापयितुं पूजानन्तरमेव नेष्यामीति तूष्णीं स्थिता तदा सा देवसदनमासाद्य निकटे गत्वा प्रक्षालितपाणिपादा आचम्य अन्तर्बहिः शुद्धियुक्ता सती उद्वेगादीनां सम्भावितत्वात् तन्निषेधार्थमाह—शान्तेति । अन्तःशान्तियुक्ता फलं प्राप्नोतीति अम्बिकान्तिकं प्रविवेश पूजार्थम् अत एव भगवते लौकिकसौन्दर्यकथनार्थं भाषाभेदा निरूपिताः ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवसदनं देव्या मन्दिरं बृहदालयान्तर्गतं मणिमण्डपं कुक्कुट्यादीनामण्डादिषु पुंवद्भाव इति पुंवत्त्वम् उपस्पृश्य आचम्य ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपस्पृश्याऽऽचम्य ॥ ४४ ॥

भाषा टीका ।

मौन व्रत को धारण किये, माताओं से तथा सखियों से, घिरी हुई, और अस्त्र शस्त्र लेने वाले सन्नद्ध बड़े बड़े शूर वीर राज भटों से रक्षित, होकर चलती भई, उस समय मृदंग शंख पणव तूर्य भेरी इत्यादिक बाजे बाजने लगे ॥ ४१ ॥

उस समय उस मंगल कार्य में हजारों वारमुखी अलङ्कार किये हुए नाना प्रकार बलि भेंट लेकर, तथा माला चन्दन वस्त्र और आभूषणों को लिये हुए सुन्दर अलंकृत ब्राह्मणों की स्त्रियें भी चलती भई ॥ ४२ ॥

इसी प्रकार गाने बजाने वाले भी गाते बजाते हुए, सूत मागध वन्दीजन वधू को बीचमें करके चलते हुए ॥ ४३॥

रुक्मिणीजी अम्बिकादेवी के मन्दिर में पहुचकर हाथ पग धोकर आचमन कर शुद्ध होकर बड़ी शान्ति पूर्वक अम्बिका देवी के समीप प्रवेश करती हुई ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रवयसो वृद्धाः भवान्वितामिति भवस्योपसर्जनत्वं लौकमौचितमुक्तम् ॥ ४५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नमस्य इति रुक्मिण्या तत्रैव दृष्टोऽयं मन्त्रः स्वसन्तानयुतां गणेशादिसहिताम् आत्मारामोऽसौ कथं स्वत्पतिर्भवेदिति चेत्तत्र आह—तदनुमोदनामिति । भवती श्रीकृष्ण एव वा ॥ ४६ ॥

वासःस्रग्गन्धादिभिरम्बिकां समपूजयन् ॥ ४७ ॥

तथा विप्रस्त्रियोऽपि तैर्द्रव्यैर्लवणादिभिश्च समपूजयन्निति ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भवानीं भवपत्नीमिति भवस्य कामसहचरीं धर्मसहचरीमपीत्यर्थः । आद्ये पुंयोगमात्रे द्वितीये यज्ञसंयोगे ङीपो विधानात् इति तस्या भवस्य महाभागवतस्य परमान्तरङ्गत्वं दर्शितम् अत एव भवान्वितामेव सतीं भवान्वितामेव वन्दयाञ्चक्रुरित्यर्थः । अनेन तु वक्ष्यमाणस्य मन्त्रस्य ताभिरुपदेश्यत्वमायातीति तासामेव तद्द्रष्टृत्वं लभ्यते ॥ ४५ ॥

वन्दनमन्त्रमाह—नमस्य इति । अम्बिके, हे जगन्मातः ! शिवामिति श्रीशिवेन सह समाननामगुणत्वादिना भेदाभावात्तन्नाम्नाऽपि लभ्यत इति व्यक्तं ततस्तेन सहितामित्यर्थः । एवं योग्यतां निर्दिश्य प्रार्थयते—भूयादिति । भगवान् सर्वोर्ध्वपरममाधुर्य्यैश्वर्य्यवान् अत एव कृष्णः सर्वस्यैव चित्ताकर्षकः किमुत तदेकनिष्ठाया ममेत्यर्थः । अन्यतैः तत्र भवतीति भवती तु अनुमोदनमात्रं कुरुतां सिद्धप्रायत्वान्मनोरथस्येति भावः । कृष्ण एवेति उत्कण्ठया तदङ्गीकारस्यापि नातिप्रतीतेः ॥ ४६ ॥

अद्भिरिति युग्मकम् । अबादीनामक्रमेणोक्तिः श्रीकृष्णाविष्टत्वेन तस्या मुनेर्वा पूजाक्रमविस्मृतेः स्रग्माल्ययोः साधारणासाधारणत्वेन भेदो ज्ञेयः । स्रज्यते स्रक् माल्यते धार्य्यते माला मालैव माल्यमिति निरुक्तेः पृथगिति रुक्मिणी देव्या विप्रस्त्रीणाञ्च पूजाद्रव्यादीनां पार्थक्यं बोधयति विप्रस्त्रीणां पृथक्त्वञ्च तदिष्टसिद्ध्यर्थं स्वयमपि पृथक् पूजनात् किञ्चित् सुचरितामित्याविवत् अतः सम्यगपूजयन् । प्रदीपावलिभिरित्यन्ते महानीराजनात् पतिमतीरिति लवणेति च तथाविधेः ॥ ४७—४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्रवयसो वृद्धा विधिज्ञाश्च विप्रयोषितः भवस्य पत्नीं भवेनान्वितां भवानीं प्रति तां कन्यां वन्दयाञ्चक्रुः यद्यपि भवानीमिति पुंयोगलक्षणङीपैव भवसम्बन्धलाभः; तथापि साहित्यलाभार्थं तत्रापि भवस्याप्राधान्यसूचनार्थं भवान्वितामित्युक्तं पुंयोगश्चात्र भर्तृभार्यासम्बन्धविशेषरूप इति द्योतयितुं भवपत्नीमिति ॥ ४५ ॥

तदा रुक्मिणी नमस्य इत्यादिमन्त्रमपूर्वमेव स्वयं पश्यन्ती तन्मुखेन स्वमनीषितं च प्रार्थयन्ती यथावत्पूजयामासेत्याह—नमस्य इति त्रिभिः । हे अम्बिके स्वसन्तानयुतां गणेशादिसहितां शिवां मङ्गलरूपां त्वाम् अभीक्ष्णं पुनः पुनः नमस्ये नमस्करोमि भगवान् कृष्णो मम पतिर्भूयादिति यत्तदनुमोदताम् अनुगृह्णातु भवतीति कर्तृपदाध्याहारः । यद्वा, कृष्णो मम पतिर्भूयात् कृष्ण एव तदनुमोदतामिति त्वमनुगृहाणेत्यर्थः इत्थं प्रार्थयन्ती सा रुक्मिणी द्विजपत्नीभिः पुरस्कृता पुरोऽवस्थापिता अबादिभिर्यथाविधि देवीं शिवामुमां देवं शिवं च पूजयामासेति सम्बन्धः ॥ ४६ ॥

अद्भिः शुद्धोदकैः गन्धैश्चन्दनैरक्षतैश्च वासोभिर्दिव्याम्बरैः स्रग्भिर्माल्यैर्भूषणैश्च नानाविधैरुपहारैर्नैवेद्यैर्बलिभिश्च यद्यपि "वैदर्भीं भीष्मकसुतां श्रियो मात्राम्" इति लक्ष्म्यवतारत्वेन प्रोक्ताया भगवन्नित्यानपायिन्याः सर्वोत्तमाया रुक्मिण्याः केवलप्राकृतस्त्रीवदाम्बिकावन्दनादिकमनुचितं तथापि भगवत इव तदनुव्रतया अन्यथा मानव्यवतारत्वाद्यद्यदाचरति श्रेष्ठ इति न्यायेन लोकानुग्रहशीलत्वाच्च तथा कृतमित्यवगन्तव्यम् ॥ ४७ ॥

ततस्तथा लवणापूपादिभिस्तैरवादिभिश्च पतिमतीर्जीवद्भर्तृकाः विप्रस्त्रीश्च सम्यगपूजयत् ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रवयसो वृद्धाः विधिज्ञाः स्त्रीशास्त्रकुशलाः ॥ ४५—४७ ॥

पतिमतीः भर्तृमत्यः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भवानीमित्यादि प्रवयसः स्थविरा विप्रयोषितः अहम्पूर्विकया कयाचिदुक्तं भवानी वन्द्यतां कयाचिदुक्तं पत्नी वन्द्यतां कयाचिदुक्तं भवान्वितामिति नामद्वयम् अन्यथा भवान्वितां भवानीमित्येव सिद्ध्यति भवपत्नीमिति पुनरुक्तं स्यात् । यद्वा, भवपत्नीं वन्दयाञ्चक्रुः कीदृशीं भवान्वितां सभर्तृकां पुनः कीदृशीं भवानीं भवो वृद्धिः तम् आनयतीति भवानी तथाभूता सा ईर्लक्ष्मी चेति भवानीं तां "लक्ष्मीर्वृद्धिप्रदा गृहे" इति मार्कण्डेयोक्तेः ॥ ४५–५० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो या विधिज्ञा ब्राह्मणस्त्रियो वृद्धा भवानीं वन्दयाञ्चक्रुः भवानीशब्दः प्राप्तपुरुषसम्बन्धायाः संज्ञामात्रं तेन विशेषं ज्ञापयितुं भवपत्नीमित्युक्तम् । अथवा इयं न महादेवस्य भोगपत्नी तथासति वरदातृत्वं न स्यादिति भवपत्नीत्युक्तं, यज्ञसंयोग एव पत्नी भवतीति तत्रापि भवान्विता उभयात्मको हि सः, सम्पूर्णो भवति स्त्रिया सहितस्यैव सम्पूर्णत्वात् ॥ ४५ ॥

तदानीमेव च भवानीनमस्कारे भगवदिच्छया मन्त्रः स्फुरित इति तन्निरूपयति—नमस्ये त्वेति । स्वसन्तानयुतां गणपत्यादियुतां शिवमपि नमस्ये मन्त्र एव प्रार्थनामाह—भूयात्पतिर्मे भगवान् कृष्ण इति । तदनुमोदतां शिवः भवानी च अथवा कृष्णो वा अनुमोदतां न तु कोपं करोतु अन्यदेवता-

तस्यै स्त्रियस्ताः(१) प्रददुः शेषां युयुजुराशिषः ।
ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥ ४९ ॥
मुनिव्रतमथ त्यक्त्वा निश्चक्रामाऽम्बिकागृहात् ।
(उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम् । ०विज० पाठः
तौ विदर्भप्रसूतानां नृपाणां कुलदेवते ॥
तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् ।
चिराराधितपादाब्जां सा प्रणम्य विनिर्ययौ ॥ ) ॥ ० ॥
प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥ ५० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नमस्कारं वा अलौकिकत्वेन न लौकिकेषु लोकप्रतीतिस्तु भूयान्मे पतिरिति मिथो तत्कृष्णः अनुमोदनमिति च भिन्नम् अन्यथा महादेवः स्वस्वरूपमेव कुर्यात् तथान्येषामफलम् अतः कृष्णानुमोदनं सर्वत्र वक्तव्यम् ॥ ४६ ॥

न केवलमयं नमस्कार एव मन्त्रः किन्त्वनेन मन्त्रेण सर्वामपि पूजां कृतवतीत्याह—अद्भिरिति । पाद्यार्घ्याचमनस्नानैः ततः गन्धाक्षतैः धूपैः ततः पूर्वं वासःस्रङ्माल्यभूषणैः पश्चान्निरूपणमार्द्रे देहे परिधापितानां पश्चात्त्यागार्थम् अनलङ्कृताक्षतामपि न तिष्ठेदिति अक्षतानामलङ्करणं पश्चात् पुनः प्रदीपावलिभिरिति नानाविधारात्रिकाणि निरूपितानि पृथगिति अग्रे पूर्वत्रापि सम्बध्यते महादेवे भवान्यां च तथा प्रत्येकं ब्राह्मणस्त्रीषु अन्यथा विष्णवे स्वरूपं दास्यति ॥ ४७ ॥

शिवः पूजितः सपरिकरः ब्रह्मा त्ववशिष्येतेति अतस्तत्प्रीत्यर्थं विप्रस्त्रियोऽपि पृथक् पृथक् वस्त्रादिभिः पूजिताः । किञ्च, विवाहे विशेषप्रकारमाह—लवणेति । मङ्गलद्रव्याण्येतानि षड्रसात्मकानि च कण्ठसूत्रं नालसूत्रं फलानि नानाविधानि इक्षवश्च खण्डशः कृताः एकत्रैव षण्णां दानम् ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रवयसो वृद्धा विप्रयोषितः पुरोहितस्त्रियः विधिज्ञाः शास्त्रविधिज्ञाः रुक्मिण्या मनोगतप्रकारज्ञाश्च भवपत्नीं भवान्वितामिति हे भवानि ! त्वं यथा भवपत्नी भवान्विता च विराजसे तथैवेमामपि कृष्णपत्नीं कृष्णान्वितां कुर्वीति ताभिरपि कृष्णमालोक्य किञ्चित्सुचरितं यत्न इति प्राक्प्रार्थितत्वादिति भावः ॥ ४५ ॥

वन्दनमन्त्रमपि ता एव तां वाचयामासुः स यथा नमस्ये इति स्वसन्तानयुतामिति स गणेशो ममात्र विघ्नं खण्डयत्विति भावः तत्त्वभवती अनुमोदतां भवतु ते स एव पतिरिति स्वसम्मतिं कुर्वामित्यर्थः ॥ ४६ ॥

स्रक् पौष्पी माला रत्नमयी ॥ ४७ ॥

लवणापूपः कचोरिका इति केचित् ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रवयसो वृद्धाः ॥ ४५ ॥

भगवान् मे पतिर्भूयादिति यत्तत्रभवतो अनुमोदतामनुगृह्णातु ॥ ४६-४७ ॥

तथा विप्रस्त्रियो याम् अपूजयन् ॥ ४८ ॥

भाषा टीका ।

विधि के जानने वाली बडी बूढी ब्राह्मणों की स्त्रियें उस बालिका को भवयुक्त जो भवपत्नी भवानी है तिनका वन्दन कराती हुई ॥ ४५ ॥

वन्दन करते समय रुक्मिणीजी ने मंत्र बोला, कि—हे अंबिके, देवि ! मैं तुम्हारी संतान सहित तुम को बारंवार नमस्कार करती हूं, कि-श्रीकृष्ण मेरे पति होवें, सो तुम अनुमोदन करो ॥ ४६ ॥

जल गंध अक्षत धूप वस्त्र माला हार भूषण और नानाप्रकार की भेट पूजा तथा पृथक् २ दीपा वलि जोड कर सुवासिनी ब्राह्मणों की स्त्रियोंकी इन सबसामिग्रियों से तथा नोनके पुआ ( कचौरी ) ताम्बूल कण्ठसूत्र फल और इक्षु इन सबसे श्रीरुक्मिणीजी पूजा करती हुई ॥ ४७—४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शेषां निर्माल्यम् ॥ ४९ ॥

मुनिव्रतं मौनं भृत्यां सखीम् ॥ ५० ॥

तां विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः । श्यामामज्ञात-

(१) प्रददुरिति सुबोधिनी पाठः ।

विज० पाठः( धृतानेकातपत्राद्यां वीजच्चामरसङ्कुलाम् । )
ता देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ५१ ॥
शुचिस्मितां बिम्बफलाधरद्युतिशोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं सिञ्जत्कलानूपुरधामशोभिना ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रजस्कां कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्यास्ताम् ॥ ५१ ॥

द्विजा एव कुन्दानां कुड्मलानि मुकुलानि बिम्बफलवद्योऽधरस्तस्य द्युतिभिः शोणायमानानि तानि यस्यास्तां कला शोभा तद्युक्तं नूपुरं सिञ्जच्च तत्कला नूपुरं च तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्य तेन पदा चलन्तीम् ॥ ५२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देव्यै च दुर्गायै ॥ ४९ ॥

प्रगृह्येति बहुसम्मर्देन मूलतस्तु श्रीकृष्णागमनसमये सम्भ्रमवैवश्येन रत्नमुद्रां रत्नाङ्गुलीयकम् उप अधिकं शोभयितुं शीलं यस्येति शोभाविशेषवर्णनात्तत्सर्वं "यात्राच्छलेन हरयेऽर्पयन्तीं स्वशोभाम्" इत्यनुसारेण तदर्पणपरिकरत्वमेव प्राप्तमिति द्योतितं टीकायां भृत्यां सखीमिति योग्यत्वाल्लक्षणया ॥ ५० ॥

अथावसरं प्राप्य विरोधिपराभवाय तस्याः प्रभावोऽप्याविर्बभूवेत्याह—तां देवमायामिति, सार्द्धैस्त्रिभिः । तत्र तामिति सार्द्धद्वयकम् "यात्राच्छलेन हरयेऽर्पयती स्वशोभाम्" इति वक्ष्यमाणानुसारेणान्येभ्यस्तु स्वशोभामनर्पयन्तीं तां देवमायामिव 'मल्लानामशनिः' इत्यादिदिशा देवस्य भक्तेषु स्वरूपवैचित्र्याद्दीव्यतः श्रीकृष्णस्य मल्लादिषु स्वशनित्वादिप्रत्यायिकां मायामिव वीरमोहनीं वीराणां प्रतिपक्षाणां पाठान्तरे धैर्य्यभाजामपि तेषां स्वस्मिन् रूपान्तरकल्पनया तान् मोहयन्तीम् वीक्ष्य ते वीरा मुमुहुः वीरमोहनीरूपमेव वर्णयति—सुमध्यमामित्यादिना । मोहनीरूपत्वेनैव तेषां मोहो जज्ञिष्यत इति स्पष्टयति यशस्विनो वीरत्व धीरत्वादिना ख्याता अपि तया कृतेन मोहनीरूपेण यो हृच्छयस्तेनार्दिता इत्यस्य वैयर्थ्यं स्यात् इत्ययमेवार्थो विवक्षितः ॥ ५१—५३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ताः स्त्रियः द्विजपत्न्यः शेषां स्वपूजोपयुक्तावशिष्टां सामग्रीम् । यद्वा, शेषाशब्दस्त्रिलिङ्गो देवतोपभुक्तस्रगादिनिर्माल्यवाची तदा शेषां गौर्य्युपभुक्तनिर्माल्यमित्यर्थः । तस्यै रुक्मिण्यै प्रददुः अलङ्काराद्यर्थमिति शेषः । तथाऽऽशिषः युयुजुः पेठुः तदा वधू रुक्मिणी ताभ्यो द्विजपत्नीभ्यो देव्यै च नमश्चक्रे शेषां जगृहे च ॥ ४६ ॥

ततो मौनव्रतं विहाय रत्नमुद्रिकाशिल्पशोभितां भृत्यां सखीं गृहीत्वा रत्नमुद्रोपशोभितं सखीपाणिं स्वपाणिना गृहीत्वेत्यर्थः । अम्बिकागृहान्निर्गतवती ॥ ५० ॥

तदा तां विलोक्य समागताः सर्वे प्रसिद्धाः वीरास्तद्दर्शनोदितकामातुरा मुमुहुरिति तृतीयश्लोकेनान्वयः । कथम्भूतां? देवमायामिव सर्वाश्चर्य्यकरीं मूर्त्तीभूतां देवमायामिव स्थितामित्यर्थः । वीरान्मोहयतीति तथा तां शोभनः कृशो मध्यप्रदेशो यस्याः कुण्डलाभ्यां मण्डितमाननं यस्यास्तां श्यामामजातरजस्कां नितम्बयोः श्रोण्योरर्पिता निबद्धा रत्नमयी मेखला यस्याः व्यञ्जन्तौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्याः कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्याः ॥ ५१ ॥

शुचिस्मितं यस्याः बिम्बफलमिव योऽधरोष्ठस्तस्य द्युभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्तां कलहंसवद्गच्छति तच्छीला तथा तां कला शोभा तद्वती नूपुरैः शिञ्जन्ती कूजन्ती च ते कलनूपुरे च तयोर्धाम दीप्तिस्तेन शोभत इति तथोक्तेन पदा पादेन पद्भ्यामित्यर्थः चलन्तीम् ॥ ५२ ॥

श्रीमद्विजयध्वजकृतपदरत्नावली ।

शेषाः अक्षताः अविशिष्टा राजस्त्रियो वा ॥ ४६ ॥
मुनिव्रतं मौनव्रतम् ॥ ५० ॥
उपकण्ठे समीपे पौलोम्याः शच्याः ॥ ० ॥

देवमायां लक्ष्मीं श्यामां अव्यक्तवर्षां कुन्तलैरावरकैः शङ्कितमिव ईक्षणं यस्याः सा तथा ताम् ॥ ५१—५५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवस्य विष्णोर्मायामिव न तु मायां किन्तु स्वरूपशक्तिमेवेत्यर्थः । तर्हि कथं तस्य सादृश्यमपि? तत्राह—मोहनीं श्रीविष्णुमिव "मल्लानामशनिः" इत्यादिवत् क्वचित् स्वरूपेण क्वचिदन्यथाभावेन च सर्वमोहनशीलाम् अत्र श्रीकृष्ण एव तु स्वरूपेण मोहनीति भावः । अथ सामान्यं वर्णयति—सुमध्यमामित्यादिना, शोभिनेत्यन्तेन । कुन्तलेभ्योऽलब्धश्रीकृष्णदर्शनविच्छेदिभ्यः शङ्किते ईक्षणे यस्यास्ताम् ॥ ५१-५३ ॥

### श्रीमज्जीवगोस्वामीकृतबृहत्क्रमसन्दर्भः ।

अथास्याः कृष्णदर्शनं वर्णयति—तामित्यादि द्वाभ्याम् । श्यामां पद्मिनीं तथा च "पद्मगन्धि मुखं यस्याः सततं मधयावनम् । रक्ताशोकः पदाघातकालेऽपि प्रफुल्लितः । मुखमाध्वीकगण्डूषकाले बकुलोऽपि च । कुसुमानि समाधत्ते सा श्यामा परिकीर्त्तिता" व्यञ्जत्स्तनीं नवोद्यत्कुचां कुन्तलेन घूर्णकुन्तलेन शङ्किते ईक्षणे यस्याः ॥५१-५२॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ताश्च स्त्रियः तस्यै ददुः सभर्तृकायै दीयते अत एवैतल्लोके विवाहानन्तरं दानं प्रसिद्धं तदत्र न भविष्यतीति मातृकर्त्तव्यत्वाच्च मन्त्रवदेतदपि स्फुरितमिति प्रथमत एव दत्तवत्यः अथवा गुप्त एव भगवान् समागतः भवानीशिवाभ्यां भगवते रुक्मिणी दत्ता प्रार्थनायाः सफलत्वाय तं एतत् अग्निमदानकथनात् निरूप्यते, तथा ताभ्यो दत्ताः तस्यैव ताः प्रददुः शेषाः अपि च ददुः आशिषो ऽपि युयुजुः शेषा अपि ये लवणादयो दत्ताः तेषामंशाः प्रतिदीयन्ते एवं विधानमुक्त्वा कर्मपूर्त्त्यर्थं नमस्कारमाह—ताभ्यो देव्यै नमश्चक्रे इति । शेषां ताभिः दत्तां जगृहे च स्वग्रन्थौ स्थापितवती । एवं सर्वोऽपि विवाहोत्सवो वैधो निरूपितः अत्र दिनत्रयं व्रतं तदपि जातमिति मन्तव्यम् ॥ ४९ ॥

अथ मौनं त्यक्त्वा सखीभिः सह यद्वक्तव्यं तदुक्त्वा अम्बिकालयात् निश्चक्राम नितरां गमनं शीघ्रं भगवत्प्राप्त्यर्थं सख्यः अन्याश्च स्त्रियः व्यावर्त्तिताः एका या भूत्या अन्तरङ्गा तां प्रगृह्य भगवद्भावेन विकला भविष्यामीति बाह्ये तु भूमिं न पश्यतीत्यवश्यं तदीयाः प्राणाः प्रदर्शकाः रत्नसहितमुद्रोपशोभितत्वं भगवता स्वमुद्रा दत्तेति ख्यापयितुं पूर्वावतारमुद्रां वा सूचयति ॥ ५० ॥

यद्यहं न गमिष्यामि पूर्ववदेव गतिर्भविष्यतीति इति ततोऽग्रे कस्यापि दर्शनं न भविष्यतीति विवाहसमये दर्शनं न दूषणमिति सर्वे दृष्टवन्त इत्याह-- तामिति । यथा भगवान् रङ्गप्रवेशे बहुभिर्बहुधा दृष्टः एवमियमपि देवमायेव वीरैर्दृष्टेत्याह-देवमायामिवेति । देवस्य भगवतो मायाया व्यामोहिकैषा शक्तिरागतेति सर्वैरेव निश्चितेति तथापि वीरान् व्यामोहयति अन्यथा स्वयं गत्वा न म्रियेरन् तां वर्णयति षोडशलक्षणां द्वात्रिंशल्लक्षणो भगवान् षोडशलक्षणा सेति प्रसिद्धिः एकं सम्बन्धादशाधारणसामर्थ्यमपरं शौर्यादिनिराकरणं तृतीयं व्यामोहकत्वं चतुर्थं, सुष्ठु मध्यं यस्या इति कणिकावत् अमृतसम्बन्धार्थं अल्पमध्यत्वं निरूपणीयम् अत एव न कस्यापि रससम्बन्धः स हि रसः पुरुषेण भोक्तव्यः जिह्वयैव तदभावात् स्वादितोऽपि मक्षिकासम्बन्ध इव रसोऽपगच्छतीति दुःखमेव लोके फलति कुण्डलाभ्यां मण्डितमाननं यस्या इति उपरिरसोपभोगस्थापनस्य शोभा प्रदर्शिता रसप्रदर्शके कुण्डले इति वयोऽप्याह—श्यामामिति षोडशवार्षिकीति नितम्बे अर्पिता रत्नमेखला यस्या इति रसाविर्भावकप्रस्तावे मुख्यस्थानेऽपि रसप्रकाशो निरूपितः मध्ये रसाभिव्यक्तिमाह—व्यञ्जत्स्तनीमिति । एवं पञ्च धर्माः रसात्मका निरूपिताः पोषकान् सप्त धर्मानाह—कुण्डलैः शङ्किते ईक्षणे यस्या इति । लक्षणद्वयमत्र निरूपितं कुन्तलानि चपला च दृष्टिरिति मन्दहासोऽपि ॥ ५१ ॥

किञ्च, शुचिस्मितामिति सार्द्धेन दोषाभावाय शुचिरूपं श्वेतदन्तत्वं न रसाविर्भावकमिति विवाहानन्तरं च दन्तसंस्कार इति कृत्रिमसंस्काराभावेऽपि सहजैरेव धर्मैस्तथा जातमित्याह—बिम्बफलवत् यत् लोहितमधरोष्ठं तस्य द्युतिभिः कान्तिभिः शोणायमाना ये द्विजाः त एव कुन्दकुड्मलानि यस्याः रत्नकद्रव्यसम्बन्धापेक्षया कान्त्या राग उत्तमः पदा चलन्तीमिति एकविधं लक्षणं पद्भ्यां चलनं पुरुषस्य एकेन पदा चलनं स्त्रिया इति तत्रापि गतिः फलरूपा अफला चेति, द्विधा अयं विवेकः स्फुटलक्षणेनैव भवतीति तस्यागमनं निरूपयति कलहंसवत् गच्छतीति सिञ्जन्त्यः कला अन्तः स्थिताः सूक्ष्माः कणिकाः तद्युक्ते नूपुरे तयोर्धाम तेजः तेन शोभायमानां शोभितां वा ॥ ५२ ॥



---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शेषां निर्माल्यम् ॥ ४९ ॥

मुनिव्रतं मौनम् ॥ ५० ॥

ततश्च तां चिदानन्दमयीं भगवच्छक्तिं श्रीरुक्मिणीं भगवद्द्विषोऽसुरा मायामेव प्रतियन्ति स्मेत्याह—तामिति सार्द्धैः पादोनत्रिभिः । तां श्रीरुक्मिणीं देवमायामिव विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः । इवेत्येवार्थे मल्लानामशनिरित्यत्रायमशनिरेव नतु सुकुमारो बाल इति मल्लाः कृष्णं यथा अमंसत अशनित्वञ्च न तस्य स्वरूपमतो मल्लाद्याः स्वसदृग्भिस्तस्य स्वरूपमेव जगृहुः कृष्णनिष्ठं स्वरूपं स्याद्दिन्त्यैः सुगमं जनैरित्युक्तेः तथैव देवानामपीयं माया परममोहिनी कापि सुन्दरी नत्वियं मानुषीति तां मत्वेत्यर्थः देवमायामेव विशिनष्टि, वीरेत्यादिभिः श्यामाम् ।

"शीतकाले भवेदुष्णा उष्णकाले तु शीतला ।<br>
स्तनौ सुकठिनौ यस्याः सा श्यामा परिकीर्त्तिता" ॥

इत्युक्तलक्षणां व्यञ्जयन्तौ व्यक्तीभवन्तावेव स्तनौ यस्यास्तां कुन्तलेभ्यः शङ्किते इव चपले इव ईक्षणे यस्यास्ताम् ॥ ५१ ॥

बिम्बफलाधरस्य द्युतिभिः शोणायमाना द्विजा दन्ता एव कुन्दकुड्मलानि यस्यास्तां शिञ्जच्च तत्कलानूपुरमातिशिल्पनिर्मितनूपुरञ्च तस्य धामभिर्दीप्तिभिः शोभिना पदा चलन्तीम् ॥ ५२ ॥

---

### श्रीच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शेषां निर्माल्यम् ॥ ४९ ॥

मुनिव्रतं मौनम् ॥ ५० ॥

तां विलोक्य वीरा मुमुहुरिति सार्द्धद्वयोरन्वयः । देवमायामिव देवस्य विष्णोः मायां सर्वाश्चर्य्यकरीं शक्तिमिव कुन्तलेभ्य शङ्किते इव चपले ईक्षणे यस्यास्ताम् ॥ ५१ ॥

बिम्बफलतुल्याऽधरस्य द्युतिभिःशोणायमाना द्विजा दन्ता

विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ५३ ॥
यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ।
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ ५४ ॥
सैवं शनैश्चलयती चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान्ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ॥ ५५ ॥
तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ।
रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः शृगालमध्यादिव भागहृद्धरिः ५६ ॥
*तं मानिनः स्वाऽभिभवं यशःक्षयं परे जरासन्धवशा न सेहिरे ।
अहो धिगस्मद्यश आत्तधन्विनां गोपैर्हृतं केसरिणां मृगैरिव ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे श्रीरुक्मिण्युद्वाहे
त्रिपञ्चाशत्तमोऽध्यायः॥५३॥

एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्ताम् शिञ्जत् तत्कलानूपुरं शोभायुक्तं नूपुरं तस्य धाम दीप्तिस्तेन शोभितुं शीलं यस्य तेन पदा ॥ ५२ ॥

भाषाटीका ।

फिर वे स्त्रियें रुक्मिणी जी को देवी का प्रसाद देती हुई और आशीर्वाद देती हुई । रुक्मिणीजी ने भी उन ब्राह्मणियों को और देवी को नमस्कार कर प्रसाद ग्रहणकिया, ॥ ४९ ॥

तदनन्तर रुक्मिणीजी मौन व्रतको त्यागकर रत्नोंके जड़ाऊ अङ्गलीयक से शोभा पाने वाले अपने हाथसे सखी के हाथ को पकड़ कर अम्बिका देवीके मन्दिरसे बाहर निकसती भई ॥ ५० ॥

देवी के मन्दिर से बाहर निकसते समय श्रीरुक्मिणीजी के सौन्दर्य को देखकर वीर लोगमोहित होते हुये, कैसी वे रुक्मिणीजी हैं कि, देवमायाकी तरह वीरों को मोह कराने वाली, तथा सुन्दर मध्य भाग जिनका, कुण्डलों से मुखकी शोभाभी न्यारी हो रहीहै, नवीन वय वाली, और कटिपश्चाद्भाग पर रत्नों की मेखला जिनके शोभित हो रही हैं, जैसे काव्य व्यञ्जनावृत्ति द्वारा किसी चतुर शिरोमणि को व्यंग्यार्थ बतलाती है, इसी प्रकार चतुरचक्रचूडामणि श्रीकृष्णचन्द्रमात्र को ही रुक्मिणीजी के यौवनारम्भ की व्यञ्जना हो सके, इस लिये व्यञ्जत्स्तनी यह विशेषण कहा है, एवं केशों से शंकित सरीके चपल नेत्र हैं जिनके, एसी रुक्मिणीजी को वीर लोग देखते हुये ॥ ५१ ॥

फिर श्रीरुक्मिणी कैसी है ? कि-भोरे पने से शुद्ध अर्थात् किसी प्रकार के भावगर्भित नहीं एसी मन्दहसन है जिनकी, तथा विम्बफल सदृश अरुण अधर की कान्ति से कुन्द कली सदृश दन्त पंक्ति पर अरुणाई जिनके आय रही है, एवं चलते समय में शीघ्रता नहीं करतीं हैं कि जिसमें श्रीकृष्ण को अवसर मिले, इस लिये एक २ पांय उठाय कर धीरे२ चलती हैं, तथा कलहंस सदृश जिनके गमन की शोभा होती है, वह चरणारविन्द आपका कैसा है जिस एक ही से चलतीं हैं कि, शोभा युक्त शब्दायमान जो नूपुर है तिससे शोभित हो रहा हैं ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलं मुमुहुः पेतुश्चेत्याह—यामिति । यात्रामिषेण हरये स्वलावण्यं समर्पयन्तीं यां वीक्ष्य क्षितौ पेतुः सा तान् प्राप्तान्

* इदं पद्यं विजयध्वजीयेमिनाऽध्याये प्रथमपद्यत्वेन पठ्यते ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

ह्रिया प्रैक्षत तदैवाच्युतं च ददर्शेत्युत्तरेणान्वयः ॥ ५३—५४ ॥

जलरुहकोशतुल्यौ चरणौ चालयन्ती ॥ ५५ ॥

सुवर्णलक्षणं गरुडध्वजं हरिः सिंहः ॥ ५६ ॥

असहमानानां तेषामाक्रोशमाह—अहो धिगस्मान् यतोऽस्माकं यशो गोपैर्हृतमिति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यामिति युग्मकम् । मोहिनीरूपतयाभातां वीक्ष्य नृपतयस्तु क्षितौ पेतुः स्वरूपतया सर्वतो विलक्षणां स्वीयां शोभां तु हरयेर्पयन्तीं नत्वसुरेभ्य इवान्यतो भातामित्यर्थः ॥ ५४ ॥

एवमनेन स्वशोभार्पणप्रकारेण वामकरजैर्वामकराङ्गुलिभिरलकानुत्सार्य्य भगवतस्तस्य प्राप्तिं ह्रियापाङ्गैर्मुहुरपाङ्गविक्षेपैरेव नतु साक्षान्नेत्राभ्यां प्रसमीक्षमाणा निकटे पतितान् नृपान् प्रैक्षत । तदनन्तरं तु अच्युतं ददर्श किं कुर्वती चरणावेवाब्जकोशौ तौ तस्य प्रत्यासत्तिकामनया शनैश्चालयन्ती चलत्पद्मकोशाविति पाठस्तु श्रीस्वामिसम्मतः अत्र रूपकबलेनैव रूप्यं लभ्यत इति चरणावध्याहृतौ अतिशयोक्तिनाम्नोऽलङ्कारस्य प्रथमस्तु भेदोऽयं यथोक्तम्—

"सिद्धित्वे व्यवसायस्यातिशयोक्तिर्निगद्यते ।
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।
पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा मता" ॥

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसाय इति अच्युतं चेति प्रायः स्वामिसम्मतोयं पाठः अच्युते सेति पाठस्तु सर्वत्र दृश्यते अत्र पूर्वत्र सा तादृशी यत्तदोरन्वयबलात् उत्तरत्र सा रुक्मिणी प्रकरणबलात् अच्युतमिति निजप्रतिज्ञातोऽच्युतेस्तथा तद्विता च्युतिरहित्याभिप्रायेण इत्यनेन तत्परिवाचनापेक्षा निरस्ता ॥ ५५ ॥

रथमारुरुक्षन्तीं कालविलम्बाय तथा तदारोहणार्थमितस्ततश्चेष्टामात्रं कुर्वन्तीं नतु सहसाऽऽरोहन्तीमित्यर्थः । पूर्वं तु तदनारोहणं देवयात्राङ्गीत्वेनेति ज्ञेयं समीक्षतां सम्यगीक्षमाणानामिति मोहापगमं सूचयति अनादरे षष्ठी । एवं परमं प्रागल्भ्यं विक्रमवत्वं क्षिप्रकारकत्वादिकं च दर्शितं सुपर्णलक्षणमिति तदीयत्वप्रसिद्धया भयेन सर्वेषामापाततः स्तब्धता दर्शिता रथस्य शोभाविशेषश्च शनैरेव ययौ निर्भयत्वात् ॥ ५६ ॥

यशसः क्षयो यशःक्षयम् अर्थात्स्वस्य । यद्वा, यशसः क्षयं च यदे शत्रवः तत्रापि मानिनः परैरिति पाठः क्वचित् भुजा इत्यत्र वक्षा इति च आर्चं अत्रानुत्तरप्रशस्तत्वेन विद्यते येषां तेषाम् आत्तधन्विनाम् आरोपितधनुष्पाणीनां राज्ञामपि गोपैरिति च बहुत्वं श्रीकृष्णानुवर्त्तित्वेन यदूनामपि गोपत्वमननात् असद्यश इति पाठश्चिन्त्यः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हरिः सिंहः ॥ ५६—५७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं मुमुहुरपितु पेतुश्चेत्याह—यामिति । रथाद्यारूढास्ते नृपतयो यात्रामिषेण हरये स्वलावण्यमर्पयन्तीं यां वीक्ष्य तस्या उदारहासेन व्रीडावलोकेन च हृतानि चेतांसि येषां ते ऽत एव विमूढाः अत एव च उज्झितानि स्वकान्यस्त्राणि यैस्ते भूमौ पेतुः ॥ ५४ ॥

सैवमिति सा रुक्मिणीत्थं पद्मकोशतुल्यौ चरणौ शनैः शनैश्चलयन्ती तत्र हेतुर्भगवतः श्रीकृष्णस्य प्राप्तिं प्रसमीक्षमाणा वामकरजैरलकानुत्सार्य अपाकृत्य अपाङ्गैस्तान्प्राप्तान्नृपान् ह्रिया अवैक्षत तदैवाच्युतं च ददर्श ॥ ५५ ॥

तामिति तदा कृष्णः रथमारोढुमिच्छन्तीं तां राजपुत्रीं द्विषतां वैद्यानां समीक्षतां सतां जहार ततो माधवः सुपर्णलक्षणं गरुडध्वजं रथमारोप्य रथोपस्थे आरोप्येत्यर्थः राजन्यमण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रयायी यस्य तथाभूतः शनैर्ययौ शनैरित्यनेन निर्भयत्वं सूच्यते । हरिः सिंहः सृगालमध्याद्यथा स्वभागहृच्छनैर्याति तद्वत् ॥ ५६ ॥

तद्विति मानिनः केवलं दुरहङ्कारिणः शत्रवो जरासन्धादयस्तत्कन्याहरणं स्वाभिभवं यशःक्षयं च न सेहिरे असहमानानां तेषामाक्रोशमाह—अहो इति । अस्मत्कीर्त्तिं धिक् कुतः यतः आत्तधन्विनां धनुर्धराणाम् अस्माकं स्वमिति शेषः । गोपैरपहृतं केसरिणां सिंहानां भागो वृकैरिवेति ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भागहृज्जहरो हरिः सिंहः ॥ ५६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यः अरिभिः कृतः तम्, के के परे ? इति तत्राह, जरासन्ध इति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥
( विजयध्वजतीर्थरीत्याऽष्टपञ्चाशत्तमः ) ॥ ५८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यां वीक्ष्य इति स्वरूपेण वर्णयति—हरय इति ॥ ५४ ॥

सैवं भगवतः प्राप्तिं प्रसमीक्षमाणा समीक्षितुमारभमाणा तत्स्फूर्तिमयभावेन स्खलितान् सावरणानलकान् वामकरजैरुत्सार्य्य प्राप्तान् व्यवहितान् नृपानवैक्षत् ततश्च भीता सती तत्राच्युतञ्च ददर्श तच्च दर्शनं ह्रियायुक्तमित्यर्थः ॥ ५५ ॥

आरुरुक्षन्तीमित्यर्थः ॥ ५६–५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

विलोक्येत्यादि जगज्जनन्यां तस्यां कृतहृच्छयत्वेन मोहं प्राप्ताः तेनैव पापेन नष्टप्राया इत्यर्थः ॥ ५३—५४ ॥

सैवं शनैरित्यादि चरणाब्जकोशौ अस्फुटकमलाकारौ चरणौ सुहृदयत्वात् वामकरजैः अलकानुत्सार्य्य ह्रिया प्राप्तान् नृपान् अपाङ्गैरुत्सार्य अवलोकयेति यावत् अच्युतम् ऐक्षत श्रीकृष्णं ददर्श पश्चात् सा ददृशे अर्थात्तेन. क्रिययैव कर्त्ता क्षिप्यते आदौ सा तं ददर्श पश्चात्स तामित्यन्योन्यमेव दर्शनं जातमिति भावः ५५ ५७

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेतादृश्या दर्शने यदि वीराणां रस उत्पद्यते तदा दोषः स्यात् अनुत्पत्तौ विषयस्योत्तमता न स्यादित्युभयतः पाशारज्जुः तत्परिहारार्थं वीराणां द्वेधा विनियोगमाह—विलोक्येति, आदौ तां विलोक्य वीरा मुमुहुः मोहं प्राप्ताः समागता इति समागमनफलमुक्तं मूर्च्छायामपि सुषुप्ताविव किञ्चित्सुखमिति "मुग्धेऽर्द्धसम्पत्तिः" इति न्यायाच्च यशस्विन इति तेषां पुण्यमपि सूचितम् अभिलाषामप्याह—तत्कृतेन हृच्छयेन अर्दिता इति एवं चतुर्भिर्धर्मैः तावत्फलं प्राप्तवन्त इति विषयोत्कर्षो निरूपितः दोषाभावायाह— यां वीक्ष्येति । यावत्तेषां रसदृष्टिर्भवेत् तन्मध्ये निपतिता एव ते तत्रापि हेतवः ते हि भगवद्विमुखाः तत्रापि नृपतयः अभिमानिनः जरासन्धादयः तेषां बलमुत्साहशक्तिश्च रसानुभावार्थहेतुभूतं तस्या भावैर्हृतमित्याह—तस्या उदारो यो हासः सर्वरसदानसमर्थश्च व्रीडावलोकश्च व्रीडा च अवलोकश्चेति वा त्रिविधैरपि भावैः हृतचेतसो जाताः त्रिविधं हि चित्तमिति तदभावे चिन्ताभावात् उज्झितास्त्रा जाताः ॥ ५३ ॥

ततः क्षितौ पेतुः पतितानां पुनरुत्थानाभावायोत्थाने स्थानान्याह—गजरथाश्वगता इति । यद्भगवता कर्त्तव्यं तदनयैव कृतमिति निरूपणार्थमेतदुक्तं विमूढा इति पातज्ञानाभावोऽपि. नन्वेषा दुर्गेव प्रचण्डेयति चेत् तत्राह—यात्राछलेनेति । हरये स्वशोभामर्पयन्तीं प्रसङ्गादेतज्ज्ञातं सा तु स्वदुःखहरणार्थं स्वशोभामाविर्भाव्य भगवते प्रयच्छति इति चेत्तत्राह—यतः शोभा स्वकीया स्वयं त्वन्यदीया अत स्वदाने स्वापेक्षाभावेऽपि स्वकीयं देयमेवेति ॥ ५४ ॥

अत एव तस्या भगवदन्वेषणमाह—सैवमिति । शीघ्रगमनेन रथारोहणं भविष्यतीति शनैः पद्पद्मकोशौ चलयती जाता चालयतीति कोशत्वान्मुकुलितत्वमुक्तम् अनेन कियद्दूरचलनेन पादयोर्व्यथा जातेति ज्ञापयन्तीव मुकुलितपादौ स्थापयतीति गम्यते तथाव्याजकरणे हेतुः तदैव तस्मिन् क्षण एव भगवतः प्राप्तिं प्रसमीक्षमाणा कन्याया राजदर्शनमपि कर्त्तव्यं वैलक्षण्यज्ञापनायेति तद्भगवदर्थं जातमित्याह—उत्सार्य वामहस्तनखैरलकान् अपाङ्गैः प्राप्तान् नृपान् समैक्षत ततः यदर्थं तान् दृष्टवती तमच्युतं ददर्श नन्वपूर्वदर्शने कथं परिज्ञानमिति चेत्तत्राह—अच्युतं सेति । उभयोर्ज्ञापकमेकैको धर्मः सा हि चित्ते भगवन्तं दृष्टवती स्वप्नभ्रमेषु च अतो रूपं दृष्टपूर्वं भगवानप्यच्युतः सर्वत्रानुस्यूतो नतु चित्तादिष्वन्यः अत्रान्य इति सर्वत्रैव भगवतः अच्युतत्वात् ॥ ५५ ॥

अतोऽग्रे इष्टिर्न गतेति तमेव विलोकयन्ती यदा स्थिता, तदा सर्वैः रथारोहणार्थं नियुज्यमाना जाता तन्मध्ये भगवान् जहारेत्याह—तां राजकन्यामिति । तामिति कृतात्मनिवेदनां राजकन्यायाः हरणं च युक्तमिति रथारोहणे पुनः सारथ्यादिः मान्यं कर्त्तव्यमिति यदैव रथारोहणेच्छा जाता तदैव जहार तदा हि सर्वसमूहः अपगतो भवति तत्र प्रतिबन्धकानां साक्षित्वं जातमित्याह— द्विषतां समीक्षतामिति । कृष्णस्य हि स्त्रियो हरणं हस्तेन ग्रहणमुत्तोलनमिति यावत् ततो रथं समारोप्य ययाविति क्रमेण सम्बन्धः । उपस्थितरथपरित्यागाय सुपर्णलक्षणमिति तत्र वेष्टका राजन्याः सन्ति परितश्चक्ररूपेण स्थिताः तत्सर्वं परिभूय पराभवं प्रापयित्वा दृष्टबलमस्त्येव अदृष्टमपि बलं तस्यैवेति ज्ञापयन्नाह—माधव इति । लक्ष्मीपतिर्भगवान् इयं च लक्ष्मीः अतो भार्येत्यस्याः परिपालने भगवतो धर्मो जातः ते त्वनधिकारिणस्तदभिलाषिण इति तेषां पापमेव सिद्धम् अतः पराभवो युक्त इत्यर्थः । तेषां पराभवे रक्षकाणामपि युद्धं सम्भवतीति तेषां वधे अमङ्गलं च भवतीति तद्दोषं परिहरन् आह—ततो ययाविति । तत इत्यव्ययनिर्देशः तस्य स्थानस्याविकृतत्वाय न कोऽपि तत्र हत इत्यर्थः । तर्हि पुरमध्ये कियद्दूरे हननं भवि-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भ्यतीशाङ्क्याह—ययाविति "या प्रापणे" इति कुशलेनेष्टदेश-पर्यन्तं गत इत्यर्थः। तदीयानां वा रामादीनामुपद्रवमाशङ्क्य तन्निषेधार्थमाह—रामपुरोगमैरिति। रामो हि साधनशक्तिः पुरोगमो येषामिति सर्वेषां साधनवत्त्वं रमणात्मकत्वादमारकत्वं च सूचितं सम्मर्देनापि तथात्वमशङ्क्याह—शनैरिति। लोका हि नगरस्थाः त्रिचतुरान् विहाय समागता अपि लोकवदन्त्या कृष्णाय दत्ता रुक्मिणी अतो भगवान् नयतीति सादरं प्रेक्षका एव जाताः इति शनैरित्यनेन सूचितम्। ननु, तत्रैव कथं सर्वसन्देह-निवृत्त्यर्थं. भगवान् न स्थितः श्वशुरादिभिः पश्चादभ्यनुज्ञातो गच्छेत् किमिति निर्गत इत्याशङ्क्याह—शृगालमध्यादिति। भवेदेव यदि तत्र सन्तो भवेयुः ते हि शृगालाः दुष्टचित्ताः तन्मध्ये च स्वभागो न स्थापनीयः अतिरिक्तभाग एव शृगालानामिति तत्रापि यत्क्रूरमतिरिक्तं तत्साध्यानां यत् क्रूरं तत् शृगालानामिति यथा मथिताग्निः चषालाद्दूर्ध्वयूपश्च साध्यानां यतयश्च शृगालानामिति श्रौतो निर्णयः न तु स्वभागस्य। किञ्च, लोकेऽपि तत् शृगालमध्ये न रक्षणीयमिति सिंहं दृष्टान्तीकरोति—हरिरिति. यथा सिंहः स्वभागं हरति तथा भगवानपि भागहृत् जातः भागभृदिति पाठे भागं बिभर्तीति गृहीतस्य शुद्ध एव स्थाने स्थापनमिति तत्र न स्थापितवान् अन्यथा असुरगामि तद्भवेदिति ॥ ५६ ॥

ततो यज्जातं तदाह— ते मानिन इति। अभिमानरक्षार्थमेव समागताः तदुक्तं "यद्यागत्य हरेत् कृष्ण" इति तज्जातमिति स्वस्य अभिभवं तिरस्कारं यशसश्च क्षयं दृष्ट्वा तत्रापि परैः कृतं नहि शत्रुकृतं सोढुं शक्यमिति ते यदि विवाहेनापि नयेयुः तथापि सोढुं शक्याः किमुत बलादिति तत्रापि जरासन्धवशाः यैः पूर्वैः जयोऽनुभूतः अतो न सेहिरे असहमाना जाताः जरासन्धवशात्वेन यशः क्षयासहनं मानित्वेन स्वाभिभवासहनं तत्रोभयविधं स्वनिन्दाप्रतिपादकं वाक्यमाह—अहो धिगिति। आत्तधन्वनामस्माकं यशो धिगिति यदि यशो भवेत् तदा यशसा भीताः नेतारो भवेयुः इति मानिनां वचनं जरासन्धप्रमुखानां वचनमाह—गोपैर्हृतमिति। गोपाला हि गा हरन्ति यस्य कस्यचित् तत्रापि केसरिणां हृतमिति महदाश्चर्यं केसरी हि गा भक्षयति गोपालाः पालयन्ति अतः कृतं युक्तमेव परम् अत्याश्चर्यमिति • तेषां प्रशंसा स्वपौरुषख्यापनं च अनेनातःपरं प्रयत्नो न कर्तव्य इत्यपि सूचितं कर्तव्योऽपीति अत्र हेतुमाहुः—केसरिणां मृगैरिवेति। मृगा हि साधारणाः केसरी मृगेन्द्रः तत्रापि बहूनां भागोऽयमिति दृष्टान्तोऽत्र वर्तत इति नात्यन्तमाश्चर्यमिति स्वमनःसमाधानमाहुः ॥ ५७ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
चतुर्थाध्यायविवरणम् ॥४॥ ५३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तदुक्तौ मायाप्रतीतिजनितो योऽच्छयः कामस्तेनार्दिताः यथा-गन्धर्वदत्ताग्निस्थालीमुर्वशीमेव विलोक्य पुरूरवाः कामार्दितोऽभूत् यथैव तस्य काम उर्वशीज्ञानजन्य एव न तु स्थालीप्रतीतिजन्यस्तथैव वीराणां हृच्छयो मायाप्रतीतिजन्य एव न तु रुक्मिणीप्रतीतिजन्य एवेत्यतोऽन्यस्क विरुद्धोऽर्थः परास्तः ॥ ५३ ॥

न केवलं मुमुहुः पेतुश्चेत्याह—यामिति। अत्रापि श्लोके देवमायामिति पदमनुवर्तनीयं यां श्रीरुक्मिणीं देवमायामिव वीक्ष्य ते नृपतयो मूढाः सन्तः पेतुः यां रुक्मिणीं कीदृशीं हरये स्वशोभामर्पयन्तीं न त्वन्येभ्यः ॥ ५४ ॥

सा रुक्मिणी श्रीकृष्णं दिदृक्षमाणेव प्रासान् तत्रागतान् ह्रिया ऐक्षत ह्रियेत्येतेऽन्ये पुरुषा इति तद्दर्शनेन लज्जाऽजनिष्टेति भावः तन्मध्य एवाच्युतं ददृशे ददर्श यः खलु हृदयात् च्युतो न भवतीति भावः ॥ ५५—५६ ॥

असहमानानां तेषामाक्रोशमाह—अहो इति। यतोऽस्माकं यशो गोपैर्हृतम् ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
त्रिपञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥५३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यां वीक्ष्य ते क्षितौ पेतुः सा तानैक्षत अच्युतं च ददर्शेत्युत्तरेणान्वयः यात्राछलेन यात्रामिषेण ॥ ५३—५४ ॥

चलपद्मकोशतुल्यौ चरणौ चलयन्ती चालयन्ती ॥ ५५ ॥

तां सुपर्णलक्षणं गरुडध्वजं रथं समारोप्य माया रमा तस्या धवः पतिः ययावित्यन्वयः ॥ ५६-५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

भाषा टीका।

बड़े २ यशस्वी वीर लोग जो जो उस जगे आये रहे वे पूर्वोक्त श्रीरुक्मिणी जी को देख कर मूर्च्छित हो गये, क्योंकि ? श्रीरुक्मिणीजी के वीरमोहनी रूप को देख कर काम से पीडित हुए। निज रूपको देख कर नहीं ॥ ५३ ॥

रुक्मिणीजी तो श्रीहरि को अपनी शोभा समर्पण के लिये यात्रा के मिष से धीरे २ चलती रहीं उसी समय उन रुक्मिणी जी को देख कर उन कुमति नृपति लोगों का रुक्मिणीजीके उदार हास और लज्जा पूर्वक अवलोकन से चित्त हरण हो गया अत एव जो जहां हाथी रथ अथवा घोड़ाओं पर बैठे रहे वे वहां हीं से मूर्छित होकर पृथिवी पर, गिरने हुए ॥ ५४ ॥

इस प्रकार वे रुक्मिणीजी चलायमान चरणकमलों को धीरे२

भाषा टीका।

चलाती हुई चलने लगी, उस समय भगवान् की प्राप्तिकी प्रतीक्षा करती २ बांये हाथ के नखनसों अलकों को सम्हार कर, आये हुए राजाओं को लज्जा पूर्वक देखनेलगीं कि- इतने ही में रुक्मिणी जो श्रीकृष्णचन्द्रको देखती भई ॥ ५५ ॥

श्रीकृष्णचन्द्रभी द्वेषियों के देखते २ उस राजकन्याको रथ पर चढाते समय राजाओं के समूह को तिरस्कार कर गरुड की ध्वजा जिसमें फहराय रही इस प्रकार के अपने रथ में वैठाकर हरण करते हुए। तदनन्तर बलदेवजी प्रभृति यादवों के साथ जैसे शृगालों के मध्यसे सिंह अपने भागको ले जावै इस प्रकार रुक्मिणीजी को लेकर धीरे २ आते हुए ॥ ५६ ॥

जरासंध प्रभृति मानि राजा लोग यश के नाश करने वाले उस अपने पराभव को नहीं सहन करते हुए बोले, कि- अहो बडे आश्चर्य की बात है बडे २ धनुष धारियों का हमारा यश गोप लोगों ने छीन लिया जैसे, कि- सिंहके भाग को मृग ले जावै ॥ ५७ ॥

इति श्रीभागवत दशमस्कन्ध उत्तरार्ध में त्रिपन अध्यायकी श्रीवृन्दावनस्थ पं० भागवताचार्य कृत, भाषा टीका समाप्ता ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥



# चतुष्पञ्चाशत्तमोऽध्यायः ।

श्रीशुक उवाच ।

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ।
स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ १ ॥
तानापतत आलोक्य यादवानीकयूथपाः ।
तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य स्वधनूंषि ते ॥ २ ॥
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः ।
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ३ ॥
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ।
सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुष्पञ्चाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् ।
रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरेऽग्रहीत् ॥

इतीति । अहो धिगस्मानित्येवं वदन्तः सुसंरब्धाः क्रोधाविष्टाः दंशिताः कृतसन्नाहाः परिक्रान्ताः परिवृताः अन्वीयुरन्वधावन् ॥ १ ॥

विस्फूर्ज्य टङ्कारयित्वा ॥ २ ॥

परेषां शराणां बाहुल्ये यादवानामचलत्वे दृष्टान्तः मेघा इति ॥ ३ ॥

प्रैक्षदैक्षत ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वाहान् गजादीनारुह्येति धृतकार्मुका इति च पुरा विमूढत्वेनोज्झितास्ततया गजादिभ्यो भूमौ पतनात् ॥ १ ॥

त इति । पूर्वमेतदर्थमेव श्रीरामेण सहागताः प्रसिद्धाश्च य इत्यर्थः स्वाम्यसाधारणानि धनूंषि ॥ २ ॥

रथोपस्थे तदुपरि स्थितनीडे कोविदा युद्धाभिज्ञा जरासन्धमुखाः ॥ ३ ॥

सुमध्यमेति । लज्जया नम्रत्वेन भङ्गुरमध्यात्वव्यक्तेः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—११ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथासहमानानां यदुभिः सह सङ्ग्रामं पराजयं चानुवर्णयति चतुष्पञ्चाशत्तमेन—इतीति । इत्यहो धिगित्येवं ब्रुवाणाः सर्वे सुतरां क्रोधाविष्टाः दंशिताः कवचिताश्च वाहानश्वादीनारुह्य स्वस्वबलैः परिक्रान्ताः परिवृताः धृतानि कार्मुकानि धनूंषि यैस्ते अन्वीयुरन्वधावन् ॥ १ ॥

तानापततः शत्रूनवलोक्य ते यादवसैन्याधिपतयो हे राजन् ! स्वधनूंषि विस्फूर्ज्य टङ्कारयित्वा सम्मुखा उत्तस्थुः ॥ २ ॥

परेषां शराणां बाहुल्ये यादवानामल्पत्वे च दृष्टान्तः—मेघा इत्यादि मेघा यथा अद्रिषु अपो जलधारा मुञ्चन्ति तद्वदश्वपृष्ठादिषु कोविदाश्शात्रवो यादवसैन्ये शरवर्षाणि मुमुचुः ॥ ३ ॥

तदा सुमध्यमा रुक्मिणी शरैश्छन्नं भर्तुर्बलमवलोक्य भयेन कातरे लोचने यस्याः सा सव्रीडं यथा तथा तस्य पत्युर्वक्त्रं मुखमैक्षत ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १ ॥

यादवानामनीकानां यूथानि समूहास्तान्पान्ति रक्षन्तीति यादवानीकयूथपाः ॥ २ ॥

अश्वपृष्ठादिषु स्थित्वा ॥ ३ ॥

आसारो वेगवान् वर्ष इति सुमध्यमा रुक्मिणी प्रेक्षद्वती ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—७ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १—४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यावन्निवर्त्तते चित्तं तदीयानां स्वभावतः।
तावदन्यस्य विषयो भगवांस्तत्र मन्यते॥
अतो विधिविवाहार्थं तन्निराकरणं पुरा।
त्रिविधानां निरूप्यं हि युद्धबाधनमुण्डनैः॥
उदासीनाः स्वकीयाश्च स्वयं चेत्यत्र शत्रवः।
मध्यमं भगवत्कार्यमनुकल्पो यतस्तथा॥
उत्तरार्द्धे पञ्चमे तु विवाहो वर्ण्यते हरेः।
रुक्मिण्याः सर्वभावेन तद्दोषान् विनिवर्त्य हि॥

पूर्वाध्यायान्ते स्वयशोनिम्नां कृतवन्त इत्युक्तं यावज्जयं स्वयौकर्य सात्विकास्ते कृतवन्त इत्याह—इतीति—सर्वे एव मिलिताः सुसंरब्धाः अल्पीयांसो भगवदीया इति स्वोद्यमः भगवांश्च स्त्रीरक्षायां व्यापृत इति अन्यथा सात्विकानां विचारपूर्वकं प्रवृत्तिर्न स्यात् सुष्ठु संरब्धाः क्रोधेन परस्परवाक्यैर्वा ततो वाहान् रथादीन् दंशिताः बद्धकवचाः सम्भूय युद्धे एकस्यापि भङ्गे सर्वेषां भवेदिति स्वैः स्वैः बलैः पृथगेव परितः आक्रान्ता दूरादेव मारणार्थं धृतकार्मुका जाताः॥ १॥

एवं शत्रूणामुद्योगमुक्त्वा तत्प्रतीकारार्थं भगवदीयानामप्युद्योगमाह—तानापतत इति—आ सर्वतः पततः अत्र विद्यमानाः सर्वे यादवानीकानां यूथपा एव नतु कश्चित्सेनारूपः साधारणो वा अतस्तत्सम्मुखा एव तस्थुः आत्मीयाश्चेत् महान्तः अल्पीयांसोऽपि भवन्ति तदापि जय इति बहूनामपि सम्मुखा जाताः तानाकारयन्त इव स्वधनूंषि विस्फूर्ज्य ज्यानिनादं कृत्वा स्थिताः यतस्ते रामादयः प्रसिद्धाः॥ २॥

ततः प्रथमे प्रथमतः युद्धार्थं प्रवृत्ता इत्याह—अश्वपृष्ठ इति। यत्रैव प्रहारे न कस्यापि व्यथा तत्रैव तेषां शरपातो भवतीति ज्ञापनार्थमश्वपृष्ठ इति चर्माद्व्यवधायकमस्तीति तथा गजस्कन्धेऽपि तथा रथोपस्थे अनुपविष्टभागे कोविदा अपि अथवा यत्रैव पीडा सम्भवति तत्रैव शरवृष्टिं कृतवन्तः यतः कोविदाः स्वकारास्सारथिस्थानेऽपि प्रतीकाराकरणेऽपि न कश्चित्तेषामपकारो जात इत्यत्र दृष्टान्तमाह—मेघा अद्रिष्विति। नदीर्यत इत्यद्रिः अन्यथा विदारे तदीयानामपकारान् विशेषणं व्यर्थं स्यात् तत्रापि मेघाः साधारणाः नतु नीलाः तत्राप्यपः नतु धाराः॥ ३॥

ततो रुक्मिण्या भयं जातं तद्भगवता निवारितमिति निरूप्यते भगवान् भक्तार्थमेव सर्वं करोति इति ज्ञापनार्थं केवलं तेषां रुक्मिण्या अत्यसम्मतौ स्वार्थमेव हतवानिति क्लिष्टकर्मता स्यात् ततो युद्धात्पूर्वं तदाह—पत्युर्बलमिति द्वाभ्याम्। शराणामासारैः धारासम्पातैः सम्यक् छन्नं पत्युर्भगवतो बलं वीक्ष्य तद्भक्ते समीडमैक्षत सुमध्यमेति विनियोगोऽन्यथा भविष्यतीति शङ्कया शुद्धान्तःकरणा वा राजसगुणे हि सति शौर्यादिकं भवतीति एतदर्थमेव भगवदीयानां सहनमपूर्वदर्शनमिति सव्रीडमैक्षत वस्तुतः सभयं द्रष्टव्यं तथापि तावद्वयं पलायनमपि कर्त्तुं शक्ता इति लज्जैव परम्भवेदिति उभयथापि सव्रीडमैक्षत् ततः क्षणानन्तरं भयेन विह्वले लोचने यस्याः तादृश्यपि जाता तस्य भगवतो वक्त्रमैक्षत॥ ४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुष्पञ्चाशत्तमेऽरिजयो रुक्मिविरूपता।
भैष्म्याः प्रबोध उद्वाहो द्वारकायामितीर्यते

विस्फूर्य टङ्कारयित्वा॥ १...२॥

अद्रिष्विति। ते शरा यदूनामकिञ्चित्करा अभूवन्निति भावः॥ ३॥

ऐक्षत् ऐक्षत॥ ४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चतुष्पञ्चाशत्तमे श्रीरुक्मिणीहरणमसहमानानां राज्ञां पराजयं रुक्मिणो वैरूप्यकरणम् श्रीरुक्मिणीसान्त्वनार्थं श्रीबलवाक्यं श्रीरुक्मिणीविवाहोत्सवं, च वर्णयति। इतीति। अहो धिगस्मानित्येवं वदन्तः सुसंरब्धाः क्रोधाविष्टाः दंशिताः संनद्धाः स्वैःस्वैर्बलैः सैन्यैः परिक्रान्ताः परिवृताः अन्वीयुः अनुजग्मुः॥ १॥

विस्फूर्य टङ्कारयित्वा तेषां सम्मुखा उत्तस्थुः॥ २-३॥
तद्वक्त्रं पतिमुखम् ऐक्षत् ऐक्षत॥ ४॥

भाषा टीका।

श्रीशुक उवाच।

पूर्वोक्त प्रकार से सब राजा बडे क्रोधित होकर कवचों को पहर कर हाथी घोडों पर चढकर धनुषों को चढाकर अपने अपने सेनाओं से संयुक्त होकर श्रीकृष्णजी के पीछे दौडते भये॥ १॥

हे राजन्! परीक्षितजी यादवों के सेनापति भी उनको आते हुये देखकर अपने धनुषों की टंकार कर के उनके सम्मुख लडने को खडे होगये॥ २॥

अस्त्रों के चलाने में बडे चतुर वे जरासन्धादि राजा घोडों पर हाथियों पर रथों पर बैठ कर जैसे पर्वतों पर मेघ वर्षा होवे तैसे यादवों पर बाणों की वर्षा करने लगे॥ ३॥

श्रीरुक्मिणीजी श्रीकृष्णके सेना को बाण वर्षा से ढकी देख कर भयके मारे नेत्रों को चपल करके लज्जित होकर श्रीकृष्ण के मुखकी तरफ देखने लगीं॥ ४॥

प्रहस्य भगवानाह मास्म भैर्वामलोचने ! ।
विनंक्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ५ ॥
तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः ।
अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ॥ ६ ॥
पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ।
सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥ ७ ॥
हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ।
अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मास्म भैः मा भयं कुरु हे वामलोचने ! वराक्षि ! तावकैस्त्वदीयैः कृत्वा ॥ ५ ॥

तच्चासौ विक्रमश्च तम् ॥ ६ ॥

उष्णीषाणि शिरोऽवतंसवस्त्राणि तत्सहितानि शिरांसि ७ करभाः प्रकोष्ठा ऊरुविशेषणं वा ॥ ८—९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रहस्येति । निर्भयेऽपि तस्य भयदर्शनात् तन्निरसनेच्छातश्च हे वामलोचने ! इति सम्बोधनं तदानीमात्मनि प्रथमार्पिततत्सौन्दर्यविशेषानुभवेन सुखाभिव्यक्तेः तावकैर्हेतुभिर्विनंक्ष्यति स्वयमेव मरिष्यति तावकत्वाभिर्देशस्तस्यां परमप्रणयव्यञ्जकः बहुत्वं स्वसैन्यस्य बाहुल्यव्यञ्जकं शत्रुबलस्यैकत्वं च स्वल्पप्रायत्वव्यञ्जकं तच्च सर्वं तस्या एवाश्वासनार्थम् ॥ ५ ॥

तद्विक्रममिति । समासेन विक्रमस्य तादृशत्वं स्वाभाविकं दर्शयति नीलोत्पलमितिवत् अमृष्यमाणा असहमाना। गदस्यादावुक्तिर्भाक्तिविशेषणाग्रे भवनात् । हयानामतिचञ्चलत्वात् प्रथमं हननं ततो गजानां स्थूलस्थूलत्वात् सर्वान्ते पराजयपूर्णतेच्छया सर्वतो मुख्यानां रथानामिति निर्देशक्रमाभिप्रायः ॥ ६ ॥

पेतुरिति युग्मकम् । रथ्यादीनां च यथा पूर्वं युद्धश्रेष्ठपातस्तत्क्रमेण शिरः पतनं कुण्डलादीनां यथा सम्भवं समुच्चयः पार्थक्यं च इति तेषामाधिक्यसूचनेन वीरेषु महत्त्वं सूचितं कोटिश इत्यस्य परत्रापि सर्वैरन्वयः। करभा इति । तैर्व्याख्यातं तत्र "मणिबन्धादाकनिष्ठं करस्य करभो बहि"रित्यनुसारेण लक्षणयैव प्रकोष्ठावचनं प्रकोष्ठस्तदुपरिभागः पक्षे क्रमभिन्नत्वात् करभा इव करभा इति ॥ ७—८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा भगवान् प्रहस्य तामाह उक्तिमेवाह–मास्मेति। हे वामलोचने ! त्वं मास्म भैः भयं मा कृथाः अधुनैव त्वदीयैः सैन्यैः शात्रवं बलं विनंक्ष्यति नाशमेष्यतीति ॥ ५ ॥

इति तेषां चैद्यादीनां तथा विधं विक्रममसहमाना वीरा गदादयो यादवाः नाराचैर्हयादीन् जघ्नुः ॥ ६ ॥

तदा अश्विनाम् अश्वाः येषां सन्तीति ते तेषामश्वारूढानां रथिनां गजानां च कोटिशः शिरांसि कुण्डलकिरीटसहितानि उष्णीषसहितानि च भुवि निपेतुः ॥ ७ ॥

तथा खड्गगदाधनुर्भिः सहिता हस्ताश्च करभाश्च प्रकोष्ठाश्च ऊरवश्चाङ्घ्रयश्च निपेतुः करभास्तत्सदृशा ऊरव इत्यूरुविशेषणं वा तथा अश्वादीनां शिरांसि च निपेतुः तत्र नागा गजाः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ ५—७ ॥*

करभाः कनिष्ठिकाया मूलप्रदेशाः गर्दभावश्वायां जातोऽश्वतरः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

करभाः केषाञ्चित् केवलकरभाः कनिष्ठोपलक्षितकरैकदेशाः ॥ ८—११ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रहस्येत्यादि । तावकैरिति स्वजनान् प्रति तदीयत्वमुद्भाव्य तस्याः सर्वसमर्पणमिति व्यञ्जयति ॥ ५—१२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सान्त्वनमाह—प्रहस्येति । एवं हि कामः स्वयं स्वकी-

* अत्र विजयध्वजीयप्रथमश्लोकस्थं व्याख्यानं प्रमादात्त्रुटितम् । बः अरिभिः कृतः तं के के परे इति तत्राह । जरासन्ध इति ॥ १ ॥

हन्यमानबलानीका वृष्णिभिर्जयकांक्षिभिः ।
राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ ९ ॥
शिशुपालं समभ्येत्य हृतदारमिवातुरम् ।
नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ १० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्वधङ्कामयत इति हासेनैव मोहनेनैव तस्या भयादिकमपि निवारितं मनो देहं च भगवते सन्देशार्थं प्रेषितवती नतु वाणीम् अन्यथा सैव रमेत भगवानपि तथ ।वाणीमेवोक्तवान् यथायोग्यं भगवत्त्वादेव नाविश्वासः तथैव हृदयं वा सम्पादितवान् मास्म-भैरित्याह—प्रासिद्धिरेव सर्वत्र वर्त्तते भगवदीयानां भयं नास्तीति वामलोचन ! इति वक्रा दृष्टिर्न कर्त्तव्या आहोस्वित् पुरुषमपि या जयति तस्याः किं भयमिति मनोहरदृष्टित्वादेव शुभं भवि-ष्यति त्वदृष्ट्या वा हता भविष्यन्तीति सम्बोधनम् अधुनैवेति निःसन्देहतामात्मत्वेन गृहीत्वाह त्यक्त्वा गमनाभावाय तावकै-रिति । सर्वात्मकत्वविचारेऽपि उपपत्तिमाह—शात्रवम्बलमिति । शत्रवो हन्तव्या एवेति एवं भगवद्वाक्येनैव ते आज्ञप्ता एव सामर्थ्ययुक्ताः ॥ ५ ॥

एवं शत्रुबलं दूरीकृतवन्तइत्याह—तेषामिति । तादृशं परा-क्रमम् अमृष्यमाणाः सन्तः जग्मुः तादृशं पराक्रमं को वा शत्रु-रुपेक्षेत गदः सङ्कर्षणश्च आदिभूतौ येषाम् एकः प्रविश्य मार यति अपरस्त्वाकृष्य हतो हीनः कोऽपि नास्तीति तयोरा-दित्वं नाराचैर्बाणविशेषैः हयजगान् रथानिति त्रिविधा हता इति गणिताः नहि महद्भिः क्षुद्रा हन्यन्ते अतो न पत्तयः परिगणिताः ॥ ६ ॥

हननं फलपर्यवसायीति फलमाह त्रिभिः । पेतुरिति । वधो द्विविधः अवयविनः अवयवानां च ततः पलायनमिति रथिनां शिरांसि निकृत्तानि रथस्थानम परित्यज्य भुवि पेतुः तथा अश्विनां अश्वसहितानां गजसहितानां वा खड्गयुद्धे नैतदाश्चर्यं बाण-युद्धेतु भवतीति निरूपितं तेषामप्रयोजकत्वं निवारयति । सकु-ण्डलकिरीटानीति । उष्णीषकुण्डलकिरीटानि त्रिविधानि प्रायि-कत्वं व्यावर्त्तयितुं कोटिश इत्युक्तम ॥ ७ ॥

अवयवानाह । हस्ता इति । असियुक्ता गदायुक्ताः दक्षिणाः इष्वास-युक्ताः वामाः करभा सुण्डादण्डा ऊरवः अङ्घ्रयश्च सर्वेषामश्वादीनां शिरांसि च भुवि पेतुरिति सम्बन्धः नागा हस्तिनः षड्विधा अपि हता इत्यर्थः । चकारात् ध्वजादीनामपि भूमिपातः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मास्म भैः माभैषीः तावकैरस्माभिः स्वेषां तदीयत्वनिर्देश-स्तस्यां परमप्रणयव्यञ्जकः ॥ ५ ॥

तत्तदा सचासौ विक्रमश्च तमिति वा ॥ ६—७ ॥

करभाः "मणिबन्धादाकनिष्ठं करस्य करभो बहि" रित्य-मरः ॥ ८—१० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे वामलोचने ! सुन्दराक्षि ! मा स्म भैः भयं मा कुरु तावकै-र्गदसङ्कर्षणादिभिः कृत्वा ॥ ५ ॥

सचासौ विक्रमस्तममृष्यमाणा असहमानाः ॥ ६ ॥

सकुण्डलकिरीटानि कुण्डलकिरीटसहितानि उष्णीषाणि शिरोऽवतंसवस्त्राणि तैः सहितानि च शिरांसि पेतुः ॥ ७ ॥

करभाः मणिबन्धादिकनिष्ठामूलान्ता हस्तावयवाः तदुपल-क्षिता मणिबन्धादुपरि हस्तभागा इत्यर्थः ॥ ८—१० ॥

भाषा टीका ।

श्रीरुक्मिणीजी के अभिप्राय को जानकर श्रीकृष्ण भगवान् बोले हे रुक्मिणी ! तुम मत डरो तुमारे यह यादव इसी वखत इन शत्रुओं की सेना को नाश करदेंगे ॥ ५ ॥

इतने ही में गद और संकर्षण आदिक वीरों ने उन शत्रुओं के उस पराक्रम करनेको नहीं सहन करसके तब बाणों से उनके हाथी घोडा रथों पर प्रहार किया ॥ ६ ॥

उस प्रहार से शत्रुओं के रथवाले घोडे वाले हाथी वाले इन सबों के कुंडलों के सहित किरीटों के सहित पगडियों के सहित करोडों मस्तक कटकर पृथिवी पर गिरपडे ॥ ७ ॥

गदा तरवार धनुषों के सहित हाथ गिरे हाथ के पहुंचा गिरे जांघ गिरीं पैर गिरे और घोडा खच्चर हाथी ऊंट गधा मनुष्य इनों के मस्तक भी कटकर गिरे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अप्राप्तदारमेव तं हृतदारमिवातुरम् ॥ १० ॥

भिन्न० पाठः राजान ऊचुः ।

भो भोः पुरुषशार्दूल ! दौर्मनस्यमिदं त्यज ।
न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते ॥ ११ ॥
यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ।
एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निष्ठा स्थैर्यम् ॥ ११ ॥

कुहको नर्तयिता तस्येच्छया दुःखेऽपीहमानत्वेन पारवश्यं व्यक्तं दर्शितम् ॥ १२

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

* जयकाशिभिः जितकाशिभिः जितकाशी जिताहव इति क्षीरस्वामिवचनात् जयकाङ्क्षिभिरिति पाठः स्पष्टः ॥ ९ ॥

नष्टत्विषमित्यादिना त्विण्नाशादिना कायमनोवाचां क्रमेण शान्तपक्रम ऊह्यः ॥ १० ॥

श्रीमुनीन्द्रस्तेषां वाक्येनैव तमुपहसति । भोभो इत्यादिना । वीप्सा महार्तस्य तस्य बलादाभिमुख्यार्थं हे पुरुषशार्दूलेति सत्पुंसो दौर्मनस्यं हि न योग्यमिति भावः । देहिषु नानादेहं प्राप्तवत्सु जीवेषु तच्च त्वया बुध्यत एवेत्याहुः हे राजन्निति ॥ ११ ॥

तच्च कुतस्तत्राहुः । यथेति । योषिदिति तत्प्रतिमाया एव हन्त्रि-करत्वेन विषयिप्रवृत्तेस्तथाहि तद्व्यवहारः नृत्यते नृत्यति अयं सर्वोऽपि जनः ईहते प्रवर्तते दुःखस्य पश्चादुक्तिः सुखे स्वत एव प्रवर्तत इतिचेन्न दुःखेऽपि तद्दर्शनादिति बोधयति । ईश्वरः "अपाणिपादो जवनो ग्रहीते"त्याद्युक्तलक्षणः "सहस्रशीर्षा पुरुष" इत्यादि-लक्षणो वेति राज्ञां भावः । एवमीश्वरमात्रज्ञानेऽपि पूर्णातदाविर्भाव-नराकृति परब्रह्म श्रीकृष्णवैमुख्यात् सर्वं तद्विधानां भस्मनि हुत-मिति तु मुनीन्द्रस्य ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कुहकेच्छया ॥ १२—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं जयकाङ्क्षिभिर्यदुभिर्हन्यमानानि बलानीकानि सैन्यस-मुदाया येषां ते जरासन्धादयो राजानो विमुखाः पराङ्मुखाः सन्तो जग्मुः ॥ ९ ॥

* जयकाशिभि रिति तन्मते पाठः ।

ततस्ते सर्वे शिशुपालमभ्येत्याब्रुवन्, कथम्भूतम् अप्राप्तदार-मेव हृतदारमिवातुरं नष्टत्विषं निस्तेजस्कं गत उत्साहो यस्मात् शुष्यद्वदनं यस्य तम् ॥ १० ॥

उक्तिमेवाह । भो भो इति । हे पुरुषश्रेष्ठ ! दौर्मनस्यं विषादं त्यज नहि सुखदुःखयोर्देहिषु स्थैर्यं दृश्यते किन्तु ते क्षणिके आगमापायिनी इति भावः ॥ ११ ॥

नन्वप्रतिहतपौरुषाणामस्माकमयं पराभवोऽविसह्य इत्यत आहुः । यथेति । कुहको नर्तकस्तस्येच्छया इच्छानुसारमित्यर्थः दारुमयी योषित्प्रतिमा नृत्यते तथायं देहिवर्गोऽपीश्वरपरतन्त्रः सुखदुःखयोरीहते सुखदुःखयोर्निमित्तभूयोश्चेष्टते सुखदुःखार्थकर्माणि करोतीत्यर्थः । नहि सुखदुःखप्रापणे स्वात्मनः स्वातन्त्र्यमस्ति अपितु सुखायैवेहमानोऽयं जनः स्वस्वकर्मानुगुणेश्वरेच्छया सुखदुःखे प्राप्नोत्यतः किं विधेयमित्यर्थः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मनो जयकाङ्क्षिभिः जयप्रकाशकैः जयेच्छुभिर्वा ॥ ९ ॥

हृतदारं बलादपहृतभार्यं पुरुषम् ॥ १० ॥

प्रियाप्रिययोः सुखदुःखयोर्निष्ठा व्यवस्था नियतत्वं "निष्ठोत्कर्षे व्यवस्थाया"मिति ॥ ११ ॥

कुहकेच्छया मायिकेच्छया ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः पलायनमाह—हन्यमानेति । सर्वमेव बलमनीकरूपं हन्यमानं येषाम् एते तु वृष्टिमेव कृतवन्तः न तु मारयन्ति तत्र हेतुः जयकाङ्क्षिभिरिति कन्या तु प्राप्तैव केवलं जय एवापेक्षित इति तेषामुपयोगः ततो राजानः स्वदेशभागेप्सवः किं वृथा मरणेनेति सर्व एव विमुखाः कुण्डिनपुरं जग्मुः जरासन्धः पुरःसरो येषां स हि पलायने कृताभ्यासः ॥ ९ ॥

भीष्मकोऽत्र न वक्तव्य इति तस्यापकाराभावाच्च शिशुपालं समभ्येत्य अविवाहेऽपि जातविवाह इव खिद्यमानो जातः ततो मर्तुकामं विषादिना आतुरं विचाररहितं हृतदारं सम्यगभेत्य निकटे सान्त्वनार्थं गत्वा शुष्यद्वदनं म्रियमाणमिव शीघ्रं सान्त्वनमब्रुवन् शिशुपालपरिज्ञाने मरणसाधनमेव ज्ञापकं मत्वान्य-

शौरेः सप्तदशाहं वै संयुगानि पराजितः।
त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥ १३ ॥
तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित्।
कालेन दैवयुक्तेन जानन्विद्रावितं जगत् ॥ १४ ॥
अधुनापि वयं सर्वे वीरयूथपयूथपाः।
पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥ १५ ॥
रिपवो जिग्युरधुना काल आत्मानुसारिणि।
तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

रित्याह—नष्टत्विषमिति। बहिःकान्त्यभावः अन्तरुत्साहाभावः जरासन्धो हि अत्यन्तमभ्यस्तबोधनः ॥ १० ॥

सान्त्वनवाक्यान्याह—भोभो इति षड्भिः। भगवद्गुणैरेव सान्त्वनं भवतीति अनेन तस्यापि रुक्मिण्यामभिमानो निवर्त्स्यते इति निरूपितम् आदौ स्वास्थ्यं सम्पादयन्ति। भो भो इति मूर्च्छितप्रबोधनं स्तुत्वा माहात्म्यं हृदये समायातीति पुरुषशार्दूलेति सम्बोधनम्। इमं विवाहाभावलक्षणं न हि स्ववीर्यं किञ्चिद्गतमस्तीति अप्राप्तत्वात् जाते विवाहे प्रियं भवेदिति यदि तत्राहुः—न प्रियाप्रिययोरिति। देहिषु सर्वदा प्रियं वा कस्यचिदप्रियं वेति निष्ठा निर्द्धारो नास्ति तत्र देहित्वमेव हेतुः "दिह उपचये" इति यदोपचयः तदा प्रियमन्यदाप्रियमिति ॥ ११ ॥

हेत्वन्तराण्याहुः। यथा दारुमयीति। अलौकिको बोधनहेतुरयं दारुमयी योषित् विवृताङ्ग्यपि सभायां विरुद्धरसापि कुहकस्य वञ्चकस्य कस्याश्चिद्देवतायाः रूपं कृत्वा तां नर्त्तयित्वा स्वोदरभरणं करोति एवमीश्वरेण सर्वोऽपि नर्त्यते स्वक्रीडार्थमत ईश्वराधीन एवायं लोकः भ्रमात्सुखदुःखयोरीहते सुखं भवतु दुःखं मा भवत्विति यथा कथञ्चित् प्रवृत्त्यर्थं भगवति दोषज्ञानाभावाय तथा बुद्धिमुत्पादयन्ति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

निष्ठा स्थैर्यम् ॥ ११ ॥

कुहको नर्त्तयिता तस्येच्छया एवमयं जीवलोकः कदाचित् सुखे कदाचित् दुःखेऽपि ईहते चेष्टते प्रवर्त्तत इति यावत् ईश्वराधीन इतीश्वरं मानितवतामपि तेषां कृष्णवैमुख्यादेवासुरत्वम् ॥ १२ ॥

श्रीशुकदेवकृतसिद्धान्तप्रदीपः।

देहिषु प्राकृतदेहयुक्तेषु प्रियाप्रिययोरिष्टानिष्टयोर्निष्ठा स्थैर्यम ॥ ११ ॥

कुहको नर्त्तयिता अयं प्रसिद्धो जनः ॥ १२ ॥

भाषा टीका।

पीछे तो विजयकी इच्छा करनेवाले वृष्णि यादवों के प्रहार के मारे अपने बल सेनाको मरते देखकर जरासन्ध आदिक राजा लोग संग्राम से विमुख होकर इधर उधर भाग गये ॥ ९ ॥

आगे आकर मिलके जैसे स्त्रीके हरणे से व्याकुल होवै तैसे नष्ट होगया तेज जिसका उत्साहरहित मुख जिसका सूख गया है ऐसे शिशुपाल से कहने लगे ॥ १० ॥

हे पुरुषों मे श्रेष्ठ! महाराज! इस उदासी को छोडो किसी पुरुष के लिये सुख या दुःख सदा नहीं रहता है ॥ ११ ॥

जैसे लकडी की पूतली नटकी इच्छा से नाचती है इसी तरह से यह जीव भी ईश्वर की इच्छा से सुख दुःख पाता है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अत्रचाहमेव दृष्टान्त इत्याह जरासन्धः शौरेरिति। कृष्णात्सकाशात् एकं संयुगं परं केवलमन्तिमं वा जिग्ये जितवानहम् ॥ १३ ॥

दैवमदृष्टं तद्युक्तेन ॥ १४ ॥

फल्गुतन्त्रैः स्वल्पसैन्यैः ॥ १५ ॥

प्रदक्षिणोऽनुकूलः स्यात् ॥ १६—२१

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं सर्वैः संहत्योक्तेऽपि तस्य दौर्मनस्यत्यागमदृष्ट्वा स्वयं जरासन्ध एव स्वानुभवप्रदर्शनेन सान्त्वयति। शौरेरिति। त्रयोविंशत्यक्षौहिणीसंख्यैः सैन्यैः सहाहं शौरिणा पराजितोऽभवं वै प्रसिद्धौ यद्वा आर्षी कर्त्तरि षष्ठी शौरिणेत्यर्थः। शूरनप्तृत्वेनेश्वरत्वं निन्दयते प्रौढत्वं च तत्रापि निजमानरक्षार्थ कत्थते जिग्य इति ॥ १३ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तथैवाह—तथापीति । पराजयेनापि न शोचामि जयेनापि न प्रहृष्यामीत्यर्थः । कर्हिचिदित्यस्योभयत्राप्यन्वयः विद्रावितं सङ्क्षोभितम् ननु कालस्य सर्वत्र साम्येन तस्मात् प्रियाप्रियप्राप्तिः कुतः स्यात् तत्राह—दैवेति । स्वकर्मणां वैचित्र्यादित्यर्थः पूर्वमीश्वरेच्छैव कारणमुक्तम् अधुना तु दैवसंयुक्तः काल इत्यस्यायम्भावः जीवस्य दैवमनादिसिद्धत्वादनन्तमेव वर्त्तते तत्रेश्वरचेष्टात्मककालविशेषो दैवविशेषमुपादत्त इति ॥ १४ ॥

प्रकृतलज्जादुःखापलापे तत्सर्वं योजयति—अधुनापीति । सम्प्रत्यपि पश्येत्यर्थः । वयमिति । सर्वापेक्षया पुनःसर्वेषामेवैतानि वचनानीति वा कृष्णेति मूलनामग्रहणमप्यवज्ञासूचनार्थम् १५ ॥

पुनस्तत्सर्वमाश्वासने योजयति—रिपव इति । आत्मनः अनुसारिणि अनुकूले सति तज्जयादपि विशेषेण जेष्यामः वयं चेति पाठे वयमपि ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

फल्गुतन्त्रैः । अल्पबलैः ॥ १५ ॥

प्रदक्षिणः अनुकूलः ॥ १६…२२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमीश्वरपारतन्त्र्यमुक्तं तत्र चाहमेव दृष्टान्त इत्याह जरासन्धः । शौरेरिति—सप्तदशसंयुगानि युद्धानि कृत्वेति शेषः । त्रयोविंशत्यक्षौहिणीकैः सैन्यैः सहितोऽप्यहं शौरेः श्रीकृष्णात्सकाशात् पराजितः सप्तदशकृत्व इति शेषः । एकं संयुगं त्वहं परं केवलं जिग्ये जितवानस्मि ॥ १३ ॥

तथापि सप्तदशकृत्वः पराजयकालेऽपि अहं कर्हिचिन्न शोचामि नापि जयकाले हृष्यामि च किं कुर्वन् दैवमदृष्टं तद्युक्तेन कालेन कालशरीरकेणेश्वरेण दैवमीश्वरस्तद्युक्तेन तदात्मकेन कालेनेति वा कृत्स्नं जगद्विद्रावितम् उपद्रुतं जानन् ॥ १४ ॥

अतोऽधुनापि वयं सर्वे वीरयूथपा अपि फल्गुतन्त्रैरपि अल्पबलैरपि पराजिताः ॥ १५ ॥

रिपवस्तु आत्मानुसारिणि स्वानुकूले काले प्राप्ते सति जिग्युः यदा च प्रदक्षिणोऽस्मदनुकूलः कालो भावी तदा वयमपि जेष्याम एव ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योऽहं त्रयोविंशतिभिः सैन्यैरक्षौहिणीभिः शौरेः सप्तदशसंयुगानि सप्तदशसंयुगेषु पराजितः परं पश्चात्सोऽहं तावतीभिः सम्भूयैकं सेनादिविकलं कृष्णं जिग्ये तथाप्युभयथापि एकमष्टादशमं सङ्ग्रामं वा ॥ १३—१४ ॥

फल्गुतन्त्रैः अल्पसेनादिपरिच्छदैः ॥ १५ ॥

प्रदक्षिणः अनुकूलः ॥ १६—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वमीश्वरेच्छैव कारणमित्युक्त्वा पश्चात्कालेन दैवयुक्तेनेति कारणान्तरनिर्देश इदमभिप्रैति जीवस्य दैवमनादित्वात् अनन्तमेव वर्त्तते तत्र चेश्वरचेष्टात्मकः कालविशेषो दैवविशेषमुपादत्त इति ॥ १४—२१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं शास्त्रीयमुक्त्वा लौकिकं स्वकीयमाह—शौरेः सप्तदशाहमिति । सप्तदशदिवसेषु वै निश्चयेन शौरेः सम्बन्धिसंयुगानि पराजितः द्विकर्मकोऽयं जिधातुरत्र संयुगेषु वा त्रयोविंशतिभिः सैन्यैरक्षौहिणीभिः सहित इति साधनसहितोऽपि सकृज्जयं मन्यते तेन द्वयमपि मयानुभूतमिति निष्ठाभावः प्रत्यक्षः ॥ १३ ॥

अत एव मम शोको नास्तीत्याह—तथापीति । कर्हिचित् तत्स्मरणेऽपि दुहित्रादिदर्शनेऽपि सर्वदा हर्षविषादाभाव एकमनुसन्धेयमिति तच्च निर्द्धारितं तस्मा उपदिशति । कालेनेति । यदि स्वसमानैः पराजयो जयो वा भवेत् तदा हर्षो विषादो वा कर्त्तव्यो भवेत् कालस्तु तत्कर्त्ता स सर्वेषामधिपतिः किञ्च सोऽपि द्रव्ययुक्त एव शरीरादिसहितः विद्रावणं शरीरद्वारैव करोति नत्वात्मनां स्वतः तेन जगद्विद्रावितं जानन् न शोचामीति सम्बन्धः दैवयुक्तेनेति पाठे कर्मवशात् सोऽपि तथा करोति नतु तस्यापि कश्चन दोषोऽस्तीति भावः ॥ १४ ॥

अस्तु कालान्तरवार्त्ता इदानीमेव वयं सर्वे जिताः अतः पञ्चभिः सह दुःखं न भवतीति न शोकः कर्त्तव्य इत्यभिप्रायेणाह—अधुनापीति । वयमिति श्लाघायां सर्वेति सम्मत्यर्थे तर्हि प्रयोजका भविष्यन्तीति न मन्तव्यं वीरयूथपानामपि यूथरक्षका वयं सर्वदैव वयमेवं भूताः अधुना परं पराजिताः तेषां च न महद्बलं किन्तु फल्गुतन्त्रैरेव यदुभिः पराजिताः तर्हि तेऽपि हता भविष्यन्तीत्याशङ्क्य तं मनोरथं दूरीकरोति कृष्णपालितैरिति कृष्णेन पालिताः न मारयितुं शक्या इत्यर्थः । अनेन कृष्णात् कन्याहरणसम्भावनापि निवारिता ॥ १५ ॥

ननु किमेतदाश्चर्यमिति चेत्तत्र हेतुमाह—रिपवो जिग्युरिति । अधुना आत्मानुसारिणि काले देवानां हितकर्त्तरि रिपवो वैष्णवा जिग्युः अस्माकं च हितकारी यदा तामसः कालो भविष्यति राजसो वा तदा वयं दैत्याः चकारात् राक्षसा अपि विजेष्याम इति दैत्यानां सिद्धान्ते कालः परमः तदतिरिक्तानङ्गीकारात् तत्र प्रतिष्ठिताः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शौरेः सकाशात् संयुगानि व्याप्य संयुगेषु वा पराजितः पराभूतः त्रयोविंशत्यक्षौहिणीसङ्ख्यैः एकं परं एकस्मिन्नन्तिम एव संयुगे जिग्ये जितवानस्मि ॥ १३ ॥

दैवमदृष्टं तद्युक्तेन विद्रावितं सङ्क्षोभितम् ॥ १४ ॥

विज० पाठः ( श्रीशुक उवाच । )

एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम् ।
हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥ १७ ॥
रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः ।
पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्यावृतो बली ॥ १८ ॥
रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ।
प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ १९ ॥
अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

फल्गुतन्त्रैः तुच्छपरिच्छदैः ॥ १५ ॥
प्रदक्षिणः अनुकूलः यदा स्यात् ॥ १६—१८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोविंशतिभिः सैन्यैरक्षौहिणीभिः सहितोऽहं शौरेः कृष्णात् सप्तदशसंयुगानि युद्धानि कृत्वेति शेषः पराजितः पराभूतः एकमष्टादशमं संयुगं परं केवलं जिग्ये जितवानास्मि ॥ १३ ॥

दैवं प्राक्कर्म यद्वा दैवमीश्वरस्तद्युक्तेन ॥ १४ ॥

फल्गुतन्त्रैरल्पसैन्यैः ॥ १५ ॥

जिग्युर्जितवन्तः प्रदक्षिणोऽनुकूलः ॥ १६—२२ ॥

———

भाषा टीका ।

कृष्णने सत्तरह वखत मेरेको संग्राममें जीता तेइस अक्षोहिणी से परंतु एकले पीछे मैने उनको जीत लिया ॥ १३ ॥

तौ भी मै कभी न शोचता हूं न खुसी होता हूं क्यों कि मै जानता हूं कि प्रारब्धके सहित कालही इस जगत्को अपने वश घुमा रहा है ॥ १४ ॥

इस वखतमी वीरोंके सेना पतियों के सेनापति हम लोगों को थोडे वलवाले कृष्णके संगमें रहने वाले यादवोंने जीत लिया ॥ १५ ॥

इस वखत शत्रुओं के अनुकूल काल है तो वे जीतगये अब हमारे अनुकूल काल होगा तो हम जीतेंगे ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

हतेभ्यः शेषा इति बहवो हता इति द्योत्यते ॥ १७ ॥

पूर्वोक्तयुद्धारम्भे रुक्मिणो वृत्तिमाह—रुक्मी त्विति । पृष्ठतः पश्चात् पृष्ठरक्षान् विन्यस्य द्वारकां प्रति श्रीकृष्णस्य प्रस्थानात् तथाच हरिवंशे । आदाय रुक्मिणीं कृष्णो जगामाशु पुरीं प्रति । रामे भारं समासज्य युयुधाने च वीर्यवान् अक्रूरे विपृथौ चापि गदे च कृतवर्मणि । चक्रदेवे सुदेवे च सारणे च महाबले । निर्वृत्तशत्रौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः । राजाधिदेवे मृदवे प्रसेने चित्रके तथा । अतिदान्ते बृहद्दुर्गे श्वफल्के सत्यके पृथौ । वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदन इति । स्ववर्त्मनि स्थितांस्तान् वञ्चयित्वेति ज्ञेयम् ॥ १८ ॥

अमर्षी असहनः अत एव सुसंरब्धः अतिशयेन क्रुद्धः अत एव शृण्वतां [शृण्वत्सु सर्वभूभुजां सर्वभूभृत्सु तस्य प्रतिज्ञायोग्यत्वं बोधयन् महाशूरत्वं लक्षयति—महाबाहुरिति । अनेन तदानीं बाहूत्थापनमपि ज्ञेयम् अतः पूर्वमेव दंशित इत्यादि ॥ १९ ॥

सङ्गरे ननु मायाविना अप्रत्यूह्य अनिवर्त्य कुण्डिनं न प्रवेक्ष्यामीति पौरजनेषु निजमुखदर्शनाय अयोग्यत्वात् इयं च दैवीगीः भावित्वात् ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं मित्रैर्जरासंधादिभिः बोधितः सान्त्वितश्चैद्यस्स्वपुरं प्रति जगाम ततो हतशेषास्ते जरासंधादयोऽपि नृपाः स्वस्वगृहं प्रति जग्मुः ॥ १७ ॥

ततः कृष्णद्विट् रुक्मी तु स्वसुर्भगिन्या राक्षसोद्वाहमसहमानः अक्षौहिण्या सैन्येन परिवृतः कृष्णं पृष्ठतोऽन्वधावत् ॥ १८

अनुधावनात्पूर्वं तस्य संरम्भमाह—रुक्मीति । अमर्षी क्रुद्धः सुसंरब्धः सन्नद्धः तदेव प्रपञ्चयति—दंशितः कवचितः शरासनेन धनुषा सहितः सर्वभूभुजां शृण्वतां सतां प्रतिजज्ञे ॥ १९ ॥

प्रतिज्ञामेवाह—अहत्वेति । अप्रत्यूह्य अनाहृत्य ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असहन्नसहमानः ॥ १८—१९ ॥

अप्रत्यूह्य अनाहृत्य [illegible] वा ॥ २०—२३ ॥

इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः।
चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥ २१ ॥
अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः।
नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥ २२ ॥
विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित्।
रथेनैकेन गोविन्दं तिष्ठ तिष्ठेत्यथाह्वयत् ॥ २३ ॥
विज० पाठः (स गत्वा नर्मदां देवीं तरन्तं मधुसूदनम्।
आसाद्य युद्धसन्नद्धास्तिष्ठ तिष्ठेति चाब्रवीत् ॥ )

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं स्वसिद्धान्तनिरूपणेन प्रतिबोधितः मित्रैरवशिष्टैः समामन्त्य-सनैः सह चैद्यः ससेवकः स्वपुरमगात्। तेऽपि हतशेषाः तद्गृह-पर्यन्तं तत्सङ्गे गत्वा पुनः स्वं स्वं पुरं ययुः ॥ १७ ॥

एवं सप्तदशाभिः एकमुपाख्यानं साधारणानां ममता-भावाय निरूपितम्। अधुना रुक्मिप्रभृतीनां ममताभावाय रुक्मिण्याश्च तेषु ममताभावाय सार्द्धैरेव सप्तदशाभिर्नि-रूप्यते। मध्यमं तामसमन्तिमं राजसमिति ततो दोषत्रयापगमे भगवानष्टैश्वर्यरूपां रुक्मिणीं स्वीकरिष्यत्यष्टभिः तत्र प्रथमं ताम-सस्योद्योगमाह—रुक्मी त्विति। यद्यपि तत्त्वोपदेशे रुक्मी स्थितः तत्त्वेन च सर्वे निवृत्तव्यापारा जाताः रुक्मी तु न जात इति तुशब्दार्थः। ननु कोऽपराधः य एव क्षत्रियः बलान्नयति तस्यैव भार्या भवतीति क्षत्रियाणां स्थितिः तत्राह—स्वसुः राक्षसोद्वाहमसह-न्निति। ये हि कुलीनाः सन्तो दुर्बलाः तत्कन्या राक्षसविधिना नीयते स्वयन्तु शूरः अतो राक्षसविवाहोऽनुचितः किञ्च कृष्णद्विड्यं अन्यश्चेन्नयेत् न वदेदपि द्विष्टेन नीते न काप्युपकाराय भविष्यति स्थापनीयं च शत्रुत्वं तत्सम्बन्धे सत्यशक्यमिति सम्बन्धदूरी-करणार्थं तस्य प्रवृत्तिः कन्याहविषोस्तुल्यत्वात् "द्विषता हि हविर्भुक्तं नेह नान्यत्र तद्भवे"दिति वाक्यात् कन्यापि द्विषा भुक्ता न लोकद्वयोपकारिणीति तस्या भोगं वा निवारयितुं तत्प्रवृत्तिः अत एव पृष्ठतोऽन्वगमत् येनैव मार्गेण स्वयमपि गतः अथवा अयं भगवान् यदैव निर्गतः तदैव प्रचलितः परमन्ये निवृत्ताः अयं तु न निवृत्त इति वैलक्षण्यम् एकया अक्षौहिण्या परिवृतः सन् गतः ननु बहव एव गताः हतोद्यमा जाताः कथमयमेकाकी गच्छतीत्याशङ्क्याह—बलीति। अयमत्यन्तं बलिष्ठः ॥ १८ ॥

अत एव महतीं प्रतिज्ञां चक्र इत्याह—रुक्मीति। अमर्षी अप्रती-कारक्रोधवान् सुष्ठु संरब्धः युद्धार्थं कृतोद्यमः सर्वभूभुजां शृण्वतां मध्ये प्रतिजज्ञे प्रतिज्ञां कृतवान् क्रोधसंरम्भाभ्यां ज्ञातवान् सामग्री गृहीतेति निर्भयः निवारकाश्च नागताः सर्वे सहाया-पेक्षा तु नास्तीत्याह—महाबाहुरिति। महती क्रिया शक्तिर्यस्येत्यर्थः। ततो दंशितः वज्रकवचः सशरासनश्च ॥ १९ ॥

प्रतिज्ञामाह—अहत्वेति। अप्रत्यूह्येति रुक्मिणीमग्नितुल्यां मन्यते यथा आयतनादग्निः बहिश्चेन्निर्गच्छति तत्पुनरायतने व्यूह्यते तथा कुलादपगता पुनः कुले व्यूह्येति भावः। नन्वेतदशक्यमिति चेत्तत्राह—कुण्डिनं न प्रवेक्ष्यामीति। अयमेव नियमः यदुभयम-कृत्वा कुण्डिनाप्रवेश इति अतः कुण्डिनाप्रवेश एव तस्य फलि-ष्यति अत एव विगानाभावात् निर्द्धारितस्यानुक्तत्वात् न पदानामन्यथार्थो वक्तव्यः एतदहं सत्यं ब्रवीमीति शपथः ॥ २० ॥

* उपाद्रवदिति वीर० पाठः।

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

अमर्षी असहिष्णुः सुसंरब्धः अतिक्रोधी ॥ १९ ॥

अहत्वेति। भारतीपक्षे अज्ञात्वा अप्रत्यूह्य अनिवर्त्य अनिर्मो-च्येति वा ॥ २०—२१ ॥　　०

---

भाषा टीका।

इस प्रकारसे मित्रोंके समुझानेसे शिशुपाल गामको गया मारमें से बचे हुये बाकी वे राजा भी अपने अपने ग्रामों को गये ॥ १७ ॥

रुक्मी तो श्रीकृष्णका द्वैषी है सो बहनके राक्षस विवाहको नहीं सह सका तब एक अक्षौहिणी सेनाको लेकर बडे बलसे श्रीकृष्णके पीछे दौडा ॥ १८ ॥

रुक्मी नहीं सहन करके बडे क्रोधसे कवच पहर कर धनुषको हाथमें लेकर दोनों बडे भुजोंको उठाकर सब राजाओं को सुना कर प्रतिज्ञा करने लगा ॥ १९ ॥

मै युद्धमें कृष्णको विना जीते रुक्मिणी को विना लौटाये अपने कुण्डिन नगरमें प्रवेश नहीं करूंगा मै आप लोगोंके आगे सत्य कहता हूं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

गोपालस्य वेदपालकस्येति वास्तवोऽर्थः तथा सुदुर्मतेरिति शोभनानुग्रहवती दुष्टेष्वपि मतिर्यस्य तस्येति ॥ २२—२३ ॥

**धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ।**
**आह*चात्र क्षणं तिष्ठ यदूनां कुलपांसन ! ॥ २४ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदूनां कुलपांसन! कुलदूषण वस्तुतस्तु यदूनां कुलस्य पते! हे अंसन स्वयं च रिपुहननचतुर अंस समाघात इत्यस्माद्धातोः कर्तरि ल्युट् प्रत्ययो नन्द्यादिविहितः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

चोदयेति । नोदयेत्यर्थः । कुत्र यतो यत्र तत्रैव परमदुर्गमास्कायामपीत्यर्थः ॥ २१

तत्र किमर्थं तदाह—अद्येति । नेष्ये गमयिष्यामि हरिष्यामीत्यर्थः । ननु श्रीकृष्णनिन्दामयं वाक्यं श्रीमद्भगवद्भक्तवृन्दवन्द्यश्रीचरणकमलरजःकणेन तत्र भवता बादरायणिना कथमनूदितमिति चेत्तत्राहुर्ष्टीकाकृतो गोपालस्येत्यादि तस्येतीत्यन्तं तत्र तस्यैकदेशेऽपि यथाकथञ्चिदपि तत्स्तुतिरूपार्थसत्त्वेऽनुचितोऽप्यनुवाद इत्याशयः तत्त्वार्थश्चायं गोपालस्य तद्रूपलीलत्वेनैव प्रकाशितापूर्वसर्वैश्वर्य्यमाधुर्य्यस्य अनाद्यनन्तकालसिद्धवेदसिद्धसर्वमन्त्रश्रेष्ठयोरष्टादशदशाक्षरयोरधिदेवस्य स्वयं भगवत इत्यर्थः । तर्हि कथं बहूनामन्यत्र प्रवृत्तिस्तत्राह–सुघुतुः अतिकृच्छ्रेण मतिर्ज्ञानं यस्य तस्य निशितैर्बाणैर्निजमेव वीर्य्यमदं नेष्ये गमयिष्यामि क्षपयिष्यामीत्यर्थः तत्र तस्य सामर्थ्यं दर्शयति । येनेति प्रसभं सर्वानपि राज्ञः पराभूयेत्यर्थः । मे इति वीर्य्यमदमित्यनेनाप्यन्वितं वा ॥ २२ ॥

विरूपं कत्थमानः आत्मानं श्लाघमानः अतः कुमतिः अतोऽप्रमाणवित् माहात्म्यानभिज्ञ इत्यर्थः । अत एव श्रीबलदेवं वर्त्मान्तरेण वञ्चयित्वा एकेन रथेन सह वर्त्तमान एकाकिना श्रीभगवता स्वयमप्येकाकितया योद्धुं महामदेन दूरतः सर्वसैन्यपरित्यागात् तथाच श्रीहरिवंशे

> अवस्थाप्य च तत्सैन्यं रुक्मी मदबलान्वितः ।
> चिकीर्षुर्द्वैरथं युद्धमभ्ययान्मधुसूदनमिति ॥

गोविन्दं पृथ्व्यामवतीर्णं साक्षाद्भगवन्तमपीत्यर्थः । एवमग्रे कृष्णमित्यादिकमपि ज्ञेयं तथैव मुहुरुक्तिस्तस्यात्यन्ताबुधत्वादिबोधनार्थम् ॥ २३ ॥

अवज्ञया तं भृशमुत्साहयितुमिच्छया च तदाह्वानमनादृत्य प्रयान्तमेव शरैः पृष्ठतो जघ्ने तथापि तथैव प्रयान्तं पुनराह यद्वा तदाह्वानादभिमुखतया स्थितं जघ्ने तथापि क्षणं तिष्ठेति वीरदर्पस्वभावादेवाह अरे हे शत्रो ! यद्वा अव्ययमिदमनादरसंबोधने वास्तवोऽर्थः अरे क्षणं शीघ्रदर्शनं यथा स्यात्तथा तिष्ठेति "लघु क्षिप्रमरं द्रुतमिति पर्य्यायात् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अप्रमाणवित् । अनन्तपरिमाणत्वमजानन् वेदान्तानभिज्ञ इत्यर्थः ॥ २३–३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । सत्वरः त्वरया सहितः उक्तिमेवाह—चोदयेति सार्थेन । यतो यत्र कृष्णस्तत्राश्वानाशु चोदय गमयेत्यर्थः । तेन कृष्णेन सह मम संयुगं संग्रामो भवेत् भवितव्यः ॥ २१ ॥

सुतरां दुर्बुद्धेर्गोपालस्य वीरमदं वीरोऽहमेवेत्येवं विधं मदं नेष्ये ततो नयामि त्याजयामीत्यर्थः । तत्र हेतुं वदन् विशिनष्टि । येन कृष्णेन मम भगिनी प्रसह्य नीता अपहृता ॥ २२ ॥

विकत्थमान इति । ईश्वरस्य श्रीकृष्णस्य प्रमाणम् ज्ञानशक्तिबलादीनामनन्तपरिमाणत्वमजानन् अत एव कुमतिरत एव चैवं विकत्थमानः प्रगल्भं भाषमाणः तिष्ठ तिष्ठेति वदन्निति शेषः उपाद्रवत् अन्वधावत् ॥ २३ ॥

धनुरिति । दृढं धनुर्विकृष्य शरान् सन्धायेति शेषः । कृष्णमुरो वक्षस्थलं जघ्ने आह च उक्तिमेवाह–क्षणमित्यादिना स्मयन्नित्यतः प्राक्तनेन । हे यदुकुलदूषक ! क्षणं तिष्ठ ममाग्रत इति शेषः ध्वांक्षः काकः यथा हविः हृत्वा याति तथा मम स्वसारं मुषित्वा क्व यास्यसि नैल्यमयोग्यत्वं च दृष्टान्ताभिप्रेतम् ॥ २४ ॥

---

श्रीमद्विजयध्वजकृतपदरत्नावली ।

अरे नीचसम्बोधनं तदेव व्यनक्ति । यदूनामिति ॥ २४–२५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः पित्राद्यभ्यनुज्ञाव्यतिरेकेणैव एवमुक्त्वा रथमारुह्य स्वसारथिं प्रति प्राह अन्यथासनं तथा कुर्यात् सहजद्वेषाभावात् सत्वरमित्युभयत्र अश्वान् प्रेरय तस्य मे च संयुगो भवेत् प्रार्थनायां लिङ् यथा मम तस्य संयुगो भवति तथा चोदयेति भवेदिति विध्यर्थो वा अपूर्वत्वात् यतोऽयं कृष्णः स्त्रीप्रियः अतः स्त्रियं हृतवानिति ॥ २१ ॥

गत्वा यत्कर्त्तव्यं तदाह—अथाहमिति । निशितैरिति सहार्थे तृतीया दुष्टेष्वपि मतिर्यस्येति गोपालत्वं शब्दतो न दोषः अभिप्रायतस्तथा भवति तत्प्रकृतेनाङ्गीक्रियत इति नान्यथा तत्कार्य्यं वीर्यजनितो यो मदः तमहं नेष्ये प्रहीष्यामि येन भगवता

* आहचारे इति विजय॰ तोषणीपाठः आहचोरहासि वीर॰ पाठः ।

कुत्र यासि स्वसारं मे मुषित्वा ध्वांक्षवद्धविः।
हरिष्येऽद्य मदं मन्द ! मायिनः कूटयोधिनः ॥ २५ ॥
यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम्।
विश० पाठः ( धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः )
स्मयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥ २६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कृत्वा मदं प्राप्स्यामीत्यर्थः। पूर्वं नास्माकं गर्वः स्थितः अधुना भगवत्सम्बन्धात् नास्मत्सदृशा वीरा भविष्यन्तीति गर्वो भविष्यति क्षत्रियाणां वीर्यमेव महत्त्वसूचकमिति न मदमात्रं निरूपितं ननु भगवतो हेतुत्वं कथमित्यत्राह—येन मे स्वसा प्रसभं हृतेति बलात्कारेण हरन् वीर्यं शिक्षां योगविद्यावान् बाणानपि प्राप्स्यामि वीर्यमपीति स्वसाधनबलप्राप्तिर्भगवदाभिमुख्यगमने फलमित्यर्थः॥ २२ ॥

तत्सम्मुखमेव गन्तव्यमिति नियोगः विशेषेण कत्थमानः असम्बद्धमिव भाषमाणः भगवान् हि महत्या प्रार्थनया तां हृतवान् न तु बलादिति असम्बद्धता। नन्वचिन्त्यैश्वर्यं भगवतः श्रुत्वा दृष्ट्वा च कथमेवं वदतीत्याशङ्क्याह—कुमतिरिति—ऊहादौ न तस्य सामर्थ्यं स हि सर्वमेव यथा कथं चिज्ज्ञातमिति भगवच्चरित्रं मन्यते तत्र प्रमाणमाह—ईश्वरस्याप्रमाणविदिति। ईश्वरस्य प्रमाणं सामर्थ्यं न जानाति प्रमाणशब्दः आदरीणयपरोऽपि क्वचित्परिमाणवाच्यपि प्रमाणं परिमाणमिति यथात्रैव "विदुः प्रमाणम्बलवीर्ययोर्वा" इत्यत्र च उपसर्गस्य अन्योपसर्गार्थत्वात् न नानार्थत्वं समुदायस्य एवं दुर्बुद्धिरेकेनैव रथेन भगवत्समीपं गत्वा गोविन्दं शकलपालं सम्मान्यस्यैवेन्द्रम् अत एव रुक्मिणीं हृत्वा गच्छन्तं तिष्ठ तिष्ठेत्यब्रवीत् द्विरुक्तिः आदरे अधिक्षेपे वा चकारात् स्तुतिवाक्यान्यन्यानि वा २३

तथोक्ते भगवान् स्थितः तदा यत्कृतवांस्तदाह—धनुर्विकृष्येति। स्तुतिपक्षे ममोद्धारमकृत्वैव केवलं रुक्मिणीहरणमयुक्तमिति वाक्यानामर्थः। नन्वनधिकारी कथं कृतार्थीकर्तव्य इत्याशङ्क्य स्वाधिकारनिरूपणार्थं युद्धं प्रदर्शयति—धनुर्विकृष्येति। सुदृढमिति सुष्ठु प्रतिज्ञायां दृढं भगवन्तमालक्ष्य स्वशौर्यं प्रदर्शयन् त्रिभिः शरैः अर्थाल्लोकत्रयं जघ्ने शरो ह्यपयोवरणभूतो रसानां तत्र जलस्य पृथिवी शरो भवति अन्तरिक्षमपि वायोः स्वरपि ब्रह्माण्डस्य सर्वं भगवते निवेदितवानिति वा हन्तो हि हन्ति इति हस्तेन दत्तवानित्यर्थः। न केवलं सर्वस्वनिवेदनमेव कृतवान् किन्तु वाक्यमप्युक्तवान् अन्यथा वाचानिकं न दत्तवानिति स्यात्। आह चारे इति। भगवन्तं प्रति विज्ञापनार्थमाह—चारे चरणयोग्ये हृदये सात्त्विके क्षणं तिष्ठ। ननु किं स्यात् स्थित इत्याशङ्क्याह— यदूनामिति। यदूनां कुलं पान्तीति कुलपाः कुलपा वा माया तान् तां वा अंसेन क्रियाशक्त्या नयतीति तथा च ये केचन यादवानां रक्षकाः तान् सर्वानेव वैकुण्ठं प्रापयति अत एव भक्तवत्सलः असद्धृदयेऽपि क्षणं स्थितः अस्मदीयान् अस्मदुपकारिणश्च वैकुण्ठं नेष्यतीति तदर्थं प्रार्थना ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नेष्ये। गमयिष्यामि हरिष्यामीत्यर्थः। भारतीपक्षे शोभना कृपावती दुष्टेष्वपि मतिर्यस्य तस्य निशितैर्बाणैर्वीर्यं मदं स्वपराक्रमं गर्वमदं नेष्ये यापयिष्यामि दूरीकरिष्यामीत्यर्थः २२—२३ ॥

कुलस्य पांसुकरणात् कुलपांसन! पक्षे हे यदुकुलपालक! हे अंसन! रिपुघातिन् अंससमाघाते अरे क्षणं भारतीपक्षे अरं शीघ्रमीक्षणं यत्र तत् यथा स्यात्तथा तिष्ठ ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीकृष्णानादरे हेतुमाह-कुमतिरिति। अत एवेश्वरस्य साक्षाद्भगवतः श्रीकृष्णस्य अप्रमाणवित् ॥ २३ ॥

कुलपांसन ! कुलदूषण ॥ २४—३३ ॥

---

### भाषा टीका।

इतना कहकर रथ पर चढके जल्दी सारथी से बोला कि जिधर कृष्ण होवैं उधर घोडों को हांको उनके साथ मेरा संग्राम होगा ॥ २१ ॥

उन अबुद्धि गोपाल का जो मद है तिसको मै आज तीक्ष्ण वाणों से दूर करोंगा जिनने कि मेरी बहन को जबरन हर लिया है ॥ २२ ॥

वह दुर्बुद्धि वाला ऐसे बका हुआ ईश्वर के प्रमाण को नहीं जानने वाला एकेले रथ से जाकर श्रीगोविंद से खडे रहो खडे रहो कहकर बुलाने लगा ॥ २३ ॥

बडे दृढ धनुष को खैंच कर श्रीकृष्णजी को तीन वाण मारे और बोला कि हे यदुकुल के राखतुल्य क्षणमात्र इहां खडे रहो ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

ध्वाङ्क्षः काकः स यथा हविर्मुष्णाति तद्वत् वस्तुतस्तु अध्वा-

अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ।
स चान्यद्धनुरादाय कृष्णं विव्याध पञ्चभिः ॥ २७ ॥
तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ।
पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ध्वाङ्क्षवदिति छेदः सहसाक्षयादित्यर्थः हे मन्द ! स्थिरेत्यर्थः ॥२५-३३॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

क इव किं मुषित्वा तत्राह-ध्वाङ्क्ष इव हविर्मुषित्वेति । तत्र ध्वाङ्क्षवदिति तस्वार्थस्तैर्व्याख्यातः तत्र ध्वांक्षस्तावदेकाक्षः नञा तद्विपरीतोऽनेकाक्षः अनेकाक्षत्वं पराकाष्ठापन्नं सहस्राक्ष एवेति तत्र पर्य्यवसायितम् एवममुषित्वा लक्ष्म्यास्त्वद्भागत्वात् न्यायेनैव लब्धा कुत्र यासि न कुत्रापि गन्तुमर्हसि भयाभावादित्यर्थः किञ्च मायिनो महामायाशक्तेः पलायनं चेदस्माभिर्युद्धयोग्यमेवेत्याह-कूटयोधिनः कूटान् खलान् अस्मान् साधु योधयतीति अन्यथा वयमाभिमुख्येन न योत्स्याम इति भावः । तादृशस्य च तव मदं दर्पं हरिष्ये मद्विधखलनिर्जयलीलया त्वां प्रति प्रापयिष्यामीत्यर्थः । भारं ग्रामं हरतीतिवद्द्विकर्मकत्वेऽपि तवेति सम्बन्धविवक्षया षष्ठी यद्वा हविर्यज्ञसिद्धं समागामेव मे स्वसारममुषित्वेति ध्वाङ्क्षवत् क्षुद्रोऽहमिति च योज्यम् ॥ २५ ॥

यावदित्यर्द्धकम् । अत्र च मे मम बाणैर्हतः प्राप्तः सन् यावन्न शयीथाः तेषां तुच्छतां दर्शयित्वा हृतायां सान्त्वितायां रुक्मिण्यां स्वस्थो न भवेः तावद्दारिकां मुञ्च तत्सान्त्वनं त्यज तत्सान्त्वनं मुक्त्वा युद्धमेव कुरुष्वेत्यर्थः । स्मयन् स्मयमानः पश्चाद्येऽपि तस्य ताडयोक्तेरसंगतत्वात् मस्तकहस्तद्वयपादद्वयमध्यभागाख्यमुख्यषडङ्गवेधनार्थं षड्भिः ॥ २६ ॥

अष्टभिरिति प्रत्येकं द्वाभ्यामभिमपादद्वयवेधनार्थं तत्सादृश्यवर्णात् सूतमपि द्वाभ्यां हस्तद्वयवेधनार्थं त्रिभिरिति लक्षणदण्डपताकानां पृथक् छेदनार्थम् । एतच्च श्रीरुक्मिण्यपेक्षया तत्सच्छेदनमात्रं ज्ञेयम् ॥ २७ ॥

अत एव ताडितोऽपि शराणामोघैः समूहैः तु एव धनुरेव चिच्छेद पुनरित्यर्द्धकम् । अन्यत्ततोऽपि दृढतरम् । अच्युत इति अव्यय इति वा पाठः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे मन्द ! कूटयोधिनः कूटः समुदितो युध्यते तच्छीलस्तथा तस्य एकाकितया योद्धुमसमर्थस्येत्यर्थः । तव मदं हरिष्ये ॥ २५ ॥

मम बाणैर्यावद्धतो न शयीत भवान् ततः पूर्वमेव दारिकां कन्यां मुञ्च स्मयन्निति षड्भिर्बाणैरिति शेषः तथोत्तरत्रापि ॥ २६ ॥

स चेति । स रुक्मी ॥ २७ ॥

तैः रुक्मिणा प्रयुक्तैः शरास्तैस्ताडितः कृष्णः तद्धनुश्चिच्छेद एवं पुनः पुनर्यद्यद्धनुरादत्ते तदप्यव्ययो भगवान् चिच्छेद ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः पूर्वमेव मुञ्च ॥ २६—२८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोपालस्येति । तत्त्वार्थे तद्रूपत्वं व्यञ्जितमैश्वर्यमिति तदादरो व्यञ्जितः *—३१

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च कुत्र यासीति जीवानां स्वता ब्रह्मानन्दो भवति सम्बन्धमात्रं स्वांशिन आनन्द इति ननु कदाचिदप्यनुभवः अतः स्वस्यैव भवति तां गृहीत्वा अस्मदुद्धारमकृत्वा उद्धृतामेव यादवान् उद्धर्तुं किमर्थं गच्छसि इत्यर्थः । मुषित्वेति परोक्षं हित्वा जीवानां निकटेऽपि ब्रह्मानन्दः स्थितः जीवैर्नदृश्यते अनुभवति भगवानेव ध्वाङ्क्षवदिति यथा ध्वाङ्क्षं विहाय हविर्नीयते ध्वाङ्क्षो हविर्न भवति अन्यत्सर्वं जगत्युत्पन्नं हविर्भवति भगवान् सर्वयज्ञभोक्ता तत्र सर्वे पशवः काकं विहाय तथा सर्वजगदुद्धारार्थमागतः मामेव विहाय कथं गच्छसीत्यात्मनो धिक्कारः हविरपि परोक्षमेव गृह्णाति परोक्षप्रिया देवाः प्रत्यक्षद्विष इति तर्हि त्वयैव काकदृष्टान्त उक्त इति त्वमप्राज्ञ एवेति चेत्तत्राह—हरिष्येऽद्य मदं मन्देति मन्दं मन्दं स्वस्मिन् दोषात्मकं . यद्यपि त्वया कृपा न विधीयते मन्दमायिनो वा मन्दा माया अस्यास्तीति अनेन मायामन्दैव क्रियते न कार्यक्षमा भवति कूटयोधिनो मायिनो भगवतः सकपटेनैव युद्धं करोति वस्तुतो मुक्तिं प्रयच्छति एतादृशो भगवति स्थिते प्रतिबन्धकत्वेन समागतः स्वधर्मं दूरीकरिष्यामि इति वचनं युक्तमेव ॥ २५ ॥

तर्हि कथं त्वमुक्तस्य इत्याकाङ्क्षायां ब्रह्मानन्दप्रकमर्थं प्रयच्छेत्याह—यावन्न मे हतो बाणैरिति । मे बाणाः अस्मात्कर्तृक समागतानीन्द्रियाणि तैर्यावन्न हतः यदीन्द्रियाणि त्वद्रसं प्राप्स्यन्ति तदा ब्रह्मानन्दं नापेक्षिष्यन्ते तदा भक्तिमेव ग्रहीष्यन्ति तावत्पर्यन्त

* इयं टीका द्वाविंशश्लोकस्य ।

परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ।
यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः॥ २९॥
ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया।
कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम्॥ ३०॥
तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः।
छित्त्वाऽसिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः॥ ३१॥
दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला।
पतित्वा पादयोर्भर्तुरुवाच करुणं सती॥ ३२॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ब्रह्मानन्दो देय इत्यर्थः। यतः सा दारिका मुक्तिः संसारं विदारयिष्यति अतः भक्तेः पूर्वं मुक्तिप्रार्थना युक्तैव। ननु कोऽयमाग्रहः इदानीमेव फलं देयमिति तत्राह—शयीथा इति। यावत्प्रलये सर्वं संहृत्य शयनं करिष्यसि ततः पूर्वं मोचयेत्यर्थः। एवमुक्तो भगवान् हास्येन तं व्यामोहयन् दुरात्मा यं मर्त्तुकामः समायातीति स्वयं भगवान् स्त्रीणां हितकर्ता रुक्मिणी न त्याज्येति तस्य धनुः छित्वा येन शरान् प्रक्षिप्तवान् तत् दूरीकृत्य षड्भिः शरैः रुक्मिणं विव्याध षोढा विहितो हि पुरुषः ततः सर्वाङ्गेषु ताडितवान्॥ २६॥

ततः अष्टभिः द्वाभ्यां द्वाभ्यामेकैकं चतुरो वाहान् अश्वान् विव्याध द्वाभ्यां च सूतम् एवं ते त्रिधा छिन्नाः पञ्चापि ध्वजस्तु चतुर्धा छिन्नः एवं साक्षात् परम्पराङ्गानि सर्वाण्येव भिन्नानि तच्छेदनार्थं प्रवृत्तेनैव बाणेन धनुः छिन्नमिति ननु धनुषो भेदे पृथक् शरा उक्ताः तदा सोऽप्यन्यद्धनुरादत्त भगवानपि प्राणिघातकं धनुर्विहाय अन्यद्धनुर्गृहीतवानिति चकारेण ज्ञायते॥ २७॥

तदपि आच्छिनत् ग्रहणमात्रेणैव तत्र हेतुः अच्युतः इति स्वयमच्युतः देववरप्राप्तं च धनुः अतस्तच्छरस्य वैयर्थ्यासम्पादनात् पूर्वमेव तच्छिन्नम् ततोऽन्यदपि गृहीतवान् इत्याह—पुनरन्यदुपादत्तेति। त्रिसत्या हि देवा इति धनुषः त्रिर्ग्रहणम्॥ २८॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ध्वाङ्क्षः काकः स यथा हविर्मुष्णाति तद्वत् पक्षे मे स्वसारं महालक्ष्मीत्वात् त्वदीयामपि त्वं मुषित्वा वा कुत्र यासि अहं स्वसारं स्वभगिनीं हरिष्ये त्वत्तो मोचयित्वा स्वगृहं प्रति नेष्यामि काक इव हविर्याज्ञियकाङ्क्षिकां ध्वाङ्क्षवत् काक इव "हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसक"मिति मेदिनी। तस्मात् मन्दधासौ मायी चेति तस्य मम कपटयोधिनः मदं गर्वं व्यपनय॥ २५॥

यावन्मे बाणैर्हतः सन् सङ्ग्रामे न शयीथास्तावद्दारिकां मुञ्च पक्षे यावदित्येवार्थे मे बाणैस्त्वमहत एव अतो दारिकां न मुञ्च "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः यावत् कार्त्स्न्येऽवधारणे" इति मेदिनी। ननु दारिकया मम किं प्रयोजनं तत्राह—शयीथाः अनया सह पुष्पशय्यायामिति शेषो लज्जया नोक्तः॥ २६—३१॥

भाषा टीका।

जैसे हवि को काक लेजावे तैसे हमारी बहन को हर कर कहां जाते हो हे मंद माया वाले तुम कपट युद्ध करने वाले हो तुमारे मदको मै आज हरण करूंगा॥ २५॥

जब तक मेरे बाणों से हत होकर न सोजाओ तब तक ही मे इस लडकी को छोड दो इतना सुनकर श्रीकृष्णजी ने हसकर रुक्मी के धनुष को काट दिया और छैः बाण उस पर चलाये॥ २६॥

आठ बाण चारों घोडों को दो सारथि को मारे तीन से रथ की ध्वजा काटी तब रुक्मी दुसरा धनुष लेकर पांच बाण श्रीकृष्णजी पर चलाता हुआ॥ २७॥

उन बाणों के लगने से श्रीकृष्णजी ने फिर उसका धनुष काटा फिर उसने दुसरा धनुष लिया उसको भी अव्यय भगवान् ने छेदन करदिया॥ २८

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

तदनन्तरं परिघादीनि चाच्छिनत् आत्तानीति शेषः तत्र शक्तितोमरानिति बाहुल्यापेक्षया शक्तितोमराविति पाठः क्वचित् पट्टिशास्त्रयोः शूलशक्त्योश्च ईषदाकारादिभेदः तोमरः शल्यभेदः अन्यच्च बहुलं यद्यदाददात् आदातुं समर्थ अर्सीदित्यर्थः। हरिर्दुष्टसंहारी तत्सर्वमाच्छिनदित्येव पाठः छन्दोभङ्गोऽप्यार्षः बहुसम्प्रदायसिद्धश्चायं सम्प्रदायान्तरेषु पाठान्तराणि तु मिथो विप्रतिपन्नानि॥ २९॥

अभ्यद्रवत् आभिमुख्येनाधावत्॥ ३०॥

तिग्ममसिं यद्वा तेजसा तीक्ष्णमपि रुक्मिणम्॥ ३१॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

भ्रातुः केनापि दैवेन साक्षात्क्रूरतां प्राप्तस्य वधोद्यमं दृष्ट्वा भयं लोकापवादात् कारुण्यञ्च वा तेन विह्वला। ननु तादृशदुष्टकर्मणो वधो युक्त एव तत्राह—। सती पण्डिता सर्वज्ञेत्यर्थः। अयमति क्षुद्रः श्रीभगवति न किञ्चिदनिष्टं विधातुं शक्नोति केवलमज्ञानेनैव घातकीव दीनोऽयं विचेष्टते ततो मिमानन्यशरणाया देहसम्बन्धधारित्वयस्मिन्नस्य वधैव युक्तेति विचारसमर्थेत्यर्थः। श्रीकृष्णस्य त्वयमभिप्रायः मयि किमपि न कर्तुं शक्नोत्यसाविति सत्यमेव किन्त्वस्यां तादृशविपत्सम्पादकेच्छां कथमस्य सोढुं शक्नुयामित्यस्याः प्रार्थनया रक्षितप्राणस्यापि तादृशदुष्टेच्छामर्दनी परमा मनोग्लानिस्तु सदानुवर्त्तनीयेति ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततः परिघादिकमपि यद्यदादत्ते तत्सर्वमप्यच्छिनत् ॥ २९ ॥

तत इति। खड्गः पाणौ यस्य स रुक्मी रथादवप्लुत्य हन्तुमिच्छया पतङ्गः शलभः पावकमिव कृष्णमभ्यपतत् ॥ ३० ॥

आपततस्तस्य रुक्मिणः खड्गं चर्म खेटं चेषुभिस्तिलप्रमाणशश्चिच्छेद एवं छित्वा रुक्मिणं हन्तुं निशितं खड्गमादत्त ॥ ३१ ॥

तदा भ्रातृवधार्थमुद्योगं प्रयत्नं दृष्ट्वा भयकम्पिता सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथा तथोवाच ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पारिघं परिघातनं पट्टिशं लोहदण्डं शक्तितोमरैः सह चिच्छेद द्विमुखस्तोमरः ॥ २६—३३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दृष्ट्वेत्यादि। एतदनन्तरं द्रष्टव्यम् एव मेव सतीति पण्डिता सर्वज्ञेत्यर्थः ॥ ३२—४३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः परिघादीन् गृहीतवान् चर्मासीति दीर्घः छान्दसः चर्मादिपदमेकं तोमरान्तं किम्बहुना यद्यदायुधमाददात् देवनादिप्रेरणया स्वतो वा तत्सर्वमेवाच्छिनत् एवं करणे सामर्थ्यं विभुरिति ॥ २९ ॥

ततोऽतियत्नेन सर्वभावेनागत इत्याह—ततो रथादवप्लुत्येति। केवलं खड्गपाणिः नतु चर्मापि जिघांसयेति जीवनिरपेक्षः आत्मानमेव भगवद्द्वारा मारयितुं कृष्णं परमानन्दमभ्यद्रवत् युक्तमेव हि प्राकृतं परित्यज्य परमानन्दो प्राप्य इति तथापि शरीरं प्रियं सर्वस्यापीति कथं समागत इतिचेत् तत्राह—पतङ्ग इव पावकमिति। ते हि सूक्ष्मा अज्ञानात्मानं पातयित्वा परमार्थदृष्ट्या कृतार्था भविष्यन्तीति बाह्यदृष्ट्या तु अग्निं मारयिष्याम इति बुद्ध्या प्रवृत्ताः स्वयं म्रियन्ते तथायमपि प्रवृत्त इत्यर्थः ॥ ३० ॥

ततो भगवानक्लिष्टकर्मा तस्याभिलषितं कुर्वन् "ये यथा मां प्रपद्यन्ते" इति च वदन् वाक्यं सत्यं कुर्वन् तन्मारणार्थं प्रवृत्त इत्याह—तस्य चापतत इति। तादृशस्यापि खड्गं चर्म च इषुभिश्चिच्छेद चर्मापि गृहीतं खड्गकोशो वा तिलशः छेदः स्वशौर्यख्यापनार्थं मद्रुधिरमेव वा तत्र प्रवहज्जलात्मकं सत् तस्य परलोके उपतिष्ठेतेति तत्सतिलं कृतवान् इत्यर्थः। एवं धनुरघातकमिति निर्जीवान् छित्वा तद्वधार्थं खड्गं गृहीतवानित्याह—असिमादद इति। अस्मिन् हते जगति स्वरूपाज्ञानं निवर्त्तेतैव यतोऽयं रुक्मी मुख्यो भगवद्द्विट् अतो भगवान् तं हन्तुमुद्यतो जातः नतु मारितवान् ॥ ३१ ॥

एवं स्वरूपाज्ञाननाशो मायाया हितकारी न भवतीति रुक्मिणी तन्निषेधार्थं प्रवृत्तेत्याह—दृष्ट्वेति। रुक्मिणी प्रार्थयितुमुवाच यद्यपि दुष्टो भवति तथापि स्वार्थं तावत्करोति इति यदर्थं यो यतते तेन प्रतिकर्त्तव्यमिति तस्या उद्योगः तत्रापि भ्राता तस्यापि वधोद्योगः तत्रापि वधात्पूर्वं स्वयं दृष्टः स्वयं च रुक्मिणी तत्सम्बन्धिनी पश्चाद्भयेन विह्वला जाता क्रोधे कदाचिदात्मानमपि मारयेत् लोके चापकीर्त्तिर्भवेत् बलाद्भगवन्तमाहूय भ्रातरं मारितवतीति बहव एव पक्षाः भयहेतवो वर्त्तन्ते अतो भयैः कृत्वा विह्वला स्वयमपि शुष्कानना जाता अत्यन्तं विज्ञाप उपायान्तरमलभमाना मत्पतिरयमिति भर्त्तुः पादयोः पतित्वा उक्तवती चरणपातेन देहेन निवारणं विह्वलतया मनसा निवारणं वाचा च निवारयति। नन्वीश्वरो भगवान् कथमेतन्निवारितो निवर्त्तेतेति चेत्तत्राह—करुणमिति। करुणं यथा भवति तथोवाच नतु प्रौढ्या किञ्च पतिव्रताया नान्य उपायोऽस्ति सर्वत्र भर्तृमार्गमाऽव्यतिरेकेण तदाह—सतीति ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भगिन्याः पुरत एव भ्रातुर्वधोऽभूदिति श्रुत्वा लोका मां किं वदिष्यन्तीति भयविह्वला नतु स्नेहविह्वलेयत आसां पुरसुभ्रुवां लोकधर्मापेक्षासहित एव समञ्जसः प्रेमा नतु गोष्ठसुभ्रुवामिव लोकधर्मापेक्षा रहितः समर्थः प्रेमा अतिप्रबल इति ज्ञेयः "अनन्यममता विष्णौ ममता प्रेमसङ्गते"ति प्रेमसामान्यलक्षणस्याव्याप्तिरप्यासु नाशङ्क्या रुक्मिप्रभृतिष्वासामन्तःस्नेहाभावादित्युपरिष्टादपि यथा स्थानं व्याख्येयम् ॥ ३२ ॥

---

### भाषा टीका।

परिघ पट्टिश त्रिशूल ढाल तरवार शक्ति तोमर जिस जिस आयुध को रुक्मी लेता गया उस उस को श्रीकृष्ण भगवान् काटते गये ॥ २९ ॥

विभ० पाठः ( रुक्मिण्युवाच । )

योगेश्वराप्रमेयात्मन्देवदेव ! जगत्पते ! ।

हन्तुं नार्हसि कल्याण ! भ्रातरं मे महाभुज ! ॥ ३३ ॥

श्रीशुक उवाच ।

विभ० पाठः ( इत्युक्त्वा जगृहे पादौ कृपणा दीनभाषिणी ।

भ्रातरं त्रातुकामा सा कृष्णस्य जगतीपतेः ॥ )

तया परित्रासविकम्पिताङ्गया शुचावशुष्यन्मुखरुद्धकण्ठया ।

कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्त्तत ॥ ३४ ॥

चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन्व्यरूपयत् ।

तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥ ३५ ॥

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ।

तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ।

विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥ ३६ ॥

भाषा टीका ।

फिरतो रुक्मी श्रीकृष्ण के मारने की इच्छा से रथसे उतर कर हाथ में तरवार लेकर बडे क्रोध से जैसे पतंगा आग पर दौडै तैसे श्रीकृष्ण के तरफ दौडा ॥ ३० ॥

दौडे आते हुये रुक्मी के ढाल तरवार दोनों को भगवान् ने बाणो से तिल सरीका काट दिया फिर बडी तीक्ष्ण तरवार को लेकर उसको मारने को उद्यत भये ॥ ३१ ॥

भ्राता के वधका उद्योग देखकर रुक्मिणीजी भयसे विह्वल होगई और सती रुक्मिणीजी श्रीकृष्ण के चरणों मे गिरकर बडी करुणा से बोलने लगीं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परित्रासेन विकम्पितान्यङ्गानि यस्यास्तया शुचा शोकेनावशुष्यन्मुखं यस्याः रुद्धः कण्ठो यस्याः सा च सा च तथा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया गृहीतौ पादौ यस्य सः ॥ ३४ ॥

सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन्मुण्डयन्व्यरूपयद्विरूपमकरोत् ॥ ३५ ॥

तथाभूतं हतप्रायमित्युत्तरवाक्येऽप्यनुषङ्गः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तथैवाह— । योगेश्वर ! हे अतर्क्यैश्वर्य्य अप्रमेयात्मन् हे अपरिच्छिन्नमूर्त्ते ! अत एव हे देवदेव ! ब्रह्मादीनामप्याराध्य किञ्च जगत्पते सर्वेषामपि पालक अतः सर्वेषामपि त्वत्तस्तुच्छज्ञानबलमाहात्म्यत्वात्त्वया पालनीयत्वाच्च हन्तुं हननमात्राय नार्हस्येव तत्रापि हे कल्याणेति सर्वमङ्गलत्वात्सुतरां नार्हसि तत्रापि मे मम त्वदनन्यनाथाया भ्रातरं सुतरामेवेत्यर्थः । लीलाव्यवहारतश्च परमवीरस्त्वं नैतद्विधं क्षुद्रं हन्तुमर्हसीत्याह— महाभुजेति ॥ ३३ ॥

करुणस्तस्यां कृपावानित्यर्थः । यद्वा स्वभावतः करुणः विशेषतश्च तया तथाभूतया गृहीतपादः ॥ ३४ ॥

चैलेन तदीयेनैव शिरोवेष्टनवस्त्रेण प्रवपन् तेनैवासिनेति शेषः तथास्युत्थितक्षेपलाघवेनैव ज्ञेयम् । सश्मश्रुकेशमिति । श्मश्रुकेशाभ्यां सह वर्त्तमानं यथा स्यादित्येव विग्रहपूर्वकोऽर्थः बहुव्रीहिणैव क्रियाविशेषणत्वासिद्धेः टीकायां तु निर्गलितार्थ एव दर्शितः अत्र स इत्यध्याहार्यम् । यद्वा स श्रीकृष्णः श्मश्रुकेशमिति द्वन्द्वैक्यं व्यरूपयदिति तादृशविरूपतापि सम्भवतीति तथाच व्याख्येयं तावदिति । रुक्मिपराजयं यावदित्यर्थः । उद्धतं महासाहसादियुक्तमपि ॥ ३५ ॥

कृष्णान्तिकमित्यर्द्धकम् । ददृशुर्यदुप्रवीरा इत्येव ज्ञेयम् एवमत्रापि तथाभूतं हतप्रायमिति रुक्मिविशेषणत्वेन योज्यम् तथाभूतं प्राप्तवैरूप्यादिकम् अत एव हतप्रायं ननु तादृशमहापराधिनो विमोको नहि युज्यते तत्राह । भगवान् सर्वज्ञः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

रुक्मिणीवत् तत्तज्जानाति तथा रुक्मिण्याः दुःखं श्रीकृष्णस्य भाविलीलां चेत्यर्थः । अत एव करुणः श्रीकृष्णस्य प्रथमवैवाहिकसम्बन्धाश्चेति भावः । कृष्णमित्युपलक्षणं रुक्मिणीं चेति ज्ञेयं लज्जाहेतो रुक्मिणीं च कृष्णमेव दृष्ट्वाब्रवीदिति तस्यैव प्राधान्यात् ॥ ३९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

करुणः । कृपावान् व्यरूपयत् वैरूप्यमापादयन् प्रावयत् श्मश्रुकेशशून्यमकरोत् वैरूप्यं हि वपतस्तस्मादभूदित्यर्थः ॥ ३५-३७

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह-योगेश्वरेति । हे योगेश्वर ! योगनिर्वाहक योगीश्वरेति पाठे योगिहृत्कमलाभिव्यक्त तन्नियन्तश्चेत्यर्थः । योगपरिशुद्धमनोग्राह्यस्य तव स्वरूपस्वभावादिकं कथमयं देहाभिमानी विन्द्यादतोऽयं मूढः केवलमनुग्राह्य एवेति तत्सम्बोधनाभिप्रायः न-चसाधुलोकदमनार्थमवतीर्णोऽहमेनं निगृह्णाम्येवेत्यतः सम्बोधयति हे जगत्पते ! शरणागतजगत्पालक नायं शरणागतोऽपि तु कृतापराध एवेत्यत आह मे शरणागताया मम भ्रातरं हन्तुं नार्हसीति शरण्यत्वोपयुक्तं परत्ववात्सल्यसौशील्यादिकमपि सम्बोधनेनैवाह देवानां ब्रह्मादीनामपि देव ! अप्रमेयात्मन् ! अपारवात्सल्यसौशील्यादिस्वभावस्वरूप ! लोकदृष्ट्याधुना तथैतद्वधो नोचित इति सम्बोधयति कल्याणेति । आरब्धे विवाहरूपे कल्याणेऽपरिसमाप्त एवान्तरा मद्भ्रातृवधोऽनुचित इत्यर्थः । अहो दृष्टं सवद्गस्य त्वद्भुजस्य सौन्दर्यमिति साक्षेपं सम्बोधयति महाभुजेति ॥३३॥

तयेति । परित्रासेन परितो भयेन विशेषतः कम्पितान्यङ्गानि यस्याः शुचा शोकेनावशुष्यन् मुखं यस्याः रुद्धः कण्ठो यस्याः सा च सा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्याः तया रुक्मिण्या गृहीतौ पादौ यस्य सः करुणः करुणावान् न्यवर्तत रुक्मिवधादिति शेषः ॥ ३४ ॥

चैलेनेति । ततस्तमसाधुकारिणं रुक्मिणं चैलेन वस्त्रेण बद्ध्वा सश्मश्रुकेशं संहतानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् मुण्डयन् विरूपमकरोत् नलिनीं यथा गजा इति दृष्टान्तेनानायासो खेलनमात्रं चाभिप्रेतम् ॥ ३५ ॥

कृष्णान्तिकमिति । ददृशुर्यदुप्रवीरा इति कर्तृपदानुषङ्गः भगवान् सङ्कर्षणस्तथाभूतं विरूपतामापन्नं हतप्रायं हततुल्यं रुक्मिणं दृष्ट्वा स करुणो बन्धं विमुच्य कृष्णमब्रवीत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परित्रासेन परितो भयेन कम्पितमङ्गं यस्याः सा तथा तया शुष्यन्मुखा च रुद्धकण्ठा च तया करुणः करुणाकरः ॥ ३४ ॥

प्रवपन्नपमं मुण्डनं कुर्वन् व्यरूपयत् सौन्दर्यहीनमकरोत् ॥ ३५ ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

योगेश्वरेत्यादि । हन्तुं नार्हसि मे भ्रातरं मद्भ्रातृत्वमेवास्य वधे कारणं नान्यत् किमपीति भावः । लक्ष्मीभ्रातरं कौस्तुभं वक्षसि बिभर्षि कथमयं हन्तव्य इति गूढोऽभिप्रायः यतस्त्वं योगेश्वरः तेन तवैतत्कृतद्वेषेण किम् द्वेषेण योगेश्वरस्यापि क्षोभो भवतीत्याशङ्क्याह—हे अप्रमेयात्मन् ! अप्रमेयविग्रह यादवत्वात् प्रमेय एवाहमित्याह— देवदेव ! देवानां श्रीनारायणादीनामपि देव तथाभूतश्चेदहं तत्कथं नरलोकवर्तीत्याह-जगत्पते ! जगन्नाथ जगत्पतित्वात् जगत एव हितार्थमवतीर्णोऽसीत्यर्थः ॥३३॥

श्रीशुकदेवस्तत्कालीनां तस्याः कातर्यमुद्रां स्मृत्वा सामोदमाह । तया परित्रासेत्यादि । भगवानपि तस्याः तथाविधकातर्यावलोकनकौतुकाय तद्वाक्श्रवणाय च तथाव्यवसितं भ्रातुर्विरूपकरणं च तस्याश्चेतः परीक्षणार्थमेव ॥ ३४—५२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्या वाक्यमाह— योगेश्वरेति । ननु मारणार्थं समागतः कथं निवार्यत इति चेत्तत्राह—योगेश्वरेति । भगवान् योगस्य नियन्ता अनेकानेवोपायान् जानाति किं वधेनेति भावः । अनेन वाक्येन भगवता वधानुकल्पो मुण्डनं कृतं तत्र रुक्मिणी मदुक्तमेव कृतमिति ज्ञात्वा मुण्डनमनिवार्यं वाचाप्यनुक्त्वा अन्तस्तापं कृतवती तदर्थं बलभद्रस्य सान्त्वनमित्यवगम्यम् अनेन मारयितुं समागतः भ्राता तव मारयेच्चेत् तदा तव सुखं भवेदित्युपालम्भोऽपि निवारितः किञ्च अप्रमेयात्मन्निति प्रमातुमप्ययोग्य आत्मा स्वरूपं यस्य किम्पुनः क्रियाविषयो भविष्यतीति शङ्कापि निवारिता क्रिययैवानिष्टशङ्केति किञ्च देवानामपि देवस्त्वं देवा एवामराः तत्र तव समागतस्यापि का चिन्ता भवेत् किञ्च जगत्पत इति तस्यापि त्वं पतिः रक्षकः अतः शिक्षैव कर्त्तव्या अत एव हन्तुं नार्हसि सुतरामिदानीं कल्याण ! अद्यैव कृतविवाहः तत्रापि मे भ्रातरं शालको हि विवाहदिवसे मान्य इति पश्चादपकारं करिष्यतीति चेत् तत्राह—महाभुजेति । महान् भुजः क्रियाशक्तिर्यस्येति सम्बोधनेन समाधानार्थं सामर्थ्यं स्मारितम् ॥ ३३ ॥

एवं विज्ञापितः वधान्निवृत्तो वधानुकल्पं कृतवानित्याह— तया परित्रासेन विकम्पितमङ्गं यस्याः शोकेन च शुष्यन्मुखं रुद्धश्च कण्ठो यस्याः कातरतया विस्रंसिताः केशाः मालाश्च यस्याः गुणत्रयकार्यं तस्यां पूर्णं जातमित्युक्तं भवति परित्रासः सत्त्वस्य शोकः तमसः कातरता रजस इति एवं विद्यमानानां गुणानामपगमात् केवलं सा दीनेति तादृश्या गृहीतपादः करुणावानेव न्यवर्तत ॥ ३४ ॥

वधानुकल्पो हि वपनं मुख्यं द्रविणादानं च स्थानाद्नि-

भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ।
पुरमानीय विधिवदुपयेमे कुरूद्वह ! ॥ ५३ ॥
तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप ! ॥ ५४ ॥
नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ।
पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥ ५५ ॥
सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमाल्याम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधूपदीपकैः ॥ ५६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं रुक्मिण्याः समाधानमुक्त्वा रुक्मिणः परित्याग एव उभयेषां सुखदो भवतीति तत्परित्यागमाह—प्राणावशेष इति । बलभद्रेण मोचनेऽप्यसहायात् अन्येन मारणं सम्भवतीति छिद्रभिरुत्सृष्टस्त्यक्तः हतं बलं प्रभा च यस्य छिद्रभिरेवेति तस्यान्यद्विस्मृतं विरूपकरणन्तु स्मरति—जाते विरूपे यदि स्वाभिलषितः कश्चित् सिद्ध्येत् तदा न तथा खिन्नो भवेत् किन्तु वितथः आत्मनो मनोरथो यस्य तथापि स्वप्रतिज्ञां नान्यथा कृतवान् भगवता हि तस्य भगिनी परिगृहीतेति ॥ ५१ ॥

अत एव कुण्डिनं पुरं परित्यज्य अन्यत्रैव स्थित इत्याह—अहत्वेति । यतोऽयं दुर्मतिस्तत्रैवावसत् यत्र मुण्डितः भोजा हि मृतकर्पटग्राहकाः जात्यपकर्षे भोजो यवना इति यवनात्पूर्वं निरूपिताः तस्य कट इति मरणपर्यन्तं तत्रैव स्थास्यामीति तस्य ग्रामस्य नाम भोजकटमिति कृतवान् यद्यपि न कोऽपि पुरुषार्थः मद्यसत्प्रतिज्ञाया अपालने कश्चन दोषोऽस्ति तथापि भ्रातृत्वाग्रहेण तत्रैव स्थितः ॥ ५२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यस्मादेवं तस्मात् स्वस्था स्वभावस्था भव हे शुचिस्मिते ! मुखस्य स्वाभाविकीं प्रफुल्लतां प्रकाशय न त्वं प्राकृती सांसारिकी वधूरिति भावः ॥ ४९ ॥

लोका मां किं वदिष्यन्तीति वैमनस्यं चिन्तां समादधे समाहितमकरोत् ॥ ५० ॥

छिद्भिरित्यनेन कृष्णपार्श्वात्ततः पद्भ्यां चलन् यदुसैन्यैरपि तिरस्कारभर्त्सनताडनादिभिः सविडम्बित इति बुध्यते॥५१॥

दुःखं भुङ्क्ते इति भोजो रुक्मी तस्य कटः शपथो यत्र तत् "कट कलिङ्गे शपथे गजगण्डे कटावपि" इति नानार्थात् तत्र स्वविरूपीकरणप्रदेशे ॥ ५२—५३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे शुचिस्मिते ! आत्मानं शोषयति विमोहयति चेति तथा तम् लीलासौष्ठवार्थं विडम्बितं निर्हृत्य अपाकृत्य ॥ ४९—५३ ॥

———

भाषा टीका ।

हे मन्दहासवाली रुक्मिणीजी ! तिससे अज्ञान जनित आत्माको सुखाने वाला मोह करने वाला जो शोकहै तिसको तत्वज्ञानके द्वारा दूर करके प्रसन्न हो जाओ ॥ ४९ ॥

श्रीशुक उवाच ।

इस प्रकार से भगवान् बलभद्रजी के समझाने से रुक्मिणीजीने उदासी को छोड़ दिया उत्तम बुद्धिसे मनका समाधान कर लिया ॥ ५० ॥

रुक्मी तो शत्रुओंके मारनेसे प्राण मात्र से बचा रहा और बल तेज उसका सब नष्ट होगया अपने कुरूप को स्मरण करके दुःखी भया मनोरथ भी उसका पूरा नहीं भया ॥ ५१ ॥

तबतो कहने लगा कि दुर्बुद्धि कृष्णको मैंने नहीं जीता रुक्मिणी नहीं लौटाई तो अब कुण्डिन नगर में प्रवेश नहीं करूंगा ऐसा कह कर भोजकटनाम ग्राम बनाकर वहीं रह गया ॥ ५२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरयोर्वरवध्वोः पारिबर्हं देयमुपस्करम् ॥ ५५ ॥
उत्तभितैरिन्द्रकेतुभिर्ध्वजविशेषैः उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पप्रकरादीनि तैः ॥ ५६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

जयतेर्द्विकर्मकत्वात्कर्मद्वयं तान् पराभवन् तामाच्छिद्येत्यर्थः तत्रानीयोपयेमे इत्यनेन भीष्मकसुतामित्यस्य मुख्यत्वेनान्वयः ५३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

गृहे गृह इति अत्र हेतुः न विद्यते श्रीकृष्णादन्यस्मिन् भावः प्रेमा येषाम् ॥ ५४ ॥

वरयोर्वरवध्वोरिति स्वस्रोरितिवत् चित्रं नानावर्णं वासो ययोरिति विवाहे शोभाविशेष उक्तः ॥ ५५ ॥

सेति युग्मकम् मालादीनां तोरणानि तैः उप आधिक्येन शोभिता ॥ ५६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

उत्तभितैः स्थापितैः उपकृप्तमङ्गलैः कृतमङ्गलद्रव्यर्दीपैश्च ॥ ५६—६० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

भगवानिति। पुरं प्रति प्रापय्य यदूद्वहो भगवान् यथाविधि विवाहितवान् ॥ ५३ ॥

तदेति। तदा उद्वाहदिनेष्वित्यर्थः। उत्सवो बभूव कथंभूतानां यदुपतौ कृष्णे अनन्यभावानाम् एकान्तस्नेहानाम् ॥ ५४ ॥

नरा इति। प्रमृष्टानि निर्मलीकृतानि मणिमयकुण्डलानि येषां यासां च ते ताश्च वरयोर्वरवध्वोः देयं पारिबर्हमुपस्करमानिन्युः ॥ ५५ ॥

तत्कालिकीं पुरीमालक्षयति—सेति। उत्तभितैरुद्धृत्य प्रतिष्ठितैरिन्द्रकेतुभिः ध्वजकेतुविशेषैर्विचित्रैर्माल्यादिभिश्च गृहाणां द्वारे द्वारे उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पकुटकादीनि तैश्च समन्तात् पूर्णैः कुम्भैरगुरुधूपैर्दीपैश्च वृष्णीनां सा पुरी द्वारका बभौ ॥ ५६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यदुत कृष्णे अनन्यभावानाम् अन्यः शत्रुरिति भावरहितानां निरतिशयभक्तियुक्तानामित्यर्थः ॥ ५४—५५ ॥

उत्तभितेन्द्रकेतुभिः उत्क्षिप्तेन्द्रध्वजैः ॥ ५६—५७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो भगवतः कृत्यमाह—भगवानिति। यद्यपि सर्वथा निर्दुष्टा सर्वैस्त्यक्तममत्वास्तथापि भगवान् वीर्यशुल्केन विवाहं कर्त्तुमेवं प्रकारेण भूमिपान् निर्जित्य गान्धर्वन्यायेन तामगृहीत्वा उपनयनवत् विवाहस्यापि संस्कारत्वात् सर्वसम्मत्यर्थं स्वपुरीमानीय उपयेमे विधानपूर्वकं विवाहं कृतवान् क्षत्रियाः प्रायेणैवं न कुर्वन्तीति भगवानपि न कृतवानेव किन्तु सद्धुक्त्यर्थं वदतीति शङ्का स्यात् तत्परिहरति सम्बोधनेन कुरूद्वहेति सर्वेषां सम्मत्या विवाहः कृत इति ॥ ५३ ॥

निरूपणार्थं महोत्सवमाह—तदा महोत्सव इति। नृणामिति न केवलं बन्धूनामपि तु सर्वेषामेवेति आह—यदुपुर्यां द्वारकायां तत्र न कोऽपि विसम्मत इत्यर्थः। यादवानामपि वैमनस्यं परस्परं सम्भवतीति तदर्थमाह—अनन्यभावानामिति। ननु यादवाः उद्धताः स्वभावतः कथमनन्यभावा जाता इत्याशङ्क्याह—कृष्णे यदुपताविति। यदा यादवानां भगवान् पतिर्जातः तदा ते तथा जाता इत्यर्थः। नृपेति सम्बोधनं विश्वासार्थं यथा भवान् जात इति ॥ ५४ ॥

भगवता पारिबर्हमस्मिन् विवाहे न प्राप्तमिति तदभावे विवाहशोभा च न तथेति तदर्थमाह—नरा नार्यः प्रमुदिता इति। स्वयमलङ्कृताः पूर्णाः वरयोश्चित्रवाससोः अलङ्कृतयोरपि पारिबर्हमुपाजह्रुः। ननु नियमाभावात् किमिति तथा कृतवन्त इतिचेत् तत्राह—वरयोरिति। वरयोस्तथा कर्त्तव्यमेवेति यथैव दाक्षिणात्याचारः विवाह एव प्रथममुपस्थित इति अकस्माच्च भगवानागत इति ॥ ५५ ॥

विशेषतस्तदर्थमलङ्करणाभावेऽपि स्वभावत एवालंकृतेत्याह—सा वृष्णिपुरीति। सा द्वारका उत्तभितैः ऊर्ध्वं स्थापितैः इन्द्राद्युच्चैः स्वर्गपर्यन्तं गतैः केतुभिः ध्वजाचिह्नैर्यैश्च बभौ अथवा इन्द्रकेतुः पारिजातः सुधर्मादिश्च अन्ये च कल्पवृक्षाः विचित्राणि माल्यानि अम्बराणि रत्नमयानि तोरणानि च स्वभावत एव विशेषतोऽपि प्रतिद्वारि उपकृप्तानि मङ्गलानि आपूर्णाः कुम्भाः अगरुधूपाः दीपाश्च एवमुपरि मध्ये अधश्च निवासस्थानानां शोभा निरूपिता ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अनन्यो एकान्तभावस्तद्वताम् ॥ ५४ ॥

वरयोर्वरवध्वोः ॥ ५५ ॥

उत्तभितैरत्युच्चैस्तम्भैरिवोत्तभितैरिन्द्रकेतुभिरिन्द्रपुरस्पर्द्धिपताकायुक्तैः ॥ ५६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वरयोर्वरवध्वोर्देयं पारिबर्हमुपस्करम् उपानिन्युः ॥ ५५ ॥

तदा उत्तभितैरिन्द्रकेतुभिः ध्वजविशेषैः विचित्रैर्माल्यादिभिश्च प्रतिद्वारि उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पपुटकादीनि तैः आपूर्णकुम्भागुरुधूपदीपकैश्च बभौ ॥ ५६ ॥

भाषा टीका।

हे परीक्षितजी ! श्रीकृष्ण भगवान् इस प्रकार से सब राजाओं को जीत कर रुक्मिणीजीको द्वारका में लाये फिर विधिपूर्वक विवाह किया ॥ ५३ ॥

उस समय मे श्रीकृष्णजी के यदुपति होने से सब मनुष्यों का बडा प्रेम बढा तब द्वारिका में सब के घर घर में बडा भारी उत्सव भया ॥ ५४ ॥

द्वारका के नरनारी सब आनन्दित भये और अच्छे उजले

सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ।
गजैर्द्वार्षु परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥
कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ।
मिथो मुमुदिरे तस्मिन् सम्भ्रमात्परिधावताम् ॥ ५८ ॥
रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः ।
राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ५९ ॥
द्वारकायामभूद्राजन् ! महामोदः पुरौकसाम् ।
रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियःपतिम् ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे श्रीरुक्मिण्युद्वाहे
चतुष्पञ्चाशत्तमोऽध्यायः॥५४॥

भाषा टीका ।

कुण्डल आदि भूषणों को पहर कर गये विचित्र वस्त्रों को पहरे हुये जो वरकुलहिन तिनको उनने बहुतसे भेट दिये ॥ ५५ ॥

वह यदुपुरी ऊंचे ध्वजापताकों से चित्र विचित्र फूल माला वस्त्रों से अन्दनवारों से रत्नों के तोरणों से सब द्वारों में रखे हुये जल पूर्ण घटों से मङ्गल चूर्णादि से अगर आदि के धूप और दीपों के लगने से बडी शोभा को प्राप्त भई ॥ ५६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

आहूताः प्रेष्ठा भूभुजस्तेषां गजैः परामृष्टा उच्छ्रिता रम्भाश्च पूगाश्च तैरुपशोभिता यद्वा तैरेव गजैः परामृष्टाः संस्पृष्टा रम्भाश्च पूगाश्च तैरुपशोभिता ॥ ५७ ॥

सम्भ्रमादौत्सुक्यात्परिधावतां बन्धूनां मध्ये मिथः समेत्य मुदं प्रापुः ॥ ५८—६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

सिक्तेति । वैर्व्याख्यातं तत्र प्रथमपक्षे मदच्युद्भिर्गजैः सिक्तमार्गा स्थाने स्थाने गजानां मदक्षरणात् उच्छ्रिता कर्तृतया स्थापिता रोपिता लोकैरित्यर्थः । तैरेवेति यैरेव सिक्तमार्गास्तैरेव संस्पृष्टा इत्यनेनानुपघातद्योतनाद्गजानां मत्तत्वेऽपि सुवश्यत्वं तले विलसद्भिस्तैरम्भादीनामत्युच्छ्रितत्वं शोभमानत्वं च व्यञ्जितम् ॥ ५७ ॥

प्रेष्ठभूभुज एव प्रायो निर्दिशंस्तेषामन्योऽप्यत्सङ्गल: प्रहर्षोदयमाह—कुर्विति । कुरवः श्रीभीष्मधृतराष्ट्रपाण्डवादयः सृञ्जयाः द्रुपदाद्याः कैकेयाः सन्तर्दनादयः विदर्भा इति कन्याक्षेहात् क्षत्रियेषु तादृशहरणस्य प्रशस्यत्वेन पूर्वमेव च श्रीकृष्णस्य स्वाभिरुचितत्वेन योग्यवरलाभात् प्रायः श्रीबलदेवादिभिर्मुनिजनादिद्वारा बोधयित्वा तेषामानीतत्वेनासङ्कोचाच्च श्रीभीष्मकादीनामप्यागमनं बोध्यते ते च भीष्मकक्रथकैशिकादयः यदव उग्रसेनादयः तद्भेदाच्छ्रीनन्दादयोऽपीत्येके तथा पाद्मोत्तरखण्डे ।

नन्दगोपोऽथ गोपालैर्गोपवृद्धैः समागतः ।
खलङ्कृताभिर्योषिद्भिर्यशोदापि समागतेति ॥

अत्राभिप्रायविशेषेण पूर्वमेव श्रीव्रजेश्वरस्य सम्मतिप्रार्थना कंसवधानन्तरं " ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुख"मित्यत्रैव सूचिता कुन्तयः कुन्तिभोजाद्याः परितः तद्विवाहयोग्यस्वस्वप्रयोजनार्थमितस्ततो धावताम् ॥ ५८ ॥

ततस्ततः स्वस्वदेशे भृशमत्यर्थं विस्मिताः तेन प्रकारेण हरणात् तत्र सतामाकाङ्क्षाजनिष्ट असतां तु भयमिति विशेषो ज्ञेयः ॥ ५९ ॥

विवाहानन्तरं च द्वयोः सुखसङ्गतिदर्शनात् द्वारकावासिनः सर्वे परमानन्दतुन्दिला बभूवुरित्याह । द्वारकायामिति । कृष्णं स्वयं भगवन्तम् अतः श्रियः सर्वाश्रयभूतायाः परमलक्ष्म्याः पतिमिति तस्मै तादृशी श्रीरवद्यमपेक्षत इति भावः । सा चाधुना मिलितैवेत्याह । रमयेति । तस्यापि रमणहेतुत्वेन तन्नाम्न्या अतो महान् मोदः सर्वोत्कृष्टानन्दोऽभूत् ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषण्याम्
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

———

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुष्पञ्चाशत्तमोऽध्यायः ॥५४॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सिक्तेति । आहूता ये ये प्रेष्ठा भूभुजो नृपास्तेषां तेषां सम्बन्धिभिर्मदोदकं स्रवद्भिः गजैः सिक्ता गजमदोदकैः सिक्ता इत्यर्थः । ते मार्गा वीथयो यस्यां सा तथा द्वार्षु परामृष्टा उच्छ्रिता रम्भाः कदल्यः ताभिः पूगैश्चोपशोभिता अलङ्कृता च बभौ ॥ ५७ ॥

कुर्विति । सम्भ्रमादौत्सुक्यात् परितो वीथीषु धावतां सञ्चरतां बन्धूनां मध्ये कुर्वादयो मिथः समेत्य मुदं प्राप्ताः ॥ ५८ ॥

रुक्मिण्या हरणमिति । ततस्ततस्तत्र तत्र देशेषु गीयमानं रुक्मिण्यानयनात्मकं भगवच्चेष्टितं श्रुत्वा नितरां विस्मिता बभूवुः ॥ ५९ ॥

द्वारकायामिति । हे राजन् ! रमया लक्ष्म्यवताररूपया रुक्मिण्या सहितं श्रियः पतिं श्रीकृष्णं दृष्ट्वा पुरवासिनां महान्मोदो बभूव ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आहूतप्रेष्ठभूभुजाङ्गजैर्जुष्टेति शेषः वास्तुपरामृष्टा गृहदेवता-संयुक्ता यद्वा वास्तुपरामृष्टा त्यक्तरजोगृहा ॥ ५७ ॥

तस्मिन्नगरे परिधावत इतस्ततो धावन्तः ॥ ५८—६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥
( विजयध्वजतीर्थरीत्या एकोनषष्टितमः ) ॥ ५९ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

कृष्णमित्यादि । श्रियःपतिमिति श्रीपतित्वं प्रकटयति रुक्मिण्यां ये तमिति ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मार्गाणामाह--सिक्तमार्गेति । आहूता ये प्रेष्ठाः प्रियतमा राजानः तेषां मदच्युद्भिः गजगण्डनिःसृतमदैरेव सिक्ता मार्गा जाता अत्र विशेषतः सम्मार्जनादौ नावकाशो जात इत्यर्थः । द्वारि तु कृतमित्याह--द्वार्ष्विति । परा परामृष्टाः परितः स्थापिता ये रम्भादयः तैरुपशोभिता जाते विवाहे पश्चादानीय कृतमिति परामर्शः ॥ ५७ ॥

बहुविधा अपि क्षत्रिया अन्योऽन्यं वैरं विहाय स्वभावतः द्वेषयुक्ता अपि रुक्मिण्या सहिते भगवति मिथो मुमुदिरे कौरवाः दुर्योधनादयः सृञ्जयाः पाण्डवाः पाञ्चाला धृष्टद्युम्नादयः ते ह्युभये अन्योऽन्यं वैरिणः कैकेयाः विदर्भाश्च तथा यादवाः कुन्तयश्च ते त्रिधा अपि परस्परविरोधिनः परस्परमेव मुमुदिरे किञ्च सम्भ्रमात्परिधावतां सम्बन्धिनोऽपि जाताः उत्सवसम्भूतिकरणार्थं तदीयाः सर्व एव व्यापृता जाता इत्यर्थः ॥ ५८ ॥

न केवलं यदुपुर्यामेव सम्भ्रमः किन्तु सर्वत्रैव लोके सम्भ्रमो जात इत्याह—रुक्मिण्या हरणं श्रुत्वेति । आश्चर्यहरणं भगवत्कृतं श्रुत्वा इतस्ततो गीयमानं सर्वत्र श्रुतत्वात् असम्भावनारहिता राजानः विस्मिता जाताः कथमेवं हृतामिति राजकन्याश्च विस्मिताः अस्मानपि नेष्यतीति ॥ ५९ ॥

एवं विशिष्टानां परमोत्सवमुक्त्वा साधारणानामपि परमोत्सवमाह—द्वारकायामिति । पुरौकसः साधारणाः नगरवासिनः नगरव्यापार एव निमग्नाः तेषामपि महान्मोदो जातः यद्यपि तेषां विवेको नास्ति तथापि वस्तुसामर्थ्यादेव ते तथा जाताः तदाह--रुक्मिण्या रमया लक्ष्म्या उपेतं सहितं कृष्णं स्त्रीणामेव हितार्थे अवतीर्णं श्रियः पतिं दृष्ट्वेति नित्यं हरिः श्रीसहितः आविर्भावः केवलस्यैवेति पुरवासिनां नित्यं स्त्रीप्रधानानां तथा मोदो न भवेत् अधुना तु पूर्णाभिव्यक्तिरेकत्रैव जातेति महानेव मोदः सन्तोषो जातः ॥ ६० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
पञ्चमाध्यायविवरणम् ॥५॥ ५४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मदच्युद्भिराहूतप्रेष्ठभूभुजां गजैर्द्वार्षु परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥

परिधावतां बन्धूनां मध्ये मिथः समेत्य ॥ ५८—६० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुष्पञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥५४॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आहूताः प्रेष्ठा ये भूभुजस्तेषां मदच्युद्भिर्गजैः संसिक्तमार्गा द्वार्षु परामृष्टा उच्छ्रिता रम्भाश्च पूगाश्च तैरुपशोभिता ॥ ५७ ॥

तस्मिन्महोत्सवे सम्भ्रमादौत्सुक्यात् परितो धावतां बन्धूनां

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मध्ये कुर्वादयो मिथः समेत्य मुमुदिरे मुदं प्रापुः ॥ ५८—६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

भाषा टीका ।

विवाह में बुलाये हुये प्रेमी राजाओं के जो मद चुवाने वाले हाथी तिनके मद से द्वारका का रस्ता भीज गायाथा और सब दरवाजों में उत्तम केलाके सुपारी के पेडों से द्वारका शोभित होगई थी ॥ ५७ ॥

कुरुवंशी सृञ्जयवंशी केकयवंशी विदर्भवंशी कुन्तिवंशी सब राजा लोग द्वारकामें इधर उधर दौडते हुये प्रेममें मगन होगयेथे ॥ ५८ ॥

जहां तहां गाते हुये रुक्मिणीजी के हरणको सुनकर सब देशके राजा तथा राजकन्या सब विस्मित होकर आनन्दित भये ॥ ५९ ॥

हे राजन्! परीक्षितजी द्वारकामें लक्ष्मी रूप रुक्मिणी के सहित श्रीपति कृष्णचन्द्रके दर्शन करने से सब द्वारका वासि मनुष्यों को बडा आनन्द भया ॥ ६० ॥

इति श्रीभागवत दशमस्कन्ध उत्तरार्ध में चौवन अध्यायकी
भाषा टीका समाप्त ॥ ५४ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्धे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

# पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

### श्रीशुक उवाच ।

कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना ।
देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥
स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः
प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥
तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम् ।
स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ॥ ३ ॥
तं निर्जगार बलवान् मीनः सोऽप्यपरैः सह ।
वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चपञ्चाशत्तमेतु प्रद्युम्नोऽजनि कृष्णतः ।
शम्बरेण हृतः सोऽथ हत्वा तं कान्तयागमत् ॥ १ ॥
प्रद्युम्नहानिलाभाद्यैः शम्बराहरणादिना ।
कुटुम्बिनामपत्यादिसुखदुःखमसूसुचत् ॥ २ ॥

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहास्ततः शम्बरागारात्प्रद्युम्नप्रत्यागमनम् अतः पुत्रकथनप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शम्बरेण हरणं निरूप्यते। प्रत्यागमनं तूत्तरकालीनमपि कथापर्यवसानायात्रोक्तमिति वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः सृष्टिहेतुत्वाच्च देहोपपत्तये देहप्राप्तये ॥ १ ॥

अनवमोऽन्यूनः ॥ २ ॥

स प्रसिद्धः कामशत्रुः शम्बरस्तमात्मनः शत्रुं विदित्वा हृत्वा समुद्रे प्रास्य प्रक्षिप्य गृहमगादिति ॥ ३ ॥

निर्जगार गिलितवान् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

कामस्त्वित्याद्यावेवं विवेचनीयं श्रुतिपञ्चरात्रादौ खलु वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः प्रसिद्धाः ते चेश्वराविर्भावा नित्याः प्राकृतकामस्त्विन्द्रभृत्यत्वेनैकादशादौ प्रसिद्धः वासुदेवाद्यस्तु द्विविधाः देवलीलामनुष्यलीलाश्च तत्र पूर्वे नारायणव्यूहस्तवादौ बहुविधाः अपरे च श्रीकृष्णाद्याख्याः तत्रपुराणादावुपासनायां तेभ्यो भेदेनोक्ताः ते च नित्याः यथा श्रीगोपालतापन्यां श्री मथुराप्रसङ्गे ।

यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः ।
रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति ।

तस्मात्प्राकृतकामस्य भगवद्व्यूहत्वासम्भवादयमर्थः । तुशब्दोभिन्नोपक्रमे वासुदेवस्य श्रीकृष्णादिलक्षणस्यांशः रौक्मिणेयादिलक्षणः प्रद्युम्नरूपो यत्रेति तस्मिन्नसावंशेन कलया विष्ट इत्यर्थः प्रद्युम्नविभूतिरूपः स कामो रुद्रमन्युना पूर्वं दग्धः अतो देहोपपत्तये तं श्रीवासुदेवांशं श्रीप्रद्युम्नमेव प्रत्यपद्यत देहस्य उपपत्तिर्नाम रुद्रेणानङ्गताविधानेन स्वतः प्राप्त्यसम्भवात् सामीप्येनान्यप्रसङ्गतोऽपि तत्प्राप्तिः तदर्थं तमुपास्य तत्सायुज्यं प्राप्तवानित्यर्थः । भूयःशब्देन स कामाख्यो जीवस्तस्मादाविर्भूत इति गमितम् अर्थान्तरं तु न सङ्गच्छते वासुदेवांशो दग्ध इति श्रीभागवतमतविरोधात् सङ्कल्पविकल्पात्मकान्मनस एव कामस्य प्रभवो न तु धारणमात्रात्मकात् चित्तात् तथा च कामो मनोविकाररूप एव स तु तद्देवतारूप इति विचारणासिद्धेः कष्टतापत्तेश्च ॥ १ ॥

तदेवं यः कृष्णवीर्यसमुद्भवः प्रतिकल्पं श्रीकृष्णांशाविर्भावी प्रद्युम्न इति विख्यातश्चतुर्व्यूहे प्रसिद्धः स एव वैदर्भ्यां जातः प्रादुर्भूतः प्राकृतकामस्य तु तत्र सायुज्यमेवेति भावः । तत्र हेतुः । सर्वत इति ॥ २ ॥

अत्र श्रीकृष्णलीलाकौतुकं वर्णयति। तमित्यादिना यावत्समाप्ति। कामरूपीति। मायया धात्र्यादिरूपेणेत्यर्थः । अनिर्दशामिति षष्ठेऽहीत्यर्थः । तथा च श्रीविष्णुपुराणे ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् ।
ममैष हन्तेति मुने ! हृतवान् कालशम्बरः ॥

इति ।

विदित्वेति । दुष्टशम्बरवधेच्छोः श्रीनारदात्कस्माच्चिदादेशिनो वा शत्रुं हनिष्यन्तम् अत्रायमभिसन्धिः श्रीहरिवंशे

विदितं तच्च कृष्णस्य देवमायानुवर्त्तिनः ।
ततो न निगृहीतः स दानवो युद्धदुर्मदः ॥

इति ॥ ३ ॥

बलवानिति । श्रीभगवदिच्छयैव तदानीं प्रकाशितात्पशक्ति श्रीप्रद्युम्नमतिक्रम्यापि शक्त्यतिशयोदयादित्यर्थः । एवमग्रे महतेति च स मीनः अपिशब्देन तादृशबलवानपि ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कामस्तु वासुदेवांश इति विशेषणं भाविजन्मप्रभृतिसम्बन्धादिनोक्तमतः चतुर्व्यूहेषु तृतीयव्यूहत्वमुच्यते कामसाम्यञ्च वह्निभूतित्वनिबन्धनम् ॥ १—२ ॥

अनिर्दशम् । दशाहानतीतम् ॥ ३—३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवतो रुक्मिण्याविवाहः सविस्तरमनुवर्णितः अथ जाम्बवत्यादिविवाहान् विवक्षुस्तेभ्यः प्रागेव प्रद्युम्नजन्मेति तदनुवर्णयति पञ्चपञ्चाशत्तमेन । काम इत्यादिना । यद्यपि शम्बरात्प्रत्यागमनादिकन्तु विवाहेभ्यः पाश्चात्यं तथापि कथापर्यवसायात्रोक्तमिति द्रष्टव्यम् । कामस्त्विति । कामो मन्मथः तस्य वासुदेवांश इति विशेषणेन भाविजन्मप्रभृतिसम्बन्धः कीर्तितः वासुदेवविभूतित्वाद्वासुदेवांशः अत एव पुनर्देहोपपत्तये देहसंयोगाय तमेव वासुदेवमेव प्रत्यपद्यतेत्युक्तं प्रत्यपद्यत भगवत्तनुमाश्रित्यावतस्थे इत्यर्थः । अनेन चतुर्व्यूहेषु तृतीयव्यूहविभूतित्वमुच्यते नामसाम्यं च वह्निभूतित्वनिबन्धनमेव ॥ १ ॥

स एव । काम एव कृष्णस्य भगवतो वीर्यात्सङ्कल्परूपज्ञानात्मकात्समुद्भवो यस्य सः वैदर्भ्यां रुक्मिण्यां जातः प्रद्युम्न इति विख्यातोऽभिहितः सर्वतः सर्वप्रकारेण पितुरनवमोऽन्यूनः तुल्य इत्यर्थः ॥ २ ॥

तमिति । स प्रसिद्धः कामशत्रुः शम्बरः तं प्रद्युम्नमात्मनः स्वस्य शत्रुं विदित्वा नारदमुखादिति शेषः । अनिर्दशमनतीतदशाहं तोकं शिशुं कामरूपी सन् हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यगात् ॥ ३ ॥

तं शिशुं कश्चिद्बलवान्मीनो मत्स्यो निर्जगार निगीर्णवान् ततः कदाचिन्मत्स्यजीविभिर्दाशैः सोऽपि मीनोऽप्यपरैर्मीनैः सह महता जालेन वृतः आवृतो गृहीतश्च ॥ ४ ॥

---

* श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कामस्त्विति द्वयम् ॥ १—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १ ॥

कृष्णवीर्यसमुद्भव इत्यादि । कृष्णस्य वीर्यमिव वीर्यं यस्य मध्यमपदलोपी समासः समुद्भवः सम्यक् प्रादुर्भावो यस्य स तथा पुनः कर्मधारयः अत एव पितुरनवमः अन्यथा चिदानन्दविग्रहस्य वीर्यमनुचितमिति ॥ २—२६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निरूपितो भगवतो भार्यावास्तु परिग्रहः ।
षष्ठाध्याये तु पुत्रस्य स्वीकारोऽत्र निरूप्यते ॥
लोके हि पुत्रभार्याणां सम्बन्धे स्यान्निसंसृतिः ।
दुष्टभावेषु संसृष्टास्तत्र कृष्णेन मोचिताः ॥
नचापि भगवान् कृष्णः कमप्यत्र निवारयेत् ।
भागिने यत्र यो भागी वृत्ते हि हरिसान्निध्यवत् ॥
अतः शम्बरनिर्मुक्तः पुत्रो जात इतीर्यते ।
पुत्रत्वं तु न कालादेः किन्तु स्वेच्छात एव हि ।
तादृशस्य हि जीवस्य ततः कामकथोच्यते ॥

पूर्वाध्यायैः भार्येच्छया भगवता भार्या कृता अत्रापि पुत्रेच्छया भगवता कामः पुत्रः कृत इत्याह—कामस्त्विति । कामस्योत्पत्तिर्न घटते कामेन हि भार्यायां प्रवृत्तिः अत आत्मानं प्रति स्वस्याकारणत्वात् कामोत्पत्तिरसङ्गतेत्याशङ्क्य तुशब्देन निराकरोति तत्र हेतुमाह—वासुदेवांश इति । स हि न जीवः किन्तु वासुदेवस्य मोक्षदातुः प्रपत्तिघटनाय कामो माया च अंशद्वयं विनिर्गतं पुरुषे स्त्रियां च प्रतिष्ठितं जगद्व्यामोहयति यथैव न प्रपन्नो भवति स तु सर्वान् व्यामोहयन् मुख्याधिकारिणं महादेवमपि व्यामोहयितुं प्रवृत्तः ततो रुद्रोऽपि सर्वेषामेवद्रावयतीति सर्वरोगनिवारकः काममपि रोगम्मत्वा क्रोधेन ददाह ततः प्रभृति नोद्गतः कामो लोके प्रवृत्तः अधिष्ठाता शक्तिरहितो जात इति नापि मोक्षदाता भगवानवतीर्णः यत्रायं विघ्नं वा कुर्यात् यदा पुनः कृष्ण आविर्भूतः तदा अक्षयदेहं सम्पादयितुं यथा रुद्रो न दहेत्तदर्थं तं भगवन्तमेव देहोपपत्तये प्रत्यपद्यत सदेह एव ततो निर्गमिष्यामीति पुनस्तत्र प्रविष्टः सहि गोपिकाद्वारा कृष्णे समागतः ते हि प्रथमं पुरुषरूपाः स्थिताः पश्चात् स्त्रीत्वे जाते तत्र प्रवेशमलभमानः तद्द्वारा श्रीभगवति प्रविष्टः तासां स्वभावतः पुरुषत्वात् तत उत्पत्तिमलभमानः ॥ १ ॥

यदैव रुक्मिणी सम्बद्धा तदैव तस्यां जात इत्याह । स एव जात इति । वैदर्भी भक्तिप्रधानेति भगवतो वीर्यमत्र क्रियाशक्तिः न त्वन्नमयं क्रिया हि सतो भवति चिद्रूपः स्वयं सदंशमेवापेक्षते सदंशे निर्वलितं रूपं क्रियाशक्तिरिति क्रियाशक्तौ आविर्भूतः तदुक्तं कृष्णवीर्ये समुद्भवो यस्येति एव कारो जीवान्तरप्रवेशाभावाय अत एव लोके प्रद्युम्न इति विख्यातः प्रक-

* श्रीविजयध्वजतीर्थमते कामस्त्वित्याद्यध्यायः सर्वोऽपि नास्त्येव ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

र्येण पद्मं यस्मादिति रुक्मिण्यंशसम्बन्धात् आनन्दांशोऽपि तत्र सिद्धः उत्पादकश्च प्रद्युम्न इति तस्याभिलषितमेव नाम जातमित्युक्तम् एवमपि भगवदिच्छा चेत्तदनुगता स्यात् तदा अक्षयदेहो न भविष्यतीति भगवत्सारूप्यं प्राप्तवानित्याह—पितुः सर्वतोऽनवम इति । अवमः क्षयः केनाप्यंशेन अन्यून इत्यर्थः एतन्मध्ये नारदेन शम्बरो बोधितः यावदयं निर्दशो न भवति तावन्मारणीयः अन्यथा भगवद्बलस्पर्शी अवध्यो भविष्यतीति स हि कामस्य शत्रुः यदा सर्वेषामेव भोगो निर्मुक्तो भवति तदैव भगवान् पुत्रत्वेन ग्रहीष्यतीति ॥ २ ॥

एवमुक्तस्य शम्बरस्य वृत्तान्तमाह । तमिति । कामरूपी स्त्रीरूपेणान्तः प्रविष्टः कामरूपमस्मिन् वर्त्तत इति सजातीयेन सजातीयो हन इति न रक्षकैर्दैवैः स रक्षितः अत एवानिर्दशं दशाहात् पूर्वमेव तोकं बालकं हृत्वा न निर्गतानि दशाहानि यस्येति अहःशब्दस्य लोपः हरणे हेतुमाह । आत्मनः शत्रुं विदित्वेति । वाक्यान्तरान्नारदादित्यध्यवसेयम् उदन्वति समुद्रे प्रास्य गृहमायात् गृहं गतः बालो हि न मारणीय इति कालेमानुषभुक्तः सर्वस्याप्यादरणीयो भवतीति प्राकृतं तं मत्वा समुद्रे क्षिप्तः स्वयमेव समुद्रो भक्षयिष्यतीति समुद्रे प्रक्षिप्तवान् ॥ ३ ॥

ततः समुद्रः विपरीतं कर्तुं मत्स्यग्रासं कारयित्वा तस्यैव गृहं प्रवेशयामासेति निरूपयति । तं निर्जगार बलवानिति । सचेतनो बालकः गिलने प्रतिबन्धं करोतीति तदर्थं माह । बलवानिति । सोऽपि मीनैरपरैर्दुर्बलैर्मीनैः सह तदीयैः महता जालेन गृहीतः ततोऽपि जालस्य महत्त्वं बलवत्त्वं च मत्स्यजीविभिरिति तेषां तदुद्यमः सहजः अतो नात्र अधिकः प्रयासो निरूपणीयः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

पञ्चपञ्चाशत्तमे तु प्रद्युम्नो रुक्मिणीसुतः ।
शम्बरेण हृतस्तं स हत्वागात् सप्रियः पितॄन् ॥

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहाः ततः शम्बरागारात् प्रद्युम्नप्रत्यागमनमिति क्रमो ज्ञेयः अत्र तु प्रद्युम्नस्य जन्मनि कथिते तद्वार्त्तमपि सर्वं कथनीयमिति कथितम् अत्र स्वयं भगवतो नित्यलीलापरिकराणां प्रपञ्चे प्राकट्ये खलु भगवदिच्छया स्वस्मिन् प्रविष्टानां स्वस्वविभूतीनामेव प्रथमाभिख्य दृश्यते नतु साक्षात् स्वस्वप्रथया बहिर्मुखानां नानावादानामुत्थानाभावार्थं भक्तियोगसिद्धान्तस्य रहस्यत्वरक्षणार्थं च "परोक्षवादा ऋषयः परोक्षं च मम प्रिय"मिति भगवदुक्तेः यथा द्रोण एव नन्दोऽभूत् धरैव यशोदा वसुदेव उद्धवः इन्द्र एवार्जुनः यम एव विदुरः गुह एव शाम्ब इत्येवं किं बहुना स्वयं भगवतोऽपि स्वप्रविष्टस्वांशप्रथयैव जन्म यथा वैकुण्ठनाथ एवागत्य वसुदेवगृहे जातः क्वचिद्वामनः एव क्वचिन्नरनारायण एव क्षीरोदनाथ एवेत्येवं तस्य तृतीयो व्यूहो यः प्रद्युम्नस्तस्यापि स्वप्रविष्टप्राकृतकन्दर्पाख्यस्वविभूतिप्रथयैवाभिर्भावमाह । कामस्त्विति ।

वासुदेवांशः "प्रजनश्चास्मि कन्दर्पः" इति गीतोक्तो वासुदेवविभूतिरित्यर्थः । देहस्य उपपत्तिः स्वाश्रयश्रीप्रद्युम्नदेहप्रवेशेनैव या प्राप्तिस्तस्यै तमेव विचित्रलीलानिधेस्तस्यैवेच्छया तं प्रत्यपद्यत नतु स्वशक्त्यैव तं प्रापेत्यर्थः ॥ १ ॥

स एव । काम एव प्रद्युम्न इति विख्यातः लोके प्रथामेव प्राप्तः वस्तुतस्तु सच्चिदानन्दविग्रहः प्रद्युम्न एव तृतीयो व्यूहः नतु कामो नाम केवलजीवविशेष एव यदुक्तं श्रीगोपालतापनीश्रुतौ—

यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः ।
रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति ।

प्रथमे च नारदोपास्यमन्त्रो यथा

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय चेति ॥

अत्रापि श्लोके पितुः कृष्णात् सर्वतः सर्वप्रकारेणैव अनवमः अन्यूनः नहीन्द्रभृत्यः प्राकृतः काम एवं व्याख्यातुमुचितस्तस्मात्तस्मिन् प्रद्युम्ने तदिच्छया स प्रविश्य स्थितो भवतीति जगदियेत्येवं श्रीनन्दादिष्वपि श्रीद्रोणादीनां स्थितिर्ज्ञेया ॥ २ ॥

अनिर्दशमिति । विष्णुपुराणदृष्टया षष्ठेऽह्नीत्यर्थः । विदित्वेति । तद्वधेच्छोः श्रीनारदात् ॥ ३ ॥

निर्जगार । गिलितवानिति विचित्रलीलाचिकीर्षोर्भगवत एवेच्छया नतु प्रद्युम्नादपि मीनो बलवानिति ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रुक्मिण्याः सर्वासु मुख्यत्वात्ताभ्यः तस्याः प्रथमं विवाह उक्तः इदानीं तस्यां पञ्चपञ्चाशत्तमे प्रद्युम्नस्य जन्म शम्बरवधादिकर्म च निरूप्यते । वासुदेवस्यांशो विभूतिः अत एव भूयो देहोपपत्तये तमेव प्रत्यपद्यत तृतीयव्यूहे

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ।

इत्याद्युक्तेः सर्वोपास्ये वासुदेवान्तर्गते प्रद्युम्ने प्रविष्ट इत्यर्थः १

स च प्रद्युम्नाश्रितत्वात्प्रद्युम्न इति विख्यातोऽत एव अनवमः अन्यूनः ॥ २ ॥

प्रास्य । प्रक्षिप्य ॥ ३ ॥

निर्जगार । गिलितवान् ॥ ४…५ ॥

---

भाषा टीका।

श्रीशुक उवाच।

श्रीवासुदेव भगवान् के अंश जो कामदेवजी ओ पहिले रुद्रके कोपसे दग्ध भये थे वेही देहकी प्राप्ति के लिये फिर वासुदेव को प्राप्त भये ॥ १ ॥

श्रीकृष्णजी के वीर्य से वेही कामदेव रुक्मिणीजी के गर्भ मे उत्पन्न भये उनका नाम प्रद्युम्न करके विख्यात भया वे अपने पिताके सदृश गुण वाले भये ॥ २ ॥

तं शम्बराय कैवर्त्ता उपाजह्रुरुपायनम् ।
सूदा महानसं नीत्वा ऽवद्यन् स्वधितिनाद्भुतम् ॥ ५ ॥
दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन् ।
नारदोऽकथयत्सर्वं तस्याः शङ्कितचेतसः ।
बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥ ६ ॥
सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ।
पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥
निरूपिता शम्बरेण सा सूपौदनसाधने ।
कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदार्भके ॥ ८ ॥

उनके जन्मते ही समय में दशदिन से पहिले शंवरासुर आकर अपना शत्रु जान कर प्रद्युम्न को लेने के वास्ते कामना से स्त्रीका रूप धारण कर के लेगया और समुद्र में डार कर अपने घर चला गया ॥ ३ ॥

उनको किसी बडे मत्स्य ने अपने पेट में रख लिया उस बडे मत्स्य को पकडने वालों ने मच्छियों के साथ जालमें पकड लिया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वधितिना शस्त्रिकया अवद्यन्नवाद्यन् खण्डितवन्तः ॥ ॥ ५ ॥

तत्त्वं कामोऽयं तव भर्ता ते उत्पत्तिं श्रीकृष्णाद्रुक्मिण्यामुत्पन्न इति ॥ ६ ॥

यशस्विनी पतिव्रता भर्तृदेहप्राप्तिं प्रतीक्षमाणा ॥ ७ ॥

तं शिशुं कामदेवं बुद्ध्वा विज्ञाय ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तमित्यर्द्धकम् उपाजह्रुरित्युक्तेऽपि उपायनमिति पौनरुक्त्यं तद्वैशिष्ट्यापेक्षया अद्भुतत्वं बृहत्त्वादिना तस्यैवोपायनत्वे च हेतुस्त्वमेव मायावत्यै तत्र तन्निजविद्याप्रकाशनेन तन्नाम्नैव ख्यातायै. रत्यै •अर्पयामासुः तस्याः सूदाधिपत्यात् ॥ ५ ॥

शङ्कितचेतसः । बालोऽयमतिसुन्दरः मत्पतितुल्यरूपः कथं मत्स्यगर्भे जातः अन्यत्र वोत्पन्नश्चेत् कथमत्र न मृतः अतो देवबलेऽयं कश्चिन्मद्भर्त्तैव वा स्यादित्याशङ्कायुक्तं चेतो यस्यास्तस्याः सर्वमित्येव विवृणोति । बालस्येति । मत्स्योदरे निवेशनं प्रवेशकारणमन्यस्तेः । अत्र तस्या भर्तुः कामस्य तृतीयव्यूहेनाभेदोक्तिः किरणस्य सूर्य्येणेव सा च मायावत्याः शोकापनुत्तये मेलनाय च अतः साऽपि निजपत्यभेदेन श्रीप्रद्युम्नमुपासितवत्येति "गोपीनां तत्पतीनां च"त्यादिरीत्या न च तस्या व्रतभङ्गः अयं च स्पर्शमणिन्यायेन तामात्मयोग्यां चकार स्वीचकार च श्रीमदनिरुद्धमातैव तु तस्य साक्षाच्छक्तिरिति ज्ञेयम् ॥ ६ ॥

सा चेति युग्मकम् । अत्रेयमाख्यायिका मात्स्ये श्रीशिवेन भस्मीकृते कामे रतिस्तद्देहोत्पादनाय चिरं तमुपासितवती शम्बरश्च वरान्तराय तमुपासीन आसीत् तत्र दृष्टायां तस्यां तेन श्रीशिवान्मुहुः सैव वव्रे ततश्चोपासनावशेन तेन रतिरूचे याहस्य सङ्गे तत्रैव तव सिद्धिर्भविष्यतीति यशस्विनीति पुनस्तथा निजपतिप्राप्तिशम्बरवञ्चनादिना तथा च विष्णुपुराणे श्रीरुक्मिणीदेवीं प्रति श्रीनारदोक्तौ

इयं मायावती भार्य्या तनयस्यास्य ते सति ! ।
शम्बरस्य न भार्य्येयं श्रूयतामत्र कारणम् ।
मन्मथे तु गते नाशं तदुद्भवपरायणा ।
शम्बरं मोहयामास मायारूपेण मोहिनी ।
व्यवायाद्युपभोगेषु रूपं मायामयं शुभम् ।
दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणेति ।

ईदृशं हरिवंशेऽपि ॥ ७ ॥

सूपौदनसाधने तदाधिपत्ये तथा च श्रीविष्णुपुराणे "कारयामास सूदानामाधिपत्यमनिन्दिते"ति स्नेहं प्रेमविशेषं स्नेहाचरणप्रकारश्चोक्तः श्रीहरिवंशे धाय्यास्तं सा समर्पयदिति "रसायनोपयोगैश्च शीघ्रमेव व्यवर्धयदि"ति एवं तस्या एव मायया शम्बरोऽपि तं बालं न परिचितवानिति ज्ञेयं तदा सदेति वा पाठः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कैवर्त्ताः । दाशास्तं महामीनं शम्बरायोपायनमुपाजह्रुः समर्पयामासुः ततः सूदाः पाचकाः छेत्तारो वा महानसं पाकगृहं प्रति तं मीनं प्राप्य स्वधितिना शस्त्रविशेषेणावद्यन् खण्डितवन्तः ॥ ५ ॥

तदा तस्य मत्स्यस्योदरेऽद्भुतं बालं दृष्ट्वा तं मायावत्यै रत्यै मन्मथपत्न्यै रत्याख्यायै शम्बरेण प्रसह्याहृत्य महानसे स्थापितायै न्यवेदयन् कोऽस्त्वायं बाल इति मम भर्तेव स्थितः किं वा स एवायमित्येवं शङ्कितं चेतो यस्यास्तस्या मायावत्याः नारदः तत्सर्वं कथयामास किं तत्सर्वं यदकथयत्तत्राह । बाल-

नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ।
जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥ ९ ॥
सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम् ।
सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग ! सौरतैः ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्येति । तत्त्वम् याथात्म्यं काम एवायमित्येवं विधं मत्स्योदर-निवेशनादिकं चेति सर्वमकथयत् ॥ ६ ॥

सा चेति । सा शम्बरेण सूदैः सहौदनसाधने पाकगृहे निरूपिता सूदानां परिचारकतया स्थापिता मायावती पत्युः कामस्य देहोत्पत्तिं प्रतीक्षमाणा स्थिता सती तं शिशुं नारदमुखात्कामदेवं ज्ञात्वा तस्मिन्नर्भके सदाविच्छिन्नं स्नेहं चक्रे ॥ ७—८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सोऽप्यविचार्यैव सूदेभ्यः पाचकेभ्यः घातकेभ्यो वा दत्तवान् सूदाः पुनः महानसं स्थानं नीत्वा अवद्यन् ततः अद्भुतं बालकं तस्य उदरे दृष्ट्वा मायामत्यै न्यवेदयन् सा हि रतिः कामस्य भार्या आसीत् ततो दग्धे कामे तद्भार्या यदा शम्बरेण अनीयत तदा माया तस्यां प्रविष्टा तदा मायावतीति नाम प्राप्तवती सा च तेन प्रतिक्षणं मायया मोहितेन पाकाध्यक्षा निरूपिता ततो बालकः मायावत्या दृष्टः कोऽप्ययं कपटेन मां प्रहीष्यतीति भयात् शङ्कितचित्ता जाता ॥ ५ ॥

ततो नारदः पुनरागत्य तामबोधितवान् इत्याह—नारदोऽकथयदिति । बालस्य तत्त्वं कामत्वमुत्पत्तिं कृष्णात् नारदप्रेरणया शम्बरद्वारा मत्स्योदरनिवेशनं ततोऽत्रागमनं तु स्पष्टमेवेति त्रयमुक्तं सात्त्विकं राजसं तामसं च यद्ययं मत्स्योदरे न निविष्टः स्यात् तदाग्रे भगवतः कामात् स्त्रीविवहा अयुक्ताः स्युः ॥६ ॥

ततस्तया ज्ञात्वा स गृहीत इति वक्तुं तस्याः स्वरूपमाह—सा चेति । तस्याः आकाङ्क्षित एवायं स्थितः चकारस्त्वर्थसमुच्चयार्थः नारदः अकथयत् साप्याकाङ्क्षा युक्तेति कामस्यैव पत्नी नतु यस्य कस्यचित् रतिरिति तस्या नामेति प्रसिद्धिः अनेन लोकेऽपि तस्या निन्दाभाव उक्तः यथा कामः पुरुषेषु तथा रतिः स्त्रीषु प्रतिष्ठितेति प्रसिद्धिः किञ्च यशस्विनी प्राप्तयशाः . अतो यशःसम्बन्धात् नाकीर्तिसम्भावना । मन्वेतादृशी भर्तृमरणे वैधव्यधर्मपरिपालनाय योग्या कथं रूपान्तरस्थपतिं गृहीतवती तत्राह—पत्युर्निर्दग्धदेहस्येति । नहि पतिर्मृतोऽस्ति अन्यथा जगदुत्पत्तिरेव न स्यात् किन्तु देह एव दग्धः तस्योत्पत्तिमेव प्रतीक्षते ॥७॥

तस्यास्तत्रागमने हेतुमाह—निरूपितेति । सूपौदनानां पाचने सा हि मायां जानाति सूपकाराणां तन्माया प्राणहारिणी भवतीति तद्रक्षार्थं पाकस्थाने नियुक्ता अनेन भक्ष्यभोज्यादि सम्पत्तिः तस्याः सिद्धा लोकाः तस्याः पुत्रत्वेन तं जानन्ति सा तु न पुत्रत्वेन तं प्रतिपालितवती अपितु काममेव बुद्ध्वा तत्रापि देवं पतिं शिशुत्वेन समागतम् अर्भके स्नेहं चक्रे ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अवद्यन् अवाद्यन् खण्डितवन्तः ॥ ५ ॥
सर्वं कामोऽयं तव भर्तेति ॥ ६ ॥
देहोपपत्तिमिति । मात्स्ये कथा भस्मीभूते देहे सति रतिस्तद्देहप्राप्त्यर्थं शिवमाराधयामास शम्बरश्चागतो वरान्तराय शिवस्तुष्टः प्रथमं वरं वृणिष्वेति शम्बरं प्रत्याह स्म स च रतिं दृष्ट्वा कामार्तस्तामेव वव्रे ततः शिवो रुदतीं रतिं साश्वासमाह यास्यस्व सङ्गे तत्रैव ते वाञ्छितसिद्धिर्भाविनीति ततो रतिर्मायवैव शम्बरं मोहयित्वा स्पर्शरहितैव तद्गृहे मायावत्यभिधाना तस्थौ ॥ ७...९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अवद्यन् । अवाद्यन् खण्डितवन्तः स्वाधितिना शस्त्रिकया ॥ ५—९

### भाषा टीका ।

मच्छी पकडने वाले धीवरों ने शम्बरासुर को उस मछलि की भेट करी तब शम्बर के देने से रसोइयों ने रसोइ घर में ले आकर उस बालकवाले मत्स्यको हथियार से काटा ॥ ५ ॥

तब तिस के उदर में उस बालक को देख कर उसी मायावती को उनोंने निवेदन कर दिया जोकि रति काम की भार्या शम्बरासुरके रसोइ आदि में रहती थी उसके मनमे शङ्का भइ तब नारदजी ने प्रद्युम्नजी की सब उत्पत्ति तथा समुद्र में मत्स्यका लीलना सब सुना दिया ॥ ६ ॥

वहतो कामदेवकी पत्नी ही थी जोकि बडे यश वाली हैं रति जिस का नाम है जले देह वाले अपने पति की देहकी उत्पत्ति चाहती थी ॥ ७ ॥

उसको शम्बरासुरने दाल भात आदि रसोइ के बनाने में रख दिया था उसने उस बालकको कामदेव हैं ऐसा जान जाने से उस बालक पर बडा स्नेह किया ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विभ्रमं सम्मोहम् ॥ ९ ॥
अङ्ग हे राजन् ! सौरतैर्भावैरुपतस्थेऽभजत ॥ १०—११ ॥
अभिहृता पत्नीत्वग्रहेतुः रतिरहं भवान्काम इति ॥ १२—१३

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

नातिदीर्घेणेति । पौगण्ड एवेत्यर्थः । रूढमुद्भिन्नं यौवनं यस्य सः यतः कार्ष्णिः श्रीकृष्णस्य पुत्रः तस्यापि तथैव तारुण्यादिति भावः । च अपि वीक्षमाणानामपि किं पुनः सम्भाषणादिकुर्व-

तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा ।
मातृभावमतिक्रम्य वर्त्तसे कामिनी यथा ॥ ११ ॥

रतिरुवाच ।

भवान्नारायणसुतः शम्बरेणाहृतो गृहात् ।
अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो ! ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तीनामित्यर्थः । विभ्रमं भावविशेषं किं वा विशिष्टभ्रममुन्माद-मित्यर्थः ॥ ९ ॥

पूर्वतो विशिष्टताभिप्रायेण तं वर्णयति पद्यत्रयेण । तत्र पद्मेति सर्वसौन्दर्य्योपलक्षणं प्रलम्बेति महाबलिष्ठत्वसूचक-मित्युभयथा नरलोके भूर्लोके जीवलोके वा सुन्दरम् अत एव प्रीत्योपतस्थे कैः सव्रीडेन हासेन उत्तम्भिता नर्त्तिता या भ्रूः तयोपलक्षितैः सौरतैः अत्र सव्रीडेत्यनेन हासस्य मन्दत्वम-प्युक्तम् ॥ १० ॥

भगवान् । सर्वज्ञानादिसम्पन्नोऽपि तद्विपरीतवदाह ऊचे इत्यर्थः । यतः कार्ष्णिः कृष्णपुत्रत्वात्तद्वदेवाभिरुचितनरलील इत्यर्थः । मातरिति मातृत्वबुद्धेः तथा च हरिवंशे

धात्र्याः सकाशात्स च तां शृण्वन् रुक्मिणिनन्दनः ।
मायावतीमविज्ञानान्मेने स्वामेव मातरमिति ॥

एवं धात्र्या एव तादृशं मतं नतु तस्या इत्येकान्त एव धात्र्या जातबुद्धये तस्मै तत्कथितं ततो बाल्याभ्यासं विना पूर्वं तु मातरिति सम्बोधनं तेन नाचरितं ततः सम्प्रति क्रोधादेवाचरितमिति ज्ञेयम् । अन्यथा अन्यप्रकारेण वर्त्तते लज्जादौ तां मतिमनभिव्यज्य पश्चाद्विवृणोति । मात्रिति । वास्तवार्थस्तु अतो भावात्ते तवान्यथा मतिर्मा भवत्विति शेषः । यतः कामिनी मत्कान्तैव त्वं मातृभावमतिक्रम्य वर्त्तसे तद्यथार्थमेवेति ॥ ११ ॥

नारायणेति । तस्य सर्वाश्रयत्वं व्यनक्ति गृहात् सूतिकागा-रात् अधिकृता त्वदधिकारतुल्या इत्यात्मनस्तन्नित्यपत्नीत्वं द्योतितम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स कार्ष्णिः कृष्णस्यापत्यं प्रद्युम्नः नातिदीर्घेणाल्पेनैव कालेन रूढं प्राप्तं यौवनं यस्य सः विभ्रमं सम्मोहं जनयामास ॥ ९ ॥

सेति । अङ्ग हे राजन् ! सा मायावती तं प्रद्युम्नं रूढयौवनं प्रीत्या सौरतैर्भावैः उपतस्थे अभजत्कथंभूता व्रीडया सहितो यो हासस्तेन उत्तम्भिते भ्रुवौ यस्यास्तया इत्येति विशेष्यस्याध्याहारः ईक्षतीत्याभाषा ॥ १० ॥

तथा भगवान् कार्ष्णिस्तां मायावतीमाह उक्तिमेवाह हे मात-रिति तव मतिरन्यथा विपरीता बभूव अन्यथात्वमेव दर्शयति । मातृ-भावमिति । कामिनी पुंश्चली यथा तद्वत् ॥ ११ ॥

एवमुक्ता प्राह रतिः । भवानिति चतुर्भिः । नारायणस्य श्रीकृ-ष्णस्य सुतः एवं चेत्तद्गृह एव किं न वसामि इत्यत आह । शम्बरेणेति । गृहान्नारायणस्य गृहात्तवाहं दयिता प्रियतमा पत्नी ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽल्पेनैव कालेन मत्स्योदरसम्बन्धात् भगवत्सम्बन्धाच्च सप्तम एव वर्षे यौवनं प्रादुर्भूतमित्याह— नातिदीर्घेण काले-नेति । षोडशे वर्षे यौवनप्रादुर्भावः कस्यचित् द्वादशे कस्य-चिदष्टम एव अयं नातिदीर्घकालः यतः कार्ष्णिः पितुः पुत्रः रूढं यौवनं यस्य तदा वीक्षन्तीनां विभ्रमं जनयामास युवतीनां यदा मनोवृत्तिः तदा सर्वजनीनं यौवनम् अन्यथा अलौकिकमेव यौवनं स्यात् किम्बहुना वीक्षन्तीनां देवस्त्रीणामपि जनया-मास ॥ ९ ॥ ॥

तदुपासित्वात् चिरमभिलषितत्वात् यौवनविलम्बाच्च प्राप्ते यौवने तमुपतस्थे एतदग्रिमकार्यार्थं निरूप्यते । पद्मदलायतेक्षण-मिति । कामोद्बोधकत्वात् कामत्वाच्च तस्याः लज्जाभावेन स्थातुमश-क्तिमाह—प्रलम्बबाहुमिति । उपगूहनसामर्थ्यं सर्वाङ्गसुखदत्वाय नरलोकसुन्दरमिति तादृशो मोह उचित एवेति हेतुरुक्तः स्वभा-वोद्गिरणार्थं प्रथमतो व्रीडा नवसङ्गमम्भावयति ततो जाते रसे हास उभाभ्यामुत्तम्भितया भ्रुवा सङ्केच्छां पातिव्रत्यं च कटा-क्षदर्शनेन सूचयन्ती प्रीत्या उपतस्थे इदमुपस्थानं न देवताराधनमिव किन्तु सौरतैः सुरतभावैः यत इयं रतिः ततः प्रद्युम्नः क्रियाशक्त्यैवाविर्भूत इति ज्ञानाभावस्तस्य प्रकाश्यते भगवद्वै-लक्षण्याय अन्यथा तुल्यतैव स्यात् यदि ज्ञानशक्तिरपि भवेत् ॥ १० ॥

तामाहेति । भगवान् धर्मपरः यतः कार्ष्णिः मर्यादार्थमवतीर्णः सदानन्दाङ्कुरोऽपि सदानन्द एवेति अपेक्षाभावाच्च तथोक्त-वान् । मातरिति । सम्बोधनादज्ञानं व्यवहारे तथात्वात् अनेन कामस्य धर्मविरोधित्वं सहजं निरूपितम् अन्यथा मातृपदमु-च्चार्य पश्चात्तस्यां सङ्गं न कुर्यात् लौकिकी भावेयमिति न पार-मार्थिको विरोधः माता हि मानं पालयति स्वस्य च नहि विवृ-तेष्वङ्गेषु मानं तिष्ठति अतः सर्वप्राणिनामेव माता संज्ञया अतो मातृभावं परित्यज्य गुप्तं कामं दूरीकृत्य यथा कामिनी प्रकटकामा तद्वद्वर्त्तसे इति ॥ ११ ॥

तदा तिरोहितज्ञानमेनं मत्वा अज्ञानादुक्तमनुक्तमिति बोधयति । भवान्नारायणसुत इति । स हि शम्बरं पितरं तां च मातरं मन्यते तन्निषेधार्थमाह— नारायणसुत इति । एकान्निषे-धेनैव इतरस्य सिद्धत्वात् स्वरूपं चाग्रे वक्तव्यमिति निरूप-

एष त्वाऽनिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः ।
मत्स्योऽग्रसीत्तदुदरादितः प्राप्तो भवान् प्रभो ! ॥ १३ ॥
तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ।
मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १४ ॥
परिशोचति ते माता कुररीव गतप्रजा ।
पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥ १५ ॥
प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ।
मायावती महामायां सर्वमायाविनाशिनीम् ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यति । नारायणपुत्रः कथमत्रागत इत्यत्रोपपत्तिमाह—गृहाच्छम्बरेण हृत इति । साधारिण्यपि धात्री मातृवदेव परिपालयेति चेत्तत्राह । अहं ते दयिता पत्नीति । दयितत्वाल्लोकतस्त्यागं नार्हति पत्नीत्वाच्च तवेह तथापि लोके प्रसिद्ध्यभावात् कथमेवमितिचेत् तत्राह॥ रतिरिति । भवांश्च काम इति ॥ १२॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उत्तम्भिता नर्त्तिता या भ्रूस्तया, उपलक्षितैः सौरतैर्भावैः अथेदं तत्त्वं अद्य वा श्वो वा सर्वं तत्त्वमस्मै ज्ञापयित्वैव सौरतान् प्रभावान् प्रकाशयिष्यामीति विचारितवत्या एव तस्या वैवाद्रहसि विज्ञापनात् पूर्वमेव कामदेवदृष्यात् ते भावाः स्वयमेवोद्भूता इति ॥ १० ॥

भगवानिति । सार्वज्ञ्यादिगुणयुक्तोऽपि लीलानिधेः कृष्णस्यैवेच्छया सार्वज्ञ्याद्यावरणात्तथोवाचेत्यर्थः । वास्तवार्थस्तु अतो भावास्तेऽन्यथा मतिर्मा भवत्विति शेषः यतस्त्वं मातृभावमतिक्रम्यैव वर्त्तसे यथा यथावत् कामिनी मत्कान्तैवेति ॥ ११ ॥

अहं पत्नी तं कामदेवमेव मत्वोक्तिस्तेन प्रद्युम्नेनापि स्पर्शमणिन्यायेनैव स्वस्पर्शेन सा स्वकान्ता कृता वस्तुतस्तु अनिरुद्धमातेव तस्य स्वशक्तिरिति श्रीवैष्णवतोषणी ॥१२-१८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभ्रमं संमोहम् ॥ १० ॥
अङ्ग हे राजन् ! उपतस्थे अभजत् ॥ ११—१२—१६ ॥

भाषा टीका ।

वे श्रीकृष्णपुत्र प्रद्युम्नजी तो थोड़ेही काल में युवा अवस्था को प्राप्त होगये जो स्त्री उनको देखती थीं उनको मोहित करने लगे ॥ ९ ॥

पद्म पत्र सरीके नेत्र वाले लम्बे भुजों वाले और मनुष्य लोकों में सुन्दर उन अपने पतिको देखकर रतिदेवी लज्जा सहित हास से चढाये भौंसे प्रीति के साथ सुरत क्रीडा की नाई चेष्टा करने लगी ॥ १० ॥

उसको देखकर प्रद्युम्न भगवान् बोले तेरी यह क्या मत भई है कि तू माताके भाव को छोड कर कामिनी की सरी की चेष्टा करती है ॥ ११ ॥

रति उवाच

आप तो श्रीकृष्ण के पुत्र कामदेव हैं आपको कृष्ण के घर से शम्बरासुर ले आया था मैं भी आपकी अधिकृत पत्नी हूं हे प्रभो ! कुछ अयुक्त नहीं है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्जयत्वे हेतुः मायाशतविदमिति । कथं तर्हि हन्तव्यस्तत्राह—मायाभिरिति ॥ १४ ॥

नचात्र विलम्बः कार्य इत्याह— परिशोचति रोदितीत्यर्थः ॥ १५—१८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

कथं हृत इत्यपेक्षायां तत्प्रकारं कथयन्ती कोपं जनयति । एष इति ॥ १३ ॥

इमं साक्षादत्रैव वर्त्तमानं दुर्धर्षं कृच्छ्रेणैव व्यथयितुं शक्यम् अतः सुतरां दुर्जयं हननं च योग्यमेवेत्याह । आत्मनः शत्रुमिति । आदिशब्दाच्छोषणादयः आग्नेयादयो वा ॥ १४ ॥

पुत्रस्नेहाख्यो मातुः प्रसिद्धो यश्चित्तद्रवविशेषस्तेनाकुला किं कर्त्तव्यमिति मूढा तत एवातुरा व्याधितेव तत एव दीना अति दुःखिता तत एव परितः सर्वत्रैव शोचति सरोदनं विलपतीत्यर्थः । तत्र हताशत्वांशे दृष्टान्तः गतप्रजा कुररीवेति धृताशत्वांशे गौरिवेति पूर्वा हि स्वबालकनाशे पूर्ववदाहारं नाहरति किन्तु रोदित्येव उत्तरा तु मृतं गतमपि स्तनं पाययितुमुद्गच्छतीति ॥ १५ ॥

प्रकर्षेणोत्साहोऽस्तेऽनादिना भावितत्वा तस्यास्तद्दित्सायां हेतुः

**स च शम्बरमभ्येत्य संयुगाय समाह्वयत् ।**
**अविषह्यैस्तमाक्षेपैः क्षिपन् संजनयन् कलिम् ॥ १७ ॥**

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

महात्मने अल्पवयस्त्वेऽपि प्रकाशितबलबुद्धित्वेन तद्योग्यायेत्यर्थः यद्वा गम्भीराय अप्रकाशितनिजप्रभावायेत्यर्थः । विनाशिनीमिति णिन्यन्तः पाठः कचिल्ल्युडन्तोऽपि ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एषः । शम्बरोऽसुरोऽनतीतदशाहमेव त्वां समुद्रे पातयामास हे प्रभो ! समर्थ ॥ १३ ॥

तमात्मनः शत्रुं शम्बरं जहि दुर्जयत्वे हेतुः मायाशतविद्मिति । कथं तर्हि हन्तव्यस्तत्राह । मायाभिरिति । मोहनमादिर्यासां ताभिर्मायाभिर्मयोपदेक्ष्यमाणाभिरिति शेषः ॥ १४ ॥

त्वयात्र विलम्बः कार्य्यं इत्याह । परिशोचतीति । तव माता रुक्मिणी हता विनष्टा अदृष्टेति यावत् प्रजा पुत्रो यस्या सा कुररीव हरिणीव शोचति किञ्च पुत्रस्नेहेनातुरा विवत्सा विनष्टवत्सा अत एवातुरा गौर्यथा तद्वत् ॥ १५ ॥

प्रभाष्येति सर्वाः शत्रोः सम्बन्धिनी मायाः विनाशयतीति तथा तां मायां मोहनादिमायात्मिकां विद्यां ददौ ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कामस्य कथमत्र शत्रुगृहे स्थितिरिति तत्राह— एष त्वामिति । असुरत्वात्तथा करणं मत्स्यो हि स्वजातिघाती तदुदरादिह प्राप्त इत्यनेन सोऽपि हतो निरूपितः ॥ १३ ॥

शम्बरः परमवशिष्यते अतस्तं जहीत्याह—तमिममिति । सावधानत्वाय तस्य गुणानाह । दुर्द्धर्षं दुर्जयं शत्रुं मायाशतविद्मिति । दुर्धर्षत्वात् न लौकिकोपायेन मारयितुं शक्यः अनेन विषदानादिप्रकारा अपि व्यावर्त्तिताः दुर्जयत्वात् क्षत्रियधर्मेणापि मारयितुमशक्यः शत्रुत्वान्नोपेक्षणीयः आत्मन इति घातादेव निवर्त्तते नान्यथेति सूचितं तर्हि अलौकिकयुक्त्या मारणीय इति पक्षं निवारयति । मायाशतविद्मिति । तर्ह्यवध्यः कथं मारणीय इतिचेत्तत्रोपायमाह—त्वञ्च मायाभिर्मोहनादिभिः सहितमिमं जहि आदौ मोहय ततस्तन्मायाः प्रतियोगिमायाभिः दूरीकुरु असुराणां हि माया भगवानिति तस्मादेव वित्तं संवरोऽपि प्रकरः कृतासीतेति उपासनायास्तुल्यत्वात् अनेकधोपासकस्य विशिष्टत्वाच्च मोहनादिभिर्मायाभिस्तन्मायादूरीकरणं युक्तमेव ॥ १४ ॥

ननु यथा ममाज्ञानम् एवं तस्यापीति ज्ञाने सत्येव अपकारित्वात् न मारणीय इतिचेत्तत्राह—परिशोचतीति । माता हि दुःखापन्ना अतस्तद्दुःखदूरीकरणार्थं मारणीय एवेति भावः । ते मातेति सम्भावनया वदति तस्या रुक्मिणीत्वं वा वैदर्भीत्वं वा शोकनिवारकमिति तत्रोक्तं कुररीव विवेकरहिता सा रात्रौ शोचति अनेन निद्राभावोऽपि सूचितः गतप्रजेति शोकहेतुः गता केनचिदपि हृता प्रजा यस्याः नष्टायां पुनरावृत्तिशङ्काभावात्तथा न शोकः सापि प्रजा पुत्ररूपेति नान्तःशोकमात्रं जनयति किन्तु सर्वदेहेन्द्रियाणां सर्वक्रियाराहित्यं करोतीत्याह—पुत्रस्नेहाकुलेति । पुत्रस्नेहोऽत्यन्तं व्याकुलतां सम्पादयतीति लोकप्रसिद्धिः किञ्च विवाहप्रभृति मनःपरितोषाभावात् जाते पुत्रे पित्रादयः मानयेरन् तस्मिन्नपि गते चिन्तया आतुरापि भविष्यतीत्याह—आतुरो ज्वरी विवेकेन सर्वं समाधानं भविष्यतीतिचेत्तत्र दृष्टान्तमाह । गौरिवेति । वत्साभावे यथा गौः तस्याः हि न क्वापि ममता सर्वा ममता वत्स एव भवति अन्येषां तु विभक्ता ममता भवति अतो गौः दृष्टान्तीक्रियते सर्वत्र इयं च सर्वतो ममतामाकृष्य त्वय्येव स्थापितवतीति गोतुल्या भवति एवं निरूपणमात्रेण कार्यं न सिद्ध्यतीति फलितोऽर्थो ज्ञातव्य एवेति ॥ १५ ॥

एवं प्रभाष्य विद्यामपि ददौ जीवन्त्याः विद्याया तदैव सिद्धिः प्रद्युम्नो हि विद्याग्रहणयोग्यः नाम्नैव प्रसिद्धत्वात् महात्मन इति विद्याफलिष्यतीति सूचितं सा विद्या स्वस्मिन्नागता मायैवेति ज्ञापयितुं मायावतीत्युक्तं दैत्यादीनामिव मायासाधारणा भविष्यतीति तद्व्यावृत्त्यर्थमाह । महामायामिति । इयं हि सर्वानेव भगवदंशान् व्यामोहयितुं प्रवृत्ता महामाया ननु दैत्यानां भगवानेव माया भवतीति कथमस्या महामायात्वं तत्राह । सर्वमायाविनाशिनीमिति । तत्र हि स्वल्पा अभिव्यक्तिः स्वधेत्यादाविव परव्यामोहार्थं तद्रूपो भूत्वा पालयति न तु तेषां मोहं प्रयच्छति अतो बाधकेषु जीवचैतन्यमिव तदपि तिरोभूतमिति सर्वमायाविनाशित्वम् ॥ १६ ॥

---

भाषा टीका ।

इस शम्बरासुर ने जब आप दश दिन के नहीं भये थे तबही रुक्मिणी जी के उहां से लाकर समुद्र में फेंक दिया उहां आप को मच्छी ने लील लियाः अब हे प्रभो ! उस के उदर से इहां आये हो ॥ १३ ॥

इस बड़े कठिन दुर्जय अपने शत्रु सैकड़ों माया जानने वाले शंबरासुर को आप अपनी मोहनादिक मायाओं से मार डालो ॥ १४ ॥

घर में आप की माता कुरर चिड़िया की नांई शोच करती है पुत्र के न रहने से पुत्र के स्नेह में व्याकुल हो कर विना बछरी गऊ सरीकी दुःखित होकर बहुत आतुर हो रही है ॥ १५ ॥

ऐसा कहकर माया वती ने महात्मा प्रद्युम्न जी के अर्थ सब मायाओं के नाश करने वाली महा माया नाम की विद्या दे दी ॥ १६ ॥

---

सोऽधिक्षिप्तो दुर्वचोभिः पदाहत इवोरगः ।
निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥ १८ ॥
गदामाविध्य तरसा प्रद्युम्नाय महात्मने ।
प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥ १९ ॥
तामापतन्तीं भगवान् प्रद्युम्नो गदया गदाम् ।
अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप ! ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वज्रस्य निष्पेषनिर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदत् सामान्यविशेषतया व्याप्यव्यापकत्वभावेन पाकं पचतीतिवत् अतिनिष्ठुरं नादमकरोदित्यर्थः ॥१९-२० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

सम्यगुक्त्यादिना आह्वयत् आक्षेपैर्निन्दावाक्यैः क्षिपन् तिरस्कुर्वन् सम्यक् तन्मरणपर्य्यन्ततया जनयन् जनयितुम् ॥ १७ ॥

सोऽर्धानिरूपणं सोऽभीति पाठः क्वचित् ॥ १८ ॥

आविध्य भ्रामयित्वा महानात्मा धृतिर्यस्य तस्मै विशेषेण नदनमेव व्यञ्जयति वज्रेति अव्ययैः तत्र वज्रनिष्पेषनिष्ठुरमिति मध्यपदलोपी समासः वज्रनिष्पेषस्य नादमिव निष्ठुरमिति तथा व्यापकत्वं क्रियाया व्याप्यत्वं तु कर्मणः तथा अकरोदिति सर्वेषां धातूनामन्तर्भूतकृअर्थत्वात् उक्तार्थानामप्रयोग इति न्यायेन कृअर्थमात्रपर्य्यवसानाच्चेति ज्ञेयं निष्पेषशब्देन कथं चिज्जिघांसो वा वाच्यते ॥ १९ ॥

अपास्य प्रत्यक् क्षिप्त्वा अत्र नदन्नित्यत्र नृपेति क्वचित्पाठः २०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः स च प्रद्युम्नः संयुगाय युद्धार्थं समाहूतवान् किं कुर्वन्सोढुमशक्यैरधिक्षेपैस्तं शम्बरं क्षिपन् परिभवन् कलिं कलहं जनयंश्च ॥ १७ ॥

स इति । स शम्बरः पादेन ताडितः सर्प इव दुर्वचोभिरधिक्षेपैरधितप्तः अत एव क्रोधात्ताम्रे लोचने यस्य गदा पाणौ यस्य सः निश्चक्राम ॥ १८ ॥

तरसा बलेन गदामाविध्य भ्रामयित्वा प्रक्षिप्य प्रयुज्य वज्रस्याशनेर्निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथा भूतं नादं व्यनदच्चकार पाकं पचतीति वदयं निर्देशः ॥ १९ ॥

तामिति । प्रद्युम्नः स्वगदया तां शम्बरप्रयुक्तामाकाशे आपतन्तीं गदामपास्य निरस्य स इव स्वयमपि नदन् शत्रवे शम्बराय स्वगदां प्रायुङ्क्त ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः प्राप्तविद्यः आह्वितकर्मा ज्ञापयित्वैव मारयिष्यामीति विद्याप्राबल्यं वक्तुमाह्वानमाह—स च शम्बरमिति । चकारात्तद्गतां भगवान् पूर्वक्रियया समुच्चयं आह तथा सति विद्याग्रहणं तन्मारणार्थमेवेतीति फलिष्यति अभ्येत्य निकटे गत्वा शङ्काभावो निरूपितः व्याजेन प्रवर्त्तनं वारयति । संयुगाय समाह्वयदिति । बालवाक्यं मत्वा न प्रवर्त्तेतेति अधिक्षेपमप्याह—अविषह्यैरिति । तं प्रसिद्धं प्रसिद्धो ह्यल्पमप्याक्षेपं न सहते तत्रापि नान्यदीयमनुवदति किन्तु स्वयमेव क्षिपति स्नेहात्पुत्रादयोऽपि कदाचिदेवं कुर्वन्तीति तद्व्यावृत्त्यर्थमाह—सृजनवत् कलिमिति । कलहमुत्पादयन् अहं प्रद्युम्नः कालः त्वं शत्रुः त्वां मारयिष्यामीत्यादिवाक्यान्युक्तवानित्यर्थः ॥ १७ ॥

ततो युद्धार्थं प्रवृत्त इत्याह । सोऽधिक्षिप्त इति । यथा तस्मिन् स्नेहः एवं प्रेष्ठेऽपीति कथं प्रवृत्तिरित्याशङ्क्य अधिक्षेपस्य दुष्टत्वमाह—दुर्वचोभिरिति । दुर्वचोभिराक्षिप्तः पितापि पुत्रं मारयतीति कृत्रिमत्वे जाते कथं न प्रवर्त्तेतेत्यर्थः । ननु मृत्युरयमिति विशेषेण स समागतः भयात् कथं न निवृत्तः तत्राह—पादाहत इवोरग इति । दीर्घरोषः सर्पः मरणमप्यङ्गीकरोति नतु निवर्त्तते इति तस्य हि क्रोध एव परिपाल्यः न त्वन्ये तत एकेन सह एकेनैव युद्धं कर्त्तव्यमिति गदापाणिरेव निर्गतः नापि बद्धकवचः नापि ससहायः तथा निर्गमने हेतुरमर्षात्ताम्रलोचन इति क्रोधवशात् न किञ्चित् ज्ञातवान् दृष्टिरपि ताम्रेति दृष्टापि न ज्ञातवान् ॥ १८ ॥

ततः प्रथमत एव स्वयं मारणार्थं प्रवृत्त इत्याह—गदामाविध्येति । क्रोधवशात् महतीमपि गदामुत्तोल्य भ्रामयित्वा यावत्तावधानो भवति अनेन अपराधादपि तस्य पराजय एवेति सूचितं महात्मन इति तस्य पलायनाद्यभावः सूचितः प्रक्षेपमात्रेणैव मारित इति मत्वा व्यनदत् मूर्च्छितस्य तेन नादेन सुतराम्मरणं भवतीति ज्ञापयितुं विशिनष्टि । वज्रनिर्घोषनिष्ठुरमिति । वज्रस्य नितरां घोषः पातसमयशब्दः ततोऽपि निष्ठुरमिति ॥ १९ ॥

एतादृशोऽप्युद्यमः व्यर्थो जातः प्रद्युम्नस्य पराक्रमेणेत्याह । तामापतन्तीमिति । स्वगदया तां गदामपास्य आगच्छन्तीं दूरादेव मारयित्वा ततः क्रुद्धः सन् तद्वत् स्वयमपि नदन् शत्रुर्मारणीय एवेति अन्यथा मारयिष्यतीति स्वगदां प्राहिणोत् भगवानित्येतत्सामर्थ्यहेतुः भगवत्कार्यत्वादावेशित्वाद्वा भगवान् ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निष्पेषो निर्घातः । वचनमधोवदितिवन्नादमनददितिसिद्धम् ॥१९

स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ।
मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २१ ॥
बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः ।
सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २२ ॥
ततो गौह्यकगान्धर्वपैशाचोरगराक्षसीः ।
प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः ॥ २३ ॥
निशातमसिमुद्यम्य सकिरीटं सकुण्डलम् ।
शम्बरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

॥२०

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आविध्य भ्रामयित्वा वज्रस्य निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथा भूतं नादं व्यनदत् वचनमवोचदितिवदयं निर्देशः ॥ १९—२० ॥

भाषा टीका ।

इतना सुनकर जो प्रद्युम्नजी झटसे शंबरासुर के पास गये और युद्ध के लिये बुलाया बडे कठिन नहीं सहने योग्य वचन कहे जिससे कि लड़ाइ होवै ॥ १७ ॥

वह फिर उन कठिन वचनों के मारे जैसे पैर की ठोकर मारने से सर्प क्रोधित होता है तैसे क्रोध के मारे आखों को लाल करके गदा हाथ मे लेकर घर मे से निकला ॥ १८ ॥

बडे वेग से महाबली प्रद्युम्नजी के उपर गदा को चलाकर जैसा वज्र का शब्द होवै तैसे कठोर गर्जना करने लगा ॥ १९ ॥

हे राजन् ! भगवान् प्रद्युम्नजी भी आती हुइ उस गदा को देखकर अपनी गदा से उसको दूर हटा कर शत्रु पर क्रोध करके अपनी गदा को फिर चलाते भये ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैहायसः आकाशे स्थितः ॥ २१ ॥

सत्त्वात्मिकां सत्त्वगुणमयीं प्रायुयुङ्क्तेत्युत्तरस्यानुषङ्गः ॥२२॥

ता मायाः व्यधमयद्व्यनाशयत् ॥ २३ ॥

ताम्राणि श्मश्रूणि यस्मिंस्तत् ओजसा बलेन ॥ २४—२५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

स्वयं चशब्दः मयेन दर्शितां प्रवर्तितां सम्यक् परोक्षत्वादिना आश्रित्य अत एव वैहायसः सन् एवं श्रीप्रद्युम्नवाणत्रं सूचितम् अश्ममयं शिलाप्रचुरं तथा च श्रीहरिवंशे ।

अस्त्रीभूते कृतवर्षे शिलासङ्घातवर्षयदिति ।
अतोऽश्ममयमिति पाठोऽसम्मतः ॥ २१ ॥

बाध्येति युग्मकम् महारथः वीरवर्गश्रेष्ठः ॥ २२ ॥

गौह्यकेत्यादौ प्रथमं सामान्यतो निर्दिष्टानां स्त्रीप्रत्यय विनैव द्वन्द्वः पश्चान्मायाविशेषणत्वेन स्त्रीत्वे विवक्षिते समस्तात्स्त्रीप्रत्ययो ज्ञेयः "शतशः इति" गौह्यकादीनामेवावृत्तिर्व्यक्ता यद्वा अन्या अपि मायाः शतश इत्यर्थः । ताश्चोक्ताः श्रीहरिवंशे ।

ततो मायां परां चक्रे देवशत्रुः प्रतापवान् ।
सिंहान् व्याघ्रान् वराहांश्च तरक्षून्‌ऋक्षवानरान् ।

वारणान् वारिदप्रख्यान् हयानुष्ट्रान् विशाम्पत इत्यादिना गौह्यकादीनां यथोत्तरं हिंसकत्वेन श्रेष्ठयस्य प्रसिद्धौ ताः सर्वाः यतः कार्ष्णिः अस्याग्रेऽप्यनुवृत्तिः ॥ २३ ॥

कायादहरत् दूरीचकार ताम्रश्मश्र्विति घोरत्वादिकं सूचितम् किरीटादिसहितमिति हरणे लाघवं कौतुकञ्च ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स च शम्बरः मयेन दैत्यदानवाचार्येण दर्शितामुपदिष्टां मायामन्तर्धानाद्यात्मिकामाश्रित्य वैहायसः आकाशस्थितः कार्ष्णौ प्रद्युम्ने शिलामयं वर्षं मुमुचे ॥ २१ ॥

तदा रौक्मिणेयः प्रद्युम्नः शिलावर्षेण बाध्यमानस्ताड्यमानः सत्त्वात्मिकां सत्त्वगुणमयीं मायां महाविद्याख्यां सर्वासुरमायोपघातिनीं प्रायुङ्क्तेत्युत्तरस्यापकर्षः ॥ २२ ॥

ततः पुनर्दैत्यः गुह्यकानां सम्बन्धिनीं तथा गन्धर्वादिसम्बन्धिनीं च मायां प्रायुङ्क्त कार्ष्णिस्तु ताः सर्वा मायाः व्यधमयत् व्यनाशयत् ॥ २३ ॥

ततः निशितं खड्गमुद्धृत्य निर्माय ताम्राणि श्मश्रूणि यस्य तस्य शम्बरस्य कायात्सकिरीटं सकुण्डलं च शिरो जहार पातयामासेत्यर्थः ॥ २४ ॥

आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः।
भार्ययाम्बरचारिण्या पुरं नीतो विहायसा ॥ २५ ॥
अन्तः पुरवरं राजन्! ललनाशतसङ्कुलम्।
विवेश पत्न्या गगनाद्विद्युतेव वलाहकः ॥ २६ ॥
तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्।
प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ २७ ॥
स्वलङ्कृतमुखाम्भोजं नीलवक्रालकादिभिः।
कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो लौकिकेन जयाभावमाशङ्क्य मायया भगवद्रूपया युद्धङ्करिष्यामीति प्रवृत्त इत्याह—सच मायामिति। दैतेयीत्यनेन भगवत्त्वमुक्तं सम्यगाश्रयणं मनःपूर्वकं भक्त्या मयदर्शितामिति सिद्धानुपदेशः सफलो भवतीति ज्ञापनार्थः ततः अदृश्यः सन् अस्त्रमयमाग्नेय्यायस्त्रसमूहङ्कार्ष्णौ प्रद्युम्ने स्वयं विहायसि आकाश एव स्थितः वैहायसः असुराणामन्तरिक्षेऽपि गतिरस्तीति सूचयितुन्तथोक्तम् ॥ २१ ॥

ततो मायाया भगवत्त्वात् काचित् पीडा जातेत्याह—बाध्यमानो ऽस्त्रवर्षेणेति हीनत्वं सम्पादयितुं रौक्मिणेय इत्युक्तं नहि कृष्णपुत्रे बाधा सम्भवतीति तथापि महारथः क्षत्रियजातित्वेन प्राप्तसामर्थ्यः सत्त्वात्मिकां प्रतिस्पर्द्धिनीं विद्यारूपां तथा साक्षादुपदिष्टां समाश्रित्य स्वयमप्यस्त्रमयं वर्षं मुमोचेति सम्बन्धः ॥ २२ ॥

ततस्तेनापि बह्व्यो मायाः प्रदर्शिता इत्याह—तत इति। पञ्चैता अस्त्रमायाः तेन हि साङ्गो भगवान् सेवित इति ज्ञायते गन्धर्वा अपि दैत्यपक्षपातिनः तेषामवान्तरभेदाः सन्तीति आह। प्रायुङ्क्त शतश इति। सर्वासामपि सकृदेव निराकरणं कृतवानित्याह। कार्ष्णिः सपूर्वप्राप्तमायः तास्व्यधमयत् ॥ २३ ॥

ततः पौरुषद्वयेऽपि नष्टे तं मारितवानित्याह। निशातमिति। यथा श्येने दृष्टे पक्षिणो लीयन्ते तथा तस्मिन् दृष्टे शम्बरो लीनो जात इति निष्प्रभत्वं स्वेच्छया असिमुद्यम्य किरीटकुण्डलसहितं परितः उपरि च शोभायुक्तमधोऽपि दुर्धर्षं ताम्रश्मश्रु ओजसा अहरत् छित्वानीतवानित्यर्थः ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वैहायसः आकाशचारी ॥ २१ ॥
सत्त्वात्मिकां विद्यां प्रायुङ्क्तेत्युत्तरस्यानुषङ्गः ॥ २२—२७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वैहायसः खचरः ॥ २१ ॥
महाविद्यां प्रायुङ्क्त इत्युत्तरस्यानुषङ्गः ॥ २२ ॥

व्यधमयद्व्यनाशयत् ॥ २३ ॥
ओजसा बलेन ॥ २४-२८ ॥

———

भाषा टीका।

फिर उस शंबरासुर ने मयदैत्य की कही हुई माया का आश्रय लेकर आकाश मे जाकर प्रद्युम्नजी के ऊपर अस्त्रों की बडी वर्षा करी ॥ २१ ॥

उन अस्त्रों से ताडित होने से महारथी प्रद्युम्नजी ने सब मायाओं की नाश करने वाली सत्त्वात्मक महाविद्या का अनुसन्धान किया ॥ २२ ॥

फिर दैत्य ने गुह्यकों की गन्धर्वों की पिशाचों की सर्पों की राक्षसों की सैकड़ों मायाओं को चलाया कृष्णपुत्र प्रद्युम्नजी ने उन सबों का नाश करदिया ॥ २३ ॥

फिर तो तीखी तरवार को लेकर अपने बलसे किरीट कुंडल सहित लाल डाढी मूछों वाले शंबरासुर के मस्तक को काट कर शरीर मे से अलग करदिया ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका

विद्युता सह बलाहको मेघ इव ॥ २६—२७
नीलाश्च वक्राश्च येऽलकास्त एवालयस्तैः ह्रीता लज्जिताः२८

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

दिविजैर्देवैः कर्तृभिः पुष्पसमूहैः करणैः आकीर्यमाणः व्याप्यमानः भार्यया मायावत्या अम्बरचारिण्येति देवस्वभाव उक्तः अतो विहायसा आकाशमार्गेण पुरं द्वारकां नीतः ॥ २५ ॥

अन्तःपुरेषु वरं श्रेष्ठ भगवदीयत्वात् सर्वमहिषीवरश्रीरुक्मिणीसम्बन्धात् तत्रापि विशिष्टं पत्न्या रत्या सह ॥ २६ ॥

तं दृष्ट्वेति युग्मकम्। श्रीकृष्णमननाय तत्सादृश्यमाह। जलदेत्यादि सप्तभिः पदैः ताम्रे रक्तवर्णे अक्षिणी यस्य तम् अञ्जनकायप्रान्तरक्तनेत्रमित्यर्थः ॥ २७ ॥

**अवधार्य शनैरीषद्वैलक्षण्येन योषितः ।**
**उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः ॥ २९ ॥**

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

पद्मदलायतेक्षणमिति प्रागुक्तेः ह विस्मये ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आकीर्य्यमाण इति । स्तुवद्भिर्विविधैर्देवैः कर्तृभिः कुसुमोत्करैः कुसुमाञ्जलिभिः कुसुमजालैर्वा आकीर्य्यमाणः प्रद्युम्नः अम्बरे स्वयं चरति अन्यांश्च चारयति तच्छीला तथा तया भार्यया कर्त्र्या विहायसा आकाशमार्गेण पुरीं द्वारकां प्रति नीतः ॥ २५ ॥

तत्र हेराजन् ! ललनाः स्त्रिय एव रत्नानि तैः सङ्कुलम् अन्तःपुरश्रेष्ठं पत्न्या सह प्रविवेश यथा विद्युता सह बलाहको नीलमेघस्तद्वत् ॥ २६ ॥

तमिति । तं प्रविष्टं प्रद्युम्नं दृष्ट्वा स्त्रियः कृष्णमेव मत्वा लज्जितास्तत्र तत्र निलिल्युः कृष्णं मत्वेत्यत्र हेतुं वदन् कृष्णासाधारणैर्धर्मैर्विशिनष्टि । जलदश्याममित्यादि । प्रलम्बौ दीर्घौ बाहू यस्य तं नीला वक्राश्च येऽलकास्त एवालयस्तैरलंकृतं मुखाम्भोजं यस्य तम् ॥ २७—२८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ताम्रे रक्तवर्णे अक्षिणी यस्य तम् अब्जवत् प्रान्तरक्तवर्णाक्षमित्यर्थः ॥ २७—३९ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तं दृष्ट्वेत्यादिकृष्णाकारत्वात् अतः श्रीकृष्णद्वारकायामन्तःपुरे द्विभुज एवेति कृष्णभानत्वे हेतुः जलदश्याममित्यादिविशेषणानि अतः कृष्ण एव इति मत्वा अन्तःपुरस्थिताः स्त्रियो दासीप्रभृतयस्तत्र तत्र निलिल्युर्लीना बभूवुः कुतः इत्याह । ह्रीता लज्जिताः एतेन श्रीकृष्णस्य नित्यकिशोरत्वम् ॥ २७—३९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतत्कर्म न विगीतमिति ज्ञापयितुं देवानां सम्माननमाह— अवकीर्यमाण इति । आकिरणं सर्वत्र वृष्टिः कायिके वाचनिके वोक्तेऽर्थान्मानसिकमिति सर्वथा देवानामादर उक्तः ततो मायावत्या अम्बरचारिण्या विहायसा आकाशमार्गेण प्रद्युम्नो द्वारकां नीतः ॥ २५ ॥

आदौ भगवद्गृहे पुत्रत्वे सिद्धे पश्चादन्यत्र पुत्रत्वं सिध्यतीति पुरशब्देन अन्तःपुरमप्युच्यते कृष्णान्तःपुरं नीतवती प्रद्युम्नश्च पत्नीनाथम् अन्तःपुरेषु वरं ललनाभिः सङ्कुलं विद्युतेव बलाहक इति शोभा दोषाभावश्चोक्तः आकाशमार्गप्रवेशे विचारोऽपि न जातः आधिदैविकास्तु आनन्दांशा न निरोधं कुर्वन्ति पत्न्या सह प्रवेशात् लौकिकोऽपि न दोषः ॥ २६ ॥

ततोऽन्तःपुरं प्रविष्टस्य विचारमाह—तं दृष्ट्वेत्यष्टभिः । सर्वासां त्रिभिर्विचारः रुक्मिण्याः पञ्चभिः साधारणानां विचारे हेतु वक्तुं प्रथमतो मोहमाह । अन्तःपुरे यावन्तो जनाः सुतरां स्त्रिय तत्र प्रद्युम्नं भगवत्सदृशं दृष्ट्वा कृष्णं मत्वा प्रथमतः ह्रीताः लज्जिताः सत्यः कृष्णस्य स्त्रियो निलिल्युः ता हि स्वच्छन्दं क्रीडमानाः स्थिताः अतो भगवान् दृष्टवानिति लज्जा भगवत्समानताम्बकृष्णविशेषणान्याह । जलदश्याममित्यादिना । भगवान् षड्गुणसहितः स्वयमयमपि सप्तधा समान इतिश्रीवत्सकौस्तुभौ विना अन्यस्यापि लक्षणवर्णनं जलदश्याममिति रूपतुल्यता आकृतिस्तु पुत्रत्वादेव समाना भवति पीतपट्टाम्बरमिति परिच्छदतुल्यता । प्रलम्बबाहुमिति स्त्रीणां सम्यक् ज्ञातावयवतुल्यता ताम्राक्षमिति अनौचित्यात् क्रुद्ध इव स ज्ञातः इदं वैलक्षण्यमग्रे वक्ष्यति सुस्मितमिति तासां भाव्यो धर्मः रुचिराननमिति सर्वोत्कृष्टशोभा ॥ २७ ॥

अलङ्कृतं मुखाम्भोजं यस्य नीलैर्वक्रैरलकादिभिः आदिशब्देन कुण्डलकिरीटादिभिः किम्बहुना भगवदीया सर्वा सामग्री ग्राह्या मुखं हि सर्वेषां भेदजनकं तदेव तुल्यं जातमिति भ्रमो युक्तः यत्र कश्चिल्लीना इति निलीय दर्शनं सम्भवतीति निरूपयितुम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

ह्रीताः लज्जिताः ॥ २९ ॥

भाषा टीका ।

तदनंतर देवतों ने स्तुति करके प्रद्युम्नजी के उपर पुष्पों की वृष्टि करी फिर आकाश मार्ग चलने वाली मायावती के साथ आकाश ही होकर प्रद्युम्नजी द्वारका को चले गये ॥ २५ ॥

हे राजन् ! जैसे बिजुली के साथ मेघ होवे तैसे शोभित होकर आकाश से उतरकर श्रीकृष्णचंद्र का जो अनेक स्त्रियों सहित अन्तःपुर है तिसमे पत्नी के सहित प्रद्युम्नजी पैठे ॥ २६ ॥

मेघ से श्याम पीतवस्त्र धारी लंबे भुजा वाले सुन्दर लाल नेत्र वाले सुन्दर हास्ययुक्त मुखारविंद वाले सुन्दर अलंकारों से विभूषित नीलटेढे केशों से सुशोभित मुख वाले श्रीप्रद्युम्नजी को देखते मात्र रनवासकी सबस्त्री श्रीकृष्णचंद्र हैं ऐसा जानकर लज्जित होकर जहां तहां ओट मे छिप गईं ॥ २७—२९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णो न भवतीत्यवधार्य स्त्रीपुं रत्नं श्रेष्ठा रतिस्तत्सहितम् ॥ २९—३० ॥

अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी ।
अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३० ॥
कोऽन्वयं नरवैदूर्यः कस्य वा कमलेक्षणः ।
धृतः कया वा जठरे केयं लब्धा त्वनेन वा ॥ ३१ ॥
मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात् ।
एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुतं स्मरन्त्याह । कोऽन्वयमिति । नरवैदूर्यः पुरुषश्रेष्ठः ॥ ३१ ॥ एतेनतुल्यं वयो रूपं च यस्य स भवेदिति ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

ईषद्वैलक्षण्यं वर्णादिशोभातः किञ्चिन्न्यूनत्वं वयश्च तथा तादृशम वनिरीक्षणादिराहित्ये विनयिदृष्टित्वादिकं चतेनाव-चार्य्य उपसमीपे जग्मुः प्रकर्षेण मुदिताः श्रीकृष्णसारूप्यस्वा-भाव्यात् शुचिस्मिताश्च अन्यत्र तदसम्भवात् स्त्रीति सामान्य-निर्देशात्तत्पत्नीत्वज्ञानोदयरहितानां तासामभिप्रायेण रत्नत्वनि-र्देशः तत्स्पर्शेन तादृशीत्वप्राप्तेः ॥ २९ ॥

अथ समागमादनन्तरमेव तत्र तासु पश्यन्तीषु मध्ये असि-तापाङ्गीति विलोकनसौन्दर्य्यस्य वल्गुभाषिणीति भाषणसौन्द-र्य्यस्याभिप्रायेण अस्मरत् सारूप्यदर्शनेनानुसन्दधे स्वशब्देना-त्यन्तस्नेहविषयतोक्ता अत एव चिरकालेऽतीतेऽपि स्नेहस्नुत-पयोधरा सती ॥ ३० ॥

नरवैदूर्यः नरेषु स इव श्रेष्ठः कस्य पुत्रो वा ॥ ३१ ॥

नष्टः अदर्शनं गतः अपि सम्भावनायां यदि कुत्रापि जीवेत् तदैतत्तुल्यवयो भवेदित्यर्थः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ता योषितः शनैरीषद्वैलक्षण्येन श्रीवत्साद्यभावरूपेणेति भावः अवधार्य कृष्णो न भवत्ययमिति निश्चित्य स्त्रीरत्नेन सहितं प्रद्युम्नमुपजग्मुः समीपमाजग्मुः ॥ २९ ॥

अथ तत्रेति वल्गु सुन्दरं यथा तथा भाषते इति तथा सा वैदर्भी रुक्मिणी नष्टं सुतमस्मरत् स्नेहेन स्नुतौ तरलौ पयो-धरौ यस्याः इत्थं प्राहेति शेषः ॥ ३० ॥

उक्तिमेवाह । कोन्विति पञ्चभिः । अयं नर एव वैदूर्यः पुरुष-रत्नमित्यर्थः कोनु को वा कस्य वा सम्बन्धी पुत्र इति यावत् कया स्त्रिया जठरे धृतः कस्याः पुत्र इत्यर्थः । अनेनेयं स्त्री क लब्धा ॥ ३१ ॥

योऽसौ ममात्मजः सूतिकागृहान्नीतो नष्टोऽदृश्यश्च स एवायं किमित्यर्थः । एतेन तुल्यं वयो रूपं च यस्य सोऽस्मत्पुत्रः कश्चि-द्यदि जीवति ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो जिज्ञासायां भगवतः किञ्चिदाधिक्यं श्रीवत्सादिकं चादृष्ट्वा ईषद्वैलक्षण्येन साक्षाद्भगवान् न भवतीति निश्चित्य तत्तुल्यत्वेन तदीयत्वं च निश्चित्य पुत्र एवायं भविष्यतीति प्रमुदिताः सत्यः स्त्रीरत्नसहितं तं द्रष्टुं सर्वा एव योषितः समा-गताः शुचिस्मितं यासामिति तासां भावान्तरं निवारितम् २९

तत्र रुक्मिण्यपि समागता तासां तस्याश्च पूर्वोक्ता धर्मा-स्तुल्याः विशेषं वक्तुं प्रक्रियान्तरमारभते । अथेति । भगवत्पुत्रो भवतीति सम्भावनया सिद्धं तासां त्वस्मत्पुत्रो न भवतीति निश्चयः अस्यास्तु सन्देह इति भिन्नः प्रक्रमः ननु पुत्रत्वे निर्धा-रिते पश्चात् स्वस्याः अन्यस्या वेति विचारो युक्त इत्याशङ्क्य भगवत्पुत्रत्वं निर्धारयितुम् एकहेलया स्वस्या अपि प्रथमतः सादृश्यं ज्ञातवतीत्याह—तत्र स्त्रीसमूहे असितापाङ्गी शोभन-दर्शना असिते कृष्णे वा अपाङ्गो यस्या इति तेन ज्ञानदृष्टि-रस्याः अन्यापेक्षया विलक्षणेति इयमेव सादृश्येन पुत्रं स्मृत-वती यतो वैदर्भी अत्यन्तं भक्ता अन्तःकरणदेहयोरुत्तमत्व-मुक्त्वा मध्ये वाचोऽप्युत्तमतामाह—अन्यथा कायवाङ्मनसाम् एकमतुल्यं स्यादिति वल्गु भाषत इति वल्गुभाषिणी साद-श्येन संस्कार उद्बुद्ध इति स्वसुतं नष्टमस्मरत् यद्यप्यत्यन्तं शिशोः स्थूलस्यापि नावयवादिसाधारण्यं तथापि तस्याभि-विधोऽप्युत्कर्ष इति तादृशस्यैव वृद्धावयं भावो भवतीति निश्चित्य स्वसुतं नष्टमस्मरत् स्नेहेन स्नुतौ पयोधरौ यस्या इति आधिभौतिकस्य देहस्य आधिदैविकस्यापि तत्सम्पादक-स्यापि सम्वादो निरूपितः ॥ ३० ॥

एतदीयाश्चत्वारो धर्मा निरूप्यन्ते आन्तर एको बाह्यस्त्रयः आद्यौ परिदृश्यमानं सम्भावयति । कोन्वयमिति । नु इति वितर्के अयं कः देवादिषु मध्ये क इत्यर्थः । वैदूर्यमणिः श्यामपीतो भवति नीलमेघश्यामोऽपि तया सहितस्तत्कान्त्या वैदूर्यतुल्यो जातः वैदूर्यमणिश्चेत् नराकारः सहज एवोत्पन्नो भवेत् सोऽपि चेत् नो भवेत् तदा प्रद्युम्नतुल्यः स्यात् इति मत्वाह—नरवै-दूर्य इति । ननु कस्य चिद्वंशे एतादृशा एव वोत्पद्यन्ते यथा देशविशेषे पाषाणा हीरकरूपा भवन्ति तस्मादाश्चर्यमिति चेत् तत्राह—कस्य वेति । को वा एतादृशः यस्यायं पुत्रो भवेत् कमलेलक्षणत्वाच्च स्थावरस्य स्त्रिया अपि भावोऽस्मिन दृश्यत इति न स्थावराज्जातः नापि मनसः नापि केवला-त्पुरुषात् अतः का वा तादृशपुरुषयोग्येति तां भावयति कया वा जठरे धृत इति अस्तु वा इयं भार्या एतद्योग्या कथमनेनो-

कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः ।
आकृत्याऽवयवैर्गत्या स्वरहासाऽवलोकनैः ॥ ३३ ॥
स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः ।
अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३४ ॥
एवं मीमांसमानाया वैदर्भ्या देवकीसुतः ।
देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥ ३५ ॥
विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ।
नारदोऽकथयत्सर्वं शम्बराहरणादिकम् ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपक्षेपत्याह—केयं लब्धेति । मनेनापि इयं का लब्धा वेत्यनादरे रुक्मिणीहृदये सा न सम्यग्भातीति पूर्वजन्मसम्बन्धिनीति एतद्दर्शनेन स्वपुत्रस्मरणात् साहश्यमेव स्मारकमिति ॥ ३१ ॥

साहश्यमुपपादयति-मम चापीति । यथा कस्याश्चित् अय पुत्रः एवं ममापि पुत्रः एतादृशो भवतीति आशङ्क्य व्यावर्त्तयति—नष्ट इति । तर्हि मृतस्य कथं तुल्यता इत्याशङ्क्याह—नीत इति । अयं नाशोऽदर्शनार्थः सूतिकागृहादित्यनिर्देश एव केनचिन्नीतः तर्हि कथं रक्षसा घातकेनान्येन वा नीतः तुल्यो भविष्यतीति चेत्तत्राह—यदि जीवति कुत्रचिदिति । तदा एततुल्यं वयो रूपं च यस्य यादृशो भवेत् एतावता स्वपुत्रस्य सम्भावना जीवितस्य एततुल्यता निरूपिता ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कृष्णो न भवतीत्यवधार्य तमिति पूर्वस्याऽनुषङ्गः॥२९—३०॥
नरवैडूर्य्यः पुरुषश्रेष्ठः कस्य पुत्रः ॥ ३१ ॥
नीतो बालग्रहेण ॥ ३२—३९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितम् ॥ २९—३० ॥
नरेषु वैडूर्यः श्रेष्ठः ॥ ३१ ॥
एतेन तुल्ये वयोरूपे यस्य सः यदि जीवति तर्हि कचिद्भवति ॥ ३२—३९ ॥

भाषा टीका ।

अब वहां की स्त्रियों ने कुछ विलक्षणतासे उनको कृष्ण नहीं है ऐसा जाना, तब वे सब मिलकर आनन्द से उत्तम स्त्री के सहित जो प्रद्युम्नजी हैं तिनके देखने को समीप गई ॥ २९ ॥

फिर उन्हीं में सुंदर नेत्र वाली श्रीरुक्मिणीजी ने अपने पुत्र का स्मरण किया तब उनके स्तनों से स्नेह के मारे दूध स्रवित होने लगा ॥ ३० ॥

फिर वे रुक्मिणीजी बोलने लगीं कि यह कमल से नेत्र वाला मनुष्यों मे श्रेष्ठ बालक कौन है, किस युवतीने इसको गर्भ में धारण किया होगा, और जो यह स्त्री इसके साथमें है सो कौन है ? कैसे इसको मिली है ॥ ३१ ॥

मेरा भी पुत्र खोय गया जिसको कि सूतक के घरसे कोई ले गया यदि वह कहीं जीता होगा तौ इसी के बराबर रूप अवस्था वाला होगा ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य स्वपुत्रत्वं सम्भावयन्त्याह—कथं त्विति ॥ ३३ ॥
तदेवाधिकं सम्भावयति, स एवेति ॥ ३४ ॥
देवक्यानकदुन्दुभ्यां देवक्यानकदुन्दुभिभ्यामित्यर्थः॥३५-३९॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तु विस्मये सम्यक् प्राप्तिमेव दर्शयति—आकृत्येति । प्रांशुतानुरूपपुष्टिशोभिताखिलदेहाकारविशेषेण अवयवैस्तदनुरूपैरेव श्रीचरणाद्यङ्कैः गत्येति आकाशादुत्तर्य्यं कियत्पदन्यासात् स्वरेति समीपगतान् प्रतिमात्रादितस्वप्रश्नादित्यूह्यम् ॥ ३३ ॥

अधिकेति । स्वस्य जगन्मातृत्वेन सर्वेष्वप्यर्भकेषु सामान्यतः प्रीतिं द्योतयति ॥ ३४ ॥

श्रीवसुदेवक्यादिभ्यां सहागमनं प्रायस्तदानीं तद्गृहगमनात् उद्गतं तमः अज्ञानं यस्मात्तादृशः श्लोको यस्य श्रीरुक्मिण्यादीनामज्ञाननिरासार्थमिति भावः ॥ ३५ ॥

विज्ञातार्थत्वेऽपि तूष्णीमासने हेतुः जनानर्दयति याचयतीति लीलावैचित्र्येण सर्वेषां सुखप्रद इत्यर्थः । अन्यथा चिरं शोचन्त्याः श्रीरुक्मिणीदेव्यास्तस्मिन्नसूयापि सम्भवेत् अकस्मान्नारदस्यागमनं श्रीकृष्णेच्छयैव ज्ञेयम् ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य स्वपुत्रत्वं सम्भावयन्त्याह—कथमिति ॥ ३३ ॥
निश्चिनोति—स एवेति । यो भगवान् कृष्णांशभूतो मम

तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ।
अभ्यनन्दन्बहूनब्दान्नष्टं मृतमिवागतम् ॥ ३७ ॥
देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ।
दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥ ३८ ॥
नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ।
अहो मृत इवाऽऽयातो बालो दिष्ट्येति हाऽब्रुवन् ॥ ३९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गर्भगतः स एवायं नूनं ध्रुवं स एवायं भवेदिति पाठान्तरं तत्र हेतुः अमुष्मिन्नस्मिन्मम प्रीतिरधिका भवति मम वामो भुजश्च स्फुरति सञ्चलति अन्यथैतत् न घटेतेति भावः ॥३४॥

इत्थं वैदर्भ्यां मीमांसमानायां तर्कयन्त्यां सत्यामुत्तमश्लोको भगवान् देवकीवसुदेवाभ्यां सह तत्राऽऽजगाम ॥ ३५ ॥

विज्ञातोऽध्यवसितः अर्थः इतरसंशयविषयीभूतोऽर्थो येन तथाभूतोऽपि तूष्णीमास तदा नारदः शम्बराहरणादिकं सर्वमकथयत् ॥ ३६ ॥

श्रीतिपतितम् अक्षरच्युतकालङ्कारे बोधयति यथा रक्षो रक्षा इति अयं च पुत्रः च्युत एव स्थानात् पुनः प्राप्त इति [सूच-यितुम् आसर्वैः सहागमत् ॥ ३५ ॥

आगत्यापि स्वयं कथने बहिर्मुखाः लोभं सम्पादयेयुरिति तूष्णीं स्थित इत्याह— विज्ञातार्थोऽपीति ज्ञाने भगवानिति हेतुः तूष्णींभावे जनार्दन इति । सहि जनानामविद्यामर्दयतीति निन्दायां तु तेषामविद्या न गमिष्यतीति तदा भगवदिच्छया नारदः समगत्योक्तवानित्याह—नारदो कथयत्सर्वमिति । स्वकृत-मेवेति दोषपरिहारोप्यनेन कृतः शम्बरस्य अपहरणमारभ्य समागमनपर्यन्तं सर्वमुक्तवान् ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः परं भेदं निराकृत्य स एवायं भवितुं युक्त इति विशेषं निरूपयति द्वाभ्याम्–कथं त्वनेनेति । अस्तु वा अयमुत्तमः तथापि शार्ङ्गधन्वनः स्वारूप्यं तत्पुत्रत्वं कथमनेन सम्प्राप्तं शार्ङ्गधन्वन इत्यनेन व्याघाताः भगवता निरूपिताः ते अस्मिन्नपि दृश्यन्त इति कायवाङ्मनोभिस्तुल्य इति समानान् षड्धर्मानाह— आकृत्या अवयवैः गत्येति । अवयवा ऽवयविकार्याणि तुल्यानि निरूपितानि स्वरो वाचिकः हासावलोकनं मानसं भावसूचकमिति भेदेन घटत इति ॥ ३३ ॥

स एवायं वा भविष्यतीति सम्भावयति नूनं निश्चयेनायं भगवत्पुत्रः तत्रापि यो मया गर्भे धृतः । ननु, भगवाननेकपत्नीक इति द्वीपान्तरे वा भगवतः सकाशात् कस्याश्चिज्जातो भवतु ततः सर्वमुपपद्यत इति कथं त्वया जठरे धृतो भविष्यतीति आशङ्कयाह—वामः स्फुरति मे भुज इति । वामभुजस्फुरणमत्यन्तप्रियस्य समालिङ्गनं सूचयति येन परमानन्दो भवति तादृशः पुत्र एव तस्मिन् स्वपुत्रत्वं निश्चित्यापि सम्यक् लौकिकतोऽपरिज्ञाने तथा व्यवहारः कर्तुं न शक्यत इति सन्दिहाना इव स्थिता ॥ ३४ ॥

एवं ततो भगवान् निश्चयार्थं सर्वैः सह समागत इति वदति—एवमिति । यतोऽयं देवकीसुतः भक्तहितकारी सुतरां स्त्रीणां रुक्मिणी च भक्ता सा च मीमांसमाना क्लेशेनैव स्थिता अतस्तद्दुःखनिराकरणार्थं पुत्रत्वेन स्वीकारेऽपि त्रयः प्रयोजका इति देवक्या आनकदुन्दुभिना च सहितः समागतः यतोऽयमुत्तमश्लोकः अन्यथा वाच्यता भवेदिति अत्र

---

भाषा टीका ।

इसकी आकृति अवयव गति स्वर हास अवलोकन ये सब श्रीकृष्ण के तुल्य हैं, यह श्रीकृष्ण की सरूपता इसको कैसे मिली ? ॥ ३३ ॥

अथवा जिसको मैने गर्भ में धारण किया था वही बालक यह होगा, क्योंकि मेरी इस पर बडी प्रीति होती है और मेरा बायां भुजा भी फरकता है ॥ ३४ ॥

इस प्रकार से रुक्मिणीजी के विचार करते ही में वसुदेव देवकी के सहित श्रीकृष्णचन्द्र भी बाहर से आगये ॥ ३५ ॥

भगवान् सब जानते भी थे तौभी चुप रह गये तब नारदजी ने आकर शम्बर के हरण आदि की सब कथा कही ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिसौन्दर्येण प्रद्युम्नं वर्णयति–यमिति । पिता श्रीकृष्णस्तत्स्व प्रद्युम्ने निज आत्मीय ईशो भर्तेति भावो भावना यासां तास्त न्मातरः कृष्णपत्न्योऽपि रहसि निरूढभावाः सत्यो यमभजन्निति यस्तत्र खलु चित्रं कथं सति ? स्मरे स्मर्यमाणत्वेनैव शोभां कामेऽभिलाषविषये सति किञ्च रमास्पदं श्रीकृष्णस्तत्र विम

यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन्रहरूढभावाः।
चित्रं न तत्खलु रमास्पदबिम्बबिम्बे कामे स्मरेऽक्षविषये किमुतान्यनार्यः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे प्रद्युम्नोत्पत्तिनिरूपणं नाम
पञ्चपञ्चाशत्तमोध्यायः॥५५॥

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रीमूर्तिस्तस्य बिम्बे प्रतिबिम्बे पुत्रे तदा किमु वक्तव्यमन्य नार्यो भेजुरिति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

महदाश्चर्य्यं महाश्चर्य्यमित्यर्थः। अभ्यनन्दन् वक्ष्यमाणरीत्या सस्वजुः प्रद्युम्नमिति शेषः। तं च मृतमिव नष्टमदर्शनं प्राप्तं सन्तं पुनरागतं मत्वेत्यर्थः। कृष्णेति तत्सम्बन्धित्वेन तासां महिमानं दर्शयित्वा तदभिनन्दनं चमत्कारितम् ॥ ३७ ॥

देवक्याः प्रागुक्तिः पितामहीत्वेन स्नेहविशेषात् रामस्य पश्चादुक्तिः पश्चादेवागमनात् स्त्रियः श्रीमहिष्यः श्रीरुक्मिण्याः सर्वान्ते निर्देशश्चिरपरिष्वङ्गार्थं पश्चात्स्थितत्वात् किम्वा स्नेहविवशत्वेनाशक्त्या किञ्चिद्विलम्बनात् किम्वा तौ प्रति पुरतः सर्वेषां प्रसादनेच्छयेति ॥ ३८ ॥

द्वारकावासिनश्च सर्वे एव परमहृष्टा बभूवुरित्याह—नष्टमितीति हेत्यव्ययम्पुरातनकथापरामर्षकम् ॥ ३९ ॥

यमिति तैर्व्याख्यातं तत्र रहो भजनं नाम भ्रान्त्या तन्निकटगमनमात्रं विवक्षितं श्रीसङ्कर्षणस्य पुनः श्रीवृन्दावनगतस्य विहारे गोपीनामन्यासामेव स्वीकरिष्यमाणत्वात् श्रीप्रद्युम्नस्य प्रभावभावान्मातृभ्रान्त्या मायावत्या अपि परित्यागाच्च ततश्चायमेवार्थः यं प्रद्युम्नं विरहेण श्रीकृष्णविरहेण रूढो निगूढोभावस्तत्प्रेमा यासां तथाभूताः सत्यस्तन्मातरः तस्य सपत्नीमातरो मुहुरभजन् प्रद्युम्नमागच्छन् मातृशब्देन तावन्मात्रपर्य्यवसानात् तदेवं यदभजन् तत्र चित्रं कथं पितुः श्रीकृष्णस्य सारूप्येण निजेशस्य श्रीकृष्णस्यैव भावःस्फूर्त्तिर्यासां तास्तथा तत्साक्षात्कारसादृश्यलालस्येत्यर्थः। अत्र कान्तादिशब्दमदत्वा ईशशब्दप्रदानं तेन हेतुना स्फुरत्यपि श्रीकृष्णे ईशभाव एवाऽस्फुरत् नतु कान्तभावः तदुद्दीपनतायामयोग्यत्वात्पुत्रस्येति द्योतयति तदेवमन्या नार्यो यदभजन् तत्किमुत सुष्ठेव कान्तभावेनैवेत्यर्थः। "बलवत्सुष्ठकिमुत" इत्यमरः। अत्र हेतवो रामेत्यादीनि पदानीति अथवा कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र हेत्येव योजयति यमिति नवमस्य चतुर्थे यविष्ठे व्यभजन् दायमिति वद्वितीयया प्रतीत्यध्याहार्य्यं प्राप्येति वा पितृसरूपनिजेशभावाः सत्यस्तन्मातरो रहोऽभजन् ह्रिया निलिल्युरित्यर्थः। रहेत्यार्षं पदं रह ऊढभावा इत्यपि क्वचित् ईशशब्दः पूर्ववत् ननु, कथं कान्तभावो न जातः तत्राह रूढभावाः अव्यभिचारिश्रीकृष्णरतयः तदेवं यद्रहोऽभजन् तत्र चित्रं यद्येवं तदप्येकांशेन सवलितमतयो जातास्तदा रामेत्यादिलक्षणे अक्षविषये सति उत अपि अन्यनार्य्यः तद्भावरहितस्त्रियोऽपि। किं किंरहोऽभजन् किन्तु नमेवाभजन् भावहावादिभिरसेवन्तेति अक्षेति अक्षीति वा पाठः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पितृस्वरूपनिजेशभावाः पितृसाम्यान्निजभर्तृबुद्धिसहिताः तन्मातरः कृष्णस्य पत्न्यः मसृणितदृशः कामवशात् स्निग्धदृष्टय अभवन्नित्यर्थः। रमास्पदबिम्बबिम्बे भगवद्विग्रहसदृशे ॥ ४० ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तन्नारदकथितं महदाश्चर्य्यं श्रुत्वा कृष्णान्तःपुरस्त्रियो देवक्यादयश्च मृतं प्रेतं पुनरागतमिव बहूनब्दान् वत्सरान् नष्टमदृष्टं सम्प्रति दृष्टं दृष्ट्वेति शेषः अभ्यनन्दन् ॥ ३७ ॥

तौ दम्पती देवकीवसुदेवौ रुक्मिणी च परिष्वज्य प्रद्युम्नमिति शेषः। नष्टं प्रद्युम्नमायातामित्यस्यापकर्षो वा मुदं ययुः ॥ ३८ ॥

नष्टमिति द्वारकौकसो द्वारकावस्थायिनो जना इत्थमब्रुवन् किमिति अहो मृतो बालः पुनरिहायातः दिष्ट्या अयमानन्द इति ॥ ३९ ॥

सौन्दर्य्यातिशयेन प्रद्युम्नं वर्णयति—यमिति। पिता श्रीकृष्णः तत्सरूपतया निज आत्मीय ईशः भर्त्तेति भावो भावना यासां ताः पितृसारूप्यान्निजभर्तृबुद्धिसहिता इत्यर्थः। तन्मातरः कृष्णपत्न्यः रहसि निरूढभावाः सत्यः यमभजन्निति यत्तत्र खलु चित्रं 'तन्मातरो मनसिजार्द्रदृशोबभूवुः' इतिपाठे ताः कृष्णपत्न्यः यं प्रद्युम्नं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दृष्ट्वेति शेषः । कामवशात् स्निग्धदृष्ट्यो ऽभवन्निति यदेतच्चित्रमिति सम्बन्धः । स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति किञ्च रमायाः आस्पदं श्रीकृष्णस्तस्य बिम्बं मूर्तिः तस्य बिम्बे प्रतिबिम्बे भगवद्विग्रहसदृशे पुत्रे सतीत्यर्थः । तत् किमुवक्तव्यं यदन्या नार्य्यो भजेयुरिति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् ।
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

* श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यं वै इत्यादि ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

यं वै इत्यादि यं प्रद्युम्नं वीक्ष्येत्यध्याहार्यं दास्योऽपि यं दृष्ट्वा कृष्णं मत्वा तत्र तत्र निलिल्युस्तं दृष्ट्वा तन्मातरः तद्विमातरः वत् रहः निर्जनस्थलं अभजन् आत्मानं गोपयामासुः रूढभावाः कृष्णोऽयमागत इति जातव्रीडादिभावाः कुत इत्याह, पितृसरूपनिजेशभावाः पितुः श्रीकृष्णस्य समानं रूपं तेन या निजेश इति भा भानं तामवन्तीति तथा "अव रक्षणपालने" कर्मण्यण् कृष्णोऽयमागत इति या यत्र यथा स्थिता आसन् तास्तथा स्थिता एव ततः सकाशात् व्रीडया रहसि लीना इत्यर्थः । तत्र चित्रं कुत इत्याह, रमास्पदबिम्बेत्यादि रमास्पदं रमाचिन्हं बिम्बं यस्य स तथा लक्ष्मीवक्षा इत्यर्थः । तस्य श्रीकृष्णस्य बिम्बे प्रतिबिम्बे किमुतान्यनार्य्यः पूर्वोक्ताःस्त्रियो दासीप्रभृतयः यं दृष्ट्वा तद्विमातरोऽपि कृष्णबुद्ध्या सङ्कोचेनाभ्यन्तरकृत्या लीना अभूवन् तं दृष्ट्वा दास्यादयो यत्तत्र तत्र निलिल्युस्तात्किमुतेति पूर्वश्लोकार्थसम्भावेशः रह इति विसर्गलोपश्छान्दसः । यद्वा, पितृसरूपनिजेशभावाः पितृसदृशा श्रीकृष्णसदृशा निजा आत्मीया ये ईशभावा ऐश्वर्याणि यं प्रद्युम्नम् अभजन् तन्मा चित्रं तन्मा तरः तन्मा उल्लङ्घ्य तत्राप्रतीतिं मागा इति परीक्षितं प्रति श्रीशुकदेवोक्ति "तृप्लवनतरणयोः" इति सिपि रूपं माङ्योगे ऽडागमाभावः । कीदृशाः रहरूढभावाः रह स्त्यागः रहत्याग इति पचाद्यच् रहेन अनङ्गत्वत्यागेन रूढा पुनः प्ररूढा या भा शोभा ताम् अवन्तीति तथा । यद्वा, हेपितृस्वरूप ! अभिमन्युसदृश, हे परीक्षित् ! निजेशभावा उच्चाटनादिषट्कर्मेषु-स्वादीन्यैश्वर्यादीनि तत्र निदर्शनमाह, स्मरे अक्षिविषये अक्षिगोचरे अन्यथा अन्यपुरुषः किमुत आश्चर्यं आदरणीयः नैवादरणीय इत्यर्थः । कामे कमनीये अथवा काम इति विशेष्यं पदं स्मर इति विशेषणं स्मृतिविषये सतीत्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नारदवाक्यं हि सर्वेषामेव सम्मतं ततः सर्वैः अङ्गीकर्त्तव्यमिति सापत्न्यात् कृष्णस्त्रियो रुक्मिणीव्यतिरिक्ताः प्रथममङ्गीकृतवत्य इत्याह-तच्छ्रुत्वेति । राजस्य एताः महदाश्चर्यं श्रुत्वेति कथं मात्स्यभक्षितस्य जीवनं सम्पूर्णावयवत्वं च कथं वा विशसने अक्षतत्वं समुद्रप्रक्षेपे वा अमरणमिति तासां अनङ्गीकारे बाधकमाह— कृष्णान्तःपुरयोषित इति । स्वस्याप्येवं पुत्रस्य नयने अन्या अप्यङ्गीकारं न कुर्युरिति भावः । अभ्यनन्दन् अयं पुत्रो भवति अस्माकमिति सापत्न्यभावेन दोषदर्शिन्यो न जाताः किञ्च, परमस्नेहेन अभितः आनन्दयुक्ता अपि जाताः तत्र हेतुः बहून् अब्दान् बहुवर्षपर्यन्तं नष्टमदृष्टमिति अत्यन्तसंयोगे द्वितीया न केवलं चिरकालदर्शनमेव तत्र हेतुः किन्तु मृतश्चेदायाति शीघ्रमेव तदापि महानानन्दो भवतीति मृतं पश्चात् इत्थमागतं यथा सादरं लोका अभिनन्दनं कुर्वन्ति देहे विद्यमान एव जीवने अभिनन्दनम् ॥ ३७ ॥

सात्त्विकानामभिनन्दनमाह—देवकीति । तथा स्त्रियः सात्त्विक्यः तौ दम्पती मायावतीं प्रद्युम्नञ्च परिष्वज्य पुत्रत्वात् पुत्रवधूत्वाच्च मुदं ययुः रुक्मिणी चेति भिन्नतया निरूपणं सर्वेषां यावत्सुखं तावदेकस्या एव 'जातमिति ज्ञापनार्थम् ॥ ३८ ॥

साधारणानां तामसानां सम्मतिमाह—नष्टं प्रद्युम्नमायातमिति । तेषां विपरीताभावाय वचनमाह—अहोमृतमिवायात इति । लौकिकभाषायामश्लीलवचनं न दोषाय इत्याश्चर्ये अहो इति च गमनागमनयोरुभयत्रादश्चर्यमाह ॥ ३९ ॥

कामस्य महता प्रयासेन देहग्रहणे फलं जातं नवेति सन्देहं निराकर्त्तुमाह—यं वै मुहुरिति । पितृसरूपतया पितुः समानं यद्रूपं तेन कृत्वा निजेशभावाः कृष्ण एवायमिति बुद्धियुक्ताः निजेशः कृष्णः तस्य मातरोऽपि ऊढभावाः सत्यः तद्दर्शनेन उद्गतकामाः रहः एकान्तमभजन् निलीना जाताः एतच्चित्रं न रमाया आस्पदरूपं यद्बिम्बं भगवान् श्रीनिवासः तस्य बिम्बं कार्यं प्रतिबिम्बम् इति यावत् बिम्बवदेव प्रतिबिम्बेऽपि बुद्धिर्भवतीति न कोऽपि दोषः । रमास्पदपदं लक्ष्म्या अपि तत्र प्रदर्शनार्थं तेन लक्ष्मी चेत् तत्र वयं कथं नेति तासां भ्रमे हेतुर्मुख्यो निरूपितः । किञ्च, कामे कामात् सर्वं सम्भवति. किञ्च, स्मरे अक्षविषये सति स्मृत एवानर्थं करोति किमुत प्रत्यक्षविषयः यत्र भगवत्स्त्रीणामेषा व्यवस्था तत्रान्यनारीणाङ्कामोद्बोधे किम्वक्तव्यम् इत्यर्थः । एवं कामस्य सर्वलोकेषु प्रतिष्ठितत्वम्

---

* एतदध्यायपाठो विजयध्वजस्य न सम्मत अत एव टीका ऽपि नास्ति ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

उक्तं स्त्रीषु प्रतिष्ठितः सुखे हेतुर्भवति न तु पुरुषेष्विति तथोक्तम् ॥ ४० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
षष्ठाध्यायविवरणम् ॥ ६ ॥ ५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्रद्युम्नस्य सौदर्यं वर्णयति—यं मुहुर्विलोक्य पितृसरूपात् पितुः श्रीकृष्णस्य समानसौन्दर्य्याद्धेतोर्निजेशस्य श्रीकृष्णस्य भावो भावना "कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः। आकृत्यावयवैः" इत्यादि चिन्तनं यासां ताः तन्मातरः श्रीरुक्मिण्येव गौरवेण बहुत्वं तदन्तःपुरे कृष्णा पत्नीनामन्यासामागमनायोगात् रहो रहसि तत्परिचयात् पूर्वमेव रूढ उद्भूतो भावो वात्सल्यमयी प्रीतिर्यासां ताः यदुक्तं "अमुष्मिन् प्रीतिरधिका" इति तदा च "स एव वा भवेन्नूनं वामः स्फुरति मे भुजः" इति निश्चयान्ते सन्देहे सति यत् अभजन् गात्रावलोकनमस्तकाघ्राणपाणितलकरणकगात्रमार्जनादित्यनुवृत्तिमकुर्वन् तत् तासां मातॄणां तस्मिन् प्रद्युम्ने न चित्रं कीदृशे रमास्पदं सर्वशोभानिकेतनं यद्बिम्बं श्रीकृष्णगात्रं तस्य बिम्बे प्रतिबिम्बरूपे तथाभूतस्यान्यस्य त्रिभुवनेऽप्यभावादेव तस्य कृष्णपुत्रत्वनिश्चयात्तथाभूतस्यानुभवाच्चेति भावः। किञ्च, तन्मातॄणामेव तस्मिंस्तादृशो भावो न त्वन्यासामित्याह—कामे स्मरे स्मरत्यस्मादिति स्मरस्तस्मिन् कान्तस्मरणहेतोर्यस्य परोक्षत्वेऽपि कामोद्भावकत्वं तस्मिन्नक्षिविषये तु सति उतेति तथेत्यर्थे अन्यनार्य्यः किं तथा भवितुं शक्नुवन्ति अपितु नैव यतः क्षोभमेव प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
पञ्चपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः ॥ ५५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पितृसरूपे श्रीकृष्णसमसौन्दर्ये प्रद्युम्ने निजेशः एव पुत्रात्मना जात इति भावोभक्तिर्यासां ताः "आत्मा, वै पुत्रनामासीति" श्रुतेः। तन्मातरो रुक्मिण्याद्या अपि रहसि एकान्ते रूढो निरूढो भावो भक्तिर्यासां ता यं मुहुरभजन् दध्युरिति यत्तच्चित्रम्, तदा किन्तु वक्तव्यं रमाया आस्पदं श्रीकृष्णगात्रं तस्य बिम्बे रूपान्तरे स्मरे स्मरणार्हे कामे काम्यते उपासकैरिति कामः तुरीयव्यूहस्तस्मिन् अक्षिविषये सति अन्यनार्य्यो भेजुरिति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

भाषा टीका।

इस बातको सुन कर श्रीकृष्णके अंतःपुरकी सब स्त्रियें उस बड़े आश्चर्य को सुन कर और बहुत वर्षसे मृत सदृश खोये हुये पुत्रके आनेसे बड़ा अभिनन्दन करतीं भईं ॥३७॥

देवकीजी वसुदेवजी श्रीकृष्णजी बलरामजी और सब स्त्री तथा रुक्मिणीजी भी ये सब उन दोनों ( प्रद्युम्न और उनकी दुलहिन) को आलिंगन करके बहुत आनन्द को प्राप्त भये ॥३८॥

सब द्वारकावासी गये हुये प्रद्युम्न को फिर आया जानकर विस्मित हो कहने लगे अहो मरा हुआ सरीका बालक फिर आगया तो ये बहुत अच्छा भया ॥ ३९ ॥

जिस प्रद्युम्न को देख कर उनकी सब मातायें अपने पति,-जान कर लज्जासे एकान्तको प्राप्त हुईं और श्रीकृष्णको देख कर जैसा उनको भावों के उदय होते रहे सो भी भये यह कुछ आश्चर्य्य नहीं, क्योंकि ! एक तो ये श्रीकृष्ण के पुत्र होने से प्रतिबिम्बरूप, दूसरे स्मरण मात्रसे क्षोभ करने वाले काममूर्त्ति फिर इनको नेत्रों के आगे आने से कृष्णपत्नियोंको श्रीकृष्णका भ्रम होकर भावोंका उदय हुआ तब अन्य स्त्रियोंका तो कहना ही क्याहै ॥ ४० ॥

इति श्रीमद्भागवतदशमस्कन्धउत्तरार्धमें पचपनअध्यायकी
श्रीवृन्दावनस्थ पं० लक्ष्मणाचार्य कृत
भाषा टीका समाप्त ॥ ५५ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

# षट्पञ्चाशत्तमोऽध्यायः ।

—⁂—

**श्रीशुक उवाच ।**

(१) सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ।
स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १

**राजोवाच ।**

सत्राजितः किमकरोद्ब्रह्मन् ! कृष्णस्य किल्बिषम् ? ।
स्यमन्तकः कुतस्तस्य कस्माद्दत्ता सुता हरेः ॥ २ ॥

**श्रीशुक उवाच ।**

आसीत्सत्राजितः सूर्यो भक्तस्य परमः सखा ।
प्रीतस्तस्मै मणिम्प्रादात्सूर्यस्तुष्टः स्यमन्तकम् ॥ ३ ॥
स तम्बिभ्रन्मणिङ्कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका**

षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणिमाहरत् ।
कन्यां जाम्बवतः प्राप कृष्णः सत्राजितस्ततः ॥ १ ॥
पुत्रादिकामसौख्यस्य निष्ठामुक्त्वाऽतिचञ्चलाम् ।
अर्थस्यानर्थतामाह स्यमन्तहरणादिना ॥ २ ॥

सत्यभामाजाम्बवत्योर्विवाहप्रस्तावाय स्यमन्तकाख्यानमाह–सत्राजित इति । सत्राजित इत्यकारान्तः क्वचिच्च तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः कृतापराधस्तच्छान्तये स्वयमेवोद्यमं कृत्वा मणिना सह प्रादादिति ॥ १—२ ॥

भक्तस्य सत्राजितः सूर्यः स्वाम्यपि सखेवाऽऽसीदित्यर्थः । स तुष्टस्तस्मै स्यमन्तकन्नाम मणिम्प्रादात् प्रीतः स्निग्धः ॥ ३ ॥

नोपलक्षितः सत्राजितोऽसावित्यविज्ञातः ॥ ४ ॥

---

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।**

टीकायां पुत्रादीति शम्बरविषयकमुक्तेयं श्रीप्रद्युम्ने तस्य पुत्रत्वमननात् वस्तुतस्त्वेवमाभाष्यं तन्मातर इत्युक्तम् कथं ताः परिणीता इत्यपेक्षायामादौ प्रियतमायाः श्रीसत्यभामाया विवाहमाह–सत्राजित इति । स्वतनयामिति स्वशब्देनान्यापेक्षा निरस्ता स्वतः स्वयमेव उद्यम्य कृष्णाय सर्वचित्ताकर्षकायेति तस्यास्तु सुतरामाकर्षणमिति पूर्वरागोऽपि सूचितः श्रीजाम्बवत्या विवाहः पूर्वोऽप्येतत्प्रसङ्गेनैव जातत्वेन प्रेमगौणत्वेन च पूर्वं प्रस्तुतः ॥ १ ॥

कुतः सकाशाद्बभूव ? इत्याह–हरेरिति । चतुर्थीविषये षष्ठी-नातीच्छयादानात् ॥ २ ॥

सखा उपासनासातत्येन सदा हितकारी तत्रापि प्रीतः सन् उपासनाविशेषेण तदा प्रीतिविशेषवानित्यर्थः । प्रदानप्रकारः श्रीहरिवंशे—

"तस्योपतिष्ठतः सूर्यं विवस्वानग्रतः स्थितः ।
अस्पष्टमूर्त्तिर्भगवान् तेजोमण्डलवान् प्रभुः ॥
अथ राजा विवस्वन्तमुवाच स्थितमग्रतः ॥
यथैव व्योम्नि पश्यामि सदा त्वां ज्योतिषाम्पते ! ॥
तेजोमण्डलिनं देवं तथैव पुरतः स्थितम् ॥
को विशेषोऽस्ति मे त्वत्तः सख्येनोपगतस्य वै ॥
एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकम् ॥
स्वकण्ठादवमुच्यैनमेकान्ते न्यस्तवान् विभुः
ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा ।
प्रीतिमानथ तं दृष्ट्वा मुहूर्तं कृतवान् कथाम् ॥
तमाह प्रस्थितो भूयो विवस्वन्तं स सत्रजित् ।
लोकानुद्भासयस्येतान् येन त्वं सततं प्रभो ! ॥
तदेतन्मणिरत्नं मे भगवन् ! दातुमर्हसि ।
ततः स्यमन्तकमणिं दत्तवांस्तस्य भास्करः" इति ।

---

(१) सत्राजित्तनयान्तर्व्वी ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

अत्र लोकानुग्रासयस्येतान् येनेति सत्राजितस्याज्ञानमयमेव वचनमिति च ज्ञेयम् ॥ ३ ॥

अपरिचितः सन् प्रविष्टः । यद्वा, प्रविष्टोऽपि न परिचितः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १–२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सत्यभामाजाम्बवत्योर्विवाहं वर्णयितुकामस्तद्विस्तरविपृच्छिषामुत्पादयितुमाह—सत्राजित इति । सत्राजित इत्यकारान्तः कश्चित्तकारान्तोऽपि अन्वयानुसारेण द्रष्टव्यः तत्राकारान्तः कर्तरिक्तान्तः सत्रेणासम्मताज्जितः . जितवान् सर्वोत्कर्षेण वार्तितवानिति तथा सच तावत्कृतं किल्बिषमपराधो येन तथाभूतस्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां कृष्णायोद्यम्योद्धृत्य ददौ ॥ १ ॥

तत्र लब्धप्रश्नाऽवसरः पृच्छति राजा—सत्राजित इति । हे ब्रह्मन् ! तावत्सत्राजित्किं किल्बिषमपराधमकरोत् तस्य सत्राजितस्य स्यमन्तकः कुतः कस्माल्लब्धः कस्माद्धेतोः सुता च हरेर्हरये दत्तेति पृष्टः ॥ २ ॥

सविस्तरमनुवर्णयितुं तावदुपोद्घातमाह—आसीदिति । सत्राजिताख्यः कश्चिद्राजा सदा परमः सूर्यभक्तः आसीत् सूर्यस्तुष्टः भवतीति शेषः । तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं ददौ ॥ ३ ॥

स सत्राजितस्तं मणिं कण्ठे बिभ्राणः रविरिव भ्राजमानः हे राजन् ! मणितेजसा अनुपलक्षितशरीरो द्वारकां प्रविष्टः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्रिविक्रमावतारस्य निरपेक्षभक्तानुकम्पिनो यदुनन्दनस्य एतज्जन्मानुष्ठितकर्मनिमित्तदुर्यशःशमनहेतुविक्रममनुक्रामति—अस्मिन्नध्याये तत्र परीक्षितः प्रश्नबीजमुत्थापयति—सत्राजिदिति । सत्रेण हिण्याद्विदानलक्षणतपसा सूर्यस्थितं हरिं जितवान्वशीकृतवानित्यतः सत्राजिदिति नाम लब्धवान् "यज्ञभेदे सदादाने सत्रमाच्छादने वने" इति कृतकिल्बिषः कृतापराधः मणिना सह स्वयमुद्यम्य याचनादिपरप्रेरणामन्तरेण मत्कन्यां तुभ्यं दास्यामीति वचनादिप्रयत्नं विधाय सत्राजितोऽन्तरात्मा सत्रविषये अजित इति वा ॥ १–२ ॥

भक्तस्य सत्राजितः सखा ॥ ३ ॥

तेजसाऽर्चिषा नोपलक्षितो न दृष्टः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—२० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सप्तमे कामतः प्रोक्तो विवाहस्तामसः परः ।
सात्त्विकश्च प्रसङ्गेण क्लेशेनोभे निवारिते ॥
क्लेशापनोदनार्थाय वीर्यमत्र निरूप्यते ।
वाचिकं कायिकं चैव कायेन वचनेन च ॥
सम्बन्धी च तथा भक्तः स्वापराधापनुत्तये ।
सत्यभामाजाम्बवती ताभ्यां सम्यङ्निरूपिते ॥
गुणा एतास्ततोऽग्रे तु विद्यारूपा निरूपिताः ।
एवमष्टौ महिष्यो हि सात्त्विक्यस्तु ततः पराः ॥
विवाहाः सप्त कामेन कृपया तु सहस्रशः ।
विधितस्त्वेक एवोक्तः द्वयोरत्र निरूप्यते ॥

रुक्मिण्या विवाहं पुत्रसम्पत्तिं चोक्त्वा निमित्तवशात् सत्यभामाया विवाहमाह—सत्राजित इति । सत्राजिच्छब्दः तकारान्तः अकारान्तोऽपि सत्रान् रक्षकसहितानपि जयतीत्यर्थे क्विप् सत्राणां जितं यस्मात् इति क्तान्तेन बहुव्रीहौ अदन्तता भवति एतदधीन एव महतामपि जय इति द्वितीयोऽर्थः । स्वतनयां स्वयमुद्यम्य दत्तवानिति अप्रार्थितः अनभिप्रेतश्च तथा ऽपि दाने हेतुः कृतकिल्बिष इति, कृतापराधः तदपराधदूरीकरणार्थं स्यमन्तकेन मणिना सह यत् कृते अपराधः तदपराधनिमित्तदण्डार्थं कन्यां च दत्तवान् सङ्क्षेपकथेयमिति केचित् वस्तुतस्तु न समाधिभाषा नवुदारलीलावतः अपकीर्त्यादिकं समाधिकार्यं भवति भक्तिसाधकानामेव चरित्राणां वक्तव्यत्वात् कृतकिल्बिष इति यथा कथञ्चिदपराधो ऽपि सम्भवति अतो ऽनभिप्रेतत्वेन कल्पान्तरत्वेन वा अवचनं वस्तुतः सत्यभामा सरस्वत्यंशा भूम्यंशा वेति तस्या विवाहार्थं तथोद्योगो भगवतैव कृतः स्वीकारोऽत्र वक्तव्यो राजसानां तदर्थं स्त्रीप्रकरणे सत्यभामादीनां परिग्रहमात्रं वक्तव्यम् ॥ १ ॥

नन्वाकाङ्क्षापूरणाभावात् सङ्क्षेपपरत्वमेव कुतो न भवतीति चेन् मैवं मित्रविन्दाविवाहवद्यावदुक्तेनैव आकाङ्क्षानिवृत्तिसम्भवात् विशेषं पृच्छति—सत्राजित इति । ब्रह्मन्निति ज्ञानार्थं कृष्णस्य सदानन्दस्य कथं वा को ऽप्यपराधं कुर्यात् तत्रापि पालकस्य अपराधनिमित्तं स्यमन्तको वा भगवद्भक्तानां कुतः देवतान्तरभजनात् तथात्वे कथं वा तस्य निरोधे सम्बन्ध इति प्रश्नाभिप्रायः विरुद्धानामपकारकरणं युक्तं तथा सति तेषां सर्वस्वेन सह कन्यादानं चायुक्तं तस्मात् कथमयमुभयात्मक इति कस्माद्धेतोः सुतां दत्तवान् कन्या ऽपि सूर्यादेव प्राप्ता वरलब्धा न तु तस्य औरसी भगवान् नन्दपुत्र इव तस्या ऽपि कन्येति पुराणान्तरव्यवस्था अत एव यादवानां मध्ये विवाहदोषो न शङ्कनीयः अत्रापि "स्त्रीरत्नं रत्नमेव वा" इति वाक्यात् देवादेव प्राप्तमिति लक्ष्यते ॥ २ ॥

भगवानपि अक्लिष्टकर्मा सगोत्रापत्यत्वे विवाहं न कुर्याद् विस्तरेण वक्तुं कथामारभते—आसीदिति । स्वतन्त्रकथेयमित्य-

ते विलोक्य जनादूरात्तेजसा मुष्टदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥
नारायण ! नमस्तेऽस्तु शङ्खचक्रगदाधर ! ।
दामोदरारविन्दाक्ष ! गोविन्द ! यदुनन्दन ! ॥ ६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्यासीदित्यनेन सूचितम् । सत्राजित आसीदिति भिन्नं वाक्यं तस्य महत्त्वं ख्यापयितुमाह-सूर्योऽपि भक्तस्य परमः सखा आसीदिति भक्तस्य सख्यं शीघ्रं प्रयच्छतीति सूर्यस्य स्वभावो वर्णितः अनेन सूर्यः परमदयालुः अल्पेऽपि भजने बहु प्रयच्छति इति निरूपितं ततो यज्जातं तदाह, प्रीतस्तस्मै मणिं प्रादादिति मणिः स्यमन्तकः कुतस्त्यो मणिरित्याकाङ्क्षायामाह—सूर्य इति, स हि मणिं सूते सर्वमेव सूर्यात् प्रसूतमिति तस्य मणिमात्रप्रसवे न दूषणं तदर्थमेव मणिरुत्पादित इति लक्ष्यते यतः प्रीतस्तस्य भक्त्या सन्तुष्टः स्यमन्तकमुत्पादितवान् उत्पाद्यापि ततोऽपि प्रीतः प्रकर्षेणाऽदात् तस्मिन् सामर्थ्यं स्थापयित्वा अदात् प्रकर्षेणैव दानात् भोगार्थं भोगसाधनसम्पादनार्थं च तज्जातमिति लक्ष्यते ॥ ३ ॥

अतस्तस्य प्रथमतो भोगमाह—स तं बिभ्रदिति । स्वतेजस्तस्मिन्स्थापितमिति तद्धारणेन सूर्य एव धृतः अत एव तत्प्रभावाद्यथा रविस्तथा भ्राजमानो जातः स चेदन्यत्र तिष्ठेत् न काप्यनुपपत्तिर्भवेत् सूर्यश्च रक्षको भवेत् स पुनस्तद्गृहीत्वा द्वारकास्थितान् वञ्चयन्निव समागतः तत सूर्येण उपाचित इत्यभिप्रायं वक्तुं तस्य द्वारकाप्रवेशमाह—प्रविष्टो द्वारकामिति, राजन्निति सम्बोधनम् अन्यविषये अन्यो रक्षां न करोति इति ज्ञापयितुं तस्य मनोरथः सिद्ध इत्याह—तेजसा नोपलक्षित इति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षट्पञ्चाशत्तमे लब्धकलङ्कोऽगान्मणीहृया
लेभे जाम्बवतः कन्यां कृष्णः सत्राजितस्ततः ।

सत्राजित इत्यकारान्तः क्वचित्तकारान्तश्च द्रष्टव्यः ॥ १ ॥

हरे· हरये ॥ २ ॥

भक्तस्य सत्राजितः सूर्यः स्वाम्यपि प्रीतः सखा प्रियसख आसीदित्यर्थः ॥ ३ ॥

नोपलक्षितः सत्राजितोऽसावित्यविज्ञातः ॥ ४—५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षट्पञ्चाशत्तमे श्रीभूदेव्या विवाहमुपक्रम्य स्यमन्तकमणिकथां जाम्बवत्याः प्रसङ्गात् विवाहमुक्त्वा श्रीभूदेव्या विवाहमाह-सत्राजित इति । सङ्गैः आसमन्तात्जितः लब्धजयः सत्राजितोऽकारान्तः कान्तत्वात् क्वचिदन्वयानुसारेण तकारान्तोऽपि ॥ १ ॥

हरेः हरये ॥ २ ॥

भक्तस्य सत्राजितः सूर्यः परमः स्वाम्यपि प्रीतः प्रसन्नः सन्सखा आसीत् स च तुष्टस्तस्मै स्यमन्तकं नाम मणिं प्रादादित्यन्वयः ॥ ३ ॥

नोपलक्षितः सत्राजितत्वेन नैव विज्ञातः ॥ ४ ॥

---

### भाषा टीका ।

ॐ स्यमन्तकमणेर्हर्त्रे नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि सत्राजित् यादवसे जब कृष्णका अपराध बना तब सत्राजित ने स्वयं आपही बुलाकर स्यमन्तक मणि के सहित अपनी कन्या सत्यभामा को कृष्ण के साथ विवाह दीनी ॥ १ ॥

राजोवाच ॥

राजा परीक्षित बोले, कि—हे ब्रह्मन् ! सत्राजित् ने कृष्ण का कौन अपराध किया और सत्राजित् को स्यमन्तक मणि कहां से लब्ध हुआ, और सत्राजित् ने श्रीकृष्ण के साथ अपनी पुत्री का विवाह क्यों किया.? ॥ २ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि सत्राजित् की भक्तिसे सूर्य देव प्रसन्न होकर सखा सदृश हो गये, और उसके ऊपर सन्तुष्ट हो कर सूर्यने उसको स्यमन्तक मणि दिया ॥ ३ ॥

हे राजन् ! वह सत्राजित् उस मणिको कण्ठ में धारण कर सूर्य के सदृश भ्राजमान होता हुआ द्वारका में प्रवेश करता हुआ, उस समय उस मणिके तेज के मारे कृष्ण के विना किसी ने भी सत्राजित् को नहीं पहिचाना ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दीव्यते क्रीडते सूर्योऽयमिति शङ्किताः सन्तः कथयामासुरिति ॥ ५ ॥

सूर्यं नमस्कारार्थमागतं कल्पयन्तोऽग्रिकभक्तीनां सम्बोधनानि नारायणेत्यादीनि ॥ ६ ॥

एष आयाति सविता त्वां दिदृक्षुर्जगत्पते!।
मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि (१)तिग्मगुः॥ ७॥
नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः।
ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो!॥ ८॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

गभस्तिचक्रेण रश्मिजालेन मुष्णन् प्रतिघ्नन् तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः॥ ७॥

न चैतदघटमानमित्याहुः—नन्विति। अन्विच्छन्ति मृगयन्ते अजः सूर्यः॥ ८॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अक्षैः क्रीडत इति नरलीलाकौतुकित्वमुत्कण्ठया स्मृतं नरलीलत्वादेव प्राकृतजनानां तथा चमत्कारोऽपि युज्यत इति भावः॥ ५॥

समाम्यतस्तावत् स्वरूपैश्वर्य्यलीलाभिः स्तुवन्ति पदद्वयेन नारायण हे सर्वजीवाश्रयत्वात्सर्वपरमस्वरूपैश्वर्य ! तादृशत्वादेव लीलयापि बुधशिक्षायै शङ्खगदिधर! अथ विशेषतो गोकुलप्रकाशितप्रेमवश्यत्वसौन्दर्यलीलाभिः स्तुवन्ति पदत्रयेण दामोदर स्वजनवश्यतयोदरेऽङ्गीकृतदामबन्धन! हेअरविन्दाक्ष! परमसुन्दरेत्यर्थः हेगोविन्द! गोचारणोपलक्षित! तत्तन्महालीलाप्रकाशक! एवं तत्र तत्र प्रायोनिगूढ एव त्वं सम्प्रति तु कृपाभरस्तवाकिम्वर्ण्य इत्याशयेनाहुः—हेयदुनन्दनेति। यदूनानन्दयन् सभामध्ये साक्षादासीति भावः॥ ६॥

अतो हेजगत्पते! त्वां दिदृक्षुरायाति अन्यदर्शनस्य दूरतोऽपि स्वतः सिद्धत्वेन नातिसुखदत्वेन चास्पृहणीयत्वात् त्वद्दर्शनस्य तु त्वदुपासनयैव साध्यत्वेन सर्वोर्द्ध्वसुखदत्वेन च परमस्पृहणीयत्वादिति भावः। ननु, नैष सूर्य्य इत्याशङ्क्य तल्लक्षणमाहुः मुष्णन्निति यतस्तिग्मगुः॥ ७॥

त्रिलोक्यां ये विबुधर्षभा ब्रह्मादयस्ते सर्वे मार्गं प्राप्त्युपायमेवान्विच्छन्ति प्राप्तिस्तु दूरे। ननु निश्चये एवं गूढमपि त्वां अद्याधुना यदुषु सक्षाद्वर्त्तमानं ज्ञात्वा कुतोऽपि भाग्यान्निश्चित्य। ननु, ब्रह्मादयश्चेदन्विच्छन्ति सूर्य्यः कस्तत्राहुः अजः द्वादशात्मत्वेन विश्वैकात्मा तदधिष्ठानत्वेन तदभेदेनोपास्यो वायम् अनादित्वान्न जायत इत्यजो वेदो वा त्रयीमय इत्यर्थः अतोऽसौ तु विशेषज्ञ इति भावः। प्रभो! अस्मदीश्वर! अहो भाग्यं त्वदीयानामस्माकमिति भावः॥ ८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तं प्रविशन्तमवलोक्य जना दूरादेव तस्य तेजसा मुष्टाः अपहृता अभिभूताः दृष्टयो येषां ते सूर्योऽयमिति शङ्किताः सन्तः अक्षैर्दीव्यते क्रीडां कुर्वाणाय भगवते श्रीकृष्णाय शशंसुः कथयामासुः॥ ५॥

नमस्कर्त्तुमागतं सूर्य्यं सम्भाव्य भक्त्युद्रेकेण भगवन्तं सम्बोधयन्ति, नारायणेति॥ ६॥

एष इति एष इत्यागच्छतो रूपप्रदर्शनपरं सविता सूर्य्यस्त्वां द्रष्टुमिच्छुः हे जगत्पते! आयाति कथम्भूतः तिग्मास्तीव्रा गावो रश्मयो यस्य सः गभस्तिचक्रेण रश्मिजालेन नृणां चक्षूंषि मुष्णन् प्रतिघ्नन् न चैतदघटमानमित्याहुः॥ ७॥

अन्विच्छन्ति हीति विबुधर्षभा देवश्रेष्ठास्त्रिलोक्यां तव मार्गमन्विच्छन्ति अन्वेषयन्ति त्वं यद्रूपगुणकर्मकः तथाभूतं त्वां द्रष्टुमिच्छन्तीत्यर्थः। अतोऽधुना यदुषु गूढं गृहीतयदुवेषं त्वां ज्ञात्वा हे प्रभो! अयं सूर्यः आयाति॥ ८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अक्षैर्देवनाङ्गैर्दीव्यते द्यूतक्रीडां कुर्वते॥ ५—६॥

गभस्तिचक्रेण रश्मिमण्डलेन तिग्मरुक् सूर्यः॥ ७॥

विबुधर्षभाः देवश्रेष्ठाः त्रिलोक्यान्ते मार्गमन्विच्छन्ति मृगयन्ते। ननु, तेष्वजः सूर्यः अद्य यदुषु गुप्तं ज्ञात्वा द्रष्टुं यात्या याति प्रजाय लोकत्रयभावनायेति वचनात्॥ ८—९॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः॥

त्रयीमयत्वादजः॥ ८॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तस्य प्रभावः सर्वजनीनो जात इति वक्तुं लोकानां भ्रममाह, तं विलोक्येति। निकटे स आयेतापि दूरादेव तत्रापि तेजसा मुष्टदृष्टयः स्वस्वामिनः स्थाने महान्तोऽपि समायन्तीति सन्तोषात् भगवत्स्थाने समागताः भगवानपि अभ्यासक्तः नास्य सन्माननं करिष्यतीति ततोऽयं अस्मान् विलम्बितः तेजसा पीडयिष्यतीति सूर्यात् शङ्किताः लोकव्यसनरूपे द्यूते अक्षैर्दीव्यते भगवते शशंसुः शतमक्षान् विजानातीति मध्ये ऽधिदेवन एव सत्यक्षक्रीडेति विमर्शः अन्यथा धर्मस्थापनार्थमवतीर्णः कथमक्षक्रीडां कुर्यात् मुख्यं हि तदधर्मस्थानमिति सूर्यस्य समागमनं बाधितं मत्वाह, भगवन इति॥ ५॥

सूर्यागमनेन स्वतोऽपि ज्ञातमहत्त्वाःस्तुत्वा भगवन्तं विज्ञापयन्ति—नारायणेति त्रिभिः। नारायणपदं सूर्यान्तर्यामी नारायण इति तस्मिन्नागते अन्तर्यामिप्रेरणाव्यतिरेकेण कार्यं न सिद्ध्यतीति

(१) तिग्मरश्मिरिति विज० पा०।

श्रीशुक उवाच ।

निशम्य बालवचनं प्रहस्याम्बुजलोचनः ।
प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ९ ॥
सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥
दिनेदिने स्वर्णभारानष्टौ स सृजति प्रभो ! ।
दुर्भिक्षमार्यरिष्टानि ( १ ) सर्पाधिव्याधयोऽशुभाः ।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ११ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

विज्ञापनार्थं सूर्यागमनं सम्भवतीति हेतुरुक्तः अतस्ते नमः नमस्कारमात्रं वा अस्मत्साध्यमिति शङ्खचक्रगदाधरेति शेषशायिनं नारायणं व्यावर्तयन्ति नारायणत्वं वा स्थापयन्ति दामोदरेति भक्तकृपालुत्वं तादृशस्यात्रागमने हेतुरुक्तः अरविन्दाक्षेति समागतस्य तापापनोदनं कार्यमुक्तं गोविन्देति तथा करणे आवश्यकत्वं यतो ऽयमिन्द्रो जातः । किञ्च, यदुनन्दनेति तदर्थमेवावतीर्णः ॥ ६ ॥

अत एवात्र बहुकार्यं नवास्तीति स्वतः गमनाभावात् स्वयमागत इत्याहुः—एष आयातीति । आगतस्य विज्ञाप्यमस्तीति आहुः—सवितेति । प्रसविता ऽयं साम्प्रतं च भगवान् लीलयाऽवतिष्ठतीति तदनुगुणसवार्थं प्रष्टुमागत इत्यर्थः । प्रश्नस्तु दूतद्वारापि भवतीति विशेषमाहुः— त्वां दिदृक्षुरिति । स्नेहाभावेऽपि दर्शनमावश्यकमित्यत्र हेतुमाह—जगत्पते इति । स्वस्य निवेदने हेतुं वदन्त आहुः—मुष्णन् गभस्तिचक्रेणेति । दूरे स्थितस्य गभस्तयोऽल्पीयांसः समायान्ति निकटे तु गभस्तिचक्रेण पीडयति नृणामित्यल्पसत्त्वता तर्ह्ययं दोषो निवारणीय इत्याशङ्क्य तस्य स्वाभाविकोऽयमित्याहुः—नृणां चक्षूंषि तिग्मगुरिति । ज्ञानप्रदो भगवान् अत्र समागतः ज्ञानसाधनमेव दूरीकरोतीति प्रतिविधेयः ॥ ७ ॥

ननु, तथापि भवन्तोऽन्तरङ्गाः तान्निवारयतेति चेत्तत्राहुः—नन्विच्छन्तीति । देवाः समागच्छन्तः कथं वारणीयाः तत्रापि स्वप्रभुं द्रष्टुं तत्रापि त्रिभुवनप्रभाः किञ्च अद्य यदुषु गूढं ज्ञात्वा समागताः तत्र यदि कश्चिन्निवारणं कुर्यात् तदा अनेनैव प्रतार्येत इति तमेव मारयेयुः । ननु, तथापि सूर्यो नायास्यति स हि सर्वदा व्यापृतः तत्राहुः—द्रष्टुं त्वायात्यज इति । ब्रह्मा वा द्रष्टुमायाति अवतीर्णस्य रूपान्तरस्वीकरणेनान्यथात्वे पूर्वव्यवहारोऽनुचित इत्याशङ्कयाहुः—प्रभो इति । हे सर्वसमर्थ ! ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्यूतक्रीडाविष्टं भगवन्तं नामकीर्त्तनैरवधारयन्ति नारायणेति ॥ ६ ॥

गभस्तिचक्रेण किरणजालेन ॥ ७ ॥

मनुष्यं मां सूर्य्यो देवः किं दिदृक्षते ? इति मायावीरित्याह—ननु निश्चितम् अन्वेषयन्ति अजः सूर्य्यः ॥ ८—१० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्यशङ्किताः प्रासिद्धः सूर्य एवायाति स किमपि प्रयोजनं कृष्णे निवेदयितुमाहोस्वित् श्रीकृष्णचरणस्पर्शमात्रं कर्तुमित्येवं सूय जातशङ्काः शशासुः कथयामासुः ॥ ५–६ ॥

तिग्मगुः तिग्मास्तीक्ष्णाः गावो गभस्तयो यस्य सः ॥ ७ ॥

अन्विच्छन्ति अन्वेषयन्ति अजः सूर्यः ॥ ८ ॥

---

भाषा टीका ।

द्वारकावासी मनुष्यो को दूर से ही देखकर नेत्रों में चकचौंधा होने लगा, तब वे लोग जाकर सूर्य के आने की शङ्का से चौपड खेलते हुए श्रीकृष्णभगवान् से बोले ॥ ५ ॥

द्वारका वासी जन बोले, कि– हे नारायण ! हे शंखचक्र गदा को धारण करने वाले ! हे दामोदर ! हे कमदललोचन ! हे गोविन्द ! हे यदुनन्दन ! आपको नमस्कार हो ॥ ६ ॥

हे जगत्पते ! ये प्रचंड किरण वाले सूर्य अपनी किरणों के चक्र से मनुष्यों के नेत्रों को ताडित करते हुए आपके दर्शनों के लिये आते हैं ॥ ७ ॥

ठीक ही तो है, त्रिलोकी में बडे २ श्रेष्ठ देव लोग आपके मार्ग को ढूढते हैं इसी से आज कल यदु लोगों में गुप्त जान कर सूर्य आपके देखने को आते हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बालानामज्ञानां वचनम् ज्वलन् विद्योतमानः ॥ ९ ॥

कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिंस्तत् विप्रैः कृत्वा ॥ १० ॥

---

( १ ) सर्वेऽपि व्याधय इति विज० पाठः ।

**अथोपयेमे कालिन्दीं सुपुण्यर्त्वृक्ष ऊर्जिते ।**
**(अ० पा०) ( रूपयौवनसम्पन्नां मनोनयननन्दिनीम् । )**
**वितन्वन्परमानन्दं स्वानां परममङ्गलम् ॥ २९ ॥**

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । स कृष्णस्तेनार्जुनेन समनुज्ञातः सुहृद्भिर्युधिष्ठिरादिभिरनुमोदितश्च भूयः पुनः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवानिति । अत्र तु क्रमोऽयं पूर्वं खाण्डवदाहस्ततः कालिन्दीलाभः ततो नगरनिर्म्माणं ततः सभोपहार इति खाण्डवदाहानन्तरमेवाग्नेः सकाशात्तद्रथादिप्राप्तेः ॥ २५—३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विश्वकर्मापि भगवदुपयोगाभावे ज्ञाते न सम्यक् करोतीति भगवांस्तत्र निवसन्नेव कारयामासेति पूर्वार्द्धमुभयत्र सम्बद्ध्यते तर्हि स्थितिः स्वार्थाऽपि भविष्यतीत्याशङ्क्याह-स्वानां प्रियचिकीर्षयेति । स्वानामेव प्रियञ्चिकीर्षन् न केवलं स्वानमुत्कृष्टं दापितवान् किन्तु साधनान्यपीत्याह—अग्नये खाण्डवं दातुमिति भगवांस्तत्र निवसन्नित्यनुवर्त्तते अन्यथा अग्निरपि सन्तुष्टो न भवेत् भगवान् भक्तानां हितार्थं गुणभावमपि प्राप्तवानिति वक्तुमर्जुनस्य सारथिरासेत्युक्तम् ॥ २५ ॥

. गुप्ततयाऽपि स्थित्वा अर्जुननाम्नैव इन्द्रादिजयं करिष्यामीति भगवद्व्यवसायं ज्ञात्वा अग्निरप्यर्जुने सन्तुष्टो जात इत्याह—सोऽग्निस्तुष्ट इति । अग्नेः पञ्चाङ्गानि पञ्चापि दत्तवान् "धनुर्वज्रादुत्पन्नमिषवश्च वज्रजन्मा हि"इति श्रुतेः । श्वेताः हयाः सात्त्विकाः मथनादुद्भूताः आग्नेयाश्च एव अक्षयतूणीरावपि साहचर्यादाग्नेयौ सर्वैर्देवाग्निभिरभेद्यं वर्म अन्यदैवत्यमपि "अग्निः सर्वा देवताः" इत्याग्नेयमेव ॥ २६ ॥

अन्यदपि दापितवानित्याह—मयश्च मोचित इति । अत्राशेषविशेषकथा भारतादनुसन्धेया वह्नेर्मोचितो मयः सख्ये सभामुपाहरत् भगवता मोचितः भगवते स्वं कार्यं दातुमयुक्तं भगवति न प्रभवतीति च उपकारश्च कर्त्तव्यः अतः साक्षाद्दातुमशक्तः सख्ये अर्जुनायोपाहरत् सख्ये दत्तं च भगवान् मन्यते यद्यप्यर्जुनः सखा तथाऽपि तत्सम्बन्धात् राज्ञे दत्तमिति तस्या उपयोगमाह—यस्यामिति । जले स्थलभ्रमः स्थले च जलभ्रम इति वस्तुनि न भ्रमः किन्तु दृष्टयेव सः ॥ २७ ॥

एवं मुख्यशक्त्या ऐश्वर्यरूपया स्वरूपज्ञानरूपया वा यावत्कर्त्तव्यं तत्कृत्वा तावत्तामात्मसात्कृत्वा अन्यथा सर्वात्मना अन्योपकारो न भवतीति तस्या विवाहं कर्त्तुं भगवान् द्वारकां गत इत्याह—स तेनेति । सोऽर्जुनः सखा राजा वा तेन मयेनार्जुनेन वा सम्यगनुज्ञातः स्वस्य कृतकार्यत्वं ज्ञात्वा सर्वैरेव बन्धुभिर्गमनं कृतं चानुमोदितः चकारात् देवैरपि स्वकृतं सर्वजनीनं जातमितिज्ञापयितुमेतदुक्तं यैः सह गतः तैः सहपुनरागत इति कृत्यैवतेकृतार्थाःकृताइति न सहायार्थे तेषामुपयोगः कर्त्तव्य इति सूचितः अतः सात्यकिप्रभृतयः तत्र न विनियुक्ताः तेषां नयनानयने तु विवाहस्य प्रामाणिकत्वज्ञापके ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अर्जुनस्य धनुरादिलाभाय सारथिरास अभूत् खाण्डवं नामेन्द्रस्य वनम् ॥ २५–२६ ॥

सख्ये खाण्डवदाहकवह्नेर्मित्रायार्जुनाय यस्मिन् यस्याम् ॥२७-२८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खाण्डवमिन्द्रवनम् ॥ २५ ॥

धनुरदादिति प्रथमं पाण्डवान् द्रष्टुमिन्द्रप्रस्थं भगवान् प्राप्तस्ततो नगरं कारयामास ततोऽर्जुनस्य धनुरादिलाभाय अग्नये खाण्डवं दातुं सारथिरभूत् तदाऽग्निर्धनुर्गाण्डीवं रथं वानरध्वजम् अश्वौ अक्षयसायकौ तूणौ चादात् तदनन्तरं कालिन्दीलाभः इति क्रमो ज्ञेयः अन्यथा "एकदा रथमारुह्य विजयो वानरध्वजम् । गाण्डीवं धनुरादाय"इत्याद्युक्तिरनुपपन्ना स्यात् ॥२६॥

मयः खाण्डवदाहकाद्वह्नेः अर्जुनेन मोचितः सख्ये अर्जुनाय यस्मिन् सभारूपे स्थाने कथम्भूते जले स्थलवद्दृक् दृष्टिर्यस्मिन् दुर्योधनस्य राजसूये आगतस्य भ्रमोऽभूत् ॥ २७—२८ ॥

भाषा टीका ।

भगवान् हस्तिनापुरमे वास करते समय पाण्डवोंकी प्रीति के वास्ते स्वर्गमे अग्निको खाण्डववनकी औषधि खवाने को अर्जुनके सारथी भये ॥ २५ ॥

उस अग्निने सन्तुष्ट होकर अर्जुनको सफेद घोडा दिव्य-रथ धनुष अक्षयतरकस शस्त्रधारियोंसे नहीं भेदने लायके कवच ये सब दिये ॥ ॥ २६ ॥

अर्जुन ने अग्नि में से मय दानव को छुटाया तब उस ने सखा अर्जुन को मायाका सभा दिया जिस सभामें दुर्योधनको जलमें स्थलका भ्रम हुआ था ॥ २७ ॥

वे भगवान श्रीकृष्ण उन अर्जुन के कहने से और बन्धुओं के भी अनुमोदन से सात्यकि आदिकों को साथमें लेकर फिर द्वारकापुरी को पधारे ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुपुण्य ऋतुः ऋक्षं च यस्मिन् ॥ २९ ॥

पञ्चमं मित्रविन्दाविवाहमाह-मित्रविन्देति द्वाभ्याम् । आवन्त्यावन्त्या राजानौ ॥ ३०—३१ ॥

षष्ठमाह-नग्नजिदिति । कौशल्यो ऽयोध्यापतिस्तस्य सत्या

विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ ।
स्वयम्वरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥ ३० ॥
राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः ।
प्रसह्य हृतवान् कृष्णो राजन्राज्ञां प्रपश्यताम् ॥ ३१ ॥
नग्नजिन्नाम कौ(स)शल्य आसीद्राजाऽतिधार्मिकः ।
तस्य सत्याऽभवत्कन्या[1] देवी नाग्नजिती नृप ! ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नाम कन्याऽभवदासीत् देवी कान्तिमती नाग्नजितीति पितृनाम्ना प्रसिद्धेत्यर्थः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सुपुण्ये विवाहायातिप्रशस्ते ऋतौ ऋक्षे च द्वन्द्वैक्यं तत्रापि ऊर्जिते ऋतौ रविशुक्रयादियुक्ते ऋक्षे तु सम्पदाद्येकतरे शुभचन्द्रे शुभग्रहयुक्तदृष्टे च विहित इत्यर्थः। स्वत एव परममङ्गलोपि इति लोकशिक्षार्थमेव तत्तदपेक्षेति भावः। यद्वा, परममङ्गलः तत्प्रभावेन स्वयमेव सर्वमङ्गलोपसर्गरित्यर्थः ॥ २९ ॥

स्वयंवरेऽपि कृष्णे सक्ताम् आसक्तां न्यषेधताम् ॥ ३० ॥

पितृष्वसुरिति यदुवंशे स्वसम्बन्धिविवाहस्याचारप्राप्तत्वात् न दोष इति भावः। किञ्च कृष्ण; "ये यथा मां प्रपद्यन्ते" इति रीत्या कृष्यमाणचित्तत्वादपि तन्नामेत्यर्थः। शिबिदेशोद्भवत्वादस्या एव शैब्येति नाम अत एवाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने शैब्येति सम्बोधनं व्याख्यातं च तैः शैब्ये मित्रविन्दे इति ॥ ३१ ॥

अतिधार्मिकः श्रीभगवद्धर्मपर इत्यर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथेति। ऊर्जिते ग्रहबलवति सुपुण्यमनुकूलमृक्षं नक्षत्रं यस्मिंस्तस्मिन् सुमुहूर्ते स्वानां द्वारकौकसां परममानन्दं विस्तारयन् परमं मङ्गलं यस्य सः विवाहितवान् ॥ २९ ॥

अथ पञ्चमं मित्रविन्दाविवाहं प्रस्तौति----विन्दानुविन्दाविति। आवन्त्याववन्तिराजौ दुर्योधनवशं दुर्योधनाधीनतामनुगच्छत इति तथा तौ न्यषेधताम् न्यवारयताम् ॥ ३० ॥

राजाधिदेव्या इति। तथा भगवान् पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्यास्तनयां राज्ञां पश्यतां सतामेव हे राजन् ! प्रसह्य हृतवान् ॥ ३१ ॥

अथ षष्ठं नाग्नजितीविवाहमनुवर्णयति—नग्नजिन्नामेति। कौ(स)शल्यः कोसलदेशाधिपतिरयोध्याधिपतिरिति यावत् तस्य देवी कान्तिमती च सत्या नामकन्या अभूत् अन्वर्थकनामान्तरमप्याह—नाग्नजितीति। नग्नजितोऽपत्यं स्त्रीति तथा हे नृप ! ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

राजाधिदेव्याः राजाधिदेवीतिनामधेयायाः ॥ ३१ ॥

नीलेत्याह्वयो नाम यस्याः सा नीलेत्याह्वया "भा प्रसह्यः स्मृतौ वाक्येप्यास्तु सन्तापकोपयोः" इतियादवः ॥ ३२ ॥

---

श्रीमच्छुकाचार्यकृतसुबोधिनी।

अतः सर्वसम्मतां पश्चात्तामुपयेम इत्याह—अथेति। सुष्ठु पुण्ये नक्षत्रे ऊर्जिते सर्वग्रहानुगुणे पुण्यनक्षत्रं वैदिकम् ऊर्जितत्वं ज्योतिःशास्त्रप्रशस्तत्वं वितन्वन् परमानन्दमिति सर्वेषां सम्मतिरुक्ता रुक्मिणीप्रभृतीनामपि किञ्च विवाहमात्रेण न सुखं दत्तवान् किन्तु स्वरूपतोऽपि परममङ्गलरूपः अतो विशिष्टफलदायी जात इत्यर्थः ॥ २९ ॥

विवाहान्तरमाह—द्वाभ्याम् विन्दानुविन्दाविति। द्वितीयवत्सरोऽयं तानप्युद्धर्तुं भगवान् गृह्णाति मित्रविन्दायाः अवन्तिदेशे स्थितिः तत्रैव स्वयम्वरः दुर्योधनादयोपि गताः भगवांश्च ततः स्वयम्वरणप्रस्तावे दूराद्भगवन्तं दृष्ट्वा निकटे स्थितौ भ्रातरौ आह—मया कृष्णो वरणीय इति. ततस्तौ तस्या आसक्तिञ्च ज्ञातवन्तौ तयोर्विचारेण दुर्योधनो वरणीय इति यतस्तस्यैव वशौ अनुगौ च यथा रुक्मी स्वभगिनी स्वोद्देरेति न तत्रान्यः प्रतिबन्धं कर्तुं शक्तः तथा न्यषेधतां भगवत्सन्मुखे विलम्बमानां यतः अपसार्य दुर्योधनसमीपे नेतुं प्रवृत्ताविति अर्थः ॥ ३० ॥

ततो भगवानेतत् ज्ञात्वा तौ दूरीकृत्य रथवेगेन शीघ्रमागत्य तां जहारेत्याह—राजाधिदेव्या इति। राजाधिदेवी वसुदेवभगिनी नवमे निरूपिता सा तु लोकन्यायेन मातुलकन्यावत् भाग एव भवति अतो न दानापेक्षा कन्यायां परमन्यासक्तायां ग्राह्या न वेति विचारः सा ऽपि राजसाधिकं दीव्यतीति भगवन्तमेव मन्यते कन्या अपि मित्रमेव विन्दतीति मानाभिप्रेतं प्राप्नोति पितृष्वसुरिति कुलद्वये ऽपि तस्या विवाहः सम्मत इति बोधितम् प्रसह्येति भ्रातृभ्यामाच्छिद्य यतः कृष्णः स्त्रीणां हितकर्ता अन्ये च राजानः साक्षिणो जाताः तेनायं विवाहः सर्वसम्मतः सर्वसाक्षिकश्च.. सम्बोधनं च तादृशं सम्मतमिति सम्मत्यर्थम ॥ ३१ ॥

तृतीयं विवाहमाह—भक्तिरूपं नग्नजिदिति चतुर्भिर्वाक्यैः ज्ञाने सर्वे विरोधिनः भक्तौ तु प्रकृतिरेवेति असम्भाव्यकान् बाधकानीति तान्येकेन रूपेण दूरीकर्तुमशक्यानीति सात्त्विका

[1] राजन् नीलेति आह्वया ॥ इति विज० पाठः।

न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान्।
तीक्ष्णशृङ्गान् सुदुर्धर्षान् वीरगन्धासहान् खलान् ॥ ३३ ॥
तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः।
जगाम कौशल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥
स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः।
अर्हणेनापि गुरुणा पूजयन् प्रतिनन्दितः ॥ ३५ ॥
वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम्।
भूयादयं मे पतिराशिषोऽमलाः करोतु सत्या यदि मे धृतो व्रतैः ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

साधनशक्तिरुक्ता अन्यथा त्रिभिरेव प्रेमभक्तिसम्पत्तौ पादसेवनादीनां वैयर्थ्यमेव स्यात् सख्यात्मनिवेदने च भगवता स्वधर्मस्थापनार्थे क्रियेते तत्कृत्वा भगवत्तुल्यः पञ्चाप्यसनानि समूलं दूरीकरोतीति ज्ञापयितुं स्वयं भगवानत्र सप्तरूपाणि करिष्यति इयं च भक्तिः पाषण्डे न भवतीति ज्ञापयितुं नग्नजिद्राज्ञः कन्यात्वेन सा निरूप्यते नग्नात् वेदरहितात् जयतीति अत एव प्रसिद्धः स्वमपि कौरव्यः कौरववंशे उत्पन्नः विश्वासं करिष्यसीति न केवलं विपक्षानेव दूरीकरोति किन्तु श्रौतस्मार्त्तादिसर्वधर्मपरः अतिधार्मिकः स्वरूपतोऽपि महान् राजा तस्य गुणत्रयमपि समीचीनमिति तत उत्पन्ना नाग्नजितीत्याह—तस्येति। कौशल्येति पाठे कोशलदेशाधिपतिरयोध्याराजा सत्येति नाम स्वरूपतः फलतः साधनतश्चेयं भक्तिः सत्येति अत एव वेदविरुद्धमतेषु अधमेषु • कर्मविहीनेषु भक्तिः सत्या न भवतीति द्योतितम् उत्कर्षवादा एवातोऽन्यथा अन्यथा भक्तिशास्त्रं व्यर्थमेव स्यात् सहस्रशो भगवदंशाः दृष्टप्रत्ययान्यपि सम्पादयन्तीति शास्त्रे अनुक्ता भक्तिः न भक्तिरिति भगवत्साक्षात्कारात् पूर्वमेवैषा व्यवस्था सा च देवतारूपा अलौकिकी कन्या न कमपि भगवदंशं गृहीत्वा स्थिता ऽसाधारणी मूलभूतेनैव प्राह्या न केवलं यतो भक्तिः प्राप्यते स एव वेदानुसारी किन्तु यत्रापि तिष्ठति तेनापि तथा भाव्यमिति, नाग्नजितीत्युक्तं पितुरनुसारिणी न मातुरिति ज्ञापयितुञ्च "धन्या पितृमुखी कन्या" इति वाक्यात् नृपेति स्नेहार्थं सम्बोधनमनासक्त्यर्थं च ॥ ३२ ॥

"श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षष्ठमं मित्रविन्दाविवाहमाह—विन्देति द्वाभ्याम्। आवान्त्यौ अवन्तीभूपालौ ॥ ३०—३१ ॥

षष्ठमाह-नग्नजिदिति। कौशल्यः अयोध्याधिपतिः सत्येति संज्ञा ॥ ३२ ॥

[३५]

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सुपुण्यः ऋतु ऋक्षं च यस्मिन् तस्मिन् ऊर्जिते बलवति मुहूर्ते ॥ २९ ॥

आवन्त्यौ अवन्तीराजानौ ॥ ३०—३२ ॥

भाषा टीका।

इस के अनन्तर सुन्दर बड़े शुभ मुहूर्त में अपने भक्तों को परम आनन्द देते हुए श्रीकृष्णभगवान् ने परम मंगल रूप-कालिन्दी का विवाह किया ॥ २९ ॥

विन्द अनुविन्द अवन्ती के राजा हैं दुर्योधन के वशमें हैं उनने अपनी बहिन को श्रीकृष्ण में आसक्त जानकर निषेध किया ॥ ३० ॥

पिता की बहन जो राजाधिदेवी उसकी पुत्री मित्रविन्दा को श्रीकृष्णने सब राजाओं के देखते ही हरण कर लिया ॥ ३१ ॥

कौशलदेश का अति धार्मिक नग्नजित् नाम का राजा था हे नृप परीक्षित् जी ! उस के सत्या एक देवी नाग्नजिती नाम की कन्या होती भई ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

वीरस्य गन्धमपि न सहन्त इति तथा तान् खलान् दुर्वृत्तान् ॥ ३३ ॥

वृषान् जयति यस्तेन लभ्याम् ॥ ३४ ॥

प्रतिनन्दितस्तं प्रतिनन्दितवान् श्रीकृष्णेन वा स प्रतिनन्दितः ॥ ३५-३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स च तां श्रीभगवते दातुमिच्छन्नपि भ्रातृव्यसुहृद्वलाजरासन्धादिभ्यश्च बिभ्यदुपायमकरोदित्यभिप्रेत्याह—नेति। गोवृषानिति गोबलीवर्दवदनभिज्ञार्थं, यद्वा; वृषश्रेष्ठान् यद्वा गोषु धेनुषु स्थितान् अदान्तान् वृषान् अजित्वा बन्धनादिना वशान् कृत्वा खलान् हिंस्रान् असुरत्वभवत्वात् तच्च द्वितीयस्कन्धे ये च प्रलम्बेत्यादौ

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सप्तोक्षस्यापि गणनात् मुक्तिकथनाच्च मुक्तिश्च भगवत्स्पर्श-प्रभावेण देहान्ते ज्ञेया ॥ ३३ ॥

भगवान् सर्वशक्तियुक्तः किञ्च सात्वतां भक्तानां पतिः पालनशीलः ( सर्वराजकुलागमनविचारेण ) अतस्तत्रैव महता सैन्येनावृतः सन् जगाम ॥ ३४ ॥

स तस्मा एव कन्यां दातुं कृततादृशव्याजः अत एव प्रीतः प्रथमतस्तावल्लौकिकरीत्या आसनादिभिः पूजयन् पुनरर्चन-शास्त्ररीत्या तु अर्हणेन तत्तत्पूजाद्रव्येणापि पूजयामिति योऽयम् आदिग्रहणात् पादप्रक्षालनव्यजनादिकं गृह्यते ॥ ३५ ॥

एवं सदसि वृत्तमुक्तं ततश्चात्मीयैः सहाभ्यन्तरकक्षामानीते भगवति वृत्तमाह—वरामिति । विलोक्य चन्द्रशालागवाक्षत इति ज्ञेयम् । अभिमतम् आत्मनश्चिरादभीष्टं सर्वेषां च सम्मतामित्यर्थः । यतः रमायाः पूर्णलक्ष्मीरूपाया रुक्मिण्या अपि पतिं तया पतित्वेन नित्यमाश्रितमिति सर्वोत्तमगुणमित्यर्थः । अतः सापत्न्य-दुःखमपि न वितर्कितमिति भावः । सम्यक् वरौचित्येनान्तः-पुरपर्य्यन्तमागतं विलोक्य साक्षाद्दृष्ट्वा चकमे भावविशेषेण क्षुभ्यन्ती सङ्कल्पयामासेत्यर्थः । नरेन्द्रस्य कन्येति कौमल्येन क्षोभा-सहत्वं दर्शितम्. सङ्कल्पमेवाह—भूयादिति । अनलः चिरमिष्टदेवता-त्वेनार्चितोऽग्निः मे आशिषः सत्याः सफलाः करोतु तत्रोत्कण्ठा-स्वाभाव्येन तदर्चनसम्यक्त्वेऽपि सन्दिहानेव सात्रगद्गदमाह यद्वीति यदि तत्पूजादिनियमो यत्नेन रक्षित इति आशिषोऽमला इति पाठे अयं पतिरेव सत्याः करोत्वित्य-न्वयः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नेति । बलान् दुर्वृत्तान् वीराणां गन्धमपि न सहन्त इति तथा तान् सोढुमशक्यान् गोवृषान् वृषभान् यो जयति तेन लभ्यां तां नाग्नजितीं तान् गोवृषानजित्वा गा अनुधावमानानिति गो-शब्दाभिप्रायः वोढुमुद्वोढुं न शेकुः न प्रबभूवुः ॥ ३३ ॥

तामिति । एवं स्थिते भगवान् तां वृषजितैव लभ्यां श्रुत्वा कौसल्यपुरमयोध्यां जगाम ॥ ३४ ॥

स इति । स नग्नजित् प्रत्युत्थायासनादिभिर्महता अर्हणेन पूजासाधनेन पूजयन्ननुमोदितश्च भगवन्तमाह ॥ ३५ ॥

उक्तिं विवक्षुस्तावत् नाग्नजित्युत्साहमनुवर्णयति—वरामिति । नरेन्द्रकन्या चकमे अकामयत किमित्ययमेव मे मम पति-र्भूयात्, कथम् ? मदिच्छामात्रेण भूयादिति स्वयमेवाशङ्क्य काम-यते मे ममाशिषः कामाः अमला निर्विघ्नाः सत्याः सतीश्च यथार्थाश्च करोतु भगवानिति शेषः । तत्र हेतुमुद्भावयति, यद्यहं धृतं व्रतं यस्य सा कृतपुण्या भवेयम् इत्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वीरान् शूरान् गन्धयन्ति हिंसयन्तीति वीरगन्धाः तान् "गन्धो लेपे च हिंसायं घ्राणग्राह्ये प्रकीर्तितः" इति । वीरस्य दाहोर्गन्ध इव गन्धो येषां तथा तान् "वीघे दाहौ हठौ शाके" इति वा महान्तो घना मेघा यथा नीलास्ते तथा तान् यद्वा महाकठिनान् महामुद्गरानिव स्थितान्वा "घनाः कठिन-सम्पातमेघकाठिन्यमुद्गराः" इति ॥ ३३ ॥

वृषजिल्लभ्यां लब्धुं योग्यां सैन्येन सेनासमूहेन ॥ ३४ ॥

गुरुणा बहुमानेन महित्वेन ॥ ३५ ॥

अभिमतमभीष्टं वरं वरणयोग्यरूपं "वरो ना रूपजामात्रो-र्देयादेरीप्सितवृतौ" इति. आशिषां भार्याभिलाषाणां पतिः साधकः "आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः" यदि मे मया व्रतः व्रतसमूहो धृतः अनुपयुक्तत्वेन निधिवत् भवत्कृत-स्तर्हि स सत्यः सच्चिदानन्दात्मा श्रीकृष्णः करोतु मम पाणि-ग्रहणं करोत्विति शेषः । व्रतानां समूह इत्यस्मिन्नर्थे अच्-प्रत्ययः यदि सत्यो धृतो व्रतोऽस्ति तर्हि स व्रतः सफलत्वेन कृष्णं नः पतिं करोत्विति वा ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बलान् हिंस्रान् असुरस्वभावत्वात् तच्च द्वितीयस्कन्धे ये च प्रलम्बखरदुर्दरेत्यादि सप्तोक्षाया गावो गणनात् मुक्तिकथ-नाच्च । मुक्तिश्च श्रीभगवत्स्पर्शस्वभावेन देहान्ते ज्ञेया ॥ ३३—४३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सा भगवन्निमित्तमेव कथं स्थितेति शङ्कां परिहर्तुं तत्प्राप्तौ व्यसनानीव प्रतिबन्धकाः वृषाः स्थिता इत्याह—न तां शेकु-रिति । अतो नृपा राजसाः अत एव तां वोढुं सप्त गो-वृषान् अवध्यान् रुधिरसम्बन्धमपि कारयितुमयुक्तान् सतः अजित्वा तां वोढुं न शक्ताः सप्तभिर्मिलितैः जये सप्तानां सा भवतीति वैदिके पक्षे स निषिद्ध इति नग्नजिता न क्रियते "तस्मान्नैका द्वौ पती विन्दत" इति श्रुतेः । वार्ष्णीद्रौपदीप्रभृ-तिषु ते दश प्राणाः एते चेन्द्राः पञ्चमुखो वा महादेव इति कालवशात् पुष्टिवशाद्वा प्रलयात्पूर्वमेवं भवतीति न मर्यादाया-मेवं कर्तुं युक्तम् तस्माद्भक्तिः भगवतैव प्राप्तव्या ज्ञानेन च भगवत्त्वमिति पूर्णबोधा एव भगवद्भक्ता भवन्ति तान् वृषान् अजितत्वार्थं वर्णयति—तीक्ष्णशृङ्गानिति । शरीरेण दुष्टता निरूपिता ; अजेयता च दुर्मर्षानिति दुष्टो मर्षः क्रोधो येषाम् इति स्वभावदोषो निरूपितः अन्तःकरणदोषो वा, इन्द्रियदोषा-माह—वीरस्य गन्धमपि न सहन्त इति बलानिति सहजो जीव-दोषः आसुरास्ते जीवा इति अतो दोषचतुष्टयादजेयाः ॥ ३३ ॥

अतः सर्वेषु निवृत्तेषु भगवान् प्रवृत्त इत्याह—तां श्रुत्वेति । यो हि व्यसनापन्नुत् स एव विषय इति लोके फलिष्यति—

"क्षुत्पिपासे तथा रोगाः कर्माणि त्रिविधानि च ।
लोकोपद्रवरूपाणि चत्वार्यावश्यकानि हि ॥
द्यूतं पानं स्त्रियश्चेति त्रीण्यनावश्यकानि हि ।
मृगयादिर्न सर्वेषां तस्माच्च व्यसनानि हि ॥
विशेषेणासनं यत्र व्यसनं तत्प्रकीर्तितम् ।
ज्ञाते ऽपि दोषे यस्यास्ति न निवृत्तिस्तदेव तद्" ॥

यत्पादपङ्कजरजः शिरसा बिभर्त्ति श्रीरब्जजः स गिरिशः सह लोकपालैः ।
लीलातनूः स्वकृतसेतुपरीप्सयेशः काले दधत्स भगवान् मम केन तुष्येत् ॥३७॥
अर्चितं पुनरित्याह नारायण ! जगत्पते ! ।
आत्मानन्देन पूर्णस्य करवाणि किमल्पकः ॥ ३८ ॥
श्रीशुक उवाच ॥
तमाह भगवान् हृष्टः कृतासनपरिग्रहः ।
मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ! ॥ ३९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवानेव तानि दूरीकर्तुं शक्त इति वृषजिन्मात्रलभ्यां तां श्रुत्वा समर्थो भगवान् सात्वतां भक्तानां पतिः अन्यथा भक्तोद्धारो न भवतीति स्वयं जगाम कौशल्याः कोशलदेशराजानः तेषां पुरमयोध्यां महता सैन्येन वृत इति महत्त्वाकाङ्क्षिणो राज्ञः सन्तोषार्थं 'देवानां पूरयोध्या" इत्यादिश्रुतौ नगर्या अपि दैत्यनिवारकत्वमुक्तम् ॥ ३४ ॥

ततस्तस्याभिनन्दनमाह—स कोशलपतिरिति । महांश्चेत् नानुमन्यैत तदा बलादनभिप्रेतानां सम्बन्धिनी समीचीना न भवतीति तस्य पुरस्कार उच्यते लौकिकन्यायेन स करिष्यतीति शङ्कां वारयितुमाह—प्रीत इति । प्रत्युत्थानमासनं च आदिभूतो येषां स्वयमनुपविष्टः गुरुणा अर्हणेनेति अमूल्यद्रव्यैः पूजयामास एवं कर्तुः कन्यादानम् अभिप्रेतं भवतीति ततः प्रत्यनन्दत साधुसमागतमिति प्रतिनन्दनं च कृतवान् कदाचिद्भगवान् कृपां कुर्यात् तदा कन्या कृतार्था भविष्यतीति अनेन राजा सन्दिग्ध इत्युक्तं वृषजयाभावे पि ॥ ३५ ॥

अन्ये तु निस्सन्दिग्धा एव प्रतिज्ञापूरणाभावेपि तन्मात्रादयः कन्या चेत्याह—वरं विलोक्येति । कन्यया यो वरणीयः सर्वैरपि सो यं स्वयमागतो वरयितुं तत्रापि सज्जाभिमतं नरेन्द्रकन्या स्वयमपि विचक्षणा प्रहतश्च भगवद्वरणमार्ग इति निरूपयितुं विशेषणमाह—रमापतिमिति । इष्टा दृष्टेनफलं प्रार्थयति, भूयादयं मे पतिरिति. ननु, धर्मादीनां भगवति सामर्थ्याभावात् कथं भगवान् पतिर्भविष्यतीति आशंक्याह-आशिषो ऽमलाः सत्याः करोत्विति. अयं भगवानेव एतत्सर्वं सम्पादयितुं स्वस्मिन् स्वयमेव शक्तः नन्वयं फलरूपः कथं स्वकृते साधनतामापद्यत इति चेत् तत्राह—यदि मे धृतो व्रतैरिति. व्रतैर्भगवन्नियमैः यैर्भगवान् वशो भवति तादृशैश्च धृतः तदा मत्सदधीन इति मे निर्दुष्टा आशिषः सत्याः करोतु अनेन लोकप्रतीत्या — लोकेप्रिकाञ्च अन्यादृशोप्याशिषः सत्याः करोतीति सूचितश्च अतो मम नास्त्येव सन्देह इति भावः । अनेन सर्वासां भगवान् अभिप्रेत इति निरूपितम् अन्यथा व्रतकरण एव विरोधं कुर्युः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वोढुं विठ्योढुम् ॥ ३३---३४ ॥
कृष्णं पूजयन् प्रतिनन्दितः कृष्णेनादृतो ऽभूत् ॥ ३५ ॥
विलोक्य चन्द्रशालागवाक्षतः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वीरस्य गन्धमपि न सहन्ते इति तथा तान् ॥ ३३ ॥
वृषान् जयतीति वृषजित्तेन लभ्याम् ॥ ३४ ॥
श्रीकृष्णेन प्रतिनन्दितः सः नग्नजित् श्रीकृष्णं पूजयन् प्रीतो ऽभूत् ॥ ३५ ॥
नरेन्द्रकन्या सत्या रमापतिमभिमतं वरं विलोक्य अयं मे पतिर्भूयादिति चकमे कामयत मे आशिषः कामान् सत्याः सतीः अयं करोतु स्वप्राप्तौ स्वयं प्रापको भवत्विति भावः ॥ ३६ ॥

भाषा टीका ।

उस राजा का प्रणथा कि जो सात वैलोंसे लड वो जीतेगा तिसको मै कन्या दोंगा वे सात वैल बडे सींगों वाले बडे कठोर वीरकी गंधको भी नहीं सहनेवाले बडे दुष्टथे उनके जीतने विना कोई राजोंने उसका विवाह नहीं करसकाथा ॥ ३३ ॥

कृष्ण भगवान् उस कन्या को वैलोंके जीतनेसे मिलनेवाली सुन कर बडी सेना को साथमें लकर कौशलपुर को आप चले गये ॥ ३४ ॥

उस कोसलपति राजाने भगवान्के आनेसे बडे प्रसन्न होकर भगवान् प्रत्युथान आदिक सत्कारों से औभेदट आदि से आनान्दित होकर पूजन किया ॥ ३५ ॥

उन श्रीकृष्णरूप वरको आय देखकर अपने बडे आभिमत समझ कर राजपुत्री नाग्नजितीने लक्ष्मीपति की इच्छाकी मन में कहा कि यदि मेरे पति होवे यदि मैने व्रत से परमेश्वर को धारण कियाहै इसके यही निर्मल फल मेरेको मिलैं ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे नरेन्द्र ! राजन्यबन्धोः क्षत्रियस्य शुल्कदा द्रव्यादिप्रदाः ॥ ४० ॥

श्रीभगवानुवाच ।

विज०पाठः (अन्यत्र काले विदुषः स्वयम्वराद्याचितारं वरमाहुरुत्तमम् ।
न हि प्रभूणां पुरुषार्थभागिनां वेलां विनाह्वाययति क्षितीश्वर ! ॥०॥

नरेन्द्रयाञ्चा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः ।
तथाऽपि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम्॥४०॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

अर्चितं पुनरिति अर्चितं तु सन्तमित्यर्थः। नग्नजिदिति शेषः नारायण हे सर्वजीवाश्रय! अतो जगत्पते सर्वद्रव्यस्वामिन्! विशेषतः स्वानन्दपूर्णस्य तवेत्याद्यप्रयोगस्तथाग्रे प्रत्यक्षत्वेपि परोक्षवादः परमगौरवात् अतो ऽहं किं तव करवाणि तत्राप्यल्पकः अल्पतोऽल्पः ॥ ३७ ॥

पुनस्तस्य माहात्म्यविशेषेण तदेवोपपादयति-यदिति-इत्यादीनां यथा पूर्वं श्रेष्ठ्यं तथा निर्देशश्च कनिष्ठकनिष्ठक्रमेण निजाति-तुच्छतां बोधयितुं तत्राब्जजाद्गिरिशस्य कनिष्ठत्वं पुत्रत्वेन शिष्यत्व-व्यवहारात् अब्जजस्य साक्षादेव श्रीकृष्णाष्टादशाक्षरोपास-कत्वाच्च योऽदधत् अदधात् इति सर्वावतारित्वं सूचितं परीप्स-येति इति क्वचित्पाठः परीप्सया परिपालनेच्छयेत्यर्थः। स कृष्ण-स्तु भगवान् स्वयमित्यादौ प्रसिद्धो भगवान् केन हेतुना साध-नेन वा ममाधमस्य तुष्येत् तन्न सम्भावयामी-त्यर्थः ॥ ३८ ॥

तमाहेत्यर्द्धेन तदीयस्य महाभाग्यस्य सूचनं तत्रापि मेवेत्यर्द्धेन तन्माधुर्य्यकृपाभ्यां हृतमनस्त्वस्य कृत आसनस्य चिरमर्पित-स्यापि परिग्रहः स्वीकारो येन स इति निजाभिलषितस्य परमभक्त्या स्वीकारदर्शनेन मुदा सम्यगुपवेशात् सस्मितमिति स्वभावादेव तत्रापि विशेषतः स्वाभिलषितलाभात् किञ्चल्लज्जात-श्च अत एव कौतुकात् सम्बोधयति कुरुनन्द-नेति ॥ ३९ ॥

तादृशोऽप्यहं स्वजनप्रेमानन्दमयनरलीलामेवानुसरन्नस्मि तत्रापि त्वद्विधप्रेम्णा क्वचित्तदुचितमर्य्यादामप्युल्लङ्घयन्नस्मीति विज्ञाप्त-व्यञ्जिकया क्षत्रियोचितप्रार्थनाचातुर्य्याह— नरेन्द्रेति । एतच्च श्वशुरोचितसम्बोधनं सम्बन्धस्य दृढीभावाय कविभिः श्रीव्यासा-दिभिः राजन्यबन्धोः क्षत्रियाधमस्यापि विशेषेण गर्हिता तत्र च निजधर्मानुवर्त्तिन इत्यर्थः। वचेन हरणस्यैव तत्र श्लाघ्यत्वात् तव सौहृदेच्छया त्वया सह सु(स)सम्बन्धार्थं यद्वा तव यत्सौहृदं मयि प्रेम तेन या मदिच्छा तया क्षत्रिय-धर्ममेव कथयन् बलीवर्दबन्धनरूपं तच्छुल्कं विवादं निगूह-नमेमाह न हीति वयं क्षत्रियाः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथोक्तिमाह-अर्चितमिति। यद्यपि सः कोसलपतिः प्राहेत्यने-नैवास्य राजोक्तित्वलाभस्तथापि वरमित्यादिना व्यवहितत्वा-दर्चितमाहेत्युक्तं पुनःशब्दो वाक्यालङ्कारे हे नारायण ! हे जग-त्पते ! स्वानन्देनैव पूर्णस्य तवाल्पकः क्षुद्रो ऽहं किं करवाणि न किमपि प्रियं कर्तुं शक्त इत्यर्थः। यद्वा, किङ्करवाणि किङ्करोऽहं मत आज्ञापयेत्यर्थः । आत्मनः स्वाभाविककिङ्करतां द्योतयितुं नारायणेत्यादिसम्बोधनम् आत्मानन्देन पूर्णस्येति विशेषणं वेद-वगन्तव्यम् ॥ ३७ ॥

अथ परत्वं व्यनक्ति-यत्पादेति। अब्जभवो ब्रह्मा स रुद्रः लोक-पालैश्च सहितः श्रीर्लक्ष्मीश्च शिरसा यस्य तव पादपङ्कजरजो विभर्त्ति एकवचनं प्रत्येकाभिप्रायकं नाहं नारायणः किन्तु यदुष्वन्यतम इत्यत आह—लीलातनूरिति। स्वेन त्वया कृता ये धर्मसेतवो धर्ममर्यादास्तेषां परिपालनेच्छया काले धर्मग्लानिकाले लीलातनूः लीलाविग्रहान् अनेनाकर्मवश्यत्वमुक्तं दधद्बिभ्राणः अनेन नारायण एव सन् धर्मपरित्राणाय यदुषु त्वमवतीर्ण इति लभ्यम् एव-म्विधो भगवान् मम केन कैङ्कर्येण तुष्टो भवेत् ॥ ३८ ॥

तमिति। कृत आसनपरिग्रहो येन स कृष्णस्तं कौसल्यं हे कुरुनन्दन ! सस्मितेन सहितं यथा तथा प्राह ॥ ३९ ॥

उक्तिमेवाह- नरेन्द्रेति। हे नरेन्द्र ! यद्यपि स्वधर्मनिरतस्य राजन्यबन्धोः क्षत्रियस्य याच्ञा विगर्हिता निन्दिता प्रतिषिद्धेति यावत् तथापि सौहृदेच्छया त्वद्बन्धुत्वेच्छया त्वदीयां कन्यां याचे वयं शुल्कदा द्रव्यादिप्रदाः न भवामः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मना स्वलाभेन ॥ ३७ ॥

स्वकृतसेतुपरीप्सया स्वकल्पितवर्णाश्रमलक्षणसेतुपालनेच्छया मयि स्थितः स्वेनैव कृतेन कर्मणा ॥ ३८ ॥ ३९ ॥

विदुषो विद्वांसः स्वयम्वरादन्यत्र काले अयाचितारं वर-मुत्तममाहुः पुरुषार्थभागिनां प्रयोजनांशभाजां प्रभूणां मध्ये स अर्थार्थी तां वेलां कालं विनाह्वाययत्यास्मानमिति शेषः। आह्वान-मिति पाठे सो याचिता स्वयम्वरकालं विनापि स्वहूतिं प्रभूणा-माह्वानमर्हतीति शेषः। वेलेति पाठे प्रभूणामाह्वानं विनापि स एव वेलाकालः स्वयम्वरादय इत्याहुरित्यर्थः ॥ ० ॥

सामान्यमुक्त्वा विशिनष्टि-नरेन्द्रेति। राजन्यबन्धोः राज्ञो वैश्ये जातस्य निजधर्मवर्तिनः क्षात्रधर्ममनुवर्तमानस्य शुल्कदा वेतन-प्रदाः ॥ ४० ॥ ४१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अग्रे यत्पादपङ्कजेति श्लोकः कन्याया एव प्रार्थनारूप इति केचित् केचित्तु राज्ञ इत्यग्रे पठन्ति तत्र प्रसादः कन्याया एव युक्तः। अतो नैव व्याख्यायते पूर्वं सञ्जातविश्वासेन भगवान् करिष्यतीत्युक्त्वो ईश्वरस्य को वा नियामक इति तस्य तोषार्थमाकाङ्क्षां प्रकटीकुर्वती प्रसादमेव प्रार्थयति—यत्पादेति। भगवत्प्रसादे हि भगवानेव प्राप्स्यते तथैव च काम्यते तदतिदुर्लभं यतस्तस्य रज एव सर्वैः कामितमित्याह— यस्य पादपङ्कजरजः शिरसा बिभर्ति श्रीः अब्जजो ब्रह्मा गिरिशो महादेवस्तत्सहितः लोकपालैश्च सहितः रजसा हि भगवदीयं शरीरं भवतीति पूर्वमुक्तं तदा भगवान् निःसन्दिग्धं प्राप्यते सतन्त्रा भक्तिर्वा भवति तत्रापि शिरसि बिभ्रति एतच्छरीरवियोगो प्रथमं तत एव देहारम्भकाः परिष्वङ्गं कुर्वन्तीति। लक्ष्म्या अपि भगवदवतारेषु अवतारो ऽपेक्षित इति सर्वेष्वेव देहेषु यथा भगवत्सम्बन्धो भवति तदर्थं मूर्ध्न्येव ब्रह्मादीनामपि स्वाधिकारसमाप्त्यनन्तरं यथा तथा भवति तदर्थं धारणं पुनरधिकारनिवृत्त्यर्थं नम्रितः पूर्वास्ते कथं बिभ्रतीत्याशङ्क्याह— लीलातनूरिति। यो भगवान् स्वकृतानां धर्ममर्यादानां परीप्सया रक्षितुमिच्छया लीलातनूर्दधत् भवति तेन चरणरजस्सम्बन्धप्रार्थना युक्तेति भावः। एवं सर्वप्रार्थ्यो ऽयमेवेत्याह— भवाविति। स पुरः स्फुरतीति साधनविलम्बः सोढुमशक्य इति प्रसाद एवैतत्कार्यं सिध्यतीति केन वा उपायेन तुष्येदिति जिज्ञासा गत्वा चरणयोः पतित्वा प्रार्थनीयः आहोस्विदन्यो वा कश्चिदुपाय इति भगवत्पादैव दानादिपक्षो निराकृतः ॥ ३७ ॥

अचिन्तितमपि कल्पयिष्यतीति सम्भावनया नैनारधः अत एव भगवान् तमुपायं कल्पितवानित्याह— अर्चितमिति। पुनः पूजयित्वा भगवत्प्रेरणया स्वयमेव राजा किञ्चित् प्रार्थितवान् इति वक्ष्यमाणप्रकारं यथा कन्यामनोरथः सिध्यति अन्तर्बहिः पूर्णस्य नियामकस्य किं वक्तव्यं किं कर्तव्यमित्याभिप्रायेणाह— नारायण प्रेरक! जगत्पते बहिर्नियामक! अतो यथेच्छसि तथैव कारयसि तस्माच्च किञ्चित् वक्तव्यं किञ्च अपूर्णे हि केनचित् क्रियया पूर्यते अयं तु पूर्णानन्देनैव पूर्णः आत्मैव आनन्दः व्यापकत्वे विरलता स्यादिति बृहत्त्वलक्षणं पूर्णत्वमाह पूर्णस्येति। तत्राप्यहमल्पकः अत्यल्पः कुत्सितो ऽल्पो वा अनानन्दत्वात् ॥ ३८ ॥

प्रस्तावनार्थमेव भगवांस्तं प्रेरितवान् यथा याचितो ऽपि न प्रत्याख्याति अतो ऽवसरं प्राप्य भगवान् भक्तहितार्थी तं याचितवानित्याह— तमाहेति। भगवानिति समर्थः पूर्णः पूर्णयाचनं न विगीतं प्रत्युपकारसम्भवात्कृष्ण इति स्त्रीणां हितः कृतार्सैर्नपरिग्रह इत्यव्यग्रः तस्यासनं चेत्परिगृहीतमन्यदपि परिग्राह्यमिति न हि भोजनार्थमुपविष्टस्तूसैः पूर्वमुत्तिष्ठति न वा तदा याचनं दोषाय तस्य याचनं सर्वमेव दुःखं नाशयतीति मेघगम्भीरयेति सस्मितमिति किञ्चिन्मोहयन् याचता प्रयच्छति कन्यामेव न त्वात्मानं तथा सति कन्या ममाज्ञा स्यात् सम्बोधनं विश्वासाय ॥ ३९ ॥

भगवान् याचनदोषं परिहरन् याचते— नरेन्द्रेति। स्त्रीणां हितार्थमवतीर्णस्य येन केनाप्युपायेन तद्धितं साधनीयमिति मम न दोषः तथा ऽपि राजन्यनाथ कुर्वतस्तद्विरुद्धं न कर्तव्यमिति तदर्थं सामान्यन्यायमाह—राजन्यबन्धोर्याच्ञा कविभिर्विगर्हिता ब्रह्मवृत्तिरेव सा नरेन्द्रेति सम्बोधनेन सम्मतिः प्रदर्शिता यागविचारे यागादाविन्द्रः प्रार्थ्यत इति नरनाथे प्रार्थना न विगीतेति सूचितं स्तुतिरप्यनेन कृता कविभिरिति विचक्षणैः तैरेवं मन्यते भगवता वीर्यं क्षत्रियेभ्यो दत्तं यत्किञ्चिदपेक्षितं तद्वीर्येणैव साधनीयमिति अनेनादाने बलादपि नेष्यामीति सूचितम् आपत्सु याचनं न दुष्यतीत्यत आह—निजधर्मवर्तिन इति। निजधर्मो वीर्ये रागे उत्पन्ने राग एव निवारणीयः अनिवृत्तौ वा स्वधर्मः कर्तव्यः ततो मरणं प्राप्तिर्वा मरणेपि परतः प्राप्नोति तस्माद्वीर्यमेव कर्तव्यं तथा ऽपि याच इत्याह—तथापीति। एवं करणे हेतुः सौहृदेच्छया यथा त्वदीया कन्या अभिलषिता एवं सौहार्दमपि ततो वीर्ये द्वयं न सिद्ध्यति ईश्वरत्वात् कापट्येन जयो जयो न भवतीति कदाचिद्दमने ऽपि न मन्येतेति याचनं धर्मपरीक्षार्थं वचनं च कन्या देयैवेति नातीव भारः। ननु पूर्णो याचन् प्रतिदास्यतीति शङ्कायामाह—न हि शुल्कदा इति। मूल्ये दत्ते दासी भवतीति तत्रापि वयं वीर्यमेव परं शुल्कं प्रयच्छामः श्रोत्रियमत्या कदाचिच्छुल्कं याचेरन् भवन्तः कन्यायाः कुशिका वयमिति नवमे तथा निरूपणात् राजा तु याचनात्पूर्वं देयत्वेन विचार्य प्रतिज्ञाञ्च पूरयिष्यामीति कष्टे भगवांश्च न विनियोक्तव्य इति तूष्णीं स्थितः रागे सति कष्टमपि करोति नाभ्यर्थेति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

परीप्सया परिपालनेच्छया तत्तत्काले दधत् प्रपञ्चे प्राकट्यात् पुष्यन् यः स्वयमधुना वर्तते सः ॥ ३७—३९ ॥

राजन्यबन्धोरतिनिकृष्टक्षत्रियस्यापि अहं राज्यजश्रेष्ठो ऽपि याचे किन्तु वयं न शुल्कदा न द्रव्यादिदायिनः ॥ ४०—४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वकृतसेतूनां परीप्सया पालनेच्छया लीलातनूः काले तत्पालने दधत् अस्ति स भगवानयं मम केन सुकृतेन तुष्येत् ॥ ३७-३९ ॥

स्वानन्यभक्तायां सत्यायां प्रीत्यतिशयं द्योतयितुमाह— नरेन्द्रेति। राजन्यबन्धोर्निकृष्टक्षत्रियस्यापि किं पुनरुत्कृष्टस्य ममेति भावः। तर्हि उत्कृष्टो धनं दत्वा कन्यां गृह्णातु तत्राह— न हीति ॥ ४० ॥

---

राजोवाच ।

को ऽन्यस्ते ऽभ्यधिको नाथ ! कन्यावर इहेप्सितः ।
गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ॥ ४१ ॥
किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ! ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४२ ॥
सप्तैते गोवृषा वीर ! दुर्दान्ता दुरवग्रहाः ।
एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥ ४३ ॥
यदिमे निगृहीताः स्युस्त्वयैव यदुनन्दन ! ।
वरो भवानभिमतो दुहितुर्मे श्रियः पते ! ॥ ४४ ॥

भाषा टीका ।

जिस भगवान्के चरणरजको श्रीमहादेवजी तथा लक्ष्मीजी और ब्रह्माजी और सब लोकपालभी मस्तकसे धारण करते हैं जो भगवान् अपने धर्ममर्यादाके पालनेके लिये समय पर लीलाशरीर को धारण करतेहैं वे भगवान् मेरी किस सेवासे सन्तुष्ट होंगे ॥ ३७ ॥

राजाने भगवान् का पूजन किया फिर कहा-कि हे नारायण ! हे जगत्पते ! आपतो अपने स्वरूपानन्द से परिपूर्णहो आपकी सेवा में क्षुद्र क्या कर सकताहूं ॥ ३८ ॥

श्रीशुक उवाच ।

हे कुरुनन्दन ! श्रीभगवान् प्रसन्न होकर आसन पर विराजकर मन्दहास पूर्वक मेघकी गंभीरवाणी से बोले ॥ ३९ ॥

हे राजन् ! क्षत्रियके मांगना बड़ा निन्दित कवियोंने कहा है जो कि अपने धर्ममें वर्तमान है तिसको तौभी तुमारी सुहृदतासे तुमारी कन्याको मैं मागताहूं हम लोग इसका बदला नहीं देसकते हैं ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणानामेकमेव धाम स्थानं तथाभूतस्य यस्य तवाङ्गे॥४१-४२॥

दुर्दान्ता अशिक्षिताः दुरवग्रहा अपरायत्ताः कुतस्तदाह-एतैरिति—भग्ना भङ्गं प्रापिताः ॥ ४३ ॥

यद्यदीमे गोवृषा निगृहीता दमिता नाथिता इति यावत् ॥४४॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीः सर्वगुणाश्रयरूपापि गुणैकधाम्न इति यद्गुणवशीकृतत्वादेवेत्यर्थः ॥ ४१ ॥

अस्माभिरिति बहुत्वेन निजज्ञातिबान्धवादिसङ्ग्रहात् तथा पूर्वमेवेति च समयं दृढयति कन्याया वरस्य धव (वर)तायोग्यस्य तव परीप्सया पुंसां वीर्य्यस्य बलस्य च परीक्षा तदर्थं पाठान्तरे कन्याया यो वरस्तस्य या परीक्षा तया हेतुना पुंसां या वीर्य्यपरीक्षा तदर्थमित्यर्थः । स चास्माकं समयो भवता पालयितव्य एवेति सम्बोधयति सात्वतां भक्तानाम् ऋषभ ! परिपालकेति ॥ ४२ ॥

इत्थं सदोषं स्ववर्णदोषं च परिजहार, अथ समयमेव सूचयति—सप्तेति । एत इति तदङ्गीकारमुपलक्ष्य तेन सह वृषकाङ्गं गत्वाङ्गुल्या निर्दिशति एतैर्भिन्नगात्राः अतो भग्नाः एतद्व्याजेन मद्विरोधिनां तेषां शान्तिरेव चास्माभिर्घटितेति भावः । हे वीरेति तव वीर्य्येण तु निग्राह्या भविष्यन्तीति भावः । अन्यत्तैः । तत्र एताभिस्त्यादिकमध्याहृत्य श्लोकद्वयं योजितम् ॥ ४३ ॥

यद्यदीति निश्चये "धत्से पदं त्वमविता यदि विघ्नमूर्ध्नि" इतिवत् यद्वा यद्यस्मात् त्वयैव निगृहीता एव स्युः बलवत्त्वेनान्यैरशक्यत्वात् वृषत्वेनातिपीडयितुमयुक्तत्वाच्च तस्मादनेन प्रबन्धेन भवानेव वरो ऽभिमतः पूर्वमेवावधारितः तदस्मदस्माकं प्रतिज्ञाया मनोरथस्य च पूरणार्थं भवतैतत्कार्य्यमेवेति भावः । हे यदुनन्दनेति यदुकुलहर्षार्थमपि त्वयैतत्कार्य्यमिति च ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुक्तः प्राह नग्नजित्क इति । हे नाथ ! ते त्वत्तः अभ्यधिकः कन्यायाः ईप्सितो वरः को वा ऽस्ति ? सन्ति बहव इत्यतो भगवन्तं विशिनष्टि-गुणैक इति । गुणानां कल्याणगुणानामेकमेव धाम स्थानं तथाभूतात् यस्यान्यपेक्षया चञ्चलन्तं वा यस्य तवाङ्गे वक्षसि श्रीर्लक्ष्मीरनपायिनी निवसति ॥ ४१ ॥

किन्त्विति । हे सात्वतर्षभ ! समयः मार्यादिकवचं ? कीमर्थं पुंसां वरत्वेनागतानां ( परीक्षार्थं ) सा पि किमर्थमित्यत आह-कन्याया वरो ऽनुरूपः तत्परीप्सया हेतुभूतया ॥ ४२ ॥

को सौ समय इत्यत आह तं वक्तुं तावत्तानन्येषामसमर्थताम् आह—सप्तेति । हे वीर ! दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपरायत्ताः तत्र निदर्शनमाह एतैर्गोवृषैर्भिन्नानि गात्राणि, येषां सुबहवः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

बभूवुः एतान् यो गृह्णाति तस्येयं कन्येति भावः ॥ ४३ ॥

यदीति। अतो यदि इमे वृषास्त्वया निगृहीताः स्युस्तर्हि भवानेव मम दुहितुरभिमतो वरः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कन्यायाः वरपरीप्सया वरेच्छया ॥ ४२ ॥

दुर्दान्ताश्च अशक्यशिक्षाः दुरवग्रहा गृहीतुमशक्याः ॥ ४३-४४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

फलितमाह–यदिम इति। यत् यस्मात् कृत्वा प्रकाशयित्वा ॥ ४४–४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अधुना रागं ज्ञात्वा वृषदमनार्थं प्रार्थयते—को ऽन्य इति। त्वत्तो ऽभ्यधिकः दाने को ऽपि नास्ति पात्रं कन्यायाश्चेप्सितो वरो नान्यो ऽस्ति अतो दृष्टसम्पत्तिः सर्वा ऽपि सिद्धा किञ्च सर्वाः श्रियस्त्वदीया एव यतो गुणानाम् एकं धाम भवानेव अनन्ता गुणा नित्यास्त्वय्येव प्रतिष्ठिताः अत एव श्रीरनपायिनी त्वयि यत्र श्रीस्तत्र सर्वमिति वसतीत्यन्यत्र परिभ्रमणमात्रम् ॥ ४१ ॥

तथास्मदीयो ऽपि धर्मः पालनीय इत्याह-- किन्त्वस्माभिरिति। अधुना ऽकरणे अपराधो भवेत् किन्तु पूर्वमेव कृतः समयो नियमः शुल्कदो निर्भरदानं व्यावर्तयति सात्वतर्षभेति प्रतिज्ञा पालनीयेत्यत्र सम्मतिरुक्ता यादवश्रेष्ठास्तज्जानन्तीति भक्तस्वामी भक्तप्रतिज्ञां पालयिष्यतीति प्रतिज्ञाकरणे निमित्तमाह—पुंसामिति। क्षत्रियेषु वीर्यवान् महान् सप्ताङ्गानि क्षत्रियस्य सर्वत्र तत्सामर्थ्ये महान् भवति अतः सप्त वृषा दम्यत्वेन स्थापिताः महत एव कन्या देया जामातरं प्रति महत्ता वा बोधनीया अधमे च सा निषिद्धा अपरीक्षायां वीर्यं न ज्ञायते इति एतदपि कन्यावरपरीक्षार्थमेव न त्वस्यान्य उपयोगो ऽस्ति ॥ ४२ ॥

अतः कन्यादाने तदवश्यं कर्तव्यं तं समयमाह—यथा परीक्षा सम्पद्यते सैव इति एकत्र गृहे सप्त वृषा निरुद्धाः न कश्चित्तत्र परिपालकः नापि तत्र गौः काचित् भक्ष्यं च यथेष्टं मादकं ततो ऽन्योन्यं युध्यमाना अतिमत्ताः नित्यं क्रुद्धाः तिष्ठन्ति तत्रापि—सप्त विषमसङ्ख्यापन्नाः अन्यथा द्वन्द्वयोधिनो भवेयुः गोवृषा इति न मारणीयाः गोजातीयाः वृषाः समस्थाः वीरेति सम्बोधनमितरस्तुतिः श्रोतुर्मिन्दार्थेति शङ्काव्युदासार्थं वीरस्याग्रे कथनं वीर्योद्बोधनार्थं बहूनेव वृषानेकः मारयतीति आशङ्क्य वैलक्षण्यमाह—दुर्दान्ता इति अदान्तापेक्षया ऽपि कठिना दुरुपसर्गा दमनविरोधिनं वदन्ति (ति) तत्र दमनसम्भावना ऽपि नास्तीति ज्ञापयितुं वीरैरपि दुर्दान्ता इति च (वा) किञ्च दुष्टः अवग्रहो येषां तैः सह कलहो मरणपर्यवसायी आग्रहो वा दुष्टः ते मारयितुम् अशक्याः दृष्टा दृष्टोपायैः अन्यांश्च मारयन्तीति द्वयमुक्तं नापि तेषां वीर्यं सम्भावनामात्रेण सिद्धं किन्तु बहुधा कृतकार्यमित्याह—एतैर्भग्ना इति। काकतालीयव्युदासाय सुबहवः भग्ना न पराजयमात्रं तथा सति दृष्ट्वाऽपि भीताः पलायिता भवन्ति किन्तु भग्नगात्रा गात्राणां करचरणादीनां भङ्गपर्यन्तं यतमानाः ननु, शिक्षाबीजयोरप्रयोजकत्वं तेषु भविष्यतीति चेत् तत्राह— नृपात्मजा इति। शिक्षाविजयिजः न तु क्षत्रियमात्रम् ॥ ४३ ॥

वृषाणां दोषाः उक्ता इति तेषु चेत्तव कृपा एतान्दृशानप्युद्धरिष्यामीति तदा भवानेव कन्याया वरः तदा तां दुष्टामप्युद्धरिष्यति तदीयांश्च ते हि कन्यानिमित्तमेव निरुद्धा इति तदुद्धारव्यतिरेकेण कन्योद्धारो नोपपद्यते। अतस्त्वं चेत्तानुद्धरिष्यसि तदा वर इत्याह–यदिमे निगृहीताः स्युरिति। निग्रहे कृते उद्धारो ऽवश्यं भावीति तदेवोक्तं यदुनन्दनेति लीलार्थमागतः कदाचिन्न कुर्यात् इति सूचितम् यादवास्तथा कुर्वन्तीति न सन्देहश्च गोवर्द्धनादिना तदा अभिमतो वरो भवान् मे दुहितुरिति स्वस्य हीनतां बोधयति योग्यता तु सर्वोत्तमैवेत्याह–श्रियःपत इति। मातैव कन्या समयः परं पूरणीय इति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वयमपि न शुल्कग्राहिण इत्याह—किन्त्विति। समयो नियमः कन्याया वरप्राप्तीच्छया या पुंसां वीर्यपरीक्षा तदर्थम् अन्यथा मत्कन्यायां सर्व एव नृपाः प्रार्थकास्ते मया कथं प्रत्याख्येया इति भावः। कन्याया वरः श्रुतरूपगुणस्त्वमेव वरणीयस्तस्य तव प्राप्त्यर्थमित्यर्थस्तु वास्तवः ॥ ४२—४३ ॥

यत् यदीति प्रकटो ऽर्थः यत् यस्मादिति वास्तवः श्रियः पते इति सम्बोधनेन वृषनिग्रहो न त्वदशक्य इति त्वमेव वरो निर्णीतः वृषास्त्विमे त्वद्विद्वेषिवधार्थमेव स्थापिता इति भावः ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गुणानां स्वाभाविकानां सत्यत्वानन्दत्वसर्वज्ञत्वसर्वैश्वर्यत्वसर्वकर्तृत्वादीनामेकमेव धाम स्थानं तस्य अङ्गे देहे वक्षसि ॥४१॥

समयो नियमः ॥ ४२ ॥

दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपराभूताः भिन्नानि गात्राणि येषां ते तथा भग्नाः भङ्गं प्राप्ताः एतान् यो निगृह्णाति स अस्याः वर इति भावः ॥ ४३ ॥

यत् यदि ॥ ४४ ॥

---

राजोवाच ।

को ऽन्यस्ते ऽभ्यधिको नाथ ! कन्यावर इहेप्सितः ।
गुणैकधाम्नो यस्याङ्के श्रीर्वसत्यनपायिनी ॥ ४१ ॥
किन्त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ! ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥ ४२ ॥
सप्तैते गोवृषा वीर ! दुर्दान्ता दुरवग्रहाः ।
एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥ ४३ ॥
यदिमे निगृहीताः स्युस्त्वयैव यदुनन्दन ! ।
वरो भवानभिमतो दुहितुर्मे श्रियः पते ! ॥ ४४ ॥

भाषा टीका ।

जिस भगवान्‌के चरणरजको श्रीमहादेवजी तथा लक्ष्मीजी और ब्रह्माजी और सब लोकपालभी मस्तकसे धारण करते हैं जो भगवान् अपने धर्ममर्यादाके पालनेके लिये समय पर लीलाशरीर को धारण करतेहैं वे भगवान् मेरी किस सेवासे सन्तुष्ट होंगे ॥ ३७ ॥

राजाने भगवान् का पूजन किया फिर कहा–कि हे नारायण ! हे जगत्पते ! आपतो अपने स्वरूपानन्द से परिपूर्णहो आपकी सेवा में क्षुद्र क्या कर सकताहूं ॥ ३८ ॥

श्रीशुक उवाच ।

हे कुरुनन्दन ! श्रीभगवान् प्रसन्न होकर आसन पर विराजकर मन्दहास पूर्वक मेघसी गंभीरवाणी से बोले ॥ ३९ ॥

हे राजन् ! क्षत्रियके मांगना बड़ा निन्दित कवियोंने कहा है जो कि अपने धर्ममे वर्तमान है तिसको तौभी तुमारी सुहृद-तासे तुमारी कन्याको मैं मागताहूं हम लोग इसका बदला नहीं देसकते हैं ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणानामेकमेव धाम स्थानं तथाभूतस्य यस्य तवाङ्के॥४१–४२॥
दुर्दान्ता अशिक्षिताः दुरवग्रहा अपरायत्ताः कुतस्तदाह–एतैरिति—भग्ना भङ्गं प्रापिताः ॥ ४३ ॥
यद्यदीमे गोवृषा निगृहीता दमिता नाथिता इति यावत् ॥४४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीः सर्वगुणाश्रयरूपापि गुणैकधाम्न इति यद्गुणवशीकृतत्वादेवेत्यर्थः ॥ ४१ ॥

अस्माभिरिति बहुत्वेन निजज्ञातिबान्धवादिसङ्ग्रहात् तथा पूर्वमेवेति च समयं द्रढयति कन्याया वरस्य धव (वर)तायोग्यस्य तव परा॰प्सया पुंसां वीर्य्यस्य बलस्य च परीक्षा तदर्थं पाठान्तरे कन्याया यो वरस्तस्य या परीक्षा तया हेतुना पुंसां या वीर्य्यपरीक्षा तदर्थमित्यर्थः । स चास्माकं समयो भवता पालयितव्य एवेति सम्बोधयति सात्वतां भक्तानाम् ऋषभ ! परिपालकेति ॥ ४२ ॥

इत्थं सदोषं स्ववर्गदोषं च परिजहार, अथ समयमेव सूचयति—सप्तेति । एत इति तदङ्गीकारमुपलभ्य तेन सह वृषकासं गत्वाङ्गुल्या निर्दिशति एतैर्भिन्नगात्राः अतो भग्नाः एतद्व्याजेन मद्विरोधिनां तेषां शान्तिरेव चास्माभिर्घटितेति भावः । हे वीरेति तव वीर्य्येण तु निग्राह्या भविष्यन्तीति भावः । अन्यत्तैः । तत्र एतानित्यादिकमध्याहृत्य श्लोकद्वयं योजितम् ॥ ४३ ॥

यद्यदीति निश्चये "धत्से पदं त्वमविता यदि विघ्नमूर्ध्नि" इतिवत् यद्वा यद्यस्मात् त्वयैव निगृहीता एव स्युः बलवत्त्वेनान्यैरशक्यत्वात् वृषत्वेनातिपीडयितुमयुक्तत्वाच्च तस्मादनेन प्रबन्धेन भवानेव वरो ऽभिमतः पूर्वमेवावधारितः तस्मादस्माकं प्रतिज्ञाया मनोरथस्य च पूरणार्थं भवतैतत्कार्य्यमेवेति भावः । हे यदुनन्दनेति यदुकुलहर्षार्थमपि त्वयैतत्कार्य्य-मिति च ॥ ४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुक्तः प्राह नग्नजित्क इति । हे नाथ ! ते त्वत्तः अभ्यधिकः कन्यायाः ईप्सितो वरः को वा ऽस्ति ? सन्ति बहव इत्यतो भगवन्तं विशिनष्टि–गुणैक इति । गुणानां कल्याणगुणानामेकमेव धाम स्थानं तथाभूतात् यस्यापेक्षया षष्ठ्यन्तं वा यस्य तवाङ्के वक्षसि श्रीर्लक्ष्मीरनपायिनी निवसति ॥ ४१ ॥

किन्त्विति । हे सात्वतर्षभ ! समयः [illegible] पुंसां वरत्वेनागतानां ( परीक्षार्थं ) स च किमर्थमित्यत आह–कन्याया वरो ऽनुरूपः तत्परीप्सया हेतुभूतया ॥ ४२ ॥

को सौ समय इत्यत तं वक्तुं तावत्तान्येषामसमर्थता–माह—सप्तेति । हे वीर ! दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपरायत्ताः, तत्र निदर्शनमाह एतैर्गोवृषैर्भिन्नानि गात्राणि येषां [illegible]

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बभूवुः एतान् यो गृह्णाति तस्येयं कन्येति भावः ॥ ४३ ॥

यदीति । अतो यदि इमे वृषास्त्वया निगृहीताः स्युस्तर्हि भवानेव मम दुहितुरभिमतो वरः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कन्यायाः वरपरीप्सया वरेच्छया ॥ ४२ ॥

दुर्दान्ताः अशक्यशिक्षाः दुरवग्रहा गृहीतुमशक्याः ॥ ४३-४४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

फलितमाह-यदिम इति । यत् यस्मात् कृत्वा प्रकाशयित्वा ॥ ४५-४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अधुना रागं ज्ञात्वा वृषदमनार्थं प्रार्थयते—को ऽन्य इति । त्वत्तो ऽभ्यधिकः धाम्ने को ऽपि नास्ति पात्रं कन्यायाश्चेप्सितो वरो नान्यो ऽस्ति अतो इष्टसम्पत्तिः सर्वा ऽपि सिद्धा किञ्च सर्वाः श्रियस्त्वदीया एव यतो गुणानाम् एकं धाम भवानेव अनन्ता गुणा नित्यास्त्वय्येव प्रतिष्ठिताः अत एव श्रीरत्नपादिकी त्वयि यत्र श्रीस्तत्र सर्वमिति वक्षसीत्यन्यत्र परिभ्रमणमात्रम् ॥ ४१ ॥

चरमस्मदीयो ऽपि धर्मः पालनीय इत्याह-- किन्त्वस्माभिरिति । अधुना करणे अपराधो भवेत् किन्तु पूर्वमेव कृतः समयो नियमः तुशब्दो निर्भरदानं व्यावर्त्तयति सात्वतधर्मेति प्रतिज्ञा पालनीयेत्यत्र सम्मतिरुक्ता यादवश्रेष्ठास्तज्जानन्तीति भक्तस्वामी भक्तप्रतिज्ञां पालयिष्यतीति प्रतिज्ञाकरणे निमित्तमाह—पुंसामिति । क्षत्रियेषु वीर्यवान् महान् सप्ताङ्गानि क्षत्रियस्य सर्वत्र तत्सामर्थ्ये महान् भवति अतः सप्त वृषा दम्यत्वेन स्थापिताः महत एव कन्या देया जामातरं प्रति नम्रता वा बोधनीया अधमे च सा निषिद्धा अपरीक्षायां वीर्यं न ज्ञायते इति एतदपि कन्यावरपरीक्षार्थमेव न त्वस्यान्य उपयोगो ऽस्ति ॥ ४२ ॥

अतः कन्यादाने तदवश्यं कर्त्तव्यं तं समयमाह—यथा परीक्षा सम्पद्यते सतैत इति एकत्र गृहे सप्त वृषा निरुद्धाः न कश्चित्तत्र परिपालकः नापि तत्र गौः काचित् भक्ष्यं च यथेष्टं मादकं ततो ऽन्योन्यं युध्यमाना अतिमत्ताः नित्यं क्रुद्धाः तिष्ठन्ति तत्रापि--- विषमसङ्ख्यापन्नाः अन्यथा द्वन्द्वयोधिनो भवेयुः गोवृषा इति न मारणीयाः गोजातीयाः वृषाः सप्तस्थाः वीरेति सम्बोधनमितरस्तुतिः श्रोतुर्निन्दार्थेति शङ्काव्युदासार्थं वीरस्याग्रे कथनं वीर्योद्बोधनार्थं बहुलेव वृषानेकमारयतीति आशङ्कय वैलक्षण्यमाह—दुर्दान्ता इति अदान्तापेक्षया ऽपि कठिना दुरुपसर्गो दमनविरोधिनं वदन्ति (ति) तत्र दमनसम्भावना ऽपि नास्तीति ज्ञापयितुं वीरैरपि दुर्दान्ता इति च (वा) किञ्च दुष्टः अवग्रहो येषां तैः सह कलहो मरणपर्यवसायी आग्रहो वा दुष्टः ते मारयितुम् अशक्याः दृष्टा दृष्टोपायैः अन्यांश्च मारयन्तीति ग्रथमुक्तं नापि तेषां वीर्यं सम्भावनामात्रेण सिद्धं किन्तु बहुधा कृतकार्यमित्याह—एतैर्भग्ना इति । काकतालीयव्युदासाय सुबहवः भग्नो न पराजयमात्रं तथा सति दृष्टा ऽपि भीताः पलायिता भवन्ति किन्तु भग्नगात्रा गात्राणां करचरणादीनां भङ्गपर्यन्तं यतमानाः ननु, शिक्षावीज्ययोरप्रयोजकत्वं तेषु भविष्यतीति चेत् तत्राह— नृपात्मजा इति । शिक्षाविजयिनः न तु क्षत्रियमात्रम् ॥ ४३ ॥

वृषाणां दोषाः उक्ता इति तेषु चेत्तव कृपा एतादृशानप्युद्धरिष्यामीति तदा भवानेव कन्याया वरः तदा तां दुष्टामप्युद्धरिष्यति तदीयांश्च ते हि कन्यानिमित्तमेव निरुद्धा इति तदुद्धारव्यतिरेकेण कन्योद्धारो नोपपद्यते । अतस्त्वं चेत्तानुद्धरिष्यसि तदा वर इत्याह-यदिमे निगृहीताः स्युरिति । निग्रहे कृते उद्धारो ऽवश्यं भावीति तदेवोक्तं यदुनन्दनेति लीलार्थमागतः कदाचिन्न कुर्यात् इति सूचितम् यादवास्तथा कुर्वन्तीति न सन्देहश्च गोवर्द्धनादिना तदा अभिमतो वरो भवान् मे दुहितुरिति स्वस्य हीनतां बोधयति योग्यता तु सर्वोत्तमैवेत्याह-श्रियःपत इति । मातैव कन्या समयः परं पूरणीय इति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वयमपि न शुल्कग्राहिण इत्याह—किन्त्विति । समयो नियमः कन्याया वरप्राप्तीच्छया या पुंसां वीर्य्यपरीक्षा तदर्थम् अन्यथा मत्कन्यायां सर्वे एव नृपाः प्रार्थकास्ते मया कथं प्रत्याख्येया इति भावः । कन्याया वरः श्रुतरूपगुणस्त्वमेव वरणीयस्तस्य तव प्राप्त्यर्थमित्यर्थस्तु वास्तवः ॥ ४२—४३ ॥

यत् यदीति प्रकटो ऽर्थः यत् यस्मादिति वास्तवः श्रियः पते इति सम्बोधनेन वृषनिग्रहो न त्वदशक्य इति त्वमेव वरो निर्णीतः वृषास्त्विमे त्वद्विद्वेषिवधार्थमेव स्थापिता इति भावः ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणानां स्वाभाविकानां सत्यत्वानन्दत्वसर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वादीनामेकमेव धाम स्थानं तस्य अङ्गे देहे वक्षसि ॥४१॥

समयो नियमः ॥ ४२ ॥

दुर्दान्ताः अशिक्षिताः दुरवग्रहा; अगरात्मताः भिन्नानि गात्राणि येषां ते तथा भग्नाः भङ्गं प्राप्ताः एतान् यो निगृह्णाति स अस्याः वर इति भावः ॥ ४३ ॥

यत् यदि ॥ ४४ ॥

---

एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः।
आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ४५ ॥
बद्ध्वा तान् दामभिः शौरि ( १ ) र्हतदर्पान् हतौजसः ।
व्यकर्षल्लीलया बद्धान् बालो दारुमयान् यथा ॥ ४६ ॥
ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ।
तां प्रत्यगृह्णाद्भगवान् विधिवत् सदृशीं प्रभुः ॥ ४७ ॥
राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ।
लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ४८ ॥

---

भाषा टीका ।

श्रीकृष्णके वचनको श्रवणकर, राजा बोले—कि हेनाथ, आप से श्रेष्ठ कन्याका वाञ्छित वर त्रलोकोंमें दूसरा कौन है? क्योंकि अनेक कल्याणगुण के अद्वितीय स्थान आपके अङ्ग में लक्ष्मीजी निरन्तरवास करती है ॥ ४१ ॥

हे सात्वतश्रेष्ठ, परन्तु कन्याको योग्य वर प्राप्तिकी वाञ्छा से, पुरुषोंके बल परीक्षा के वास्ते पहले हमने एक प्रतीज्ञा कीईही ॥ ४२ ॥

क्योंकि हेवीर! शिक्षा रहित स्वतन्त्र यह सात वृषभ ( बैल ) हैं इनसे अनेक राजकुमार अङ्ग भङ्ग होकर पराजय को प्राप्त होगये हैं, जो कोई पुरुष इनको वश करैगा उसको कन्या दीजावेगी यह प्रतिज्ञा है ॥ ४३ ॥

हे यदुनन्दन! हे लक्ष्मीपते! यदि आप इनको वशमें करोगे तौ मेरी पुत्रीके वाञ्छित वर आपहि होउगे ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतान् यो निगृह्णाति तस्य कन्येति समयः कृतस्तं सप्तधा कृत्वेति बह्वीनां योषितां सम्पूर्ण एवाहं सम्भोगयोग्यः स्यामिति तस्यां प्रत्यसापत्न्यप्रदर्शनार्थमात्मनः सप्तधा करणम् ॥ ४५-४६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आकर्ण्य आकर्णनानन्तरमेवेत्यर्थः । स्मित्वेति द्वयं परिकरं वस्त्रादिपरिच्छदं दृढं बद्ध्वा यतः प्रभुः सर्वत्र समर्थः यद्वा गोपलीलाभ्यासादिव तत्र समर्थ इत्यर्थः । आत्मानं श्रीविग्रहं कृत्वा प्रकाशयित्वा अन्यस्तैः यद्वा एवशब्द इवार्थे सप्तधा कृत्वेव क्षिप्रकारित्वादिति भाव ॥ ४५ ॥

दारुमयान् तत्रापि दामभिर्बद्धान् ॥ ४६ ॥

विस्मितः अकस्मात्तादृशस्वभाग्यफलोदयात् प्रत्यगृह्णात् उद्वहति स्म. उद्वाहस्वरूपं दर्शयति, प्रभुः सर्वसामर्थ्ययुक्तः ॥ ४७ ॥

दुहितुः प्रियमभीष्टं पतिं लब्ध्वा परमानन्दं प्राप्ताः अत एव उत्सवश्च परमो जातः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । परिकरमुत्तरीयादिकं लीलयैवेत्यनेन, श्रमाभाव उक्तः तान् वृषान् न्यगृह्णात् ॥ ४५ ॥

बद्ध्वेति । दामभिः रज्जुभिर्भग्नाः दर्पा येषामत एव हृतं ओजो बलं येषां तान् वृषान् बद्ध्वा व्यचकर्षाऽऽकृष्टवान् यथा बालो बद्धान् दारु (काष्ठ)मयान् वृषान्‌विकर्षति तद्वत् ॥ ४६ ॥

तत इति । ततो वृषग्रहणात् प्रीतः पूर्वमेव प्रीतः ततः सुतरां प्रीत इत्यर्थः । विस्मितश्च राजा नग्नजित् प्रभुः श्रीकृष्णः सदृशीमनुरूपां तां कन्यां यथाविधि प्रत्यगृह्णादुपयेम इत्यर्थः ॥ ४७ ॥

राजपत्न्य इति । दुहितुः प्रियं पतिं लब्ध्वा राजपत्न्यः परमानन्दं प्रापुः तदा महानुत्सवश्चासीत् ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परिकरं चैलोष्णीषादिलक्षणम् ॥ ४५-४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विस्मितः अकस्मात्तादृशस्वभाग्यफलोदयात् ॥ ४७—५८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

आत्मानं सप्तधाकृत्वेति सप्तधा अकृत्वेति भावः एकश्चेत्सप्त वृषान् बध्नाति तदतिचित्रं सप्तधा कृत्वेति ऐश्वर्यप्रकटनमेव तच्च नाग्नजित्या बहुसपत्नीकत्वे भगवतो बहुतनुत्वमाश्वासजनकमिति न रसजनकम् ॥ ४५—५८ ॥

---

(१) भग्नदर्पान् इति वीर० पाठः ।

शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः ।
नरा नार्यः प्रमुदिताः सुवासःस्रगलङ्कृताः ॥ ४९ ॥
दशधेनुसहस्राणि पारिबर्हमदाद्विभुः ।
युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

राज्ञो विश्वासार्थमलौकिकप्रकारं निराकुर्वन् कटिबन्धनादिकं कृत्वा तथा कृतवानित्याह— एवमिति । विभुः सर्वप्रकारेण कर्तुं समर्थः अन्तःप्रविष्टः आत्मानं सप्तधा कृतवान् सप्तापि भगवानेव भवति अलौकिकन्तु न कर्तव्यं रूपाणि त्वकस्य बहून्यपि भवन्ति पुत्राश्च मित्राणि कालभेदेन च तानि न तिष्ठन्तीत्येतावन्मात्रमुत्कर्षहेतुरेव न त्वलौकिकं किञ्चित् ततो लीलयैव न्यगृह्णात् लीलैवोत्कर्षहेतुः बन्धनन्तु सुगममेव ॥ ४५॥

निगृह्य बध्वा समानीतवानित्याह—बध्वेति । दामभिः पृथक् पूर्वं भङ्क्त्वामिरपि न बलास्तिष्ठन्तीति शौरिरिति लौकिकोत्कर्षः तेषां बलं च हतं ततो लीलया व्यकर्षयत् यथा मृतप्राया बलीवर्दा आकृष्यन्ते आरपीडिताः बलीवर्दत्वमपि तेषां निवृत्तमिति दृष्टान्तेनाह—बालो दारुमयानिति । ते हि विपरीता अपि पतिताः बालेनाकृष्यन्ते तथा विशीर्णावयवा आकृष्टा इति तेषां गर्वोऽपि निराकृतः तथा राज्ञश्च ॥ ४६ ॥

ततो राजा कन्यां दत्तवान् इत्याह— विस्मित इति । आदौ विस्मितः पश्चान्मुदितः बन्धनवशीकरणनिस्सत्वकरणान्यत्याश्चर्याणीति विस्मयः एतदर्थमेव प्रतिज्ञेति कार्ये सम्पन्ने मुदितः ददाविति महता सम्भ्रमेण तस्मै दुहितरं ददौ याचनदानप्रतिग्रहाः तस्या जाता इति वक्तुं भगवानपि तां प्रतिगृहीतवानित्याह— तां प्रत्यगृह्णादिति । भक्तानेव भगवानेव करोतीति कृतवानित्युक्तं धर्मपरोऽयं भगवच्छन्दः। तदेव ज्ञापयति–विधिवदिति । वैदिकधर्मोऽस्तत्र योजितवान् तदा लौकिका आसुरा वा धर्माः तां न स्पृशन्तीति सर्वथा स्वाभिप्रेतं सम्पादयति तस्यां तथा करणे हेतुमाह—सदृशीमिति । स्वभावतः सदृशीम् आगन्तुकदोषाभावाय तथाकरणं तस्यां दोषदूरीकरणार्थं तथा करणे लौकिकत्वं भगवति स्यादत आह–प्रभुरिति । स्वयं स्वत एव समर्थः ॥ ४७ ॥

ततोऽनन्तरं सर्वासामेव स्त्रीणां हितं कृतवानित्याह—राजपत्न्य इति । आदौ राज्ञोऽपि ता धर्मैकहेतवो जाताः ततो दुहितरि सापत्न्याभावः तद्द्वारा स्वस्य सम्बन्धः भगवत्युत्कर्षबुद्धिः स्नेहश्चेति कृष्णमुद्धारकं प्रियतमान्तरमीप्सितं पतिं बाह्यम् ऐहिके [illegible]सुखदाता पश्चादपि सायुज्यदः अतः अस्यापि तद्द्वारा तथा भविष्यतीति परमानन्दं लेभिरे सन्तोष एव तासां निस्तारे नियामकः आन्तरमुक्त्वा तासां बाह्यमाह—आसंश्च परमोत्सव इति । महानेव सम्भ्रमः ताभिः कृत इत्यर्थः ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तधात्मत्वेति । सप्तधा कृत्वेत्येवमेव बह्वीरपि विलासिनीरहं सम्भुञ्जे इति मम बहुवल्लभत्वेऽपि न ते कापि क्षतिरिति सत्यां ज्ञापयामासेति श्रीस्वामिचरणाः ॥ ४५–५० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकेनैव रूपेण गोवृषनिग्रहो युक्तः तथापि सत्यायाः सापत्न्यभयनिवृत्तये आत्मानं सप्तधा कृत्वा न्यगृह्णात् ॥ ४५—४६ ॥

सदृशीं कुलरूपतः ॥ ४७– ४९ ॥

भाषा टीका ।

उक्त राजा की इस प्रकार प्रतिज्ञा, श्रवण करके वीरोंके योग्य कछनी प्रभृति धारण कर प्रभुने अपने सात रूप धारण कर, उन बैलोंकी नासिका में नाथ डालके परिश्रम के विना ही उनको वशमें कर लिया ॥ ४५ ॥

इस प्रकार जब उनका बल और गर्व नष्ट होगया श्रीकृष्णजी ने रस्सीन से बांधकर उनको परिश्रम के विना ही इस प्रकार खींचे कि जैसे बालक काष्ठ के बैलों को बांधकर लीला के वास्ते खींचता है ॥ ४६ ॥

श्रीकृष्ण के उस चरित्र से नग्नजित् महाराज को विस्मय हुआ अत एव प्रसन्न होकर उसने निज कन्या को श्रीकृष्ण के अर्थ समर्पण कर दई निरवधिक निर्दोष ज्ञानादि गुणयुत प्रभुने विवाह विधिसे उस योग्य कन्या का स्वीकार किया ॥ ४७ ॥

नग्नजित् राजाकी स्त्रीयां भी पुत्रीके योग्य श्रीकृष्ण रूप प्रिय पति को प्राप्त होकर परम आनन्दको प्राप्त हुई और महान् उत्सव हुआ ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनाञ्च दासीनाम् ॥ ५० ॥

नवनागसहस्राणि नागाच्छतगुणान्रथान् ।
रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ॥ ५१ ॥
दम्पती रथमारोप्य महत्या सेनया वृतौ ।
स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः ॥ ५२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नागान्नागेभ्यः शतगुणान्नवलक्षाणि रथाद्रथेभ्यः शतगुणान्नवकोटीः अश्वादश्वेभ्य शतगुणान्नवपद्मानि ॥ ५१—५२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तमेवाह—शङ्खेति । शङ्खादीनां यथापूर्वं महोत्सवापेक्षया मङ्गलत्वे श्रैष्ठ्यं वाद्यं गीतानुसारि तालादिप्रमुदिता इति नृत्यमपि ज्ञेयं सुशोभनानि वासांसि स्रजश्च येषां ते च कुण्डलाद्यलङ्कृताश्च बभूवुः ॥ ४६ ॥

दशेति युग्मकम् । धेनवः नवप्रसूता गावः अतः सवत्सा ज्ञेयाः विभुस्तत्तद्दाने समर्थः धेनुदानस्याद्यक्तिः सर्वदानश्रैष्ठ्यात् श्रीकृष्णस्याधिकतोषहेतुत्वाद्वा नागादिभ्यो युवतीनां प्रागुक्तिर्दास्यादिना तासां तेभ्यः श्रैष्ठ्यात् ॥ ५० ॥

तथा नागादिभ्यो यथोत्तरमधिकेभ्यस्तासां नागतृतीयांशेनारूपत्वात् निष्काणामेवोक्तिः प्राधान्यात् नागादित्यादेर्ज्ञातावेकत्वं नरान् दासपदात्यादीन् ॥ ५१ ॥

मावृतौ कृत्वेत्यर्थः । यतः स्नेहेन प्रकर्षेण बहिरप्यश्रुधारापातनादिना क्लिन्नमार्द्रं हृदयं यस्य सः ॥ ५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उत्सवमेव प्रपञ्चयति-- शङ्खेति । नेदुर्दध्वनुः तथा गीतयुक्तानि वाद्यानि द्विजानामाशिषश्चाशीर्वादाः नेदुः शोभनैर्वासोभिः स्रग्भिश्चालङ्कृता आसन्निति शेषः ॥ ४९ ॥

विभुर्नग्नजित् दशधेनूनां सहस्राणि पारिबर्हमुपायनमदात् निष्कग्रीवाः सुवाससश्च तासां युवतीनां दासीनां त्रिसाहस्रमदादित्यनुषङ्गः ॥ ५० ॥

नागानां गजानां नवसहस्राणि नागात् नागेभ्यः शतगुणं शतगुणान्नवलक्षाणि रथान् रथात् रथेभ्यः शतगुणान्नवकोटिपरिमितानश्वानश्वेभ्यः शतगुणान्नवपद्मसंख्याकान् नरान् भृत्यांश्च प्रादादित्यनुषङ्गः ॥ ५१ ॥

दम्पतीति । दम्पती नग्नजिद्भार्ये तदा रथमारोप्य सभार्यं कृष्णमिति शेषः । स्नेहेन प्रक्लिन्नमार्द्रं हृदयं ययोस्तौ यापयामासतुः गमयामासतुः पुरं द्वारकां "यापयामास कोसलः" इति पाठे स्नेहप्रक्लिन्नहृदय इति पाठ्यं दम्पती नाग्नजितीश्रीकृष्णौ इति योज्यम् ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गीतवाद्यानि द्विजाशिषश्च तथा प्रमुदिता अभूवन्निति शेषः ॥ ४६ ॥

पारिबर्हं शोभननिकायम् ॥ ५०-५७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्येषामपि सर्वेषां तत्प्रसङ्गात् कृतार्थतामाह—शङ्खेति । शङ्खादयो वाद्यानि त्रिविधानि गीतादीनि शब्दात्मकानि त्रिविधानि षडेते सत्वादिसत्वान्ताः गीतानकयो राजसत्वं नरो नार्यश्चेति चकारादनुक्तसङ्ग्रहः मुदिता इत्यान्तरं वस्त्रादयो बाह्यास्त्रयः अलङ्कारा: सहजा इति चकाराद् ज्ञेयाः ॥ ४६ ॥

राज्ञः सन्तोषेण प्रायेण सर्वस्वदानमाह—दशधेन्विति द्वाभ्याम् । धर्मकामसाधका एकेन अर्थसाधकाश्चतुरङ्गसेनारूपा अपरेण अनभिप्रेतत्वात्त गृहीष्यतीत्याशङ्क्याह—पारिबर्हमिति । कन्याग्रहणे तद्ग्रहणमावश्यकं विभुरिति प्रतिष्ठार्थं यथाकथञ्चिद्दानं वारितं धर्मो हि सहस्रदक्षिणः प्राकृतवैकृतभेदेन दशविधो भवति कामस्त्रिविध इति सहस्रशो युवत्यो दत्ताः नायिकाभेदेन च त्रैविध्यं नियतालङ्कृता रसालम्बना इति ॥ ५० ॥

सहस्रशो गजाः सर्वावान्तरजातियुक्ता दत्ताः नवैव नागभेदा भद्रादयः अन्ये त्रय उत्तरोत्तरं शतगुणाः पूर्वपूर्वस्मात्तस्योत्तरा बुद्धिः शतगुणं गृह्णाति ॥ ५१ ॥

ततः स्नेहात् तत्र स्थापनं वारयितुं प्रस्थापनमाह—दम्पती इति । स्थापने दम्पती कुण्ठितौ भवतः रथं स्वकीयं गमनेऽपि राजप्रयत्न एव सर्वोऽपि सूचितः महत्या सेनया च तेनैव कृतौ स्वयं गमनमनुचितमिति स्नेहेन हृदयक्लेदोऽपि गमने प्रतिबन्धकः अनेन भक्तकर्तव्यं सर्वं कृतवानित्युक्तं कोशलदेशाधिपतिरिति स्वयं तत्र भक्तिकरणार्थं स्वयं [illegible] इत्यप्युक्तम् ॥ ५२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नागात् नागेभ्यः शतगुणान् नवलक्षाणि, रथात् रथेभ्यः शतगुणान् नवकोटीः अश्वात् अश्वेभ्यः शतगुणान् नव पद्मानि ॥ ५१-५२ ॥

श्रुत्वैतद्रुरुधुर्भूपा नयन्तं पथि कन्यकाम् ।
भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥ ५३ ॥
तानस्यतः शरव्रातान् बन्धुप्रियकृदर्जुनः ॥
गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव ॥ ५४ ॥
पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया ।
रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५५ ॥
श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥
कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ॥ ५६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विधुरसङ्कुचितकामः निष्कग्रीवाश्च ताः सुवाससश्च तासां त्रिसाहस्रं नागात् नागेभ्यः शतगुणान् नवलक्षाणि रथात् रथेभ्यः, शतगुणान् नवकोटीः अश्वात् अश्वेभ्यः शतगुणान् अनुपदानि ॥ ५०–५३ ॥

भाषा टीका ।

उस में शङ्ख-भेरी-तथा गोमुखादि बजने लगीं और गान सहित बाजे बजने लगे ब्राह्मणों के आशीर्वाद हुये ॥ आनन्द में मग्न हुये स्त्री पुरुष सुन्दर वस्त्र भूषणों से अलंकृत हुए ॥ ४९ ॥

नग्नजित् महाराज ने दायजे में दशहजार गौ दीया तथा कण्ठ में आभूषण धारण किये और सुन्दर वस्त्र धारण किये तीन हजार दासी ॥ ५० ॥

नव हजार हस्ती, नवलक्ष रथ नौकोटि अश्व, नौपद्म नर, इतनो दायजो दीयो ॥ ५१ ॥

वर कन्या को रथमें बैठाकर बहुतसी सेना के साथ नग्नजित्महाराज ने विदा किये उस समय में राजा का हृदय प्रेम से भरि आयो ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदुभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा असहनशीला रुरुधुः ॥ ५३ ॥

अस्यतः क्षिपतः प्रयुञ्जानानिति यावत् ॥ ५४–५५ ॥

सप्तमं विवाहमाह—श्रुतकीर्तेरिति । श्रुतकीर्तिर्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम कैकेयीं तद्देशजाम् ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

श्रुत्वा स्वदेशात् इति विधिवद्विवाहे युक्तत्वमात्रापेक्षया श्रीभगवतस्तत्रैव विलम्बो ऽभूदित्युक्तं पथि रुरुधुः यतः सुदुर्मर्षाः अत्यन्तासहिष्णवः, वीर्य्यं दर्पः तदापि यदुभिर्भग्नवीर्य्या बभूवुः । ते के ? तत्राह— ये पुरा गोवृषैर्भग्नवीर्य्या बभूवुरिति ॥ ५३ ॥

तथापि तानस्यत इत्यादि कालयामास लीलयैव व्यद्रावयत् तत्रार्जुनस्य परवात्रागमनं विवाहदर्शनार्थं निगूढसमागमेन स्वयमेव स्नेहेन वा मध्ये मध्ये द्वारकागमनात् ॥ ५४ ॥

उप सामीप्येन आ सम्यक् गृहीत्वा तेषां विद्रावणे तु स्वयं न प्रवृत्त इति ॥ ५५ ॥

श्रुत्वेति स्पष्टम् ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुत्वेति । एतद्भगवतो यानं श्रुत्वा यदुभिर्गोवृषैश्च सप्तभिर्भग्नं वीर्यं येषां तथाभूता अपि दुर्मर्षाः कन्यकां नाग्नजितीं नयन्तं श्रीकृष्णं पथि रुरुधुः ॥ ५३ ॥

तानिति । शरसमूहानस्यतः क्षिपतः प्रयुञ्जानानिति यावत् तान् भूपान् बन्धूनां कृष्णादीनां प्रीतिकृदर्जुनः गाण्डीवी धृतगाण्डीवधनुष्कः कालयामास पलाययाञ्चक्रे यथा क्षुद्रमृगान् सिंहः कालयति तद्वत् ॥ ५४ ॥

पारिबर्हमिति । पारिबर्हं श्वशुरदत्तमिति शेषः । एत्यागत्य सत्यया नाग्नजित्या सह ॥ ५५ ॥

अथ सप्तमं विवाहमाह– श्रुतकीर्तेरिति । सन्तर्दन आदिर्येषां तैर्भ्रातृभिर्दत्तां कैकयस्यापत्यभूतां स्वपितृष्वसुः श्रुतकीर्तेः सुतां भद्रां नाम कन्यामुपयेमे ॥ ५६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतः सामर्थ्यं प्रतिपादयितुं वृषभजये लोकप्रसिद्धिर्न जातेति तैः भग्नावयवाः सम्भूय तं गृहीतुं यत्नं कृतवन्त इत्याह– श्रुत्वैतदिति । एतद्भगवच्चरित्रं भूपा इति तेषां स्वदेश उक्तः भगवतस्तु नापि स्वदेशो नापि श्वशुरदेशः सर्वतो रोधे धैर्यन्यं भवतीति कन्यकामेव नयतीत्यन्यथा भ्रुत्वा किञ्चिद्धर्मेयुद्धयो ऽपि समागताः अतो राजबाहुल्यं भवति

सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥
स्वयम्वरे जहारैकः स सुपर्णः सुधामिव ॥ ५७ ॥
अन्याश्चैवम्विधा भार्याः कृष्णस्यासन् सहस्रशः ॥
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे अष्टमहिष्युद्वाहो नाम
अष्टपञ्चाशत्तमोऽध्यायः ॥५८॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पथीति विशकलिततासेनायाः तेषामागमने हेतुं वैरमाह— यदुभिर्भग्नवीर्या इति । कन्यार्थे क्लिष्टा अपीत्याह— गोवृषैः पुरा भग्नवीर्या इति । तथाप्यागमने हेतुः सुदुर्मर्षा इति । सुष्ठु दुष्टां ऽमर्षो येषामिति दुरुपसर्गेण दुष्टः क्रोधो भवति ॥ ५३ ॥

न केवलं रोधनमात्रं किन्तु मारणार्थेऽपि प्रवृत्ता इत्याह–तानस्यत इति । भक्तौ भगवदानुगुण्ये ऽपि भक्तानुगुण्यमप्यपेक्ष्यत इति वक्तुं भगवत्सेवकेनैव ते सर्वे हता इत्याह—अलौकिकं भगवता न कर्तव्यम् ऐश्वर्यं च भक्तिमार्गे स्थापनीयम् अर्जुनोपि भगवत्प्रेरणया युद्धं न कृतवान् किन्तु बन्धूनां भगवद्भक्तानां वसुदेवादीनां प्रियकृत् यथा भक्तौ भक्तापेक्षा भवति बान्धवाश्च स्वोपकारं मन्येरन् गाण्डीवादीनामुदासीनोपकारापकारौ निरूपितौ बन्धूनामत्रोपकारो निरूप्यते एतत्सूचयति—गाण्डीवीति । कालयामासेति कालवत् अभ्रामसेति सूचितं नास्यन्त क्लेशो ऽपि तस्य जात इति ज्ञापयितुं दृष्टान्तमाह—सिंहः क्षुद्रमृगानिवेति ॥ ५४ ॥

उपसंहरति- पारिबर्हमिति । सोपस्करां तां गृहीत्वा विधितोऽपि समानीय परमां रतिं तस्यामुत्पादितवान् भगवान् नान्यत्र रमते यथा भक्तौ रमत इति सर्वाभ्यो विशेष उक्तः द्वारकागमनमर्थादुक्तं यदूनामृषभ इति तया गार्हस्थ्यं सम्यक् सम्पादितमिति लक्ष्यते तत्र सर्वोपपत्तिनिरूपणार्थं भगवानिति एवं रमणे भक्तरूपैव हेतुरित्याह—देवकीसुत इति ॥ ५५ ॥

कीर्त्तिं पञ्चविधितो गृहीत्वा अष्टैश्वर्यं उक्तः सर्वा एव गृहीतयामित्याह त्रिभिः—श्रुतकीर्तेरित्यादिभिः । श्रुतकीर्त्तिरपि पितृभगिनी केकयदेशाधिपतेः पुत्री ज्ञातान्तरशाकिभ्रातृनिषिद्धेति भक्त्यनन्तरापि कीर्तिस्तथा भविष्यतीति तन्निषेधार्थमाह—भ्रातृभिर्दत्तामिति । कृष्ण इत्यत्रामग्नीमप्येनां गृहीतवान् सन्तर्दनोतिप्रसिद्ध इति श्रुतेन कीर्त्तिः श्रुता वा कीर्त्तिर्यस्या इति कीर्त्तिकारणता युक्ता तदंगं प्राप्त इति भवत्येव प्रसिद्धिः केकयदेशः पाश्चात्यः ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदा यदुभिर्भग्नवीर्य्याः बभूवुः पुरा तु गोवृषैरपि ॥ ५३ ॥

कालयामास व्यद्रावयत् ॥ ५४-५५ ॥

सप्तमं विवाहमाह- श्रुतकीर्तेरिति ॥ ५६-५७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्यतः क्षिपतः ॥ ५४—५५ ॥

श्रुतकीर्तेः पितृष्वसुः सुतां भद्रां नामतः कैकेयीं लब्धवान् ॥ ५६ ॥

भाषा टीका ।

श्रीकृष्णके प्रयाणको, श्रवणकर, राजालोगोंने, सत्याको लेजानेवाले श्रीकृष्णकों, मार्गमेंरोका यद्यपि पहलें यादव और वृषभोंसे, उनको वीर्यका भङ्गभी होगयारहा, तथापि अपना पराजय, और सत्याके लेजानेको उनोसे सहन न हुआ ॥ ५३ ॥

श्रीकृष्णके ऊपर, बाणोंकी वर्षा करने लगे, उनको गाण्डीव धनुषधारी अर्जुनने इस प्रकार भगाय दिये कि, जैसे सिंह, अनेक, धानोंको भगाय देवे, क्योंकि अर्जुन, श्रीकृष्णके प्रियकरने रहे ॥ ५४ ॥

यादवशिरोमणि देवकीनन्दन श्रीकृष्णभगवान् श्वशुर के दीये हुये दायजे को लेकर, द्वारकामें आयकर, सत्याके साथ, मनुष्य लीलासे रमण करते भये ॥ ५५ ॥

श्रुतकीर्त्ति भूआ की पुत्री कश्मीर देश में सन्तर्दन आदि भ्राताओं की दी हुई भद्रा कों श्रीकृष्ण विवाहते भये ॥५६॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमं विवाहमाह—सुतांश्चेति । एक एव स श्रीकृष्णो लक्ष्मणां जहार ॥ ५७ ॥

तस्य निरोधोऽन्तःपुरं तस्मात् ॥ ५८ ॥

रुक्मिणी जाम्बवती भामा सत्या भद्रा च लक्ष्मणा ।
कालिन्दी मित्रविन्दा चेत्यष्टौ पट्टमहास्त्रियः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

मद्राधिपतेर्बृहत्सेनाख्यस्य लक्षणैः शुभोदयाचिह्नैः स्वयम्वर इति मद्राधिपतिना स्वसुताया मतज्ञानेन श्रीकृष्णस्य प्राप्त्यर्थं दुर्भेद्यतममत्स्ययन्त्ररचनादिकं कृतं पश्चात्तस्मिन् श्रीकृष्णेनैव विद्धापिते दुष्टा राजानस्तदिदमूचुः राजन् भवत एव मतमिदं न तु कन्याया इति तच्च श्रुत्वा कन्याया दार्ढ्यं जानता स्वयम्वरोऽपि कारित इति कुरुक्षेत्रयात्राकथानुसारेण ज्ञेयम् ॥ ५७ ॥

भौमं श्रीवराहतो भूम्यां जातं तथा च श्रीविष्णुपुराणे श्रीभगवन्तं प्रति तस्या एवोक्तम्—

"यदाहमुद्धृता नाथ त्वया सूकरमूर्त्तिना ।
त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत " ॥

इति महाप्रभावः सूचितः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
उत्तरार्द्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अष्टमं विवाहमाह—सुतामिति । मद्रदेशाधिपतेः सुतां लक्षणैः युक्तां लक्ष्मणां नाम कन्यां स्वयम्वरे असहाय एव सन् जहार यथा सुपर्णो गरुत्मान् सुधां तद्वत् ॥ ५७ ॥

इत्थं प्रधानपत्नीरुक्त्वा अथान्या अप्याह—अन्याश्चेति । कास्ता इत्यत आह—भौमं नरकासुरं हत्वा तन्निरोधादन्तःपुराहानीताः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भौमं हत्वा तस्य भौमस्य निरोधात् तत्कारागृहादाहृता आनीताः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

( श्रीविजयध्वजतीर्थरीत्या द्विषष्टितमः ॥ ६२ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

श्रीरूपाया लक्ष्मणाया विवाहमाह—सुतामिति । मद्रदेशोऽपि केकयनिकटे श्रीवत्सरूपेति लक्ष्मणा अस्या विवाहे लक्षणवत्त्वं प्रयोजकमिति लक्षणैर्युतामित्युक्तं राधावेधसनिमित्तस्वयम्वरे जहार वरणानन्तरम् अग्रिमवाक्यानुरोधेनावगम्यते एक इति भगवत्प्रतापः यतः स भगवान् कृष्णः अप्रतिघातनयने दृष्टान्तः सुपर्णः सुधामिवेति इन्द्रादिजये च एतामग्रे विस्तरेण वक्ष्यति सर्वा एकतो विस्तरोपाख्याना इयमेकतः इति ज्ञापयितुं वाचनिके विवाहे विस्तरेणोक्तम् ॥ ५७ ॥

साधनरूपा उक्ताः साधनाधीनत्वात् साध्यस्य ताः सङ्क्षेपेणाह—अन्या इति । चकारादेताश्च उत्कृष्टापकृष्टाश्च सङ्गृहीताः नरकासुरं हत्वा तदन्तःपुरात् सङ्गृहीताः तेनैवैकत्र मेलिते भगवता आहृता इति निदर्शनमात्रं तासामानयने चारुदर्शनं ज्ञानं सौन्दर्यञ्च यासामिति हेतुरुक्तः विजातीया गोपिकादयः असमाना उत्कृष्टा अपकृष्टास्त्वप्सरसः स्वयमागताः सर्वा एव भार्या आसन् स्पष्टमेव सर्वासां मुक्तिदत्वेति निरूपितम् एवं भगवतो निरोधः ॥ ५८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
नवमाध्यायविवरणम् ॥ ९ ॥ ५८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सहस्रशः सहस्राणि षोडशसहस्राणीत्यर्थः ॥ ५८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः ॥ ५८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सः श्रीकृष्णः ॥ ॥ ५७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य भौमस्य निरोधात् पुरात् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

भाषा टीका ।

मद्र देश के राजा की पुत्री शुभ लक्षण संपन्न लक्ष्मणा को स्वयम्वर में श्रीकृष्ण भगवान् अकेलेहि हरते भये जैसे गरुडजी ने अमृतको हरण कियारहा ॥ ५७ ॥

मनोहर जिनका रूप इसी प्रकार की और भी श्रीकृष्ण की सोरह हजार भार्य्या रहीं, भौमासुर का बधकर के श्रीकृष्ण जी ने उसके रणमास से उनका हरन किया रहा ॥ ५८ ॥

इति श्रीमद्भागवतदशमस्कन्धउत्तरार्धमें अट्ठावनके अध्यायकी
श्रीवृन्दावनस्थ पं० भागवताचार्य कृत
भाषाटीका समाप्ता ॥ ५८ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्द्धे अष्टपञ्चाशत्तमोऽध्यायः ॥५८॥

## एकोनषष्टितमोऽध्यायः ॥

—⁂—

राजोवाच ।

यथा हतो भगवता भौमो येन च ताः स्त्रियः ।
निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥

श्रीशुक उवाच ।

इन्द्रेण हृतच्छत्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥
सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ २ ॥
गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥
मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥ ३ ॥
गदया निर्बिभेदाद्रीन् शस्त्रदुर्गाणि सायकैः ॥
चक्रेणाग्निं जलं वायुं मुरपाशांस्तथाऽसिना ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ।
कन्याः सहस्रशः प्राप पारिजातं दिवो हरत् ॥
परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥
आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥

येन ताः स्त्रियो निरुद्धाः स भौमः चकाराद्येन कारणेन हतस्तदाचक्ष्वेति ॥ १ ॥

इन्द्रेण भौमविचेष्टितं ज्ञापितस्सन् प्राग्ज्योतिषपुरं भौमनगरं ययावित्यन्वयः । किम्भूतेन ? हृतं छत्रं यस्य तेन लोकपालप्रधानत्वादिन्द्रस्य । वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम् हृते कुण्डले यस्याः सा अदितिर्बन्धुर्माता यस्य तेन हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेन सत्यभामाया गृहे भगवन्तमिन्द्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया भार्यया सह ययाविति यद्वा त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति प्रतिज्ञालोकं भूम्यै वरं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ यद्वा नारदानीतपारिजातककुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशे प्रसिद्धं तदर्थं तां नीतवानिति ॥ २ ॥

गरुडेन याने कारणम्, गिरिदुर्गैरित्यादि । तैरुपलक्षितम् जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् ॥ ३—४—५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

येन भौमेन कर्त्रा चकाराद्येन कारणेन ताः षोडशसहस्रसङ्ख्याः स्त्रियो निरुद्धाः स च भौमो यथा येन प्रकारेण हतः एतत्सर्वं शार्ङ्गधन्वनो विशेषेण कार्य्यकारणरूपत्वाद्विक्रमरूपमाचक्ष्व शार्ङ्गधन्वन इति तत्र शार्ङ्गसम्बन्धिश्रवणे सम्प्रति मम स्पृहेत्यर्थः ॥ १ ॥

इन्द्रेणेति सार्द्धद्वयकम् । इन्द्रेण स्वयं द्वारकामागतेनेति ज्ञेयं तथा च श्रीविष्णुपुराणे—

"द्वारवत्यां ततः शौरिं शक्रस्त्रिभुवनेश्वरः ।
आजगामाथ मैत्रेय ! मत्तैरावतपृष्ठगः" इति ॥

हृतम् अमराद्रेर्देवाक्रीडस्य मन्दरस्य स्थानं शृङ्गलक्षणं मणिपर्वताख्यं येन तेन भौमचेष्टितं वारुणच्छत्रहरणादि तथा च तत्रैव—

"भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः ।
करोति सर्वभूतानामुपघातमरिन्दम ! ॥
देवसिद्धासुरादीनां नृपाणाञ्च जनार्दन ! ।

---

अत्र [illegible] ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥
छत्रं यत् सलिलस्रावि उज्जहार प्रचेतसः ।
मन्दरस्य तथा शृङ्गं हृतवान् मणिपर्वतम् ॥
अमृतस्राविणी दिव्ये मन्मातुः कृष्ण ! कुण्डले ।
जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं गजम् " ॥ इति

ज्ञापितो भक्त्याऽष्टाङ्गप्रणामपूर्वकमिति ज्ञेयं " ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन् " इत्यग्रे वक्ष्यमाणात् तत्रैव सभार्य्य इति सार्द्धकम् गरुडं स्मृतिमात्रेणागतं सन्तं किन्तु प्रायस्तत्रैव वर्त्तमानमारूढः सभार्य्यगमनं साक्षात्तद्रणकौतुकदर्शनपूर्वकं तस्या एव पारिजातदानार्थम् अवहेलासूचनार्थञ्च तत्र पूर्वं मया सार्द्धमियं युद्धसङ्कटे गता पारिजातं स्वयमुत्पाट्य मद्द्वारा नीतवतीति श्रीहरिवंशादिषु व्यञ्जनात् उत्तरं मम विनोद एवार्थं न तु युद्धोद्यम इति नरकादिषु व्यञ्जनात् अथेन्द्रोऽपि स्वपुरं ययाविति ज्ञेयं तथा च तत्रैव—

"आरुह्यैरावतं नागं शक्रोऽपि त्रिदशालयम् ।
ततो जगाम मैत्रेय ! पश्यतां द्वारकौकसाम् ॥ इति ॥२॥

अनिलदुर्गः कुवालचक्रचङ्क्रमन् महाबलिष्ठदुष्टवायुः गिरिदुर्गादीनां गणनमात्रमिदं क्रमस्तु भेदक्रमादग्रे ज्ञेयः; शस्त्रदुर्गाणि स्पर्शमात्रेण गात्रा[शस्त्रा]विच्छेदकनानाशस्त्रघटितदुर्गाणि घोरैः क्षुरान्तत्वात् । तथाच तत्रैव—

"प्राग्ज्योतिषपुरस्यासीत् समन्ताच्छतयोजनम् ।
आचिता मौरवैः पाशैः क्षुरान्तैर्द्विजसत्तम ॥ इति ॥

एवं तस्य मते मुरशब्द उकारान्तः " तीर्थे सौकरवे मम" इत्यादिनाराहवचनात् रुद्रैरच्छेद्यैः ॥ ३ ॥

गदया क्षिप्तया एवं चक्रेणेत्यादिकमपि ज्ञेयम् अतो दूरत एवेति च निश्शेषेण बिभेद सञ्जहार ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥ १—११ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"भौमं हत्वा तन्निरोधाश्चाहृताः" इत्युक्तं तद्विस्तरबुभुत्सया पृच्छति राजा—यथेति । येन भौमेने ताः स्त्रियो निरुद्धाः स भौमः यथा येन प्रकारेण हतः चकाराद्येन कारणेनेत्यपि बोद्धव्यं तदाचक्ष्वाख्याहि ॥ १ ॥

आचष्टे । इन्द्रेणेति । इन्द्रेण भौमचेष्टितं प्रति ज्ञापितस्सन् प्राग्ज्योतिषपुरं ययौ इति सम्बन्धः कथम्भूतेन ? हृतं भौमेन हृतं छत्रं यस्य तेन लोकपालप्रधानस्यापीन्द्रस्य वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तं हृते कुण्डले यस्याः सा बन्धुर्माता अदितिर्यस्य तेन हृतममराद्रिस्थानं मणिपर्वतात्मकं यस्य तेन सत्यभामागृहे भगवन्तम् इन्द्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया सह ययौ इति. यद्वा त्वदनुग्रहायैव त्वत्सुतं हनिष्यामीति इतिहासेनोक्तं भूम्यै वरं पूर्वं सत्यापयितुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ इति यद्वा नारदानीतपारिजातकुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयितुं तुभ्यं पारिजाततरुमेव दास्यामीति प्रतिश्रुतम् इति हरिवंशे प्रसिद्धं तदर्थं तां नीतवानिति गरुडारूढ इत्यत्र हेतुं वदन् पुरं विशिनष्टि—गिरीति । गिरिदुर्गैश्शस्त्रदुर्गैश्चोपलक्षितं जलाग्न्यनिलैश्च परितो वर्तमानैश्च दुर्गमं घोरदृढैश्च मुरस्य पाशैः परितः आवृतम् ॥ २-३ ॥

गदयेति चक्रेण सुदर्शनेनाग्निजलवायून् निर्भिद्य असिना खड्गेन ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथाकथं पृष्टं तत्सर्वम् ॥ १ ॥

द्वारवत्यां महाभागे निवसत्यच्युते नृप ।
दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात् ॥
हृतछत्रेण शक्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ।
इन्द्रमाश्वास्य गोविन्दः सुसम्पूज्य विसृज्य च ॥
हिमाद्रौ तुङ्गशिखरे जलाग्न्यनिलदुर्गमम् ।
स सम्प्राप्य भटैर्गुप्तं दानवेन्द्रपुरं महत् ॥
चकर्त मौरवं पाशं चक्रेणामन्दमच्छिनत् । *
क्षुरमालां तथा घोरां निचकर्तासिना हरिः ॥
वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् ।
हरिर्निमिषमात्रेण नाशयामास भारत ।
शङ्खनादेनतीव्रेणमनांसिचमनस्विनां ॥

हृते कुण्डले यस्य स हृतकुण्डलः हृतकुण्डलो बन्धुर्माता यस्य स तथा तेन नरकेण हृतम् अमराद्रौ मेरौ स्थानं यस्य तथा प्राग्ज्योतिषपुरं नरकस्य नगरम् ॥ २ ॥

कुत्र तन्नगरमत्राह----हिमाद्राविति । जलेनानिलेन वायुना दुर्गमं गन्तुमशक्यं मुरपाशानामयुतैः अनेकैः षट्सहस्रैरित्यर्थः यद्वा मुरपाशैरयुतैरसम्बद्धैः पृथक्कृतैः शस्त्रदुर्गैः दुर्गमपि गिर्यादिक्रमेण ॥ ३-७ ॥

.........

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—१३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—२४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वासामुद्धृतिः पूर्वं सङ्क्षेपेण निरूपिता ।
दशमे विस्तरेणाह तामेवाम्यविभावयां ॥
यदर्थमवतीर्णोऽसौ नात्यन्तं तत्र मुच्यते,
हेतुरित्यत्र निर्णीतः अतस्ता अगृहे हरिः ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्त्रीणां सामान्यतो विवाहे निरूपिते तत्र पराक्रमो न श्रुत इति तदर्थं पृच्छति, सर्वाणि कर्माणि वीर्यवन्ति चेन्नृकिजनकानि भवन्तीति यथा हत इति भगवतेति न हनने सन्देहः किन्तु प्रकार एव भौमं इति भगवत एव पुत्रः ननु सर्व एव यथा हतास्तथा सोऽपि हत इति को विशेषः इति चेत्तत्राह— येन चेति । राज्ञां दुहिताः कन्याः षोडशसहस्रसङ्ख्याताः यदि स्थानतः स्वरूपतो वा सुगमः स्यात् तदा सर्वे राजानः सम्भूय तं मारयेयुः लज्जास्पदत्वात् दुहितृहरणस्य अतो ज्ञायते सर्वप्राणिनामवध्यः स इति दुर्गमश्चेति तादृशस्य वधो लौकिकन्यायेन कथमिति भगवति तत्र विचारणा ताः प्रसिद्धाः किञ्च निरुद्धा एव कुतः कथं नोपभुक्ताः ता वा भगवता कथमाहृता इति यथा विक्रमो भवति तथा आचक्ष्व अनेन तासां विवाहे लोके क्लिष्टता प्रतिभातीति ज्ञापितं युक्त्या चैवं ज्ञायते ऽक्लिष्टं भवतीति यतो ऽयं शार्ङ्गधन्वा न हि समर्थः क्लिष्टं करोति ॥ १ ॥

तत्र प्रसङ्गात्तासां विवाहो जात इति वक्तुं देवकार्यार्थे भगवान् प्रवृत्त इत्याह—इन्द्रेणेति । पूर्वं नरकासुरो दिग्विजये इन्द्रं पराजित्य जयख्यापनार्थं नयं गृहीतवान् राजत्वख्यापकं छत्रं तेनेन्द्रत्वं गृहीतवान् अदितिकश्यपपुत्रत्वमपरिहार्यमहत्त्वं मत्वा कश्यपात् भगवान् महानिति पितृकृतोत्कर्षे सिद्धे इयं वा अदितिरिति भूमिपुत्रत्वेनादित्यत्वे च रूपविशेषख्यापके कुण्डले तस्या गृहीत्वा स्वमात्रे भूम्यै दत्तवान् तथा त्रैलोक्याधिपतित्वं दूरीकर्त्तव्यं च तत्र यत्र यस्तिष्ठति तदाधिपतित्वं न दूरीकर्त्तव्यं साधारण्या दशो भूम्याधिपत्यं दूरीकर्तुममराद्रिस्थाने मेरौ यदिन्द्रस्य स्थानं तदपि हृतवान् अनेन स्वस्थानाधिपत्यं दूरापास्तमिति न पातालाधिपत्यव्युदासाय किञ्चित् चकार स्वर्गस्थानमपि प्राह्यमित्यध्यवसायोऽस्ति अन्येष्ववतारेष्ववतारप्रयोजनमात्रं करोति नाधिकं नापि वामनः पुत्रं मारयितुम् इच्छति मात्रपेक्षया तु पुत्रः प्रियः अदितेर्भूमिश्च भक्तेति स्वापेक्षयापि पुत्रः प्रिय इति पुत्रेण स्वमात्रे कुण्डले दीयमाने च निवारयति विशेषावतारे सर्वगततेजस्तत्रैव गच्छति अतो वामन उदासीन इति इन्द्रः कृष्णमेव विज्ञापयामास हृते कुण्डले बन्धोर्मातुर्यस्य हृतममराद्रेः स्थानं यस्य चेष्टितमधिकग्रहणरूपं ज्ञापितो भगवान् न हि तत्पुत्रोऽन्येन हन्तुं शक्यः पूर्वं हि चतुर्मूर्त्तिर्भगवानास तत्रैका तपः करोति अपरा परिपालनम् अपरा भोगं चतुर्थी तु निद्राति तासां चरहट्टघटिकान्यायेन कर्मणां परावृत्तिर्या तपस्यति सावेक्षां करोति यावेक्षिष्ट सा भुङ्क्ते या बुभुजे सा शेते या शयिष्ट सा तपस्यतीति क्रियायाः कालश्च [illegible] वत्सराणि तत्रैषा व्यवस्था या तपस्यति सोऽतिष्ठन्ती ये केचन स्वार्थं तपः कुर्वन्ति तेभ्यः प्रसन्ना भवति तत्रैकदा भूमिः तपस्यन्ती स्थिता सन्ध्यायां च भगवानुत्थितो वरार्थं प्रेरयामास ततः सन्ध्यायां भूमिः पुत्रं प्राप्ते ततोऽयं नरको जातः कालवशादसुरः ततो भगवान् भूम्या पुनः प्रार्थितः नायं हन्तव्य इति ततो भगवानाह—त्वत्सम्मतिव्यतिरेकेण न हनिष्यामीति ततस्तत्सं नारायणास्त्रं दत्तवान् यावदस्त्रिकलं तावन्न मृत्युरिति स चासुरत्वात् श्रीमहादेवभक्तो बभूव त्रिशूलं च प्राप्तवान् नारायणास्त्रसमाने ततः स्वयं शिवभक्त इति त्रिशूलं स्वार्थे स्थापितवान् पुत्राय भगदत्ताय नारायणास्त्रं ददौ अतो हनने भूमिसम्मतिरेव प्राह्या भूमिश्च सत्यभामा अतो नरकवधार्थः भगवान् सत्यभामया सह गरुडाधिरूढो गत इत्याह—सभार्यो गरुडारूढ इति । प्राग्ज्योतिषपुरमिति तन्नगरनाम यदा तेजोवन्नात्मिका सृष्टिस्ततः पूर्वमिदं स्थानमुत्पादितमिति ज्ञापनार्थं तथा नाम ॥ २ ॥

ततस्तस्य षडावरणानि निरूपयति—गिरिदुर्गैरिति । सर्वतः गिरयः पर्वताः अश्वचरस्य दुर्गमाः साम्प्रतं कामरूपदेश इति तत्प्रसिद्धिः शस्त्रदुर्गाणि द्वितीयानि दुर्गत्वं परितः स्थित्वा गमनप्रतिबन्धकत्वं शस्त्राणि खड्गादीनि यथा असिपत्रवनं ततो मध्ये जलं परितः ततोऽन्तरग्निः ततो वायुरिति मुरो नाम पञ्चपर्वाविद्याधिष्ठात्री देवता तस्य पाशाः सर्वापेक्षयान्तरावरणभूताः ते च दृढाः पूर्वापेक्षयापि अनेन क्रमत उत्तरोत्तरबलिष्ठत्वं सूचितं सर्वत आवृतमिति सर्वैर्मार्गैरपि न संरक्षितः स्वयन्तु खेचरः तेजः प्रभृत्यावरणत्रयम् उपर्यपीति सम्प्रदायः तेन सर्वागम्यम् ॥ ३ ॥

तादृशस्यापि लौकिकप्रकारेण वधं वक्तुं क्रमेण दुर्गाणां नाशनमाह—गदयेति । गदाप्रहारेणाद्रीन्बिभेद तेन प्रथमावरणे नराणामपि गमनं सुगममभूत् स एव चेदानीं मार्गः सायकैः शस्त्रदुर्गाणि चिच्छेद सुदर्शनेन जलाग्न्यनिलदुर्गाण्यन्तर्भावितवानित्याह—चक्रेणेति । आदावग्निप्रवेशनं सजातीयनिराकरणार्थं तदुभयोपष्टम्भकं भवति तस्य च कार्यं जलं ततः कारणं वायुमिति प्राप्तस्थितयोरनुप्रवेशः मुरपाशांस्तु असिना च नन्दकेन चिच्छेद ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

शक्रप्रोक्तो हरिर्भौममहन् प्राप तदाहृताः
स्त्रीः सहस्रायुतान्येतमे षोडशमाहरत् ॥

येन ताः स्त्रियो निरुद्धाः स भौमो यथा भगवता हतः एतदाचक्ष्वेत्यन्वयः एतदिति विशिनष्टि विक्रममिति ॥ १ ॥

हृतच्छत्रेणेति । वरुणस्य छत्रहरणेऽपि देवेन्द्रत्वात्तस्यैव छत्रं हृतमभूदिति तथोक्तं हृते कुण्डले यस्य स बन्धुर्माता यस्य तेन हृतम् अमराद्रिस्थानं मन्दरशृङ्गं मणिपर्वताख्यं यस्य तेन इन्द्रेण भौमस्य चेष्टितं छत्रहरणादिकं ज्ञापितः सन् ययौ भार्यया सत्यभामया सहित इति त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति भूम्यै यदुक्तं तत् सत्यं कर्तुं साविभूम्या भूम्या सह सत्यभामाया ऐक्यादेवात्र सत्यभामैव भूमिः सा च महायुद्धसङ्कटे तदेव जहीममित्यनुज्ञास्यते नान्यदेति । नारदानीतपारिजातपुष्पस्य रुक्मिण्यै प्रदानात् कुपितां सत्यभामां सान्त्वयन् तुभ्यं तद्वृक्षमेव दास्यामीति प्रतिश्रुत्य शक्रात् तदाहरण-

शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम ॥
प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥ ५ ॥
पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् ।
मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥ ६ ॥
त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगान्तसूर्यानलरोचिरुल्बणः ॥
ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः ॥ ७ ॥
आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत्स पञ्चभिः ॥
( खं )स रोदसी सर्वदिशोऽम्बरं महानापूरयन्नण्डकटाहमावृणोत् ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सामर्थ्यतां दर्शयितुं तां सङ्गे नीतवानिति वा ॥ २ ॥
अलाम्व्यबिलैश्च सर्वतो वर्तमानैर्दुर्गमम ॥ ३ ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

"अन्याश्च विविधा भार्या कृष्णस्यासन् सहस्रशः ।
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः" ॥
इति यदुक्तं तदेकोनषष्टितमे प्रपञ्च्यते—यथेति । येन ताः स्त्रियो निरुद्धाः स भौमः यथा हतः चकारात् येन कारणेन हतस्तदाचक्ष्व तदाख्याहि ॥ १ ॥
भौमेन वरुणस्य छत्रे हृतेऽपि देवेन्द्रत्वादिन्द्रस्यापि तच्छत्रमतो हृतच्छत्रेण हृते कुण्डले यस्य स हृतबन्धुर्मातृरूपो यस्य तेन हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेनेन्द्रेण भौमचेष्टितं ज्ञापितः भार्यया सत्यभामया सहितः गरुडारूढः प्राग्ज्योतिषपुरं भौमनगरं ययौ सभार्यः इत्यस्यायमभिप्रायः सत्यभामा श्रीकृष्णस्य नित्या भार्या—
भूदेवीति समाख्याता प्राणेभ्योऽपिगरीयसी ।
अभिमानवतीं देवीं प्राणेभ्यो ऽपि गरीयसीम् ।
जानन् सात्राजितीं विष्णुर्विवेश शनकैरिव ॥
इत्युपक्रम्य-
"मनसा कर्मणा वाचा न त्वामतिचराम्यहम् ।
गुणा गन्धादयो भूमेः शब्दाद्याश्चाम्बरे गुणाः ॥
ध्रुवं पङ्कजगर्भाभे ! त्वयि स्नेहस्तथा मम ।
रुचिरश्मौ यथा दिव्या प्रभा चैव दिवाकरे ।
कान्तिश्च शाश्वतीश्चन्द्रे स्नेहस्त्वयि तथा मम" ॥
इति हरिवंशोक्तेः भूदेव्याः सत्यभामायाः विभूतिर्भूमिस्तस्यै वरं दत्ते त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति प्रसिद्धामितिहासे सत्यभामानुज्ञाद्वारा तत्सत्यं कर्तुं हरिवंशप्रसिद्धं श्रीनारदानीतं पारिजातपुष्पं भगवता रुक्मिण्यै दत्तं तच्छ्रुत्वा कुपितां सत्यभामां तुभ्यं पारिजातमेव दास्यामीत्यनुनीय तत्समक्षं पारिजातमानेतुं च तया सहैव ययाविति ॥ २—५ ॥

भाषा टीका ।

परिक्षत् राजाने यह प्रश्न किया-कि, जिसने वे सोरह हजार स्त्री, रोक राखीं थीं, वह भौमासुर, श्रीकृष्णजी ने, जिस कारण से जिस प्रकार मेरा. शार्ङ्ग धनुष धारी भगवान्के इस चरित्र को विस्तार से कहिये ॥ १ ॥

राजा के प्रश्न को सुनकर, श्रीशुकदेवजी बोले-कि, भौमासुरने वरुण का छत्र, तथा देवमाता अदिति के कुण्डल, और देवतानका स्थान मन्द्राचल पर्वत, छीन लिये थे, भौमासुर के इस कर्म को इन्द्र ने भगवान कहा, ॥ २ ॥
तवतो सत्यभामा के सहित श्रीकृष्णजी गरुडपर विराजमान होकर, भौमासुर के प्राग्ज्योतिष नामापुर को जाते भये वह पुर इस प्रकार का रहा--कि, चारो तर्फ से, पर्वतन के कोट और शस्त्रनके कोटन से घिरा और मुरनामा दैत्य के भयङ्कर, दृढ, अनेक पासों से घिरा रहा, तथा अगाधजल, तथा प्रचण्ड अग्नि पवन से अगम रहा ॥ ३ ॥

वहां जाय कर गदाधारी श्रीकृष्ण महाराज ने अतिभार युत (कौमोदकी) गदा से पर्वत के पर कोटान का भेदन किया, और बाणों से शस्त्र के पर कोटान का भेदन किया तथा (सुदर्शन) चक्र से अग्नि जल पवन को शान्त कर दिया और मुरके पाश जालों को (नन्दक) खड्ग से भेदन किया ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

युगान्ताशनेर्ध्वनिवद्भीषणम् परिखाया जलात् ॥ ६—७ ॥
आविध्य आलोड्य स महानाद इत्यन्वयः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यन्त्राणि प्राकारन्यस्तानि येषामग्रे , परसैन्यागमने पादघातमात्रेण चलन्तः प्राकारान्तानां शस्त्रक्षेपकसंयोगविशेषा स्युः तन्निर्भेदनम् उपरि स्थित्वा तादृशसंयोगान्यथाकरणं महा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शब्दस्य कम्पनादिस्वभावत्वात् मनस्विनां वीराणां तदीयानामेव हृदयान्यपि गुर्व्वीति प्राकारस्यापि गुरुत्वं तथापि तन्निर्भेदप्रयासञ्च सूचयति यतो गदाधरः तद्विद्याप्रावीण्येन तत्तामेव प्राप्त इत्यर्थः ॥ ५ ॥

टीकायां परिखाया जलादिति जलदुर्गनाशात् यद्वा जलदुर्गनिर्भेदनस्य पूर्वकथामाह—पाञ्चेति । एवं पूर्वपूर्वमेव पाञ्चजन्यध्वनिः विशेषतस्तु यन्त्रनिर्भेदन इति ज्ञेयं युगान्ताशनिभीषणमित्यसुरेष्वेव ज्ञेयं नतु भक्तेषु "मल्लानामशनिः" इत्यादिवत् शयानः सदा मदाविष्टत्वान्निश्चिन्तत्वाच्च तथास्वभावः ॥ ६ ॥

युद्धादिकौतुकेन गायन्निव दीर्घकालम्बसाह—त्रिशूलमित्यादि । दुर्निरीक्षणत्वे हेतुः युगान्तेति स्वयञ्चोल्बणो भीषणः उल्बणत्वमेवाह—प्रसन्निति । मुखैर्व्यासैः अभ्यद्रवदरिं तच्च ध्वधार्थेवेति दृष्टान्तेन द्योतयति—तार्क्ष्येति । यद्वा स्थूलदर्शनत्वात्तार्क्ष्यसुतमेवाभ्यद्रवत् ॥ ७ ॥

निरस्य निःशेषेण क्षिप्त्वा रोदसी रोदस्यौ दिवं भुवं च अन्तरं च छिद्रं पातालमित्यर्थः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनस्विनां स्वैरिणां मुरादीनां हृदयानि यन्त्राणि च शङ्खनादेन ॥ ५ ॥

पाञ्चजन्येति युगान्ताशनेर्ध्वनिवद्भीषणं पाञ्चजन्यध्वनिमाकर्ण्य ॥ ६ ॥

त्रिशूलमिति । युगान्ते सूर्याग्न्योरिव रोचिर्दीप्तिर्यस्य स मुरासुरः अत एवोल्बणः दुस्सहो दुर्निरीक्षस्सन् त्रिशूलमुद्यम्य पञ्चभिर्मुखैः त्रिलोकीं प्रसन्निवाभ्यधावत् यथोरगः सर्पः तार्क्ष्यसुतं गरुडं तद्वत् ॥ ७ ॥

आविध्येति । स मुरः शूलमाविध्यालोल्य तरसा बलेन गरुडाय प्रयुज्य पञ्चभिर्वक्त्रैर्ध्वननात् किं कुर्वन् रोदसी द्यावापृथिव्यौ तदन्तरितं लोकोपरितनमाकाशं सर्वेषां श्रोत्रबिलं ( स्थानं ) वा दिगन्तरञ्चापूरयन्नादेनेति शेषः । स नादः कृत्स्नमप्यण्डकटाहमावृणोत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अमन्दमनलम् ॥ * ॥

निरस्य मुक्त्वा आपूरयन्नादेनेति शेषः ॥ ८—१२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवंमावरणानि दूरीकृत्य दूरान्मारणासाधनानि पाषाणक्षेपणरूपाणि यन्त्राणि चिच्छेदेत्याह—शङ्खनादेनेति । मनस्विनां हृदयानि उत्साहशालीनि, ततो दुर्गप्राकारमपि बिभेदेत्याह—प्राकारमिति । गुर्व्वीति तत्र स्थितानां देवानां नाशनसामर्थ्यं द्योतितं तेषामपि प्रतिबन्धकत्वाभावाय निरूपसर्गः गदाधर इति अग्रे युद्धार्थं सावधान इत्यर्थः ॥ ५ ॥

एवं सर्वावरणानि भित्वा सावधानो जातः शङ्खनादस्य माहात्म्यं "विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ता" इति ततो दर्पाच्छयानः परिखाजले तन्नादेन दर्पनाशं मत्वा कथं जातमिति हेत्वन्वेषणार्थम् उत्थितः न केवलं माहात्म्येन दर्पनाशकत्वं किन्तु स्वरूपतोऽपि नादस्तादृश इत्याह—युगान्ताशनिभीषणमिति । युगान्ते प्रलये तत्रापि मारकत्वेनैव प्रसिद्धः अशनिस्ततोऽपि भीषणः दर्पहन्त्येव प्रलये दैत्यानां दर्पस्तिष्ठतीति प्रसिद्धिः अतो दर्पेण निश्चिन्तः शयानोऽप्युत्थितः स च दैत्यस्तेन मारणीय एवेति भगवत्सम्मुखोऽपि विरुद्ध एव जातः अविद्यासम्बन्धीति ज्ञापयितुं पञ्चशिराः पञ्च शिरांसि यस्येति योगः मुर इत्येव नाम जलादिति परिखासम्बन्धिनः ॥ ६ ॥

उत्थित एव युद्धार्थे प्रवृत्त इत्याह— त्रिशूलमिति । अनेनासहायवीरत्वमुक्तं सुदुर्निरीक्षण इति युक्तमेव तस्य तथात्वं यो हि द्रष्टुमेवाशक्यः तेन सह कोवा युध्येत् किञ्च युगान्तसूर्यानलरोचिरुल्बणः पाञ्चजन्यध्वनिस्तु प्रलयाशनितुल्य एव अस्य तु देहकान्तिरपि प्रलयसूर्यानलसदृशी ततोऽप्युल्बणश्च अत एव युद्धे निश्शङ्कः महाभूतान्यपि यो भक्षयितुं शक्तः स कथं जेयो भवेदित्याह— प्रसंस्त्रिलोकीमिति । पञ्चभिर्मुखैः चतुर्षु दिक्षु उपरि च सर्वान् एव लोकान् भक्षयति न समयेति दर्शनमात्रमेव तस्य भयानकं न तु युद्धं कर्त्तुं शक्त इति ज्ञापयितुं दृष्टान्तमाह— तार्क्ष्यसुतं यथोरग इति । गरुडं सर्पो यथाऽभिधावति भक्ष्यः ॥ ७ ॥

गतस्य पराक्रममाह—आविध्येति । उत्तोल्य भ्रामयित्वा वा तरसा यावत् द्वितीयो न सावधानः स हि भगवन्तं द्रष्टुमशक्तो गरुडमताडयत् अविद्या भगवन्तं न विषयीकरोति कालानन्तरमेव भगवत्प्राप्तिरिति कालरूपं गरुडं क्षोभयति निरस्य प्रक्षिप्य निरसनेन अवहेला सूचिता न हि असद्भूतं शूलेन समार्थितं भवतीति तृणमिव दूरीकृतवान् ततोऽविद्यया तं मोहयितुं पञ्चभिर्वक्त्रैर्व्यनदत् विशेषेण ध्वनिं कृतवान् अन्यस्त्वेकधा गर्जति अहं पञ्चधेति ज्ञापयितुं तस्य नादस्य महत्त्वमाह— सरोदसीति । सर्वमेव विश्वरस्थानं पूरयन् अण्डकटाहमावृणोत् उपर्यपि ब्रह्माण्डं भित्वा गत इत्यर्थः । तत्वानामप्यविद्यामोहो वर्त्तते इति अलौकिकत्वाच्छब्दस्य बहिर्गमनं ब्रह्माण्डस्यापि अण्डत्वाद्रोमकूपवाच्छिद्रत्वं मध्ये सर्वत्र पूरणं न भविष्यतीति विशेषतो गणयति समाकाशं मध्यस्थितं सर्वेषां हृदयाकाशो वा रोदसी द्यावापृथिव्यौ सर्वा अष्टदिशः अन्तरमध्यं शब्दाघातादुत्पन्नस्य शब्दान्तरस्य तथात्वं भविष्यतीत्याशङ्क्याह—महानिति । आसमन्तात् पूरणं बृंहणन्यायेन ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनस्विनां शूराणां यन्त्रतुल्यानि हृदयानि निर्बिभेद॥ ५—६ ॥

युगान्ताशनेर्ध्वनिवद्भीषणमिति शत्रूणामेव "मल्लानामशनिः" इति वत् परिखाया जलात् ॥ ७ ॥

तदापतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा ॥
मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ९ ॥
तामापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा ।
उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया ॥ १० ॥
व्यसुः पपाताम्भसि कृत्तशीर्षो निकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा ।
तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः ॥ ११ ॥
ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः ।
पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगन् धृतायुधाः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आविध्य भ्रामयित्वा स महानाद इत्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

युगान्ताशनिध्वनिवद्भीषणम् पाञ्चजन्यध्वनिं मुरः श्रुत्वा उत्तस्थौ मुर इत्यग्रेपि सम्बन्ध्यते ॥ ६—७ ॥

स नादः अण्डकटाहमावृणोदित्यन्वयः । सोपि तस्मै कृष्णाय ॥ ८-१० ॥

---

भाषा टीका ।

और पाञ्चजन्य शङ्ख की ध्वनि से प्राकार के जन्त्रों के छेदन किया, उसीसे शूर वीरों को हृदय को कम्पायमान कर दिये, तथा गदा से किले को तोड दिया ॥ ५ ॥

प्रलय के वज्र पात समान भयङ्कर पाञ्चजन्य की ध्वनि को श्रवणकर, पांच मस्तक वाला मुर नामा दैत्य, जल में सोता रहा, वह जल से उठ खडा भया ॥ ६ ॥

जैसे कि गरुडजी के मारने के वास्ते सर्प, धावा करे तैसेहि मुरनामादैत्य, त्रिशूल उठा कर श्रीकृष्णको मारने के वास्ते बडे वेग से दौडता भया, और वह, मानो पांचो मुखों से त्रिलोकी को ग्रसि लेवेगा इस प्रकार से मुख फाडने कर दौडा, और प्रलय के प्रचण्डसूर्य तथा अग्नि के तुल्य तेजवाला होने से वह अति भयंकर था इसी लिये, अति कष्ट सेभी देखने के योग्य नहि रहा ॥ ७ ॥

वह मुरदैत्य त्रिशूल को घुमाकर गरुडजी के मारने के वास्ते वेग से त्रिशूल चला कर पांचो मुखन से गर्जना करता भया वह वडा भारी गर्जना, भूलोक स्वर्गलोक अन्तरिक्ष सब दिशान को पूरण करत ब्रह्मांड में छा गया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मै श्रीकृष्णाय गदां व्यमुञ्चत व्यक्षिपत् ॥ ९—१० ॥

इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षजुषः ॥११॥

पीठं पीठनामानम् निरगान्निरगमन् ॥ १२—१३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वै एव गरुत्मते गरुत्मति आपतदेव नत्वापतितमित्यर्थः । ओजसा वेगेन अपीति सामर्थ्यद्योतकं मुखेष्विति तत्प्रदानेन क्रोधात् इति सर्वेष्वपि तेषु युगपदेव ताडनं सूचितम् ॥ ९ ॥

मृधे युद्धमध्ये साक्षादेव न तु मायादिना परोक्षमित्यर्थः । गदया गदाग्रज इत्यनुप्रासालङ्कारः उल्लासेन गदाग्रज इति तदुपलक्षितभ्रातृकुलयशोदातृतास्मरणसौख्येन च पञ्चापीति पाठ गदयैवेति ज्ञेयं किन्तु अग्रे दृष्टान्ते इन्द्रतेजसेत्युक्त्वा तेजःसाम्याच्चक्रेणेति पाठो युक्तः ॥ १० ॥

वधेनातुराः शोकविह्वलाः अतः प्रतिक्रियार्थममर्षजुषः ॥११॥

तमेवोक्तपोषन्यायेनाह— ताम्र इति । सप्तम इति श्रान्तरं निरस्तं तेषां नामग्रहणं नाम्नैव गुणज्ञापनार्थं अत एव प्रतिक्रियामर्षजुषः पुनश्च भौमेन प्रयुक्ताः एवं तदैव भौमेन तत्रोद्यतमिति तत्तत्क्रियायां श्रीभगवतो लाघवमपि दर्शितम् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निरगमन् निर्गताः ॥ १२—१४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेति । तिस्रः शिखा यस्य तत् गरुडायागच्छत् त्रिशूलम् ओजसा बलेन शराभ्यां त्रिधा चिच्छेद तं मुरं च मुखेषु शरैस्ताडयामास सोपि मुरोपि रुषा तस्मै कृष्णाय गदां प्रायुङ्क्त ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामिति । गदाग्रजो भगवान् स्वगदया तां मुरप्रयुक्तामापतन्तीं गदां मृधे युद्धे सहस्रधा निर्बिभेद । ततो बाहू उद्यम्याभिधावतो मुरस्य पञ्च शिरांसि चक्रेणाजितो भगवांश्चिच्छेद ॥ १० ॥

व्यसुरिति । निकृत्तानि शीर्षाणि शिरांसि यस्य स अत एव व्यसुर्गतप्राणोऽम्भसि जले पपात यथा इन्द्रतेजसोपलक्षितेन वज्रेण निकृत्तशृङ्गो गिरिस्तद्वत् तस्य मुरस्यात्मजाः सप्त पितुर्वधात् दुःखिताः प्रतिक्रियार्थे अमर्षजुषः क्रोधाविष्टाः भौमेन प्रेषिताः धृतान्यायुधानि यैस्ते च मृधे युद्धे निमित्ते पीठनामानं चमूपतिं पुरस्कृत्य समुद्यताः आयत्ताः निरगमन्निर्गता बभूवुरिति सम्बन्धः तानेव सप्त निर्दिशति ताम्र इति ॥ ११—१२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्य पराक्रममुक्त्वा तत्प्रतीकारार्थं भगवच्चरित्रमाह—तदापतदिति । त्रिशूलमापतत् गरुडोपरि पतदेव स्थितं त्रिशिखमित्यनेन भेदत्रयं करोतीति त्रिसत्त्वानां देवानामपि मारकं तदिति सूचितं गरुत्मत इति पक्षवानतिकोमल इति स्वतो निवारणसामर्थ्यञ्चाह, भगवांश्च हरिः ततः प्रतीकारो ऽवश्यं कर्त्तव्य इति शराभ्यामच्छिनत् त्रिधाच्छेदे न पुनः प्ररोहतीति तच्छूलं दैत्यमित्यनेन ज्ञापितम् ओजसेति तदधिष्ठिता देवतापि यथा छिन्ना भवति तस्य तेजसा सह वा तेजोपि त्रिधा छिन्नमित्यर्थः । न केवलं त्रिशूलच्छेद एव किन्तु सोपि ताडित इत्याह—मुखेष्विति । यथा न रूपात् तस्य रवेण लोकानां भयं जायत इति मुखान्यपि ताडितानि । अर्थात् पञ्चभिः आपूरितानि वा तदा याचद्भिः पूरणं भवति स्वत एव च निवारणीय इति तञ्चापीति भिन्नतया सोपि हृदये ललाटे वा हतः तदा पक्षपातं ज्ञात्वा मम गम्यो भविष्यतीति तस्मै भगवते सोपि ताडितोपि यथा अपकृतो ऽतिक्रुद्धो भवतीति दूरादेव गदां प्रक्षिप्तवान् ॥ ९ ॥

तामपि गदादेवताधिष्ठितेति भगवान् स्वगदयैव तन्निराकरणं कृतवानित्याह— तामापतन्तीमिति । कौमोदक्या नितरां बिभिदे सहस्रधेति योजनायामशक्या कृता सजातीयेन सजातीयहननमयुक्तमित्याशङ्क्याह-मृध इति । सङ्ग्रामे न दोषः गदाग्रज इत्यनुप्रासः स्त्रीणां हितकारी वा बाहुयुधमर्थेति प्रहणार्थं समागमनमुक्तं सच भगवता न स्प्रष्टव्य इति कालेनैव तमच्छिनदित्याह— शिरांसि चक्रेण जहारेति । पञ्चापि पर्वाणि छिन्नानि यथा प्रतीत्यापि न संसारः लीलयेति सुदर्शनसामर्थ्यं व्यावर्त्तयति पौरुषं स्वकीयमेव व्यापृतं परं निरायासेन प्राप्त एवायासो व्यावर्त्यते अथवा लीलयैव तत्स्थाने व्यापृतो भविष्यतीति तत्र निरोधरूप एव संसारः साम्प्रतं प्रवर्त्ततां नत्वन्य इति लीलयेत्युक्तम् ॥ १० ॥

छिन्नेष्वपि शिरस्सु दैत्यत्वात् कदाचित् प्राणाः हृदयादिषु तिष्ठेयुरिति तस्य छिन्नशिरसोऽग्निमावचनमाह-व्यसुः पपातेति । विगता असवो यस्येति भूमौ पतितस्य दैत्यत्वात् पुनरुद्गमो भविष्यतीति अम्भसि पात उच्यते "आपो हि रक्षोघ्नीः" इति श्रुतिबाधायामपि भगवत्सामर्थ्यार्थम् अप्रेप्स्युत्पादनार्थं च अजित इत्युक्तं न केनापि मायादिभिरपि पराजितः निकृत्तशीर्ष इति निकृत्तं शिरो यस्येति नितरां छेदः पुनर्योजनाभावार्थं आधिदैविकच्छेदार्थो वा युगान्तरेपि प्रादुर्भावाभावाय दृष्टान्तमाह-निकृत्तशृङ्गो ऽद्रिरिवेति । इन्द्रतेजसा वज्रेण तथा पर्वं पुनरुत्थाने इन्द्राज्ञयं सूचयति तथापि मयादनुत्थानं तस्य सप्त व्यसनानि पुत्रास्माधिकरणा मारिता इति वक्तुं तेषामागमनमाह—तस्यात्मजा इति । मूलच्छेदे शाखा इव ते न प्रयोजका इति पितुर्वधेनातुराः प्रतिक्रियार्थम् अमर्षजुषः सेवितरोषाः मारकस्य मारणं प्रतिक्रिया स्वतः असामर्थ्यात् क्रोधसेवां कृतवन्तः क्रोधेनापि कदाचिन्नयेदिति इति समुद्यता इति बहिः सामग्री निरूपिता अन्तः क्रोधः ॥ ११ ॥

तेषां प्रसिद्ध्यर्थं नामानि गणयन्ति-ताम्रोऽन्तरिक्ष इति । ताम्र इति वर्णतः क्रोधात्मकः अन्तरिक्ष इति सर्वक्रियया व्यापारयितुमशक्यः श्रवण इत्याकाशरूपः विभावसुः सूर्याग्नितुल्यः वसुः भीष्मादेरप्यधिकः नभस्वान् वायुः तत्तुल्यः अरुणः सर्वोद्बोधकः वर्णतो वा भयानकः सप्तम इति क्रमात्र विवक्षित इति ज्ञापयति पीठस्तेषामाधारभूतः नरकासुरस्य सेनापतिर्मृधे युद्धार्थं भौमप्रयुक्तः स्वस्थाने नरकासुरस्तान् प्रेषितवान् तेहि स्वापेक्षयापि पितृवधात् युद्धं करिष्यन्तीति युद्धार्थं प्रथमतो निरगन् धृतायुधाश्च पश्चात् जाताः अनेन युद्धे निश्चयो निरूपितः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गरुत्मते गरुत्मति आपततेव नत्वापतितं तस्मै श्रीकृष्णाय सो ऽपि मुरो ऽपि ॥ ९ ॥

उद्यम्य उच्चीकृत्य अभिधावतो मुरस्य ॥ १० ॥

इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षयुक्ताः ॥ ११ ॥

निरगन् निरगमन् ॥ १२—१३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इन्द्रतेजसा वज्रेण प्रतिक्रियायै अमर्षजुषः क्रोधयुक्ताः ॥ ११ ॥

निरगन् निरगमन् ॥ १२—१३—१४ ॥

भाषा टीका ।

गरुडजी के ऊपर आते भये तिधारा त्रिशूल को उसी वखत श्रीकृष्णमहाराज दो बाणों से तीन जगह काटते भये, और मुर दैत्य ने भी क्रोध कर के कृष्ण के वध करने को गदा चलाई ॥ ९ ॥

संग्राम में मुर की चलाई हुई आवती भई गदा के श्रीकृष्णमहाराज ने निज गदा से हजार टुकडे करदिये तब तो

प्रायुञ्जतासाद्य शरानसीन् गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ।
तच्छस्त्रकूटं भगवान् स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त्त ह ॥ १३ ॥
तान् पीठमुख्याननयद्यमालयं निकृत्तशीर्षोरुभुजाङ्घ्रि(१)वर्मणः ।
स्वानीकपानच्युतचक्रसायकैस्तथा निरस्तान्नरको धरासुतः ॥ १४ ॥
निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ।
दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात् सतडिद्घनं यथा ।
कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म विव्यधुः ॥ १५
तद्भौमसैन्यं भगवान् गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ।
निकृत्तबाहूरुशिरोध्रविग्रहं चकार तर्ह्येव हताश्वकुञ्जरम् ॥ १६ ॥

भाषा टीका ।

भुजाओंको ऊंची करके कृष्णके ऊपर दौड़ते भये मुरदैत्य के पांचो मस्तकन को श्रीकृष्णजी ने सुदर्शन चक्र से लीला के साथ छेदन कर दिये ॥ १० ॥

जैसे इन्द्र के वज्रसे शिखर टूट कर पर्वत गिरपड़े तैसेहि मस्तक छेदन होनेसे निष्प्राण होकर मुर दैत्य जल में गिरपड़ा पश्चात् उसके सात पुत्र, युद्ध के वास्ते तैयार होत भये, क्यों कि पिताके वधसे वे दुःखी भये इसी लिये वैर लेनेके वास्ते क्रोध में भर गये ॥ ११ ॥

ताम्र अन्तरिक्ष श्रवण विभावसु वसु नभस्वान् अरुण यह सात मुरके पुत्र भौमासुरके भेजे हुये आयुधधारन किये पीठनामा सेनापति को आगे कर युद्धके निमित्त पुरसे निकलते भये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृत्तानि शीर्षादीनि येषां तान् ॥ १४ ॥
शतघ्नीं शक्तिविशेषम् ॥ १५ ॥
विचित्रा वाजाः पत्राणि येषां तैर्बाणैर्निकृत्ता बाहवः ऊरवः शिरोध्राः कन्धरा विग्रहा देहाश्च यस्मिंस्तत् तर्ह्येव तं यदा विव्यधुस्तस्मिन्नेव क्षणे ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रायुञ्जतेत्यर्द्धकम् । आसाद्याजितं शरादीनां यथोत्तरं गुरुत्वे घातकत्वे च श्रैष्ठ्यं तत्र ऋष्टिः खड्गभेदः शस्त्राणां कूटं समूहम् स्वैरसाधारणैः ॥ १३ ॥

यमक्षयं मृत्युमित्यर्थः यमगृहगमनोत्तरं मोक्षस्तु ज्ञेयः अच्युतेति चक्राद्यधैव्यर्थाभिप्रायेण तथा तेन शीर्षादिकर्तनप्रकारेण निरस्तान् लीलया दूरत एव हतान् वीक्ष्य उत्तुङ्गदुर्गाद्यारोहणेन नरक इति जातमात्रेण मनुष्यमस्तकस्य मुखे ग्रहणात् तत्सञ्ज्ञाप्राप्त्या जन्मत एव दुष्टभावः सूचितः तदाख्यायिका च कालिकापुराणे ज्ञेया धरायाः सुतः इति महाशक्तित्वं दर्शितम् ॥ १४ ॥

पयोधिप्रभवैर्गजैः सह तत्प्रभवैरावतकुलजत्वात् तथाचाग्रे ऐरावतकुलेभांश्चेति. निरक्रमत् निरक्रामत् पुराभिष्क्रान्तः समार्य दृष्ट्वेति तेन महाकुद्धस्सन्निति भावः । च अपि युगपदपि विव्यधुः ॥ १५ ॥

विचित्रवाजैरिति । वेगवत्त्वादिकमभिप्रेतं न च केवलमश्वाद्यारूढा हताः (तेषां) वाहनानि चेत्याह—हतेति ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निराक्रमत् निर्गतवान् ॥ १५ ॥
विचित्रवाजैः विचित्रपक्षैः ॥ १६—२४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रायुञ्जतेति । उल्बणास्ते ताम्रादयः आसाद्य अभ्येत्य रुषा क्रोधेन अजिते श्रीकृष्णे शरादीन् प्रायुञ्जत प्रयुक्तवन्तः तदा भगवान् स्वमार्गणैः स्वशरैस्तच्छस्त्रजालं तिलप्रमाणशश्चिच्छेद हेति विस्मये ॥ १३ ॥

तानिति । निकृत्तानि छिन्नानि शीर्षादीनि येषां तांस्ताम्रादीन् यमसदनमनयत् वर्म शरीरं तच्चोपात्तातिरिक्तप्रदेशपरम् इदमर्थं पृथगन्वेतव्यम् ॥ स्वानीकपानिति । स्वान् कांश्चिदनीकपान् सेनापतीन् अच्युतस्य सायकैर्हतानिति शेषः । तथा कांश्चिन्निरस्तान् दूरतः पतितांश्च दृष्ट्वा धरासुतो नरकः दुस्सहः स्रवन्मदो येषां तैः पयोधि-

(१) वर्मणः इति वीर० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रभवैः पयोध्यन्तर्द्वीपजैर्गजैः सह निराक्रमन्निर्गतवान् दृष्ट्वेति यथा सूर्यस्योपरिष्टात् तडिता सहितं घनं नीलमेघं तद्वत् सभार्यं गरुडोपरि स्थितं कृष्णं तत्र सूर्यस्थानीयो गरुडः तडित्स्थानीया भार्या घनस्थानीयस्तु कृष्ण इति विवेकः स भौमस्तस्मै श्रीकृष्णाय शतघ्नीं शस्त्रविशेषं व्यसृजत् प्रायुङ्क्त तथा योधाश्च भौमसम्बन्धिनः युगपत्प्रविव्यधुः ताडयामासुः स्वस्वायुधैरिति शेषः ॥ १४—१५ ॥

तदिति । विचित्रा वाजाः पत्राणि येषां तैर्निशितैर्बाणैर्निकृत्ता बाहवः ऊरवः शिरोधरा विग्रहा देहाश्च यस्य हताः अश्वाः कुञ्जराश्च यस्मिन् तथाभूतं तत्सैन्यं यदा विव्यधुस्तस्मिन्नेव क्षणे चकार ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(मूलम्) पपात विष्णोः शिरसि प्रमोदिनी प्रसूनवृष्टिर्निहते मुरेऽसुरे क॥
रथान्समारुह्य नृपप्रयुक्तान् भौमप्रयुक्ता भवनान्निराक्रमन् ।
अयुञ्जतासज्यशरासनान् भटाः शक्त्यृष्टिशूलानजिते रुषोल्बणान् ।ख
तच्छस्त्रकूटं भगवान्स मार्गणैरमोघवीर्यैस्तिलशश्चकर्त ह ।
तान्योधमुख्याननयद्यमक्षयं निकृत्तशीर्षोरुभुजाङ्घ्रिकार्मुकान् ।
ततो द्रुततरं गत्वा भटा राजपुरं महत् ।
हतान्मुरसुतान्सर्वान्नरकाय न्यवेदयन् ।
स्वानीकपानच्युतचक्रसायकैर्हतान्निशम्याशुरुकोपभूमिजः ।
निरीक्ष्य दुर्मर्षणमास्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ।
रथैरनेकसाहस्रैर्गजैश्च बहुभिर्वृतः ।
महत्या सेनया युक्तश्चायादायोधनं बली ॥ ग ॥
दृष्ट्वा सभार्यं गरुडोपरिस्थितं सूर्योपरिष्टात्सतडिद्घनं यथा ।
गृहीतकोदण्डमुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजं ।
नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहिनम् ।
शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् ।
वरूथिनी दैत्यपतेः सुघोरान् शरान्ववर्षाच्युतमूर्ध्नि दुर्जया ।
कृष्णे सभौमो व्यसृजच्छतघ्नीं लोहायसीं तेन भृशं स विव्यथे ॥ ० ॥
अनेकबाणान्निर्मुक्तान्नरकेण स्मयन्निव ।
चकर्त बाणैर्युगपत्तदद्भुतमिवाभवत् ।
ततोऽनुसैन्यं भगवान्गदाग्रजो विचित्रपत्रैर्निशितैः शरौघैः । )

प्रमोदिनी सन्तोषजननी ॥ क ॥

भौमेन प्रयुक्ताः प्रेरिताः निराक्रमन्निर्गताः आसज्य ज्यामारोप्य ॥ ख ॥

कूटं समूहम् ॥ १३—१४ ॥

आयोधनं युद्धस्थानम् ॥ ग ॥

सूर्योपरिष्टात्स्थितं तडिता सहितं घनं मेघम् ॥ १५ ॥

लोहेनायसी निर्मितां तेन शतघ्नीप्रयोगेण विव्यथे "व्यथ ताडने" इति धातोः ताडितोऽभूत् ततोऽनु तदनन्तरम् ॥ ० ॥

गरुडस्य पक्षाभ्यां निघ्नताभिहतान् गजानच्छिनत् ॥१६-१७॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यमक्षयं मृत्युमित्यर्थः । मोक्षस्तु क्षयः ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः शस्त्राणि प्रायुञ्जतेत्याह–प्रायुञ्जतेति । आसाद्य निकटे गत्वा षड्विधान्यस्त्राणि निरूपयति शरानित्यादिभिः अर्ष्टिरायुधविशेषः सप्तभिरपि प्रत्येकं षड्विधानि प्रयुक्तानि यद्यप्यजितो भगवानिति जानन्ति तथापि रुषा क्रोधेन उल्बणाः सन्तः तथा कृतवन्तः भगवता कृतं प्रतीकारमाह—तच्छस्त्रकूटमिति । स्वमार्गणैरिति असाधारणैर्बाणैः अन्यथा अग्नेर्बाणाः दुर्गाया असिः गदा वायोः आर्ष्टिरपि वरुणादेः शक्तिर्मायायाः शूलं शिवस्येति एतावन्तः तत्तद्देवताधिष्ठिता न हता भवेयुः ननु भगवानेव तेष्वपि सामर्थ्यं दत्तवानिति कथं भगवांश्चकर्तेत्याशङ्क्याह—अमोघवीर्य इति । तेषु दत्तं परगामि मोघं जातं तदेव स्वस्थाने अमोघम् अतः अमोघेन मोघानि वीर्याणि प्रतिहतानीत्यर्थः । तिलशः कर्त्तनं पुनर्नीत्वा लोहखण्डान्यपि सञ्जीकर्तुं शक्तानीति ज्ञापयति हेत्याश्चर्ये तावन्न कर्तव्यं प्रयोजनाभावात् तथापि स्वस्य क्लिष्टकर्मत्वं ज्ञापयितुं तावत्पराक्रमं प्रदर्शितवान् ॥ १३ ॥

शस्त्राणां विनियोगमुक्त्वा प्रयोक्तॄणामाह–तान् पीठमुख्यानिति । यमक्षयमिति तावद्दण्डार्थं मुरवत् पुनरावृत्त्यभावाय वा ते हि पीठं पुरस्कृत्य समागता इति उपजीव्यत्वात् उत्साहनिवृत्त्यर्थं प्रथमतः स एव हतः मूर्च्छादिना अलौकिकप्रकारेण हननं व्यावर्त्तयितुमाह—निकृत्तेति । चत्वार्यङ्गानि कवचं च निकृत्तानि येषां पितुः पञ्चाशाः तेषु प्रतिष्ठिता इति कार्ये तद्वंशव्यावृत्त्यर्थं शिरःप्रभृतीनां छेदनं शीर्षाणि ऊरवः भुजा अङ्घ्रयश्च ज्ञानं गतिश्चाद्यन्तयोरुत्पत्तिकर्माणि च मध्ये तत एवं क्रमः तत उभयेषां मुरस्य तत्पुत्राणां च फलरूपस्य नरकस्य निराकरणार्थं प्रवृत्तिमाह—स्वानीकपानिति । तस्य जयहेतवः सेनाः तासामनीकानां रक्षकाः अज्ञानेन व्यसनैश्च नरकः सिद्धो भवतीति तेषां निराकरणे स्वयं निराकृतोऽपि लौकिकैः साधनैः स्वजयो भविष्यतीति आस्रवन्मदैर्गजैः सहितः युद्धार्थं निरगमत् अच्युतत्वात् न तस्य केनाप्यंशेन क्षतिः मुरः चक्रेण हतः अन्ये सायकैरिति ससाधनसाध्यस्यानुवादः तथेति प्रकारस्यापि ततस्तदपेक्षया समर्था गजा इति सूचयितुं पूर्वानुवादः ॥ १४ ॥

ननु अग्निवत् भगवान् स्थूलान् सूक्ष्मानपि दहतीति ततो बलिष्ठानपि गजान् मारयिष्यतीति कथं तत्प्रवृत्तिरिति चेत्तत्राह–दुर्मर्षण इति । दुष्टक्रोधयुक्तः ज्ञानाच्छादको वर्त्तत इति तथा प्रवृत्तिः गजानामुत्कर्षमाह आस्रवन्मदैः पयोधिप्रभवैरिति कार्यकारणोत्कर्षौ निरूपितौ स्वभावतो गजा जीवेषूत्कृष्टाः सम्प्रचाराः अतस्त्रिविधोऽप्युत्कर्षो निरूपितः गजानां मदश्च एव बलोत्कर्षहेतुः ऐरावतः पयोधिप्रभव इति समानजनकत्वेन तत्सामर्थ्यं सर्वेषां निरूपितं मातरं पितरं कालञ्च दृष्टवानिति निरूपयितुं तस्य भगवद्दर्शनं वर्णयति-दृष्ट्वा सभार्यमिति । युद्धार्थमागमनशङ्कैव निवारिता तत्रानुरक्तश्चेत् कृतार्थ एव भवेदिति भगवान् लौकिकसाधनैरलौकिको जेतुं शक्य इति अभूतोपमामाह सूर्यो-

यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ! ।
हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १७ ॥
उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ।
गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः ॥ १८ ॥
(१) पुरमेवाविशन्नार्ता नरको युध्ययुध्यत ।
दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥ १९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

परिष्टादिति । अद्भुतत्वाद्रागद्वेषाभ्यामिष्टानिष्टसूचकं भवति यदि सूर्योपरि आधिदैविकः मेघः आधिदैविकविद्युल्लतया सह तिष्ठति आदित्य एव पर्जन्य इति भवति तस्याधिदैविकं रूपं तादृशमिति वचनोपपत्तिः तथापि कृष्णः कालात्मा स्त्रीणां हितकारीति तस्य न सद्बुद्धिरुत्पन्ना किन्तु विरुद्धैवेति तत्कार्यमाह—तस्मै व्यसृजच्छतघ्नीमिति । शतं हन्तीति योगोपि तस्य विवक्षितः तादृशी विशेषेणासृजत् योधाश्च शतघ्नीभिर्बाणैर्वा युगपदेव स्मेति प्रसिद्धं विव्यधुः ॥ १५ ॥

आदौ तेषामपराधो निरूप्यते भगवतोऽक्लिष्टत्वाय यावत्ते युद्धार्थं प्रवृत्ताः ततःपूर्वं तस्मिन् वा समये भगवान् स्वमार्गणैः प्रथमतो योधांश्चिच्छेद ततस्तत्प्रयुक्तान्यस्त्राणि पूर्वमस्त्राणामुपस्थित्यभावात् नात्र क्रमो दोषाय तत्प्रसिद्धं भौमस्य सैन्यं भगवत्त्वात् न पुत्रादिभावस्तस्य बाधक इति भगवत्प्रवृत्तिः सोऽपि मातुः पुत्र इति पित्रापि सह युद्धकरणे नायुक्तं गदाग्रज इति भक्त्युत्पादनार्थं भगवतस्तथा करणं युक्तमेव लौकिकेनैव प्रकारेण तान् हतवानिति ज्ञापयितुं भगवच्छरान् विशिनष्टि विचित्रवाजैरिति । दूरगमनलक्ष्यैकगमनप्रयोजकाः पक्षाः विचित्रा वाजा येषामिति वायुर्जायते गतिर्वा येभ्य इति निशितानि कार्यसाधकानि निकृन्तानि बाह्वादीनि यस्येति प्रक्षेपकौ बाहू आगमने अङ्गालताप्रयोजकाकर्मजन्मनी वा पूर्ववत् ततोऽज्ञानगता बाहूरुशिरोङ्घ्रयः विग्रहे यस्येति तादृशाकार तथैव यस्मिन् क्षणे युद्धार्थं तत्सैन्यं प्रवृत्तं तस्मिन् एव क्षणे प्रथमशस्त्रविमोकानन्तरं यथा नापरं विमुञ्चति तदर्थं पार्श्वभागान् सर्वानेव निराकृतवान् वाहनानां निराकरणमाह हताः अश्वाः कुञ्जराश्चेति चतुरङ्गे रथा अचेतनाः नराणां स्वरूपमुक्तमेव अवशिष्यन्ते वाजिनः करिणश्चेति ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यमक्षयं यमनियमाद्यष्टाङ्गयोगस्थानं मोक्षमिति वास्तवोऽर्थः ॥ १४ ॥

आस्रवन्तो मदा येषां तैर्गजैः सह निरक्रामत् शतघ्नीं शक्तिविशेषम् ॥ १५ ॥

विचित्राः वाजाः पत्राणि येषां तैः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शतघ्नीं शक्तिविशेषम् ॥ १५ ॥

विचित्राः वाजाः पत्राणि येषां तैः ॥ १६—१९ ॥

भाषा टीका ।

अति भयङ्कर वे मुर के पुत्र श्रीकृष्ण को प्राप्त होकर क्रोध से श्रीकृष्ण के ऊपर वाण, तरवारि, गदा, शक्ति, पोलादी, त्रिशूलन की वर्षा करते भये । अमोघ पराक्रमी आश्चर्य्य शक्तियुत श्रीकृष्ण महाराज ने निज बाणों से उन के शस्त्र समूह को तिल के समान टुकड़ा २ काट दिया ॥ १३ ॥

पश्चात् श्रीकृष्ण के वाणोंसे उनके शीर्ष जांघ भुजा पांव कवच कट गये इस प्रकार पीठ आदि सातोंन को मार कर श्रीकृष्ण महाराज ने उन को यमराज के लोक में पठा दिये ॥ १४ ॥

निज सेनापतीन को श्रीकृष्ण के चक्र बाणों से उस प्रकार मरे हुए देखकर भूमिपुत्र नरकासुर असन शील होकर जिन में मद चुचारहा हैं और ऐरावतकुल में उत्पन्न भये हैं । ऐसे अनेक हस्तिन के साथ युद्ध करने को निकलता भया ॥१५॥

सूर्य्य के ऊपर विजली सहित मानो मेघ बैठा है इसी प्रकार गरुड के ऊपर सत्यभामा सहित विराजमान श्यामसुन्दर श्रीकृष्ण को देखकर भौमासुर श्रीकृष्ण पर शतघ्नी आयुध चलाता भया और उस के साथ के सब शूरवीरो ने एक ही समय में प्रहार किया ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्याश्चर्ये कुरूद्वहेतिसम्बोधनम् तथाहि तैर्यानि प्रयुक्तानि शस्त्रास्त्राणि तत्प्राप्तेः पूर्वमेव तत्सर्वं सैन्यं हत्वा पश्चात्तानि शस्त्राण्यस्त्राणि च चिच्छेद तत्राप्येकैकं शस्त्रमस्त्रं त्रिभिः शरैरित्याश्चर्यम् ॥ १७ ॥

(१) तुरङ्गमाश्च दुर्धर्षाः पेतुरुर्व्यां गतासवः ॥ इति विज० पाठ ।

दूतस्त्वयाऽऽत्मलभने सुविविक्तमन्त्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ।
मत्वा जिहास इदमङ्गमनन्ययोग्यं तिष्ठेत तत्त्वयि वयं प्रतिनन्दयामः ॥ ५७ ॥

श्रीशुक उवाच ।

एवं सौरतसंल्लापैर्भगवाञ्जगदीश्वरः ।
स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ ५८ ॥
तथाऽन्यासामपि विभुर्गृहेषु गृहवानिव ।
आस्थितो गृहमेधीयान् धर्माँल्लोकगुरुर्हरिः ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे कृष्णरुक्मिणीसंवादो नाम
षष्टितमोऽध्यायः ॥ ६० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिच दूत इति आत्मलभने मत्प्राप्त्यर्थम् मयि चिरायति श्वो भाविनि विवाहे आगन्तव्यमिति कृते समये कथञ्चिदप्राप्तवति सत्येतच्चिश्वं शून्यं मत्वेदमनन्ययोग्यमङ्गं जिहासे त्यक्तुमिच्छामि त्यक्ष्यामीत्येवं दूतः प्रस्थापितः तथा ह्युक्तं त्वया "यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्याम्" इति. यद्वा अजिहास इतिच्छेदः त्यक्तुमैच्छ इत्यर्थः । तच्च कर्म त्वय्येव तिष्ठेत न तत्प्रतिकर्त्तुं शक्यमित्यर्थः । किन्तु केवलं त्वां प्रतिनन्दयामो हर्षयाम इति ॥५७॥

सौरतसंलापैः सुरतनर्मगोष्ठीभिः ॥ ५८—५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
षष्टितमोऽध्यायः ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनः पूर्वानुरागवैशिष्ट्यं स्मृत्वाऽऽह-दूत इति । अस्यायमेवार्थः आत्मलभने मत्प्राप्त्यर्थं त्वया दूतः प्रस्थापितः स च सुविविक्तमन्त्रः सुष्ठु निर्णिक्ता गुप्तयुक्तिर्यत्र सः ततश्च मयि चिरायति तदातिथ्यस्वस्वसन्देशश्रवणावेशावसरदैर्घ्यादिभिः किञ्चिद्विलम्बमाने सति एतत् पितृमात्रादिबन्धुयुक्तमपि विश्वं शून्यं मत्वा कुत्राप्यवलम्बनं न लब्ध्वेदं सर्वोत्कृष्टमप्यङ्गम अजिहासः त्यक्तुमैच्छः । "दुर्भगाया न मे धाता" इत्यादि चिन्तया भवत्या आशाबन्धच्छेदावगमात् "यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादम्" इत्यादि पूर्वोक्तस्वारस्याच्च अजिहास इत्यत्र हेतुरनन्ययोग्यम् । अन्यस्मै समर्पणायोग्यमित्यर्थः । प्रतिनन्दयामः केवलमनुमोदामहे ॥ ५७ ॥

रुक्मिणीमाधवौ वन्दे ययोः कलहसन्निभा ।
वाग्वैदग्धी मिथस्तोऽत्रतात्पर्य्यार्थ्यता मता ॥

एवमित्यन्येऽपि तादृशा बहवो विलासाः सूचिताः स्वरतो रमया स्वरूपशक्तित्वेन स्वरमणयोग्यया रुक्मिण्या सह रेमे तस्मिन् रमणेऽपि विशेषः न वेति क्रीडालोभेनैश्वर्य्यांशं गुणीकृत्य तादृशलीलया नरलोकमनुकुर्व्वन्नपि परममाधुर्य्येण तमपि हीनोपमानं कुर्वन्नित्यर्थः । यतो भगवानपि देवकीसुतस्तथाविर्भावेनैव प्रारब्धलील इत्यर्थः ॥ ५८ ॥

अथ अतो हेतोर्विभुरपि स्वयमेवैकः सर्व्वाणि गृहाणि व्याप्नुवन्नित्यर्थः एतच्चाग्रे व्यक्तं भावि गृहवानिवेति यथाऽन्यो गृही तथैवेत्यर्थः । गृहमेधीयान् गृहस्थसम्बन्धिनस्तादृशप्रियाप्रेममयान् वैदिकांश्च धर्म्मानास्थितः आचरन्नित्यर्थः । यतो लोकगुरुस्तस्मादेव ते धर्म्माः प्रवर्त्तन्त इत्यर्थः । यतो हरिस्तेन शीलेन सर्व्वेषां मनोहर इत्यर्थः । यद्वा आश्रितस्सन् रेमे इति पूर्व्वक्रियैवान्वयः इति पूर्वधर्म्मानुष्ठानमपि क्रीडार्थमेवेति ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
षष्टितमोऽध्यायः ॥ ६० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षष्टितमोऽध्यायः ॥६०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, दूत इति । आत्मलभने मत्प्राप्त्यर्थं सुविभक्तः यर्ह्यम्बुजाक्ष न लभेय तव प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्याम" इत्येवं विविच्य ज्ञापितः मन्त्रो यस्य सः दूतः प्रेषितः तदाऽपि चिरायति ईषद्विलम्बं कुर्वति सति एतद्विश्वं शून्यं मत्वा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदमनन्याहमङ्गं शरीरं जिहासे हातुमिच्छामीत्येवं भवतो तिष्ठत स्थितवतीति यत्त्वया केवलं प्रतिनन्दयामः प्रतिकर्तुमशक्नुवन्तः केवलं हर्षयाम इत्यर्थः । यद्वा जिहासे इत्येवं विभक्तमन्त्रो दूतः प्रस्थापित इति सम्बन्धः ॥ ५७ ॥

एवमिति । नरलोकं विडम्बयन्ननुकुर्वन् हेतुगर्भमिदं तस्मादित्थं सौरतसल्लापैः सुरतमर्मगोष्ठीभिः स्वरतः आत्मारामोऽपि रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह रेमे ॥ ५८ ॥

तथेति । अन्यासामपि पत्नीनां गृहेषु गृहाश्रमीव गृहस्थाश्रमयुक्तान् धर्मानास्थित सन्नेव रमे ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम
षष्टितमोऽध्यायः ॥ ६० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मलभने स्वलाभार्थं सुष्ठु विविक्तमन्त्रः स्पष्टीकृतरहोवचनः चिरायति बिलम्बनं कुर्वति सति एतज्जगच्छून्यम असदमङ्गममत्वाऽनन्ययोग्यम अन्यपुरुषसंयोगायोग्यमिदम् अङ्गं जिहासुस्तिष्ठेरिति यावत् ॥ ५७ ॥

देव्या गुणा ब्रह्मायुषापि वक्तुं न शक्या इति सङ्ख्याप्रतीत्याह—श्रीशुक इति । सौरतसंलापैः सुरतसम्बन्धिमिथोभाषणैः नरलोकं मनुष्यजनं विडम्बयन् अनुकुर्वन् ॥ ५८ ॥

इदमन्यत्रातिदिशति—तथेति । गृहवान् गृहस्थ इव आस्थित, दूरतश्च प्रकाशितः "आङ उद्गमने ॥ १-३-४० ॥ इतिसूत्रम्॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्यां
षष्टितमोऽध्यायः ॥ ६० ॥

( श्रीविजयध्वजतीर्थरीत्या पञ्चसप्ततितमः ॥ ७५ ॥ )

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्टितमोऽध्यायः ॥ ६० ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवमित्यादि । सुरतं प्रेम तदर्हः सल्लापस्तेन नरलोकमनु कुर्वन् रमया रुक्मिणीरूपया लक्ष्म्या रेमे कीदृशः स्वरतः स्वे निजैश्वर्ये रतः ॥ ५८—५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
षष्टितमोऽध्यायः ॥ ६० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तव वयमित्यपि जयोऽप्यङ्गीकृतः त्वदीयत्वञ्च अन्यदेकं तव चरित्रं अनन्यदपि अनुपमेयमपि जयाद्यङ्गीकारेऽप्यप्रतीकार्यमपीत्याह—दूत इति । आत्मलभने कृष्णप्राप्त्यर्थं सुष्ठु विविक्तो मन्त्रो यस्य तादृशो द्विजः प्रस्थापितः अनेन मयि विश्वासः प्रथमत एव कृत इति निरूपितं ततो मयि चिरायति विलम्बमाने एतज्जगच्छून्यमेव मत्वा इदमङ्गं शरीरमनन्ययोग्यं केवलं भगवदेकभोग्यं जिहास इति मत्वा द्विजः प्रस्थापितः इति पूर्वेणैव सम्बन्धः प्रस्थापनमनय एवं ते पक्षा विचारिता इति एतत्त्वय्येव तिष्ठत विध्यर्थोऽयं नास्य प्रतीकारः सम्भवतीति अप्रयोजकत्वेन तथात्वमाशङ्क्य निराकरोति तत्त्वय्येव तिष्ठेत वयन्तु प्रतिनन्दयाम इति आसक्तार्थं वयम् ऋणिन इति भावः ॥ ५७ ॥

एवं सान्त्वनं कृतमुपसंहरन् अन्यास्वप्येवं भावमतिदिशति—एवमिति द्वाभ्याम् । सौरताः सुरतयोग्याः संलापाः येन सुरतं वर्द्धते भगवानिति लीलायां योग्यता देवकीसुत इति स्त्रीणां प्रियार्थे भक्तहितैकसाधकत्वात् तथा करोतीति सूचितं स्वरतोऽपि रमया लक्ष्म्या रुक्मिण्या सह रेमे ननु वाक्यैरेव निवृत्तव्यापारः परब्रह्मणस्तदयुक्तमाशङ्क्य लीलानुकरणमाह—नरलोकं विडम्बयन्निति । अन्यथा नरोयमिति लोकानां प्रतीतिर्न स्यात् अतिदिशति तथान्यासामपीति ॥ ५८ ॥

अयमेव न तास्वपि प्रकारः : किन्त्वतिरिक्तस्तयोरिकस्तत्तद्योग्यः तदाह—अथशब्दः अन्यासामिपि रुक्मिणीव्यतिरिक्तानां गृहेषु गृहवानिव प्राकृत इव तदनुकरणं कुर्वन् गृहमेधीयान् धर्मानास्थितः लौकिकान् वैदिकांश्च विडम्बनार्थं लौकिकाश्रयणं तत्पूर्वमुक्ते वैदिकाश्रयणे विशेषमाह—लोकगुरुरिति । तथागत्य सर्वकरणे बहुकालस्थितौ च हेतुः हरिरिति ॥ ५९ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
एकादशाध्यायविवरणम् ॥ ११ ॥ ६० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मनो मम लभने लभनाय प्रापणार्थं ततश्च मयि चिरायति विलम्बमाने सति एतद्विश्वं शून्यं मत्वा इदमङ्गम् अनन्ययोग्यम् अजिहासः त्वं त्यक्तुमैच्छः तत्तव कर्म त्वय्येव तिष्ठेत न तत्प्रतिकर्तुं शक्यमित्यर्थः । किन्तु वयं प्रतिनन्दयामः हर्षयन्ती त्वां प्रति हर्षयामः ॥ ५७ ॥

सौरतसल्लापैः सुरतसल्लापैः सुरतसम्बन्धिनर्मसम्वादैः स्वरत आत्मारामः अत एव रमया आत्मभूतया रेमे विडम्बयन् स्वयं नरलीलोऽपि स्वसुखदर्शनयातिरस्कुर्वन् तं हीनोपमानं कुर्वन्नित्यर्थः ॥ ५८—५९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमेऽस्मिन् षष्टितमः सङ्गतस्सङ्गतस्सताम् ॥ ६० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

'आत्मलभने मत्प्राप्त्यर्थं ततश्च मयि चिरायति विलम्बमाने इदं विश्वं शून्यं मत्वा इदमङ्गमनन्ययोग्यं त्वत्साधारणम् अजिहासे त्यक्तुमैच्छ इत्यर्थः। तत् तव चेष्टितं त्वय्येव तिष्ठेत न तत्प्रतिकर्तुं शक्यमित्यर्थः। किन्तु केवलं त्वां प्रतिनन्दयामः हर्षयामः ॥ ५७ ॥

जगदीश्वरः जगद्यात्रानिर्वाहकः नरलोकं विडम्बयन् अनुकुर्वन् एवम्भूतैः सौरतसंलापैः सुरतकर्मगोष्ठीभिः स्वरतः स्वलब्धोपि रमया स्वयं लक्ष्म्या सह रेमे ॥ ५८ ॥

अन्यासामपि सत्यभामादीनां गृहेषु तथा रेमे ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्टितमाऽध्यायार्थप्रकाशः ॥ ६० ॥

---

भाषा टीका।

हमारी प्राप्ति के वास्ते सम्यक प्रकार विवेक कर संदेस जिसको उपदेश किया ऐसे को आपने भेजा और उस काल में मेरे किञ्चित् विलम्ब करने पर इस विश्व शून्य मान कर श्रीकृष्णचन्द्र के सिवाय अन्य पुरुष के योग्य मेरा शरीर नहि है इस लिये इस का परित्याग कर दूगी इस प्रकार का निश्चय आप करती भई यह आप का कर्म आपहि में रह सकता है हम इसका प्रत्युपकार नहि कर सकतेहैं केवल धन्य२ ऐसी स्तुति करके आप के आनन्द युक्तहि कर सकते हैं ॥ ५७ ॥

श्रीशुकदेवजी बोले कि आत्माराम और जगतके नियन्ता श्रीकृष्ण भगवान् मनुष्यवत् चेष्टा करत इस प्रकार एकान्त के हास्य सल्लापन करके श्रीरुक्मिणीजी के साथ रमण करते भये ॥ ५८ ॥

मनुष्यों के अज्ञानान्धकार के निवृति करने वारे तथा पापन के हरण करने वारे श्रीकृष्ण भगवान् इसी प्रकार अन्य भार्याओं के गृह में भी उतने ही रूप धारणकर सामान्य गृहस्थवत् गृहस्थाश्रम के धर्म न अनुष्ठानकरत उन भार्याओं के साथ रमण करते भये ॥ ५९ ॥

इति श्रीमद्भागवत दशमस्कन्ध उत्तरार्धमें साठके अध्यायकी
श्रीवृन्दावनस्थ पं० दामोदराचार्य कृत
भाषाटीका समाप्ता ॥ ६० ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ।

—⊷⊶—

### श्रीशुक उवाच ।

एकैकशस्ताः कृष्णस्य पुत्रान् दशदशाबलाः ।
अजीजनन्ननवमान् पितुः सर्वात्मसम्पदा ॥ १ ॥
गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ।
प्रेष्ठं न्यमंसत स्वं स्वं न तत्तत्त्वविदः स्त्रियः ॥ २ ॥
चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ।
सम्मोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः ॥ ३ ॥
स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकषष्टितमे शौरेः पुत्रपौत्रादिसन्ततिः ।
अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥
अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् ।
कोटिशः पुत्रपौत्रादीन् हरिर्दारैरयोजयत् ॥

तदेतद्वक्तुमाह—एकैकश इति । कृष्णस्याबला भार्याः सर्वा या आत्मनि सम्पत्तया पितुः सकाशादनवमानन्यूनान् ॥ १ ॥

प्रेष्ठं न्यमंसत अच्युतस्य प्रियतमं प्रत्येकं स्वं स्वं मेनिरे न तस्य तत्त्वमात्मारामत्वं विदन्ति ताः ॥ २ ॥

आत्मारामत्वं व्यनक्ति द्वयेन- चार्विति । चार्वब्जकोशवत् वदनम् आयतानि बाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च वल्गुजल्पाश्च भगवतः एतैः सम्मोहिता वनिताः स्वैः स्वैरनेकैर्विभ्रमैस्तस्य श्रीकृष्णस्य मनो विजेतुं हर्तुं न समशकन्न शक्ता बभूवुः विभूम्नः परिपूर्णस्य ॥ ३ ॥

तासां विभ्रमान् वर्णयन्नेतद्विवृणोति- स्मायेति । स्मायो गूढहसितं तद्युक्तो ऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरता मन्त्रास्तेषु शौण्डैः प्रगल्भैरनङ्गस्य बाणैः शरैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्येन्द्रियं मनो विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यो न शेकुरिति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनवमानन्यूनान् कृष्णस्याबलाः न विद्यते तं विना बलं गतिर्यासां तादृशभार्य्या इत्यर्थः ॥ १ ॥

एकस्य तावतीषु तावत्पुत्रजननासम्भावनां कैमुत्येन परिहरति तत्प्रसङ्गे ताभिः सममत्यासक्तिञ्च दर्शयति—गृहादिति । स्थितमिति प्रतिवारमेव यथासमयमेव बहिः प्रदेशादन्तःपुरमगच्छन्निव निजगृह एवागत्य वर्त्तमानमित्यर्थः । तथापि तस्मादनपगं नायिकान्तरगृहगमनरहितं वीक्ष्य विशेषेण दृष्ट्वा राजपुत्र्य इत्युपलक्षणं देवादिपुत्र्योऽपि आत्मानं प्रेष्ठममंसत प्रत्येकमिति शेषः टीकायां स्वंस्वमिति पुनरुक्तिस्तु प्रत्येकमात्मानमित्यस्यैव निर्गलितार्थकथनाय स्वमितिपाठेतु प्रत्येकामित्यस्य वैयर्थ्यं स्यात् अन्यत्तैः । यद्वा, न तस्य तत्त्वं सर्वगृहावस्थानरूपं विदन्तीति ताः तद्विलासभरमोहेनान्यानुसन्धानासक्तेरिति भावः ॥ २ ॥

नन्वेवं तस्यातिकामुकत्वमिव प्रतीयते न किन्तु प्रेमैकवशत्वमेवेत्युदाहरंस्तासां मोहञ्च दर्शयति—चार्विति द्वाभ्याम् । वनिताः जनितात्यर्थानुरागास्ताः स्त्रियः स्वैः स्त्रीजातीयैर्विभ्रमैर्विलासैर्भगवतो मनो विजेतुं विशेषेण स्वसतत्तोमाधिकस्य पत्नीतुल्यत्वेन जेतुं वशीकर्त्तुं न सम्यगशकन् किन्तु यावांस्तत्प्रेमांशस्तावदेवेत्यर्थः । अत एव सप्रेमेति तस्यापि प्रेमनिगदेनैवोक्तम् वनिताशब्देन गृहानपगामित्वं वचितं वशत्वञ्च यद्यपि विसंशब्दयोरेकतरेणाप्यभीष्टार्थलाभः स्यात्तथापि विशब्देन श्रीभगवति वशीभावचिह्नं संशब्देन तास्वपि तत्कार्तियोग्यत्वचिह्नं तादृशं दृष्टमिति पृथगवगमितं तथा तादृशविभ्रमव्यञ्जने हेतुः, चार्विति. चार्वब्जकोशवदनादिभिः सम्मोहिताः सम्यक् प्रेम्णा कामेन च क्षोभिता इति अत्र पूर्वं वदनं पश्यन्ति पश्चाद्धृदयानन्दरसया बाहुः ततस्तद्दर्शनेन गाढालिङ्गनस्पृहाजातधाष्टर्येन पुनर्मुखे दृश्यमाने मिथो नेत्रामिलनं ततः सप्रेमहासादीति पाठक्रमेणै व्यक्रम

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतदुक्तं भवति परस्परं तस्य ताभिः सह प्रेमवशताऽस्त्येव किन्तु यदि कदाचित्तत्प्रेमाधिकसपत्नीवत्तन्मनो वशीकर्तुमनङ्गबाणैरिति वक्ष्यमाणात् कामभयान् विलासविशेषान् दर्शयति तदा तस्य तद्वैवश्यं स्यादित्यतो न कामुकत्वं किन्तु प्रेमविशेषवश्यत्वमेवेति, तच्च युक्तमित्याह– विभून्नः स्वतः सर्वापेक्षणीयपरिपूर्णस्य ततः कामुकत्वं न सम्भवति महागुणस्य भक्तवशत्वस्य तु तत्र सद्भाव एवेति भावः । तदुक्तम् "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज" इति अतस्तमुद्दिश्य श्रीगोपालतापन्यामप्युक्तं "विद्यामयो हि यः स कथं विषयी भवति" इति योहि कामेन कामान् कामयते स कामी भवति योहि वै त्वकामेन कामान् कामयते सोऽप्यकामी भवतीति ॥ ३ ॥

स्मायेत्यादिकं विभ्रमाणां विशेषणं प्रहितत्वं व्यञ्जितत्वं सौरतमन्त्रत्वं सुरतसम्बन्धिरहस्ययुक्तित्वम् अनङ्गबाणैस्तद्रूपैरित्यर्थः । यद्वा, तदेव विवृणोति—करणैः कामशास्त्रप्रसिद्धैरुपायैर्विशेषेण मथितुं न शेकुरिति पूर्ववत् तेषां रूपकम् अनङ्गबाणैरित्येषां विशेषणं भ्रूमण्डलेति बाणशब्देन च भ्रूमण्डलस्य धनुष्ट्वं ध्वनितं मण्डलशब्देन तस्याकृष्टत्वं ततश्च तादृशभ्रूमण्डलेन प्रहिता मुक्ताश्च ते सौरतमन्त्रशौण्डाश्चेति विग्रहः अन्येषि बाणा मन्त्रेण शौण्डा भवन्तीति यस्येति यच्छब्दस्यान्तिमनिर्देशात्तच्छब्दानपेक्षयैवान्वयः । तथाचालङ्कारिकाः यच्छब्दोऽप्युत्तरवाक्यार्थगतत्वेनोपपत्तेः पूर्ववाक्यगतस्य तच्छब्दस्योपादानं नापेक्षत इति तथा—

"साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः" ॥ इति

एवं श्रीव्रजदेवीनां तत्रतत्र परमशुद्धोत्कृष्टं प्रेमप्रशंसनादाभ्यः सर्वाभ्योप्याधिक्यं सूचितम् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

स्मायावलोकः स्मयकार्यवलोकजम् ॥ ४—३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवतस्तासु पत्नीषु पुत्रपौत्रादिपरम्परा अनुवर्णयिष्यन् पत्नीष्वेकैकस्याः दश पुत्राः इत्याह—एकैकश इति । ताः कृष्णस्याबलाः स्त्रियः सर्वाः या आत्मसम्पत्त्या पितुः सकाशादनवमानन्यूनान् तुल्यान् एकैकशो दशदश पुत्रान् अजनयामासुः ॥ १ ॥

तदेव विस्तरेण वक्तुं तावत्तासां भगवन्मायामोहितत्वं भगवतस्तद्वशत्वञ्चाह— गृहादिति द्वाभ्याम् । गृहादनपगं नापगच्छति न निष्क्रामतीति तथा तं स्थितं गृहेष्वेव स्थितमच्युतमवलोक्य सर्वास्ता राजपुत्र्यः अतत्त्वविदः भगवद्याथात्म्यानभिज्ञाः हेतुगर्भमिदं तस्मात् प्रत्येकं स्वस्वात्मानं प्रियतमं भगवत इति शेषः । न्यमंसत अमन्यन्त ॥ २ ॥

चार्विति । चार्वब्जकोशवद्वदनम् आयतानि बाहुनेत्राणि च सप्रेम्णा हास्यरसेन वीक्षितानि च वल्गुजल्पाश्च तैः साधनैर्भगवता कर्त्रा सम्मोहिताः वनिताः स्वैरनेकैर्विभ्रमैर्विभून्नः परिपूर्णस्य भगवतः मनो मानसं जेतुं वशीकर्तुं न समशकन् न समर्था बभूवुः तस्यात्मारामत्वादिति भावः ॥ ३ ॥

तासां विभ्रमान् वर्णयन्नेव तद्विवृणोति–स्मेरेति । स्मेरो गूढहसितं तद्युक्तो ऽवलोकश्च कटाक्षस्तेन रचितस्सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिताः ये सौरतमन्त्राः तेषु प्रगल्भैरनङ्गस्य बाणैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्य भगवत इन्द्रियं मनः मथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यः न शेकुर्नाशक्नुवन् ॥४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अध्यायद्वयेन लोकविडम्बनानुचरितं कथयति—तेन सतां ज्ञानाभिवृद्धिरसतामन्यथेति तत्रादावेकैकस्यां दशदश पुत्रा आसन्नित्यादि कथयति—एकैकश इति । सर्वात्मसम्पदा अन्यूनदेहादिस्वभावसमृद्ध्या ॥ १ ॥

अनपगं अपगमरहितम् ॥ २ ॥

एवमपि पराजयः स्त्रीणामेवेत्याह–चार्विति ॥ ३ ॥

स्मायः मन्दस्मितं तेन युक्तो ऽवलोकः स्मायावलोकः तस्य लवेनाल्पेन दर्शितेन भावेन स्पन्दनलक्षणक्रियया हारिणा मनोहरेण भ्रुवोर्मण्डलवलयेन प्रहिताः सौरतमन्त्राः सुरतवर्धनमन्त्राः एतैः शौण्डैः पटुत्वमाप्तैः कामबाणैः करणैः सम्भोगसाधनैः यस्य हरेरिन्द्रियं रेतोलक्षणं विमथितुम् आलोडयितुं स्रावयितुं वा वशीकृतकामत्वेन दृढवीर्यत्वात् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

तत्त्वं सर्वगृहस्थितत्वम् ॥ २ ॥

चार्विति तत्त्वम् ॥ ३—१० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १ ॥

गृहादित्यादि । स्त्रियः सत्यभामाद्याः राजपुत्र्यः यथाभवति सामान्यस्त्रीभाववत् यथा न भवति तथा स्वं स्वम् आत्मानं प्रेष्ठं सर्वत्र प्रियतमं न्यमंसत नितराम् अमन्यन्त कीदृश्यः तत्त्वविदः आत्मतत्त्वज्ञाः यद्वा न विद्यते तस्य श्रीकृष्णस्य तत्त्वविदो याभ्यः ताः ता यथा कृष्णतत्त्वं जानन्ति न तथान्ये केपीति भावः किं कृत्वा गृहाद् स्वगृहात् अनपगं युगपदेव सर्वेषु गृहेषु सदा सन्तम् अच्युतं वीक्ष्य आत्मानमेव प्रेष्ठं अमंसत ॥ २ ॥

ननु तं वशीकर्तुं शेकुरित्याह—चार्वित्यादि द्वाभ्याम् । अनङ्गबाणैर्मथितुं न शेकुः प्रेम्णा तु शेकुरेव ॥ ३-५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

द्वादशे मरणं प्राह पुत्रपौत्रयुतस्य हि।
प्रसङ्गान्मरणं चोक्तं रुक्मिणः प्रतिबन्धनुत्॥
भगवान् केवलं लोके क्रीडार्थं न समागतः।
किन्तु सर्वोद्धारणाय तदुद्वाहेऽपि मारणम्॥
कलौ शुद्धः क्षत्रियो हि न स्थाप्य इति निश्चयात्।
पापं विवाहमकरोत्फलं तस्याप्यसूचयत्॥
देवकीप्रीतये वंशः स्थाप्य एवेति तत्तथा।
तदानीं सर्वधर्माणां सम्यक् स्थितिनिरूपणे॥
दशास्यामिति वाक्येन दशपुत्रनिरूपणम्।
यथोक्तं श्रुतिसिद्धं हि कर्तुं नान्यः क्षमो भवेत्।
लोकवेदौ पुरस्कृत्य रमणं तत्तथोच्यते॥

पूर्वं लौकिकं रमणमुक्तमिदानीं वैदिकं रमणमाह—एकैकश इति। कथं रुक्म्यरिपुत्र्यायेत्यन्तेन। धर्मो हि द्विविधः विहितकरणं निषेधपरिपालनञ्च त्रयीद्विषो हन्तव्या इति नोपेक्षितव्या इति दैत्यानां रुक्मिप्रभृतीनां वधोऽप्यतोऽग्रे निरूप्यते तत्र प्रथमं "दशास्यां पुत्रानाधेहि" इति वेदवाक्यात् सर्वास्वेव दशदश पुत्रान् नाधिकान् न न्यूनांश्चोत्पादितवानिति निरूप्यते, भगवतः एकैकशः स्त्रियः ताः सर्वा एव कृष्णस्य स्वप्रियस्य अबलाः स्त्रियः दशदश पुत्रान् अजीजनन् सुपुत्रजनने भगवतः सर्वोऽपि भावोऽस्तीति ज्ञापयति पितुः अनवमान् अन्यूनान् केनचिदंशेन तथात्वं वारयति, सर्वात्मसम्पदेति. सर्वाः याः आत्मसम्पदः शारीरेन्द्रियादिसम्पत्तयः ताः समुदिताः प्रत्येकं भवन्तीति ज्ञापयितुमेकवचनम॥ १॥

तासामेवोत्कर्ष इति कदाचित् स्यात् तन्निवृत्त्यर्थं प्राकृतत्वमाह पञ्चभिः—गृहादनपगमिति। आद्यौ साभिमानात्वतः तत्र हेतुः गृहादनपगं भगवन्तं वीक्ष्येति सर्वदा गृह एव भगवान् तिष्ठति भगवत्सम्बन्धेऽपि तथा दोषोत्पत्तौ औत्पत्तिकराजकन्यात्वं हेतुः अच्युतत्वात् न स्वतः सुरतविच्छेदः अतः स्वेच्छापूरकत्वञ्च ताभिर्ज्ञातं व्यापकत्वेनानपगमनमाशङ्क्य लौकिकन्यायेन तथात्वमित्याह—स्थितमिति। गृहेष्वेव लौकिकवत् स्थितम् एवं भगवतो गुणत्रयेण कृत्वा आत्मानं प्रेष्ठं भगवतः प्रियममंसत ननु सत्यमेव आत्मा प्रेष्ठः भगवतोऽप्यात्मैवेति तत्राह—अतत्त्वविद इति। तस्य तत्त्वं तत्सत्त्वं च न जानन्ति भगवदभिप्रायं वस्तुतत्त्वञ्च न जानन्तीत्यर्थः॥ २॥

यतः स्त्रियः तत्सम्बन्धाद्भगवतोऽपि कदाचित् तद्धर्मसम्बन्धः स्यादित्याशङ्क्य निराकरोति— चार्वब्जकोशेति। भगवद्धर्मैः सम्मोहिताः भगवन्तं व्यामोहयितुं न समशक्नन् स्वयं वनिता वनं प्राप्ताः यत्र संसाराटवी सम्पद्यत इति स तु विभूमा विगता भूमा यस्मादिति स्वयमुद्भटप्रायाः सतु सर्वाधिवास इति यावत् तास्तु भगवतः षड्धर्मान् मोहकानाह—चार्वब्जकोशवत् वदनम् आयता बाहवः नेत्रे च सप्रेमहासरसपूर्वकवीक्षितं वल्गुजल्पाः मनोहरकथाः पूर्णरसाख्यापनार्थं चार्वब्जकोशत्वं परिष्वङ्गक्रियापूर्णेति ख्यापयितुम् आयतपदं नेत्रे सौन्दर्यार्थे भिन्नं तद्धि स्वरूपतोऽपि रसोद्बोधकत्वम् एतत् त्रयङ्कायिकं रसार्थं मानसिकमाह-सप्रेमहासरसवीक्षितमिति। सप्रेमहास्यं रसवीक्षितानीति त्रयं स्नेहाभावे तत्र रसालं भवतीति सहभावो निरूपितः हासो रसोद्बोधकः रसवीक्षितानि प्रलोभकानि कायिकान्याह—वल्गुजल्पैरिति। मनोहरार्थानि वाक्यानि स्वपक्षस्थापकानि परपक्षदूषकाणीति तान्यपि त्रिविधानि एवं कायवाङ्मनोभिः सम्मोहिताः अत एव दुर्बलाः भगवतो मनो विजेतुं वशीकर्तुं नाशकन् अनेन भगवच्चित्तं तासु नासक्तमित्युक्तम्॥ ३॥

नापि क्षोभं जनयितुं शक्ता इत्याह—स्मायावलोकेति। आसक्तिरन्या मनः क्षोभोऽन्यः कदाचिद्वशीकरणार्थं भावानुत्पाद्य कथञ्चित् स्वमोहमपि प्रतिबध्य विलम्बमाना भवेयुः तथाकरणेऽपि न क्षोभका जाता इति सम्बन्धाभ्यां भगवति दोषमुत्पादयितुं न शक्ता इति निरूप्यते स्मायावलोको गर्वपूर्वकं दर्शनं तेन सम्बन्धे विलम्बं सूचयन्ति मानापनोदनार्थम् उपेक्षां बाधितुं लवदर्शनानिव कुर्वन्ति कटाक्षैरलसवलितादिभिः स्वासक्तिं कुर्वन्ति ततो भावहारिभ्रूमण्डलं कुर्वन्ति तेन यथैव भगवतो भावः मनोधर्मः स्वस्मिन् आसक्तो भवति तादृशकामशास्त्रसिद्धं भ्रूमण्डलं कुर्वन्ति ततो भावैस्त्रिभिः प्रहिताः याः चेष्टाः सौरतमन्त्रैश्च शौण्डाः बलिष्ठाः सुरतोद्बोधकानि यानि गुह्यभाषणानि अनेन दृष्टादृष्टसाधनानि निरूपितानि सर्वाश्च पत्न्यः यथासुखं प्रवृत्तौ सङ्कोचरहिताः प्रतिबन्धरहिताश्च तत्रापि षोडशसहस्रं षोडशकलस्य मनसः सहस्रप्रकारेण व्यामोहनसमर्थाः अनङ्गबाणाः चेष्टासहितावयवविशेषाः यैर्जयो भवत्येव मन्त्रसहिता बाणाः कार्यसाधका इति ब्रह्मास्त्रादिषु प्रसिद्धिः मण्डलीकृतकार्मुकादृष्टद्वारा तथा दृष्टिमुष्ट्योरेकत्वायलवदर्शितानि वीररसाविष्काराय स्मायावलोक इति। एवं सर्वसाधनसम्पत्तियुक्तैरपि बाणैः यस्येन्द्रियं मनश्च विमथितुं ग्लानियुक्तम् अस्तम्भयुक्तं वा कर्तुं न शेकुः सहजानामेतादृशेऽर्थे जयो न भवतीति कठिनदुर्गस्थेषु राजधर्मेषु कापट्यं निरूपितमिति कुहकैः कपटधर्मैरपि न शक्ताः॥ ४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एकषष्टितमे कृष्णपुत्रपौत्राभिधोच्यते।
द्यूतेऽहन् रुक्मिणं रामोऽनिरुद्धोद्वाहपर्वणि॥

ताः कृष्णस्य अबला भार्याः पितुः श्रीकृष्णस्य सर्वाः आत्मभूता स्वरूपभूता या सम्पत्तयो अनवमान् अन्यूनान्॥ १॥

गृहात् स्वस्वपुरात् अनपगं प्रीतिपूर्वकमन्यभार्यापुराणि न अपगच्छन्तं किन्त्वनुरोधवशादेव कदाचिदेवेति वीक्ष्य आत्मानं स्वं स्वमेव प्रेष्ठं परमसुभगं न्यमंसत नत्वन्यजनं किन्तु अतर्क्ययोगमायया सर्वप्रियाजनसुभगतासम्पादकं तस्य तत्त्वं विदन्तीति ताः॥ २॥

भगवद्विलासमात्रेणापि वशीभूतानां तासां समञ्जसरतिमत्त्वात् प्रेममयाः काममयाश्च विलासाः सम्भवन्ति तत्र काममयैर्विलासैस्तस्या वशीभावमाह-चार्विति द्वाभ्याम्। चार्वब्जकोशवद्वदनञ्च आयतौ बाहू आयते नेत्रे च सप्रेमहासरसेन वीक्षितानि च वल्गुजल्पाश्च तैः सम्मोहिताः स्वैः स्वीयविभ्रमैर्विलासैः

विजयध्व० पाठः । ( याः स्वीप्सितं स्वभवनेष्वधिरूढमुख्यैर्लक्ष्म्येकधामसरसप्लुतवीक्षणेन ।
ऐक्षन् स तामपि पतिं च सतीः कटाक्षैः स्थूणान्तरेण नवसङ्गमलज्जयेव ॥ क ॥
रामागृहे विहरतः पुरतः कराभ्यां बद्धेक्षणाः स्वदयितस्य मुदा हसन्त्यः ।
गात्रान्तराण्यपि दधुर्निजपूरुषस्य क्लेशावहान्यपि तदङ्गजभङ्गभीताः ॥ ख ॥ )
इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसङ्गमलालसाद्यम् ॥ ५ ॥
प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्य मनो विजेतुं न समशक्नन् तत्र हेतुः विभूम्नः स्वत एव सर्वापेक्षणीयपदार्थपरिपूर्णस्य ॥३॥

तासां काममयान् विभ्रमान् विवृणोति-स्मायेति । करणशब्दस्य इन्द्रियवाचकत्वात् करणैर्नैरनङ्गबाणैर्यस्य कृष्णस्येन्द्रियं मथितुं न शेकुः कीदृशैः स्मायः स्मितं तत्सहितोऽवलोकलवः कटाक्षलेशः तेन दर्शितः सूचितोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रज्ञापिता ये सौरतमन्त्रास्तेषु शौण्डैः प्रगल्भैः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकषष्टितमे भगवतः पुत्रपौत्रादिसन्ततिः अनिरुद्धविवाहे रुक्मिवधश्च निरूप्यते- एकैकश इति । कृष्णस्य अबलाः भार्याः सर्वा आत्मनि यां सम्पत् तया पितुः सकाशादनवमान् अन्यूनान् ॥ १ ॥

एवं स्वमात्मानं प्रेष्ठं प्रियतमम न्यमंसत अच्युतस्याहमेवातिप्रेष्ठा नान्या इति प्रत्येकं मेनिरे भक्तप्रियत्वादस्य सर्वा एव प्रिया इति तस्य तत्त्वं स्वभावं न विदन्ति ताः ॥ २ ॥

किञ्च चार्वब्जकोशवद्वदनञ्च आयतानि बाहुनेत्राणि च सप्रेम्णां हासरसेन वीक्षितानि च वल्गुजल्पाश्च भगवतः एतैः सम्मोहिताः स्वैर्विलासैर्विभूम्नः परिपूर्णस्य मनो विजेतुं न समशक्नन् अशक्ता बभूवुः ॥ ३ ॥

तासां विभ्रमान् दर्शयति- स्मायेति । स्मायेन गूढहसितेन युक्तोऽवलोकलवो निरीक्षणलेशः तेन दर्शितो निवेदितो भावोऽभिप्रायः सम्भोगाभिलाषः तेन हारि चित्ताकर्षणशीलं यत् भ्रूमण्डलं तेन प्रहितेषु प्रेषितेषु सौरतमन्त्रेषु शौण्डैः प्रगल्भैः अनङ्गबाणैः अन्यैश्च करणैर्वात्स्यायनप्रोक्तैः सम्भोगसाधनैः यस्येन्द्रियं मनो विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यो न शेकुः नैवाशक्नुवन् ॥ ४ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले—कि, श्रीकृष्ण को वे भार्य्या एक२ दश२ पुत्रों को जनती भई और वे पुत्र श्रीकृष्ण की सौंदर्य आदि सर्व सम्पत्ति से पिता के समान हुए ॥ १ ॥

अनेक रूप धारन कर निज२ गृहमे सर्वदा स्थित, और निज २ गृह से कभी दूर नहि होने वारे श्रीकृष्ण को देख कर वे राजाओं की पुत्री अपने२ मन मे यह मानती भई कि हमहि श्रीकृष्णकी प्रिया है अन्य भार्य्या प्रिया नहि है परन्तु वे स्त्री, श्रीकृष्ण के तत्त्व को प्रत्यक्ष नहि जानती रहीं ॥ २ ॥

भगवान् का अति सुन्दर कमल सदृश मुख और विशाल भुजा तथा नेत्र और प्रेम तथा हासरस युत कटाक्ष और मनोहर वचन, इन से अत्यन्त मोहित होकर वे स्त्री अपने अनेक हाव भाव कटाक्ष करके, निरवधिक आनन्द परिपूर्ण श्रीकृष्ण के मनको, वश्य करने मे समर्थ नहि होती भई ॥ ३ ॥

गूढ हास से संयुक्त अल्प कटाक्ष करके सूचन किये अभिप्राय करके मनोहर भ्रुकुटी मण्डल के प्रेरित एकांत के प्रेरित प्रिय वचन मे समर्थ एतादृश कामदेव के बाणों से तथा काम शास्त्र में प्रसिद्ध अन्य उपायो से सोरह हजार स्त्रिये, जिस श्रीकृष्ण के मनको क्षोभ करने मे समर्थ नहि होती भई ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुरागेण हासोऽवलोकश्च नवसङ्गमे लालसमौत्सुक्यञ्च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः अनुरागहासावलोकनवसङ्गमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥

किन्तु प्रत्युद्गमादिभिर्विलासोऽस्तस्य दास्यं नित्यं विदधुरिति प्रौढभावेऽपि नवसङ्गमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः तेषामेव श्लोकानां प्रस्तावान्तरे पुनः पुनरावृत्तिरतिसौन्दर्यात् ॥ ६ ॥

तासां या दश पुत्राणां कृष्णस्त्रीणां पुरोदिताः ।
अष्टौ महिष्यस्तत्पुत्रान् प्रद्युम्नादीन् गृणामि ते ॥ ७ ॥
चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ।
सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥ ८ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तासामिति । दशदश पुत्राः यासां तासां मध्येऽष्टौ महिष्यो याः प्रागुक्तास्तत्पुत्रानिति ॥७-१२॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च तासां ब्रह्मादिभिरपि दुर्गमभजनं दर्शयति- इत्थमिति । रमापतिं श्रीरुक्मिणीकान्तं श्रीगोपीरूपायां परमरमाणां वा रमयां निरन्तरं वर्द्धमानया मुदा तादृशावलोकनयुक्तनवसङ्गमलालसा आद्या यत्र तद्यथा स्यात्तथा भेजुः ॥ ५ ॥

किञ्च प्रद्युम्नेति प्रसारेति प्रसाद्येति वा पाठः एषां प्रायोऽनुक्रमोच्चारत्वं गम्यं वराहेयं पुष्पलाजरत्नाञ्जलिनिक्षेपादि अत्र टीकायां प्रौढभावेपीत्यादिकं प्रकरणसङ्गमनं तथा तेषामेवेति प्रथमस्कन्धाद्युक्तानामित्यर्थः ॥ ६ ॥

तत्पुत्रान् तासामेव पुत्रानित्यर्थः । बाहुल्याभिप्रेति भावः ॥ ७ ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमिति । किन्तु तदीयां पदवीं याथात्म्यं ब्रह्मादयोपि न विदुः तमित्थम्भूतं श्रियःपतिं पतिमवाप्य ताः स्त्रियः अविरतं सन्ततं यथा तथा एधितया वर्द्धितया मुदा नवसङ्गमे बालसौत्सुक्यमाद्यो यस्य विभ्रमकदम्बस्य तं भेजुः नवसङ्गमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥

किन्तु प्रद्युम्नादिभिः विमोहस्तस्य हास्यं विदधुरिति प्रौढभावेपि नवसङ्गमाद्यभिधानममतसारत्वेनौत्सुक्येनच तथा प्रतीतेः एतेषामेव श्लोकानां प्रस्तावान्तरे पुनःपुनरावृत्तिरपि सौन्दर्यात् ॥ ६ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह–तासामिति । दशदश पुत्राः यासां तासां कृष्णस्य स्त्रीणां मध्ये या अष्टौ रुक्मिण्याद्याः पूर्वं कथितास्तासां पुत्रान् प्रद्युम्नादीन् तुभ्यं कथयामि ॥ ७ ॥

चारुदेष्ण इति । प्रद्युम्नः प्रमुख आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः ते दश पितुर्हरेरनवमास्तुल्या रुक्मिण्याः पुत्रा इति शेषः । प्रद्युम्नव्यतिरिक्तानव पुत्रान्निर्दिशति । चारुदेष्ण इति । वीर्यवानिति चारुदेहविशेषणम् ॥ ८-९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

याः पत्न्यः पक्ष्मकटाक्षैः स्थूणान्तरेण स्तकाव्यवधानेन स्वीप्सितं सुतराममीष्टं कृष्णमैक्षन् अपश्यन् ता इति शेषः केन उच्यते लक्ष्म्याः कान्त्या एकधामप्रकाशसुहृदश्च सरलं सस्नेहं प्लुतं दीर्घीकृतं स्मृतं वा वीक्षणं इदानीं लक्ष्म्येकधामसरसप्लुतवीक्षणं तेन स्वभवनेष्वधिरूढम् उरुक्रममारूढम् अपि सम्भावनार्थे सतीः सत्यः स्थूणान्तरे किमर्थं वीक्षणमित्यत उक्तं नवसङ्गमेति ( क )

सुरतादन्यत्र काले तासां लीलाविशेषमाह—रामा इति । रामाः स्त्रियः गृहे विहरतः दयितस्य कराभ्यां पुरतो वक्रेक्षणाः मुदा रोमाञ्चहेतुहर्षेण हसन्त्यः स्वरूपार्थं कुर्वन्त्यः निजपूरुषस्य निजभर्तुः क्लेशावहानि क्लेशाकराण्यपि गात्रान्तराणि विषयेभ्यः स्पर्शादिभ्यो गात्रेभ्यो ऽन्यत् गात्राणि अपि दधुः वस्त्रादिना पिहितानि चक्रुरित्यन्वयः । कीदृश्यः तस्याङ्गसङ्गलक्षणकामस्य भङ्गे भीता अपीति ( ख ) ॥५—६॥

इदानीं तासां पृथक् पृथक् पुत्रान् वक्तुमुपक्रमते—तासामिति । दशदश पुत्रा यासां ताः दशपुत्राः तासां तासां कृष्णस्त्रीणां मध्ये याः पुरोदिताः पूर्वोक्ताः अष्टौ महिष्यस्तासां तान् पुत्रान् प्रद्युम्नादीन् गृणन्ति तत्तस्या इति शेषः ॥ ७ ॥

प्रद्युम्नादन्ये किं नामान इति तत्राह—चारुदेष्ण इत्यादिना ॥ ८—९ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदेवाह- प्रत्युद्गमेत्यादि । दास्यं प्रेमलक्षणं साम्यं पादसेवाख्यभक्तिम् ॥ ६—४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तासां दोषः तत्सम्बन्धेन भगवति दोषाभाव च प्रतिपाद्य भगवत्सामर्थ्येनैव तासु धर्मः स्थापित इति पूर्वोऽपवादनमुक्त्वा "पतिमेकादशं कृधि" इति वेदवाक्यानुसारेण भगवत्सेवां कृतवत्य इत्याह द्वाभ्याम—इत्थमिति । पूर्वमेतच्छ्लोकद्वयं व्याख्यातं विवाहप्रसङ्गे उक्तमपि पुनः कथनं तदेवोक्तवान् तस्मात्सर्वोऽप्यर्थः स एव भ्रमव्यावृत्त्यर्थं पाठविशेषमाह—लालसाद्यमिति । पूर्वमनुरागादयः स्त्रीनिष्ठाः इदानीं भगवन्निष्ठाः अनुरागपूर्वको हासः मानसः अवलोक ऐन्द्रियः नवसङ्गमः कायिकः त्रिभिरपि या लालसा तदिच्छाविशेषः तत्र आद्ये

चारुचन्द्रो विचारुश्च चारुश्च दशमो हरेः ।
प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥ ९ ॥
भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ।
चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥ १० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवान् स्त्रीनिष्ठानेतान् धर्मान् यस्मिन् भावयतीति भगवन्निष्ठाः धर्माः ॥ ५ ॥

प्रद्युम्नादिभिः दास्यञ्च विदधुः सेवा तदपेक्षिता कामकृता दास्यं साधारणमिति विशेषः स्त्रीत्वं भक्तत्वं वा देहमन्तःकरणञ्च कृतार्थीकृतवत इत्यर्थः ॥ ६ ॥

विधिप्राधान्यात् विधिसिद्धानामष्टमहिषीणां पुत्रान् गणयितुमारभते, येन भगवान् धर्मरक्षार्थमेतावद्रूपो जात इति तन्नामग्रहणे राज्ञः पापक्षयो भवतीति तदर्थं प्रसिद्धान्यपि नामानि निरूपयति—तासां कृष्णस्त्रीणां दशपुत्राणां सर्वे एव दशपुत्रयुक्ताः तासां मध्ये याः पूर्वमुक्ताः अष्टौ महिष्यः रुक्मिणीप्रभृतयः तत्पुत्रान् प्रद्युम्नादीन् ते स्वहितार्थं गृणामि अन्याः कामकृता इति न तेषां नामग्रहणम् ॥ ७ ॥

चारुदेष्णादयो नव प्रद्युम्नानन्तरभाविनः यथानामानस्तथा-स्तद्गुणाः वीर्यवानिति विशेषणं सुन्दरदेहस्य शौर्यशङ्कानिवारकम् चकाराः सर्वत्र पूर्वधर्मसमुच्चयार्थाः अन्तिमः कन्यासमुच्चयार्थः अन्येपि कन्यासमुच्चयार्थाः इति केचित् तदनन्तरं कन्या तत्र चकार इति तथेति वीर्यवान् तेन सह वीर्यवत्त्वमाशङ्क्य पृथगुपदिशति—अपर इति । परः सर्वेभ्यः श्रेष्ठो वा दशम इति क्रमोऽत्र विवक्षित इत्युक्तम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तासां प्रेममयैर्विभ्रमैस्तदिन्द्रियमथनकारणकमङ्गसङ्गमाह—इत्थमिति । अनुरागः प्रेमविलासविशेषस्तन्मयो यो हासावलोकस्तेन नवः नित्यनूतनः सङ्गमो अङ्गसङ्गश्च लालसा तृष्ण्याभावश्च तदाद्यं तदादिकमनेकविलासं स्वकर्तृकं कृष्णकर्तृकं वा भेजुः "तथाहमपि तच्चित्तो निद्रां च न लभे निशि" इतिभगवदुक्तिप्राप्य—

"इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम्" ...

"ईक्षितान्तःपुरस्त्रीणां सव्रीडस्मितवीक्षितैः ।
कृच्छ्राद्धिधुच्छो निरगाज्जातहासो हरन्मनः" ॥ इति

"रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा" इत्यादिशुकोक्तिप्राप्यश्च पारिजाताद्याहरणप्राप्यश्च तासां प्रेममयैर्विभ्रमैः साक्षाद्भावस्यैवेति ज्ञेयम् ॥ ५ ॥

तासां तद्विषयकप्रेम्णः परिचर्यात्मकानुभावानाह—प्रत्युद्गमेति । अर्हणं पुष्पाञ्जलिरत्नाञ्जलिनिक्षेपादि ॥ ६ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तासामिति । दशदश पुत्राः यासां तासां मध्ये वा अष्टौ महिष्यः प्रागुक्ताः ॥ ७-१३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदीयां पदवीं ब्रह्मादयोपि न विदुस्तं रमापतिमित्यन्ताः पूर्वोक्ताःस्त्रियोपि पतिमवाप्य अविरतं सन्ततं यथा तथा एधितया वर्द्धितया मुदा अनुरागेणातिप्रेम्णा हासोऽवलोकश्च नवो नित्यनूतनः सङ्गमोऽसङ्गसङ्गश्च लालसः औत्सुक्यं च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः ॥ ५ ॥

किञ्च प्रद्युम्नादिभिर्विभोः व्यापकस्य श्रीकृष्णस्य दास्यं नित्यं विदधुः तत्र वरैः श्रेष्ठैः पुष्पादिभिरर्हणं पूजनम् उपहार्य्याणि तत्तत्काले जातानि वस्तूनि ॥ ६ ॥

दशदश पुत्राः यासां तास्तथा तासां मध्ये अष्टौ महिष्यो याः रुक्मिण्याद्याः पुरोदिताः तत्पुत्रान् ते तुभ्यं गृणामि कथयामि ॥ ७—१२ ॥

---

भाषा टीका ।

ब्रह्मादिक भी जिसकी प्राप्ति के मार्ग को नहिं जानते एतादृश रमाकान्त श्रीकृष्ण पति को प्राप्त होकर वे सोरह हजार स्त्री लोग निरन्तर बढे हुए मोद के साथ, प्रेम सहित हासयुत कटाक्ष और नूतन समागम के विषय में उत्कण्ठा से श्रीकृष्ण को सेवा करती भी भई परन्तु उन के मन को क्षोभ करने के में अति निपुण नहीं भई रहीं ॥ ५ ॥

यद्यपि श्रीकृष्ण भार्य्याओं मे एक२ भार्य्या की सौ२ दासी रहा तथापि भगवान् की परिचर्य्या कों वे स्वयं आपहि करतीं रहीं जैसे कि आवते भये पति को देख कर आगे से आगे लेने को चलना आसन देना अर्घ्य आदि देना पादप्रक्षालन करना ताम्बूल देना चरण सेवा करके परिश्रम दूर करना पङ्खा से पवन करना चन्दन आदि सुगन्ध समर्पण करना पुष्प समर्पण करना पलङ्ग बिछाना स्नान कराना भोजनादि योग्य वस्तु समर्पण करना इत्यादि अनेक प्रकार से परिचर्य्या स्वयं हि करती भई ॥ ६ ॥

दस२ पुत्र वारी जो श्रीकृष्ण की भार्या पहिले कह गई हैं उन के मध्य मे श्रीरुक्मिणी आदि जो ( ८ ) अष्ट पटरानी रहीं उन के प्रद्युम्न आदि पुत्रों को आप से हम यह कहते हैं ॥ ७ ॥

चारुदेष्ण १ सुदेष्ण २ और बलवान् चारुदेह सुचारु ४ चारुगुप्त ५ तथा एकभई चारु ६ ॥ ८ ॥

श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ।
साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥ ११ ॥
विजयश्चित्रकेतुश्च वसुमान् द्रविडः क्रतुः ।
जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसम्मताः ॥ १२ ॥
(१)वीरश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान् वृषः ।
आमः शङ्कुर्वसुःश्रीमान् कुन्तिर्नाग्नजितेः सुताः ॥ १३ ॥
श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ।
शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमकोऽवरः ॥ १४ ॥
(२)प्रघोषो गात्रवान् सिंहो बलः प्रबल ऊर्ध्वगः ।
माद्र्याः पुत्रा महाशक्तिः सह ओजो ऽपराजितः ॥ १५ ॥
वृको हर्षोऽनिलो गृध्रो वर्द्धनो ऽन्नाद एव च ।
महांशः पवनो वह्निर्मित्रविन्दात्मजाः क्षुधिः ॥ १६ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

श्रीमानिति वसोः कुन्तेर्वा विशेषणम् ॥ १३ ॥

भद्रो नाम एकलः एकः सोमकोऽवरः कनीयान् एते कालिन्द्याः सुता इति ॥ १४ ॥

माद्र्याः लक्ष्मणायाः ॥ १५ ॥

क्षुधिश्च दशमः एते मित्रविन्दात्मजाः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चार्वितिति युग्मकम् । वीर्य्यवानिति सर्वेषां विशेषणम् अतस्तत्समुच्चयार्थं प्रायः सर्वत्रैव चशब्दः तथेति च परश्चारुगुप्तस्यानुज इत्यर्थः । एवमग्रजानुजक्रमेण सर्वे ज्ञातव्या इति भावः । दशम इत्येकादशाभावं द्रढयति एवं सर्वमग्रेपि ज्ञेयं हरेरिति सर्वमनोहरस्य तस्य पुत्रा अपि तादृशाः "यथाबीजं तथाङ्कुरम्" इति न्यायेनेतिभावः । अनेनैवाभिप्रायेण सर्वत्र चारुशब्दः अत एव पितुर्नावमा न्यूना न भवन्ति पूर्वोक्तस्याप्यस्य पुनरुक्तिस्तद्दार्ढ्यार्थम् अतोग्रेपि सर्वत्रेदमनुसर्त्तव्यम् ॥ ९ ॥

भानुरिति सार्द्धकम् । अष्टम इति पर इतिवत् भानुशब्दश्चारुशब्दवत् ज्येष्ठाया जाम्बवत्याः प्राक् सत्यभामायाः पुत्राणामुक्तिः प्रेमाधिक्येन तस्याः श्रैष्ठ्यात् एवमग्रेपि ज्ञेयम् ॥ १० ॥

साम्ब इतिच सार्द्धकम् । द्राविणो द्रविडश्चेति पाठद्वयं हि एव पित्रा सम्मताः न्यायादनपेतत्वेन निश्चिताः एवं साम्बपुराणादौ साम्बवृजिनस्य नारदकल्पितत्वेनैव प्रसिद्धत्वात् तत्र श्रीभगवतोपि लोकशिक्षाभिप्रायेणैव तदिच्छत्वात् यथा मुसलशापादावपीति भावः ॥ ११-१२ ॥

श्रीमानिति सर्वेषामेव वा विशेषणम् ॥ १३ ॥

भ्रातृणामपि मध्ये द्वयोर्वृष इत्येकनामत्वं केनचिदपरिहार्य्येण कारणेन भवेत् व्यवहारस्तु माद्रादिनामविशेषणेन सिद्ध्यतीति ज्ञेयम् एवमग्रे वीरोपि तद्वत्कुरबलावपि ॥ १४ ॥

सह ओजसी सकारान्ते मूर्त्ते सह एवायमित्याद्यभिप्रायेण पुत्राः सुताः इति पाठद्वयम् ॥ १५ ॥

महांश इत्यत्र महासिः क्वचित् वृक इत्यत्र वर्द्धनः क्वचित् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सत्यभामासुतानाह—भानुरिति । भान्वादयो दश सत्यभामायाः सुता इत्यन्वयः । जाम्बवतीसुतानाह—साम्ब इति । एते साम्बादयः पितृतुल्याः जाम्बवत्याः सुताः ॥ १०-१२ ॥

नाग्नजितीसुतानाह—भानुरिति । श्रीमानिति वसोर्कुन्तेर्वा विशेषणम् ॥ १३ ॥

कालिन्द्याः सुतानाह-श्रुतिरिति । भद्रस्यैवैकल इति नामान्तरं सोमकोऽवरस्तेषां सर्वेषां कनीयान् एते दश कालिन्द्याः सुता इति शेषः ॥ १४ ॥

अथ लक्ष्मणायाः सुतानाह-प्रजघ इति । माद्र्याः लक्ष्मणायाः सुताः प्रजघादय इत्यन्वयः ॥ १५ ॥

मित्रविन्दायाः सुतानाह-वृक इति । क्षुधिर्दशमः एते मित्रविन्दात्मजाः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चन्द्रस्य स्वर्भानुः राहुरिव अपरः लोकस्य भानुः सूर्य इव सः स्वर्णपुरे स्थितः ॥ १०—१२ ॥

नाग्नजितेः नाग्नजित्पुत्र्याः नीलायाः ॥ १३ ॥

(१) भानुश्चन्द्र इति (२) प्रजघ इति च । वीर० पाठः ।

सङ्ग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ।
जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥ १७ ॥
दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः ।
प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः ॥ १८ ॥
पुत्र्यान्तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ।
एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप ।
मातरः कृष्णजातानां सहस्राणि च षोडश ॥ १९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृषविशेषणं वीर इति अपरः सोमतोपि कालिन्द्याः सुतः ॥ १४ ॥

माद्र्या लक्ष्मणायाः ॥ १५—१७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

साम्बाद्याः पितृसम्मताः ॥ ११—४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हरेः सकाशात् प्रद्युम्न एव प्रमुखो येषां रुक्मिण्या जाताः करणमात्रं रुक्मिणी नत्वते मातृपुत्रा इति तत्र हेतुः यतः पितुरनवमाः अवमो न्यूनभावः ॥ ९ ॥

भानुप्रभृतयो दश सत्यभामायाः तथेति यस्य कर्माणि न प्रसिद्धानि सोपि प्रसिद्धवदेव ज्ञातव्य इति तथेत्युच्यते कश्चित् अष्टम इति तस्य स्वतन्त्रता महत्त्वञ्च सङ्ख्यायां पृथगुपदेशात् ॥ १० ॥

सत्यभामात्मजा इति परिज्ञानार्थमेव मातृनिरूपणं सर्वेषां पुत्राणां सर्वेषु मातृव्यवहारस्तुल्य इति साम्बादयो दश जाम्बवत्याः सुताः एते इति तेषां देवतात्वात् निरूपणसमये उपस्थितिमाह—पुनः साम्बाद्या इति वचनं दशानां द्विस्वभावत्वं द्योतयति ततो भगवता ऽसम्मतिमाशङ्क्य पितृसम्मतिमाह—पितृसम्मता इति ॥ ११-१२ ॥

श्रीमानिति विशेषणं नाग्नजितेः ॥ १३ ॥

सत्यायाः पुत्राः श्रुतादयो दश कालिन्द्याः एकल इति विशेषणम् एक एव सन् सर्वान् शत्रून् लातीति सोमकस्त्ववरो दशमः सङ्ख्यापूरणार्थं पश्चादुत्पन्नः ॥ १४—१५ ॥

सुघोषादयः माद्र्याः लक्ष्मणायाः पुत्राः ऊर्द्ध्वग इति नाम महाशक्तिरेकः सहोभिन्न ओजश्च अपराजित इतिनाम वृकादयो दश मित्रविन्दायाः महांश इति नाम क्षुधिर्दशमः सङ्ख्यापूरकः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भद्रोनाम एकलः एकः सोमको ऽवरः कनिष्ठः ॥ १४ ॥

माद्र्याः लक्ष्मणायाः ॥ १५—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीमानिति कुन्तेर्विशेषणम् ॥ १३ ॥

एकलः एकः शान्तिगुणयुक्तत्वान्मुख्यः इति शान्तेर्विशेषणम् ॥ १४ ॥

माद्र्याः लक्ष्मणायाः ॥ १५—१६ ॥

भाषा टीका ।

चारुचन्द्र, और विचारु ८ तथा चारु ९ और दशमा प्रद्युम्न १० इस प्रकार प्रद्युम्न आदि दशपुत्र, श्रीहरि से रुक्मिणीजी में उत्पन्न भये और येदशोपुत्र, श्रीकृष्ण के समान रहे ॥ ८ ॥

भानु १ सुभान २ स्वर्भानु ३ प्रभानु ४ तथा भानुमान् ५ चन्द्रभानु ६ बृहद्भानु ७ तथा अठवां अति भानु ॥ १० ॥

श्रीभानु ९ और प्रतिभानु १० इस दश पुत्र सत्यभामा में भये साम्ब १ सुमित्र २ पुरुजित् ३ शताजित् ४ और सहस्रजित ५ ॥ ११ ॥

विजय ६ और चित्रकेतु, वसुमान् ८ द्रविड ९ क्रतु १० इस प्रकार साम्ब से आदि दश पुत्र जम्बवती के रहे और ये सब पिता श्रीकृष्ण के प्रिय रहे ॥ १२ ॥

वीर १ चन्द्र २ अश्वसेन ३ चित्रगु ४ वेगवान् ५ वृष ६ आम ७ शङ्कु ८ वसु ९ और श्रीमान् कुन्ति १० ये दश, नाग्नजिती के पुत्र रहे ॥ १३ ॥

श्रुत १ कवि २ वृष ३ वीर ४ सुबाहु ५ भद्र ६ शान्ति, दर्श ८ पूर्णमास ९ तथा सब से छोटा सोमक १० ये दश पुत्र कालिन्दी के रहे ॥ १४ ॥

प्रघोष १ गात्रवान् २ सिंह ३ बल ४ प्रबल ५ ऊर्द्ध्वग ६ महाशक्ति ७ सह ८ ओज ९ अपराजित १० ये दस पुत्र लक्ष्मणा के हुये ॥ १५ ॥

वृक १ उदर्क २ अनिल ३ गृध्र ४ वर्धन ५ अन्नाद ६ महांश ७ पवन ८ वह्नि ९ क्षुधि १० येदश पुत्र मित्र विन्दा के रहे हैं ॥ १६ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

सङ्ग्रामजित्प्रमुखाः सत्यकान्ता भद्रायाः सुताः शैब्यानामापि सैव ॥ १७ ॥

राजोवाच ।

कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि ।
कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ।
एतदाख्याहि मे विद्वन् द्विषोर्वैवाहिकं मिथः ॥ २० ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

रोहिण्याः सुतानामुक्तिरन्यासामुपलक्षणार्थम् ॥ १८ ॥

एतेषामिति अन्येषामपि श्रीकृष्णपुत्राणां शतसङ्ख्यस्त्रीषु पुत्राः, पौत्राश्च कोटिशो बभूवुः, तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति-मातरः कृष्णजातानामिति । चशब्देनाधिका-श्चेत्युक्तम् ॥ १९ ॥

यः कृष्णं हन्तुं रन्ध्रं प्रतीक्षते स कथं प्रादादिति वैवाहिकं विवाहनिमित्तम् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सङ्ग्रामेति शैब्यानामपि सैवेति टीका व्याख्यायास्तु मित्रविन्दात्मजा इत्यस्यानन्तरं योग्यायाः अपि लेखकभ्रमेणैव भद्रायाः सुता इत्यस्यानन्तरं लेखः श्रीविष्णुपुराणे ह्येतत्प्रसङ्गे "शैब्यायां मित्रविन्दायाम्" इति तथाग्रेऽग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने शैब्येति मित्रविन्दे इति च टीकैव ॥ १७ ॥

दीप्तीत्यर्द्धकम् । रोहिणी शताधिकषोडशसहस्रमहिषीणां मुख्या तस्याः ॥ १८ ॥

आश्चर्य्यादाह-हे राजन्निति ! एतेषां श्रीप्रद्युम्नादीनाम् ॥ १९ ॥

कथमिति सार्द्धकम् ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भद्रायास्सुतानाह—सङ्ग्रामजिदिति । भद्राया इत्यस्य सुता इति शेषः । एवमन्यासामपि षोडशसहस्रपत्नीनां दशदश पुत्राः तथैव रोहिण्याः सुतानामुक्तिरन्यासामपि सुतप्रदर्शनार्थं दीप्तिमानिति । हरेराश्रितार्त्तिहरस्य बलभद्रस्य रोहिण्याश्च जाताः इत्यर्थः । अथ विवक्षिष्यमाणकथाविषयकपिशुङ्क्षिद्वया-मुत्पादयन् भगवतः पौत्रादीनाह-प्रद्युम्नादिति द्वाभ्याम् । हे राजन् नाम्ना भोजकटमिति प्रसिद्धे पुरे वसत इति शेषः । तस्य रुक्मिणः पुत्र्यां रुक्मवत्याख्यायां भार्य्यायां प्रद्युम्नादनिरुद्धो बभूव, तेषाञ्चेति । तेषां प्रद्युम्नव्यतिरिक्तानां कृष्णपुत्राणामपि पुत्राः पौत्राश्च कोटिशो बभूवुः तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति — मातर इति । कृष्णजातानां मातरः षोडशसहस्राणि चशब्दात्ततोऽप्याधिक्यं सूच्यते ॥ १७–१९ ॥

रुक्मिण पुत्र्यामित्युक्ते तत्र पृच्छति राजा-कथमिति । अरेः कृष्णस्य पुत्राय प्रद्युम्नाय कथं दुहितरं ददौ किञ्च स हि रुक्मी युधे कृष्णेन परिभूतोऽवमानितस्तं कृष्णं हन्तुं रन्ध्रमन्तरं प्रतीक्षते स कथं प्रादादिति भावः । एतदिति । हे विद्वन् द्विषोः कृष्णरुक्मिणोर्मिथो यद्वैवाहिकं विवाहनिमित्तमेतन्मह्यमाख्याहि ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रोहिण्याः भद्रायाः ॥ १८ ॥

भोजकटे पुरे स्थितस्य रुक्मिणः पुत्र्याम् एतेषां मातरः कृष्णभार्याणां षोडशसहस्राणि ॥ १९ ॥

अरेः कृष्णस्य पुत्राय प्रद्युम्नाय तं कृष्णं रन्ध्रमवसरं द्विषोः शत्रुभूतयोः वैवाहिकीं विवाहसम्बन्धिनीम् ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सङ्ग्रामजिदादयो दश भद्रायाः सत्यको दशमः रोहिणी षोडशसहस्राणां शताधिकानां मुख्या कश्चिदेवैषाऽष्टमहिषीमध्य इति भद्राया स्थानं मन्त्रशास्त्रे प्रसिद्धा तस्या दीप्तिमान् पुत्रः अष्टमहिषीपुत्रतुल्यः . तेनैकाशीतिपुत्राः एकाशीतिभक्तिप्रकारा इव भगवता प्रकटीकृता इति द्योतिता ताम्रतप्ताद्या रोहिण्यास्तनयाः साधारणाः अस्या दशपुत्रागणनमन्यासां दशपुत्रत्वव्यापकं पौत्रान् निरूपयन् ॥ एवं निरूप्य तत्सदृशा अन्या इति अतिदिशति— प्रद्युम्नाच्चानिरुद्धोऽभूदिति रुक्मवती रुक्मिणः पुत्री मातुलकन्या प्रद्युम्नस्तत्रैव कियत् कालं स्थितः तत्रैव विवाहं कृत्वा पुत्रमुत्पादितवान् शत्रुगृहे कथमेकाकी स्थित इति शङ्कां वारयति—महाबल इति । चस्त्वर्थे भगवद्वाविद्वात् प्रद्युम्नादनिरुद्धो जात इति ज्ञापयितुं चकारः अन्यथा कामाज्जातोऽप्रयोजकः स्यात् मायावत्यामुत्पादनं वारयति पुत्र्यान्तु रुक्मिण इति मायावत्याः नामान्तरमावेशो वा स्यादिति तुशब्दः असम्भावनायां व्यावर्त्तयति--राजन्निति सम्बोधनं प्रद्युम्नस्य द्वारकाप्रेषणाभावं द्योतयति सोपि राजा जामातरं दुहितरं च स्थापितवानिति पुरे स्वनगरे नाम्ना भोजकटे एकं पौत्रमुक्त्वा अन्यानतिदिशति एतेषां पुत्रपौत्राश्च पुत्राः पौत्राश्च कोटिशो जाताः न तेषु दशसङ्ख्यानियमः सर्वेषाम् एकमत्यार्थमाह—मातरः कृष्णजातानामिति । सर्वेषामेव भगवत्पुत्राणां सर्वा एव भगवत्स्त्रियो मातरः यथा जननी तथैव सर्वा इति सापत्न्याभावो निरूपितः चकारादष्टोत्तरशतम् ॥ १७–१९ ॥

रुक्मिकन्याविवाहः असम्बद्ध इति तत्र हेतुं पृच्छति, कथमिति- विवाहः कोहकृतः पुत्रः पितुररिति अर्थपेक्षया अरिपुत्रो द्वेष्यो भवति दुहिताचात्यन्तं प्रिया द्वेषकारणमाह—युधि कृष्णेन परिभूत इति विस्मृतो द्वेष इति चेत्तत्राह—हन्तुं

अनागतमतीतञ्च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः ॥ २१ ॥
श्रीशुक उवाच ।
वृतः स्वयम्वरे साक्षादनङ्गोऽङ्गयुतस्तया ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥ २२ ॥
यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥ २३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

रन्ध्रं प्रतीक्षत इति अद्यापि द्वेषव्यापाराम निवृत्तः रन्ध्रमिति साक्षाद्विरोधे असामर्थ्यं सूचितं प्रसिद्धसम्बन्धहेतोरभावात् हेत्वन्तरं पृच्छति—एतदाख्याहीति । विद्वन्निति कथने ज्ञानं हेतुभूतं निर्दिशति द्विषोः परस्परं द्वेषविषययोः मिथो वैवाहिकं विवाहसम्बन्धिव्यवहरणं कारणं वा नन्वेतत्पूर्वं न भुतं समाध्यभावादधुना न चिन्त्यत इति तज्ज्ञानं कथमिति चेत्तत्राह—अनागतमतीतञ्चेति । योगिनां देशकालव्यवधायकानि ज्ञानेन प्रतिबन्धकानि यथा चक्षुः सन्निकर्षप्रत्यासत्तिः प्रत्यक्षे तथा सर्वत्र योगिनां योगजधर्मप्रत्यासत्तिः । कालो हि वस्तूनि नयति यथा नदीजलं यद्यपि जलमभिज्ञानद्रव्यसहितं कचि (दं)द्देशे स्थितं तस्मिन् समये तद्देशस्थितः पश्यति तथापि प्रदेशान्तरगतं न पश्यति तद्देशस्थितः सहगतो वा तदपि पश्यति यथा वा मनुष्यैः द्रष्टुमयोग्यमपि देवाः पश्यन्ति यथा सर्वैराच्छन्नं कालज्ञाः पश्यन्ति एवं सर्वसामर्थ्ययुक्तो योग एव सर्वसमर्थः वर्त्तमानस्य विशेषणमतीन्द्रियमिति अतीतं यत्रानुभूतम् अनागतं यत् ज्ञापकरहितं चकारात् धर्मान्तरमापन्नं विप्रकृष्टं देशव्यवहितं निकटस्थमपि व्यवहितं भित्त्यादिना सर्वमेव योगिनः सम्यक् पश्यन्ति ध्यानेन ज्ञानं ज्ञानितां योगिनान्तु भगवत इव योगजधर्मे प्रकटे सर्वज्ञत्वमिति ॥ २०—२१ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टानां सर्वमुख्यानां पुत्रानुक्त्वा षोडशसहस्रमुख्याया रोहिण्या आह—दीप्तिमानिति ॥ १८ ॥

मातर इति कृष्णजातानां मातर एव सङ्ख्यातुं शक्यते नतु पुत्रपौत्रादयः ताश्च षोडशसहस्राणि अष्टोत्तरशतानि च ॥ १९ ॥

वैवाहिकं विवाहस्य कारणम् ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत्यकान्ताः भद्रायाः सुताः शैब्यानामपि सैव ॥ १७ ॥

एवं दशदशपुत्राः अन्यासामपि ज्ञेया इति सूचयितुमाह—दीप्तिमानिति ॥ १८ ॥

एतेषां प्रद्युम्नादीनां यतः कृष्णजातानां तेषां मातरोपि षोडशसहस्राणि चकारादष्टोत्तरशताधिकानीति बोध्यम् ॥ १९ ॥

वैवाहिकं विवाहनिमित्तम् ॥ २० ॥

———

भाषा टीका ।

संग्रामजित् १ बृहत्सेन २ शर ३ प्रहरण ४ अरिजित् ५ जय ६ सुभद्र ७ वाम ८ आयु ९ सत्यक १० ये दशपुत्र भद्रा के रहे ॥ १७ ॥

दीप्तिमान १ ताम्र २ तप्त ३ लेआदि लेके श्रीकृष्णसे दशपुत्र रोहिणीमेंभए यह रोहिणी सोलह हजार भार्य्याओंके मध्यमें प्रथम है हेराजन् भोजकटनामा पुर में रुक्मणी जी की पुत्री रुक्मवती मे प्रद्युम्न महा बलवान् अनिरुद्ध भया ॥ १८ ॥

हे राजन् प्रद्युम्न को छोड कर श्रीकृष्ण के इन पुत्रों के कोटिन पुत्र भये रहे और सोरह हजार एक से कोठि, इन की माता रहीं ॥ १९ ॥

राजा परिक्षत् बोले, कि—श्रीकृष्ण के साथ तो रुक्मी का वैर रहा फिर रुक्मिणी ने उन के पुत्र प्रद्युम्न के अर्थ अपनी पुत्री, क्यों दई क्यों कि रुक्मिणी के विवाह मे श्रीकृष्णजी ने युद्ध मे रुक्मिणी का वडा तिरस्कार किया रहा इसी लिये श्रीकृष्ण के मारने के वास्ते छिद्र को दुष्ट देखता रहा ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

रुक्मिणोऽभिप्रायं कथं जानीम इति चेदत आह—अनागतमिति । अतीन्द्रियमस्मदादीन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितं कुड्याद्यन्तरितम् ॥ २१ ॥

तथोत्तरम; स्वयम्बरे रुक्मवत्या वृतस्सन् राज्ञो निर्जित्य जहारेति ॥ २२ ॥

विजय० पाठः। ( तदेवानुस्मरन् वैरं रुक्मी कृष्णावमानितः।
तोषयामास तपसा श्रीशैलनिलयं हरम्॥ क॥
तपसाऽऽराधितो रुद्रो रुक्मिणा नरदर्शनः।
वरेण छन्दयामास स च वव्रे दृढं धनुः॥ ख॥
अजेयं शत्रुसङ्घानामच्छेद्यं त्रिदशैरपि।
तथेति कार्मुकं दत्त्वा वाक्यं चोवाच शङ्करः॥ ग॥
यदा विरुध्यसे विष्णौ तदेतत्कार्मुकं नृप!।
हित्वा तदा त्वा मामेव प्रतिपत्स्यति नान्यथा॥ घ॥
इत्युक्त्वा कार्मुकं दत्त्वा शङ्करो न व्यदृश्यत।
सोऽपि लब्धवरो राजा प्राप्य भोजकटं पुरम्॥ ङ॥
तेन चापेन सकलान्नृपान् प्रख्यातपौरुषान्।
वशे चकार सङ्ग्रामे रुक्मी कृष्णमृते नृप!॥ च॥
विरोद्धुं वासुदेवेन रुक्मी नैवाकरोन्मनः।
धनुर्लोभान्महाराज! न मैत्रीमप्यकल्मषाम्॥ छ॥
यद्यप्यनुस्मरन् वैरं गिरिशस्य स्मरन् वचः।
वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया॥ ज॥

### श्रीधरस्वामीकृतभावार्थदीपिका।

यद्यपि श्रीकृष्णावमानितस्तथापि वैरमनुस्मरन्नपि व्यतरत् प्रादात् अन्वमोदतेत्यर्थः॥ २३॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु, दुर्घटघटनाकारिणीयं भगवदिच्छा भगवल्लीलाशक्तिरेव वा सामान्यतो ज्ञायतां तद्विशेषपर्यालोचनन्त्वशक्यमित्याशङ्क्याह—अनागतमिति। योगिनस्तावदन्यदनागतादिकं जानन्ति भगवद्भक्तिविशेषत्वेन परमतद्विशेषाः भवन्तस्तु भगवत्सम्बन्ध्यपि तत्तद्विशेषं जानन्तीति भावः॥ २१॥

तत्र तमेवेयं वरीतेति निश्चित्य तदसहिष्णुनिजवर्गवञ्चनार्थं स्वयम्वरश्च कृत इत्याह—वृत इति। वरणे हेतुः, अन्यत्र य आवेशभावेनानङ्गः स पुनरत्र साक्षात्पूर्णरूपः अङ्गयुतश्चेत्यर्थः; समेतान् स्वयम्वरे तया वृतेनापि तेन सह मत्सरेण योद्धुं मिलितान् युधि निर्जित्येत्यादिना महापराक्रमः उक्तः एवं विवाहानन्तरं मातुलस्य प्रीत्या तस्य पुरे चिरनिवासेन किम्वा द्वारकां गतस्य तस्य पुनः प्रत्यानयनात् तत्रानिरुद्धस्य जन्मेत्युक्तम्॥ २२॥

यद्यपीति द्वयं तैर्व्याख्यातं तत्र व्यतिक्रमेण व्याख्यानं सिद्धान्ते स्वयम्वरणस्य मुख्यता स्वसुःप्रियचिकीर्षायास्तु तदनुमोदनमात्रत्वेन गौणतेति ज्ञापनार्थं यद्वा वैरम् अनुस्मरन् सदा चिन्तयन्नपि स्वसुः श्रीरुक्मिणीनाम्न्याः श्रीभगवन्महाशक्तेस्तत्स्वसृभूतायाः स्नेहप्राबल्येनैव ददावित्यर्थः। अग्रेऽपि स्वसुः प्रियचिकीर्षयेत्येव वक्ष्यते॥ २३॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

न जानामीति मावोच इत्याह— अनागतमिति। अतीन्द्रियमस्मदिन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितमीषदन्तरितं चेत्येतत्सर्वं योगिनो भवन्तं सम्यग्यथावत् पश्यन्ति साक्षात्कुर्वन्ति अतो जानास्येवेति भावः॥ २१॥

एतदेव स्पष्टयितुं तावत्स्वयम्वरे तद्दुहिता प्रद्युम्नेन हृतेत्याह— वृत इति। एक एव रथो यस्य सः असहायः प्रद्युम्नः स्वयम्वरे तया रुक्मवत्या वृतः स्वयञ्च तस्यामनुरागयुक्तः समेतान् युयुत्सया प्राप्तान् राज्ञो नृपान् युद्धे निर्जित्य तां जहार॥ २२॥

इत्थमापृष्टः प्राह मुनिः— यद्यपीति। यद्यपि रुक्मी कृष्णेनावमानितस्तथापि वैरमनुस्मरन्नपि स्वसुः रुक्मिण्याः प्रियं कुर्वन् "लक्षणहेत्वोः" इति शत्रादेशः कर्तुमित्यर्थः। व्यतरद्ददौ अन्वमोदतेति भावः। न स्वाहूय कन्यां ददौ अपितु स्वयम्वरे प्रद्युम्नेन हृतामन्वमोदतेत्युक्तमभिप्रेतम्॥ २३॥

राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ।
अनिरुद्धो रुक्मवत्यां तस्यां जज्ञे महारथः ॥ झ ॥
जहार यं चित्रलेखा बाणपुत्र्या प्रचोदिता ।
सहस्रबाहुर्बाणश्च यत्कृते द्विभुजोऽभवत् ॥ ञ ॥)

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतीतकथा नेदानीं वक्तुं शक्येति नेत्याह—अनागतमिति । विप्रकृष्टं दूरस्थं व्यवहितम्मूर्त्तद्रव्यान्तरितम् ॥ २१—२२ ॥

अर्धाङ्गीकारेण परिहरति—यद्यपीति । व्यतरद्दत्तवान् भागिनेयाय सहोदर्याः पुत्रायेति सूचितं प्रियम् इदं स्पष्टं तदेव आचष्टे—कुर्वन्निति । इदं दाने कारणम् ॥ २३ ॥

ननु, ततःपरं वैरं मुक्तवान् किम् ? न ततोधिकमभूत् कथमत्राह—तदेवेति । श्रीशैलनिलयं श्रीपर्वतवासिनं मल्लिकार्जुननामानमित्यर्थः ॥ क ॥

छन्दयामास अभीष्टं दत्तवान् "वशाभिप्राययोश्छन्दः" इति ॥ ख ॥

शत्रुसङ्घानां मनसेतिशेषः । अजेयाच्छेद्यत्वे तथास्तामित्युक्त्वा तस्य कृष्णभक्तिं दर्शयितुं वक्ति-वाक्यश्चेति ॥ ग—घ ॥

तर्हि बन्धुमैत्रीं निर्दुष्टात्माऽकार्षीत् किम् ? नेत्याह—मैत्रीमिति । अपितु बन्धुकृत्याकरणेन कल्मषमकरोत् ॥ छ ॥

मैत्र्यकरणे विरोधाकारणे च निमित्तमाह—यदीति । अनङ्गश्चेत् किमवलोक्य वृत इत्यत उक्तमङ्गयुत इति ॥ज—झ॥

यम् अनिरुद्धम् ॥ ञ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वितीयमाह वृतः स्वयम्वरे साक्षादिति । यद्वशादन्येपि म्रियन्ते स एवं साक्षात् पूर्वमनङ्गः अतः कयाप्यवृतः इदानीमङ्गयुतो जात' इति तयाऽभिज्ञाय वृतः स्वयम्वरे वृतो न प्रत्याख्यायते इति सहाभिमानी कन्यायाः स्वयम्वरं कृतवान् पश्चाद्विधानपूर्वकमपि सन्तोषेण दत्तवानिति व्यतरादित्युक्तं तस्य रूपमेव महत् न पौरुषं भविष्यत्याशङ्कयाह—राज्ञः समेतान् निर्जित्य जहारेति युधि सावधानान् तत्रापि मिलितान् सर्वान् नितरां जित्वा एकरथ इत्यसहायः हृत्वा मातुलगृहमेव गत इति पूर्वश्लोकानुरोधादवसीयते एकरथत्वादिधर्मैः प्रतीत्या पितुरधिकत्वमुक्तम् ॥ २२ ॥

तत्र प्रद्युम्नविवाहे हेतुद्वयमाह—यद्यप्यनुस्मरन्नितिद्वाभ्याम् । स्वसुः प्रियं कुर्वन्नित्येकं स्वयम्वरे कन्ययैव वृत इत्यपरं तत्र प्रथममुपपादयति कृष्णावमानितः वैरमनुस्मरन् यद्यपि वर्त्तते तथापि स्वसुः प्रियं कुर्वन् भागिनेयाय भगिनीपुत्राय मातृपक्षपातिने सुतामदात् अनुरोध्या स्वसा सा पूर्वमपकृता तदभिप्रायमज्ञात्वा पश्चात् ज्ञात्वा कथं प्रसन्ना भवतीति विचार्य प्राणाश्च तया रक्षिता इति स्वकन्यां तत्पुत्राय प्रायच्छत् प्रियं प्रियाय चेद्दीयते तदा प्रसन्नः सर्वोपि । भवतीति ॥ २३ ॥



श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनागतमिति । तेनाहमप्येतत्र जानामीति न वक्तव्यमितिभावः ॥ २१ ॥

किन्तु वैरिपुत्राय कन्यां दित्सतीत्यप्रतिष्ठाभयाद्रुक्मिणा स्वपुत्र्याः स्वयम्वरणसभा कारितेत्याह वृत- इति ॥ २२ ॥

तत्रोत्तरं स्वप्राणरक्षिकायाः स्वसुः प्रियं कुर्वन् कर्त्तुम्॥२३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनागतं भविष्यम् अतीतं भूतम् वर्तमान् विप्रकृष्टं दूरस्थं ब्रह्माण्डान्तर्वर्तिव्यवहितं मुष्ट्यान्तरितबीजस्थं पत्रपलाशादिकम् ॥ २१ ॥

विद्विषोरपि कृष्णरुक्मिणोः अपत्यविवाहे निमित्तं रुक्मिणः स्नेह इत्युत्तरमाह—वृत इति द्वाभ्याम् ॥ २२-२३ ॥

भाषा टीका ।

हे सर्वज्ञ ! द्वेष युक्त श्रीकृष्ण और रुक्मी के पुत्र पुत्री का परस्पर में जो विवाह का निमित्त है उस को आप कहिये क्यों कि आप के सदृश सर्वज्ञ योगी जन, भूत भविष्य वर्त्तमान और हमारे इन्द्रियों के गोचर नहि, तथा दूर रहने वारे और जिस के मध्य मे कुछ व्यवधान हुआ हो ऐसे सब वस्तुओं को बहुत कुछ साक्षात् देखलेते है ॥ २१ ॥

श्रीशुकदेवजी बोले—कि, रुक्मवती ने अपने स्वयम्वर में मूर्त्तिमान् साक्षात्कामदेव के अवतार प्रद्युम्न को वरा क्योंकि वह प्रद्युम्न, एक रथ मात्र की सहायता वारा होकर, उस स्वयं वर मे आये हुए राजनको जीत के रुक्मवती कन्या को हरता भया ॥ २२ ॥

यद्यपि श्रीकृष्ण से तिरस्कृत हुआ रुक्मी वैर का स्मरण भी करता रहा, तथापि रुक्मिणी की प्रसन्नता के वास्ते अपने भानजे प्रद्युम्न के अर्थ अपनी पुत्री को देदेता भया ॥ २३ ॥

रुक्मिण्यास्तनयां राजन्! कृतवर्मसुतो बली ।
उपयेमे विशालाक्षीं कन्यां चारुमतीं किल ॥ २४ ॥
दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ।
रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥
जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः ॥ २५ ॥
तस्मिन्नभ्युदये राजन्! रुक्मिणी रामकेशवौ ।
पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः ॥ २६ ॥
तस्मिन् निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः ।
दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥ २७ ॥
अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत् ।
इत्युक्तो बलमाहूय तेनाक्षैरुक्म्यदीव्यत ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वासामपि एकैका कन्या तत्सर्वविवाहोपलक्षणार्थं ज्येष्ठकन्याविवाहमाह—रुक्मिण्या इति ॥ २४ ॥

यौनं विवाहः तद्यौनमधर्मं जानन्नपि "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इति लोकविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" इति निषेधाच्चेत्यर्थः ॥ २५ ॥ २६ ॥

लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्निति ॥ २७ ॥

अदीव्यत् क्रीडितवान् ॥ २८ २९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नूनं बलीतिसंज्ञा सा च सर्वेषां गुणानामुपलक्षणम् अत एव तस्मै सा दत्तेति भावः । विशालाक्षीमिति "धन्या पितृमुखी कन्या" इति न्यायात् ॥ २४ ॥

दौहित्रायेति सार्द्धकम् । हरेः हरौ बद्धवैरोपि अधर्मं क्वचित् मातुलकन्यापरिणयशास्त्रे आचारे सत्यपि शत्रुसम्बन्धस्य तत्रत्यलोकानामपि व्यवहारविरुद्धत्वेनान्याय्यत्वं जानन्नप्यददात् यतः स्नेहपाशेनानु निरन्तरं बध्यत इति तथा सः ॥ २५ ॥

एवमपि श्रीभगवति कौटिल्यस्य फलमाह—तस्मिन्निति । अभ्युदये महोत्सवे रुक्मिण्या आद्यायुक्तेः भ्रातृगृहाय तस्या एव प्रयोजकत्वात् श्रीरामस्य साम्बस्य चाद्यायुक्तिः स्वसम्बन्धिगृहे श्रीकृष्णेन श्रीप्रद्युम्नेन च स्वस्मादपि यथा स्वं तस्य पुरस्कारात् ॥ २६ ॥

तस्मिन्निवृत्त इति सार्द्धकम् । नृपा यथा हरिवंशे—

"संयुक्ता ज्ञातयश्चैव रुक्मिणः सुहृदश्च ये ।
आहूता रुक्मिणा तेपि तत्राजग्मुर्नराधिपाः" ॥

इति ॥ २७ ॥

हि यतः प्रोत्साहयन्ति हे राजन्निति राजत्वेन तव सम्यगक्षज्ञानं भवतीति भावः । इतीत्यर्द्धकम् अदीव्यत सभामध्ये तथा च तत्रैव—

"ते शुभां काञ्चनस्तम्भां कुसुमैर्भूषिताजिराम् ।
सभामाविविशुर्हृष्टाः सिक्तां चन्दनवारिणा ॥

किञ्च—

निकृत्य तं जिगीषन्तो दाक्षिणात्या नराधिपाः ।
मणिमुक्ताः सुवर्णञ्च तत्रानिन्युः सहस्रशः ॥
ततः प्रावर्त्तत द्यूतं तेषां रतिविनाशनम् ।
कलहस्यास्पदं घोरं दुर्मतीनां भयावहम् ॥

इति ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रुक्मितनयाप्रसङ्गात् किं भगवतोपि दुहितरः सन्ति यदि सन्ति तर्हि कस्यां कस्यां भार्यायां कतिकति कन्या अजीजनत् इति राज्ञो बुभुत्सां शमयन्नाह—रुक्मिण्या इति । तनयामित्येकवचनेनाप्यन्यासामेकैकैव कन्येति दर्शितं चारुमतीं नाम कन्यां कृतवर्मणः सुतः उपयेमे ॥ २४ ॥

न केवलं रुक्मी प्रद्युम्नगृहीतां स्वसुतामेवाभ्यमोदत अपि तु प्रद्युम्नसुतायानिरुद्धाय स्वदौहित्राय स्वपौत्रीमपि, भगिनीप्रियचिकीर्षया ददावित्याह—दौहित्रायेति । हरेरित्यस्य पौत्रायेति शेषः । रोचनां नाम पौत्रीं ददावित्यर्थः । न केवलं बद्धवैरोप्येव अपितु तद्यौनमधर्म्यं जानन्नपि "यु मिश्रणे" योनिर्मिश्रणं वैवाहिकसम्बन्धः तत्प्रयुक्तं भोजनप्रतिभोजनादिकं यौनं तदधर्म्यमस्वर्ग्यं लोकविरुद्धं च जानन्नपीत्यर्थः । "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इतिशास्त्रादितिभावः । एवम्भूतोप्यदात् तत्र हेतुं वदन् विशिनष्टि स्नेहपाशेन स्वसरि यः स्नेह-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एव पाशैः तेनानुबध्यत इति तथा अत एव तस्याः प्रियं कर्तुमिच्छया ददावित्यर्थः ॥ २५ ॥

लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्नित्यादिना । तस्मिन् अभ्युदये॰ अनिरुद्धविवाहरूपोत्सवे निमित्ते ॥ २६ ॥

तस्मिन्निति । तस्मिन्नुद्वाहे निवृत्ते जाते सति ये कालिङ्ग-प्रमुखास्ते रुक्मिणं प्रोचुः ' किमिति ? बलं बलभद्रम अक्षैर्देवनाक्षे-सख्यापारैर्द्यूतैरितियावत. हे राजन् ! रुक्मिन् अयं बलरामः अनक्षज्ञः द्यूतानभिज्ञः अपि तथापि तद्व्यसनं द्यूतव्यसनं मह-दस्य वर्त्तते इति ॥ २७ ॥

इत्थमुक्तो रुक्मी बलभद्रमाहूय तेन सहाक्षैरदीव्यत क्रीडितवान् ॥ शतमिति निष्काणामित्यादि । तत्र द्यूते राम-स्तावन्निष्काणां शतं ततः सहस्रं ततोऽयुतं च पणं जित्वा स्वीकृत-वान् पुनस्तं राममपि रुक्मी जितवान् तदा बलं रामं कालिङ्गः प्राहसत् अपहासितवान् । तद्धसनं नामृष्यत् न सेहे ॥ २८-२९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृतवर्मणः सुतः पुत्रः ॥ २४ ॥

रुक्मी अदीदिशाय हरेः पौत्रायानिरुद्धायेति शेषः । स्वपौत्र मदात् ॥ २५ ॥

तस्मिन्नभ्युदये अनिरुद्धविषये विवाहे प्रवृत्ते सति ॥२६॥

बलं बलभद्रम ॥ २७ ॥

तद्व्यसनी द्यूतक्रियापरः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं धर्मप्रस्तावे पुत्रस्योत्पत्तिं विवाहश्चोक्त्वा कन्यादान-मपि भगवत्कृतमाह—रुक्मिण्यास्तनयामिति । कृतवर्मा यादवः बलीति नाम विशालाक्षीमिति सौन्दर्यं चारुमतीमिति नाम कन्यामाहूयदत्ता रुक्मिण्यास्तनयामित्यनेन अन्यासामपि कन्या उक्ताः सन्तीति तथा तासां विवाहोपि ज्ञातव्यः विशालाक्षीमिति सौन्दर्यं तस्या विवाहे प्रयोजकमुक्तं नतु महतः कन्यात्वं चारुमतीमिति नाम्ना अन्या अपि कन्याः सन्तीति सूचितं तेन रुक्मिण्यां पञ्चकन्याः पञ्चचकारैरुक्ताः अध्यवसेयाः अन्यासामपि यथाचकारं कन्यका ज्ञेयाः किलेति प्रसिद्धं नतु व्यासादिभिरेतदुपदिष्टमिति महत्वाख्यापकत्वात् केवललौकिक-त्वात् ॥ २४ ॥

ततोनिरुद्धस्तत्रैव भोजकटे जातः तस्यापि विवाहं तत्रै-वाह—दौहित्रायानिरुद्धायेति । स्वकुलस्थां कन्यामन्यो विवाहं मा करोत्विति तस्या नाम रोचनेति साप्यनिरुद्धस्य मातुलकन्या तावता द्वेषः शान्तो भविष्यतीति आशङ्क्याह—बद्धवैरोपीति स्वसुः प्रियचिकीर्षयेति पूर्ववद्धेतुः यावज्जीवं यदेव किञ्चि-दुत्कृष्टं तदेव भगिनीप्रीत्यर्थं दत्तवानित्यध्यवसीयते अन्यथा पुनः तद्धेतुत्वेन नोच्येत ननु कस्मै देयं दत्तवान् कथमेता-वता स्वसा प्रीता भवतीति चेत्तत्राह- स्वसुः प्रियचिकीर्षया जानन्नपि अधर्मं तद्यौनमिति स्त्रीसम्बन्धः अधर्मो भवति--

"माता पितामही यस्य तथैव प्रपितामही ।

तिस्र एककुले जाताः सोऽभिशस्तो निगद्यते" ॥

इति तस्यामुत्पन्नस्याभिशस्तत्वात्तितोषात् तद्यौनम् अधर्मरूपं भवति अधर्ममप्यङ्गीकृत्य स्वसुः प्रियार्थं दत्तवान् । ननु निषि-द्धाचरणे कथं प्रियं मया तत्प्रियं प्रियं भवतीत्याशङ्क्याह--- स्नेहपाशवशङ्गत इति स्नेहे सर्वमेव समीचीनं भासते उभयोः परमस्नेहात् तद्गतदोषो न भासते अतो जानन्नपि एव कृते प्रियं भवतीत्युभयोः लौकिकबुद्ध्या तथा कृतवानि-त्यर्थः ॥ २५ ॥

अयं विवाहः लौकिकवदिति दत्तायां कन्यायां वरयात्रिकाः भगवदादयः सर्व एव समागता इत्याह-तस्मिन्नभ्युदय इति । विवाहोत्सवे रुक्मिणी मुख्या निमित्तत्वात् ततो लौकिकमिति ज्येष्ठानुक्रमेण रामकृष्णौ पुरस्कृतमापन्न भोजकटस्थानं प्रतिज्ञा-स्थानं जग्मुः रामकेशवाविति ययोर्गमनमसम्भावितं तौ निरूप्य साम्बप्रद्युम्नादय; वरयात्रिका निरूप्यन्ते सुन्दरः साम्बः इति प्रद्युम्नादपि प्रथमं निर्दिष्टः कप्रत्ययोऽनादरे ॥ २६ ॥

निषिद्धत्वात् निषिद्धाचरणस्य फलमाह—तस्मिन्निवृत्त उद्वाह इति । कन्यादानानन्तरं वरयात्रायामपि सिद्धायाङ्कालिङ्ग-देशाधिपतिः देशनाम्नैव प्रसिद्धः स्वतः स्नेहेन तूष्णीभूत-मपि रुक्मिणं प्रोचुर्यतो दुष्टाः नापि तस्य तथाकरणे किञ्चित् प्रयोजनमस्ति ॥ २७ ॥

नन्वक्षजयः कथमेकान्ततो ममैव भविष्यतीति आश-ङ्कायामाह—अनक्षज्ञ इति । येहि वैदिककर्मपरा धर्मपरा वा तेऽक्षज्ञा भवन्ति बलस्यतूभयरूपत्वात् युक्तमेवाक्षाज्ञानमिति हिशब्दः राजन्निति सम्बोधनात्स्वमक्षज्ञ इति अपि तद्व्यसनम् महदिति अक्षो न क्रीडिष्यतीति शङ्कां वारयति अत आदौ प्रवृत्तः पश्चान्न निवर्तिष्यत इति पराजितो भविष्यति एवं उपपत्त्या प्रबोधितः तथा कृतवानित्याह—इत्युक्त इति । बलः पूर्वं ज्ञानोपदेशात् सान्त्वनात् हित इति बलमेवाहूय भगवतः सकाशात् पृथक्कृत्य रुक्मी दुर्बुद्धिरदीव्यत तत्राक्षान् गृहीत्वा रुक्मी प्राह पणः क्रियतामिति भिन्ना सङ्ख्या चतुर्दिक्ष्वक्षेषु लिख्यते तत्र कस्यचित् समसङ्ख्या कस्यचिद्विषमसङ्ख्येति पूर्वमेव प्रतिज्ञाय क्रीडार्थं प्रवृत्तौ ततोऽग्रहस्तेन रुक्मिणा आहृतः शतं सहस्रमयुतम् उत्तरोत्तरं दशगुणं रामस्तत्र पण-मादधे तन्तु पणं स्वानुकूलतया अक्षान् पातयित्वा रुक्मी अजयत् तत्रानक्षज्ञता कालिङ्गेन प्रथमतो निरूपितेति बलं प्राहसत् तदपि हसनं प्रकटमित्याह—दन्तान् सन्दर्शयन्नुच्चैरिति । तन्मनसि कापट्येन हसतीति हलायुधो नामृष्यत् ननु नीति-ज्ञेनावश्यं हास्यं सोढव्यं, तत्राह—हलायुध इति ॥ २८—२९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यौनं विवाहं अधर्मम् अधर्महेतुं जानन्नपीति "छिषदूर्व न

शतं सहस्रमयुतं रामस्तत्राददे पणम् ।
तन्तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बलम् ।
दन्तान् सन्दर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥ २९ ॥
ततो लक्षं रुक्म्यगृह्णाद्ग्लहं तत्राजयद्बलः ।
जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥ ३० ॥
मन्युना क्षुभितः श्रीमान् समुद्र इव पर्वणि ।
जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥ ३१ ॥
तत्रापि जितवान्रामो धर्मेण च्छलमाश्रितः ।
रुक्मी जितं मयात्रेमे वदन्तु प्राश्निका इति ॥ ३२ ॥
विश०पाठः(तथेत्याह कालिङ्गोपि दन्तान् सन्दर्श्य सीरिणः ।
ततः कोपपरीतात्मा तूष्णीमासीद्धलायुधः ॥ ० ॥ )

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भोक्तव्यं द्विषन्तं नैव भोजयेत् "इत्यादि लोकविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु"इति निषेधाच्चेत्यर्थः ॥ २५-२६ ॥

बलं राममिति कृष्णस्य द्यूतेऽपि दुर्जयत्वनिश्चयादिति भावः ॥ २७ ॥

प्रथमं सुवर्णमुद्राणां शतं ततः सहस्रं ततोऽयुतं तं पणं नामृष्यत् अन्तश्चुकोपेत्यर्थः ॥ २८—२९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वासामेकैका कन्या कुलपुत्राय तदनुरूपाय च दत्तेति सूचयति—रुक्मिण्या इति ॥ २४ ॥

एवं पुत्राणां कन्यानां च विवाहानेकदेशकथनद्वारा दर्शयित्वा महद्विरोधोऽनर्थहेतुरिति सूचयितुं रुक्मिणो वधं पौत्राणां विवाहोपलक्षणार्थमनिरुद्धविवाहञ्चाह—दौहित्रायेति । यौ द्विषोः पौत्रीपौत्रौ तयोः यौनं विवाहमधर्मः अधर्महेतुं जानन्नपि "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्"इत्यादिलोकविरोधात्" अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु"इति निषेधात् तथापि अदात् ॥ २५-२६ ॥

श्रीकृष्णमजेयं मत्वा बलमित्युक्तम् ॥ २७ ॥

अदीव्यत क्रीडितवान् ॥ २८ ॥

भाषा टीका ।

हे राजन् ! रुक्मिणी की पुत्री विशाल नेत्र वारीचारुमती कन्या को कृतवर्मा का पुत्र बडा बली, विवाहता भया ॥ २४ ॥

हे राजन् ! उस विवाह सम्बन्ध को अधर्म, जानता भी रहा और श्रीकृष्ण के साथ बैरबांध कर भी रहा परन्तु स्नेह रूप फन्दा मे बंध कर, रुक्मिणी के प्रिय करनें की इच्छा से रुक्मी श्रीकृष्ण के नाती और अपने धेवते अनिरुद्ध के अर्थ, अपनी नाति रोचना को देता भया ॥ २५ ॥

हे राजन् उस अनिरुद्ध के विवाह मे, श्रीरुक्मिणी और श्रीकृष्ण बलदेवजी, तथा साम्ब प्रद्युम्न आदि, भोजकटपुर को गये रहे ॥ २६ ॥

उस विवाह के समाप्ति होने पर कलिङ्ग देश के राजा. से आदि लेके वे अहंकारी राजा लोग, रुक्मी के प्रति बोले कि शार पासेन करकें तुम बल देवजी को तुरन्त जीतओ ॥ २७ ॥

हे राजन् ! यद्यपि यह बलदेव, जूवा खेलना नहि जानता तथापि उस जूवा का सौख बडा है, इस प्रकार राजाओं ने उस का तब तो रुक्मी बल देवजी को बुलाकर, उन के साथ पासेन से खेलता भया ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निष्काणां बद्धं ग्लहं पणं कृतवान् कैतवं कपटम् ॥ ३० ॥
न्यर्बुदं दशकोटिग्लहं क्षुभितो राम आददे ॥ ३१ ॥
छलमाश्रितो रुक्मी मया जितमित्याह ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शतमिति सार्द्धकम् । शतं निष्काणां प्राक् ततः सहस्रं ततोऽयुतं दशसहस्राणि तत्र द्यूते प्रहसनमेवाह—दन्तानिति । उच्चैः रतिशयेन सम्यगदर्शयन् हलायुधः प्रसिद्धनिजाक्षपराक्रम इत्यर्थः । अतो नामृष्यत् अन्तश्चुकोधेत्यर्थः ॥ २९ ॥

ग्लहम् अगृह्णात् पराजितेन देयमिति स्थापितवान् ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीमानिति । श्रीमान् तच्छब्देनोक्तिश्च तादृशतुष्टत्वघोषितं स्मृत्वा सन्तोषेण तदानीं तेजोविशेषाविर्भावस्मरणेन च अक्षोभितोऽपि कदाचित् क्षोभे दुर्धर्षत्वेऽपि च दृष्टान्तः समुद्रः इति । आत्मां प्रकृत्यैवारुणाक्षः अतिरुषा त्वातिशयेनारुणाक्ष इत्यर्थः ॥ ३१ ॥

धर्मेण न्यायेन जितवान् जितमित्यादी आहेति शेषः॥३२॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धर्मेण रामः जितवानित्यन्वयः छलमाश्रित्य रुक्मी मया जितमित्याहेत्यन्वयः ॥ ३२-४०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो रुक्मी लक्षं ग्लहं पणमाददे बलश्चाजयत् किञ्च कालेन मृत्युना चोदितः अतएव परिहसन् सङ्कर्षणमुवाच किमित्युवाचेत्यत आह—जितवानिति । कैतवं वञ्चनमाश्रितो रुक्मी अहं जितवानित्याहेत्यर्थः ॥ ३० ॥

मन्युनेति । यथा पर्वणि समुद्रस्तद्वन्मन्युना क्षुभितोऽत एव आतेऽरुणेऽक्षिणी यस्य तथाभूतो रामः रुषा पूर्ववल्लक्षं ग्लहमाददे ॥ ३१ ॥

तं रुक्मिणश्च धर्मेणैवाजयच्च रुक्मीतु छलमाश्रितः मया जितम् अत्रास्मिन् विषये प्राश्निकाः पृष्टव्याः कालिङ्गादयो वदन्ति मया जितमित्येव वदन्ति अतस्ते पृष्टव्या इत्याहेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पराजये पणं ग्लहं कालिङ्गः दन्तवक्रः त्वां जितवान् तानशिक्षित अग्रे इति भावः ॥ २९-३० ॥

अर्बुदं दशकोटिधनम् ॥ ३१-३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो वारत्रयानन्तरजये वा पराजये वा विपर्ययस्यान्यः पातयेदित्याशङ्कात् कपटादिशङ्कानिवृत्त्यर्थं बलः स्वयमक्षान् गृहीत्वा अपातयत् ततः अयुताद्दशगुणं रुक्मी लक्षग्लहं पणात्मकं द्रव्यं प्रतिज्ञातवान् तत्र तस्यां क्रीडायां बलमजयत् एकान्ते क्रीडतीति न स्वकीयाः साम्बादयः साक्षिणः परं तदीया एव सर्वे अत एकवारमेव भूयान् पराजयो जात इति पूते मृषाभाषणं न विनीतमिति जितवान् अहमित्याह—रुक्मी ताव अक्षान् विपरीततया धृत्वा प्रदर्श्य कैतवमाश्रितः कपटेनैव जेष्यामीति निश्चित्य मृषोक्तवान् ॥ ३० ॥

तदा मन्युना क्षुभितः तदसहमानः दोषाभावादसहनं भविष्यतीत्याशङ्क्य निराकरोति—श्रीमानिति । पूर्णधनः निवार्यमाणोऽपि सहज एव तादृश इति तस्मिन् काले तथैव युक्तमिति दृष्टान्तमाह-समुद्रः पौर्णमास्यामिवेति । स हि पूर्णचन्द्रमभिमुखोगच्छति तथा ऽयमपि मद्भिक्ष्य एव मत्तोऽप्युत्कर्षं वाञ्छत्यनृतं च वदतीति चन्द्रमिव जिघृक्षुः जातः आत्मा स्वभावेन च अरुणाक्षः अक्रुद्धोऽपि क्रुद्ध इव प्रतीयते क्रोधे तु का वार्त्तेत्यर्थः । अतिरुषा सुतरामरुणाक्षो जातः अतो मनसि मारणीयोऽयमिति भावो निरूपितः ततो वारत्रयं क्रीडितव्यमिति पुनरक्षान् बलो गृहीतवान् तदा रुक्मी न्यर्बुदग्लहमादधे प्रतिज्ञातवान् दशकोटिमितं वारत्रयेण यावद्दशगुणं तावत्स्वदेवादधे यथैकानृतेनैव सर्वमनृतं भवति पूर्ववत् ॥ ३१ ॥

तत्रापि रामो जितवान् अभिज्ञतया न किन्तु दैवगत्येत्याह-धर्मेणेति । तदा महती विनाशं दृष्ट्वा छलमाश्रितः कापट्यमेव कर्त्तव्यमिति निश्चित्य रुक्मी आह चकारेण आहेति पूर्वक्रिया आहृता मया जितमात्रे मे प्राश्निकानां सभासदां येषामग्रे प्रश्नः सम्भवति सन्निधे ते प्राश्निकाः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कैतवं कपटम् ॥ ३० ॥

न्यर्बुदं दशकोटीः ॥ ३१ ॥

छलमाश्रितोऽतो रुक्मी मया जितमित्याह— प्राश्निकाः साक्षिणः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रथमं रामः निष्काणां शतं तदनन्तरं सहस्रं पुनः अयुतं पणं जित्वा आददे स्वीकृतवान् एकवारं तं रामं रुक्मी अजयत् तत्र बलं कलिङ्गः प्राहसत् तदुपहास्यं नामृष्यत न सेहे ॥ २९ ॥

निष्काणां लक्षं ग्लहं पणं रुक्मी अगृह्णात् कृतवान् तत्र बलः अजयत् जितवान् कैतवं कपटम् ॥ ३० ॥

न्यर्बुदं दशकोटीर्ग्लहम् आददे जित्वा स्वीकृतवान् ३१ ॥

तं ग्लहम् अपि निश्चितं धर्मेण राम एव जितवान् तथापि छलमाश्रितः रुक्मी मया जितमित्याह ॥ ३२ ॥

---

भाषा टीका ।

उस जूवा मे बलदेव ने दाव के ऊपर प्रथम १०० सौ मोहर धरी दूसरी बार १००० हजार मोहर धरी, तीसरी बार १०००० दसहजार मोहर धरी, उसदावको रुक्मी ने जीत लिया, उसपर कलिङ्ग देशका राजा दन्तवक्र दातन

तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः ।
धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥ ३३ ॥
तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः ।
सङ्कर्षणं परिहसन् बभाषे कालचोदितः ॥ ३४ ॥
नैवाक्षकोविदा यूयं गोपाला वनगोचराः ।
अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ३५ ॥
रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ।
क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥ ३६ ॥

भाषा टीका ।

को दिखाकर बलदेवजी के प्रति बड़ा हंसा इस के अनंतर बलदेवजी उस के हसने को नहि सहते भये ॥ २९ ॥

उसके पश्चात रुक्मी ने एक लक्ष मोहर दाव पर धरी तहां बलदेवजीने उस दाव को जीत लिया उसपर रुक्मी कपट को लेकर बोली कि मैने जीता है ऐसा कहकर उस दाव को लेलिया ॥ ३० ॥

जैसे पर्वकालमें समुद्रउमड़ताहै तैसेहि रुक्मी केमिथ्यावचनसे क्रोधते क्षोभकोप्राप्तहुयं औरस्वभावसे हि रक्तनेत्रवाले श्रीमान् बलदेवजी। मतिक्रोधसे दशकोटिमोहर ७ दावपरधरतेभया ॥ ३१ ॥

उसकोबलदेवजीने धर्मसेजीतलिया इसपरकपटका आश्रय लेकरबोलाकि मैनेजीता है इस विषयमें दन्तवक्रआदियेसाक्षीहां गहांगये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

॥ ३३-३५ ॥

नृम्णसंसदि मङ्गलसभायाम् ॥ ३६—३९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्राश्निकानां नृपाणां दुर्जनत्वेन मिथ्यासाक्षित्वं सम्भाव्य पापरुक्मिवधार्थं श्रीबलदेवस्य कोपं वर्द्धयितुमाकाशवाण्यभूदित्याह-तदेति। धर्मतो मर्य्यादाबन्धतो यद्वस्थनं ग्लहस्वीकारवाक्यं तेनैव जितः रुक्मीतु मृषैव वदति तत्र यथा श्रीविष्णुपुराणे...

"त्वयोक्तोऽयं ग्लहः सत्यं न मयैषोनुमोदितः ।
एवं त्वया चेद्विजितः न मया विजितः कथम् ॥
तत्रैवाकाशवाक्यञ्च...
"विजितं बलदेवेन रुक्मिणा भाषितं मृषा ।
अनुक्त्वापि वचः किञ्चित्कृतं भवति कर्मणः ॥
इति ॥ ३३ ॥

सङ्कर्षणं सद्यः सर्वं संहर्तुं समर्थमिति भावः। यद्वा स्वयं भगवतो द्वितीयव्यूहमिति परिहसन् उपहसन् ॥ ३४ ॥

यूयमिति। श्रीकृष्णापेक्षया तत्सङ्गिनोपि गृह्णाति अकोविदत्वे हेतुः गोपालाः क्षुद्रजातयः वनमेव गोचरो ज्ञानविषयो येषां तादृशाश्च गीर्दैवीतु तं स्तावयति गवां धेनुपृथ्वीवेदावीनां पालका यूयं वने निर्जनदेश एव गोचरा ध्यानविषया भवथ नैव नतु अक्षेषु द्यूतसभासु कोविदा येषां तादृशा भवथ यतः अक्षैर्बाणैश्च राजानः श्रियोन्मत्ता एव दीव्यन्ति परहिंसाया रमन्ते नतु भवन्त इव द्रवयन्ते ये भवद्भक्तास्तेपीत्यर्थः। ततो वयं न जानीमः किन्तु भवद्भक्ता एव जानन्ति स्वतन्त्रलीलानिबन्धनमेवेदृशं भवतां चरितमिति भावः ॥ ३५ ॥

एवम् अनेन श्रीकृष्णस्यापि व्यापकेन प्रकारेण रुक्मिणैव हेतुकर्त्रा तैराजभिः कर्तृभिरुपहासितः अतो नृम्णसंसदि जघान नृपूर्वः पवर्गटवर्गपञ्चमसंयोगमध्यमश्चायमकारान्तो नृम्णशब्दो वैदिको मङ्गलवाचकः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति। धर्मतो बलेन रामेणैव ग्लहो जितः रुक्मीतु वञ्चनेनैवं वदति अतस्तदुक्तिर्मृषेत्यशरीरवाणी प्राहेत्यर्थः ॥ ३३ ॥

तां नभोवाणीमनादृत्य दुष्टराजन्यैः कलिङ्गादिभिश्चोदितो वैदर्भो रुक्मी कालचोदितोऽत एव परिहसन् बभाषे ॥ ३४ ॥

भाषणमेवाह-नैवेति। नाक्षकोविदाः न द्यूतकुशलाः तत्र हेतुं वदन् विशिनष्टि-गोपाला वनगोचराश्चेति राजान एवाक्षैः बाणैश्च दीव्यन्ति नतु भवादृशाः पशुपालकाः ॥ ३५ ॥

रुक्मिणेति रुक्मिणैवम् अधिक्षिप्तो रामः हे नृप! सभायां संसदि नृपाणां संसदि वा तं जघ्ने ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आकाशसरस्वती किमाहेति तत्राह—बलेनेति ॥ ३३ ॥
तामाकाशवाणीम् ॥ ३४—३५ ॥

कलिङ्गराजं तरसा गृहीत्वा दशमे पदे।
दन्तानपातयत् क्रुद्धो योऽहसद्विवृतैर्द्विजैः ॥३७॥
अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः।
राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ३८ ॥
निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा।
रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद्धरिः ॥ ३९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अष्टपदेन अक्षफलकेन ॥ ३१—३८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्र देशाधिदेवाः साक्षिण इति कालिङ्गादिषु तेऽभिनिविष्टाः दुष्टत्वात्तेषां तत्रत्यानां वचनात् पूर्वमेव आकाशवाणी सर्वदेवतामयी सन्देहनिवृत्त्यर्थमाह—बलेनैव जितो ग्लह इति। यद्यप्यक्षक्रीडां न जानाति तथापि धर्मतः जितवान् वचनेनैव केवलेन धर्मरहितेन रुक्मी वदति वै निश्चयेन नात्र सन्देहः कर्त्तव्य लौकिकत्वमपि तद्वाक्यस्य निवारयति-मृषेति लौकिका अप्येतादृशेन मृषा वदन्ति ॥ ३३ ॥

ततः कोवायं कृत्रिमः शब्दः प्रमाणं साक्षात् प्राश्निकेषु विद्यमानेष्विति तामनादृत्य दुष्टराजन्यैः तथैव वक्तव्यमिदं नाङ्गीकर्त्तव्यमिति प्रेरितः सङ्कर्षणं परिहसन् बभाषे यतो वैदर्भः न धर्मप्रधानदेशस्थः दुःसङ्गश्च सहि जगदेवाकर्षति तथापि तादृशसामर्थ्यवन्तं परिहसन् कटाक्षहास्यादिभिः अयुक्तमुक्तवान् ननु वचनस्थं किं प्रयोजनं तूर्ष्णीं प्राश्निका भवन्त्वित्याह—प्राश्निकानामपि स्वानुगुण्यवचने बलस्य स्वज्ञानमेव भ्रान्तमिति प्रतीतिः स्यात्तदर्थं स्थातव्यमुत्थाय वा गन्तव्यमिति। तत्राह-कालकोविद इति ॥ ३४ ॥

भगवता गोपालत्वं समर्थितमिति तदन्तर्याम्यपि तथैव प्रेरितवान् बाल्ये हि विद्याऽभ्यासः क्षत्रियाणाञ्च शास्त्राभ्यासः तस्मिन् समये वने गोचारणमेव कृतमिति लोकाविश्वासार्थं मर्मभेदमाह-यूयं नाक्षविदः यतो गोपालाः नहि सर्वविद्यासु सर्वे अभिज्ञाः तस्माद्वने गोचरा एव उभयमपि ज्ञायत इति चेत्तत्राह-अक्षैर्दीव्यन्ति राजान इति। अभ्यासव्यतिरेकेण न विद्या समायातीति अक्षाणाम् अप्रयोजकत्वमाशङ्क्य द्यूतक्रीडापरा अधमा इति शङ्कान्युदासार्थं जयसाधकत्वात् बाणतुल्यतां वक्तुमाह—बाणैश्चेति। ननु, क्षत्रिया वयमित्युभयं जानीम इति चेत्तत्राह-न भवादृशा इति। परगृहे पुष्टाः आबाल्यंन नीचकर्मणि नियुक्ताः नाक्षबाणकोविदा भवन्तीति निषेधति न भवादृशा इति ॥ ३५ ॥

ततः सर्वैरेव सत्यं वदसीत्युक्ते उपहासे च कृते कालप्रेरितो बलः तत्रैव गत्वा कालमुद्गररूपं परिघमुद्यम्य संसदि सभायाम् उपविष्टमेव तं जघ्ने पक्षपातिभिः तस्य पक्षः पोषणीय इति ज्ञापयन्निव सभायामेव जघ्ने नृपेति राज्ञां तथा करणं युक्तमिति ज्ञापयति- क्रुद्ध इत्यविचारः परिघमुद्यम्येत्यन्या क्रिया निवर्त्तिता चकारात् तदीयैः सेवकैरप्युपहसितः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तदा तेषां साक्षिणामधर्मिष्ठनृपाणां मिथ्योक्तिसमये धर्मतो वचनं यस्य तेन बलेनैव जितः रुक्मीतु मृषा वदति ॥ ३३-३५ ॥

नृम्णसंसदि मङ्गलसभायाम् ॥ ३६—३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नृम्णसंसदि मङ्गलसभायाम् ॥ ३६—४० ॥

---

भाषाटीका।

जब साक्षी लोगोंने रुक्मीके पक्षपातसे कुछ नहिकहातब आकाशवाणीभई कि-धर्मसेबलदेवजी ने दावजीत्यो है और रुक्मी तो केवल मिथ्या वचन मात्रसे कहता है किमैंने जीत्याहै ॥ ३३ ॥

दन्तवक्र आदि दुष्ट राजाओं से प्रेरित और मरण समय के काल से प्रेरित हुआ रुक्मी उस आकाश वाणी का अनादर करके बलदेवजी का परिहास करत, और बोलता भया ॥ ३४ ॥

क्यो कि आप लोग जुवा में चतुर नही हो क्यों कि आपतो गौनन के पाल करने वारे वन मे वन मे विचरने वारे हो, और पाशेन करके तथा बाणन करके हमारे सदृश राजा लोगहि क्रीडा करते हैं आप के सदृश, नहि ॥ ३५ ॥

इस प्रकार रुक्मी ने बलदेवका निरसकार किया और दन्त वक्र आदि राजाओं ने उपहास किया, इस पर बलदेवजी क्रोधित होकर लोहे के बैंडा को लेकर उसी से रुक्मी को विवाह मण्डप मे मारते भये ॥ ३६ ॥

ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ।
रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे अनिरुद्धविवाहे रुक्मिवधो नाम
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

श्रीधरस्वामीकृतभावार्थदीपिका ।

सूर्यया नवोढया सिद्धा अखिला अर्था अभ्युदयशत्रुवधादयो येषां ते ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दशमे पदे पादविन्यास इति भीत्या पलायनात् तथाप्य-पातयत् यतः क्रुद्धः तत्र हेतुर्य इति विवृतैः प्रकटितैः बद्-असौ मन्मदुःखमिच्छति दुरात्मा अतो ऽस्येममभिलाषं कुतो न पूरयेयमिति विभाव्य तथा कुर्वन् तस्य तमपूपुरदिति च ज्ञातव्यम् ॥ ३७ ॥

अन्ये च राजानः परिघार्दिताः अतो निश्शेषेण भिन्नानि बाह्वादीनि येषां ते बाह्वादीनां यथोत्तरं मर्मस्थानत्वे श्रैष्ठ्यम् अतो रुधिरेणोक्षिताः सिक्ताः अत एव भीताः सन्तो दुद्रुवुः वेगेनापसृताः ॥ ३८ ॥

रुक्मिणि स्वभ्रात्रैव तादृशदुष्टतया विख्याते इति साध्विति वक्तुमुचितं श्याले तादृशनिजनिकटसम्बन्धिनीत्यसाध्विति । तथापि तत्तन्नाब्रवीत् यतः साध्वित्युक्तं रुक्मिण्याः असाध्वित्युक्ते च बलदेवस्य स्वविषयकोपः स्नेहस्तस्य भङ्गः पलायनं मिलीनत्वं तस्माद्यद्भयं तस्मात् यद्यप्येतन्न सम्भवति तथापि स्नेह एव तत्सम्भावयति इति ज्ञेयं यद्वा भङ्गः कौटिल्यं प्रणयकोप इत्यर्थः । यद्वा भङ्गस्तरङ्गः तत्तन्नानयो-र्मध्येतादृशः स्नेहतरङ्गः अहन्तु तद्विपरीतं कथं वदामीति तस्माद्भयमिव भयं लज्जेति ज्ञेयं यद्वा तयोर्योन्योन्यं स्नेह-स्तस्य भङ्गभयात् मनागपि तत्र तस्य सम्मत्यनुमानेन रुक्मिण्या बलदेवेऽसूयोत्पत्तिः स्यादिति तूष्णीं स्थितिः साध्वित्यनुक्तिस्तु रुक्मिणीप्रकटपरिभवस्य तत्कुटुम्बलोकविगानस्य च शङ्कयेति भावः । अत एव श्याल इति विशेषितम् एवं स्नेहभङ्गहरणात् हरिरिति तादृशभगवच्चातुर्य्येण प्रहर्षात्तथा पूर्वं विरूपतामात्र-करणेपि श्रीकृष्णं प्रति किञ्चित्परुषमुक्तवता तेनैवाधुना तद्वध इति कौतुकाच्च सम्बोधयति---राजन्निति ॥ ३९ ॥

वरं श्रेष्ठं रथं सम्यक् गीतवाद्यादिसाधुप्रकारेणारोप्य रामस्याज्ञित्वं दुर्जनवैरिवधेन सर्वैः सम्मानितत्वात् तथा कृष्णस्य मौनावलम्बनाच्च सिद्धाखिलार्थत्वे हेतुः मधुसूदनाश्रया इति एवं राम-स्यादित्वेपि तदधीनत्वं तथा रामस्य रुक्मिवधे तत्सम्मतिं च द्योतयत्येव तत्र मधुसूदनेति यथा पुरादिदैत्यं मधुं वरदानादि-चातुर्य्येणाहन् तथा द्यूतक्रीडोदासीन्यमप्यनुक्त्या रुक्मिणमपीति भावः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकषष्टितमोऽध्यायः ॥६१॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कलिङ्गराजन्तु तरसा प्रसह्य दशमे पदे पादविन्यासे गृहीत्वा क्रुद्धस्सन् दन्तानपातयत् भग्नानकरोदित्यर्थः । तत्र हेतुं वदन्विशिनष्टि---यः कलिङ्गः विवृतैः प्रकाशितैर्द्विजैः दन्तैरहसत् अतो दन्तानेवापातयदित्यर्थः ॥ ३७ ॥

अन्येतु राजानः बलेन कर्त्रा परिघेण साधनेनार्दितास्ताडिता अत एव निर्भिन्नानि बाह्वादीनि येषां ते अत एव रुधिरेणोक्षिताः सिक्ताः भीताश्च दुद्रुवुः पलायितवन्तः ॥ ३८ ॥

निहत इति । हरेः कृष्णस्य श्याले रुक्मिणि निहते सति रुक्मिणी साध्वसाध्विति वा नाब्रवीत् कुतः बलयोः रामकृष्णयोर्विषये यः स्नेहस्तस्य भङ्गभयात् बलयोरित्यत्र द्विवचनबलेन कृष्णपरिग्रहः हरिरिति प्रथमान्तपाठे श्याले रुक्मिणि निहते सति हरिर्भगवान् रुक्मिणीबलयो रुक्मिणीबलरामयोः स्नेहभङ्गभयात् साध्वसाधु वा नाब्रवीदित्यर्थः ॥ ३९ ॥

तत इति । ततो रामादयो दाशार्हकाः सूर्यया नवोढया सहानिरुद्धं श्रेष्ठं रथमारोप्य आरोहयित्वेत्यर्थः मधुसूदन आश्रयो येषां ते अत एव सिद्धाः सकला अर्थाः प्रयोजनानि येषां ते कुशस्थलीं द्वारकां प्रति ययुर्जग्मुः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकषष्टितमोऽध्यायः ॥ ६१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हते श्यालके रुक्मिणि निहते सति ॥ ३९ ॥

भार्यया सहानिरुद्धं वरं रथम् आरोप्य रामादयो दशार्हकाः सिद्धाखिलार्थाः सम्पन्नसमस्ताभीष्टाः तत्र हेतुः मधुसूदनेति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकषष्टितमोऽध्यायः ॥ ६१॥
( श्रीविजयध्वजतीर्थरीत्या पदसप्ततितमः ॥ ७६ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

वाक्यापराधे वधं कृत्वा मानसिकापराधे ताडनमाह—कलिङ्गराजमिति—येनोपहसितः पलायमानं तं दशमे पदे धृत्वा क्रियाशक्तिः प्राणस्येति "नव वै पुरुषे प्राणाः" इति श्रुतेः प्राणानुरोधेन नवप्रयत्नाननुपेक्ष्य दशमे पदे तं गृहीतवान् ततो लोकेभ्यः दन्ताः प्रदर्शिता इति पुनःप्रदर्शननिवृत्तये दन्तानपातयत् अत्रापि क्रुद्ध इत्यविचारः तस्य दोषमाह—योऽहसदिति विवृतैर्द्विजैरिति दन्तानामेव पातने हेतुः ॥ ३७ ॥

अन्येप्यनुमोदनकर्त्तारः निर्भिन्ना बाहवः ऊरवः शिरांसि च येषां तादृशा जाताः तत्राभिज्ञानं रुधिरोक्षिताः रुधिरोक्षिता इति ततो भीताः सन्तः दुद्रुवुः स्वतोपि भयेन पलायने बलोत्कर्षो न भवतीति पलायने तत्क्रियासाधनमाह परिमार्दिता इति ॥ ३८ ॥

नन्वेवमनर्थे पौत्रविवाहे जाते भगवता किं कृतमित्यत आह—निहत इति । एक एव श्यालो हतः विवाहे श्यालः साक्ष्यहेतुर्भवति अतः किञ्चिद्वक्तव्यं धर्मस्थापनायां दुष्टो मारणीय एव अतो न वक्तव्यमेव तदुभयं निषेधति श्यालं विहते साधु असाधु वा न अब्रवीदिति नन्वप्रतिषिद्धमनुमतं भवतीति तूष्णींभावेपि बलभद्रपक्षः स्यात्तर्हि साध्ववचनेति चेत् तत्राह निहत इति कृते कार्ये वचनं व्यर्थमेव स्यात् अन्यत् वक्तव्यो भवत्यसाधुकृतमिति तथापि नोक्तमिति । सूच्यते तत्र हेतुः रुक्मिण्याः स्नेहभङ्गभयादिति भक्तत्वेपि भार्यायाः कार्यरूपा अविरोधेति उत्पत्तिविचारेण स्नेहभङ्गः सम्भाव्यते ततः प्रपन्नायाः तथात्वे ममापि तथात्वमुचितमिति सर्वथा स्नेहे भग्ने भक्तिमार्गो नश्यतीति भयं नन्वीश्वरस्य नष्टेपि मार्गे किं भयमिति चेत्तत्राह हरिरिति सहि सर्वदुःखहर्त्ता अन्यथा सर्वेषां दुःखं न गच्छेदिति तथैवासाध्ववचने बलस्य स्नेहभङ्गभयं हेतुः तस्य स्नेहभङ्गे अवतारप्रयोजनं न भवेदिति भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्त्तेत इति स्नेहभङ्गसम्भवः शक्तिर्विभक्तेति ॥ ३९ ॥

उभयोर्विनियोगमुक्त्वा त्रिवृत्साहरहितेषु सत्सु शिष्टानां कृत्यमाह—ततो ऽनिरुद्धमिति । तदीयानां प्रतिबन्धनिवृत्तये रामः पुनरादित्वेन गृहीतो वरयात्रिकाणां सूर्यया नवोढया सह रथं समारोप्यंति दुःखितत्वात् बलात् समारोपणमुक्तं मातामहः पितामहौ मारित इति कुशस्थलीमिति प्रदेशस्य विषमत्वं सूचितं दाशार्हा यादवविशेषाः तां दशामर्हन्तीति शिष्टाना मुभयमपीष्टमित्याह—सिद्धाखिलार्था इति । शत्रुमारणमिष्टप्राप्तिश्च अखिलार्थाः तथात्वे हेतुः मधुसूदनाश्रया इति एवं धर्मप्रस्तावे अनिरुद्धो धर्मरक्षक इति तत्कथायां दुष्टनिवारकमुक्तम् ॥ ४०॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
द्वादशाध्यायविवरणम् ॥ १२ ॥ ६१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सूर्यया नवोढया सिद्धाखिलार्थाः सिद्धसमस्तवाञ्छिता इति विशेषणेन रुक्मिण्या अपि क्रोडीकृतत्वात्तस्या रुक्मिणि हते सत्यन्तः सुखमेवाभूदिति गम्यते तेन स्नेहभङ्गभयादित्यत्र रुक्मिण्या रुक्मिणि बहिः स्नेह एव व्याख्येयः ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकषष्टितमोऽध्यायो दशमेऽजनिसङ्गतः॥ ६१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकषष्टितमाऽध्यायार्थप्रकाशः ॥ ६१ ॥

---

भाषा टीका ।

प्रकाश मान दान्तों से युक्त जो हंसा रहा वह दन्तवक्र शीघ्रही भगने लगा बलदेवजी ने दश मे पैंड पर उस को पकड़ कर उसी वैडा से उस के दांतों को तोड़ कर उस को मार कर पृथिवी मे गिरा दिया ॥ ३७ ॥

रुक्मी के पक्ष के राजा लोगो को बलदेवजी ने वैडा की मार लगाई उनके भुजा जङ्घा शिर टूटगये और वे

भाषा टीका ।

रुधिर से भीज गये अत एव भयभीत होकर भग-गए ॥ ३८ ॥

अपने शाले रुक्मी के मरने पर हे राजन् श्रीकृष्णजी ने रुक्मिणी और बलदेवजी के स्नेह भङ्ग होने के भय से अच्छा अथवा बुरा कुछ नहीं कहा ॥ ३९ ॥

पश्चात् व्यहुली सहित अनिरुद्ध को सुन्दर रथ मे बैठा कर बलदेवजी आदि यादव, भोजकट से श्रीद्वारका को जाते भये, वे यदुवंशी कैसे रहे कि श्रीकृष्ण के आश्रय होने से उन के सकल मनोरथ सफल रहे ॥ ४० ॥

इति श्रीमद्भागवत दशमस्कन्ध उत्तरार्धमें एकसठके अध्यायकी श्रीवृन्दावनस्थ पं० दामोदराचार्य कृत भाषाटीका समाप्ता ॥ ६१ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ।

—⁂—

राजोवाच ।

* बाणस्य तनयामूषामुपयेमे यदूत्तमः ।
तत्र युद्धमभूद्घोरं हरिशङ्करयोर्महत् ।
एतत्सर्वं महायोगिन्! समाख्यातुं त्वमर्हसि ॥ १ ॥

श्रीशुक उवाच ।

बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ।
येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥
तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ।
मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः ॥ ३ ॥
शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ।
तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः ॥
सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥ ४ ॥

---

### श्रीधरस्वामीकृतभावार्थदीपिका ।

द्वियुक् षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् ।
कन्याया रममाणस्य बाणेन बहुबाहुना ॥
अनिरुद्धोद्वहेऽप्यस्मिन् बाणयादवसंयुगे ।
श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥
॥ १—४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

॥ १-३ ॥

महात्मनः श्रीभगवद्भक्तस्यापि इति बाणस्याभक्तत्वं व्यज्य भगवद्विद्वेषप्रापकापराधविशेषस्य तादृशसत्सङ्गेनापि दुर्निवारत्वं दर्शितं तत्रापराधं महाभागवतसार्वभौमश्रीमृडाराधनेपि दुर्वार्यं* दर्शयन् प्रत्युत तत्सम्बन्धेन तस्यापि श्रीभगवता सह स्पर्द्धाभासो दृष्ट इति दर्शयितुमाह—सहस्रेत्यादि । सहस्रबाहुरिति वाद्ये कौशलादिकं व्यञ्जितं मृडमिति ताण्डवे हेतुगर्भं नाम मृडयति भगवद्भक्तिमयताण्डवादिना सुखयति॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्विषष्टितमः स्फुटार्थः ॥
॥ १-३५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ अनिरुद्धविवाहप्रसङ्गात्तदीयमेव विवाहन्तरं समासतः श्रुतपूर्वं विस्तरबुभुत्सया पृच्छति राजा—बाणस्येति । उषामुषां नाम तनयां यदूत्तमो अनिरुद्धः तन्निमित्ते हरिशङ्करयोः कृष्णशिवयोः महद्घोरञ्च युद्धमभूदित्येतत्सर्वं मह्यमाख्यातुमर्हसि ॥ १ ॥

आचष्टे—बाण इत्यादिना । बलेः पुत्राणां शतस्य ज्येष्ठः बाणो नामासीत् कोसौ बलिरित्यत आह— येन बलिना मेदिनी भूमिरदायि दत्ता ॥ २ ॥

बाणं विशिनष्टि—तस्येति । तस्य बलेरौरसः उरसा निर्म्मितः सुतः सत्ये सन्धा अभिसन्धिर्यस्य धृतं रुद्रोपासनात्मकं व्रतं येन सः ॥ ३ ॥

शोणिताख्य इति । स बाणः तस्य बाणस्य शम्भोः प्रसादेन वरेण हेतुना अमरा देवाः किङ्करा इव ॥ ४ ॥

---

* बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः । सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ।
इत्येवपाठो दृश्यते वैष्णवतोषिणी-क्रमसन्दर्भ-सिद्धान्तप्रदीप-सारार्थदर्शिन्यादिषु ॥

**भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः।**
**वरेणच्छन्दयामास स तं वव्रे पुराधिपम् ॥ ५ ॥**

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रीशुक उवाच।

तथा ताभिर्वरस्त्रीभीरममाणो जनार्दनः।
दिनानि हतसापत्न्यः सुबहून्यत्यवासयत् ॥ १ ॥

राजोवाच।

तासां षोडशसाहस्रमहिषीणां जनार्दनः।
तृप्तिं कथं चकारैको मानुषं देहमाश्रितः ॥ २ ॥

श्रीशुक उवाच।

हन्त ते कथयिष्यामि श्रोतॄणां विस्मयावहम्।
यथा चकार बह्वीनामेकस्तृप्तिं जनार्दनः ॥ ३ ॥

अग्रे एकोनसप्ततितमाध्यायावारभ्य पाठसाम्यं वर्तते
नास्त्यंशतरपाठसमानम्।

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १-२५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १-९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

निरोधे राजसफले देवानां विजयः स्फुटः।
निरूप्यते यतो रुद्रा नान्यं सम्भावयन्ति हि ॥
त्रयोदशे ततोऽध्याये हेतुस्तस्य निरूप्यते।
अनिरुद्धप्रसङ्गेन धर्मः सिद्ध्यति तेन हि ॥
सर्वथाप्युपकारित्वात्सर्वतो भयशङ्कया।
परमानन्दरूपत्वात्सफलो राजसः स्मृतः ॥
अनिरुद्धोऽनिरुद्धत्वान्निरुद्धो येन केनचित्।
तन्मूलाः सर्व एवाति विनिरुद्धा भवन्ति हि ॥

सर्वदेव जयार्थं प्रथममनिरुद्धस्य बन्धननिरूप्यते निरुद्धं मनः सर्वहेतुर्भवतीति तत्रानिरुद्धबन्धनं कालेनैवेति उषोपाख्यानमुच्यते कालोऽपि विषयवैचित्री हेतुरिति चित्रलेखा नेत्री।

स्वप्नेऽपि चेत्प्रसङ्गः स्याद्बद्धो भवति मानवः ॥
अन्येन वा तथा ज्ञातः किमु साक्षात्तथाविधः।

प्रथममनिरुद्धबन्धनहेतुसम्बन्ध निरूपक निरूपार्थं प्रस्तावनामाह— बाणः पुत्रशतज्येष्ठ इति सप्तदशभिः। पुत्राणां शतमध्ये ज्येष्ठ आसीत् भगवता स बद्ध इति तन्निष्कृतिसूचनार्थं भगवदंशोऽनिरुद्धः॥ १ ॥

तत्पुत्रेण बद्ध इति सूचयितुं बलेः पुत्रत्वं निरूप्यते, ननु तेनैव कथं न बध्यते? तत्राह—महात्मन इति। स हि महात्मा नापकरोति पुत्रशतज्येष्ठ इति तत्कृतं 'पितृकृतमेवेति ज्ञापयति ॥ २ ॥

बलेरिवास्यापि बन्धशङ्कापि व्यावर्त्यते पार्ष्णिग्राहाः बहवः सन्तीति तथापि भगवता सह विरोधेन सामर्थ्यं भवतीति तस्य महादेवोपासनामाह—सहस्रबाहुत्वञ्च तत्कृपयैवेति तेन बहुधा लब्धप्रसादः महादेवात् स इति सूचितं ताण्डवे उत्साह वृद्ध्यर्थं वाद्यभूयस्त्वमपेक्ष्यते ॥ ३ ॥

तत्र बहुभिर्वादने व्यधिकरणा प्रयत्नानां समता न भवतीति एकेन बहुवादकरणां तोषहेतुर्भवतीति सहस्रबाहुभिर्वाद्यैः ताण्डवे मृडमतोषयत् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

द्विषष्टितम ऊषाया अनिरुद्धेन सङ्गमः।
चित्रलेखाहृतेनैतं बाणोबध्नादितीर्य्यते ॥

॥ १—४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ १ ॥

अनिरुद्धस्य विवाहान्तरं वक्तुं तावत् द्विषष्टितमे तस्य बाणकन्यान्तःपुरे प्रवेशमाह—बाण इति ॥ २-४ ॥

---

भाषा टीका

राजा परिक्षत् बोले कि बाणासुर की ऊषा नाम कन्या को अनिरुद्ध, विवाह ते भये, उस समय में श्रीकृष्ण और महादेव का महान् घोर युद्ध भया रहा, हे महायोगिन् इस सबका व्याख्यान करने को आप हि योग्य हो॥ १ ॥

श्रीशुकदेवजी बोले, कि—जिसने वामनावतार हरि के अर्थ पृथिवी का दान कर दिया रहा उस महान् उदारबलि के सौ पुत्रों के मध्य मे ज्येष्ठ पुत्र, बाणासुर बडा वीर रहा ॥ २ ॥

उस बलिका साक्षात् पुत्र बाणासुर, लोक में माननीय तथा उदार और बुद्धिमान् सत्य प्रतिज्ञा धारा तथा दृढ व्रत धारा और सदा महादेव की भक्तिमें परायण होता भया ॥ ३ ॥

वह बाणासुर शोणित नाम रमणीय पुर मे प्रथम राज्य करता भया इन्द्रादिकदेवता, महादेव की कृपा से बाणासुर के किङ्करवत् आज्ञा कारी रहे ॥ ४ ॥

---

श्रीधरस्वामीकृतभावार्थदीपिका।

पुराधिपं पुरपालकम् ॥ ५-६ ॥

स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ।
किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥ ६ ॥
नमस्ये त्वां महादेव ! लोकानां गुरुमीश्वरम् ।
पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥ ७ ॥
दोस्सहस्रं त्वया दत्तं परं भाराय मेऽभवत् ।
त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कामान् पूरयतीति कामपूरः स चासावमराङ्घ्रिपः कल्पतरुस्तं त्वाम् ॥ ७—८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, कथमसौ तादृशं दुर्जनं स्वीकरोति उच्यते सम्पदैश्वर्यसम्बलितकारुण्यगुणस्वाभाव्येनैवेति तत्र कदाचिदस्य दुर्जीवस्य मत्सम्बन्धेन तादृशदोषोऽपयादित्यभिप्रेत्येति ज्ञेयं भगवदावेशमयस्वताण्डवे वाद्यसाहाय्येन कारुण्योदयादिति तदेतदभिप्रेत्याह—भगवानित्यर्द्धेन। अत एव वरेण निमित्तेन छन्दयमास स्वाभिप्रायमाचष्ट बाणं प्रति वरं वृणुष्वेति प्रोवाचेत्यर्थः । सा च बाणस्तं पुराधिपतया वव्रे त्वं मम पुराधिपः स्या इति ॥ ५ ॥

तत्र प्रस्तावविशेषमाह—स इत्यादिना । पार्श्वस्थमिति पुराधिपत्वेन सदा तत्पुरे सपरिवारस्य तस्य निवासात् तथा च हरिवंशे कुम्भाण्डचिन्तायां—

"देवदानवसङ्घानां यः कर्त्ता भुवने प्रभुः ।
स भवः कार्त्तिकेयश्च कृतवासो हि नः पुरे ॥" इति

पार्श्वत इति वा पाठः वीर्य्यदुर्मद इति तदपि वरोन्मुखं प्राप्य स्वदौर्जन्यानुरूपमेव वरयिष्यतीतिभावः । अर्कवर्णेनेति । शिवप्रसादान्महाधनसम्पत्तिस्तयाच तस्य दुर्मदता सूचिता ततश्च सम्यक् स्पृशन्निति भक्तिश्च रजस्तमोमय्येवेति सूचितम् ॥ ६ ॥

नमने हेतुः, हे महादेवेति । सर्वदेवश्रेष्ठत्वादित्यर्थः । किञ्च लोकानां सर्वजीवानां गुरुं सर्वहितोपदेष्टारम् ईश्वरं च प्रभुं नमस्कारे प्रयोजनं सूचयति—पुंसामिति । अतो ममापि कामः पूरयितव्य इति भावः ॥ ७ ॥

वरमपि सगर्वमेव भङ्ग्या व्यञ्जयति । दोरितिद्वाभ्याम् । परं केवलं, भारत्वे हेतुमाह—त्रिलोक्यामिति । त्वदृते त्वां विना इति त्वमेव मम समत्वयातु युद्धं न घटतेवेति प्रयोजनाभावात् भारायैवाभूदित्यर्थः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किम्भूतेनाह— सहस्रबाहुरिति । सहस्रं बाहवो यस्य स बाणः सहस्रबाहुवाद्येनेति समस्तपाठेतु सहस्रबाहुभिर्यद्वाद्यं वाद्यवादनं तेन मृडं रुद्रं ताण्डवे नृत्ये अतोषयत् मृडे ताण्डवं कुर्वति सति सहस्रबाहुभिः पञ्चशतवाद्यानि वादयन् तमतोषयदित्यर्थः । इत्थं तोषितः स भगवान् रुद्रस्तं बाणं वरेण 'अध्ययनेन वसतीतिवत्तृतीया' वरार्थं छन्दयामास स बाणस्तं रुद्रं पुराधिपं पुरपालकं वव्रे त्वं मत्पुरीं पालयत्वत्वेति वव्र इत्यर्थः ॥ ५ ॥

स इति । स बाणः वीर्य्येण दुष्टो मदो यस्य सः अर्क इव वर्णः यस्य तेन किरीटेन तस्य रुद्रस्य पदाम्बुजं स्पृशन् गिरिशमुवाच ॥ ६ ॥

उक्तिमेवाह— नमस्य इति । हे महादेव ! त्वां नमस्करोमि कथम्भूतं न पूर्णः कामो येषां तेषां पुंसां कामान् पूरयतीति तथा स चासौ अमराङ्घ्रिपः कल्पतरुस्तम् ॥ ७ ॥

त्वया दत्तं भुजसहस्रं केवलं मम भाराय भारार्थमेवाभवत् त्वदृते त्वांविना मया सह प्रतियोद्धारं तुल्यं पुरुषं न पश्यामि मदिष्टदैवेन त्वया तु समेनापि न योत्स्यामीति भावः ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तुष्टस्य कृत्यमाह— भगवानिति । वरदानसामर्थ्यं भगवच्छब्देनोक्तं तद्दत्तं कोप्यन्यथा न कारिष्यतीति सूचयितुमाह— सर्वभूतेश इति । सर्वनियामकः स एव भूतश्चेत् शरीरसम्बन्धेन जातः साहङ्कारः तदावश्यमहङ्कारनियामकत्वयो भवति अहङ्कारे सात्विकादिव्युदासं मत्वाऽऽह— सर्वेति । सामर्थ्यप्रतिघातो निरूप्य दातृस्वभावं निरूपयति— शरण्य इति । शरणार्हः स एव भवति यः प्रपन्नदुःखनिवारकः तथाप्युचितदाता चेत् परिमितमेव यच्छेदिति विशेषदानार्थमाह— भक्तवत्सल इति । यथा वत्सला गौरन्तस्थित (इद)मपि दुग्धं तल्लोभेनान्येभ्योपि गच्छति तथा भगवान् भक्तेभ्यः अदेयमपि यच्छतीति वरं ब्रूहीति छन्दयामास छन्दनं कामचारनियोगः ततः स गुह्यं चिकीर्षुर्बाणः सर्वत्र स्वयं गच्छन् शत्रुबाहुल्यात् गृहरक्षार्थं चिन्ताकुलितः तं महादेवं पुराधिपं पुररक्षकं वव्रे अनेन तस्य पुरस्य सर्वाभेद्यता निरूपिता तेन देवादीनामपि तत्र प्रतीकारो निवर्तितः ॥ ५ ॥

तर्हि तादृशस्य कथं नाश इत्याशङ्क्य तस्यैव क्रोधेनेति वक्तुं प्रसङ्गान्तरमाह— स एकदेति पञ्चभिः । गिरिशो महादेवः

कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ।
आद्यायां चूर्णयन्नद्रीन् भीतास्ते विप्रदुद्रुवुः ॥ ९ ॥
तच्छ्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा ।
त्वद्दर्पघ्नं भवेन्मूढ ! संयुगं मत्समेन ते ॥ १० ॥
इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ॥ ।
प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः ॥ ११ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्रैव गिरौ शेत इति निरन्तरस्थित्या भक्त्यै सूचितं पार्श्वस्थमिति तत्रापि भक्तकृपया तत्रैव पार्श्वे वर्त्तमानं तेन सुतरामेव , तस्य क्षयः वीर्यस्य दुष्टो मदो यस्य उपजीव्यातिक्रमकर्त्ता वीर्यक्षयेन विवेकरहितस्य कृत्यमाह– किरीटेनार्कवर्णेनेति । विनीतो हि मुकुटोष्णीषादिकं स्थापयित्वा साष्टाङ्गं प्रणतः विज्ञापयेत् अयन्तु किरीटमेव परिधाय तत्राप्यर्कवर्णस्पर्शोत्यन्तपरुषं तेन चरणाम्बुजमतिकोमलं स्पृशन् आह— नमस्य इति । स्तौति वाचा नमस्कारो वा महादेवेति न त्वत्सदृशोऽन्योऽस्ति य उपास्यः स्यादिति लोकानां गुरुमिति उपदेष्टा फलदाता च भगवानेवेति साधनफलरूपत्वं निरूपितं तेन त्वमेव प्रार्थनीयः नत्वन्य इति प्रार्थनायां हेतुरुक्तः । किञ्च प्रार्थितं सर्वम् अयुक्तमपि प्रयच्छति नापि यत्किञ्चित्प्रार्थनायामपि क्रोधं मन्यत इति दृष्टान्तमिवाह— पुंसामपूर्णकामानामिति । देवान्तरतपःप्रभृतिसाधनैः येषां कामनाः न सिद्धा भवन्ति सर्वोपायपरिभ्रष्टानाम् आश्रयमात्रेण सर्वपूरकममराङ्घ्रिपवत् कल्पवृक्षवत् कामपूरकः अमराङ्घ्रिपः यः ॥६—७॥

एवं प्रार्थितार्थसिद्ध्यर्थं व्याजेन युद्धं याचते—दोस्सहस्रं त्वया दत्तमिति । क्रियाशक्तिबाहुल्यार्थं सहस्रं बाहवो दत्ताः तेन निर्विषयाः सार्थका न भवन्ति विषयस्तु समानेनाधिकेन वा सङ्ग्रामः तदभावात् भाराय परमभवन् यथा शीताभावे वस्त्राणि भारायन्ते युद्धाभावे वा शस्त्राणि, वैयर्थ्यं प्रकटयति त्रिलोक्यां प्रतियोद्धारमिति । तर्हि शत्रुशङ्काभावे किं बाधः निष्फलत्व ? तद्विद्यमानैरेव यथायोग्यं क्रियतामित्याशङ्क्य समेनैव युद्धं कर्त्तव्यमिति समस्य तव विद्यमानत्वात् त्वदृते अन्यं समं न लभे अनेन भगवान् अस्ति परं स न इन्द्रियविषय इति न लभे इत्युक्तम् ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

छन्दयामास वशयामास विस्मितेव रणेन वरेण तं वशीचकारेत्यर्थः । "अभिप्रायवशौ छन्दौ" इत्यमरः । स बाणः तं पुराधिपं स्वपुरपालकं वव्रे ॥ ५—६ ॥

कामपूरको योऽमराङ्घ्रिपः कल्पतरुस्तत्तुल्यम् ॥ ७ ॥

तस्मान्ममेदं दुःखमुपशमयितव्यमित्याह—दोरिति । त्वदृते त्वां विनेति यदि कृपया स्वयं त्वमेव मे प्रतियोद्धा भवेस्तदैव मे रणकण्ड्वा दुःखाब्धिस्तार इति ध्वनिः । ततश्च त्वां विजित्यैव सर्वदिग्विजयेन सम्पूर्णेन सम्पूर्णयशा अहं भवेयमित्युद्ध्वनिः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरस्य अधिपं रक्षकम् ॥ ५—६ ॥

कामपूरश्चासावमराङ्घ्रिपो देवद्रुमश्च स तथा ॥ ७—८ ॥

भाषा टीका ।

हजार भुजा वारे बाणासुर ने हजार भुजानों से नाना प्रकार के बाजे बजाकर ताण्डव नृत्य में महादेवजी को प्रसन्न कर लिया, सब भूतन के ईश्वर आश्रयण के योग्य भक्तन में प्रेमवारे महादेव भगवान् प्रसन्न होकर बाणासुर से बोले, कि-तुम वर मागो, उस बाणासुर ने कहा महादेवजी से यह मागा कि आप हमारे पुरका पालन करने वारे होकर विराज मान रहो ॥ ५ ॥

बल करके दुष्ट मदवारा बाणासुर सूर्य के समान प्रकाश मान किरीट से महादेवजी के चरणारविन्द का स्पर्श कर पास में विराजमान महादेवजी के वो दुष्ट प्रति यह बोलत भया ॥ ६ ॥

हे महादेव ! लोकन के गुरु ! तथा ईश्वर और जिन के मनोरथ पूर्ण नहिं भये उन पुरुषों के मनोरथ पूर्ण करने वारे कल्प वृक्ष रूप को मैं नमस्कार करता हूं ॥ ७ ॥

आपने मोको हजार भुजा दिये परन्तु वह भुजा के बल मेरे बोझाहि का हेतु भया आपके सिवाय मेरे साथ युद्ध करने वारे को त्रिलोकी में वह प्राप्त नहिं होता ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे आद्य ! निभृतैर्भरितैर्दोर्भिरद्रींश्चूर्णयन् अयामगच्छम् ॥ ९—१० ॥

**तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ।**
**कन्याऽलभत कान्तेन प्रागदृष्टश्रुतेन सा ॥ १२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्ववीर्यस्य नशनं नाशनं केतुभङ्गं प्रतीक्षमाणः ॥ ११ ॥

श्रीमहेशादिष्टसङ्ग्रामस्य प्रसङ्गमाह—तस्योषेति प्राद्युम्निनाऽनिरुद्धेन तत्रापि स्वप्ने ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न च वैफल्येनैव दुःखमित्याह—कण्डूत्येति । कण्डूतिवत् दुस्सहा युद्धस्पृहा तया ते दिग्गजा अपि आद्य सर्वश्रेष्ठेति त्वमेव मम युद्धयोग्यो न त्वन्य इति त्वमेव मया युद्ध्यस्वेतिभावः । एवं श्रीभगवद्बहिर्मुखस्य स्वसेव्यतया गृहीते देवतान्तरेऽप्यपराध एव फलितः स्यादिति दर्शितम् ॥ ९ ॥

रुद्रोपि भगवान् भूतभव्यभवद्भूतश्च ईश्वर आहेति शेषः । तदनुरूपमेवोक्तवानित्यर्थः । केतुर्मायूरध्वजः भज्यते स्वयमेव हे मूढेति स्वाभीष्टसिद्धिश्च न जानासि दुर्दर्पेणैव च वृणोषीति भावः । मत्समेनेति एतावतैवास्य चमत्कारो भविष्यति किमधिकनिर्देशेनेति भावः । वस्तुतस्तु मया लक्ष्म्या सह वर्त्तत इति समः श्रीकृष्णः मदीयो मत्सेव्यो यः मत्समस्तेन सहेत्यर्थः ॥ १० ॥

इत्युक्तो हृष्टः यतः कुमतिः कुत्सितो विचारो यस्य सः 'ततश्च स्ववीर्य्यस्य नशनं यस्मात्तादृशं गिरिशादेशं तदादिष्टमर्थं प्रतीक्षमाणः स्वगृहं प्राविशत् यतः कुधीः दुर्व्यवसाय इति टीकायां नशनं नाशमिति नाशरूपमित्यर्थः । नशनं नाशनमिति क्वचित्पाठः 'तदैव ध्वजश्चासौ भग्न इति ज्ञेयं तथा च श्रीविष्णुपुराणे—

"ततः प्रणम्य मुदितः शम्भुमभ्यागतो गृहम् ।
भग्नं तं ध्वजमालोक्य दुष्टो हर्षान्तरं ययौ ॥" इति

ईदृशं हरिवंशेपि किन्तु बाणकुम्भाण्डयोः सम्वादस्तत्र विशेषः ॥ ११ ॥

कन्याकुमारी कान्तेन श्रीपार्वत्याः पतित्वेनादिष्टेनेत्यर्थः । तथा च श्रीविष्णुपुराणे—

उषा बाणसुता विप्र पार्वतीं शम्भुना सह ।
क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम् ॥
ततः सकलचित्तज्ञा गौरी तामाह भाविनीम् ।
अलमत्यर्थपापेन भर्त्रा त्वमपि रंस्यसे ॥
इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः ।
को वा भर्त्ता ममेत्येनां पुनरप्याह पार्वती ॥
वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव ।
करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति" ॥

इति ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कण्डूत्येति । निभृतैर्भरितैर्भुजैर्योद्धुमिच्छुः अद्रीन् चूर्णयन् दिग्गजानभ्ययाम् अभिद्रुतवानस्मि तेपि दिग्गजा अपि दुद्रुवुः ॥ ९ ॥

तदिति । तद्बाणवचः श्रुत्वा भगवान् रुद्रः प्राहेति शेषः उक्तिमेवाह— केतुरिति । तव केतुर्ध्वजो यदा भज्यते स्वयमेव भग्नः पतेदित्यर्थः । तदा हे मूढ ! तव दर्पं हन्तीति तथाभूतः भवेत सम्भवेत् तेन अमत्समेनेति छेदः नाहं समो यस्य स तेन मत्तोप्यधिकेन त्वद्दर्पघ्नेन संयुगश्च भवेत् ॥ १० ॥

इतीति । हे नृप ! कुबुद्धिर्बाणः स्ववीर्यं भ्रंशयतीति तथा तं गिरिशस्यादेशं केतुभङ्गात्मकं प्रतीक्षमाणो गृहान् प्राविशत् ॥ ११ ॥

एवं स्थिते रुद्रादिष्टसङ्ग्रामप्रसङ्गमाह—तस्येत्यादिना । तस्य बाणस्य दुहिता उषा नाम कन्या प्रागदृष्टः श्रुतश्च तेन प्राद्युम्निना अनिरुद्धेन सह रतिं लेभे ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तच्छ्रुत्वेत्यादि । मत्समेन अहं समः स श्रीको यस्मात् स तथा यस्य प्रसादादहमीश्वर इत्यर्थः । तेन मदधिकेनेत्यर्थः । यद्वा समेन सश्रीकेन श्रीलक्ष्मणेन श्रीकृष्णेन समं संयुगं भवेत् कीदृशं मतमथ्नातीति मत् किंपि रुपम् अतस्त्वद्दर्पघ्नः ॥ १०—१६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि मास्तु युध्यतामित्याशङ्क्याह— कण्डूत्येति । निभृताः पूर्णाः अन्तस्स्थातुमशक्ताः तर्हि युद्धाभावे अन्य एव कश्चित् कण्डूतिनिवृत्त्यर्थम् उपायः क्रियतामिति आशङ्क्य दिग्गजानहं युयुत्सुः चूर्णयन्नद्रीन् अन्वयाः पर्वता अपि चूर्णीकृताः दिग्गजा अपि युद्धार्थमन्विष्टाः बलमुभयथा क्षीणं भवति शौर्यरूपं युद्धेन बलरूपं पराक्रमेण तत्राचेतनाः चूर्णीभूताश्चेतनास्तु पलायिता इति वैयर्थ्यमेव जातमित्यर्थः ॥ ९ ॥

एवं गर्वं श्रुत्वा क्रुद्धो भगवानित्याह—तच्छ्रुत्वेति । भगवान् सर्वज्ञः महादेवः क्रुद्धः आहेति पूर्वोक्तैव क्रिया अनुवर्त्तनीया यदा ते केतुः भज्यते तदेव तवाभिज्ञापकं युद्धप्राप्तौ केतुर्ध्वजः वंशस्य कन्या जारोपभुक्ता भग्नकेतुरुच्यते अकस्मात् रथस्थे तस्मिन् केतुभङ्गश्च तदा त्वद्दर्पघ्ने त्वद्दर्पहननार्थमेव संयुगं मत्समेन भगवता भविष्यति मया समः भगवान् सर्वसम इति महादेवेनापि समः ॥ १० ॥

एवं युद्धसम्भवमाकर्ण्य प्रीतो जात इत्याह— इत्युक्त इति । महादेवेनैवमुक्तः हृष्टो जातः कुमतिः तस्य महादेववाक्ये विश्वासमाह— स्वगृहं प्राविशदिति । स्वयमुद्यममकृत्वा स्वगृहं

सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी ।
सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १३ ॥
बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता ।
सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता ॥ १४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रविष्टः गिरिशादेशं प्रतीक्षन् आस्ते यद्यपि स आदेशः स्ववीर्यनाशकः तथापि कुधीः ॥ ११ ॥

तस्य केतुभङ्गप्रकारमाह–तस्योषा नाम दुहितेति। अत्र पुराणान्तरे उषा पत्यर्थं पार्वतीं प्रार्थितवती ततः सा तुष्टा अद्य यः स्वप्ने त्वां भजिष्यति स तव पतिरिति पार्वत्योक्ता आधिदैविकः प्रद्युम्नरूपः भगवान् स्वप्नसृष्टौ मायिकया तामालिङ्ग्य स्वभावं तत्र स्थापितवान् ततः सा वस्तुत आधिदैविकेन प्राद्युम्निना रतिमलभत कन्यायाः रतिर्व्रतभङ्गहेतुर्भवति मनोरथमात्रत्वं निवारयति-कान्तेनेति। तर्हि भावनयैव मनोरथतुल्यः स्वप्नः तथा जात इत्याशङ्क्याह--प्रागदृष्टश्रुतेनेति। प्राक् ततः स्वप्नात्पूर्वं न दृष्टः श्रुतो वा कदाचिदपि तदा वै निश्चयेनेति दैवोपपत्तिरुक्ता ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कण्ड्वा रणकण्डूयया नितरां भृतैः परिपूर्णैर्दोर्भिर्युयुत्सुरहं दिग्गजान् प्रति हे आद्य अयाम अगच्छम् ऐशानीं दिशं विना सर्वा एवान्या दिशो मया जिता एव परन्तु अष्टौ दिग्गजान् जित्वा ममाष्टदिग्विजयोऽस्त्वित्यभिप्रायेणाहं गतवानितिभावः। किं कुर्वन् भुजबलकण्डूयनिवर्त्तनार्थमद्रींश्चूर्णयन् ते दिग्गजा अपि भीताः अतः कथय त्वया सह युद्धं विना मम रणकण्ड्वा कथमुपशाम्यतु तस्या उपशमं विना मम कथं धैर्यं भवेदिति मयि दोषो न देय इति भावः ॥ ९ ॥

क्रुद्ध इति प्रथमं तज्जिघांसा शिवमनस्युदभूदिति भावः ततश्च स्वहस्तेनैव स्वसेवकवधोऽनुचितः परन्तु मत्प्रसादलब्धं महाबलवद्भुजसहस्रं यद्ययं दुर्मदो भारं मन्यते तर्हि भारावतारणकर्त्ता मत्प्रभुरेव खल्विममपि भारमपनेष्यतीति परामृश्याह केतुर्मायूरध्वजः भज्यते स्वयमेव यदा वर्त्तमानसामीप्ये वर्त्तमानत्वं मत्समेनेति तं प्रीणयितुमुक्तं वस्तुतस्तु मा शोभा तया सह वर्त्तमानः समः अहं समः सशोभा यतस्तेन अत्र क्रुद्ध इत्यनन्तरमुवाचेति शेषः ॥ १० ॥

कुमतिरिति यदयं मूढेति मां सम्बोध्य त्वद्दर्पघ्नं संयुगे भवेदिति ब्रूते तदयमेव मूढः मद्दर्पघ्नस्य संयुगस्यासम्भवादेवेति कुत्सितं मननं विचारो यस्य सः परन्त्वेतादृशवाक्येनानुमीयते मदीयरणकण्ड्वापशामकः कश्चिद्बलिष्ठो योद्धुमेष्यतीति मत्वा हृष्टः स्ववीर्यस्य नशनं नाशो यस्मात् तं गिरिशादेशं तदादिष्टं केतुभङ्गं प्रतीक्षन् प्रतीक्षमाणः कदा मे केतुभङ्गो भविष्यतीत्यलक्षणसोत्कण्ठत्वात् कुधीः ॥ ११—१२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे आद्य मरीच्यादिभ्यः पूर्वज ! कण्ड्वा निभृतैर्भरितैर्दोर्भिः। कुपद्गतिशान्त्यर्थम् अद्रीन् चूर्णयन् दिग्गजान् प्रति अयाम् अगच्छम् ते दिग्गजा अपि भीताः प्रदुद्रुवुः ॥ ९ ॥

भगवान् शिवः मत्समेन ते संयुगम्भवेत् इत्याह कदैतदाकाङ्क्षायामाह यदा ते केतुर्भज्यते ॥ १० ॥

स्ववीर्यस्य नशनं नाशो यस्मात्तं गिरिशादेशं केतुभङ्गात्मकम् प्रतीक्ष्यमाणः ॥ ११ ॥

शिवादिष्टसंयुगप्रसङ्गमाह–तस्येति ॥ १२—१४ ॥

---

भाषा टीका।

हे आद्य ! युद्धकी इच्छा जनित खुजार से परिपूर्ण भुजा करके युद्ध करने की कांक्षा से पर्वतन को चूर्ण करत मै दिग्गजन के प्रति गया तबतो वेभी भयभीत होकर भगगये ॥ ९ ॥

बाणासुरके इस वचन को श्रवण करके महादेवजी क्रोध होकर बोले कि हे मूढ ! जब तेरे रथकी ध्वजाका भङ्ग होगा तब मेरे सदृश के साथ तेरे अहङ्कारकारका नाश वारा- युद्ध होगा ॥ १० ॥

हे राजन् ! महादेवजीने उसको इस प्रकार कहा तब तो कुबुद्धि प्रसन्न होकर निजगृह में चला गया महादेवजी के कहे हुए निजवीर्यके नाश सूचक वचन की प्रतीक्षा करत दुष्ट बुद्धि बाणासुर वहा रहा ॥ ११ ॥

बाणासुर की ऊखा नाम करके पुत्री भई वह कन्या प्रथम न देखे न सुने और प्रति मनोहर प्रद्युम्न के साथ स्वप्नमें रमण को प्राप्त होती भई ॥ १२ ॥

---

श्रीधरस्वामीकृतभावार्थदीपिका।

तं कान्तमपश्यन्ती सा उत्तस्थौ ॥ १३ ॥

ततः किं वृत्तं तत्राह--बाणस्येति ॥ १४ ॥

---

कं त्वं मृगयसे सुभ्रु: कीदृशस्ते मनोरथः ।
हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥
ऊषोवाच ।
दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ।
पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः ॥ १६ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

हस्तग्राहं भर्तारम् ॥ १५—१८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विह्वला भर्त्तुर्विरहात् यद्वा रतिपरिश्रमाद्याकुला अतो व्रीडिता तथा च हरिवंशे—

"सा स्वप्ने रमिता तेन स्त्रीभावञ्चापि लम्भिता ।
शोणिताक्ता प्ररुदती सहसैवोत्थिता निशि" ॥ इति

तदेवं श्रीमदनिरुद्धस्य साक्षादागमनमेव गम्यते तच्च वक्ष्यमाणया चित्रलेखयेव देव्या कृतमेव ज्ञेयं तदिदमुत्तरञ्च तस्य वृत्तं नरलीलाव्यञ्जनादूघटते ॥ १३ ॥

सखी सखीमिति विश्वास उक्तः अतोऽपृच्छत् अतोऽनेन कुम्भाण्ड इत्यस्य नान्वयः किन्तु तत्सुतात्वनिर्देशानुवादमात्रत्वम् अतश्चशब्दोऽपि तुशब्दार्थ एव कौतूहलेति तस्यास्तादृगुक्त्यादिना ॥ १४ ॥

मृगयसे कासीत्युक्ते: तत्र च कान्तेति यदुक्तं तत्राह—हस्तेति ॥ १५ ॥

हृदयङ्गम इत्यनुक्तं यौवनोद्भेदादिकमपि सङ्गृह्णाति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सेति । सा स्वप्नोत्थिता उषा तं कान्तमपश्यन्ती कासि कासि कास्से कास्स इत्येवं वदन्ती तत्तदा नितरां व्रीडिता लज्जिता च ॥ १३ ॥

ततः किमासीत्तत्राह—बाणस्येति । तस्य कुम्भाण्डस्य सुता चित्रलेखा इदमन्वर्थं नाम सा कौतूहलेन युक्ता सखीमुषामपृच्छत् ॥ १४ ॥

प्रश्नमेवाह—तमिति । हे सुभ्रु ! मनोरथविषयः कीदृशः हे राजपुत्रि ! ते तव हस्तग्राहं हस्तं गृह्णातीति तथा तं भर्त्तारम् अद्यापि नोपलक्षये इत्थन्त्वेन न निश्चिनोमीत्यर्थः ॥ १५ ॥

एवमुक्ता प्राहोषा;—दृष्ट इति । हृदयङ्गमः मनोहरः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तस्या व्रतसमाप्तिं कृत्वा गते स्वप्नान्ते उत्थिता तत्र शय्यायां स्वप्नस्य समाने देशे तमनिरुद्धमपश्यन्ती कासि कान्तेति भाषन्ती सखीनां मध्ये उत्तस्थौ सा हि परितः सख्यो मध्ये शेते गुप्तं सखीषु अन्वेषन्तीव सा उत्थिता उत्थितायाः अप्युपभोगलक्षणमाह--विह्वलेति । अन्तर्व्रीडिता भृशमत्यर्थं स्वावस्थां स्मृत्वा पूर्वमेव ॥ १३ ॥

पार्श्वस्था चित्रलेखानामयोगिनी तस्याः सखी निष्पादिता यया तस्या मनोरथः सर्वोऽपि सिद्धो भवति यद्यप्यन्या अपि जिज्ञासां कृतवत्यः तथापि सा प्रयोजिकेति चित्रलेखाया उपाख्यानमुच्यते—बाणस्य मन्त्रीति । मन्त्र्यधीनं राज्यमिति । स महादेवेनेति दत्त इति ज्ञापितं कुम्भाण्ड इति नाम नतु कुम्भाकारावण्डाविति तस्य दुहिता चित्रलेखा चकारादन्या अपि तस्य कन्या उषासख्यः सखी उषाया उभयोरन्योन्यसखित्वेन गोप्यं किञ्चिद्वाशिष्यते वक्तव्ये इति सखीमुषामित्युक्तम् । अथैव पार्श्वत्युक्तमथैवेयं विह्वलेति कौतुकसमन्विता ॥ १४ ॥

तस्या वाक्यमाह—कान्तं मृगयस इति । भ्रूभङ्गादिभावो दृश्यत इति अकन्यात्वं तस्या आह—ननु कान्तान्वेषणं युक्तमेवेति चेत् तत्राह—कीदृशस्ते मनोरथ इति । मनोरथे कृते स्वप्ने तथा दृश्य इति दृष्ट एवोपाय इति तं मनोरथमेव पृच्छति कश्चिन्मनोरथो भविष्यतीति चेत् तत्राह—हस्तग्राहमिति हस्तो गृह्यते अनेनेति हस्तग्राहः पतिः अस्मिन्निति विवाहो वा अद्यापि ते विवाहं न लक्षये कस्याश्चिद्बाल्य एव विवाहो भवति पश्चात्सखीभिः सम्बन्धः तदापि विवाहो जात इति लक्ष्यते विवाहे तु कुलकन्यायाः तत्र मनोरथो युक्तो भवति राजपुत्रीति पदात् निरोधेन यथेच्छया सम्बन्धो निवारितः ॥ १५ ॥

उत्तरमाह—दृष्ट इति । कश्चिद्विशेषतो निर्वक्तुमशक्यः नरवरः मनुष्यश्रेष्ठः सर्वेषामाकृतिभिर्नेति स न देवः नापि दैत्यः अन्यो वा किन्तु नरश्रेष्ठ एव स्वप्ने कार्त्स्न्यानभिव्यक्तिरिति केवलं भ्रमः स्यात् तत् प्रकृते नास्तीति आकृतिरूपगुणादीन् वर्णयति सर्वलक्षणसम्पन्नं नरत्वम् आकृतिः श्याम इति रूपं कमललोचन इति सौन्दर्यं पीतवासा इति भूषितत्वं बृहद्बाहुरिति भोगयोग्यता योषितां हृदयङ्गम इति सम्भोगसामर्थ्यम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महेशादिद्वन्द्वयुगप्रसङ्गमाह—तस्येति । प्राद्युम्निना अनिरुद्धेन स्वप्न इति तत्कारणं श्रीविष्णुपुराणे यथा—

तमहं मृगये कान्तं पाययित्वाऽधरं मधु ।
क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १७ ॥

चित्रलेखोवाच ।

व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ।
तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ १८ ॥
इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान् ।
दैत्यविद्याधरान् यक्षान् मनुजांश्च यथाऽलिखत् ॥ १९ ॥
मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् ।
व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उषा बाणसुता विप्र पार्वतीं शम्भुना सह ।
क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम् ॥
ततः सकलचित्तज्ञा गौरी तामाह भाविनीम् ।
अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥
इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः ।
कोवा भर्त्ता ममेत्येनां पुनरप्याह पार्वती ॥
वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव ।
करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति ॥
इति ॥ १३-१४ ॥

हस्तग्राहं भर्त्तारं विवाहाभावाच्च लक्षये ॥ १५-१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हस्तं गृह्णातीति तथा तं पतिम् ॥ १५-१७ ॥

भाषा टीका ।

वह ऊषा स्वप्नमें अनिरुद्ध को नहि देखत विह्वल होकर हे कान्त ! आप कहां चलेगये इस प्रकार विलाप करती २ सखीन के मध्य में उठबैठी और अत्यन्त लज्जित होगई ॥ १३ ॥

कुम्भाण्डनाम करके बाणासुर का मन्त्री रहा उस को चित्रलेखा पुत्री ऊषा की सखी रही वह आश्चर्ययुक्त होकर अपनी सखी ऊषा के प्रति पूछती भई ॥ १४ ॥

हे सुभ्रू हे राजपुत्रि ! आप के हस्तग्रहण करने वारे पति को अबतक भी मैं नहि देखी फिर हे कान्त कहां चलेगये इस वचन से तुम किस का खोज करती हो तुम्हारा का मनोरथ है सो कहो ॥ १५ ॥

चित्रलेखा के इस वचन को सुनकर ऊषा बोली कि श्यामसुन्दर कमल के समान नेत्रवाला पीताम्बर धारन किये लम्बी भुजा वाला स्त्रियों के मन का हरन करने वाला एतादृश एक पुरुष मैंने स्वप्न मे देखा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्ने त्वया दृष्ट एषां मध्ये को वा भवेदिति देवादीन् यथावत् पटेऽलिखत् ॥ १९ ॥

प्रद्युम्नं लिखितं वीक्ष्य श्वशुरोऽयमिति लज्जिता ॥ २०—२२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आधरं अधरसम्बन्धि मधु स्पृहयन्तीम् अपूर्णकामामित्यर्थः ॥ १७ ॥

अपकर्षामीति वर्त्तमाननिर्देशः शैघ्र्यबोधनार्थः यतो यदि त्रिलोकीमध्ये भाव्यते मया लिखितस्तदाकारो भवत्यानुसन्धीयेत तदा तमानेष्य इत्यर्थः । तमादिश इति आदिश चित्राणि दृष्ट्वा कथयेत्यर्थः ॥ १८ ॥

श्यामत्वादिलक्षणे गदितेऽप्यन्यानलिखदिति स्वसर्वज्ञता ज्ञापनेन तस्याः विश्वासोत्पादनार्थमिति ज्ञेयं नाना तादृशानां सह योगिन एव ते ज्ञेयाः विशेषां लिखनस्यानन्त्यप्राप्तेः ॥ १९ ॥

मनुजेष्विति युग्मकम् । विशेषेणालिखदिति नर इत्युक्त्वा तत्रापि श्यामलादिलक्षणोक्त्या तेष्वेव सम्भावनात् प्रद्युम्नं विलिखितं वीक्ष्य लज्जिता स्वाभाविकभावात् अनिरुद्धन्तु वीक्ष्य विलिखितं ह्रिया भावविशेषजनितयाऽवाङ्मुखी सती एवकुर्वादिभेदेन लज्जाया अपि भेदश्चेतसो नेत्रादेरपि सङ्कोचविकासादितो ज्ञेयः प्रकर्षेण सगद्गदत्वादिनाह हे महीपते इति चित्रलेखायास्तादृशं लिखनसौष्ठवम् ऊषायाश्च प्रत्यभिज्ञानादिकं पृथ्व्यां कुत्रापि न सम्भवेदिति त्वया पृथ्वीशत्वाद्विज्ञायत एवेति भावः ॥ २०—२१ ॥

अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया ।
सोऽस्मावसाविति प्राह स्मयमाना महीपते ! ॥ २१ ॥
चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ।
ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम् ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । मृगये विचिनोमि स्पृहयतीं काङ्क्षन्तीं मां दुःखार्णवे क्षिप्त्वा क्वापि नूनं यातः ॥ १७ ॥

इत्येवमुक्ता प्राह चित्रलेखा—व्यसनमिति । तव व्यसनं दुःखमपनयामि कथं त्वया यदि त्रिलोक्यां कश्चिद्भाव्यते अयमेवेति निश्चीयते तर्हि तं नरं पुरुषमानेष्ये अतो यस्ते मनोहर्त्ता तं प्रति मामादिश आज्ञापय ॥ १८ ॥

इतीति । इत्युक्त्वा देवादीन् पटे यथावदलिखत् ॥ १९ ॥

यद्वाच मनुष्येष्वपि वृष्णीन् तत्रापि शूरादीनलिखत् तदा प्रद्युम्नं वीक्ष्य लज्जिता पुत्रतुल्यरूपत्वादिति भावः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तमहमित्यादि । आधरम् अधरसम्बन्धि मधु ॥ १७—३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, दर्शनमात्रेण कथं कान्तत्वं तत्राह—तमहं मृगये कान्तमिति । स मम कान्तो जातः अतो मृगये कथं जात इत्याकाङ्क्षायामाह-पाययित्वाधरं मधु इति । अनेन सर्वेपि सम्बन्धा निरूपिताः बहुधा सम्बन्धे हि सामर्थ्यक्षये क्रियाः पुरुषाधरपानम् अनेन बहुकालवस्थानं सूचितं ततः क्वापि यातः ननु विलीनः भोगलक्षणानां विद्यमानत्वात् विशेषसुखमदत्त्वा गत इति युक्तमन्वेषणमिति वक्तुमाह—स्पृहयन्तीं मां वृजिनार्णवे क्षिप्त्वेति रसोद्बोधमुत्पाद्य तदपूरणात् दुःखम् ॥ १७ ॥

ततः सख्याः प्रतिज्ञामाह—व्यसनं तेऽपकर्षामीति । यदि त्रिलोक्यां स तदा ते व्यसनमपकर्षामि कथमित्याकाङ्क्षाया-माह—भाव्यत इति । चित्रे मया लिख्यते तत्र यस्ते मनो हर्त्ता तमादिश तमहमानयिष्यामीति व्यसनापकर्षणप्रकारः यद्यपि नरवर इति विशेषकथनात् देवादीनां लेखनमसङ्गतं तथापि देवादयो रूपान्तरेणोपभोगार्थमायान्तीति देवा नररूपा एवात्र लिख्यन्ते ऊर्ध्वाधःपर्यन्तं स्त्रीणां दृष्टिः अतः आदौ देवलेखनं एते त्रिगुणात्मयो गुणा देवादयो नव सामान्यतो लिखिताः चकारात् मनुष्येषु सर्वप्रकाराः देवादिष्वपि वा मनुष्येषु श्यामत्वादिधर्माः उक्ताः इति तत्साम्यं यादवेष्वेव वर्त्तत इति ॥ १८—१९ ॥

मनुजेषु स्म वृष्णीनलिखत् ततोपि हृदयङ्गमादिधर्मैः उत्त-रोत्तरवैशिष्ट्यरूपत्वात् वृष्णिषु शूरमलिखत् तस्य च पुत्र-मानकदुन्दुभिं वसुदेवं तत्र यद्यपि रामो न श्यामः तथापि रूपोत्तरेण तथा कुर्यादिति रामोऽपि लिखितः राम-कृष्णौ चेति चकारात् प्रद्युम्नोपि लिखितः प्रद्युम्नं लिखितं वीक्ष्य ईषद्वैलक्षण्यात् तत्पुत्रो भवितुमर्हतीति निश्चित्य विलज्जिता । यद्यपि भगवान् तादृशमकृत्रिमरूपं कर्तुं शक्तः तथापि मर्या-दायामेकैकस्य गुणस्याभिव्यक्त्यर्थम् एक एव पदार्थो निर्णीयते ततो यादृशो गुणो ऽनिरुद्धनिदानभूतः तेनानिरुद्धो निष्पादित एव अन्यः क्रियमाणः कृत्रिम एव भवतीति वैलक्षण्यं अत्र-त्यैव आधिदैविको दृष्टः इति अनिरुद्धो वा स्वयं मायया तथा आगत इति न वैलक्षण्यं लज्जया ज्ञातवती एतत्पुत्रो भवि-ष्यतीति भर्तृपितामहादिभ्यो न लज्जेति लौकिकाः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भाव्यते प्राप्यते ॥ १८—१९ ॥

एतेषां पुरुषाणां मध्ये तव पुरुषः क इति पृष्टा उषा प्रद्युम्नं वीक्ष्य श्वशुरोयमिति बुद्ध्वा लज्जिता तत्पुत्रमनिरुद्धं वीक्ष्य सोऽसावसाविति ह्रीकिलकिञ्चितविस्मयहर्षोदयात् अतस्तत्र चित्र-पटे अयमस्य पुत्रोऽयमस्य नामेति प्रतिलेख्य प्रतिमोपरि तया अक्षराण्यपि लिखितानीति बुध्यते ॥ २०—२२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्राप्तं व्यसनं वियोगजं दुःखमपकर्षाम्यपनयामि यदि भाव्यते अयमेवेति निश्चीयते ॥ १८ ॥

यथा यथावत् ॥ १९—२४ ॥

---

भाषाटीका ।

वह पुरुष अपने अधरामृत को पिवाय कर और उसकी वाञ्छा करने वारी मोको विरहरूप समुद्र में गेरकर कहुं चलागया उस कान्त को मैं खोजतीहूँ ॥ १७ ॥

ऊषा का वचन सुनकर चित्रलेखा बोली कि—तेरे कष्ट को मैं निवृत्त करूंगी जो तुम्हारे मनका हरन करने वारा पुरुष यदि वह मेरे लिखेभये त्रिलोकी के चित्राय में आन्यो जायगो तो उस को मैं तेरे पास लेआऊंगी तू चित्राय में देखकर उस को बता ॥ १८ ॥

चित्रलेखा ऐसा कहकर देव, गन्धर्व, सिद्ध चारण नाग दैत्य विद्याधर यक्ष राक्षस और मनुष्यों को यथावत् लिख-ती भई ॥ १९ ॥

मनुष्यन में भी यदुवंशीन को उन में भी शूर तथा वसु-देवजी और राम कृष्ण को वह लिखती भई । जब प्रद्युम्न को लिखा तब उस को देखकर अपना श्वशुर जान कर ऊषा लज्जित होगई ॥ २० ॥

तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता ।
गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥ २३ ॥
सा च तं सुन्दरवरं विलोक्य मुदितानना ।
दुष्प्रेक्ष्ये स्वगृहे पुंभीरेमे प्राद्युम्निना समम् ॥ २४ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

शोणितपुरं नीत्वा ॥ २३ ॥
पुंभिर्दुष्प्रेक्ष्ये प्रेक्षितुमशक्ये ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

योगिनीति । स्वत एव तस्या विद्याविशेषवत्त्वात् किम्वा श्रीहरिवंशोक्त्यनुसारेण श्रीनारदतो विद्याप्राप्तेः तथाच तत्र श्रीभगवतो बिभ्यती चित्रलेखा समाश्वास्य तेनोक्ता—
"गृह्यतां तामसी विद्या सर्वलोक प्रमोहिनी ।
कृतकृत्यास्तु दैतेयी एतां विद्यां ददाम्यहम्" ॥ इति
कृष्णेन स्वयं भगवता पालितामपि अतस्तदिच्छयैव नतस्सर्वमिति भावः । तत्र बुद्ध्या प्रकाशमानत्वमवकलयस्येवेति सम्बोधयति राजन्निति ॥ २२ ॥
प्रियं वल्लभम् ॥ २३ ॥
मुदितं हर्षेण विकासितमाननमपि यस्याः सा हर्षोद्रेकेण अवहित्थायामप्यशक्तेः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ततोऽनिरुद्धमवलोक्य ह्रिया लज्जया अवाङ्मुखी बभूव स स्वप्नदृष्टः असावेवासावेवेति प्राह—हे महीपते ! ॥ २१ ॥
तमुषया निश्चितं कृष्णस्य पौत्रमनिरुद्धं विज्ञाय योगिनी वैहायसगमनाऽन्तर्धानतूर्णगमनाद्यावहयोगशालिनी आकाशमार्गेण द्वारकां ययौ ॥ २२ ॥
तत्र द्वारकायां शोभने पर्यङ्के सुप्तं प्राद्युम्निमनिरुद्धं गृहीत्वा शोणितपुरमागत्यैति शेषः सख्यै उषायै ॥ २३ ॥
साचेति । सा उषा पुम्भिरितरैः प्रेक्षितुमप्यशक्ये स्वगृहे प्राद्युम्निना अनिरुद्धेन सह रेमे ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽनिरुद्धः अकृत्रिमो लिखित इत्याह—अनिरुद्धमिति विशेषेण लिखितं सहजरूपं स्वप्नदृष्टसमानं दृष्ट्वा उषा तं साक्षादेव मत्वा पूर्वसम्बन्धं स्मृत्वा अधोमुखी जाता तत आदरेण अन्यं मा लिखस्विति स एवास्त्वसाविति ह्रिरुक्तवती स्मयमानेति तस्याः प्राप्स्यामीति हर्षः सूचितः महीपत इति सम्बोधनं भ्रमाभावाय ॥ २२ ॥

ततो वरं निश्चित्य तमानेतुं गतेत्याह—चित्रलेखेति । कृष्णस्य पौत्रमिति स्त्रीणां हितकारी भविष्यतीति स्वयञ्च योगिनी तस्याग्रे स्मरणं योगाभ्यासेन ज्ञातवती अत एव विहायसा ययौ अन्यथा गमनागमनाशक्तेः राजन्निति सावधानार्थं कृष्णपालितामिति तदानीं कृष्ण एव पालकः पुराध्यक्षः स्वयं जातः इदमेव कार्यमुद्दिश्य अन्यथा देवैः सानुभावैश्च रक्षितां पुरीं नान्यः प्रवेष्टुमर्हति ॥ २२ ॥
तत्रापि भगवदिच्छया अनिरुद्धोपि न जागर्ति अन्यथा स एव न गच्छेत् सुपर्यङ्क इति निर्भरनिद्रत्वाय ननु, राजभ्याः सावधाना भवन्ति कथमेवं निर्भरनिद्रात्वं तत्राह—प्राद्युम्निमिति सहि प्रद्युम्नापि हृतः सोपि हृतोपि भगवदिच्छयेति वा परा भावः स्त्रीप्राप्तिश्चोभयत्र तुल्या शक्तिह्रासस्तु नैमित्तिक इति बोध्यते सापि तं नेतुं लौकिकमुपायं परित्यज्य योगमास्थिता अलौकिक उपायो योगः आस्थिता; सर्वभावेन तत्रापि भारं दत्त्वा गृहीत्वा पर्यङ्कात्तमेव बालकमिव अप्रबोधो योगानुभावः शोणितपुरे नाम्नैव भयानकत्वमुक्तं सख्ये उषायै तस्याः प्रियमनिरुद्धम् अयं तव प्रिय इति प्रदर्शितवती ॥ २३ ॥
तत्र गतः प्रबुद्धः स्त्रीमण्डले गतः सा मुदितानना तेन सह रेमे चकारात्सोपि तया सह मुदिताननेति तस्या भयाद्यभाव उक्तः विषयसौन्दर्यात् लौकिकोपि हेतुरस्तीत्याह—दुष्प्रेक्ष्ये स्वगृह इति स्त्रियः सर्वाः कन्यायां तस्मिंश्चानुरक्ता एकमत्यं प्राप्ताः मात्रादयोपि प्राद्युम्निनेति सर्वथा कामपूरकत्वम् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शोणितपुरमित्यनन्तरं गत्वेतिशेषः । योगमास्थितेति द्वारकायां प्रवेष्टुमशक्नुवत्यै तस्यै श्रीनारदेन योगविद्योपदेशो हरिवंशादौ दृष्टः चित्रलेखापि योगमायांशभूतेति केचिदाहुः ॥ २३ ॥
पुम्भिर्दुष्प्रेक्ष्ये पुरुषान्तरप्रवेशायक्ये इत्यर्थः ॥ २४ ॥

भाषा टीका ।

हे राजन् ! अनिरुद्ध को लिखा देखकर लज्जा करके ऊषा नीचे को मुख होकर मन्दहास करती २ बोली कि यह पुरुषः यह है ॥ २१ ॥
हे राजन् ! योग विद्या जानने वारी चित्रलेखा अनिरुद्ध के लानेके लिये श्रीकृष्ण पालित द्वारकाको जाती भई ॥ २२ ॥

पराध्यंवासःस्रग्गन्धधूपदीपासनादिभिः ।
पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयाऽर्चितः ॥ २५ ॥
गूढः कन्यापुरे शश्वत्प्रवृद्धस्नेहया तया ।
नाहर्गणान् स बुबुधे उषयाऽपहृतेन्द्रियः ॥ २६ ॥
तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ।
हेतुभिर्लक्षयाञ्चक्रुराप्रीतां दुरवच्छदैः ॥ २७ ॥
भटा आवेदयाञ्चक्रू राजंस्ते दुहितुर्वयम् ।
विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ २८ ॥

भाषा टीका ।

योग विद्या जानने वारी चित्र लेखा, द्वारका में सुन्दर पलिका पर सूते हुए अनिरुद्ध को लेकर शोणितपुर में पहुंचा कर ऊषा के प्रिय अनिरुद्ध को निज सखी ऊषा के लियें दिखा देती भई ॥ २३ ॥

तत्पश्चात् अनिरुद्ध का दर्शन करके वह ऊषा प्रसन्न मुख होकर अन्य पुरुषों से देखने को भी अशक्य निज गृह में अनिरुद्ध के साथ रमण करती भई ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स च परार्ध्यैरमूल्यैर्वासस्स्रगादिभिः शुश्रूषणपूर्वकमार्चितः सन् ॥ २५ ॥

तया ऊषयाऽपहृतेन्द्रियोऽहर्गणान् दिनसमूहान्न बुबुधे ॥२६॥

आप्रीतामतिहृष्टाम् दुरवच्छदैश्छादयितुमशक्यैः ॥ २७ ॥

विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परार्ध्येति युग्मकम् । पानभोजने पेयभोज्ये "कृत्यल्युटो बहुलम् [३-३-११३] भोज्यभक्ष्ययोर्भक्ष्यं चर्व्यमित्यादिना भेदः एतैर्यच्छुश्रूषणं तेनार्चितः शश्वत् पुनः पुनःप्रकर्षेण नित्यनूतनादिना वृद्धःस्नेहोऽनुरागो यस्याः यस्यां वा तया नाहर्गणानिति श्रीकृष्णपरित्यागेन तत्र चिरस्थितौ सिद्धान्तः तच्च लीलाविशेषाय श्रीकृष्णेच्छयैव ज्ञेयम् तत एव उषया अपहृतम् इन्द्रियं मनो यस्य सः प्रेममोहित इत्यर्थः ॥ २५—२६ ॥

यदुवीरेणेति । परमविदग्धेन निर्भयेन च तेन भुज्यमानां तां हतव्रतां स्खलितकन्यानियमां लक्षयाञ्चक्रुः भटा इत्युत्तरस्यैवान्वयः । कैर्हेतुभिः दुरवच्छदैः हेतुभिः परम्परावगतैः रतिचिह्नैः तत्र मुख्यं चिह्नम् आप्रीतामिति ॥ २७ ॥

भटा अन्तःपुरचराः षण्ढादयो रक्षिणो बाण—भृत्याः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परार्ध्येति । परार्ध्यैः वासःप्रभृतिभिः शुश्रूषया चार्चितो बहुमतः सोऽनिरुद्धः उषाया गृहे गूढः शश्वन्नित्यं प्रवृद्धः स्नेहो यस्यास्तयाऽपहृतमिन्द्रियं मनो यस्य सःअहर्गणान्न बुबुधे न ज्ञातवान् ॥ २५-२६ ॥

तामिति । यदुवीरेण अनिरुद्धेन भुज्यमानामत एव क्षतं विहतं व्रतं कन्याया विहतं यस्यास्तथाभूतां वीक्ष्य दुरवच्छदैश्छादयितुमशक्यैर्हेतुभिश्चिह्नैर्दूषितां लक्षयाञ्चक्रुः ॥ २७ ॥

भटाः ततस्ते राज्ञे बाणायावेदयाञ्चक्रुः आवेदनप्रकारमेवाह—राजन्नित्यादिना न विग्रह इत्यन्तेन । हे राजन् ! कुलं दूषयतीति तथा तच्चेष्टितं लक्षयामः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपहृतेन्द्रियः प्रेममोहित इत्यर्थः ॥ २६—२७ ॥

भटाः षण्ढादयः ॥ २८-३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निलीय क्लेशरमणं व्यावर्त्तयति—परार्ध्येति । परार्ध्यान्यमूल्यानि सर्वाणि एवं धूपदीपासनादिभिरिति देववत्पूजनमुक्तं स्नातस्य प्रथमं वस्त्रं ततः स्रजः ततो गन्ध इति केशेषु संस्कारार्थं धूपः ततो गृहे प्रविष्टस्य आरात्रिकं तत उपवेशनार्थमासनं ततः पानभोजनभक्ष्याणि पानं मादकं रुच्युत्पादकद्रव्यकृतं भोजनं प्राकृतं भक्ष्यं ताम्बूलादि अथवा कदाचित्पानं कदाचिद्भक्ष्याणि चकारात्तत्सम्बन्धीनि मानसस्तु सिद्ध एवेति बाह्या एते निरूपिताः वाक्यैरिति वाचनिकी शुश्रूषा कायिकी सर्वभावेनार्चितः ॥ २५ ॥

सोपि तासां इच्छानुरोधी जात इत्याह—गूढः कन्यापुरे इति । शश्वन्निरन्तरमुपचाराणां प्रतीयमानत्वादनुरोधः प्रवृद्धस्नेहयेति निरन्तरं साधनेषु हेतुः तस्य क्रियान्तरस्मरणाभावायाह—नाहर्गणान् स बुबुधे इति । उषयेति पूर्वस्त्रीणामप्यस्मरणं सर्वोत्तमैषेति च द्योतितम् अपहृतं वशीकृतं तदधीनं जातमिन्द्रियं यस्य ॥ २६ ॥

ततः पुरुषोपभुक्तां गर्भकृतैर्लक्षणैः भोगकृतैरेव वा हतं व्रतं यस्याः कन्यायाः ब्रह्मचर्यं व्रतं तदाहतव्रतां तां लक्षयाञ्चक्रुः यदुवीरेणेति निर्भरो भोग उक्तः तेन स्पष्टानि चिह्नानि सम-

अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ! ।
कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥ २९ ॥
ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ।
त्वरितः कन्यकाऽगारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥ ३० ॥
कामात्मजं तं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बरमम्बुजेक्षणम् ।
बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम् ॥ ३१ ॥
दीव्यन्तमक्षैः प्रिययाऽभिनृम्णया तदङ्गसङ्गस्तनकुङ्कुमस्रजम् ।
बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥

---

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी।**

न्तात् पीता पीतवर्णा श्रमाद्गर्भेण वा स्त्रीणां तथात्वं भवति दुरवच्छदैरिति आच्छादयितुमशक्यैर्धर्मैः ॥ २७ ॥

रूपेण च ज्ञात्वा स्वापराधशङ्किता भटा आवेदयामासुः तेषां रक्षकाणां कन्यान्तःपुराधिकारिणां वाक्यमाह---राजन्निति । भयुक्तं कथं श्रूयत इत्याशङ्क्य सम्बोधनेन पश्चात् महदनिष्टं सूचयन्ति विचेष्टितं व्यभिचारं लक्षयाम इति प्रमाणं तर्कितमात्रं, नन्वस्तु को दोष इति चेत्तत्राह—कुलदूषणमिति। यद्यपि पापादिना न तेषां भयं तथापि दैत्याः न व्यभिचारिणो भवन्ति इति तेषां कुले व्यभिचारो दूषणं यथा देवानाम् अनृतम् ॥ २८ ॥

---

**श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।**

एतैर्यत् शुश्रूषणं तेनार्चितः सम्मानितः ॥ २५--२६ ॥

हेतुभिः रतिचिह्नैः दुरवच्छदैः छादयितुमशक्यैः आप्रीतामत्यानन्दवतीमिति मुख्यं रतिचिह्नं पुरपालकभटाश्चिय इति शेषः ॥ २७ ॥

भटाः प्रकारान्तरेण जानन् बाणो नः शास्ति करिष्यतीति प्राप्ताशङ्काः ज्ञापयामासुः कन्याया अपरिणीतायाः अपि ॥ २८ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।**

परार्ध्यैरमूल्यैर्वासःप्रभृतिभिः वाक्यैरनुकूलैः शुश्रूषणपूर्वकमर्चितः ॥ २५ ॥

आप्रीतामतिहृष्टाम् हतं विहतं व्रतं कन्याकृत्यं यस्याः तां हेतुभिः रतिचिह्नैः दुरवच्छदैश्छादयितुमशक्यैः लक्षयाञ्चक्रुः भटा एव स्वकीद्वारेति बोध्यम् दुष्प्रेक्षे स्वगृहे पुम्भिरित्युक्तत्वात् ॥ २६---२७ ॥

विचेष्टितं विपरीतं कर्म लक्षयामः केवलमिदमित्थमिति तु न जानीम इत्याहुः ॥ २८ ॥

---

**भाषा टीका ।**

अमोल वस्त्र. माला. गन्ध. धूप. दीप. आसन आदि से और पान. भोजन. भक्ष्य. तथा प्रिय वचनों से और अनेक प्रकार की परिचर्य्या से बहुमान को प्राप्त होकर ॥ २५ ॥

वह अनिरुद्ध कन्या के महल में छिपे हुए, तथा निरन्तर बड़े स्नेह वारी ऊषा ने जिस का मन हरन किया हे इसी लिये अनेक दिन व्यतीति हो गये उनको बख्त ने नहि जाने ॥ २६ ॥

इस प्रकार अनिरुद्ध जिसका नित्य प्रति भोग करता है इसी से उसका कन्या व्रत का भङ्ग हो गया और दुःख से भी नहि छिपाये जावें ऐसे भोग के चिन्हों से. अति प्रसन्न ऊषा को, महलों में रहने वारे राजा के पुरुषों ने लखाई कर लई ॥ २७ ॥

उन पुरुषों ने बाणासुर को खबर करी कि हे राजन्! आप की पुत्री कन्या का दुष्ट कर्म, हम लखाई में आता हे कि जिससे कुल में कलंक लगे ॥ २८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका।**

अनपायिभिः अपायो ऽपसर्पणं प्रमादो वा तद्रहितैः पाठान्तरे दुष्टा प्रेष्या सखी यस्यास्तस्याः पुंभिर्दूषणं कुतो वेति न जानीम इत्यर्थः ॥ २९—३० ॥

कामस्य ऽऽत्मनो देहाज्जातम् ॥ ३१ ॥

अभिनृम्णया सर्वमङ्गलया तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां स्रजि तां बाह्वोर्मध्ये वक्षसि दधानं मधुमल्लिका वसन्तभवा मल्लिकास्तदाश्रितां तस्याग्र इत्यार्थः सन्निधः तस्या अग्र इत्यर्थः ॥ ३२ ॥

---

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।**

स्वेषामपराधं परिहरन्त आहुः—अनपायिभिरिति । दुष्प्रेक्षः आशङ्कानिरासार्थः पुम्भिर्दुष्प्रेक्षाया अपि पाठान्तरे पुम्भिर्दूषणमिति पुंश्चल्या दूषणं न विद्मः अनुमीयमानमपि प्रत्यक्ष

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कर्तुं न शक्नुम इत्यर्थः । "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"(१-२-५८) इति स्मरणाद्बहुवचनम् ॥ २९ ॥

प्रकर्षेण शनैर्निगूढतया आप्त आगतः सन् यदूद्वहं यदुश्रेष्ठम् ॥ ३० ॥

यदूद्वहत्वं दर्शयति- 'कामेति युग्मकेन । सौन्दर्य्यमेवाह—श्यामामित्यादिना । निर्भयत्वं दीव्यन्तमित्यनेन वैदग्ध्यादिकं तदङ्गेत्यादिना तस्या अपि व्यूढोचितमङ्गलवेषादिकम् ॥ ३१ ॥

अभिनृम्णयेत्यनेन मधुमल्लिका मधुमल्लि तदुत्तमजातिविशेषः चत्वारो वार्षिका मासा इति वक्ष्यमाणात् प्रावृट्कालमासैः । तस्य बाणस्याग्रेपि आसीनमेव ननु भयादिनोत्थितमित्यर्थः । विस्मितोऽभूत् सौन्दर्य्यादिना तस्य तत्र गमनादिना निर्भयत्वादिना च ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनपायिभिः अनुसरद्भिरप्रमादैरस्माभिः स्वगृहे गुप्ताया अपि दूषणं न विद्महे ॥ २९ ॥

तत इति । दुहितुर्यद्दूषणं तच्छ्रुतं येन स बाणः अत एव प्रव्यथितः त्वरायुक्तः कन्यकागृहं प्राप्य यदूद्वहमनिरुद्धं ददर्श ॥ ३० ॥

कथम्भूतम् ? कामस्य प्रद्युम्नस्यात्मनो देहाज्जातमत एव भुवनैकसुन्दरं कुण्डलयोः कुन्तलानाञ्च त्विषा स्मितयुक्तेनावलोकेन च मण्डितम् आननं यस्य तम् ॥ ३१ ॥

अभिनृम्णया सर्वतोमङ्गलया प्रियया सह अक्षैर्दीव्यन्तं क्रीडन्तं तस्याः अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां मधुमल्लिका वसन्तभवमाल्लिकास्ताभिराश्रितां स्रजं बाह्वोर्मध्ये वक्षसि दधानं तस्या अग्रे पुरतः अत्र सन्धिरार्षः आलक्ष्यावलोक्य विस्मितो बभूव ॥३२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मधुमल्लिका शतदलमल्लिकाजातिविशेषः ॥ ३२-३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि कः समायातीति शङ्कायामाहु-अनपायिभिरिति । स्वतो विवाहं आवेदयन्ति—कन्याया इति । अनेन तर्कितस्यार्थस्य युक्त्या वाच्योप्युक्तः अत एव दूषणं लक्षयामः न विद्महे च अन्यथा निर्दोषेपि ते हन्तव्याः स्युः ॥ २९ ॥

ततो निर्धारार्थं स्वयं प्रवृत्त इत्याह- तत इति । प्रकर्षेण व्यथितः शास्त्रादिभ्योपि ततस्त्वरितः कन्यकागारं प्राप्तः प्रथमं यदूद्वहमेव दृष्टवान् सर्वानेव यदून् उद्वहतीति महाशूरत्वं यदुकुलोत्पन्नत्वञ्च ज्ञातवान् ॥ ३० ॥

तद्रूपमनिरुद्धं वर्णयति- निर्भयत्वाय कामात्मजमिति । स्त्रीणामत्यन्तहितार्थाय कामात्मजत्वमुक्तं भुवनैकसुन्दरमिति सर्वेषामेव मोहकं श्यामं पिशङ्गाम्बरमिति भगवत्सारूप्येण भगवदीयत्वं ज्ञापितम् अम्बुजेक्षणमिति दृष्ट्यैव सर्वाह्लादकत्वं बृहद्भुजमिति भोगयोग्यता वीरत्वञ्च स्वभावतोप्ययं महानिति कुण्डलकुन्तलैर्मण्डितमाननं यस्येत्युक्तं स्मितावलोकेनेति मनोहरस्वभाव उक्तः अनेन सर्वलक्षणसम्पूर्णोऽयं वर इत्युक्तम् ॥३१॥

तस्य चौर्येण व्यभिचारसम्बन्धं निवारयति—यथाकृतविवाहौ स्त्रीपुरुषावक्षैः क्रीडतः एवं प्रियया सह तदेकनिष्ठया अक्षैर्दीव्यन्तं सा च क्रीडा न कामार्था किन्तु रसपोषिकेत्याह-अभिनृम्णयेति अभितः तृष्णा यस्याः सर्वतः सम्बन्धं वाञ्छतीति अभिनृम्णया वा सम्भोगनितान्ततृष्णया अभिनृम्णया वा नृम्णामिति प्रकाशनामवैदिकशब्दो नृम्णाय नृम्णमित्यत्र प्रामिद्धं प्रकाशमानामित्यर्थः । अभितः प्रकाशमानया ननु सङ्कोचेन केनचिदप्यंशेन स्थिततया तत्सम्बन्ध एव क्रीडतीति सर्वसन्देहनिवृत्त्यर्थमाह-तदङ्गसङ्गस्तनकुङ्कुमस्रजमिति । तस्य अङ्गसङ्गेन यत् कुचकुङ्कुमं स्रजि सम्बद्धं तादृशीं स्रजं बाह्वोर्मध्ये दधानम् अत्यन्तरमालम्भने दृष्टवानिति मधुयुक्ता या मल्लिका तया श्रितां स्रजमिति तत्र भ्रमरादिसम्बन्धो निरूपितः गन्धेन रूपेण च मल्लिका रसपोषिका तस्यैवाग्रेप्यासीनं बाणेप्यागते तथैवासीनमित्यर्थः । स्वस्याग्र आसीनमिति वक्तव्ये तस्य तथा विचारो न जात इति शुक एवाह तस्याग्रेप्यासीनमिति अत एव विस्मितः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनपायिभिः अपायः अपसर्पणं प्रमादो वा तद्रहितैः दुष्प्रेक्षाया इति पाठे दुष्टा या योगिनी प्रेष्या सखी यस्यास्तस्याः पुम्भिर्दूषणं पुञ्जात्यदूषणं न विद्मः अनुमीयमानमपि प्रत्यक्षीकर्त्तुं न शक्नुम इत्यर्थः "जात्याख्यायानेकस्मिन् बहुवचनमन्यतरस्याम्" इति बहुवचनम् ॥ २९—३१ ॥

अभिनृम्णया परममङ्गलया तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां तां स्रजम् अंसाभ्यां सकाशात् स्खलितां बाह्वोर्दधानं यद्वा बाह्वोर्बाहुशिरसोः स्कन्धयोरित्यर्थः । मधुमल्लिका वसन्तभवा मल्लिका तदाश्रितां तस्या उषाया अग्र सन्धिरार्षः अहो महासाहसिनोऽस्यै तावदपि धार्ष्ट्यमिति विस्मितः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनपायिभिरिति । पुम्भीराजपुरुषैः अनपायिभिरनपसर्पद्भिरस्माभिः द्वारपालैः गुप्तायाः सामीप्येन प्रेक्षितुमशक्यायाः न जानीमः ॥ २९-३१ ॥

अभिनृम्णया सर्वमङ्गलया सह अक्षैर्दीव्यन्तम् तस्याः अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां तां मधुमल्लिका वसन्तभवा मल्लिका तदाश्रितां बाह्वोर्मध्ये दधानं तस्याग्रे इत्यत्र सन्धिरार्षः ॥ ३२ ॥

---

भाषा टीका ।

महलमें निरन्तर हमसे गुप्त रहतीहै इसी लिये अन्य पुरुषतो दुःख सेभी उसको नहीं देख सकते परन्तु इस पर भी हे प्रभो कन्याके दूषणको हम नहीं जानते कि यह दूषण किस पुरुषसे भया ॥ २९ ॥

इस प्रकार कन्याके दूषणको बाणासुरने श्रवण किया

स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः ।
उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया ॥ ३३ ॥
जिघृक्षया तान् परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥
ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥
तं नागपाशैर्बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह ।
उषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे अनिरुद्धबन्धोनाम
द्विषष्टितमोऽध्यायः ॥६२॥

भाषा टीका ।

इसके पश्चात् व्यथाको प्राप्त होकर शीघ्रहि कन्याके महल में प्राप्त होकर अनिरुद्धको देखा ॥ ३० ॥

कामदेवके अवतार प्रद्युम्नके पुत्र, भुवनोंमे एक आपहि सुन्दर श्यामरूप पीताम्बर धारण किये कमलके समान नेत्र वारे विशाल भुजा वारे कुण्डल और कुन्तलोंकी कान्तिसे और मुस्कान सहित अवलोकन से शोभायमान मुख वारे ॥ ३१ ॥

और सर्व प्रकार जिसने मङ्गल कियाहै ऐसी प्यारी ऊषा के साथ पासेन से खेलने वारे बसन्तऋतु की फूलीभई मल्लिका की गुँथी तथा ऊषा के अङ्ग सङ्ग करनेसे उसके स्तनका कुङ्कुमा जिस में लगरहाहै ऐसी माला को दोनो भुजाओं के मध्य में धारन किये उषा के आगे वैठे हुये अनिरुद्ध को देखके बाणासुर चकित होगया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आततायिभिरुद्यतशस्त्रैः माधवोऽनिरुद्धः मौर्वं मुरलोह-विशेषस्तन्निर्मितम् ॥ ३३—३४ ॥

शोकविषादाभ्यां विह्वला अवशा अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भटैस्तन्निकटवर्त्तिवीरैः भयमवज्ञया लज्जया च तद्द्वारैव ग्रहणार्थं पश्चादाहृतेः मौरवमिति वक्तव्ये मौर्व्यमित्यार्षं विशेषेण महाघोरत्वेन परमोत्साहादिना चावस्थितोऽवज्ञापूर्वमतिहवत् तदनुरूपो दृष्टान्तः यथेति ॥ ३३ ॥

जिघृक्षा ग्रहीतुमिच्छैव या जाता न तु जिघांसा तया अह-नत् परिघेण प्रहृतवान् उषाया भवनात् ॥ ३४ ॥

बलिनन्दन इति यौगिकार्थो विरोधिलक्षणया मङ्गलशब्द-वत् तस्य दुःखदपुत्र इत्यर्थः । बलीति श्रीकृष्णस्य लीलाविशे-षेच्छया तदानीं विपर्य्ययादिति ज्ञेयम्—

"अपिस्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ।
यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥
इति तृतीये श्रीविदुरप्रश्ने तस्य तादृशमाहात्म्यात् तत्र शब्द-योनिं निश्वासव्यञ्जितवेदवृन्दं मनोमयं चित्ते श्रीवासुदेववन्मन-स्युपास्यं सत्त्वं शुद्धसत्त्वात्मकं भगवत्तत्त्वं तस्य चतुर्व्यूहत्वे चतुर्थं तत्त्वमित्यर्थः । तथा च विष्णुधर्मोत्तरे श्रीवज्रेण पृष्टं ।

"कस्त्वसौ बालरूपेण कल्पान्तेषु पुनः पुनः ।
दृष्टो यो न त्वया ज्ञातस्तत्र कौतूहलं मम ॥" इति
अत्र श्रीमार्कण्डेयेनोत्तरितं—

"भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः ।
कल्पक्षये न विज्ञातः स मायामोहितेन वै ॥
कल्पक्षये व्यतीते तु तं देवं प्रपितामहात् ।
अनिरुद्धं विजानामि पितरं ते जगत्पतिम् ॥" इति
अस्य पाद्मवृहत्सहस्रनाम्नि माहात्म्यनामानि चैतानि—

"अनिरुद्धो वृहद्ब्रह्म प्रद्युम्नो विश्वमोहनः ।
चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः ॥
चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः ।
श्रीगोपालोत्तरतापिन्यां आश्रयात्मेति तु "असौप्रणवार्थत्वेनापि दर्शितः "रोहिणीतनयो राम अकाराक्षरसम्भवः ।
तैजसात्मकः प्रद्युम्न उकाराक्षरसम्भवः ॥
प्राज्ञात्मकोऽनिरुद्धो वो मकाराक्षरसम्भवः ।
अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितम् ॥ इति
अतः श्रीकृष्णव्यूहत्वेनाप्यानिरुद्धस्यात्परमत्वमपीति. बलिनं

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

ततो बलीति पाठस्तु श्रीहरिवंशोक्तशक्तिप्रहारादिना बाणनिर्जयात् नागपाशैरिति साक्षाद्युद्धाशक्त्या कुम्भाण्डवचनेन मायया सर्पाकारैर्बबन्धेति ज्ञेयम् तथाच श्रीविष्णुपुराणे--

"युद्ध्यमानो यथाशक्ति यदा वीरेण निर्जितः ।
मायया युयुधे तेन स तदा मन्त्रिचोदितः ॥ इति

निशम्य श्रुत्वेति कन्यागाराद्बहिर्युद्धात् किम्वा निशाम्येति पाठः । तथा च श्रीहरिवंशे "नागैर्विवेष्टितं दृष्ट्वा उषा प्रायुक्षि-मांतुरा" इत्यादि तत्तद्विस्तारश्च तत एव ज्ञेयः अश्रूणां कला धारा रूपा विभागी ययोस्ते अक्षिणी यस्याः सा अरोदीति वक्तव्ये अरौदिषीदित्यार्षं पदम् अरोत्सीदिति पाठेऽपि तद्भावः आर्षः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्विषष्टितमोऽध्यायः ॥६२॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इत्यादिसार्द्धमेकान्वयि स माधवो मधुवंशप्रभवो ऽनिरुद्धः अत एव आततायिभिरुद्यतायुधैर्भटैः परिवृतं तं बाणमवलोक्य यथा दण्डधरोऽन्तकस्तद्वत् जिघांसया तत्र व्यवस्थितं लोहमयं परिघमुग्रस्य गृहीतुमिच्छया परितः प्रसर्पतस्तानाततायिनः अहनत् अघान यथा सूकराणां यूथं पातीति तथा सूकरश्रेष्ठः शुनो हन्ति तद्वत् । त इति । ते आततायिनः निर्भिन्नाः मूर्द्धोरवो येषां तेऽत एव गृहाद्विनिर्गता दुद्रुवुः ॥ ३३—३४ ॥

तमिति । बली बलवान् बलिनन्दनो बाणः स्वसैन्यं घ्नन्तं तमनिरुद्धं कुपितो नागपाशैर्बबन्ध शोकविषादाभ्यां बाह्याभ्यन्तरदुःखाभ्यां विह्वला अवशा अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्याः सा ऽरोद ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनिरुद्धस्य बन्धः श्रीकृष्णसन्दर्भे व्याख्यातः बलिनन्दनः विरोधलक्षणायाः तस्य दुःखदः पुत्र इत्यर्थः । बलीति श्रीकृष्णेच्छयेदानीं विपर्य्ययादिति ज्ञेयम् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

ततो युद्धार्थं तदीया असहमानाः प्रवृत्ता इत्याह--स तं प्रविष्टमिति । अन्तःप्रविष्टं तं श्वशुरम् आततायिभिर्वृतमिति शस्त्रपाणिभिः सह समागच्छन्तं मारयिष्यन्तीति निश्चित्य मधुवंशोत्पन्नः अन्यस्यापि स्वसम्बन्धेन मदं जनयति किम्पुनः स्वस्य साक्षादतो युद्धार्थं एकाकी प्रवृत्त इत्याह उग्रम्य मौर्व्यं परिघमिति । लोहबद्धं तृणविशेषबद्धं वा मौर्वी काचित् तृणजातिर्लोहजातिर्वा विशेषेण अवस्थितः सर्वथा निकटगमने प्राणान् ग्रहीष्यतीति ज्ञापनार्थमाह- यथान्तको दण्डधर इति । जिघांसया व्यवस्थित इति स्वरूपेण भयानकत्वं निवारितम् ॥ ३३ ॥

ततो यज्जातं तदाह--जिघृक्षयेति । धर्त्तव्य एवायं न तु हन्तव्य इति परितः समागताः ततः स्वयमपि तान् परितः प्रसर्पत: अहरत हृतवान् दूरे नीतवान् अहनद्वा यथा दन्तैर्निकटे गत्वा शुनो हन्ति न तु केनचित्पराभूतः दूरादेव तेषां शब्दाः न तु निकटे समागन्तुं शक्ताः । ततो यज्जातं तदाह--निहन्यमाना इति । नितरां भिन्ना मूर्द्धानः ऊरवो बाहवश्च येषामिति हननासहने हेतुः अतः प्रथमं सङ्कीर्णत्वात् भवनाद्विनिर्गताः पुनस्तत्रापि निर्भिन्नावयवाः प्रदुद्रुवुः ॥ ३४ ॥

तेषु निवृत्तेषु अलौकिकप्रकारेण तं निगृहीतवान् इत्याह-तं नागपाशैरिति । बलिनन्दन इति पितुर्वैरात् बन्धनं कृतवान् नागपाशाः अवतारविशेषे भगवतोऽपि तथात्वं सम्पादयन्ति किमुत तदंशानां ततो ऽनिरुद्धाद्बली दैवेन बलेन बन्धने हेत्वन्तरमप्याह-घ्नन्तं स्वसैन्यमिति । यदि न मारयेत् तदा जिज्ञासां कृत्वा पश्चात्तथा अयुक्तत्वं नास्तीति स्वतो महादेवं वा पृष्ट्वा विवाहवदनुमोदनं कुर्यात् अतः स्वसैन्यं प्राप्स्यतीति जामाता भवतीति विनिश्चित्य बन्धनमेव कृतवान् तच्च बन्धनं दूरे गतस्य तस्य तदाह उषा भृशमिति आश्चर्यं तस्य बन्धनं निशम्य भर्त्तृत्वे सन्देहाभावादश्रुकलाक्षी सती स्वाभिप्रायं ज्ञापयन्ती अरोदीत् अनेन तस्य जारत्वमपहृतम्॥३५॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
त्रयोदशाध्यायविवरणम् ॥ १३ ॥ ६२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

माधवोऽनिरुद्धः मूर्वा लोहविशेषस्तन्निर्मितम् ॥ ३३—३४ ॥
अश्रुधरे अक्षिणी यस्याः सा कलिवली कामधेन अरोत्सीदित्यार्षेण अरोदीदित्यर्थः—

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शनी ।

व्यष्टीनामन्तरात्मानं श्वेतद्वीपेशमंशनः ।
बाणोऽबध्नात् प्रभोर्लीलाशक्तिरेवात्र कारणम् ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्विषष्टितम एतस्मिन् दशमेऽजनिसङ्गतः ॥ ६२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

माधवः मधुवंशप्रभवः मौर्वं लोहविशेषनिर्मितम् ॥ ३३ ॥
जिघृक्षया गृहीतुमिच्छया ॥ ३४ ॥
अश्रूणां कलाः बिन्दवो ययोस्ते अक्षिणी यस्याः सा ॥३५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीय
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्विषष्टितमाऽध्यायार्थप्रकाशः ॥ ६२ ॥

---

भाषा टीका

शस्त्र धारी वीर लोग जिसके चारों तरफ ऐसा बाणासुर को मकान में आये हुए देख के, अनिरुद्ध, लोहे के बेंडा को हस्त में लेकर मारने की इच्छा करके बाणासुर के आगे इस तरह खड़ा हो गया। कि-जैसे काल दण्ड को लेकर मृत्यु खड़ा हो जावे ॥ ३३ ॥

अनिरुद्ध के पकड़ने की इच्छा करके चारों तरफ से घेरने वारे वीरों को अनिरुद्ध ने ऐसी मार लगाई कि, जैसे वनका श्रेष्ठ सूकर अनेक श्वानों को मारे अनिरुद्ध ने बेंडा की मार लगाई इस लिये उनके मस्तक, ऊरू भुजा, फूट गये अत एव वे वीर लोग, ऊषा के भवन से निकस कर भाग दिये ॥ ३४ ॥

अपनी सेना को मारने वारे अनिरुद्ध को, बाणासुर कुपित होकर नाग के सदृश फन्दान से बांध लेता भया जिस के नेत्रों में अश्रुपात बहते हैं और शोक तथा विषाद से अति विह्वल हुई ऊषा अनिरुद्ध को बंधा देख कर रुदन करती भई ॥ ३५ ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धमें बासठके अध्यायकी
श्रीवृन्दावनस्थ पं० दामोदराचार्य कृत
भाषाटीका समाप्ता ॥ ६२ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ।

श्रीशुक उवाच ।

अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत ! ।
चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥
नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ।
प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥
प्रद्युम्नो युयुधानश्च गदः साम्बोऽथ सारणः ।
नन्दोपनन्दभद्राद्या रामकृष्णानुवर्तिनः ॥ ३ ॥
अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतोदिशम् ।
रुरुधुर्बाणनगरं समन्तात्सात्वतर्षभाः ॥ ४ ॥

---

### श्रीधरस्वामीकृतभावार्थदीपिका ।

त्रियुक्षष्टितमे चाथ बाणयादवसङ्गरे ।
स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥

॥ १ ॥

कर्म च युद्धादिकम् ॥ २ ॥

रामकृष्णानुवर्तिन इति तौ पुरतो निर्गतावित्यर्थः ॥ ३ ॥

सर्वतो दिशमित्यस्योत्तरेणान्वयः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

•त्वर्थे चशब्दः भिन्नोपक्रमात् तस्य बन्धूनां सर्वयादवानां चकारद्दासदास्यादीनाञ्च अनु निरन्तरं शोचतां सतां विशेषेणातीयुः मार्गमासारम्भोऽभूदित्यर्थः । वैशाखशुक्लद्वादशीरात्रौ उषायाः स्वप्नानन्तरं "सप्तरात्रेण ते भीरु दर्शयिष्याम्यहं प्रियम्" इति श्रीहरिवंशोक्तचित्रलेखावाक्यानुसारेण ज्यैष्ठप्रथमे श्रीअनिरुद्धहरणात् षण्मासेष्वतीतेष्वपि वार्षिकाश्चत्वारोमासा इति तेऽपीत्यर्थः । अतोऽत्रैव वा पूर्वचकारान्वयः तेषु त्वधिका चिन्ता जातेत्यभिप्रायात् हे भारत भरतकुलश्रेष्ठ ! पाण्डवकुलोद्भवेति त्वं पुनरेतच्छ्रीभगवतो लीलामौग्ध्यं जानास्येवेतिभावः ॥ १ ॥

तत्तस्यानिरुद्धस्य षष्ठीलुक्छान्दसः उप समीपे आकर्ण्य गुह्यत्वेन कर्णे कथनात् प्रकर्षेण महोद्यमेन ययुः यतः कृष्णस्तत्पितामहरूपः स्वयं भगवानेव देवता परमाराध्यो येषां ते इति भयाभावः सूचितः तच्छब्देन तस्य गमनं सूचितं तेषां तदनुगामित्वात् ॥ २ ॥

प्रद्युम्न इति युग्मकम् । अथ साम्बस्यानन्तरम् इति रामकृष्णानुयाने तेषां क्रम उक्तः नन्दादयोऽत्र पार्षदप्रवरा यादवविशेषाः समेताः स्नेहेन मिलिताः समन्तात् नैरन्तर्य्येणेत्यर्थः ॥ ३—४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥१–२४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथानिरुद्धादर्शनजव्यथानां क्रमेण नारदाच्छ्रुततद्वार्त्तानां प्राप्तशोणितपुराणां यदूनां बाणेन सह सङ्ग्रामं वर्णयति त्रिषष्टितमेन—अपश्यतामिति । अनिरुद्धमपश्यतां तस्यानिरुद्धस्य बन्धूनाम् अनुशोचतां सतां वार्षिकाः आषाढाद्याश्विनान्ताश्चत्वारो मासा व्यतीयुरतिक्रान्ताः ॥ १ ॥

नारदादिति । बद्धस्यानिरुद्धस्य वार्त्तां बन्धनात् पूर्वं तस्य कर्म च श्रुत्वा कृष्णेन पालिताः कृष्णसहिता इत्यर्थः वृष्णयो यादवाः ॥ २ ॥

वृष्णीनेव प्रधानानाह—प्रद्युम्न इति । एते सर्वे रामकृष्णावनुवर्त्तन्त इति तथाभूता ययुः ॥ ३ ॥

अक्षौहिणीभिरिति समेताः सहिताः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वार्षिकाश्चत्वारो मासा अपीत्यर्थः । वैशाखशुक्लद्वादश्यां तस्याः स्वप्नदर्शनमिति श्रीहरिवंशे ॥ १ ॥

भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ।
प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥ ५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु तस्य भगवानिति स्वयं सर्वज्ञत्वात्तन्महिमज्ञ एव बाणमन्यांश्च प्रति स्वपराभवेन तन्महिमानं दर्शयितुमिति भावः ॥ २—२३ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥१—२४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्दशे तु विजयः शिवार्थानां निरूप्यते ।
निरोधो राजसः पूर्णः भविष्यति यतः फले ॥
भक्तवत्सलता दृष्टा न निरोधः कचित्तथा ।
अतोन्यनाशशङ्कापि भजनान्तरबाधिका ॥
न बाधते हरिः कापि विरुद्धोपि कथञ्चन ।
आक्लिष्टत्वाय तु हरेरुपेक्षात्र निरूप्यते ॥
प्रद्युम्नवत्तु तस्यापि नयनेऽन्वेषणं नहि ।
अत्रापि नारदः प्रोक्तः प्रमाणं चिन्तबाधिके ॥
सर्वभावेन युद्धाय ज्वरोपाख्यानमुच्यते ।
तामसस्तु ज्वरोत्रैव समुत्पन्नस्तथोत्तमः ।
शीतरागौ पृथक्पूर्वमुत्पन्नौ मिलितौ न हि ।
अतो हि भगवानत्र मेलयामास सर्वथा ॥

पूर्वाध्यायान्ते बन्धनमुक्तम् एवं शोणितपुरकथायां जातायां द्वारकाकथा वक्तव्येति हेतुत्वेन पूर्वोक्तां कथामाह—अपश्यतां चानिरुद्धमिति । चकारेण गमनप्रकारज्ञानादयः सङ्गृहीताः अनिरुद्धोपि चेन्निरुद्धः तदा सर्वमन्यथा भविष्यतीति शोकः तद्बन्धूनाञ्चकारादन्येषां भारतेति विश्वासार्थं तूर्णीं भावे हेतुः चत्वारो वार्षिका मासा व्यतीयुरिति वर्षायां युद्धादिगमनं बाधितमिति अनुशोचतामित्यन्तः तदेकपरत्वम् अप्रसिद्धत्वाल्लौकिकप्रकारेण न प्रमाणं सिद्धमित्यन्वेषणेपि नोपलब्धिः ॥ १ ॥

अतो नारदवाक्यात् वैष्णवप्रीत्यर्थी कलहार्थमुद्यता इत्याह—नारदादिति । तद्वृत्तान्तं फलितं बन्धनं वा वार्त्ताम् आदितः कथां बद्धस्य वार्त्तां कर्म च तत्कन्यया सह रमणप्रकाराद्युद्ध ततः शोणितपुरं प्रययुः युद्धार्थं ननु महादेवाधिष्ठितं तत् अतस्तद्विरोधसम्भवात् कथं गता यादवा इत्याशङ्क्याह—कृष्णदेवता इति । कृष्ण एव देवता येषाम् अनेन सामर्थ्यमपि द्योतितम् ॥ २ ॥

लौकिकं सामर्थ्यं वक्तुं महतां नामानि गृह्णाति--प्रद्युम्न इति । युयुधानः सात्यकिः गदो बलभ्राता साम्बः भगवत्पुत्रः एते महारथाश्चत्वारः मुख्या गणिताः अथ भिन्नप्रक्रमेण प्रकीर्णकान् गणयति—अथेति । चकारात् तदीयाः सारणादयो भगवद्भ्रातरः तेपि चत्वारो गणिताः एवमष्टविधा आधिभूता येषां मुख्यानां गौणानाञ्च सर्व एव रामकृष्णानुवर्त्तिनः नतु स्वताः स्वतन्त्रा वा उभयोर्ग्रहणं सम्पूर्णशक्त्यर्थं तेषां स्वाभाविकं बलं द्वादशाक्षौहिणीयुतं समेता मिलिताः अन्योन्यवैमनस्यं परित्यज्य सर्वतो दिशं रुरुधुः बाणनगरीमिति प्रसिद्धं समन्तादिति न कचित्सेवनायाः विच्छेदः सात्वतर्षभा इति न तेषां कचिद्भयमिति सूचितम् ॥ ३-४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जिताभ्यां ज्वररुद्राभ्यां संस्तुतो बाणबाहुभित् ।
सनप्तृकः पुरीं प्रागात् त्रियुक्षष्टितमे हरिः ॥

ज्येष्ठादिषण्मासेष्वपि व्यतीतेषु चत्वारो वार्षिका इति वार्षिका अपीत्यर्थः ॥ १ ॥

तस्तस्यानिरुद्धस्य कर्म च युद्धादिकम् ॥ २—५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनिरुद्धनिरोधानन्तरं बाणयादवयुद्धज्वरकृतभगवत्स्तुति बाणबाहुच्छेदनादिकं यद्वृत्तं तद्वर्णयति— अपश्यतामितित्रिषष्टितमेन ॥ १ ॥

तत्तस्यानिरुद्धस्य कर्म युद्धादिकं बद्धस्य वार्त्तां कन्यान्तःपुरे वासादिकथाम् ॥ २—५ ॥

———

भाषा टीका ।

श्रीशुकदेवजी बोले कि हे राजन् द्वारका में अनिरुद्ध को उसके बन्धुओं ने न देखा और उसके गमन के प्रकार को जाना तब तो उनके शोच करते२ वर्षा के चार मास व्यतीत होगये ॥ १ ॥

बंधे भए अनिरुद्ध के वृतान्त को और उसके युद्ध आदि कर्म को नारद जी से सुन कर श्रीकृष्णहि हैं इष्ट देव जिन के ऐसे यदुवंशी शोणितपुर को जाते भए ॥ २ ॥

प्रद्युम्न. युयुधान. और गद. तथा साम्ब. सारण. नन्द. उपनन्द. से आदि लेकर श्री राम कृष्ण के अनुवर्त्तन करने वारे ॥ ३ ॥

यादव श्रेष्ठ बारह अक्षौहिणी सेना के समेत बाहिर की तरफ से सब दिशान में तथा भीतर की तरफ से सर्वत्र बाणासुर के नगर को घेरते भए ॥ ४ ॥

———

श्रीधरस्वामीकृतभावार्थदीपिका ।

भज्यमानानि पुरोद्यानादीनि हस्तिकवचाद्यैः अट्टालः प्राकाराः

बाणार्थे भगवान् रुद्रः ससुतैः प्रमथैर्वृतः ।
आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ ६ ॥
आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ।
कृष्णशङ्करयो राजन् ! प्रद्युम्नगुहयोरपि ॥ ७ ॥
कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः ।
साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तुपरितनान्युन्नतस्थानानि अभिनिर्ययौ बाणः ॥ ५ ॥

सुतः स्कन्दस्तत्सहितैः प्रमथैर्गणैः रामकृष्णाभ्यां युयुधे ॥ ६—१२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भज्यमानेति समाहारद्वन्द्वगर्भः कर्मधारयः प्रकर्षेण सैन्यगणनादिना ईक्षमाणः तुल्यसैन्य इति सैन्याधिक्येपि दुर्भेद्यात्मनः सन्याययुद्धत्वं दर्शयितुम् अन्यस्यागो बोध्यते अतोभिमुखे निर्ययौ पुरात् ॥ ५ ॥

बाणार्थमिति तद्दुस्सङ्गदोषव्यञ्जनार्थमित्यर्थः । बाणार्थे इति सप्तम्यन्तं क्वचित् किञ्च भगवानिति स्वयं सर्वज्ञत्वात्तन्महिमज्ञ एव किन्तु बाणमन्यांश्च प्रति स्वपराभवेन तन्महिमानं दर्शयितुमिति भावः ॥ ६ ॥

सुतुमुलमत्यन्तसङ्कुलम् अतोऽद्भुतम् अत एव लोमहर्षणं श्रवणादपि पुलकोद्गमकरम् एवमादौ सामान्येनोक्त्वा पश्चाद्विशेषेण द्वन्द्वयुद्धमाह—कृष्णेति सार्द्धेन ॥ ७ ॥

कुम्भाण्डकूपकर्णाभ्यां सह बलेन बलस्य संयुगमासीत् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भज्यमानेति । भज्यमानानां पुरादीनां द्वन्द्वैकवद्भावो यद्वा बहुव्रीहिरेव, पुरमिति विशेष्याध्याहारः रुषा आविष्टो व्याप्तो बाणस्तुल्यसैन्यः द्वादशाक्षौहिणीसैन्ययुक्तः विनिर्गतः पुरादिति शेषः अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि ॥ ५ ॥

बाणार्थमिति बाणस्य सहायार्थं ससुतः स्कन्दने सहितः नन्दि नाम वृषभमारुह्य रामकृष्णाभ्यां युयुधेऽयुध्यत ॥ ६ ॥

आसीदिति । तुमुलं सङ्कुलं रोमहर्षणं शृण्वतां पश्यताञ्च रोमोद्गमावहं कस्य, केन सहेत्यत आह—कृष्णशङ्करयोरिति सार्द्धेन । हे राजन् ! बलेन बलभद्रेण सह ॥ ७-८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नतमात्राः पूर्वमेव तदपराधस्य सिद्धत्वात् परितो माया-

याश्चक्रुरित्याह—भज्यमानेति । पुराणि मध्यखण्डाः यथा महानगरेष्ववान्तरपुराणि भवन्ति उद्यानमुपवनं प्राकारः आवरणम् अट्टालाः सौधगृहोपरिभागाः गोपुरं पुरद्वारम् एतानि भज्यमानानि यस्य नगरस्य भगवदीयैः कृतं स्वनगरं तथाविधं दृष्ट्वा प्रौढिख्यापनार्थं तुल्यमेव बलं गृहीत्वा अभिनिर्ययौ नगरात् हीनबलत्वे अप्रतिष्ठा स्यात् अधिकबलत्वे पलायनं सम्भाव्येत तन्निषेधार्थं तुल्यबल एव निर्गतः ततो भ्रान्तः स इति मत्वा कृष्णस्तत्र रक्षकः ततः कोपि न हतो भविष्यतीति स्वयमप्यत्र पार्ष्णिग्राहो जातः शिव इत्याह—बाणार्थमिति । मिथ्यात्वाभावाय भगवत्त्वं रुद्र इति रुत् रोगान् द्रावयतीति ससुतः कार्त्तिकेयसहितः तेन सर्वेपि देवाः अत्र समागता इति बोद्धव्यं स हि चमूपतिः प्रमथैर्वृत इति स्वभूतगणावृतत्वमुक्तं दैत्यत्वाद्बाणस्य दैत्याः सहजाः अनेनैकत्र भगवान् संवत्सरात्मककालसहित अन्यत्र सर्व एवेति बहुत्वमप्रयोजकत्वञ्चोक्तम् आरुह्य नन्दिवृषभमिति स्वस्य वृषं बलीवर्दमारुह्य नाट्यमिव कुर्वन् रामकृष्णयोर्युयुधे ताभ्यां सह वस्तुतस्तु तयोरेवायम् ॥ ५—६ ॥

ततो युद्धं वर्णयति द्वाभ्याम्—आसीदिति । सुतुमुलमिति अधिकं निरन्तरशस्त्रपातसहितं रोमहर्षणं श्रुते रोमाञ्चो भवतीति विशेषतोप्याह—कृष्णशङ्करयोरिति । राजन्निति कदाचिन्महान्तोपि युद्धं कुर्वन्तीति प्रद्युम्नगुहयोरुभयोः पुत्रयोः ॥ ७ ॥

कुम्भाण्डकूपकर्णौ दैत्यसिद्धौ उभाभ्यां बलेन सह संयुतः साम्बस्य बाणपुत्रेणेति बाणपुत्र इत्येव प्रसिद्धः न तु नाम्नेति बाणेन सह सात्यकिर्महारथः ॥ ८ ॥

श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बाणार्थमिति । तद्दुःसङ्गदोषव्यञ्जनार्थमिति भावः । भगवानिति सर्वज्ञोपि स्वपराभवेन बाणमन्यांश्च तन्महिमानं दर्शयितुमिति भावः इति प्राञ्चः । भगवतो युद्धोत्साहसुखसम्पादनार्थं नरलीलत्वेऽपि रामाद्यवतारतो वैलक्षण्येन सर्वोत्कर्षख्यापनार्थञ्च लीलाशक्तिप्रेरिता योगमायैव ब्रह्माणमिव तमपि तदीयानपि विशेषतो मोहयामासैव अत एवोक्तं भक्तिरसामृतसिन्धौ "ब्रह्मरुद्रादिमोहनम्" इति नवीनाश्चाहुः ॥ ६-१२ ॥

ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ।
गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ ९ ॥
शङ्करानुचरान् शौरिर्भूतप्रमथगुह्यकान् ।
डाकिनीर्यातुधानांश्च वेतालान् सविनायकान् ॥ १० ॥
प्रेतमातृपिशाचांश्च कूश्माण्डान् ब्रह्मराक्षसान् ।
द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥ ११
पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे ।
प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ससुतः स्कन्दसहितः ॥ ६—१२ ॥

---

भाषा टीका ।

यादवन की सेना से पुरके बाग किला अटाली गोपुर न को टूटने हुये देखकर क्रोधसे व्याप्त होकर बाणासुर भी उतनीही सेना को लेकर युद्ध करनेके वास्ते अपने पुरसे निकलता भया ॥ ५ ॥

बाणासुर की सहायता के वास्ते महादेव भगवान् नन्दीश्वर नादिया बैलपर बैठकर स्कन्द आदि पुत्रों सहित तथा भूत प्रेत आदि प्रथम गणों से युक्त होकर राम कृष्ण के साथ युद्धकरते भये ॥ ६ ॥

अति संकुल अद्भुत और जिसके देखने सुनने वारेन के रोम खडे हो जावें ऐसा घोरयुद्ध होता भया ॥ ७ ॥

हे राजन् ! श्रीकृष्ण और शंकर का तथा प्रद्युम्न और स्कन्द का परस्परमें युद्धभया कुम्भाण्ड और कूपकर्ण के साथ बलदेवजी का साम्बका बाणके पुत्रके साथ और बाण के साथ सात्यकी का संग्राम भया ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मा आदिर्येषां ते सुराधीशाः एतदादीनां यथोत्तरं न्यूनत्वम् ॥ ९ ॥

शङ्करेति युग्मकम् । प्रेतमातृपिशाचांश्चेति पाठः काश्यादौ । भूतमात्रेति पाठे तु पौनरुक्त्यं समाधेयं देवमातृभ्यो गौर्य्यादिभ्योऽन्या एता भूतमातरः द्रावयामासैव नत्ववधीत् यतः स्वभक्तस्य शङ्करस्यानुचरान् शार्ङ्गधनुषश्च्युतैः निस्सृतैरिति कृष्णमाहात्म्यञ्च दर्शितम् ॥ १०-११ ॥

दिव्यानि ब्रह्मास्त्रादीनि पृथक् असङ्कीर्णतया प्रायुङ्क्त पृथग्विधानीतिपाठे स एवार्थः शार्ङ्गिणे पिनाकीति नामभेदोऽपि धनुरादानमुक्तं तत्र परमन्याययुद्धाङ्गीकारव्यञ्जकम् अविस्मितः सावहेलः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मादय इति । सिद्धचारणादीनामितरेतरयोगद्वन्द्वः तथा गन्धर्वादयोऽपि (तथा गन्धर्वादीनामपि) आगमनमाजग्मुः ॥ ९ ॥

शङ्करानुचरानिति । शौरिः कृष्णः शार्ङ्गाख्याद्धनुषश्च्युतैस्तीक्ष्णमग्रं येषां तैः शरैर्भूतादीन् शङ्करस्यानुचरान् द्रावयामासेति सम्बन्धः ॥ १०—११ ॥

पृथग्विधानीति । पिनाकी रुद्रः शार्ङ्गिणि कृष्णे पृथग्विधानि नानाविधान्यस्त्राणि प्रयुक्तवान् शार्ङ्गपाणिः कृष्णः अविस्मित एव तानि प्रत्यस्त्रैः शमयामास ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं द्वन्द्वान्युक्त्वा तस्य युद्धस्य सर्वोत्कर्षं वक्तुं ब्रह्मादीनामप्याश्चर्यदर्शनमित्याह—ब्रह्मादय इति । देवानामीशा इन्द्रादयः मुनयः सनकादयः सिद्धाः कपिलादयः एते त्रिविधाः उत्तमाः सिद्धचारणा गन्धर्वाप्सरसो यक्षाश्चेति त्रिविधा निकृष्टाः एवं षड्विधेषु निरूपितेषु सर्व एव निरूपिताः भवन्ति विमानैरागमनं युद्धाभिनिवेशेन देहविस्मारणेऽपि अपातार्थम् ॥ ९ ॥

ततः प्रतिपक्षाणां खण्डनमाह—शङ्करानुचरानिति । देवास्तु तदीया एवेति शङ्करानुचरा एव ताडिताः यैः पूर्वं प्रतिज्ञा कृता शौरिरिति पितृनाम्ना निर्देशः भूताः प्रमथाः गुह्यका इति त्रयः डाकिनीरित्यादि त्रयः ॥ १० ॥

भूतमातृपिशाचांश्च कूष्माण्डा ब्रह्मराक्षसाः विनायकाश्चेति द्वादशधा भवन्ति तान् सर्वानेव कालग्रस्तान् तीक्ष्णाग्रैः शरैः शार्ङ्गच्युतैरिति समर्थैः हेतुभिः कृत्वा भृशं द्रावयामास तत्प्रहारैर्व्यथिताः पलायनपरा जाताः ततो भृत्येषु निवृत्तेषु पिनाकी पिनाकेन पृथग्विधान्यस्त्राणि शार्ङ्गिणे भगवते प्रायुङ्क्त मादौ तुल्यानि तानि निरूपणार्थं धनुर्द्वयग्रहणं

ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम्।
आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १३ ॥
मोहयित्वा तु गिरिशं जृम्भणास्त्रेण जृम्भितम्।
बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥ १४ ॥
स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः।
असृग्विमुञ्चन् गात्रेभ्यः शिखिनाऽपाक्रमद्रणात् ॥ १५ ॥
कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ।
दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवान् पुनस्तस्य निराकरणमेव कृतवान् न तु तं दूरीकृतवानित्याह---प्रत्यस्त्रैरिति। लौकिकत्वार्थं शार्ङ्गपाणिरिति अविस्मित इति अयेपि गर्वाभाव उक्तः लौकिकाभिनिवेशद्योतकः ॥ ११—१२ ॥

भाषाटीका।

देवताओं में श्रेष्ठ ब्रह्मादिक और मुनिजन तथा सिद्ध चारण गन्धर्व अप्सरा यक्ष लोग युद्ध देखने के लीये विमानन में बैठकर आते भए ॥ ९ ॥

भूत प्रमथ गुह्यक डाकिनी यातुधान वेताल विनायक ॥ १० ॥

प्रेत मातृगण पिशाच कूष्माण्ड ब्रह्मराक्षस आदि महादेव के किङ्करन को श्रीकृष्ण भगवान् शार्ङ्गधनुषते निकसे और तीक्ष्ण अनी वारे बाणों से भगाते भये ॥ ११ ॥

महादेव ने श्रीकृष्ण के ऊपर नानाप्रकार के अस्त्र छोडे परन्तु शार्ङ्ग धनुषधारी श्रीकृष्ण भगवान् अविस्मित होकर प्रतिकूल अस्त्रों से उन को शमन करते भए ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रत्यस्त्राण्येवाह—ब्रह्मास्त्रस्येति। नैजं नारायणास्त्रम् ॥१३-१४॥

शिखिना मयूरेण वाहनेन ॥ १५ ॥

तयोरनीकानि हतौ नाथौ येषां तानि ॥ १६—२० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ब्रह्मास्त्रस्य कृते ब्रह्मास्त्रं प्रायुङ्क्तेति पूर्वेणैवान्वयः नैजं निजं स्वार्थेऽण् ॥ १३ ॥

जृम्भितं जृम्भायुक्तं सन्तं मोहयित्वा तथा च हरिवंशे—
"सशरः सधनुश्चैव हरस्तेनाशु जृम्भितः।
संज्ञां न लेभे भगवान् विजेतासुरसत्तम ॥ इति
अस्त्रादीनां यथोत्तरं दूरव्यापनेन श्रैष्ठ्यम् ॥ १४ ॥

एवं श्रीकृष्णस्य जयमुक्त्वा तदीयानामाह— स्कन्द इति द्वाभ्याम् ॥ १५ ॥

कुम्भाण्ड इति। एवं साम्बेनापि बाणपुत्रो निर्जित इति ज्ञेयम् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह— ब्रह्मास्त्रस्येति। नैजं नारायणास्त्रं शामकं प्रायुङ्क्तेत्यर्थः ॥ १३ ॥

मोहयित्वेति। जृम्भणाख्येनास्त्रेण गिरिशं जृम्भितं जृम्भणयुक्तं यथा तथा मोहयित्वा ॥ १४ ॥

स्कन्द इति। स्कन्दः षण्मुखः असृग्रुधिरं विमुञ्चन् शिखिना मयूरवाहनेन सह रणस्थानादप्राद्रवत् ॥ १५ ॥

कुम्भाण्ड इति। मुसलेन बलभद्रप्रयुक्तेनार्दितौ पीडितौ पेततुः हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दिक्षु दुद्रुवुः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विशेषत आह--ब्रह्मास्त्रस्य च ब्रह्मास्त्रमिति। चकारात्सर्व एव ब्रह्मास्त्रभेदा गृहीताः नात्र पूर्वोत्परबलीयस्त्वं किन्त्वस्त्राभिमानं बलं च प्रयोजकमिति लौकिकेपि भगवदुत्कर्ष एव वायवस्य चेत्यत्रापि तथा पर्वतास्त्रमेव तस्य निवारकं वात्यांर्यवन्तरस्य निवारकत्वाभावादाग्नेयस्य च पार्जन्यं जलेनैवाग्निः शाम्यतीति षष्ठ्यन्तस्य शमनार्थे प्रथमान्तं प्रायुङ्क्तेति योजना पृथग्विधानि प्रायुङ्क्तेत्यत एवानुवृत्तिः नैजं नारायणास्त्रं पाशुपतस्य निराकरणार्थं प्रायुङ्क्तेति दृष्ट एवान्धकारस्य निवारकः सूर्यः तथैव सत्त्वं तमसः चकारेणावान्तरास्त्राण्यपि परिगृहीतानि ॥ १३ ॥

ततः क्षीणास्त्रं जृम्भणास्त्रेण मोहयामास जृम्भणाख्यो गणः तृतीये निरूपितः तदस्त्रं तद्देवत्यं तुशब्दस्तु मोहाभावपक्षं व्यावर्तयति तत्र हेतुर्गिरिशमिति। महामोहः पर्वतेष्वेव प्रतिष्ठितः जृम्भितमिति देवताया अनुभावो दर्शितः अन्यथा अलौकिकप्रकारेण मोहसम्भावना स्यात् ततो महादेवे मोहाव

तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै जगतो भवाय।
वयञ्च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥ ३७ ॥
त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः।
प्रतीयसेऽथापि यथा विकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥ ३८ ॥
यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च सञ्चकास्ति।
एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥ ३९ ॥
यन्मायामोहितधियः पुत्रदारगृहादिषु।
उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वामिनि त्वयि प्रातिकूल्ये मया स्वभक्ताभयदानप्रतिज्ञापालननिर्बन्धतः कृतमतोऽस्मै बाणायाभयं दत्त्वा मां सत्यप्रतिज्ञं कुर्वित्याशयेन भगवन्तं स्तौति-त्वमित्यादिना। वाङ्मये ब्रह्मणि वेदे प्रतिपादके गूढं विविधैरतिदुर्बोधैः शब्दैर्वर्णितं ब्रह्म-बृहत्स्वरूपगुणशक्तिजिज्ञास्यं तत्त्वं परं चेतनाचेतनविलक्षणं ज्योतिः सर्वप्रकाशम् आकाशमिव सर्वगतेऽपि सर्वदोषास्पृष्टम् केवलं स्वाश्रयम् त्वमेवासि कथं तर्हि सपरिकरो युद्धकृत्नवानत आह—यमिति। अमलात्मानः सात्त्विकाः ये त्वां पश्यन्ति त्वन्मायागुणेन तमसा मोहितत्वादकार्यं कृतवानिति भावः ॥ ३४ ॥

किञ्च विभूतिभूतेन मया विभूतिमति त्वयि प्रातिकूल्यं सर्वथा मोहादेव कृतमित्याशयेन भगवन्तं विराड्रूपिणं स्तौति-नाभिरिति द्वाभ्याम्। श्रुतिः श्रोत्रम् आत्मा अहङ्कारः भुजाः इन्द्रः विसर्गो मेढ्रम् किम्बहुना लोकान् सर्वान् विभूतिभूतान् यः कल्पयति सृजति स भवान् ॥ ३५-३६ ॥

भाषा टीका।

जब बाणके भुजा कटने लगे तब भक्तन के ऊपर कृपा करने वारे महादेव भगवान् के पास में आय कर श्रीकृष्ण की स्तुति करते भए ॥ ३३ ॥

श्रीमहादेवजी बोले कि परब्रह्म ज्योति स्वरूप आप हो वाणी मनके गोचर न होकर आप वेद में छिप रहे हो, निर्मल बुद्धि वारे ज्ञानीजन जिस आपको आकाश के समान निर्लेप देखते हैं ॥ ३४ ॥

जिस विराट् रूप आपका अन्तरिक्ष नाभि है और अग्नि मुख है, जल वीर्य्य है, तथा सत्य लोक मस्तक है दिशा श्रोत्र इन्द्रिय है पृथिवी चरण है, चन्द्रमा मन है, सूर्य्य नेत्र है मैं रुद्र अहङ्कार है, समुद्र उदर है, इन्द्र आदि लोकपाल भुजा हैं ॥ ३५ ॥

और ओषधि जिसके रोम है मेघ केश है, ब्रह्मा बुद्धि है और वह प्रजापति मेढ़ इन्द्रिय है तथा धर्म जिस का हृदय है, इस प्रकार लोकन की कल्पना जिस में हो रही है, ऐसा विराट् रूप आपहि हो ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, तस्वतः प्रादेशिकशरीरस्य कथं नमो नाभिरित्यादीत्यत आह-तवेति। हे अकुण्ठधामन् अप्रच्युतस्वरूप! भवायाभ्युदयाय न केवलमेतावत्किन्त्वस्मदनुग्रहार्थमपीत्याह-वयञ्चेति। सर्वे लोकपालास्त्वया पालिताः सप्तापि भुवनानि पालयाम इति ॥ ३७ ॥

ननु, यदि विभावयितारो यूयं विभाव्यानि च भुवनानि सन्ति तर्हि कथमुक्तं त्वं हि ब्रह्मेति नहि ब्रह्मत्वे मम सजातीयविजातीयभेदः सम्भवतीत्यत आह-त्वमिति। एकः सजातीयभेदरहितः कुतः आद्यः पुरुषः पुरुषाणामवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः कुतः तुरीयः शुद्ध इत्यर्थः। तदपि कुतः स्वदृक् स्वप्रकाशज्ञानरूपः शुद्धादेव सोपाधियोगाज्जीवा जायन्ते "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व एव आत्मानो व्युच्चरन्ति" इति श्रुतेः। अतः सजातीयरहितः किञ्च अद्वितीयो विजातीयरहितोऽपि कुतः हेतुः सर्वस्य तथा स्वयं हेतुरहितश्चेति कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयते अत आह-प्रतीयस इति। सर्वगुणप्रसिद्ध्यै सर्वविषयप्रकाशनाय ॥ ३८ ॥

तर्हि किमहमेवं संसारीत्युच्यते नहि नहीति सदृष्टान्तमाह-यथैवेति। हे भूमन्! स्वया छायया मेघलक्षणया परदृष्ट्या पिहितश्छादितोऽपि सूर्यश्छायां मेघं च रूपाणि च मेघान्तरितान् घटादीनपि सञ्चकास्ति प्रकाशयति एवं गुणेन अहङ्कारेण स्वकार्येण जीवावरकेण तद्दृष्ट्यापिहितोऽपि गुणान् सत्त्वादीनुपाधीन् गुणिनश्चोपहितान् जीवानपि चकास्ति आत्मप्रदीपः स्वप्रकाशः अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥ ३९ ॥

किञ्च मायाश्रयस्यान्यान्मोहयतस्तव कुतः संसृतिरित्याशयेनाऽऽह-यन्मायेति। पुत्रादिषु प्रसक्ताः वृजिनार्णवे दुःखसागरे उन्मज्जन्ति देवादियोनिषु निमज्जन्ति स्थावरादिषु तदुक्तं वायवीये "विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोः" इति ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तवेति तैर्व्याख्यातं तत्र प्रादेशिकत्वमेकदेशत्वं नभो नाभित्वादित्थं तत्पद्माधिष्ठिततत्तद्वस्तुत्वं तत्र सिद्धान्तः सर्वदेशकालाप्रच्युतश्रीविग्रह एव त्वमचिन्त्यशक्त्यैव प्रादेशिकतया आसीति अप्रच्युतस्वरूप इत्यस्य तात्पर्य्यानुरूपः यद्वा नन्वेवम्भूतस्य मम कथं प्रपञ्चे स्वस्वरूपेण प्राकट्यं तत्राह-तवेति ! हे अकुण्ठधामन् श्रीगोलोकादिनित्यधाम ! तत्र अवतारः अपूर्ववत् प्रपञ्चे प्राकट्यं धर्मस्य प्राधान्यतत्त्व-ज्ञकानां स्वभक्तिलक्षणस्य (अतो) जगतः सर्वजीवानामेव भवाय लोकद्वयश्रेयसे अतो वयञ्चेति विशेषेण स्वभक्तिविस्तारणादिना पूर्वत आधिक्येन भावयामः ॥ ३७ ॥

त्वमेक इति तैर्व्याख्यातं तत्र सम्भवतीत्यस्यान्ते येन भेदेन भवन्तो भावयितार इति शेषः । पुरुषाणामित्यादौ विशेषैकापेक्षया जीवेश्वरस्वरूपभेदविवक्षया प्रकाशनाये-त्यन्ते अतो वयमपि तद्विभूतिरूपा एवेति सजातीयादिभेदाभावात् त्वमेव ब्रह्मेति पर्य्यवसितमिति शेषः । किञ्च यथाधिकारं स्व स्व देहानुरूपचैतन्यप्रकाशतारतम्येन नानाविधः प्रतीयस इत्यर्थः । तत्र स्वमायया अचिन्त्यशक्त्येति तत्स्वरूपे तद्धर्मोऽपर्यायश्च निरूपितः अन्वयैः । यद्वा त्वमेकः सजातीयभेदरहितः अद्वितीयो विजातीयभेदरहितश्च यतः आद्यः “ विष्णोस्तु त्रीणि रूपाणि” इत्युक्तानां पुरुषाणां मूलरूपः अतस्त्वमेव पुरुषः “ पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्”इति श्रुतेः ।कुतस्तुरीयः विराड् हिरण्यगर्भश्च कारणं चेत्युपाधयः “इंद्रस्य यत्तिभिर्हीनं तुरीयं तद्विदुर्बुधाः ” इत्युक्तलक्षणः तदपि कुतः स्वदृक् स्वयं प्रकाशः अतो हेतुरहेतुरपि यद्यप्येवमखण्डस्त्वं तथापि यथाधिकारं तत्तदधिकारानुसारेण सर्वेषां तेषां सत्त्वादिगुणप्रकाशनाय महत्स्रष्ट्रादिरूपस्सन् गुणवत्प्रतीयसे तत्र मायया स्वपूर्णतावरणञ्चाधिकारतम्येनेत्यर्थः । अतस्त्वमेव चेशः यद्वा ननु केचिन्मम गुणावताराः केचिच्च विभूतय इति मत्तो यूयमभिन्ना एवेति चेत्तत्राह—त्वमेवैक ईशः वयन्तु सेवका एवेत्यर्थः । कुतः आद्यः पुरुषः यतस्तुर्य्यः नारायणवासुदेवयोरपि त्वदन्तःपातात् अद्वितीयश्च अतोऽन्येषां हेतुः स्वयन्तु हेतुरहितः यतः स्वदृक् तथापि स्वभक्तानां नित्यसत्यविचित्रबहुलरूपेण प्रकाशसे इत्याह प्रतीति स्वेषु भक्तेषु मायया कृपया तेषामेकान्तित्वादिसर्वगुणस्य प्रसिद्ध्यै लोकेषु विख्यातये प्रकर्षेण सिद्ध्यै वा यथाधिकारं भावानुसारेण प्रतीतो भवसीति ॥ ३८ ॥

यथैवेति तैर्व्याख्यातं तत्र सर्वत्र हेतुः हे भूमन् ! सर्वात्मत्वादपरिच्छिन्नेति यद्वा ननु ममैव चेन्महत्स्रष्ट्रादिरूपत्वं तर्हि तत्तद्रूपेण मायादिप्रवर्त्तयितुर्ममैव तत्तद्दोषलेपः स्यादित्याशङ्क्य दृष्टान्तेन परिहरति-यथैवेति । यद्वा एवं महाकृपां तन्वन्नपि साधुवर्गशिरोमणिस्त्वं स्वाभाविकलज्जाविनयादिना साक्षान्न तनोषि किन्तु गुर्वादिद्वारा पारोक्ष्येणैवेति परमसद्गुणगणनिधित्वमाह—यथेति । (अपिहित) पिहित एव सन् सम्यक् प्रकाशयसि गुणेन तदस्यांशेन रश्मिस्थानीयेन जीवेन पूर्वगुर्वादिरूपेणाच्छन्नः सन्निति तद्द्वारैवेत्यर्थः । गुणान् कारुण्यादीन् तत्प्रकाशनार्थं गुणिनश्च कारुण्यादिकर्तॄन् परस्परगुर्वादीन् सम्यक् प्रकाशयसि न च तत्प्रकाशने नान्यो हेतुरस्तीत्याह—आत्मना स्वयमेव प्रदीपयति कृपया प्रकाशयतीति तथा सः तत्र हेतुः , भूमन् हे अपरिच्छिन्नमाहात्म्येति ॥ ३९ ॥

तदेवं निगूढं तन्महिमानं व्यज्य प्रस्तुतं वाणार्थप्रसादनं योजयितुं परमापत्प्राप्त्या मद्राहितं वाणमपि शिक्षयितुं निवेदयन्ति पञ्चभिः—तत्र तावत्त्वन्महिमाज्ञानमस्य नाश्चर्य्यं प्रायशः सर्वस्यैव मोहितत्वादित्यभिप्रेत्याह-यदिति । यस्य तव मायया इति ( पूर्ववत्तज्ज्ञानापेक्षा ) यद्यत्र तस्य प्रेरकत्वं नाभिमतं किन्तु तत्सम्बन्धाभासबलेन तस्या एव स्वतः कर्तृत्वं तच्च युक्तं तस्मिन्वैगुण्यापातात् बध्यते आत्मानं प्रियमीश्वरमिति ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अद्वितीयः समाभ्यधिकरहितः ॥ ३८ ॥

सूर्य्यः स्वच्छायया स्वकीयरश्मिनिवारणप्रभावजातया पिहितो न भवतीत्यपिहितः अनाच्छादितः सः छायां स्वञ्च काशि प्रकाशयति मेघे तमसि शाखादिच्छायाया अदर्शनात् छायाया आदित्यप्रकाश्यत्वमित्यभिप्रायः गुणेन सत्त्वादिगुणेन गुणान् पृथिव्यादीन् आत्मप्रदीपः स्वप्रकाशः ॥ ३९-४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेवमप्ययं दुरात्मा निग्राह्य एवेति चेत् यद्यप्येवं तथाप्यधुना शरणागतोऽनुग्राह्य एव युक्तं चैतत्तवावतारस्य प्रपन्नलोकाभ्युदयार्थत्वादित्यभिप्रयन्नाह—तवेति । हे अकुण्ठधामन् ! धाम तेजः स्वभाव इति यावत् अवतारदशायामप्यप्रच्युतसार्वज्ञ्यसर्वशक्त्यादिस्वभावेत्यर्थः । जगतः प्रपन्नलोकस्य भवायाभ्युदयाय च अभवायेति वा छेदः अभवाय भवप्रयुक्ततापत्रयनिवृत्तये इत्यर्थः । अनुग्राह्यश्चेत्तर्हि त्वमेवैनमनुगृहाणेत्यत आह—वयमिति । सर्वे वयं लोकपालास्तावत्त्वया सृष्टाः अनु ततो भाविताः पालिताः सप्त भुवनानि विभावयामः पालयामः वयं (त) त्वत्परतन्त्रा इतिभावः ॥ ३७ ॥

आकाशमिव केवलमिति निरस्तनिखिलदोषत्वमुक्तं विराट्शरीरत्वोक्त्या सर्वान्तरात्मत्वं फलितं तवावतारोयमित्यनेन निरुपाधिकरक्षकत्ववात्सल्यसौशील्यादिकमाविष्कृतम् । अथ परत्वोपयुक्तं कारणत्वादिकमाह—त्वमेक इति । त्वमस्य जगतः हेतुः कारणं किं चतुर्मुखादिव ? नेत्याह—अहेतुरिति । स्वयं कारणान्तररहितः, किं निमित्तकारणं ? नेत्याह—एक इति । अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वेनैकत्वव्यपदेशार्हः आद्यः पुरुषः जगदुपादानकारणभूतपुरुषश्चेत्यर्थः । किमुपादानकारणमेव ? नेत्याह—अद्वितीय इति । अधिष्ठात्रन्तररहितः निमित्तकारणञ्चेत्यर्थः । अत एव प्रकृतिपुरुषविलक्षण इत्याह—स्वदृक् तुर्य्यश्चेति । स्वदृक् स्वयम्प्रकाशज्ञानस्वरूपः अनेन प्रकृतिवैलक्षण्यमुक्तं जडत्वात्तस्याः तुर्य्यः जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसम्बन्धरहितः अनेन जीववैलक्षण्यमुक्तम् आकाशमिव केवलमित्यनेन तुर्य्य इत्यनेन च निर्विकारत्वमुक्तम् एक आद्यः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुरुष इत्यनेन विकाराश्रयत्वरूपोपादानत्वं कथमेतदुभयं मिथो विरुद्धमेकस्मिन्नुपपद्यते ? इत्याशङ्क्य परिहरति—प्रतीयस इति । यद्यपीदं परस्परविरुद्धमथाऽपि सर्वगुणप्रसिद्ध्यै सर्वेषां गुणानां स्वापृथक्सिद्धविशेषणानां प्रकृतिपुरुषादीनां प्रसिद्ध्यै देवमनुष्यत्वाद्याकारसिद्धये स्वमायया आत्मीयसङ्कल्पेन यथाविकारं प्रकृतिपुरुषगतस्वरूपान्यथाभावस्वभावान्यथाभावरूपविकारानुगुणं प्रतीयसे तत्तदन्तरात्मतया तत्तन्नामरूपनिर्वाहकत्वेन प्रतीयसे प्रमीयसे वेदान्तजन्यप्रमाविषयो भवसीत्यर्थः । अस्मिन् विषये वेदान्तानामेव प्रामाण्यमिति भावः ॥ ३८ ॥

सर्वगुणेत्यनेन प्रकृतिसम्बन्धः सूचितस्तर्हि जीवस्येव प्रकृत्या तिरोहितस्य यथाविकारमन्तरात्मतया प्रकाशो न स्यादित्याशङ्कां दृष्टान्तेन निराकरोति-यथैवेति । अपिहित इति च्छेदः दार्ष्टान्तिके गुणेनापि इति दर्शनात् अन्यथोपमानीयप्रसङ्गाच्च अपिहित इति नञ्समासः ननु "वष्टिभागुरिः" इति वचनविहिताकारलोपाभावपक्षे रूपं स्वया स्वप्रकाश्यया छायया मेघादिरूपया अपिहितो ऽतिरोहितस्वरूपस्वभाव एव सन् नहि मेघादिना सूर्यतत्प्रभयोस्तिरोधिः मेघादीन् भित्वा तदन्तर्बहिश्च प्रसरणात् अन्यथा तद्व्यवहितरूपाग्रहणाप्रसङ्गात् यथैवम्भूतः सूर्यः छायां मेघादीन् रूपाणि तद्व्यवहितरूपाणि च सप्रकाशस्ते सम्यक् प्रकाशयति एवं हे भूमन् ! गुणेन सत्त्वादिगुणेन गुणमयप्रकृत्येति यावत् अपिहितः अतिरोहितस्वरूपस्वभाव एव त्वं गुणान् प्रकृतितत्कार्य्यगतधर्मान् गुणिनःप्रकृत्यादींश्च प्रकाशयसि आत्मप्रदीपः स्वप्रकाशश्च यद्यपि दृष्टान्ते छायासूर्ययोः न सम्बन्धः मिथस्तयोर्विप्रकृष्टत्वात् दार्ष्टान्तिकेत्वपृथक्सिद्धविशेषणविशेष्यभावः सम्बन्ध इति दृष्टान्तो विषमस्तथापि विप्रकृष्टस्येवापृथक्सिद्धाया अपि प्रकृतेरतिरोधायकत्वमन्यप्रकाशकत्वं तिरोधानप्रतीतेर्भ्रमरूपत्वञ्चेत्येतदेव दृष्टान्ताभिप्रेतम ॥ ३९ ॥

न केवलमयमेवाज्ञः किन्तु सर्वेपि त्वन्मायामोहितत्वादित्यभिप्रयन्नाह—यन्मायेति । यस्य तव मायया मोहिता धीर्येषां ते पुत्रादिष्वासक्ताः वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति उत्प्लवन्ते पुनर्निमज्जन्ति च ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मन्वेवम्भूतस्य मम कथं प्रपञ्चे स्वस्वरूपेण प्राकट्यम ? तत्राह-तवेति । धर्मस्य प्राधान्यतस्त्वद्भक्तिलक्षणस्य ॥ ३७ ॥

त्वमेकः सजातीयभेदरहितः अद्वितीयो विजातीयभेदरहितश्च यत आद्यः "विष्णोस्तु त्रीणि रूपाणि" इत्युक्तानां पुरुषाणां मूलरूपः अतस्त्वमेव पुरुषः । "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । कुतस्तुरीयः विराट् हिरण्यगर्भश्च कारणं चेत्युपायः "ईशस्य यत् त्रिभिर्हीनं तुरीयं तद्विदुर्बुधाः" इत्युक्तलक्षणः तदपि कुतः स्वदृक् स्वप्रकाशः अतो हेतुरहेतुरपि यद्यप्येवम अखण्डस्त्वं तथापि यथाविकारं तत्तद्विकारानुसारेण सर्वेषां सत्त्वादिगुणप्रकाशनाय महदृत्स्रष्ट्रादिरूपस्सन् अण्ड-

वत् प्रतीयसे तव मायया सम्पूर्णत्वावरणशक्तिकारतम्येनेत्यर्थः । अत त्वमेवचेश्वर इति ननु ममैव-ज्ञानमहत्स्रष्ट्रादिरूपत्वं तर्हि तत्तद्रूपेण मायाप्रवर्त्तयितुर्ममैव तत्तद्दोषलेपः स्यात् इत्याशङ्क्य दृष्टान्तेन परिहरति-यथैवेति ॥ ३८—३९ ॥

तदेवं निगूढं तन्माहमानं व्यज्य प्रस्तुतं बाणार्थं प्रसादं योजयितुं परमापत्प्राप्त्या मदगाहतं बाणमपि शिक्षयितुं निवेदयति पञ्चभिः । तत्र तावदात्वन्महिमाज्ञानमस्य नाश्चर्यं प्रायः सर्वस्यैव मोहितत्वादित्यभिप्रेत्याह-यदिति ॥ ४०-४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

त्वन्तु सर्वकारणकारणं मूर्त्तानन्दः मन्येवञ्चेदहं तदा कथमवनौ भविष्यामीत्याह । तवावतारोयमित्यादि । हे अकुण्ठधामन् ! अयं तवावतारः किल धर्मस्य गुप्त्यै जगतो भवाय क्षेमाय ननु भवन्त एव लोकपालकाः, नेत्याह-वयञ्चेत्यादि । वयञ्च सर्वे ब्रह्मादयस्त्वयाऽनुभाविता अनुभावितं प्रापिताः नत्वस्माकं स्वतोनुभावः त्वदनुभावेनैव सप्त भुवनानि विभावयामः ॥ ३७—४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं विश्वरूपत्वमुक्त्वा तादृशस्यावतारे प्रयोजनमाह-तवावतारोयमिति । अकुण्ठो वैकुण्ठः स्वरूपप्रच्युतस्य समागमनं निवारयति सम्बोधनेन अयं तवावतारः धर्मस्य गुप्त्यै खलनिग्रहाय च उभयार्थमवतारः यत्र विरोधः तत्रोभयसमर्थनं विचारणीयमिति निरूप्यते-मदुक्ता भुजा धर्मः स च खलः उभयमत्र समाधेयं ननु, प्रमाणभूतोपि भवान् पक्षपातेन करणादप्रमाणं जात इति शङ्कां वारयति-वयञ्चेति । जगतो भवायेति पाठेपि उद्भवार्थमयं मारणीय इति सिद्ध्यति येन वा धर्मेणोद्भवो भवति दैत्यांशनिराकरणपूर्वकेन हि तथा वयञ्च भवतैव सर्वार्थे अनुभाविताः तथा भवेत्तया प्रेरिताः संस्कृता वा सप्तभुवनानि विभावयामः वयं तत्त्वाधिष्ठातृदेवाः ब्रह्माण्डदेवा वा सर्वत्रैव यदि वयं त्वद्भावभाविताः तदा अस्मिन्नेव कः सन्देहो भवेत् अनेन केवलतामसभावकर्त्वमिति पक्षो निवारितः अधस्तात् सप्तभुवनेषु तदनुभावः सिद्ध इति उपरितनान्येव सप्तभुवनानि गृहीतानि ॥ ३७ ॥

ननु, तथापि ममाग्रे अयमपकारं करिष्यति ततो मया मारणीय इति अस्मिन्ननुभावो न युक्त इति चेत्तत्राह-त्वमेक आद्य इति । यद्यपि भवान् सर्वत्र एक एव पूर्णगुणश्च तथापि यावन्ति रूपाणि जगति प्रसिद्धानि घटपटादीन्यपि तत्र कारणे विचार्यमाणे भगवानेव स्वस्यैकमेकं धर्मं मुख्यतया परिगृह्य तथाविधो जात इति मन्तव्यं तथा सति सहस्रभुजरूपो बाणो येन गुणेन भवति स एव गुणः कारणभूतोऽङ्गीकर्तव्य इति तथैव करणमुचितमस्माकं सर्वत्र भेदप्रतीतावपि त्वमेक एव न हि निम्बयुक्ता भक्षिता शर्करा तिक्ता

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भवति तैस्तैरत्वं साधयति, आद्य इति. यथैक एव व्रीहिः अङ्कुरादिभावेन सहस्रं व्रीहयो भवन्ति तथैक एव भगवानाद्यः कारणभूतः सञ्जातोत्पत्त्यर्थं व्रीहयभिराकरतामाशङ्क्य कारणस्य बीजात्मकत्वं स्वरूपमाह-पुरुष इति । तस्य कारणतायां द्व्यपेक्षामाशङ्क्याह—अद्वितीय इति । कार्यकारणवैलक्षण्यं कार्यवैचित्र्यं च चिन्तामणिविद्याप्यध्यवसेयं तस्योपादानत्वमविकृतत्वं निमित्तत्वञ्च पूर्वमेव साधितम् अत एव जगतः अनुपास्यतापि सिद्धा ब्रह्मत्वे च जगतः "तज्जलान्" त्वमेकं दृष्टं न क्षितिप्रलयावन्यत्रेति निदर्शनमात्रत्वं बहवो दृष्टान्ता एकीभूता भगवति सर्वविलक्षणे बुद्धिः सम्पादयन्तीति तर्कमात्रमूलत्वे अप्रामाण्यं स्यादिति दृष्टान्ताभावाच्च श्रुत्यैकसमधिगम्यमेव ब्रह्मेति स्थापितं कादाचित्कत्वेपि भगवानेव हेतुः अन्यस्मिन् कारणत्वेन परिकल्प्यमाने या उपपत्तिः सा भगवत्येव सम्पादनीया सर्वसमर्थत्वात् ब्रह्मणः भिन्नाभिन्नाधिकरणत्वे यथा विरोधपरिहारः तथैकाधिकरणत्वेपि युक्त्यपेक्षायामपि यत्र दारुनिर्यासपुष्पफलेषु बीजमेकमेव कारणं सर्वविलक्षणं दृष्टमिति तस्यैव परम्परया साक्षाद्वा कारणत्वमध्यवसीयते तथाश्रुतत्वाद्ब्रह्मणोप्यध्यवसेयम् अवधूतप्रामाण्यवेदात् तथा सति श्रुतिर्यथार्था समर्थिता भवति वैयर्थ्यं च स्यात् प्रत्यक्षानुमानादिभिरेव वैदिकार्थस्यापि सिद्धेः सङ्केतस्तु निरूपकग्रहणादेव अन्यथा तत्सम्मते आत्मादिपदानां सङ्केतः अलौकिकार्थानाम् असङ्गतः स्यात् अतो ऽद्वितीयपुरुष एव आद्यो जगत्कारणम् एवं भगवतो जगत्कारणत्वमुपपाद्य तत्रोत्पत्तिस्थितिप्रलया एव कार्यत्वेन सिद्धा इति मोक्षसाधकत्वं भगवतो वदन् पुनर्विशेषणान्तरमाह—तुर्य इति । समाख्यागम्यः यथा जाग्रत्स्वप्नसुषुप्तयः स्थित्युत्पत्तिप्रलयाभिज्ञापिकाः एवं तुर्यावस्थापि मोक्षाभिज्ञापिका तस्यां प्रादुर्भूतो भगवान् मोक्षद इति तस्य मोक्षदाने प्रकारमाह--स्वदृगिति । यथाऽद्वितीयः पुरुषो जगत्कारणं तथा स्वदृक् स्वस्मिन्नेव दृष्टियुक्तः आत्मानुभवतुष्टः मोक्षहेतुरिति ननु स्वमोक्षमेव साधयेन्नतूपासकानामन्येषां तत्राह—हेतुरिति । अन्येषामपि मोक्षो स्वदृक्त्वे तुर्यत्वे च स एव हेतुः तर्ह्यन्यस्यासत्त्वादेः स्वयं स्वस्य ततोपि मूलभूतः कश्चिद्भविष्यतीत्याशङ्क्याह-अहेतुरिति । न तस्य कश्चिद्धेतुरस्ति ननु यथा भगवान् स्वेच्छया सर्वो भवतीत्युच्यते एवं सर्वोपि सर्वं भवतु अभेदश्च श्रुत्या प्रतिपाद्यत इति तत्राह-ईश्वर इति । स हि सर्वसमर्थोपि स्वयं तथैव मूलभूतः कार्यरूपश्च स्वस्मादेव जायते सर्वसामर्थ्यस्य विद्यमानत्वात् ईश्वरेच्छाया नियन्तुमशक्यत्वाच्च एवं सर्वसामर्थ्यम् अलौकिकत्वं निर्दोषपूर्णगुणविग्रहत्वमुपपाद्य सर्वत्र पूर्णगुणकोपि यथाविकारम् इक्षुक्षीराम्ललवणादिविकारमनतिक्रम्य प्रतीयसे सर्वात्मना अप्रतीतौ भगवन्मायैव नियामिका ननु तस्याः स्वातन्त्र्यास्वातन्त्र्याभ्यां पुनः सदोषस्तदवस्थ इति चेत्तत्राह—सर्वगुणप्रसिद्ध्या इति । अन्यथा भगवदीयाः सर्वे गुणाः प्रत्येकञ्च प्रसिद्धाः भवेयुः यथा षड्रसोपि हरीतकीनेरिसैव निसर्गतः कोपि रसः सर्वविलक्षणो न प्रतीयत इति तथैव भगवान् सर्वत्र सर्वगुणप्राकट्ये कुसरवत् प्रतीयते अतो भगवदिच्छारूपया मायया सर्वत्र पूर्णगुणकोपि यथाविकारं प्रतीयते तथैव लीलायां यादवत्वमात्रं प्रकटयितुमाविर्भूतः नान्यान् धर्मान् प्रकटितवानित्यस्मदादीनामप्यज्ञानमिति भावः ॥ ३८ ॥

ननु, सर्वत्र कारणेषु कार्योत्पत्ता कारणप्रत्यक्षता दृश्यते न त्वप्रत्यक्षतान्मृदादेः घटादिकमुत्पद्यते तथा पदार्थोत्पत्तौ कारणत्वेन ब्रह्मप्रतीतिः स्यान्न तदभावात् प्रत्यक्षविरोधात् कथं कारणतेत्याशङ्क्याह-यथैव सूर्य इति "मेघाः सूर्योद्भुताः" इति श्रुतेः । यावदादित्यस्तपति रश्मिभिः ताभिः पर्जन्यो वर्षति" इति श्रुतेः । सूर्य एव पर्जन्यो अन्यथा सवितृत्वं न स्यात् ततः सूर्यादुत्पन्ना अपि मेघाः यथा सूर्याच्छादकाः एवं जगदपि भगवदुत्पन्नमपि भगवदाच्छादकं यथा तान् मेघान् मेघान्तर्जायमानानां वृष्टिं तस्याप्यधोभूमिं भूमिष्ठांश्च पदार्थान् स्वयमदृष्टोपि प्रकाशयति एवं सर्वकारणभूतः भगवानेव सर्वत्र सर्वप्रकाशक इति न काप्यनुपपत्तिः छायया मेघैः चकारात् तत्कार्यां वृष्टिं मेघानां पृथक्त्वं निवारयति—स्वयेति । रूपाणि घटादीनि चकारात्तैर्जायमानां क्रियामपि लौकिकीं वैदिकीञ्च प्रकाशयति एवं गुणेन स्वयमेव तथाभूतेनापिहितोपि सर्वथा गुणोपि गुणान् कारणभूतान् गुणिनः कार्याणि च प्रकाशयति आत्मप्रदीपश्च भवति सर्वथा सामर्थ्यार्थं सम्बोधनं भूमन्निति ॥ ३९ ॥

भगवत्कारणतायां हेत्वन्तरमप्युपपादयति—यन्मायामोहितधिय इति । विवेकिनोपि विषयान् दृष्ट्वापि दुःखदान् तत्रैवासक्ता भवन्ति तत्रेष्टसाधनतायाः लौकिककारणत्वात् तदभावेऽपि प्रवृत्तेः अवश्यं कारणान्तरमाक्षिपति प्रत्यक्षभ्रमस्य प्रत्यक्षमेव विशेषज्ञानं बाधकमिति दिङ्मोहादौ दृष्टमिति चेत्तत्राह—प्रसक्ता वृजिनार्णव इति । दृष्ट्वापि तद्गतदोषान् अनुभूयापि दुःखं पुत्रदारगृहादिषु उन्मज्जन्त्युत्पद्यन्ते अन्ते या मतिः सा गतिरिति तत्रैवासक्ताः निमज्जन्ति आसक्त्यैव तत्र स्थिता यावज्जीवं तत्रैव म्रियन्ते प्रजाम् अनु प्रजायन्त इति पुत्रादुत्पद्यन्ते पुत्रार्थमेव च काचिन्म्रियन्ते च तथैव भार्यायां पुत्ररूपेणोत्पद्यन्ते भार्यार्थं म्रियन्ते चेत्युत्पत्तिमरणे प्रसिद्धे: आदिशब्देन श्वगर्दभादिष्वपि अन्ते या मतिः सा गतिरिति नभवत्तत्राप्युत्पद्यन्ते म्रियन्ते च तस्मादेवं महामोहे हेतुः भगवच्छक्तिरेव का ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

साक्षाद्ब्रह्मस्वरूपत्वाद्दृश्यस्यापि तव यत् प्रापञ्चिकलोकैर्दृश्यत्वं तदतर्क्यशक्तेस्तव परमकृपानिबन्धनामित्याह । तवेति । हे अकुण्ठधामन् ! परब्रह्मणोपि तव यद्दृश्यत्वं तस्मात्तर्कैस्तव प्रभावः कुण्ठीकर्तुमशक्य इत्यर्थः । धर्मस्य स्वभक्तिलक्षस्यणगुप्त्यै तत्प्रतिपक्षमतनिरसनपूर्वकरक्षणाय जगतः कर्मिज्ञानिमूढदुराचारबहिर्मुखपर्य्यन्तस्यापि अभवाय मोक्षाय न च सामान्यजगत्पालनायेत्याह—वयमिति । सर्वे दश दिक्पालाः भवता अनुभाविताः पालिताः सन्तः पालयाम एव तन्मात्रार्थं तवाविर्भावे किं प्रयोजनमिति भावः ॥ ३७ ॥

मद्विभूतयो यूयमपि मदभिन्ना एवेति तत्र नहि नही-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्याह । त्वमेकः सजातीयभेदरहितः ईश्वरान्तराभावात् त्वत्स्वरूपभूतानां मत्स्याद्यवताराणामपि मध्ये त्वमाद्यः स च त्वं मनुष्याकृतिरेवेत्याह, पुरुषः त्वत्स्वरूपाङ्गिका जीवशक्तिः मायाशक्तिरपीत्याह । अद्वितीयः विजातीयभेदरहितः किञ्च पुरुषाकाराणां मुख्यानां स्वरूपभूतानां चतुर्णां व्यूहानाम् अपि मध्ये त्वं तुर्य्यः वासुदेवस्वरूप इत्यर्थः । ननु त्वामन्यः कोपि दर्शयितुं शक्नोतीत्याह । स्वदृक् स्वेनैव दृक् दर्शनं यस्य स अतः सर्वश्रेष्ठत्वात्त्वमेव हेतुः सर्वकारणम् अहेतुस्तव तु कारणं नास्तीत्यर्थः । अत एव ईशः मुख्यमैश्वर्यं तवैवेति भावः एतादृगैश्वर्य्यवानपि त्वमतितुच्छानां मायिकगुणानामप्युपकारं करोषीत्याह—प्रतीयस इति । तथापि तदपि यथाविकारं प्रतिशरीरं स्वमायया कृत्वा ये सर्वे गुणा बुद्धीन्द्रियादयस्तेषां प्रकटसिद्ध्यर्थं प्रतीयसे अन्तर्यामिरूपेणानुभूयसे तत्र तत्रान्तर्यामित्वं यदि त्वं न स्वीकुरुषे तदा मायागुणानां प्रकाशनाभावात्ते व्यर्था एव भवेयुरिति भावः ॥ ३८ ॥

अदृष्टस्याप्यन्तर्यामिणो मायागुणप्रकाशने दृष्टान्तमाह—यथैव सूर्य्यः स्वया छायया मेघलक्षणाया पिहितः लोकदृष्ट्या आच्छादितोपि छायां मेघं रूपाणि मेघान्तरितान् लोकांश्च घटादीनपि स्वप्रकाशित प्रकाशयति एवं गुणेनाऽहङ्कारेण स्वकार्य्येण जीवावरकेण तद्दृष्ट्यापिहितोपि गुणान् बुद्धीन्द्रियविषयादीन् गुणिनो जीवानपि स्वप्रकाशित प्रकाशयसि आत्मा परमात्मा चासौ प्रदीपः प्रकाशकश्चेति ॥ ३९ ॥

स त्वमेव कृपयाऽवतीर्य जीवानुद्धरसि जीवास्तु संसारसिन्धौ पतिता एवेत्याह—यन्मायेति ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च सर्वपोषके स्वामिनि पोष्येण मया व्यतिक्रमः कृत इति सूचयति—तवेति । हे अकुण्ठधामन् निरावरण ! भवाय अभ्युदयाय भाविताः पालिताः ॥ ३७ ॥

ननु, चक्षुरादिवृत्तिपरिच्छिन्ने पित्रादौ अयमनेन पालितः इति पालकपालितयोः सम्बन्धो दृष्टः कथमकुण्ठस्वरूपे सर्वकरणवृत्तिभिरपरिच्छेद्ये पालकोऽयमिति प्रतीतिरिति शङ्कां निराकरोति—त्वमेक इति । एकः केवलः सजातीयभेदशून्यः अद्वितीयः विजातीयभेदशून्यः सजातीयस्य विजातीयस्य च पदार्थान्तरस्य आवरकस्याभावात् यद्यपि निरावरणस्त्वमसि तथापि गुणप्रसिद्ध्यै कृपालुत्वस्वभक्तरक्षकत्वसर्वार्थप्रदत्वादिगुणविख्यापनाय यथाधिकारं विकारो मायाकार्यं तत्तदनुसारेण मायया कृपया प्रतीयसे करणवृत्त्यनावृतोपि हृदि ध्यातृभिरनुभूयसे इत्यर्थः । नन्वेवम्भूतभेदत्रयशून्ये मयि सति कुतो ध्यातृध्येयादिभेदसिद्धिरित्यत्र स्वगतभेदास्सर्वं सङ्गच्छते इत्याह—आद्य इति । विश्वस्याऽभिव्यक्तनामरूपस्य बीजमित्यर्थः । तर्हि किं प्रधानमेत्याह—स्वदृक् स्वयंप्रकाशः अत एव हेतुः स्वगतस्य चेतनाचेतनात्मकस्य विश्वस्योत्पादकः स्वयमहेतुरनन्यासिद्धः किञ्च स्वरूपतोप्यनेकधा कृपया प्रतीयसे इत्याशयेनाह—पुरुष इति । अनेकपुरुषरूप इत्यर्थः—

"आद्यस्तु महतः स्रष्टा द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥"

इति सात्वततन्त्रोक्तेः तुर्य्यः वासुदेवः वासुदेवादिचतुर्व्यूहस्वरूप इत्यर्थः ॥ ३८ ॥

गुणप्रसिद्ध्यायित्यनेन निर्दिष्टान् गुणान् एकदेशकथनेन सूचयन् तत्सद्भूदि प्रविष्टस्याप्यनावृतत्वं प्रपञ्चयति—यथैवेति । यथा सूर्यः स्वच्छायया मेघलक्षणया पिहितः प्रभया छायां मेघञ्च रूपाणि मेघान्तरितान् घटादीन् अपि स्वप्रकाशित प्रकाशयति एवं गुणेन इदा पिहितः "अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेरन्तःप्रविष्टोपि हे भूमन् हे सर्वगत ! सर्वव्यापकत्वादनावृतः गुणान् अन्तःकरणभेदान् गुणिनम् अन्तःकरणवतो जीवान् आत्मा परमात्मा चासौ प्रदीपः सर्वप्रकाशकः प्रकाशयतीत्यर्थः ॥ ३९ ॥

अन्योपि जनस्त्वन्मायामोहितः न केवलमहमेवेत्याह—यन्मायेति । वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति देवादियोनिषु निमज्जन्ति स्थावरादिषु ॥ ४० ॥

---

भाषा टीका ।

हे अकुण्ठधामन् ! आपका यह अवतार धर्म की रक्षा के निमित्त और जगत् के कल्याण के अर्थ है और हम सब लोक तो आपके किये हुए प्रभाव भक्त होकर सातों लोकन का पालन करते हैं ॥ ३७ ॥

और प्रलयकाल में देव मनुष्य आदि नाम रूप रहित सूक्ष्म जीव माया युक्त होकर जगत् की उपादान कारण और निमित्त कारण आपही हो तथा सब के अन्तर्यामी और जाग्रत् स्वप्न सुषुप्ति से अतीत स्वयं प्रकाशमान तथा सबके कारण अपना कारण रहित सबके नियन्ता आप हो तथापि अपने ऐश्वर्य्य आदि गुणन की ख्याति के निमित्त अपनी इच्छा से मत्स्य कूर्म उपेन्द्र राम कृष्ण आदि रूप से अथवा देव मनुष्यादिकों के अन्तर्यामी रूप से प्रतीत होते हो ॥ ३८ ॥

जैसे कि सूर्य्य दूसरे के देखने में ऐसा प्रतीत होता है कि-मानो मेघसे ढकि रहा है परन्तु वह सूर्य्य उससे नहि ढककर मेघ और सब वस्तु का प्रकाश करता है हे भूमन् ! तैसे ही जीवके देखने में आप ऐसा प्रतीत होते हो कि मानो गुण मयी माया से ढक रहे हो परन्तु उससे नहि आच्छादित होकर माया के कार्य्य देहादिक और देहधारी जीवन को प्रकाश करने वारे स्वतेपि आप प्रकाश मान हो रहे हो ॥ ३९ ॥

जिस आपकी माया से मोहित बुद्धि वारे पुरुष स्त्री पुत्र गृह आदि में आसक्त होकर दुःख रूप समुद्र में कभी डूबजाते हैं कभी उछल आते हैं ॥ ४० ॥

---

देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः॥ ४१॥
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम्।
विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन्॥ ४२॥
अहं ब्रह्माऽथ विबुधा मुनयश्चामलाशयाः।
सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम्॥ ४३॥
तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम्।
अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम्॥ ४४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं जीवेश्वरव्यवस्थां निरूप्येदानीमभजन्तं निन्दति द्वाभ्याम्—देवेति। देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वापीति॥ ४१॥

शोच्यत्वे हेतुः, यस्त्वामिति। विपर्यया विपरीता अनात्माप्रियाऽनीश्वरा ये इन्द्रियार्थाः पुत्रादयस्तदर्थम्॥ ४२॥

अहमन्ये च शुद्धमनसस्त्वामेव प्राप्ता इत्याह—अहमिति॥ ४३॥

भगवतो भजनीयत्वे हेतून्वदंस्तद्भक्तिं प्रार्थयते—तन्त्वेति। समत्वे हेतुः, प्रशान्तमिति। सुसेव्यत्वमाह—सुहृदात्मदैवं सुहृदुद्धिप्रवर्तकत्वात् आत्मा च सर्वात्मकत्वात् एवम्भूतं देवमीश्वरं त्वाम् न चान्यो भजनीयोऽस्तीत्याह—अनन्यमेकं समानासमानजातीयरहितम् तत्कुतः जगतामात्मनाऽत्र केतम् अधिष्ठानम्॥ ४४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्र त्वया त्वद्भक्तियोग्यतां प्रापितोपि मयैव इव केनचित्कारुणिकेन कृतोपदेशोपि त्वद्विमुखस्त्वत्सन्निधानां शोच्य एवेत्याह—देवेति। इमं त्वद्भजनयोग्यं देवेन त्वयैव दत्तं यद्वा केषाञ्चिन्निजमहाभक्तानां सम्बन्धेन सर्वत्र प्रसारिण्या कृपया प्रापितमिमं सम्प्रति त्वदाविर्भाववन्तं नृलोकं मनुष्यभुवनं लब्ध्वेति परमोपकारित्वेनात्यन्तादरयोग्यताभिप्रेता तथाप्यजितेन्द्रियस्सन् न बहुमन्येत हि यस्मादात्मवञ्चक इति॥ ४१॥

तत्र चाधुना मयैव श्रीगुरुणा प्रकाशितमपि यस्त्वां त्यजेत् स तु परमशोच्य इत्याह—य इति। मर्त्यो मरणशील इत्यमृतत्यागायोग्यतोक्ता अभजने दण्डयति चेत्याह—ईश्वरमिति। एवमेषां विशेषणानां यथोत्तरं भजनहेतुत्वे श्रैष्ठ्यं तथापि विसृजेत् न भजेत विषमत्त्यमृतं त्यजेदिति परमाविवेकित्वमुक्तं त्यजन्निति पाठः क्वचित्॥ ४२॥

अहो परमतुच्छोपीदृशस्त्वां न भजति यं परमपूर्णा अपि वयं भजामः अतस्त्वदभजने ईदृशस्यैव हानिरित्याह—अहमिति। अहं ब्रह्मा च त्वया गुणावतारत्वया लीलाकारेण सर्वोत्कृष्टतां प्रापितः तथा विबुधा देवर्षयः मुनयो ब्रह्मर्षयश्च अमले ब्रह्मणि वाऽऽशयो येषां ते आत्मारामाश्चेत्यर्थः। तत्रापि सर्वात्मना सर्वभावेन प्रपन्ना आश्रिताः स्वेषां (प्रपत्ते) प्रपत्तौ हेतुः आत्मानं सर्वमूलस्वरूपम् अत एव प्रेष्ठम् अत एवेश्वरमपीति॥ ४३॥

अत एवेदमेव प्रार्थयामह इति वदन् बाणानुग्रहेपि कारणतया विशेषणानि विन्यस्यति—तमिति। ते भजनयोग्यं त्वा त्वां भजामः किमन्यार्थं भजध्वे? नेत्याह—भवेति। पञ्चमस्कन्धोक्तयनुसारेण भवेषु जन्मजन्मसु अपवर्गाय भक्तियोगायेत्यर्थः तत्र हेतुत्वेन स्वेषामाकर्षणं तदीयपरमकारुण्यगुणं सूचयति देवेति। दीव्यति भक्तेषु प्रकाशते क्रीडति वा यः सः॥ ४४॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

नृलोकं नरशरीरं देवदत्तं भाग्यलब्धं विसृजते इन्द्रियार्थार्थं शब्दादिविषयरूपप्रयोजनार्थम्॥ ४१—५३॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, मोहयन् वृजिनार्णवे पातयन्नाहं किं निर्घृणः? नेत्याह—देवदत्तमिति। देवेन निरवधिककृपावता त्वया दत्तं त्वदाराधनोपयुक्तं त्वन्मायातरणसाधनञ्चमं मनुष्यदेहं लब्ध्वाप्यजितेन्द्रियः इन्द्रियपरवशस्सन् यः पुमान् त्वच्चरणौ नाद्रियेत न सेवेत स शोच्यः अहो किमस्य दौर्भाग्यमित्येवं शोचनीयः कुतः? हि यस्मादयमात्मवञ्चकः आत्मापहारी—

"योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा"॥

इति वचनार्थोत्रानुसन्धेयः स्वदोषेणैव स्वयं दुःख्यतीति न तव दोषप्रसङ्ग इति भावः॥ ४१॥

इतोपि शोच्य इत्याह—यस्त्वामिति। स्वयं मरणशीलस्सन् आत्मानं प्रियमीश्वरञ्च त्वां विसृजते त्यजति न सेवते किन्तु विपर्ययेषु अनात्मस्वप्रियेष्वनीश्वरेषु इन्द्रियार्थेषु शब्दादिष्वासक्तः दीनः अमृतमपि त्वाम् अमृततुल्यां त्वत्सेवां विषतुल्यां त्यजन् आस्ते स शोच्य इति सम्बन्धः॥ ४२॥

यतस्त्वत्सेवाऽमृततुल्याऽत एव वयं त्वामेव प्रपन्ना इत्याह—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहमिति ।अहं रुद्रः त्वामेवोक्तविधं सर्वभावेन उपायोपेयभावेन शरणं गताः ॥ ४३ ॥

न केवलमात्मत्वानुगुणगुणमात्रप्रयुक्तमेव त्वां प्रपन्नाः किन्तु शरण्यत्वोपयुक्तासङ्ख्येयगुणान्तरयुक्तश्चेत्याभिप्रयन्नाह—तमिति । हे देव ! तमुक्तविधं किञ्च जगदुत्पत्तिस्थितिकारणं समं वैषम्यरहितं प्रशान्तमूर्मिषट्करहितं भजतामपि शान्त्यावहञ्च सुहृत्त्वासावात्मनायकश्च तम् अनन्यं स्वतुल्यसेव्यान्तररहितम् एकं स्वाभिकप्रपदनीयान्तररहितम् आत्मकेतम् आत्मनामस्माकं केतमाश्रयमाधारमितियावत् आत्मैव केतं यस्य तमिति वा "स्वमहिम्नि प्रतिष्ठितः" इति श्रुतेः । भवाभ्युदयायैहिकसुखाय अपवर्गाय मोक्षाय च भजामः ॥ ४४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भवेषु जन्मजन्मसु अपवर्गाय प्रेमलक्षणभक्तियोगाय ॥४४॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतस्त्वां ये न भजन्ति ते मूढा इत्याह—देवदत्तमित्यादि । त्वत्पादौ यो नाद्रियेत न भजेत स शोच्यः हि निश्चितम् अत आत्मवञ्चकः त्वदिति दृश्यमानश्रीविग्रहपरं देवेन भवतैव दत्तं नृलोकं नृदेहं लब्ध्वा पादाविति पादसेवां हित्वा योऽपवर्गमपि प्रार्थयते सोऽपि शोच्य इत्यर्थः ॥ ४१—५३ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

काचिदङ्गीकर्तव्या या प्रत्यक्षशास्त्रैरप्यनुल्लङ्घ्या ॥ इदानीं अर्द्धभगवत्कृपायुक्तान् शोचन्नाह—देवदत्तमिति । भगवता विवेकेन्द्रिययुक्तं शरीरं दत्तं यस्मै सोऽपि चेत् अर्द्धकृपायुक्तः पूर्णार्थं न यतेत स मोदितैरपि शोच्यो भवति देवेन भगवता दत्तं भगवदिच्छयैव नृलोके मनुष्यदेहे समागत इति तर्ह्यनादरे को हेतुस्तत्राह—अजितेन्द्रिय इति । इन्द्रियजयाभावादिन्द्रियैरपकृष्टो ऽन्यत्र गच्छति अतो न सेवते ननु तर्हि तस्य को दोष इति चेत्तत्राह—नाद्रियेतेति । आदरमपि न करोति तथासक्तिर्नियामिकेति अतो विद्यमानमपि साधनम् अन्यथा नाशयतीति स शोच्यो भवति आत्मवञ्चकश्च हिशब्दसूचिता युक्तिरुक्ता परार्थं तथा करोति इति आशङ्क्याह—मद्भावार्थं तथा करोतीत्याशङ्क्य निराकरोति आत्मानमेव वञ्चयतीति उपकारस्तु पर्यवसानवृत्त्या आत्मगाम्येव भविष्यतीति यत्रात्मवञ्चनं न भवति ॥ ४१ ॥

तत्रैव परार्थकरणं युक्तमन्यथा स्वयमेवात्मघाती स्यात् किं तस्योपकारेण अप्राप्तभगवन्तं निन्दित्वा प्राप्यापि यस्त्यजति तं निन्दति भगवदिच्छां मायां स्तोतुमन्यथा वाक्यभेदप्रसङ्गः यस्त्वां विसृजत इति प्रयोजनाभावमाशङ्क्याह—मर्त्य इति मरणधर्मा आवश्यकत्वायात्मेति प्रियं प्रीतिविषयम् अनादृत्य केऽपि प्रीतिवशादादरः क्रियते तत्रापीश्वरमन्यथा मारकं एवं प्रकारत्रयेण वस्तुतो बाह्याभ्यन्तरव्यवहारेण च आवश्यकं विसृजते त्यजति तत्रापि विपर्ययेन्द्रियार्थार्थं विपर्ययां अनात्माप्रियानीश्वराः तेच ते इन्द्रियार्थाश्च रूपादयो न हि कश्चिदर्थी तितीर्षुः नौकां दत्त्वा शिलां गृह्णाति नौकां. त्यक्त्वा वा शिलार्थमेव वा नौकां त्यजति तस्य . गतिमाह—विषमत्त्यमृतं त्यजन्निति । म्रियमाणो ऽमृतं प्राप्य तद्दत्त्वा यथा विषं गृहीत्वा भक्षयति तस्य अवस्था सा एतस्यापीति भावः ॥ ४२ ॥

तथा भवद्दासीनामपीत्याशङ्क्याह—अहं ब्रह्मेति । यथार्द्धकृपायुक्ताः अन्ये भ्रान्ताः यथा वा प्राप्यापि विषयप्रवणाः तथा न वयं किन्तु भिन्नप्रकारमाश्रिताः भगवतः सात्त्विकत्वादितरौ समानौ प्रथमं गणयति—अहं रुद्रो ब्रह्मा चेति । ततो हीनास्ताभियन्त्या विबुधाः अधिकारिणो निरूप्य ज्ञानपरान् निरूपयति, मुनयश्चेति. तेषां पृथङ्निरूपणे हेतुः, अमलाशया इति. साधनपराः सिद्धाश्चेति वा अमलाशयाः मनुष्याः मुनयः सनकादयोऽपि तथा एते त्रिविधाः अपि चकारादेतदनुसारिणः सर्वे परिगृहीताः ते वयं सर्वात्मना त्वां प्रपन्नाः प्रवृत्तौ हेतुभूतं ज्ञानं निर्दिशति—आत्मानं प्रियमीश्वरमिति । पूर्वस्मात् प्रेमातिशयो विशेषः तेनैव साधनानि अन्यानि संजातानि ॥ ४३ ॥

साम्प्रतं विरोधमाशङ्क्य तत्परिहारार्थं शरणं भजामीत्यत आह—तं त्वामिति । एवं सर्वोपास्यं निर्दोषपूर्णगुणविग्रहं त्वां भजाम तमिति श्लोकद्वयार्थः परिगृहीतः । लोकवेदप्रसिद्धं त्वां परिदृश्यमानं जगत् स्थित्युदयान्तहेतुमिति ब्रह्मत्वाय जगत्कारणत्वमुक्तं वहिर्दोषाभावाय समं प्रशान्तमित्यन्तर्दोषाभावाय सुहृदिति विश्वासार्थम् आत्मेति भयाभावाय दैवश्रीतीद्सिद्ध्यै वैलक्षण्याभावायाह—अनन्यमिति । न विद्यते अन्यो यस्मादिति यस्य वा अन्यबुद्धिर्भगवतो न कस्मिंश्चित् यत एक एव कार्यमपि न ततः पृथक् यतोऽयं जगतः आत्मा केतश्च विशेषतो भजनस्यापराधनिवर्त्तकत्वे प्रार्थिते इदमग्रे प्रार्थयितुमशक्यमिति सर्वस्यापि दोषस्यानिवृत्तिरूपं मोक्षमेव प्रार्थयति भवापवर्गायेति ॥ ४४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभजन्तं निन्दति—देवेन त्वयैव दत्तं नृदेहम् ॥ ४१ ॥

विसृजते त्यजति किमर्थं विपर्य्ययाः त्वद्विपरीता अनात्मानोऽप्रियाः अनीश्वराश्च ये इन्द्रियार्थाः पुत्रादयस्तदर्थम् ॥ ४२ ॥

यत्त्वया कृतं तन्मया क्षान्तं सम्प्रति त्वया त्वत्साक्षिभिरन्यैश्च देवैः किं व्यवसितमिति चेत्तत्राह—अहमिति । आत्मानं प्रेष्ठमीश्वरमिति विशेषणत्रयेण अनात्मनः अप्रियस्य अनीश्वरस्य बाणस्य कृते यत्त्वया सह विग्रहमकरवं तदहमेव अमृतं त्यक्त्वा विषम्भुक्तवानस्मीति पूर्वश्लोकेन मामेवाहमनिन्दमिति भगवन्तं ज्ञापयामास ॥ ४३ ॥

तस्मात् त्वभक्तिं स्वयमेव देहीति प्रार्थयते—तमिति । हे देव ! भवापवर्गाय भवेभवे जन्मनि जन्मनि अपवर्गाय पञ्चमस्कन्धोक्तलक्षणभक्तियोगाय त्वामेव भजाम प्रार्थनायां लोट् त्वदन्यो भजनीयो न भवतीत्यभिप्रायेण विशिनष्टि—ईश्वर-

अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ! ।
सम्पाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥ ४५ ॥

श्रीभगवानुवाच ।

यदात्थ भगवंस्त्वन्नः करवाम प्रियं तव ।
भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥ ४६ ॥
अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः ।
प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ ४७ ॥
दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ।
सूदितञ्च बलं भूरि यच्च भारायितं भुवः ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वात् जगज्जन्मस्थितिलयहेतुमित्यन्यस्त्वमीश्वरः समभित्यन्यो विषमः प्रशान्तमित्यन्यः प्रकर्षेण शान्तो न भवति सुहृदित्यन्यो हितकृत् भवति आत्मदैवमिति अन्यः परमात्मा न भवत्यतो द्योतमानश्च न भवतीत्यर्थः । अनन्यमित्यन्यो ऽन्यो न भवति किन्त्वन्य एव त्वन्तु स्वभक्तस्यानन्य एव "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति त्वदुक्तेः एकमित्यन्योऽनेकः जगतामात्मनश्च केतमाश्रयमित्यन्यस्त्वनाश्रयः॥४४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवन्मायामोहितानां सामान्यतः संसारित्वमुक्त्वा तत्र त्वत्पराङ्मुखाः नित्यसंसारिणः अस्मदादयस्तु त्वद्भक्त्या मुक्तिमार्गेण इत्याह--देवदत्तमिति ॥ ४१ ॥

विपर्ययाः विपरीताः अनात्मानः अप्रियाः अनीश्वरा ये इन्द्रियार्थाः गृहकलत्रादयस्तदर्थम् अमृतं मोक्षम् विषं संसारम् ॥ ४२--४३ ॥

सुहृत् हितकृत् च आत्मा आश्रयश्च तम् अनन्यमेकम् समानातिशयशून्यम् जगतामात्मनश्च केतं वासस्थानम् भवापवर्गाय संसारनिवृत्तये ॥ ४४ ॥

भाषा टीका ।

संसार सागर से पार होने के वास्ते आप के दीये भए इस मनुष्य शरीरको प्राप्त होकर जो अजितेन्द्रिय जीव आप के चरणारविन्द में भक्ति नहि करता वह अपने आत्माकी वंचना करने वारा अज्ञानी विवेकियोंको शोचनीय के योग्य है ॥ ४१ ॥

जो मरणधर्म वारा पुरुष विपरीत शब्दादिक विषयन के लिये अपने आत्मा प्यारे ईश्वर आपको त्यागता है वह मानो अमृतको छोड कर विषका भक्षण करता ॥ ४२ ॥

मैं और ब्रह्मा और इन्द्र आदि देवता तथा अमल हृदय वारे मुनिजन, ये सब परमप्रिय ईश्वर. आत्मा आप के सर्वप्रकार से शरण हैं ॥ ४३ ॥

जगतकी उत्पत्ति पालन संहारके कारण. आश्रण करने में मान क्षुधा पिपासादि रहित. सब के सुहृद. जीवात्माओं के इष्टदेव समान अधिक रहित. और जगत तथा आत्माओं के आधार स्वयं प्रकाश एतादृश परम पुरुष आपको संसार के छूटने के वास्ते हम सब भजन करैं यह हमारी प्रार्थना है ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वयं भक्तिमाशास्य स्वभक्तस्यापीष्टमाशास्ते-अयमिति । दैत्यपतौ प्रह्लादे ॥ ४५ ॥ ४६ ॥

वैरोचनिर्बलिस्तत्सुतस्तत्सुतत्वादवध्यस्तावत् किञ्च प्रह्लादायेति अन्वयो वंशः ॥ ४७ ॥

तर्हि किमित्येवं कृतं तत्राऽऽह--दर्पोपशमनायेति ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवमात्मनस्तदनुपेक्ष्यत्वं प्रतिपाद्य चिरमभीष्टं बाणस्यापि तादृशत्वं युक्तमिति प्रार्थयते--अयमिति । इष्टः त्वद्भक्तिविशेषात्मकताण्डवे वाद्यसाचिव्येन प्रीतिविषयतां यातः तथा दयितः प्रह्लादबलिसम्बन्धेन स्वभावत एव दयाविषयश्चायम् अत एव मदनुवर्त्तितामपि प्राप्तः अत एव मया त्वदनुग्रहाभिमानेन अमुष्य अस्मै अभयं दत्तं भवतो भवता स्वस्य युद्धापराधं मत्वा लज्जमान आह--यथेति । दैत्यपतौ प्रह्लादे यथा तदनुसारेणापीत्यर्थः ॥ ४५ ॥

भगवन् हे सर्वज्ञेति श्रीप्रह्लादसम्बन्धेनास्मिन् मयाप्यपेक्षणीयत्वं स्वस्मिन् मदनुग्रहं मन्महिमानं स्वेन सह मम युद्धादिकौतुकं बाहुच्छेदनादिनास्य मदशमनादिमदभिप्रायश्च ज्ञात्वैव त्वया सर्वं व्यवसितमिति भावः । नः अस्मान् प्रति यदात्थ तत्करवामैव यतस्तव प्रियं प्रीतिकरम् अहो तवोक्त्यपेक्षामपि न सहे यतस्त्वत्सम्मतमेव मया सम्पादनीयमित्याह--भवत इति । व्यवसितं बुद्ध्या निश्चितं साधु यथा स्यात्तथानुमोदितं स्वीकृतं तद्दार्ढ्यविवक्षयाऽतीतनिर्देशः साध्विति व्यवसितादव्याभिचार्यं न इति चतुर्थं श्रीबलदेवादि स्वजनापेक्षया अस्मकं

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मध्ये थं प्रति यदात्थ तत्तत्र कर्त्तव्यमित्यर्थः । पक्षान्तरमयेत्येकत्वं स्वभक्तिविशेषेण मया यदनुमोदितं तत्सर्वैरपि मदीयैश्च स्वत एव स्वीकर्त्तव्यमित्यभिप्रायेण ॥ ४६ ॥

मया वध्यस्तु सर्वथा नेत्याह- अवध्य इति। असुरोप्यवध्योयं यत एव वैरोचनसुतः वैरोचनीति क्वचित् अन्वयशब्दोत्र सजातीय एवाभिमतः तत्रैव तदभिमानसम्पत्तेः नहि देहाभिकृष्टे कीटादौ पुत्रवत्प्रसूते सर्पमण्डूकादौ वा परलोकस्य लोप सम्पद्यते झटिति त्यागदर्शनात् तदेवं बलीबकादीनां बधो न युक्तः लोकेप्यमङ्गलशङ्कया तत्सुहृद्भिस्ते सर्पादयो हन्यन्ते सजातीयास्तु कुमतयोपि ताडनादिना शिक्षन्त एवेति॥४७॥

किन्तु दर्पः दोःसहस्रं त्वया दत्तमित्याद्युक्तिहेतुः तस्योपशमनाय शीघ्रहरणाय प्रकृत्ताः छिन्नाः बलं सैन्यम् ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रकृतं विज्ञापयति–अयमिति । अयं बाणः मे त्वां प्रपन्नस्य मम इष्टो भक्तः अनेन "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्" इति भगवद्वचनं स्मारितम् अत एव दयितः प्रियः अनुवर्त्तते इति तथा च हे देव ! अमुष्य बाणस्य मया अभयं दत्तं किमत इत्यत आह–तन्मया दत्तमभयं सम्पाद्यतां सफलीक्रियताम् अयमेव भवतोऽनुग्रहः तथाहि ते त्वया दैत्यपतौ प्रह्लादे प्रसादः कृत इति शेषः। त्वद्वंशजं न हनिष्यामीति प्रह्लादमनुगृहीतवानित्यर्थः ॥ ४५ ॥

इत्थं संस्तुतः प्रसन्नः प्राह भगवान्–यदात्थेति । हे भगवन् रुद्र ! नोऽस्मान्प्रति यदात्थ अवोचः यच्च तव प्रियं तत् करवाम यद्वा यत्तव प्रियं तन्नोऽस्माकमप्यतस्तत्करवाम भवता यच्छिन्नमेतत्प्राणसंरक्षणात्मकं तन्मयाप्यनुमोदितम् ॥ ४६ ॥

विरोचनसुत इति हेतुगर्भं तत्त्वादवध्यः तत्रापि हेत्वन्तरमाह–प्रह्लादायेति । अन्वयः वंशजः ॥ ४७ ॥

तर्हि किमर्थं बाहूनच्छिनस्तत्राह—दर्प इति । प्रवृक्णा भिन्नाः तर्हि किमर्थं बहुसैन्यं हतवानसीत्यत आह–नाशितमिति । भूभारापनयनार्थमिति भावः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इष्टः स्वभक्तिविशेषात्मकताण्डवे वाद्यसाचिव्येन प्रीतिविषयतो यातः तथा दयितः प्रह्लादबलिसम्बन्धेन स्वभावत एव दयाविषयश्चायम् अत एव मदनुवर्तितामपि प्राप्तः अतएव मया त्वदनुग्रहाभिमानेन अमुष्य अस्मै अभयं दत्तं दैत्यपतौ प्रह्लादे यथा तदनुसारेणापीत्यर्थः ॥ ४५—५३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं शरणगमनलक्षणं भजनं निरूपितम्, विज्ञापनामाह—अयं ममेष्ट इति । इष्टानुवृत्तिर्लोकसिद्धा दयित इति प्रीतिविषयः इच्छाकथित्व निरूपिते अनुवर्त्तीति सर्वहेतुः सर्वदा मामनुवर्त्तत इति तेन मयाप्यनुवृत्तिः कर्त्तव्येति अमुष्याभयं मया दत्तमिति वाचनिकम् एवं कायवाङ्मनोभिरयमनुरोध्य इति सर्वथा त्वया कृपा कर्त्तव्येत्याह–सम्पाद्यतामिति । तत्तस्मात् कारणात् भवतः प्रसादः सम्पाद्यताम् अथवा मदुक्तं स्वयुक्तमेव अतः स पूर्वोक्तः प्रसादः सम्पाद्यताम् आवयोर्भिन्नभावाभावात् प्रसादं विशिनष्टि–यथा हि ते दैत्यपतौ प्रह्लादे प्रसाद इति ॥ ४५ ॥

ततो भगवान् प्रीतः कृतं कृतमेवेति वाचा शिवसान्त्वनं कृतवानित्याह—यदात्थेति । भगवन्निति सम्बोधनम् अभेदाभिप्रायेण सहि भगवन्तमपृथक्त्वेन भजते त्वं यदात्थ तन्नोऽस्मान् प्रति युक्तमेवेति नोऽस्माकं वा त्वम् अतः प्रियङ्करवाम स्वकीयानां प्रियं कर्त्तव्यमेवेति तवेति वस्तुतस्तत्र वाक्यञ्च समर्थनीयं तदिदानीं बाहुच्छेदनाभावमाशङ्क्य पूर्वोक्तं स्मारयति भवता यद्व्यवसितमिति "त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते" इति तत्साध्वेवानुमोदितं कृतं तु त्वयैव तच्छापद्वारा अनुमोदनमात्रं कृतमिति ॥ ४६ ॥

अभयं यत्प्रार्थ्यते तत्राह—अवध्योयं ममाप्येष इति । प्रह्लादान्वयस्वज्ञापनाय पुरुषत्रयमाह—वैरोचनसुत इति । विरोचनात्मजस्य बलेः सुतोऽयं बाणः किमतो यद्येवं तत्राह—प्रह्लादाय वरो दत्त इति । ते अन्वयो मया न वध्य इति ननु भक्ते कथमेवं वचनं तत्राह–असुर इति । असुरा हन्तव्या एवेति अनेन भक्तकृपालुत्वं भक्तापेक्षया आधिक्येन सूचितं स त्वेकस्यैव प्राणरक्षामाह—अहन्तु वंशस्यैव च कथयामीति च ॥ ४७ ॥

तर्हि कथं छेदनमिति चेत्तत्राह—दर्पोपशमनायेति । प्रकर्षेण छेदनं बाहुमूलतः ते वृक्णा एवेति न तस्य प्रतीकारः सेनावधक्लिष्टकर्मत्वमाशङ्क्य निमित्तान्तरमाह—यच्च भुवोभारादिति चकारात् भक्तानां दुःखनाशकं तत्सर्वमेव बलं सूचितं मारितम् ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भोः शम्भो ! प्रसन्नोऽस्मि वरं वृणु इत्युक्ते सति हे प्रभो ! दुष्टेप्यनुवर्त्तिनि बाणासुरे ममतां त्यक्तुं न शक्नोमि किङ्करोमि तस्मादस्मिन्नपि त्वत्प्रसादोऽस्त्वित्येष एव मे वर इत्याह–अयमिति । तत् अभयं सम्पाद्यतां नन्वत्र को हेतुस्तत्राह—भवतः प्रसाद एव न त्वेतन्निष्ठं किमपि सुलक्षणमस्तीति भावः । ननु कीदृशः प्रसादः कर्त्तव्यस्तत्राह—यथेति दैत्यपतौ प्रह्लादे ॥ ४५—४९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तन्मया दत्तमभयं सम्पाद्यतां सफलीक्रियताम् अयमेव भवतः प्रसादः अनुग्रहो भवतु बाणे इति शेषः । तत्र निमित्ताकांक्षायां हिशब्दः अनिरुद्धश्वशुरत्वादिति हिशब्दार्थः निमित्तान्तरं स्मारयति यथा दैत्यपतौ प्रह्लादे ते त्वया प्रसादः कृतः न वध्यो तव वंशजः इति ॥ ४५—५१ ॥

चत्वारोऽस्य भुजाः शिष्टा भविष्यन्त्यजरामराः ।
पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥ ४९ ॥
इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः ।
प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥ ५० ॥
अक्षौहिण्या परिवृतं सुवाससमलङ्कृतम् ।
सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ ५१ ॥

भाषा टीका ।

यह बाणासुर मेरा इष्ट परम प्यारा किङ्कर है हे देव ! मैंने इसको अभय दान दिया है इस लिये जैसे आपने पहले प्रह्लाद के विषय में अनुग्रह किया है तैसे ही इसके ऊपर भी कृपा कीजिये ॥ ४५ ॥

इस प्रकार महादेव की प्रार्थना श्रवण करके श्रीकृष्ण-चन्द्र बोले कि हे भगवन् ! आप जो हमारे प्रति कहते हो सो उसी प्रकार आपके मनोरथ को हम करते है इस के गर्व निवृत्ति के वास्ते आपने जो निश्चय किया रहा उसी का सम्यक प्रकार मैंने अनुमोदन किया है ॥४६॥

यद्यपि यह बाण असुर है तथापि मेरे भक्त बलिका पुत्र है इस लिये मो को भी वध करने के योग्य नहिं है दूसरे प्रह्लाद को मैं वर देचुका हूँ कि तुह्मारे वंश का मो को वध के योग्य नही है ॥ ४७ ॥

गर्व शमन के वास्ते इसके और बहुत सी भुजा मैने काटदई हैं तथा भूमी का भार रूप बहुत सी सेना का मैंने नाश किया है ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुगृह्णाति—चत्वार इति ॥ ४९ ॥
सह वध्वा ऊषया ॥ ५० ॥
रुद्रानुमोदित इति तदभिप्रेतस्यैव बाणभुजभङ्गस्य कृतत्वात् ॥ ५१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसादं सम्पादयति-चत्वार इति । असुरोपि पार्षदमुख्यः त्वत्प्रार्थनानुसारेण जातमद्भक्तित्वादिति भावः । अजरामरत्व-वरप्रदानेन भुजकर्त्तनव्यथापि सद्यः शान्तेति ज्ञेयं न कुतश्चिदपि भयं यस्येति संसारभयस्यापि निवृत्त्या जीवन्मुक्तो भावीत्यर्थः । वृषपर्वा बलिर्बाण इत्येकादशे सत्सङ्गलब्धसिद्धित्वेस्य . वक्ष्यमाणत्वात् नञो लोपाभाव आर्षः ॥ ४९ ॥

कृष्णं सर्वचित्ताकर्षकमाहात्म्यं भगवन्तं दृष्टोपि तादृशप्रसादात् सम्यक् बहुलोपस्करयुक्तत्वादिना उप श्रीकृष्णान्तिके आनयत् ॥ ५० ॥

संशब्दार्थमेव विवृणोति-अक्षौहिण्येत्यर्द्धेन । सपत्नीकम् उषासहितं प्राद्युम्निं रुद्रेति तैर्व्याख्यातम् यद्वा रुद्रेण बाणादिसर्वदुःखद्रावकेण भगवता अनुमोदितः अनुव्रजनादिना हर्षितः सन् ययौ प्रतस्थे श्रीकृष्णः ॥ ५१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

रुद्रमुखेन बाणमनुगृह्णाति-चत्वार इति । अस्य बाणस्य चत्वारः भुजाः शिष्टाः आहताः अनुगृहीतावशेषिताः इत्यर्थः । अयं जरामरणरहितो भविष्यति न कुतश्चिद्भयं यस्य तथाभूतश्च भविष्यतीति सम्बन्धः ॥ ४६ ॥

इतीति । अभयमिति च्छेदः वध्वा उषया सह प्राद्युम्निमनिरुद्धं समानयद्द्वारकां प्रापयामासेत्यर्थः ॥५० ॥

तदेवाह-अक्षौहिण्येति । शोभने वाससी, यस्य तं पत्न्या सहितमनिरुद्धं पुरस्कृत्य पुरतो गमयन् रुद्रानुमोदितः स्वयमप्यनुययौ ॥ ॥ ५१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि मत्प्रार्थनायां को विशेष इत्याशङ्क्याह—चत्वारोऽस्य भुजा; शिष्टा भविष्यन्तीति महत्त्वं सहजं भुजद्वयं त्वद्दत्तमागन्तुकं भुजद्वयमिति चत्वारोस्य भुजाः छिद्यमानेषु भुजेषु अवशिष्टा भविष्यन्ति अनेन सुदर्शनं प्रक्षिप्तं साम्प्रतं छिनत्तीति सूचितम् अधिकभुजद्वयदाने हेतुः, पार्षदमुख्य इति । तयोः कालान्तरेपि नाशाभावायाह—अजरामरण इति । देवत्वं निरूपितं युक्तमेव पार्षदमुख्यो भवत इति न कुतश्चिद्भयमिति असुरत्वेपि मत्तो न मदीयात् न गुणेभ्यो भयमित्यर्थः ॥ ४९ ॥

एवमभये दत्ते भगवत्कृपावलोकितः स्वोचितं कृतवानित्याह-इति लब्ध्वेति । अभयं लब्ध्वा कृष्णं प्रणम्य कन्यादाने सन्तुष्टो भविष्यतीति शिरसेति तस्यैनदेवमहरत् यतोयमसुरः प्राद्युम्निं भगवत्पौत्रम् अर्थाद्बन्धनादिकं त्याजयित्वा वरमिवालङ्कृत्य वध्वा उषया सह समुपानयत् सम्यक् भगवत्समीपम् उपानयत् एतदर्थमेव समागत इति तावता सन्तुष्टः ॥ ५० ॥

अक्षौहिण्या परिवृतमिति । पारिबर्हमक्षौहिण्या सेनया सुवासस्समलङ्कृतमिति वस्त्राभरणानि ततो भगवत्कृत्यमाह—सपत्नीकं तं पौत्रं पुरस्कृत्य रुद्रेणानुमोदितः अन्यथा दण्डमिव तद्ग्रहणं रुद्रो मन्येत कृष्णोऽनुमोदित इति पाठे अर्थाद्रुद्रेण

स्वराजधानीं समलङ्कृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम्।
विवेश शङ्खानकदुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ ५२ ॥
य एवं कृष्णविजयं शङ्करेण च संयुगम्।
संस्मरेत् प्रातरुत्थाय न तस्य स्यात्पराजयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे अनिरुद्धानयनं नाम
त्रिषष्टितमोऽध्यायः ॥६३॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अनेन तस्मिन् भगवत्प्रसादो निरूपितः जाम्बवत इव शिक्षार्थं निग्रह इत्यपि सूचितम् ॥ ५१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स बाणासुरः वध्वा उषया सह ॥ ५०–५१ ॥

भाषा टीका

इस की अवशिष्ट चार भुजा अजर अमर बनी रहैंगी और यह आपका मुख्य पार्षद है इस लिये सबसे निर्भय होके रहेगा ॥ ४९ ॥

इस प्रकार श्रीकृष्ण के वचन से अभय प्राप्त होकर बाणासुर मस्तक से श्रीकृष्ण को प्रणाम करके ऊषा सहित अनिरुद्ध को रथ में बैठा कर आदर के साथ श्रीकृष्ण के पास लाता भया ॥ ५० ॥

सुन्दर वस्त्र सुन्दर आभूषणों से अलङ्कार किये और भार्या सहित तथा अक्षौहिणी सेनायुत अनिरुद्ध को आगे करके महादेव से अनुमोद को प्राप्त होकर श्रीकृष्ण भगवान् द्वारका को पधारते भए ॥ ५१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पौरादिभिरभ्युद्यतोऽभिमुखमागत्य सत्कृतः ॥ ५२ ॥ ५३ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स श्रीकृष्णः राजधानीं श्रीद्वारकां सम्यक् तद्दानीं विशे-षतोऽलङ्कृतां भूषितमार्गेत्यत्र उक्षितमार्गेत्येकम् ॥ ५२ ॥

श्रीकृष्णेन बाणो निर्जितः श्रीरुद्रश्च जृम्भितः इत्यद्भुतं न स्यात् यतस्तत्स्मरणेनापि न कस्यचित् कश्चित्पराजयो भवतीत्याह—य इति। कृष्णस्य विजयमेवं शङ्करेणेति बाणस्य भङ्गार्थमेव युद्धप्रवर्तनाभिप्रायेण सम्यक् श्रद्धापूर्वकं स्मरेदपि, किमुत शृणुयात् कीर्तयेद्वेत्यर्थः। प्रातरुत्थायेति स्नानापेक्षा च निरस्तापराजयः बाह्याभ्यन्तरादिभ्यो भक्तिविरोधिभ्यश्च पराभावो न भवतीत्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिषष्टितमोऽध्यायः ॥६३॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स इति। स बाणः कृष्णो वा अन्यतरसहितोऽन्यतरो वा पौरादिभिरभ्युद्यतः अभिमुखमागत्य सत्कृतः शङ्खादिध्वनिभिः राजधानीं द्वारकां विवेश कथम्भूतामुक्षिताः सिक्ताः मार्गा वीथयः चत्वराण्यङ्गणानि यस्यां ताम् ॥५२॥

उक्तकथासंस्मरणफलमाह—य इति। यः पुमान् संस्मरेत् इति श्रवणाख्यानादीनामप्युपलक्षणं तस्य स्मरतः पराजयो न स्यात् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सिद्धार्थस्य भगवतः पुनरागमने पुरीं वर्णयति-विवाहोत्सवे पुरी न वर्णितेति स्वराजधानीमिति । अनेन विधिवद्विवाहः तेन द्वारकायामेव कृत इति सूचितम् स्वस्य राजधानीमिति समागमने विश्वासः उक्तः ध्वजैः सतोरणैरलङ्कृतामित्युपर्यलङ्कारः उक्षितमार्गचत्वरामित्यधः गन्धोदेकक्षिताः सिक्ताः मार्गाः चत्वराण्यङ्गणानि च यस्याः मध्ये शोभामाह पौरसुहृद्द्विजातिभिः शङ्खानकदुन्दुभिस्वनैः सहितैरभ्युद्यतः पौरास्तामसाः सुहृदो राजसाः सर्वैरभ्युपगमनम् अयं विवाहः सर्वसम्मत इति ज्ञापयितुम् ॥ ५२ ॥

प्रकरणं सममिति ज्ञापयितुमेतदुपाख्यानश्रवणफलमाह—य एतत् कृष्णविजयमिति । प्रत्यहम् य एतत्स्मरेत् तस्य पराजयो नेन्द्रियान्तःकरणैर्भवति भगवता निरुद्धानां विस्मृतप्रपञ्चानां भगवदासक्तियुक्तानां कामादिभिरुपद्रवैराजसानामुद्वेगो भवतीति फलनिरूपणे तदवश्यं वक्तव्यम् उपायज्ञानेन निरूपितः पराजयसम्भावनायाम् एतत्स्मर्तव्यमिति ॥ ५३ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
चतुर्दशाध्यायविवरणम् ॥ १४ ॥ ६३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स कृष्णः ॥ ५२—५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिषष्टितम एतस्मिन् दशमेऽजनिसङ्गतः ॥ ६३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभ्युद्यतः अभिमुखमुपगम्य पूजितः॥ ५२—५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रिषष्टितमाऽध्यायार्थप्रकाशः ॥ ६३ ॥

---

### भाषा टीका ।

राजमार्ग और चत्वरन को जहां छिड़काव होरहा है तथा तोरण सहित ध्वजान से जिसकी सजा वट करी गई है ऐसी अपनी द्वारकापुरी में श्रीकृष्ण भगवान् प्रवेश करते भए और उस समय में पुरवासी सुहृद और ब्राह्मणों ने शङ्खदुन्दुभि आदि गाजे बाजे के साथ आगे आयकर श्रीकृष्ण का सत्कार किया ॥ ५२ ॥

जो पुरुष प्रातः काल उठकर इस प्रकार शंकर के साथ श्रीकृष्ण के संग्राम का तथा श्रीकृष्ण के विजय का स्मरण करैगा उसका किसी से भी पराभव नहि होगा ॥ ५३ ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धमें त्रेसठके अध्यायकी
श्रीवृन्दावनस्थ पं० दामोदराचार्य कृत
भाषाटीका समाप्ता ॥ ६३ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुष्षष्टितमोऽध्यायः ।

—•••—

### श्रीशुक उवाच ।

एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ।
विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १ ॥
क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ।
जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥
कृकलासङ्गिरिनिभं वीक्ष्य विस्मितमानसाः ।
तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयाऽन्विताः ॥ ३ ॥
चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः ।
नाशक्नुवन् समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुष्षष्टितमे कृष्णो नृगं पापादमोचयत् ।
ब्रह्मस्वहारिदोषोक्त्या राज्ञो ह्यानशिक्षयत् ॥
विभूतिभाग्यभोगादिमदोत्थस्वमनोरथान् ।
अन्वशासद्यदून् कृष्णो नृगोद्धारप्रसङ्गतः ॥
॥ १ ॥

पिपासितास्तृषिताः जलं विचिन्वन्तः सत्त्वं जीवम् ॥ २ ॥

तञ्च कृकलासं वीक्ष्य ॥ ३ ॥

चर्मजैश्चर्ममयैः पाशैस्तान्तवैस्तन्तुमयैश्च ॥ ४-५ ॥

————

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं श्रीरुद्रनिर्जयादिना प्रकटतरमैश्वर्यमुक्त्वा प्रसङ्गात्किञ्चिदन्यदप्याह—एकदेत्यादिना । एकदा कदाचिदिति क्रीडाक्रमो निरस्तः इतीयं लीला ऽनिरुद्धजन्मतः प्रागूह्या श्रीप्रद्युम्नादीनां यौवनोद्भेद एवास्या लीलाया औचित्यात् क्रीडासक्तत्वात्तु कुमारशब्दप्रयोगः कुमारप्राचुर्याच्च साम्बस्यादावुद्देशः प्रद्युम्नस्य शम्बरपुरात्तत्कालागमनेनाग्रगामित्वाभावात् स्वल्पपापेनापि तादृशजन्मस्य तादृशी गतिः स्यादित्याश्चर्येण पूर्वोक्तलीलावेशपरिहारेच्छया वा सम्बोधयति राजन्निति ॥ १ ॥

तत्रोपवनेऽद्भुतं महाकायत्वेन कूपान्तरपि जीवनादिना च लोकातीतत्वात् महाकायस्य तस्य चिरमुपवनकूपान्तर्वर्तमानस्य प्रसिद्धिसम्भवेपि तदानीमेव दर्शनं वस्तुतो भगवत एव तादृशलीलेच्छातः व्यवहारतस्तु तस्यातिपुरातनकूपस्यातिगभीरत्वेन चिरासंस्कृततया लताद्यावृतत्वेन च जलान्वेषणेनैव दृष्टत्वात् ॥ २ ॥

अतिप्राक्कालीनत्वेन तादृशतत्तज्जीवत्वात् गिरिनिभमिति महागौरवं तथा तत्कूपस्याप्यतिबृहत्त्वं सूचितं वीक्ष्य साक्षात् दृष्ट्वा विस्मितचेतसः कृपयान्विताश्च सन्तः विस्मितमानसा इति क्वचित्पाठः ॥ ३ ॥

कथं चक्रुस्तदाह--चर्मभिरित्यर्द्धेन । पतितमिति कृकलासरूपं प्राप्य भ्रंशात् नाशक्नुवन् यतोऽर्भकाः बाल्यलीलापेक्षयानाविष्कृतप्रौढभावाः तमुद्धर्तुमिति वा पाठः ॥ ४ ॥

————

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—८ ॥

————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ दत्तापहारप्रयुक्तदुरितनिमित्तकृकलासजन्मनो नृगस्य तज्जन्मविमोचनात्मकं भगवच्चेष्टितमनुवर्णयति चतुष्षष्टितमेन, एकदेत्यादिना तावदुपोद्घातमाह--एकदेति । हे राजन् ! साम्बादयो यदुकुमारकाः ॥ १ ॥

क्रीडित्वेति । तत्रोपवने पिपासितास्तृषिताः जलमन्वेषयन्तः कश्चिन्निरुदके निर्जले कूपे महदुन्नतमद्भुतं च सत्त्वं जन्तुं ददृशुः ॥ २ ॥

कृकलासं नाम गिरितुल्यं जन्तुं विस्मितं चेतो येषां ते तस्य कृकलासस्योद्धरणे निमित्ते यत्नं च चक्रुः ॥ ३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

चार्म्मेभिरिति। चर्ममयैस्तन्तुमयैश्च पाशैरज्जुभिर्बद्धा पतितं तमुद्धर्तुं न प्रबभूवुः॥ ४॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

(विजयध्वजतीर्थविपठितानुसारेण समापीतिततमाध्यायस्य चतोरशश्लोकाराद्धारम्भेवं कथा पठ्यते तथापि श्रीधरीयादिव्याख्यानुसारेणात्र सम्भूयते।)

॥ १॥

विचिन्वन्तः अन्वेषणं कुर्वन्तः सत्वं प्राणिनम्॥ २॥

कृकं लासयति नर्त्तयतीति कृकलासः "शिरःप्राग्रं कृकं विदुः" इति च॥ ३—७॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—३॥

अर्भका इति। श्रीप्रद्युम्नस्याप्यर्भकत्वादपि पूर्वलीलेयमिति ज्ञेयम्॥ ४-२४॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १-४४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

राजसप्रक्रियापूर्णा तत्त्वैरिन्द्रियशोधिका।
निरूपिताऽतियत्ना सात्त्विकी त्वधुनोच्यते॥
अध्यायैरेकविंशत्या वसुदेवमखावधि।
चतुर्धा रूप्यते षड्भिः षड्भिरन्ते त्रिभिस्तथा॥
अर्थो धर्मस्तथा कामः मोक्षश्च त्रिविधोऽन्ततः।
प्रकीर्णकाख्यानवती प्रक्रियेयमिहोच्यते॥
नात्र कर्मविवक्षा हि नृगः पूर्वं निरूप्यते।
गोप्यः पश्चात्ततो मिथ्या वासुदेवः प्रकीर्त्तितः॥
धर्मकामार्थयुक्ता हि प्रमाणेनैव बोधिताः।
द्विविदो लक्ष्मणा चैव नारदश्च त्रयः स्मृताः॥
एतेषामर्थसिद्धिर्हि षड्विधा प्रोच्यते स्फुटैः।
ततः साधारणो धर्मः विशिष्टः पञ्चभिस्ततः॥
यथा कामकथा षड्भिस्त्रिभिर्मोक्षस्तथोच्यते।
अर्थोऽनर्थः सर्वथैव धर्मार्थमपि योजितः॥
तत्रापि भगवानर्थः स निरुद्धः फलं परम्।
अर्थो ब्राह्मणसम्बन्धरहितश्चेत्परः स्मृतः॥
दृष्टान्ततो निरूप्यादौ भगवानहरत्स्फुटम्।
उत्तरार्द्धे पञ्चदशे नृगमोक्षो निरूप्यते॥
शिक्षा च सात्त्विके भावे राजसा यावता यतः।

अतः परं स्कन्धसमाप्तिपर्यन्तं प्रकीर्णकाः कथाः निरोधोपयोगाय निरूप्यन्ते; तत्र प्रथमं नृगमोक्षो निरूप्यते, नृगो नाम कश्चित् राजा अर्थवान् दानधर्मपरः ब्राह्मणार्थसंसर्गादनर्थं प्राप्तः तत्रापि भगवान् उद्धारकः अन्यममतादुद्धृत्य, सर्गं प्रापयिष्यति ततः सर्वतो निरुद्धः भगवन्माहात्म्यं दृष्ट्वा विस्मृतप्रपञ्चः भगवदेकपरो भविष्यति तदत्र भगवानिरुद्धरूपः तमुद्धृत्य धर्मं ग्राहयामास कथाक्रमे तु देवान्तरभक्तः यथामर्थं प्राप्तवान् एवं धर्मपरोपि नृग इति वदन् अर्थविषये धर्मतत्त्वमुच्यते तत्र प्रथमं नृगस्य कृकलासशरीरादपगमो निरूप्यते—एकदोपवनमिति षड्भिः। स्त्रियो हि भगवन्माहात्म्यं दृष्टवत्यः बालकास्तु न जानन्तीति तेषां एतदर्थं उत्पत्स्यत इति ब्राह्मणातिक्रमो न कर्त्तव्य इति तान् बोधयितुं तद्द्वारैव नृगमोक्षो निरूप्यते एकदा सर्व एव बालकाः क्रीडार्थं द्वारकाया उपवनं जग्मुः दुर्गादुत्तीर्य पुराणद्वारका उपवनत्वेनास्ति तां क्रीडायां गुप्तस्थानमिति रक्षकैर्निरुद्धम् अप्युपवनं न यदुकुमारकाः रक्षकैरनिरोध्याः जग्मुः अत्र भगवत्पुत्राणां विशेषतो नामान्याह–साम्बप्रद्युम्नेति। विहर्तुमेव गताः शाम्बोऽग्रे ऽनर्थहेतुरिति स एव मुख्य उपदेष्टव्य इति प्रथमं निर्देशः प्रद्युम्नः सर्वमान्यो महासमर्थः तथापि नृगोद्धारे न समर्थ इति वक्तुं निरूपितः। चारुस्तेषामेव दशमः भानुर्नामग्रजित्याः प्रथमः गदादयो भ्रातरः॥ १॥

क्रीडाप्रस्तावनार्थमुक्त्वा प्रासङ्गिकमाह–क्रीडित्वेति। समुद्रतीरस्थाने मिष्टं जलं दुर्लभमिति जलान्वेषणार्थं प्रवृत्ताः कूपास्तत्र सम्भवतीति ते हि बालकाः अनभिज्ञाः अभिज्ञाश्च प्रवेशं न लभन्त इति जलं विचिन्वन्तः कूपे अद्भुतं विचित्रं सत्त्वं ददृशुः सर्वलोकविलक्षणत्वादद्भुतं तं वर्णयति—अनेन भगवदीयानां क्रीडास्थाने पूर्वकृतो धर्मः साधनतामापन्न इति निरूपितं सर्वस्यापि धर्मस्यैतावन्मात्रे उपक्षयात्॥ २॥

कृकलासमिति जातिविशेषः स भवति प्रायेण सूक्ष्मः गिरिनिभत्वं तस्याश्चर्यकरं ततस्तान् दृष्ट्वा समारोढुमियेष न तु शक्तः अर्द्धस्थाने समागत्य पुनः पुनः पतति ततस्तद्दृष्ट्वशात् हन्तव्येपि शरीरे दयोत्पन्नेति तेषामुद्धारार्थं प्रयत्नमाह तस्य चोद्धरणे यत्नं चक्रुरिति। चार्थेत्यर्थं वस्तुतस्तु हन्तव्य एव अपि कृकलासमित्यत्र श्रुतौ तथा निरूपणात् ततो हस्तात् पतितं बहव एवाधस्तादुत्तीर्य कृपया पीडिताः॥३॥

चार्मभिः चर्मोपरि तं पातयित्वा परितस्तान्तवपाशान् बध्वा सर्वतः स्थिताः तदुद्धारे यत्नं कृतवन्तः तथापि समुद्धर्तुं नाशक्नुवन् अलौकिकत्वात् अलौकिके भगवानेव साधनमिति मत्वा कृष्णायाचख्युः यद्यपि विशेषसाधनैरुद्धर्त्तव्यो भवति तथापितूत्सुकाः सन्तः कृष्णायैव आचख्युः औत्सुक्यं चित्तोल्लासो विवेकासहिष्णुः॥ ४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुष्षष्टितमे कूपोद्धृतात् श्रुत्वा नृगाद्धरिः।
दानं स्वान् शिक्षयामास विप्रभक्तिं सुशङ्किताम्॥

॥ १—२॥

तं सत्वं कृकलासं वीक्ष्य॥ ३॥

चर्मभिश्चर्ममयैः पाशैः तान्तवैः सूत्रमयैश्च॥ ४॥ ५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चतुष्षष्टितमे भगवान् ब्रह्मस्वापहारदोषेण कूपे पतितं

तत्राऽऽगत्यारविन्दाक्षो भगवान् विश्वभावनः।
वीक्ष्योज्जहार वामेन तं करेण सलीलया ॥ ५ ॥
स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम्।
सन्तप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालङ्करणाम्बरस्रक् ॥ ६ ॥
(क्षिप्त पाठः) (भूत्वा मुकुन्दस्य पदारविन्दं ननाम मूर्ध्ना पतितो धरण्याम्।)
पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः।
कस्त्वं महाभाग! वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥ ७ ॥
दशामिमां वा कतमेन कर्मणा सम्प्रापितोऽस्यतदर्हः सुभद्र।
आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नृगसुकृत्य तन्मुखाद्ब्रह्मस्वापहारदोषं श्रुत्वा स्वकीयान् शिक्षयामासेति वर्णयति, रुक्मिण्यादिविवाहतत्पुत्रोत्पादनादिकं भगवच्चेष्टितं वर्णयित्वाऽथ पुत्रविहारप्रसङ्गे भगवच्चेष्टितं वर्णयितुं, तदुपोद्घातस्तत्पुत्रविहारं तावद्वर्णयति--एकदेति ॥ १ ॥

सत्वं जीवम् ॥ २ ॥

तं च कृकलासं वीक्ष्य कृपययाऽन्विताः तस्य कृकलासस्योद्धरणे यत्नं चक्रुः ॥ ३ ॥

चर्मभिश्चर्ममयैः ॥ ४-५ ॥

### भाषा टीका।

श्री शुकदेव जी बोले, कि--हे राजन्! साम्ब प्रद्युम्न चारु भानु गद से आदि लेके यदुवंशीन के कुमार बिहार करने के वास्ते एक समय समीप वन में जाते भए ॥ १ ॥

उस वन में बहुत काल पर्य्यन्त क्रीडा करने के अनन्तर जल की तृषा युक्त होकर जल का खोज करते२ जल रहित कूप में एक अद्भुत करकेंटा रूप प्राणीको वे यदुवंशी कुमार देखते भए॥ २ ॥

पर्वत के समान कृकलास के देखने के पश्चात् विस्मित मन वारे कृपा युक्त होकर वे सब उसके निकासने के लिये यत्न करते भए ॥ ३ ॥

बालकों ने कूप में पड़े हुए कृकलास को चर्म और सूत के रस्सानसे बांध कर निकासने का यत्न भी किया परन्तु नहि निकास सके तब तो उसके निकासने में उत्साह वारे होकर आय के श्रीकृष्ण से कहा ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

सन्तप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः स्वर्गी देवो बभूवेति ॥ ६—७ ॥

यद्यदि क्षमं योग्यम् ॥ ८-९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स कृष्णः अरविन्दाक्षः तच्छ्रुत्वा विस्मयलीलयाऽरविन्दवत् प्रफुल्लदृष्टिस्सन् तत्रागत्य वीक्ष्य च तं वामकरेण तत्रापि लीलया सहेलया समाकर्षणरूपयोज्जहार तत्र हेतुः विश्वभावनः सर्वपालनशीलः तत्र योग्यता भगवानिति ॥ ५ ॥

ततश्च सद्यः सर्वपापान्मुक्तः सद्गतिं प्रापेत्याह--स इति। उद्गतं तमो यस्मात्तादृशः श्लोकोपि यस्य यशःश्रवणेनापि संसारनिवृत्तेः यद्वा नामाभासादिनापि जगदुद्धारात् उत्तमः उत्कृष्टः श्लोको यस्य तस्य भगवतः करेणाभिमृष्टः स्पृष्टः सन्निति हेत्वन्तरनिरसनेन प्रारब्धभोगापेक्षा निरस्ता स्वर्गिलक्षणमाह--सन्तप्तेति अद्भुतेति च। यद्वा स्वर्गिविशेषविवक्षया विशिनष्टि, तत्पदद्वयेन. अत एव संज्ञाश्च्चाद्भुतशब्दश्च अन्यत्रे तत्र तद्वचारुवर्ण इति लेख्ये चारुशब्दाभावो लेखकभ्रमादिति ॥ ६ ॥

पप्रच्छेत्यर्द्धकम्। मुकुन्द इति तन्मोचनाभिप्रायेण महान् भागो भाग्यं यस्य तत्सम्बोधनं महाभाग्यलक्षणमाह वरेण्यं सर्वश्रेष्ठतमं रूपं सौन्दर्य्यं यस्य सः अतो देवेषूत्तमं गणयामि अवकलयामि नूनं वितर्के ॥ ७ ॥

वा शोके हि निश्चये अतदर्हः ईदृग्दशाया अयोग्योपि असीति पाठः स्पष्टः तत्र हेतुः सुभद्र हे परममङ्गलेति कतमनेति पाठः समञ्जसः आत्मानमित्यर्द्धकम् विवित्सतां स्वतत्त्वं विविदिषतां नोऽस्माकं कर्मणिषष्ठी बहुत्वं परमाश्चर्य्येण सद्यस्तत्रागतानां यादवानामपेक्षया तत्र स्थाने नोऽस्मान् प्रति यदि क्षममिति वाक्चातुर्य्यां गुह्यस्यापि प्रकाशनेच्छातः किं वा सर्वसद्गुणनिधेर्विनयस्वभावादेव अत एव न इति पुनर्बहुत्वम् ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्रेति। विश्वं भावयति अभ्यधिकं करोतीति तथा वामेन करेण लीलयैव तमुज्जहार बहिर्निष्कासितवान् ॥ ५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । स उद्धृतः उत्तमश्लोकस्य करेणाभिमृष्ट इति हेतुगर्भमिदं सन्तप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः अद्भुताः अलङ्करणादयो यस्य सः स्वर्गी देवो बभूव ॥ ६ ॥

पप्रच्छेति । तस्य कृकलासजन्मनो निदानं कारणं जानन्नपि मुकुन्दः तज्जनेषु ख्यापयितुं प्रसिद्धीकर्तुं पप्रच्छ, प्रश्नमेवाह—कस्त्वमिति । हे महाभाग ! वयं तु त्वां ध्रुवं देवश्रेष्ठं गणयाम ॥ ७ ॥

कतमेन केन वा कर्मणा इमां कृकलासस्वरूपां दशामवस्थां प्रापितोऽसि तत्र हेतुः ,अतदर्हां एतदवस्थानर्हां शोभना दीप्तिर्यस्य सः । आत्मानमिति । विवित्सतां वेत्तुमिच्छतां नोऽस्मभ्यमात्मानमाख्याहि यद्यदि तद्वक्तुं क्षमं योग्यं तर्ह्याख्याहीति सम्बन्धः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विवित्सतां ज्ञातुकामानां यद्यदि ॥ ८-९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भगवान् योनित एव तदुद्धारं कृतवानित्याह—तत्र गत्वेति । दृष्ट्वैव सर्वतापहारकः भगवान् सर्वसमर्थः विश्वमेवानुभावयतीति उद्धारकरूपमवलम्ब्यागत इति तदुद्धारोपि तस्य युक्त एव. उद्धारमाह—वीक्ष्योज्जहारेति । ज्ञात्वाऽस्य कर्मभागक्षयो जात इति वामेन करेणेति लीलया सामर्थ्यातिशयं च ज्ञापितं वामो हस्तः दैत्यहितकारी दक्षिणो देवानामिति देवपक्षपातिना तदुद्धाराभावः सूचितः लीलयेति तस्य कारणाभावादपि यथा अन्या लीला कदाचिद्धर्ममपि बाधते ॥५॥

ततो यज्जातं तदाह—स उत्तमश्लोकेति । करेणाभिमृष्टः भगवत्स्पर्शेन कारणदोषे निवृत्ते उपष्टम्भकाभावात् तच्छरीरे पतिते स्वर्गोपभोगयोग्यं शरीरं प्राप्तवानिति तद्वर्णयति—सन्तप्तः आवर्त्यमानसुवर्णवर्णः स्वर्गि स्वर्गसम्बन्धि स्वर्गोऽस्यास्तीति स्वर्गिणामपि वा अद्भुतानि अलङ्करणान्यम्बराणि स्रजश्च यस्मिन् तादृशो जातः इत्यर्थात् बभूवेति अस्ति भवत्योः सर्वत्र प्रयोगात् ततो निर्द्धार्य स्वरूपं ज्ञापयित्वा प्रेषणीय इति स्वतः कथने विश्वासो न जायतेति तद्द्वारैव वक्तुं तद्वृत्तान्तं पप्रच्छ ॥ ६ ॥

ज्ञात्वा प्रश्नो न कर्त्तव्य इति सर्वेषां सामान्यनिरोधं कर्त्तुम् अयुक्तमपि करोतीति विद्वानपीत्युक्तवान् विधिस्तु प्रमेयेन नियामक इति न भगवतो विहितं निषिद्धं वा किञ्चिदस्ति वचनस्यापि प्रयोजनमाह—जनेषु विख्यापयितुमिति । तस्य दानं लोके विख्यापनीयम् अन्यथा "धर्मः क्षरति कीर्त्तनात्" इति तस्य धर्मक्षयो भवेत् भगवता पृष्टेन तु वक्तव्यमेव नन्वेतदपि किमर्थमिति चेत्तत्राह—मुकुन्द इति । अग्रे मोक्षो देयः स च कीर्त्तिमत एव भवतीति कीर्त्तिख्यापनार्थं निरोधार्थं वा अतिकीर्त्तिमानन्यत्र न प्रवर्तत इति निरोधानन्तरमेव मुक्तिलीलेति प्रश्नमाह—कस्त्वं महाभागेति । भाग्यं धर्मस्योत्तमं तेजः तदुपकरोति सर्वत्र महाभाग्यं यस्येति महाभागेति सम्बोधनं अकस्मादेव भावे तव सुकृतमस्तीति ज्ञापितं वरेण्यरूप इति सहजमेतद्रूपम् अत एवं ज्ञायते किञ्चिदुत्कृष्टं कर्मास्तीति अन्यथा, अपृष्टः स्वधर्मं कथं वदेत् कथिते स्वर्गो न भविष्यतीति तच्छङ्कां निवारयितुमाह—देवोत्तमं त्वां गणयामि नूनमिति । देवेषु स्वर्गः प्रतिष्ठितः तत्राप्युत्तमेषु तत्राप्यहं गणयामि ॥ ७ ॥

नहि मद्गणितं कश्चिदन्यथा कुर्यात् दोषोपि वक्तव्य इत्याह—दशामिमां वेति । उत्तमस्य अपकृष्टं कर्म न सम्भवति येन कृकलासरूपं भवेत् अत उत्कृष्टमेव कर्म प्रकारविशेषापन्नं सत्कर्मैव किञ्चिद्भविष्यतीति प्रकारं श्रोतुं प्रश्नः कतमेनेति सम्यक् प्रापणं बहुकालस्थानं तत्र सूचयति ननु जायन्ते निकृष्टेष्वप्युत्कृष्टसुखजनकानि कर्माणि उत्कृष्टेष्वपि निकृष्टभावजनकानि कर्माणि तस्मात्प्रश्नो व्यर्थ इत्याशङ्क्याह—अतदर्ह इति । देवगत्योत्कृष्टत्वमिति चेत् तत्राह—सुभद्रेति । सुभद्रस्य भद्रं स्वाभाविकम् अभद्रमेव वैशेषिकमिति किञ्च आत्मानं पूर्वसिद्धमाख्याहि विवित्सतामिति त्वन्मुखतो वेदितुमिच्छाऽस्माकं न तु स्वतः लौकिकन्यायेन माहात्म्यज्ञानाभावे सङ्कोचाच्च वदिष्यतीत्याह—यन्मन्यसे नः क्षममत्र वक्तुमिति नोऽस्माकं श्रोतुं क्षमं मन्यसे समर्थेपि अत्र वक्तुश्चेन्मन्यसे पश्चानामग्रे तदा वक्तव्यमिति भावः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वर्गा देवो बभूव ॥ ६ ॥ ७ ॥

विवित्सतां विविदिषतां कर्मणिषष्ठी आर्षी यदि क्षमं योग्यम्॥ ८—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सन्तप्तसुवर्णवद्वर्णो यस्य सः अद्भुता अलङ्करणा वरस्रजो यस्य सः स्वर्गी देवो बभूव ॥ ६—७ ॥

यत् यदि क्षममाख्यातुं योग्यं मन्यसे तर्हि आख्याहि ॥८-१०॥

---

भाषा टीका ।

विश्वके पालन करने वारे कमल नेत्र श्रीकृष्ण भगवान् कूप के पास आय कर उस कृकलास को देख कर लीला करके हि वाम हस्त से उस को निकास लेते भए ॥ ५ ॥

वह कूप से निकला भया प्राणि श्रीकृष्ण के हस्त का स्पर्श होने से उसी पर्वत कृकलास शरीर का परित्याग करके तपायमान सुवर्ण सदृश रूप वारा तथा दिव्य भूषण वस्त्र माला धारन किये स्वर्ग वासी देवता होगया ॥ ६ ॥

यद्यपि उसके कृकलास योनि के कारण को जानते भी रहे तथापि मनुष्यों में उस की प्रसिद्ध करने के लिये श्रीकृष्ण जी ने उस को पूँछा कि हे महाभाग हे श्रेष्ठ रूप ! आप कौन हो ? और मै तो निश्चय करके आप को देवने मे उत्तम मानता हूं ॥ ७ ॥

श्रीशुक उवाच ।

इति स्म राजा संपृष्टः कृष्णेना ( १ ) नन्तमूर्तिना ।
( २ ) माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥ ९ ॥

नृग उवाच ।

नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ! ।
दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ १० ॥
किं नु तेऽविदितं नाथ! सर्वभूतात्मसाक्षिणः ।
कालेनाव्याहतदृशो वक्ष्येऽथापि तवाऽऽज्ञया ॥ ११ ॥
यावन्त्यः सिकता भूमेर्यावन्त्यो दिवि तारकाः ।
यावन्त्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ १२ ॥

भाषाटीका ।

हे मङ्गल मूर्ते ! इस दुर्दशा की प्राप्ति के योग्य आप नहि भी हो तथापि कोन से कर्मने आप को इस कृकलास-योनि को प्राप्त किया आप के पहले जन्म को जानने की इच्छा करने वारे हमारे आगे कहने के योग्य यदि समझो तो आप अपने पहले जन्म को हमसे कहिये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदि ते कर्णमस्पृशमित्यसन्देहे सन्देहवचनं यदि वेदाः प्रमाणं स्युरितिवत् कर्णपथं नूनं प्राप्तः स्यामित्यर्थः ॥ १० ॥

किञ्च, किन्न्विति । सर्वेषां भूतानामात्मनो बुद्धेः साक्षिणस्ते अविदितं किन्तु न किञ्चित् ॥ ११-१३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्म प्रसिद्धौ राजेति प्रागवस्थामारोप्योक्तम् । आधुनिकावस्थाया विशेषाव्यक्तेः आनन्दमूर्त्तिना सुखघनविग्रहेणेति दर्शनमात्रेण तत्रापि प्रश्नेन तस्याप्यानन्दाविर्भावः सूचितः अनन्तमूर्त्तिनेति पाठे नित्यविभुविग्रहेणेत्यर्थः । ततश्च तस्य तादृशत्वस्फूर्त्या चमत्कारविशेषो जात इति भावः । एवं प्रथमं तावत् स्वार्गित्वं प्राप्य स्तब्ध एव जातः नतु श्रीभगवन्तं ज्ञातवान् पश्चात्कृपया तेन सम्भाषितस्तु तत्स्वरूपानन्दमनुभूतवान् पश्चादैश्वर्य्यमप्यनुभूते नमस्कारमकरोत् तदाज्ञानुरूपमाह नेत्याह—माधवं लक्ष्मीकान्तं तद्रूपत्वेन विज्ञातमित्यर्थः । प्रणिपत्य दण्डवत् प्रणम्य अर्कवर्चसा किरीटेनोपलक्षित इति तत्र शोभाविशेषो वर्णितः ॥ ९ ॥

यद्यपि नवमस्कन्धरीत्या श्राद्धदेवस्य पुत्र इक्ष्वाकोर्भ्रातेति नृगः प्रसिद्धस्तथाप्यत्रैक्ष्वाकुतनय इत्युक्तेरन्यो ऽसौ नृग इति ग[ण्य]म्येत नरेन्द्रः सम्राडिति देवोत्तमत्वपरिहारः कस्त्वमित्यस्योत्तरं नृगो नामेत्यादि प्रभो हे राजराजेश्वर ! लीलेति विविधवन्दिवृन्दसङ्ग्रहेण कर्णस्पर्शयोग्यताऽभिप्रेता यदिति वैर्व्याख्यातं यद्वा संशय एव विनयभरेणात्यन्तदैन्येन चात्मनस्तच्छ्रवणायोग्यत्वमननात् अत एवोक्तं कर्णमस्पृशमिति कथञ्चिदीषच्छ्रुतः स्यामित्यर्थः । तत्र हेतुः प्रभो इतिसर्वेश्वरेश्वरस्याल्पकजनश्रवणासम्भवादित्यर्थः । दानिष्वित्यादिना निजदातृत्वस्य गोप्यस्यापि सूचनम् ईदृशस्यापि स्वल्पपापेनेदृशी गतिः स्यादिति श्रीभगवदभिप्रायानुसारेण लोकेषु विज्ञापनार्थम् एवमग्रेपि ॥ १० ॥

ननु, श्रुतोऽस्येव किन्त्वेतत्त्वद्दशानिदानं न वेद्मीति चेत्तत्राह, किन्न्विति । नाथ हे परमेश्वर ! अत एव सर्वेति अत एवान्तरमपि सर्वं वेत्सि किम्पुनर्बाह्यमित्यर्थः । नच वक्तव्यं चिरकालेन विस्मृतमित्याह—कालेनेति ॥ ११ ॥

यावत्य इत्यादेस्तस्य गणत्रयस्य मिलित्वा यावत्त्वमित्यर्थः । अत एव चशब्दः अगण्यतामात्रतात्पर्य्यकमिदं स्मेति प्रसिद्धमेवैतदित्यत्र सम्भावना न कार्य्येत्यर्थः ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आनन्दमूर्त्तिना हृद्यमूर्त्तिना मानवः मनोः वंशप्रभवः ॥ ९ ॥
दानिषु दानशीलेषु ॥ १०—१३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । आनन्दमूर्त्तिना हृद्यमूर्त्तिना . सम्पृष्टो राजा मानव इति च पूर्वजन्माभिप्रायेणोक्तम् अर्कस्येव वर्णो यस्य तेन किरीटेन नमस्कृत्याह ॥ ९ ॥

उक्तिमेवाह—नृग इत्यादिना, इत्युक्त्वा अभिव्यतः प्राक्तनेन । अह

(१) आनन्दमूर्त्तिना इति वीर० शुक० वैष्णव० पाठः (२) मानुवः इति वीर० मानव इति शुक० पाठः ;

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नृगो नाम नरेन्द्रः राजश्रेष्ठः हे प्रभो ! दानिष्वाख्यायमानेषु दानप्रशंसासु वक्तव्यासु इत्यर्थः । दानिषु दानशीलेषु वा यदि तव कर्णमस्पृशाम इत्यसन्देहे वचनं ' यदि वेदाः प्रमाणं स्युरितिवत् कर्णपथं नूनं प्राप्तः स्यामित्यर्थः ॥ १० ॥

किञ्च, किन्न्विति । ते त्वया न विदितं किन्तु विदितमेवेत्यर्थः । तत्र हेतुत्वेन विशिनष्टि–सर्वभूतानामात्मनो बुद्धेः साक्षिणः साक्षात् द्रष्टुः कालेनाऽव्याहतमविप्लुतं दृक् ज्ञानं यस्य तस्याथापि यद्यप्येवं तथापि वक्ष्ये ॥ ११ ॥

यावत्य इति । सिकतादयो यावत्यः तावतीर्गाः धेनूरदत्तां दत्तवानस्मि मया दत्तानां गवां सङ्ख्या न विद्यत इत्यर्थः ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव कर्णमस्पृशं तर्हि ज्ञातुं योग्य इत्यर्थः ॥ १० ॥

अन्यथापि ज्ञातुं शक्य इत्याह–किन्न्विति ॥ ११ ॥

सिकता रजांसि अददाम अददाम " दा दाने " इति धातुः [illegible] ॥ १२—१५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible] भगवत्स्वरूपे पुण्यवशेन लोकभाषापि बुध्यत इति भगवदाज्ञां कर्तुं स्ववृत्तान्तमुक्तवानित्याह–इतीति । केति प्रश्ने प्रश्नः क्लिष्टं कर्म भवतीति तद्दोषनिवृत्त्यर्थं प्रसिद्धिः प्रमाणत्वेनोक्ता परीक्षितोपि शङ्कां व्यावर्त्तयितुं राजेति कृष्णेन सदानन्देन सम्भाषणेनापि सुखं भवतीति भक्तहितेन वा अनन्तमूर्तिनेति अनन्ता मूर्त्तयो यस्येति तस्य न सर्वात्मना स्वरूपं प्रकाशितं तस्य तावन्मात्रेणैवाभिव्यक्तः अथवा पूर्वप्रकरणयोरन्या मूर्त्तिरस्मिन् प्रकरणे चान्यामूर्त्तिरिति ज्ञापयितुम् अनन्तमूर्त्तित्वं ततो भगवन्तं दृष्ट्वा श्रीनिकेतत्वात् अगजाप्रियेति विज्ञाय माधवं प्रणिपत्य अर्कवर्चसा किरीटेन उपलक्षितः भगवतोपि चरणारविन्दं प्रबोधयन् भक्तांश्चोद्दीपयन् महानप्येवं आयत इति ॥ ९ ॥

ब्राह्मणातिक्रमाभावाय स्ववृत्तान्तमाह–नृगो नामेति षोडशभिः । नृगः पूर्वमपि प्रसिद्धः इक्ष्वाकोस्तनयः शतमध्ये विकुक्षिनिमिदण्डकानन्तरमथमेव प्रसिद्धः प्रभो इति सम्बोधनं प्रभुत्वानि मिथ्याभाषणाभावं ज्ञापयति–ननु का प्रसिद्धिः येन त्वं ज्ञायस इत्याशङ्क्याह–दानिष्वाख्यायमानेष्विति । दानिनो दानकर्त्तारः ननु दातारः अदाराः, दानी विध्यपेक्षः दाता तु निरपेक्ष इति यदिति ते कर्णमस्पृशं तदाहं प्रसिद्धः ॥ १० ॥

राजेति नृग इति दानीति ( बहुद ) कीर्त्तिद्वारा गच्छतीति [illegible] प्रसिद्धिहेतुत्वेन साधारण्यं निरूप्य असाधारणप्रकारेण ज्ञानमाह–किन्नु ते विदितं नाथेति । हे नाथ ! अनेनोद्धारः तवावश्यक एवेत्युक्तं नु इति वितर्के किं वा ते अविदितं किन्तु सर्वमेव विदितमिति तत्र हेतुः सर्वभूतानामन्तःकरणसाक्षिणः ननु कालव्यवधाने जीवोपि स्वानुभूतं विस्मरति तथा भगवतोपीति कथं तज्ज्ञानमिति चेत् तत्राह–कालेनाव्याहतदृश इति । तस्मात् ज्ञानार्थं ज्ञापनप्रयोजनाभावात् न वक्तव्यं तथापि तवाज्ञया वक्ष्ये अन्यथा आज्ञोल्लङ्घनं स्यादिति ॥ ११ ॥

आदौ स्वस्य दानित्वमाह–यावत्यः सिकता भूमेरिति । रेणवस्तामसाः तारकाः सात्त्विक्यः वर्षधारा राजस्यः दृष्टान्तीकृताः असङ्ख्यातास्तिस्रोपि विविधा अपि गावः असङ्ख्याता दत्ता इति अहमददं स्मेति प्रमाणं तुल्यसङ्ख्यात्वं विवक्षितं तामेव सङ्ख्यां वदेत् परार्द्धान्तिका सङ्ख्यापि नास्ति तस्मादसङ्ख्यातदाने त्रिविधदाने च दृष्टान्ताः विविधदाने प्रयोजनञ्चोक्तं भूमिसिकता उपादानभूताः तारकाः प्रकाशकाः वर्षधाराः पोषिका इति असङ्ख्यातपदे प्रयुज्यमाने अल्पप्रतीतिः स्यात् तत एवमुक्तं गवां गुणानाह–पयस्विनीरिति । दुग्धाधिक्ययुक्ताः तरुण्यः प्रथमप्रसूताः शीलमाभरणं शान्तस्वभावः रूपं सौन्दर्यम् एतैर्गुणैरुपपन्नाः ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदीत्यसन्देहेपि यदि वेदाः प्रमाणमितिवत् दानिष्वाख्यायमानेषु दातृजनानां गणनप्रसङ्गे सति अहं तव कर्णमस्पृशं कर्णपथमगममेवेत्यर्थः ॥ १० ॥

किन्तु तव अविदितम् अपितु सर्वमेव विदितमित्यर्थः ॥ ११ ॥

सिकता इत्यादिकमगण्यतामात्रतात्पर्य्यकमिति प्राञ्चः कुरुक्षेत्रादिदेशेषु सूर्य्यग्रहणादिकालेष्वेकस्या अपि गोः कोट्यर्बुदगुणीभूतत्वात् तत्र तत्र देशकालेषु प्रतिदिनं च कोट्यर्बुदसङ्ख्यानां गवां दातुस्तस्य तावत् सङ्ख्याकत्वमपि नानुपपन्नमित्यन्ये ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वभूतानामात्मनो बुद्धेः साक्षिणः किन्तु अविदितं सर्वं विदितमेवेत्यर्थः ॥ ११—१३ ॥

———

भाषा टीका ।

श्रीशुकदेव जी बोले कि अनन्त मूर्त्ति श्रीकृष्ण महाराज ने राजा नृग को पूछा तब तो सूर्य्य के समान प्रकाशमान किरीट युत मस्तक से श्रीकृष्ण के दण्डवत् करके उत्तर देताभया ॥ ९ ॥

राजा नृग बोला कि हे प्रभू मैं इक्ष्वाकु को पुत्र नृग नाम करके राजा हूं ॥ दानकरने वारेन की प्रशंसा करने समय में यदि आपने मेरा नाम श्रवण किया होगा ॥ १० ॥

हे नाथ काल करके जिस के ज्ञान का लोप नहिं है और सब प्राणियों बुद्धि के साक्षी एता दृश अतः सर्वज्ञ

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सप्तविधानि विशिनष्टि—स्वलङ्कृतेभ्य इति । सीदत् क्लिश्यमानं कुटुम्बं येषां तेभ्यः ऋतव्रतेभ्यः सदाचारेभ्यः तपसा श्रुताः प्रख्यातास्ते ब्रह्मणि वदान्या ब्रह्मवादिनः ते च ते सन्तः तेभ्यो वदान्यवन्त्य इति पाठे तप आदिविशिष्टेभ्यः एवंविधेभ्यो ब्राह्मणोत्तमेभ्यो ऽदामित्यर्थः ॥ १४ ॥

न केवलं गा एवादामन्यदपीत्याह—गोभूरिति । पुनर्गोग्रहणम् इतरापेक्षया तद्भूयस्त्वाभिप्रायकं गवादीनाम् इतरेतरयोगद्वन्द्वः तत्रायतनानि गृहाः दासीभिः सहिताः कन्याः तिलादीनां द्वन्द्वः तत्र रूप्यं रजतं परिच्छदान् गृहोपकरणानि न केवलं प्रादामेव किन्तु यज्ञैरिष्टं च पूर्तं स्मार्तं कर्म चरितं कृतम् ॥ १५ ॥

एवं वर्तमानस्य मम किञ्चित्सङ्कटमापन्नं शृणु इत्याह—कस्यचिदिति । द्विजमुख्यस्य मे प्रतिगृहीतवतो गौर्भ्रष्टा बलात्तद्-स्थानाद्विमोचिता सती मम गोधने सम्पृक्ता मिलिता सा च अविदुषा पूर्वमेव कस्मैचिद्दत्तेत्येवमजानता मया द्विजातयेऽन्यस्मै ब्राह्मणाय दत्ता ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भ्रष्टा अन्यस्तदेवं निजात्मन्यदेशं गता संसृष्टा सङ्कुलिता अविदुषा अजानता ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अथवा गुणाः सत्पुत्राः दुग्धे घृताधिक्यमारोग्यजनकत्वं च गुणाः प्रायेण बहवः कपिलाः दाने कपिला विशिष्टेति हेमशृङ्गीः सुवर्णशृङ्गयुक्ताः न्यायार्जिताः मन्वतिक्रमेण प्राप्ताः रूप्यखुराः सवत्सा इति विधिप्राशस्त्यार्थमुक्तं तेन विहिता एव दत्ता नत्वविहिता भाप्याविहिता प्रकारेण दुकूलानां माला यासु दुकूलतो माला आभरणानि च वा एवं त्रयोदशगुणाः कथिताः ॥ १३ ॥

पात्राभावे सर्वं व्यर्थमिति पात्रधर्मानाह—स्वलङ्कृतेभ्य इति । विधिप्रकारोऽलङ्करणादिगुणाः विधाः शीलमाचारः सुस्वभावश्च सीदत्कुटुम्बेभ्य इति गृहीतस्य शीघ्रं सद्विनियोगः ऋतं व्रतं येषामिति ब्राह्मणस्य सहजो धर्मो निरूपितः तप इन्द्रियनिग्रहः श्रुतं यथाविधि ब्रह्म वेदो वेदार्थश्च वदान्यत्वमलुब्धता सत्वं परोपकारत्वं च तपः श्रुतं ब्रह्म च येषां ते तपःश्रुतब्राह्मणः तेच ते वदान्याश्च सन्तश्च युवभ्यो द्विजपुङ्गवेभ्य इति द्वादशगुणा ब्राह्मणानामुक्ताः ॥ १४ ॥

दानान्तराण्याह—गोभूहिरण्येति । एकदा असङ्ख्यातगोदानं बहुभ्यः ततः पृथगपि गावो दत्ताः भूमिर्वृत्तिकरी हिरण्यदानं स्वतन्त्रम् आयतनदानं गृहदानम् अश्वदानं हस्तिदानञ्च कन्यादानं ब्राह्मणाय पोषितानां कन्यानामौरस्याः क्षत्रियायां विवाहितायां जाताया: राजकन्यायाः स्वयं वर एव सदासीरिति पारिबर्हसहिताः दासीदानं वा कन्यादानेन सहोच्यते तिलाः तिलपर्वताः रूप्यं रूप्यपर्वताः शय्याः शय्यादानं वासांसि नानाविधानि तथैव मंत्ररत्नानि परिच्छदान् कम्बुर्लवतामादीन् रथाश्वगजरथादिभेदाः एवं यज्ञ-

दश दानानि सर्वदा क्रियन्ते ततः यज्ञैरिष्टम् अग्निष्टोमादयश्च कृताः पूर्तञ्चरितं कूपारामादयश्च धर्मार्थं कृताः ॥ १५ ॥

एवं धर्मपरायणे मयि कर्मवशादधर्मः कथमोत्पन्न इत्याह-कस्यचिद्विजमुख्यस्येति । अयं राजा दानाभिनिविष्टचित्तः सेवकेभ्यः यथाकथञ्चित् देयान् गृह्णाति नतु जिज्ञासते एवं बहुधा प्रमादे कदाचिज्ज्ञानवान् तत्पापं प्रकटितवान् कश्चिद्-ब्राह्मणः राजप्रतिग्रहरहितः स्वधर्मनिष्ठ आसीत् तस्य गौः स्वस्थानादपगता राजगोषु प्रविष्टा ततस्तामनवद्यलक्षणां तदधिकारिणो ज्ञात्वा दानार्थं नीतवन्तः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देयवैशिष्ट्यमाह-पयस्विनीरिति ॥ १३ ॥

सम्प्रदानवैशिष्ट्यमाह—स्वलङ्कृतेभ्य इति । तपसा श्रुताः ख्याताश्च ब्रह्मणि वेदशास्त्रे अध्यापनपरत्वादत्युदाराश्च ते सन्तश्च तेभ्यः ॥ १४ ॥

देयान्तराण्यप्याह-गोभू इति । प्रादामिति पूर्वेणैवान्वयः चरितं कृतम् ॥ १५ ॥

ननु, कृकलासत्वप्रापकं किं पापम्! तद्ब्रूहीत्यत आह—कस्यचिदिति । भ्रष्टा विच्युता गौरेकैव मम गोकुले सम्पृक्ता मिलिता अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६—१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तपसा श्रुताश्च ते ब्रह्मणि वदान्या उदारा अध्यापनशीलाश्च ते सन्तश्च तेभ्यः ॥ १४ ॥

गवादीन् प्रादामिति पूर्वेणान्वयः पूर्तं वापीकूपादि चरितं कृतम् ॥ १५ ॥

द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य नाहं प्रतीच्छे इति वक्ष्यमाणात् भ्रष्टा विच्युता सती मम गोधने सम्पृक्ता मिलिता अविदुषा मदीया नेयमित्यजानता ॥ १६ ॥

---

भाषा टीका

अच्छे अधिक दूध वारी प्रथम ब्याई शान्त स्वभाव वारी सुन्दर रूपवारी अच्छे बछरा वारी जिनके दूध में अधिक घृत और जिनके दूध दही घृत में रोग नहि कपिला रूप वारी जिनके सींग सोने मढे हुए धर्म से सम्पादन करी हुई जिनकी खुरी चांदी से मढी हुई बछरा सहित रेसमी वस्त्र मोतीन की माला अनेक आभूषण धारन किये एतादृश गौनका दान मैंने कियौ रहा ॥ १३ ॥

मेरे दिये आभूषण धारन किये सन्तोष आदि गुण और शील स्वभाव वारे अन्न आदि के विना जिनका कुटुम्ब क्लेशित और सत्यव्रत वारे तप करने से ख्याती वारे वेदके अध्यापन कराने में शील स्वभाव वारे शत्रु मित्र में जिनका समान चित्त युवा अवस्था वारे ऐसे २ उत्तम ब्राह्मणों के अर्थ मैंने गौन का दान किया रहा ॥ १४ ॥

बैल भूमी, सुवर्ण मकान घोडा हाथी कन्या दासी तिल

नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ।
नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥ २१ ॥
वी॰पाठः (ततश्च कालयोगेन मृतः परममायया ।
देव दैववशान्नीतस्तद्वदामि तवाग्रतः ॥०॥)
एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम् ।
यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥ २२ ॥
पूर्वं त्वमशुभं भुङ्क्षे उताहो नृपते ऽशुभम् ।
नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ॥ २३ ॥
पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः ।
तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्येको न प्रार्थितः एकस्मिन् द्वेषे अङ्गीकृतं तत्प्रायश्चित्तं स्वेच्छया कृतं स्यात् अतस्तावेकमकृत्वा स्वतस्तत्त्वापरिज्ञानात् अन्यस्यापृष्टत्वात् द्वयमपि सन्देहे स्थापयित्वा उभावनुनीतौ गौः स्वकस्येत्यस्मिन्नर्थे यथा द्वितीयोऽप्यपहारः सिध्यति ननु उभयोरनुनये को हेतुः तत्राह—धर्मकृच्छ्रं गतेन मे इति । तस्य हृदये धर्मनिश्चयाभावात् कृच्छ्रं सङ्कटमेव प्राप्तवान् अनुनयमाह—गवां लक्षम् एतस्मिन्निष्कृतित्वेन दस्यामि एषा प्रदीयतामिति ॥ १९ ॥

ननु, निष्कृतिग्रहणे दोषः स्यात् कथं ग्राह्या इति चेत्तत्राह—भवन्तावनुगृह्णीतामिति । मदुपर्यनुग्रहेण निषिद्धमपि कर्त्तव्यमिति भावः । अनुग्रहहेतुमाह—किङ्करस्येति । तथापि सापराधो दण्ड्य एवेति चेत्तत्राह--अविजानत इति । विशेषणाय. मर्थो न ज्ञात इति अज्ञातेत्वल्पमेव प्रायश्चित्तमित्यनुग्रहेणापि सिध्यति तस्य भाव्यर्थः स्वत एव स्फुरितः तन्निराकरणार्थं प्रार्थयति—समुद्धरतेति । कृच्छ्रात् सङ्कटात् निर्णयज्ञानाभावात् अशुचौ निरये पतन्तमिति हीनभावः निरयो भवति ततश्च गोत्वमश्वत्वं वा चेद्भवेत् तदा निरयत्वेपि नाशुचित्वं श्वयोनौ सूकरयोनौ वा पाते तथात्वमिति ताभिश्चाद्यो तु न पातः नरकभोग एव परं योनिसम्बन्धे तु अभिमान उत्पद्यते इति पातः अशुचाविति लोकप्रसिद्धमद्यादिप्रदर्शनेन दया वा उत्पाद्यते ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रतिग्राही विप्र उवाच भवान् दादेति गोस्वामी उवाच भवानपहर्त्तेति भ्रमः अतिवैयग्र्यमित्यर्थः ॥ १८—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रतिग्राह्युवाच दादेति स्वाम्युवाचापहर्त्तेति ॥ १७ ॥ १८ ॥

तदा धर्मकृच्छ्रगतेन धर्मकष्टप्राप्तेन उभावपि प्रत्येकमनुनीतौ उपच्छन्दितौ, तदेवाह—गवामिति सार्द्धेन । दास्यामि अन्यतरस्मै एषा प्रदीयतामन्यतरेणाऽन्यतरस्मै ॥ १९ ॥

किङ्करस्य किङ्करमनुगृह्णीताम् कर्म्मणः शेषत्वविवक्षया षष्ठी समुद्धरतेति बहुवचनं पूजार्थम् ॥ २०—२२ ॥

---

भाषाटीका ।

मेरी दई भई गौ को ब्राह्मण लेजाता रहा उस गौ को देखकर उसका धनी उस ब्राह्मण से बोला कि यह गौ तो मेरी है गोदान लेने वारा ब्राह्मण बोला कि यह गौ, मेरी है क्योंकि राजा नृग ने मो कों दी है ॥ १७ ॥

अपने स्वार्थ को सिद्ध करने वारे दोनों ब्राह्मण इस प्रकार विवाद करते २ मोसे बोले उनमें पीछे गोदान लेने वारा बोला कि आपने अवहि मोको इस गौ का दान किया है और पहले जिसका गोदान दिया रहा वह बोला कि यह गौ मेरी है यदि आपने इस गौ का इस ब्राह्मण को दान किया तो आप हि दत्तापहारी हुए इस प्रकार दोनों ब्राह्मणों के वचन को श्रवण कर मोको व्याकुलता होगई ॥ १८ ॥

इस प्रकार धर्म संकट को प्राप्त होकर मैंने दोनों ब्राह्मणों की प्रार्थना करी कि इस गौ के बदले में अच्छी श्रेष्ठ एक लक्ष गौ एक के वास्ते मैं देऊंगा इस लिये एक लक्ष गौ लेने वारा इस गौ को दूसरे ब्राह्मण को दे देवे ॥ १९ ॥

आप दोनों मेरे ऊपर अनुग्रह करो मैं आपको दास हूं और मै यह नहि जानता कि यह गौ दूसरे की है इस दोष करके अपवित्र नरक में मेरा पतन होना है इस संकट से मेरा उद्धार करो ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपरः प्रतिग्राही दुराग्रहो यल्लक्षं त्वयोक्तमन्यदपि गवा-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अयुतं यदि तदपीमां विहाय नेच्छामि इत्युक्त्वा गां त्यक्त्वा ययावित्यर्थः २१ ॥

एतस्मिन्नन्तर इति । इतःपूर्वं पापाभावान्नेतुमसमर्था इति भावः ॥ २२ ॥

उताहो इत्येकं पदम् अथवा पूर्वं शुभमिति मान्तमिति यमस्य स्वस्य वा वाक्यम् पश्ये पश्यामि ॥ २३ ॥

हे देव यम ! पूर्वमशुभं भुञ्ज इति मयोक्ते स यमः पतेति प्राह ॥ २४—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वै एव न प्रतीच्छे नैव प्रतिगृह्णामीत्यर्थः । अपाक्रमत् गां त्यक्त्वा प्रतिग्रहभयेनापसृतः ॥ २१ ॥

अन्तरे छिद्रे परिमितायुषः समाप्तेर्मरणावकाशे सति यमस्य क्षयं पतेत्यग्रे वक्ष्यमाणात्पुण्यात्मानस्तस्य गम्यं दक्षिणस्यां मानस्योपरिस्थं निवासमेव न तु भूमिष्ठं तत्र यमक्षय एव नत्वन्यत्रेति आदरेण साक्षात्प्रश्नः सूचितः हे देवानां त्वयादीनामपि देव पूज्य यतो हे जगत्पते जगत्पालनार्थं त्वयैव धर्माधिकारे नियुक्तस्य तस्य तदुचितमेवेति किम्वा त्वत्कृतनिबन्धस्तेषोमप्यलङ्घ्य इति भावः । अयं प्रश्ने हेतुः ॥ २२ ॥

अशुभं पापं तद्विप्रगोहरणजं भुंक्ष्व भोक्ष्यसे धर्मस्य यज्ञादेः साधनानन्त्यात् साध्यस्य लोकस्य स्वर्गादेरपि भास्वतः अद्भुतसुखवैभवादिना राजमानस्येत्यर्थः ॥ २३ ॥

पूर्वमिति अशुभोदर्कतायाः परमाशोभनत्वात् प्रकर्षेण अभिमयादिनाह तावत्तत्क्षणएव पतन् सन् प्रभो हे सर्वकर्मेश्वरेति त्वया दीयमानं कर्म फलमवश्यमेव भोग्यमिति किं वा तव त्वदिच्छयैवेति भावः । कृकलासमिति तादृशपापस्य तादृशफलत्वात् श्रीरामायणादौ च ताभ्यां विप्राभ्यां तथैव शपनात् तत्रोक्तश्चैतद्विरुद्धं कल्पभेदव्यवस्थया परिहार्य्यम् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तयोस्तयोरन्यतरः गोस्वामी हे राजन् ! अहं गवां लक्षमपि न प्रतीच्छे न प्रतिगृह्णामि किन्तु दत्तामेनामेव नयामीत्युक्त्वाऽपाक्रमद्ययौ तथाऽपरोऽपि प्रतिग्राही दुराग्रहः यल्लक्षं त्वया प्रतिश्रुतमन्यदपि गवामयुतं दत्तं यदि तथाप्येनां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययौ इत्यर्थः ॥ २१ ॥

तत इति । हे परम ! तव मायया परमस्य तव माययेति वा हेतुभूतेन सङ्कल्पेन कालयोगेन निमित्तेन मृतः हे देव ! दैववशाददृष्टानुसारात् यत्र नीतस्तत्तवाग्रतो वदामि ॥ ० ॥

एतस्मिन्निति । हे देवदेव ! जगत्पते ! एतस्मिन्नन्तरे इतःपूर्वं पापाभावात् नेतुमक्षमैरिति भावः । यमसम्बन्धिभिर्यमसदनं प्रापितः तत्र यमसदने यमेनाहं पृष्टश्च ॥ २२ ॥

प्रश्नमेवाह—पूर्वमिति । किं पूर्वमशुभं पापफलं भुङ्क्षे उताहो किम्वा शुभं पुण्यफलं भोक्ष्यसे भवतो दानस्य यो लोकः लोक्यत इति लोकः फलं तस्य भास्वतः प्रकाशमानस्य उपस्थितस्येति यावत् अन्तमवधिं न पश्यामि ॥ २३ ॥

पूर्वमेवाशुभं पापफलं भुञ्जे तस्याल्पीयस्त्वादिति भावः इतिमयोक्ते पत निरये इति शेषः । इति इत्थं स यमः मां प्राह तावदिति । तावत्तदैव हे प्रभो ! पतन्नहमात्मानं कृकलासमप्राप्तं दृष्टवानस्मि ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपाक्रमत् अपगतवान् ॥ २१ ॥

याम्यैर्यमस्य विद्यमानैः ॥ २२ ॥

भुंक्ष्व भोक्ष्यसे तव दानस्य धर्मस्य अन्तं नास्ति तत्रान्यलोकान् पश्य इत्युक्तोऽहं प्राक् अशुभं भुञ्जे इत्यवदं इत्युक्ते स यमः तर्हि पतेति मां प्राह ॥ २३—२७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र मुख्यः स्वामी गोविक्रयस्य निषिद्धत्वात् अन्यल्लक्षाऽयुतादिसङ्ख्यापरिमितं गोसमूहम् अहं न प्रतीच्छ इत्युक्त्वा राजप्रार्थनां त्यागांशे अङ्गीकृत्य स्वाम्यपाक्रमत् प्रतिग्रहस्य राज्ञा स्थापितत्वात् पूर्वप्रतिग्रहस्यैव सिद्धत्वात् विक्रयपक्षे प्रतिग्रहपक्षे वा दोषश्रवणात्—

> " एका गौः न प्रतिग्राह्या द्वितीया न कदाचन ।
> सा चेद्विक्रयमापन्ना रौरवं नरकं व्रजेत् ॥ "

इति वाक्याद्गवामयुतमपि एतन्निष्कृतित्वेन नाहं प्रतीच्छ इति द्वितीयोऽपि ययौ राजन्निति सम्बोधनात् अनिष्कृतित्वेपि प्रतिग्रहोपि निषिद्ध इति सूचितं राजा सर्वेषामनुरोध्यः अतिक्रमोपि सोढव्य इति सूचितं लक्षं गावः राज्ञा दातुं शक्याः नतु ब्राह्मणेन अयुतमेव परमा काष्ठा ब्राह्मणस्य कोऽर्हति सहस्रं पशून् प्राप्तुमिति सहस्रस्यैव महत्त्वात् दशपुत्रविभागे सहस्रशो दानेपि अयुतस्यैव पर्याप्तत्वात् प्राप्तमयुतं निषेधति गवामप्ययुतमिति यद्यपि तावता पूर्णकामो भवेत् तथाप्यव्यवस्थितत्वात् एकस्यामपि गवि यत्राऽयं सन्देहः तत्र किमन्यद्वक्तव्यमिति भावः ॥ २१ ॥

एवं ब्राह्मणद्वयक्षोभे दण्डार्थे यमः प्रवृत्तः गोऽपहारे आयुः क्षीणमिति तदैव यमदूतौ समागतावित्याह—एतस्मिन्नन्तर इति । यावदयं प्रतिविधानं कुर्यात् तन्मध्य एव याम्यैः यमक्षयं नीतः अनेन बलात् नयनं निरूपितं बलात्कारेणैतात तेनापि ब्राह्मणाः सम्बोधिता इति स्वेच्छयैव तैस्त्यक्त इति । अस्यापि स्वेच्छयैव नरकभोगो निरूप्यते अत एव इच्छार्थं यमेन पृष्टः अस्मिन्नर्थे संस्थितां निरूपयितुं देवदेवेति सम्बोधन जगत्पत इति च धर्मकर्तुः कथं यमदण्ड इति शङ्कां वा दूरीकर्तुं प्रमेयबले वेदापेक्षया भगवदाज्ञा कर्तव्येति निरूपयन् देवस्यापि त्वं देव इति त्वदाज्ञा धर्मेण कर्तव्या जगत्पतित्वात् मयापि अतस्तदिच्छयैव जातमिति नात्र किञ्चित् प्रतिकर्तव्यमस्तीति सूचितं हे नृपते ! पूर्वं त्वमशुभं भुंक्ष्वे लण्मध्यमपुरुषैकवचने प्रश्नार्थे लट् अशुभस्याल्पत्वात् नान्तरीयकमिवाशुभं गमिष्यतीति प्रथममशुभभोगप्रश्नः अथवा दुःखान्तता निषिद्धेति अथवा कोवा दुःखानुभवं मन्येत अतः

**ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ।**
**स्मृतिर्नाद्यापि विध्वस्ता भवत्सन्दर्शनार्थिनः ॥२५॥**
**स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ।**
**साक्षादधोक्षज उरुव्यसनान्धबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥ २६ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथममेव हे नृपते शुभं भुङ्क्ष्वे तदा स्वस्यालोकमामाह—नान्तं दानस्य धर्मस्येति । दानस्यान्यस्यापि धर्मस्य अन्तो न विद्यते गोदानप्रस्तावे कश्चिद्ब्राह्मणो धूर्तो मासमरणां गां वञ्चयित्वा ब्राह्मणाय दत्वा मुक्तिगत इति श्रूयते स हि नगरमध्यवासे मृताया गोर्निर्हरणासमर्थः व्याजेन कश्चित् ब्राह्मणमाकार्य तस्मै दानं दत्तवान् ततो मुहूर्तत्रयानन्तरं गौर्मृता तां ब्राह्मणः प्रतिग्रहीता ब्राह्मणं चण्डालेभ्यो दत्वा तां गां बहिः निस्सारितवान् एवं ब्राह्मणं वञ्चयित्वा पश्चान्मृतः यमेन पृष्टः चित्रगुप्तेन तस्य वृत्तान्ते कथिते पूर्वं शुभफलभोगं करिष्यामीति उक्त्वा तथापि कौटिल्यं कृतवान् तादृशगोदानस्य हि फलं यावज्जीवति तावत्परलोके कामधेनुस्तद्वशा तिष्ठतीति तथा यमेनोक्तः मुहूर्तत्रयं कामधेनुस्त्वदधीना स्थास्यतीति कामधेनुं प्रत्याह—व्याघ्रो भूत्वा यमं भक्षयेति ततो व्याघ्रेणोपद्रुतः यमः भीतो विष्णुं शरणं ययौ यत्रास्ते भगवान् ब्रह्मादिभिर्वृतः तत्र पश्चादयमपि गतः कामधेन्वा नीतो विष्णुसाक्षात्कारे मुक्त इति ॥ २२ ॥

यत्र तादृशगोदानस्याप्यनन्तफलत्वं तद्विधानपूर्वकं दत्तायाः किं वक्तव्यमिति अन्यथाप्येवं धर्मस्यानन्तफलत्वं फलं हि द्विविधम् इह लोके यशः परलोके स्वर्ग इति तदुभयमाह यशो लोकश्च भास्वर इति. अनन्तं यशः अनन्तो लोक इति तामसधर्मेपि तथेति तत्पाताललोपभोग्यमिति तद्व्यावृत्त्यर्थं भास्वर इति दानस्य फलरूपं यश अनन्तं लोकश्चानन्त इति लोकस्य भास्वत इति पाठे अनन्तं यशः शुभं चेति ॥ २३ ॥

पूर्वोक्तं सङ्ग्राह्य भुङ्क्ष्वेति भुञ्ज इति वा क्रिया भास्वतो लोकस्योत्तमदेहस्य वा पूर्वं सम्बन्धि अशुभं भुञ्ज इति देवेति सम्बोधनं परिज्ञानार्थम् उक्तवानित्यर्थात् इति एवं सति पतेति सयमः प्राह यतः सः ब्राह्मणेऽतिक्रमं दृष्ट्वा क्रोधवान् पतेति तस्मात् लोकात् भूलोके नीचयोनिभूतो नरकः भूमावेव नान्यत्रेति ततो यज्जातं तदाह—तावदद्राक्षमिति । पतन्नात्मानं कृकलासमद्राक्षं कर्मणा देहसम्बन्धेन ग्रहणपरित्यागयोः परिज्ञानं योगज्ञानभक्तिष्वेव तद्देहाद्रौ तादात्म्यपदं बहिर्मुखत्वादस्य कर्मदोषो जात एव प्रभो इति त्वमेव समर्थः तादृशकर्मभ्यो मोचयितुमिति सूचितं जीवस्य ग्रहणपरित्यागज्ञानमेव नास्ति कुतो मोचनपरिज्ञानम् एतादृशोर्थे भगवानेव शरणमिति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राज्ञो न प्रतीच्छे राजप्रतिग्रहं न करोमीत्युक्त्वा अपाक्रमत् स्वीयां गां विहायैव ययौ अपरः प्रतिग्राही दुराग्रहः यद्भवं स्वयोक्तम् अन्यदप्ययुतमपि यदि ददासि तदपीमां विहाय नेच्छामीत्युक्त्वा ययौ ॥ २१ ॥

मरणानन्तरमिति शेषः यमक्षयं संयमनीम् ॥ २२ ॥

अशुभम् अजानता यद्विप्रस्य गौरपहृता तज्जन्यपापफलम् उताहो किं वा शुभं पुण्यफलं तव दानस्य अन्तं न पश्यामि तत्फलस्य भास्वतो लोकस्य स्वर्गस्यापि अन्तं न पश्यामि ॥ २३ ॥

हे देव यम ! पूर्वमहमशुभं भुञ्जे इति मयोक्ते स यमः पतेति प्राह ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पश्ये पश्यामि ॥ २३ ॥
हे देव ॥ २४ ॥ २५ ॥

---

भाषा टीका ।

इस प्रकार उन दोनो ब्राह्मणों को राजाने जब कहा तब उन मे जो गौ का पहला धनी रहा सो हे राजन् आप की दई हुई लक्ष गौन को मै नहि लेता, ऐसा कह कर चला गया, और जिस को पश्चात् गो दान किया रहा सो भी, लक्ष गौन के उपर दश हजार गौ दीवे तो भी मै नहि लेता ऐसा कहकर चला गया ॥ २१ ॥

हे देवदेव हे जगत्पते इसी अन्तराय में इस पाप करके यम के दूत, मो को यम लोक मे ले गए वहां यम राजने मो से पूछा ॥ २२ ॥

कि हे नृपते ! आप पहले बिना जाने किए हुए गौके अपहार रूप पाप के फल को भोगोगे अथवा पुण्य कर्म के फल को फलको भोगोगे आप दान और धर्म तथा पुण्यका फल स्वर्गादि लोक के अन्त को नही देखता आपका यह सब अनन्त है ॥ २३ ॥

इस प्रकार यम राज के वचन श्रवण करके मै उनके प्रति बोला कि हे देव ! मै पहिले आपके फल को भोगूंगा तबतो यमराज बोले कि आप निहीन योनि को जाओ हे प्रभो ! उसी समय पतन होता हुआ मै अपने को कृकलास रूप देखता भया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभि-

देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ।
नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥ २७ ॥
अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो ।
यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

नन्विति-स त्वमिति । हे विभो ! स त्वं ममाक्षिपथो लोचनगोचरः सन् कथं साक्षात्प्रत्यक्षोऽसीत्यर्थः । किमत्राश्चर्यं तदाह पर आत्मा अत एव योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषा ऽमले हृदि विभाव्यश्चिन्त्यः यतोऽधोक्षजः अक्षजमैन्द्रियकज्ञानं तदधो अर्वागेव यस्मात्सः यस्येह भवापवर्गौ भवतस्य भवाननुदृश्यः स्यात् उरुव्यसनेन कृकलासभवदुःखेनान्धबुद्धेस्तु ममैतच्चित्रमित्यर्थः ॥ २६ ॥

उद्रिक्तभक्तिर्बहुधा सम्बोधयन्नाह-देवदेवेति ॥ २७ ॥

अनुज्ञापयति-अनुजानीहीति । देवलोकेऽपि सतो वर्तमानस्य आत्मनो मनसः सन्निधिं प्रार्थयते-यत्र क्वापीति । त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयादिति ॥ २८ ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्मृतिर्ममेति शेषः । साक्षात्तथानुक्तिर्विनयादिना अद्य कृकलासदेहे तथा महाभिमानिदेवदेहेऽपि तद्विरोधिनि न ध्वस्ता न भ्रष्टा तत्र हेतवो ब्रह्मण्यस्येत्यादयः प्रथमतो ब्रह्मण्यस्य ब्राह्मणभक्तस्य तत्रापि वदान्यस्य यथेष्टदानेन तान् परितोषयतः तत्रापि तव दासस्य कर्मसाद्गुण्यार्थं तत्तत्कर्मसमर्पणेन त्वदीयदास्यभक्तिं प्राप्तस्य ततो भवन्महिमज्ञानेन भवतः सन्दर्शनं तदर्थिनः दास्ये हेतुः केशव —

"को ब्रह्मेति समख्यात ईशोऽहं सर्वदेहिनाम् ।
आवान्तवाङ्गसम्भूतौ तस्मात्केशवनामवान् ॥

इति तत्राज्ञा श्रीहरिवंशोक्तवैभव एवम्भूतं त्यक्त्वा कस्मै वा अन्यस्मै सत्कर्मसमर्पय इति भावः । यद्वा, भृगुसाक्षितया ब्रह्मण्यः श्रीवक्षसाक्षितयात्मपर्यन्तस्य वदान्यश्च यस्त्वं तस्य तव योऽहं दासस्तत्तत्कर्मसमर्पयतस्तस्य मम शेषं समानम् एवमप्यस्य कृकलासत्वं सुसाध्यायामपि श्रवणादिलक्षणसाक्षाद्भक्तावप्रवृत्तेस्तत्र अविश्वासदोषेण दानादिकर्मण्यपि वैफल्यापातात् सङ्कल्पमाहात्म्येन तु पश्चात्तद्दर्शनादिकं किन्तु तं दास्यदिदृक्षे अपि फलविशेषप्राप्त्यर्थे एव न तु निष्कामं देवगतिफललाभेन कारणानुमानात् अत एव वदान्यस्येति भगवन्तं विशेष्य पर्यवसाने तु परमगतिर्भविष्यति सत्यं दिशत्यर्थितमर्थिनो नृणामित्यादौ तथा त्वत्प्राप्तेः दर्शनादेवमश्वरं तद्बीजरूपत्वाच्चेति केयं पूर्णयोर्ब्रह्मण्यवदान्यत्वयोरंशानुवर्तित्वाद्योऽहं दास इव दासस्तथा तत्तद्गुणमात्रेण न तु त्वन्निजदासवच्छ्रितत्वेन गुणवृन्देन चमत्काराद्भवद्दर्शनकाङ्क्षी च योऽहं तस्य मम तत्त्वद्गुणांशानुभवप्रभावाच्चापि तत्तत्स्मृतिर्विध्वस्ताभूत प्रत्युत तादृशत्वद्दर्शनमपि जातमित्यर्थः । अथ तदिदमनुमिमे त्वदीयब्रह्मण्यत्ववदान्यत्वयोरंशानुकरणमप्यभिमानमयमेव ममासीत् येनाद्यापि त्वदग्रेऽपि तत्प्रकटनधार्ष्ट्यमेव जातं पूर्वमपि तत्सम्बन्धिविधिशास्त्रेष्वादरो जातः तत एव तादृशदानकर्मण्यपि विघ्नो बभूव तथापि त्वत्कारुण्यप्रभावादीदृशत्वद्दर्शनमभूत् तादृगभिमानाविच्छेदादेव स्वर्गित्वं भजन्नपि त्वत्कारुण्यात्तु सत्यं दिशत्यर्थितमर्थितो नृणामिति न्यायेन त्वदनुवर्तित्वमपि भविष्यतीति भावः ॥२५॥

स परमदुर्लभः किं वा अनिर्वचनीयमाहात्म्यस्त्वं विभो हे सर्वव्यापकेति चाक्षुपथयोग्यत्वं तथा परमात्मा परमात्मेत्यात्मसाक्षात्कारादपि तत्साक्षात्कारस्य दुर्घटत्वं सूचितं योगो भक्तियोगः तस्मिन्नीश्वरैः समर्थैः परमभक्तैरित्यर्थः । योजना तु तैः कथा यद्वा कथं केन प्रकारेणाक्षिपथं प्रयातोऽसि तन्तु विचारेणापि न लभे इत्यर्थः । यतः पूर्वोक्तप्रकारेणाधोक्षजो ज्ञानाविषयो यः स साक्षात् स्यात् काका नैवेत्यर्थः । तत्रापि मे मम उरुव्यसनान्धबुद्धेः साक्षात्स्यात् काका नतरामित्यर्थः । यतो यस्य भवापवर्ग उपस्थितोऽस्ति तेनैवानुदृश्यः दृष्टः दृशो भवसि सर्वोत्तमत्वादानन्त्याच्च तस्मान्मम स्वर्गितां प्राप्तस्य त्विदं दर्शनमतीव चित्रमिति भावः कथं जातमिति तं कारुण्यप्रकारं स्वशक्तिप्रकारं च स्वयमेव वेत्सीति भावः ॥ २६ ॥

तद्दर्शनप्रभावेन जातशुद्धभक्तिभरः स्वस्य प्राचीनश्रवणकीर्तनादिशुद्धभक्त्यभावेऽपि तद्दर्शनं जातमिति तस्य कारुण्यं प्रशस्यानुज्ञां प्रहीष्यन् नामकीर्तनप्रियतमत्वेनादौ तैरेव स्तुत्वा तं सम्बोधयन् प्रार्थयते-देवदेवेतियुग्मकेन । तत्र प्रथमं देवगतिगमनानुज्ञायां तथा तद्गतिं गतस्यापि परमाश्रयत्वेन तत्रैव योग्यतां दर्शयति-देवदेवेति । नन्वहं देवानां ब्रह्मादीनामपि देव इत्यतिक्षुद्रस्त्वमीदृशप्रार्थनधार्ष्ट्येन कथं न सङ्कुचसीत्याशङ्क्याह—हे जगन्नाथेति । एवं जगन्मध्यपातित्वेऽपि प्रार्थनार्होऽस्मीति भावः । नन्वासतान्तावद्ब्रह्मादयः जगति सत्यलोकादिगता एव महान्तः त्वं मर्त्यलोकगतः किंचामित्याशङ्क्याह—हे गोविन्द ! कृपया गां पृथिवीं बिभर्तीति तथाभूत ततः सम्प्रति तेभ्योऽपि वयं त्वत्कृपाभाजनानीति भावः । नन्वत्रापि महान्तः सन्ति तत्राह—हे पुरुषोत्तम इति । भवदुर्चितां दीनदयालुतामिवालम्ब्येदृशं प्रार्थये न तु स्वगुणमिति भावः । किञ्च हे नारायण स्वभावत एव सर्वजीवाश्रय हे हृषीकेश एतादृशप्रार्थनादीनामपि प्रवर्तक ! हे पुण्यश्लोक एतादृशकृपाकीर्तिसुधाकर ! हे अच्युत एतादृशशरणागतदीनजनपालनकृते च्युतिरहित ! हे अव्यय अनन्तभक्ताभीष्टदानैरन्तर्व्ययेऽपि सर्वदा परिपूर्ण इतियुक्तमिदं प्रार्थनमिति भावः । ननु यादव विशेषोऽहं नाहं भवदभिप्रेतो भगवानित्याक्षेपान्तरमाशङ्क्याह—

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

हे कृष्ण! स्वयं भगवान् कृष्णस्तु भगवान् स्वयमिति प्रसिद्धेः अत एव हे विभो सर्वतः परिपूर्णेति ॥ २७ ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अक्षिपथः उरुव्यसनान्धबुद्धेः मम त्वं चक्षुर्विषयः श्रुतिदृशा वेदचक्षुषा अमलहृदि विभाव्यः चिन्त्यः यस्य भवापवर्गः। संसारनाशः तस्य त्वं शान्तहृदि दृश्यो भवसीत्यर्थः ॥ २६—२८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ब्रह्मण्यस्येति। हे केशव! ब्रह्मण्यस्येत्यादिविशेषणचतुष्टयं पूर्वजन्मस्मृत्यनपाये हेतुतयोपात्तं ब्रह्मणि ब्राह्मणकुले साधुब्रह्मण्यः ॥ २५ ॥

अलभ्यलाभेनाधुना कृतार्थोऽभवमित्याह–स त्वमिति। हे विभो! सः यस्याहं सन्दर्शनार्थी स त्वं कथं ममाक्षिपथं गतः लोचनगोचरः कथमित्यनेन दौर्लभ्यं सूचितं तत्र हेतुत्वेन विशिनष्टि, परमात्मा न हि परमात्मा केवलं मांसचक्षुषा वीक्ष्य इति भावः। किञ्च योगेश्वरैः श्रुतिदृशा उपनिषच्चक्षुर्द्वारेण निर्मले हृदये विभाव्यः केवलं चिन्त्यः यद्यप्येवमथापि हे अधोक्षज अभक्तेन्द्रियजन्यज्ञानाविषयः यस्य भवापवर्गः संसारनाशस्तस्योरुणा व्यसनेनान्धा बुद्धिर्यस्य तथाभूतस्यापि शान्ते सति हृदये त्वं दृश्य एवेत्यर्थः ॥ २६ ॥

हर्षातिशयेन बहुधा सम्बोधयन् किञ्चित्प्रार्थयमानश्चानुज्ञां पृच्छति–देवदेवेति। द्वाभ्याम् देवगतिं स्वर्गलोकं प्रति यातुं गन्तुम् उद्यतं मामनुजानीहि आज्ञापय यत्र क्वापि सतो वर्त्तमानस्य मम चेतः त्वत्पदास्पदं त्वत्पादारविन्दसंश्रयं भूयात्तथानुगृहाणेत्यर्थः ॥ २७—२८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

देवगतिं स्वर्गं यत्र क्वापि योनिविशेषे सतः सम्भवतः ॥२८॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ब्रह्मण्यस्य वदान्यस्य च तव योऽहं दासः तस्येति ब्रह्मण्यत्ववदान्यत्वांशेन भवदनुगतस्येत्यर्थः। ननु भवतः सेवैकपुरुषार्थिन इति तथा भवत्सन्दर्शनार्थिन इति भवतः परमब्रह्मण्यत्वं वदान्यत्वञ्च श्रुत्वा दर्शनकौतुकिन इत्येवार्थः। ननु तदर्थानुरागिण इति स्वस्मिन्नपि तद्गुणद्वयख्यापनेन तदंशमात्रव्यक्तेः गत्यन्तरप्राप्तेश्च अतएव साधकदशायामपि श्रीमदम्बरीषादिवत् सेवादिलक्षण साक्षाद्भक्तिर्नोदिते ऽतिविप्रो जातः ननु तद्दुर्वाससः क्रोधेऽप्यविप्र इति गम्यते तथापि भगवद्दर्शनादिकं यथाकथञ्चिद्भिलाषगुणादिति ज्ञेयम् ॥२५—४४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नन्वेतादृशस्य तव कथं पूर्ववृत्तान्तपरिज्ञानमिति चेत् तत्राह–ब्रह्मण्यस्येति। अज्ञानं हि स्मृतिनाशकं तच्च ज्ञानसमानाधिकरणं ब्राह्मणाः स्वभावतो ज्ञाननिष्ठाः "ज्ञानं विज्ञानमास्तिक्यम्" इति वाक्यात् अतो ब्रह्मण्यस्य ब्राह्मणभक्तस्य ब्रह्मधर्माहितं कुर्वन्तीति न स्मृतिभ्रंशः राजन्योपि सर्वदेयमय इति ब्रह्मक्षत्रयोस्तुल्यत्वात् क्षतात्त्रायत इति धर्माच्च तत्र "दानमीश्वरभावश्च" इति वाक्याद्वदान्ये क्षत्रं प्रतिष्ठितमिति अन्योन्यमात्मानं ब्रह्मक्षत्रं च रक्षत इति वाक्यात् ज्ञानं क्षत्रियमपि पालयति भगवान् सर्वेश्वर इति ज्ञानाद्यस्तदधीनां भगवद्भक्ते स्वोपकारं कुर्वन्तीति प्रकारत्रयेणापि स्मृतिर्न विध्वस्ता अस्त्येको ज्ञाननाशप्रकारः चतुर्थं निरूपितः "इन्द्रियैर्विषयाकृष्टैः राक्षिप्तं ध्यायतां मनः" इत्यादिना स इतः पूर्वं न जात इत्याह अद्यापि न विध्वस्तेति। केशवेति पदम् उत्पत्तिप्रलयकर्त्तारपि मोक्षं प्रयच्छतीति भक्तज्ञानदाने कः प्रयासः स्यादिति सूचितं किञ्च स्मृतिनाशका यावन्तो मायादयः न सर्वे मत्तो बिभ्यतीत्याह—भवत्सन्दर्शनार्थिन इति। यो भगवद्धर्मान् प्रतीक्षते तस्य नान्ये धर्माः बाधकाः भवन्ति ॥ २५ ॥

एवं स्ववृत्तान्तमुक्त्वा भगवद्दर्शनं दुर्लभं सर्वप्राणिनां कथं ममाकस्माज्जातमिति स्वभाग्यमभिमन्वयन्नाह–स त्वं कथमिति। तादृशस्त्वं ममाक्षिपथः कथं वा जात इत्याश्चर्यं परमात्मेति आत्मनोपि परो आत्मान्तरः कथं देहादपि बहिर्दृश्येतेत्येकाऽनुपपत्तिः किञ्च योगेश्वरैरपि योगानुसारेण तत्रापि श्रुतिदृशा वेदबोधितज्ञानेनैव न तु वैदिकप्रकारेण तत्रापि अमला दृष्टिर्यस्य तादृशेन विभाव्यः साधनप्रमाणाधिकाराः उत्तमा निरूपिताः तैरप्येवं प्रत्यक्षो न भवति किन्तु विशेषेण भाव्यः तर्कय एव स मम साक्षात्कथं जात इत्याश्चर्यम् अनेन प्रमाणविचारेण दर्शनायोग्यता निरूपिता प्रमेयविचारेणापि दर्शनायोग्यतामाह—अधोक्षजेति। अधः अक्षजं ज्ञानं यस्मादिति किञ्च स्वस्यानधिकारोपि उरुव्यसनान्धबुद्धेः अनेकव्यसनैरन्धा बुद्धिर्यस्येति तन्यकारणकार्योत्पत्तिर्न सम्भवतीति अवश्यं भगवद्दर्शनं वक्तव्यमिति चेत्तत्राह—स्याम्मेऽनुदृश्य इति। मे अनुदृश्यः स्यात् यस्य मे भवापवर्गः प्रायेण मम मोक्षः सम्भाव्यते केनचित् कारणेन तद्भगवद्दर्शनव्यतिरेकेण मोक्षो न भवतीति मोक्षसाधनानि फलोन्मुखानि सन्ति भगवद्दर्शनं कारयामासुः तत्रापि मोक्ष इहैव अस्मिन्नेव जन्मनि अन्तिमजन्मन्येव भगवत्साक्षात्कारात् ॥ २६ ॥

एवं दुर्लभदर्शनमुपपाद्य स्वर्गगमनार्थं भगवन्तं प्रार्थयितुं नवधा भगवन्तं सम्बोधयति—देवदेवेति। लोके गमने देवानामपि यो देवः तदाज्ञयैव गमनं भवति स चेत्स्वस्मिन् क्रीडति तदा देवत्वं भवतीति जगन्नाथत्वाद्वश्यमाज्ञा प्रार्थनीया गोविन्देति सतामिन्द्रः एवं राजसतामससात्त्विकभावेन प्रभुत्वेन सम्बोधितो भगवानाज्ञां प्रार्थयितुं प्रेरकत्वेन त्रिविधं पुरुषमाह—पुरुषोत्तमः पूर्णः पुरुषः नारायणः पुरुषोऽद्वितीयः हृषीकेशोऽन्तर्यामी तृतीयः पुरुषः "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः" इति वाक्यात् अनेन भगवत्प्रेरणया भोगार्थं गच्छामीति स्वापराधाभावो निरूपितः तत्र गतस्य

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवत्स्मरणाभावान्न निरस्ता इत्याशङ्क्य भगवद्गुणाः सर्वत्र सन्तीति निरूपयन् विशेषणत्रयमाह—पुण्यश्लोकाच्युताव्ययेति । पुण्याः श्लोकाः कीर्त्तिर्यस्येति विषयसम्बन्धकृतदोषपरिहारः कीर्त्तिस्वभावादेव भवतीति सूचितं श्लोकः विषयेष्वपि भवतीति न विषयैर्विरुद्ध्यते तेन सेवनसम्भवः भगवतः सर्वतोऽच्युतत्वात् नित्या कीर्तिर्भवति पूर्णा च ततः सम्पादनसाधनं नापद्यते न विद्यते व्ययो यस्मादिति तेनान्यस्यापि नाशाभाव उक्तः श्रोतुरप्यच्युतत्वं सम्पादयतीति षष्ठीबहुव्रीहिपक्षेऽपि न दोषः ॥ २७ ॥

एवं स्वर्गगमने सर्वामुपपत्तिमुक्त्वा प्रार्थयति—अनुजानीहि मामिति । आवश्यकं पुण्यफलमुक्तं कृष्णेति सर्वथा सर्वप्रकारेण मोचनसमर्थः न हि तस्य विषयसम्बन्धे मोचनसामर्थ्याभावः । अन्यथा विशेषावतरणं न कुर्यात् यान्तं देवगतिमिति । गमनमावश्यकमुक्तम् अनभिप्रेतत्वादप्यनुज्ञाभावमाशङ्क्याह–विभो इति । तथापि विषयसम्बन्धे नाशमावश्यकमाशङ्क्य प्रार्थयति–यत्र क्वापि सतश्चेत इति । त्रिविधानि स्थानानि सुखदुःखोभयरहितानि दुःखे असामर्थ्यं सुखे अत्यासक्तिः उभयाभावे मोहादिरिति सर्वत्रैव स्मरणाभावस्तुल्यः तथापि कृपयैव स्मरणमिति स्थानविशेषस्याप्रयोजकत्वात् यत्र क्वापि सतः मे चेतः त्वत्पदे एव आस्पदं स्थानं यस्य तथा सति सर्वत्र गच्छदपि चेतः त्वत् पदयोरेव स्थिरीभविष्यतीति न कापि चिन्ता ॥ २८ ॥

—————

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नृगस्य भक्तिमिश्रकार्मैस्त्वाद्गुणभूतैव या भक्तिरासीत्तामाभिस्यैव भगवदग्रे दासस्येति विनयव्यञ्जकोक्तिरियं ज्ञेया भवत्सन्दर्शनार्थिन इति कदाचित् कदाचित्तिसुन्दरश्रीभगवद्विग्रहतन्मन्दिरादिश्रीगीताश्रीभागवतादिशास्त्रप्राप्त्युत्कण्ठस्य महाभागवतस्यापेक्षणीयं नृगेण महादातृत्वात् सम्यक् सम्पादितं ततश्च तेन सन्तुष्यता भो राजंस्तव भगवद्दर्शनं भूयादिति यदैवाशीर्दत्ता तदारभ्यैव नृगस्य भगवद्दिदृक्षाऽभूदिति गम्यते ॥ २५ ॥

स्मृतिर्ममेति शेषः साक्षात्तथानुक्तिर्विनयादिना अद्य कृकलासदेहे तथा महाभिमानी देवदेहेऽपि तद्विरोधिनि न ध्वस्ता न नष्टा दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः स्वात्मनो भाग्यमभिनन्दति स एव त्वं मम शकथमक्षपथोऽभूर्यः खलु योगेश्वरैः सनकाद्यैरपि श्रुतिदृष्ट्या निर्मले हृदि विभाव्यो ध्येय एव तत्रापि त्वं साक्षादधोक्षजः शकटासुरभञ्जनः स्वयं भगवानेव तत्रापि उरुव्यसनान्धबुद्धेर्मद्विधस्याधमस्यापि किञ्च यस्य जनस्य भवापवर्गः संसारनाशो भवेत्तस्यापि मे मम किं भवान् दृश्यः स्यात् अपि तु न स्यादेव किन्तु महाभागवतस्य कस्यचिदाशीर्वादादेव स्यादिति भावः ॥ २६ ॥

सहसोत्पन्नया भक्त्या भगवत्कृपया लब्धदास्यो नामान्येवानुकीर्त्तयन्ननुज्ञां प्रार्थयते—देवदेवेति । देवानां देवोऽपि त्वं जगतामपि नाथस्त्वान्मन्नाथो भव गोविन्द गवां कृपादृष्ट्या मां विन्दस्व अत्र हेतुः पुरुषेषु विष्ण्वादिष्वप्युत्तमः नारायण नाराजीवा अयनमधिष्ठानं यस्येति मां दुर्जीवमप्यधितिष्ठ हृषीकेश मदिन्द्रियाण्यात्मसात्कुरु पुण्यश्लोक तवैषा नृगमोचनी कीर्त्तिरभूदेव अच्युत मदन्तःकरणाद्विच्युतो मा भव अव्यय अत्र न ते कोऽप्यपचय इति ध्वनयः त्वत्पदमेव आस्पदं विषयो यस्य तथाभूतं मच्चेतो भूयात् ॥ २७-२८ ॥

—————

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे विभो ! यस्य भवापवर्गो भवेत् मुक्तिर्भवेत्तस्य यो दृश्यः स्यात् यश्च श्रुतिदृशा वेदान्तश्रवणजन्येन ज्ञानेन अमले हृदि विभाव्यः ध्येयः स त्वं साक्षात्परात्मा अधोक्षजः अधः अर्वागेव अगृहीत्वा निवृत्तमेव अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात् "नानुमानं नेन्द्रियाणि"ति श्रुतेः । उरुव्यसनेन पुनःपुनर्जन्ममरणदुःखेनान्धबुद्धेर्मम इह कथं अक्षपथः चक्षुर्ग्राह्योऽसि नु अहो मे भाग्यमिति शेषः ॥ २६-२७ ॥

प्रेमातिशयेन बहुधा सम्बोध्य अनुज्ञां प्रार्थयते—अनुजानीहीति । देवगतिं प्रति यान्तं गन्तुमुद्यन्तं मामनुजानीहि अज्ञापय यत्र क्वापि सतो वर्तमानस्य मे चेतः त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयात् ॥ २८ ॥

—————

### भाषा टीका ।

हे केशव ! मैं ब्रह्मणों का भक्त और दान शील तथा आपका दास आपको दर्शनार्थी रहा इसी से अब पर्य्यन्तभी मेरी स्मृति नष्ट नहि भई ॥ २५ ॥

हे विभो ! बंडे२ योगीश्वरनको उपनिषद् श्रुति जनित तत्त्व ज्ञानरूप दृष्टि करके निर्मल हृदय में केवल आपका चिन्तवन होता है कुछ साक्षात्कार न हि होता है क्योंकि चक्षु आदि इन्द्रियों से उत्पन्न हुआ ज्ञान आपको विषय नहि करता इसी से आपका नाम अधोक्षज है एतादृश जो आप हो सो कृकलास योनि जनित अत्यन्त दुख करके जि मेरी बुद्धि अन्धी हो रही है उस मेरे नेत्र गोचर आप क्यों कर भये इस संसार में जिस पुरुष संसार का नाश होनहार है उसी को आपका साक्षात्कार होता है ॥ २६ ॥

हे देवदेव ! हे जगन्नाथ ! हे गोविन्द ! हे पुरुषोत्तम ! हे नारायण ! हे हृषीकेश ! हे पुण्यश्लोक ! हे अच्युत हे अव्यय ॥ २७ ॥

हे प्रभो ! हे श्रीकृष्ण मैं स्वर्ग लोक को जाता हूँ मोको आप आज्ञा दीजिये कर्मके आधीन- जिस किसी योनिमें भी रहूँ तथापि मेरे चित्तका आश्रय आपका चरणारविन्द हि रहै ॥ २८ ॥

—————

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ।
कृष्णाय वासुदेवाय योगानां पतये नमः ॥ २९ ॥
इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ।
अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥ ३० ॥
कृष्णः परिजनं प्राह भगवान् देवकीसुतः ।
ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ३१ ॥
दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ।
तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यात्रश्वमस्यति—नम इति । सर्वभावाय सर्वस्य भावो जन्म येन तस्मै ब्रह्मणे कर्तृत्वेऽप्यविकाराय कुतः अनन्तशक्तये अनन्ता मायाख्या शक्तिर्यस्य तस्मै वासुदेवाय सर्वभूताश्रयाय इत्युपादानत्वमुक्तम् श्रीकृष्णाय सदानन्दरूपायेति पुरुषार्थत्वमुक्तम्—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥

इतिस्मृतेः । किञ्च योगानामिष्टापूर्तादिकर्मणां पतये फलदात्रे अयं भावः एवम्भूतं त्वां विहाय गन्तुमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति ॥ २६—३१ ॥

मनागीषदपि भुक्तं सदग्नेरग्निसदृशस्य तेजीयसोऽतितेजस्विनोऽपि दुर्जरम् ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तर्ह्यत्रैव तिष्ठति चेत्तत्राह—नम इति । तैर्व्याख्यातं यद्वा अतस्त्वत्प्रेरणया यामि तत्र मच्छक्त्या किं स्यादित्याशयेन तस्य सर्वप्रेरकतां प्रदर्शयन्नैश्वर्यं वर्णयति-सर्वेषां भावश्चेष्टा यस्मात् तस्मै कुतः ब्रह्मणे बहिरन्तश्च सर्वव्यापकाय ननु, जीवाः प्रत्यक्षं स्वयमेव बहुधा चेष्टन्ते नेत्याह-अनन्तेति । तव शक्त्यैव तेषां तत्तच्छक्तिर्नस्वत इत्यर्थः कुतः वासुदेवाय सर्वचित्ताधिष्ठात्रे अत एव योगानां कर्मज्ञानादिलक्षणानां पतये प्रवर्त्तकाय एवमेवम्भूताय कृष्णाय तुभ्यं नमो नमः भक्त्युद्रेकेण द्विरुक्तिः सदा नम इत्यर्थः । अथवा सर्वेषां ब्रह्मादिस्थावरान्तानां भवाय उत्पादकाय स्वरूपतः सर्वबृहत्तमाय शक्तितश्च स्वरूपशक्तिमायाशक्तिवृत्तिभेदेनानन्तशक्तये एवमपि कृष्णाय नराकृत्यैव परब्रह्मणे तत्रापि वसुदेवाज्जन्मलीलयैव प्रकटीभूताय यतो योगानां दुर्घटघटनाशक्तीनां पतये नमो नमः पुनःपुनर्नमस्कारमात्रं त्वन्निकटे स्थातुमयोग्यत्वादलं सेवाद्यभिलाषेणेति भावः ॥ २६ ॥

पश्यतां नृणाम् आश्चर्येण सर्वेषु लोकेषु पश्यत्सु ॥ ३० ॥

स्वयं भगवानपि निजान्तरङ्गवर्गमपि प्रकर्षेण ब्राह्मणापराधदुष्फलदर्शनेनावोचत् यतो देवकीसुतः तैर्निजपरिकरैः सहाङ्गीकृततज्जन्मादिमनुष्यलीलः तत्रापि ब्रह्मण्यो ब्राह्मणहितावतारश्चासौ देवः सर्वश्रेष्ठश्च न केवलं तावन्मात्रो धर्मप्रवर्त्तकः किन्तु धर्मात्मा सर्वधर्मप्रवर्त्तकश्च ननु ते तत्परिजनाश्चेत्तर्हि तेषु किं शिक्षा पिष्टपेषणेन तत्राह राजन्यान् तत्रत्यान् क्षत्रियान् ततोऽन्यानपि तद्व्याजेन शिक्षयितुमित्यर्थः ॥ ३१ ॥

दुर्जरं दुष्टाजीर्णवन्महादुःखदमित्यर्थः । बत विस्मये भुक्तं चौर्यादिना तेजीयसः इत्यार्षं तपोयोगादिबलेन पापाद्यपरिभाव्यस्यापीत्यर्थः । ईश्वरमानिना तदभिमानेन तपोयोगादिसम्भावनाशून्यानां तु राज्ञां किमुत सुतरामेव दुर्जरमित्यर्थः । अन्यत्तैः यद्वा मनाक् स्वल्पमपि ब्रह्मस्वम् अग्निमतिक्रम्यापि यस्तेजीयान् तेजस्वितमः तस्यापि ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वभावाय सर्वपदार्थशरीराय ॥ २९-३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यात्रश्वमस्करोति-नमस्त इति । तुभ्यं सर्वभावय सर्वः भावः पदार्थो यस्य शरीरत्वेनेति स तथा तस्मै तत्र हेतुः ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहत्त्वायानन्ताः शक्तयः कार्योपयुक्तापृथक्सिद्धप्रकृतिपुरुषकालसार्वज्ञसर्वशक्तित्वादयो यस्य तस्मै योगानां पतये निर्वाहकाय ॥ २९ ॥

इतीति । स्वमौलिना स्वकिरीटेन विमानाग्र्यं विमानश्रेष्ठम् आरुरोह नृणां पश्यतां सताम् ॥ ३० ॥

कृष्णइति । ब्रह्मण्यदेवो धर्मात्मेति च हेतुगर्भे तस्वात् राजन्याननुशिक्षयन्नित्यत्र "लक्षणहेत्वोः" इति शत्रादेशः अनुशिक्षयितुमित्यर्थः । परिजनं परितो विद्यमानजनम्प्रति प्राह ॥ ३१ ॥

उक्तिमेवाह-दुर्जरमित्यादिनैतद्विश्राव्येत्यतः प्राक्तनेन । बतेत्याश्चर्ये ब्रह्मस्वं मनागीषदपि भुक्तं सदग्नेरग्निसदृशस्यातितेजस्विनोपि दुर्जरं दुःखेनापि न जीर्यतीति तथा किं वक्तव्यम् ईश्वरं मन्यमानानां राज्ञां दुर्जरमिति ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वभावाय सम्पूर्णैश्वर्याय सर्वोत्पादनकर्त्रे वा अखण्डलीलायेति वा ॥ २६-३० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परिजनं परित उपासमानं जनम् ॥ ३१ ॥

अग्नेरपि दुर्जरं जीर्णीकर्तुमशक्यं मनागल्पमपि किम्पुनरन्यस्येत्यर्थः ॥ ३२ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो गच्छन् नमस्यति-नमस्ते सर्वभावायेति । भगवान् षड्गुणयुक्त इति धर्मिणां निर्दिश्य षड्विशेषणान्याह-भक्तस्य गमनमनुचितमाशङ्क्य सर्वभावत्वमेवेति न तत्परित्यागः अनेन कार्यरूपता निरूपिता कारणरूपतामाह—ब्रह्मण इति । अनन्तशक्तय इति कारणत्वोपपादकं प्रकारमुक्तवान् एवं साधनत्वेन त्रिरूपत्वमुक्त्वा फलेपि त्रिरूपतामाह—कृष्णाय सदानन्दायेति शुद्धफलरूपत्वं वासुदेवाय मोक्षफलदात्र योगानां पतय इति तस्य मोक्षफलदाने साधनत्वम् आद्यन्तयोर्नमस्कारः सर्वत्रानुषङ्गः ॥ २९ ॥

अङ्गीकारेणैवाभ्यनुज्ञातः स्वर्गंति गत इत्याह-इत्युक्त्वेति । प्रदक्षिणनमस्कारौ सर्वकार्यसाधकौ स्वमौलिना पादस्पर्शः भगवद्धर्माणां नित्यत्वात्तच्चरणच्छायायामेव सर्वभोगसूचकः तदैव देवसमानीतं विमानमारुह्य भगवन्माहात्म्यं लोके प्रख्यापयन् नृणां पश्यतामेव सतां यथावित्यर्थः ॥ ३० ॥

एवं नृगस्य ब्राह्मणातिक्रमेण दुर्गतिं भगवदीयत्वेन सुगतिं च प्रदर्श्य निरोधनिरूपणार्थं ब्रह्मस्वसम्बन्धाभावमुपदिशति-कृष्णः परिजनं प्राहेति यावदध्यायपरिसमाप्ति । सात्त्विकाः प्रथमं धर्मे उपदेष्टव्या इति परिजनाः पुत्रपौत्रादयः भगवानिति भाव्यर्थाभिज्ञः ब्राह्मणातिक्रमादेव तेषामनिष्टं भविष्यतीति देवकीसुत इति भक्तकृपालुत्वात्तथाभावो न सम्मतः किञ्च ब्राह्मणानामपि हितं प्रेप्सुः एवमुपदेशं ब्राह्मणातिक्रमं न कुर्युरिति किञ्च धर्मात्मा धर्मः स्थापनीय इति एकेनापि ब्रह्मस्वेन मिलितेन सर्व एव कृतो धर्मो नष्टो भवति इति किञ्च राजवंशे स्वयमपि प्रादुर्भावलीलां कृतवान् अतो राजन्यान् अनुशिक्षयन् धर्मार्थं धर्मः कर्त्तव्यः कारणीयश्चेति ॥ ३१ ॥

उपदेशमाह द्वादशभि—दुर्जरं बत ब्रह्मस्वमिति । आदौ सात्त्विकानुपदिशन् धर्मान्तरेण ब्रह्मस्वं गृहीतं परिहर्त्तव्यमिति पक्षं निराकरोति-बत इति खेदे यथा बालकाः सर्पसमीपं चेद्गच्छेयुः तदा तथा पित्रादयः खेदमाविष्कुर्वन्ति तथा भगवानाहेति लक्ष्यते स्वतः उपायान्तरेण वा न जीर्णं भवतीति दुर्जरं यतो ब्रह्मैवात्तयं तस्यापि स्वमिति अत्यन्तरङ्गं उपभुक्तं चेत् दुर्जरमिति अजीर्णद्रव्यमिव मृत्युसाधकमुक्तं यत्र ब्रह्मण्यस्य ब्रह्मभूतस्य स्वमित्यभिमानः तत्र दृष्टप्रकारेणैव दुर्जरं भवति नृग इव अन्यथात्वे शास्त्रद्वारेति दृष्टादृष्टाभ्यां दुर्जरं यत्सर्वमेवोपभुक्तं भस्मसात्करोति तेनाप्यग्निना उपभुक्तं दुर्जरमेव भवति ननु भस्मसात्भवतीति ऐहिकदुर्जरत्वमेव निरूपितं ननु ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते यथेति वाक्यात् ज्ञानेन ब्रह्मस्वजरणमिति चेदत्राह-तेजीयसोपीति ज्ञानं फलीभूतं तेजः करोति तद्वान् तेजस्वी तस्यापि दुर्जरमुपजीव्यमपि खण्डयति यत्र ब्राह्मणस्यापि ब्रह्मस्वं दुर्जरं तत्र राज्ञां ब्रह्मस्वं कथं न दुर्जरं स्यात् स्वतो ब्रह्मत्वाभावात् ब्राह्मणोपजीवकत्वाच्च किञ्च तत्रापि ये ईश्वरमानिनः स्वस्य क्षात्रधर्मं परित्यज्य भगवद्धर्मैश्वर्यमभिमन्यन्ते तेन परधर्मनिष्ठत्वात् सुतरामेव ब्रह्मस्वं दुर्जरं भवति ॥ ३२ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मम त्वयि दास्यभाव एवास्तु त्वन्तु सर्वभावविषयीभूत एवासीत्याह-नम इति । सर्वेऽपि भावा यस्मिंस्तस्मै तत्र शान्तभावस्य विषयालम्बनमाह ब्रह्मणे मूर्त्तब्रह्मस्वरूपाय दास्यभावस्याह अनन्तशक्तये महामहैश्वर्याय सख्यभावस्याह—कृष्णाय कृष्णस्यार्जुनस्य नामरूपगुणादिभिः साम्यादेव सदानन्ददात्रे "कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः" इति स्मृतेः । वात्सल्यभावस्याह—वासुदेवाय वसुदेवपुत्राय उज्ज्वलभावस्याह योगानां भक्तियोगमयीनां श्रीरुक्मिण्यादीनां पतये भर्त्रे ॥ २९ ॥

अनुज्ञातः भोगान्ते मां प्राप्स्यसीत्यादिष्टः ॥ ३०—३१ ॥

ब्रह्मस्वं मनाक् ईषदपि चौर्य्यादिना भुक्तं सत् अग्नेः सकाशादपि यस्तेजीयान् तपोयोगादियुक्तस्तस्यापि दुर्जरम् ॥ ३२ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यास्यन् नमस्करोति सर्वे भावा यस्मात् तस्मै विश्वहेतवे ब्रह्मणे बृहते अनन्ताः असङ्ख्येयाः शक्तयो यस्य तस्मै ॥ २९—३० ॥

परिजनं परितो वर्त्तमानं जनम ॥ ३१ ॥

बतेत्याश्चर्ये ब्रह्मस्वं मनागीषदपि भुक्तंसत् अग्नेः अग्निसमस्यापि तेजीयसः अतितेजस्विनोऽपि दुर्जरम् ईश्वरमानिनामज्ञानादनीश्वरमात्मानमीश्वरम्मन्यमानानां राज्ञां दुर्जरमिति किमु वक्तव्यम् ॥ ३२—३३ ॥

———

### भाषाटीका ।

सब जगत की उत्पत्ति करने वारे अनन्त शक्ति सम्पन्न स्वरूप रूप गुण विभूति करके अपरिछिन्न परमानन्द स्वरूप, सर्वव्यापक निज प्राप्तिके साधन कर्म ज्ञान भक्तिके निर्वाह करने वारे आपके अर्थ वारम्वार नमस्कार है ॥ २९ ॥

वह नृगराजा श्रीकृष्ण के प्रति ऐसा कह कर तथा श्री कृष्ण की प्रदक्षिणा करके मस्तक से श्रीकृष्ण के चरणारविंद में दण्डवत् प्रणाम करके पश्चात श्रीकृष्ण से आज्ञा को प्राप्त होकर मनुष्यों को देखतेर स्वर्ग से आए भए विमान मे चढ जाता भया ॥ ३० ॥

ब्रह्मण्यदेव धर्मात्मा देवकी नन्दन श्रीकृष्ण भगवान् क्षत्रियन को धर्मकी शिक्षा करनेके वास्ते निज पासवर्त्ती जन के प्रति बोलते भए ॥ ३१ ॥

नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ।
ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ३३ ॥
हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ।
कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३४ ॥
ब्रह्मस्वदुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ।
प्रसह्य तु बलाद्भुक्तं दश पूर्वान् दशापरान् ॥ ३५ ॥
राजानो (१) राजलक्ष्म्यान्धा नात्मपातं विचक्षते ।
निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥ ३६ ॥

भाषा टीका ।

विना जाने किञ्चित मात्र भी भोग हुआ ब्राह्मण का घर अग्नि के सदृश अति तेजस्वी पुरुष को भी दुःख से भी नहि पच सका है फिर वृथाहि अपने ये ईश्वराभिमान करने वारे राजा नं को न पचना इस में क्या कहना ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च विषादपि घोरमित्याह—हिनस्तीति । संसर्गिसंसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह—वह्निरिति । अपिच समूलमिति वह्निर्मूलान्यवशेषयति ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ॥ ३४ ॥

दुरनुज्ञातं यथावदननुज्ञातं त्रिपूरुषं कुलं स्वयं पुत्रं पौत्रञ्च प्रसह्य हठात् बलाद्राजाद्याश्रयतः ॥ ३५ ॥

ये ब्रह्मस्वमभिमन्यन्ते इच्छन्ति ते निरयमेवाभिमन्यन्ते अतो अन्धा आत्मपातं न विचक्षत इति ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मस्वं विषतोऽपि विषममित्युत्तरोत्तरवाक्याधिक्येनाह-नेति द्वाभ्याम् । विषं हिंसालक्षणस्वभावाव्यभिचारीत्यर्थः । प्रतिक्रिया मणिमन्त्रादिभिः प्रतीकारोऽस्ति हि एव ब्रह्मस्वमेव प्रकर्षेण न्यायप्रदर्शनादिनोक्तं बुधैः भुवि सर्वत्रापीत्यर्थः ॥ ३३ ॥

अत्तारं तद्भक्षकमेव न सङ्ग्यादिकं प्रकर्षेण शाम्यतीति ब्रह्मस्वारण्यग्निस्तु प्रतीकारैरपीषदपि न शाम्यतीति प्रशब्दध्वनिः कुलं पुत्रपौत्रादिकं समूलं पितृपितामहादिसहितम् ॥ ३४ ॥

कथं कियद्दहति तत्राह-स्वमिति ॥ ३५ ॥

तस्मात् राजान इति । राजकुल्याः राज्ञां पुत्रादयो भृत्यादयश्च तदुपलक्षणत्वादन्येपीत्यर्थः । राजलक्ष्म्येति पाठे राजश्रिया तन्मदेनेत्यर्थः । साधु सम्यक् यथा स्यात्तथा यद्वा साधु बालिशा अतिशयेन मूर्खाः ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दुरनुज्ञातं सम्यगनुज्ञारहितम् ॥ ३५—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, नाहमिति । हालाहलं न विषं मन्ये, कुतः ? यस्य हालाहलस्य प्रतिक्रिया प्रतीकारः वर्त्तते इति शेषः । किन्तु ब्रह्मस्वमेव विषं प्रोक्तं हि यस्मादस्य ब्रह्मस्वस्य भूमौ प्रतिक्रिया नास्ति ॥ ३३ ॥

किञ्च, हिनस्तीति । विषं त्वत्तारं भक्षयितारमेव हन्ति अग्निस्त्वद्भिर्जलैः प्रशाम्यति अनेन संसर्गिसंसर्गेण मारकत्वादग्नितुल्यता स्यादित्येतदपि नास्तीत्युक्तम् । अपि च समूलमिति वह्निर्हि मूलान्यविशेषयति ब्रह्मस्वलक्षणारणिजः पावकस्तु कुलं तदपि समूलं दहति ॥ ३४ ॥

किञ्च, ब्रह्मस्वमिति । दुरनुज्ञातं सम्यगननुज्ञातं सत् भुक्तं स्वं पुत्रं पौत्रञ्चेति त्रीन् पुरुषान् दहति बलाद्राजाद्याश्रयबलात्प्रसह्य बलात्कृत्वा भुक्तं तु दशपूर्वान् पितृपितामहादीन् हन्ति नरके पातयति अपरान् पुत्रपौत्रादीन् दश नाशयति ॥ ३५ ॥

तर्हि राजानः किमिति भुञ्जते इत्यत्र आह-राजान इति । ये राजानः साधु यथा तथा ब्रह्मस्वमभिमन्यन्ते आकाङ्क्षन्ति ते राज्यलक्ष्म्या अन्धा इति शेषः । आत्मनः पतत्यस्मिन्निति तथा तं निरयं न प्रतीक्षन्ते न विचारयन्त्यतस्ते केवलं बालिशाः मूढाः इत्यर्थः ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रतिविधिः प्रतिक्रिया नास्ति ॥ ३३ ॥

ब्रह्मस्वाख्यारणिजन्यपावकः ॥ ३४ ॥

दुरनुज्ञातम् अनुज्ञां विना भुक्तम् अननुज्ञातं वा प्रसह्य अविचार्य ॥ ३५ ॥

राजलक्ष्म्याः राजश्रियः पातं निरये आत्मपातं च न प्रचक्षते न पश्यन्ति ये ब्रह्मस्वं साधु मन्यन्ते ते बालिशाः ॥ ३६-३७ ॥

(१) राज्यलक्ष्म्येति वीर॰

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं मरणपर्यवसायित्वमुक्त्वा तादृशान्यन्यान्यपि सन्तीति अनुपमार्थमितरं निषेधति—नाहं हालाहलं मन्य इति। समुद्रोद्भूतं महादेवेन पीतं विषं हालाहलं न विषमात्रं तस्यापि महादेवभक्षितस्य प्रतीकारो दृष्ट इति तस्य विषत्वमेव नास्ति यद्यपि वाक्यान्तरे—

"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्"॥

इति प्रकारान्तरेण क्रूरता निरूपिता तथापि तस्याप्यनङ्गीकारार्थं प्रतिक्रियामेवाह—यतो ब्रह्मस्वप्रतिक्रियाभावः अन्यथा नृगप्रार्थनया सर्वमित्रयोर्ब्राह्मणयोर्दया स्यात् तदा प्रतिक्रियां कुर्वीतां ननु तस्यापि प्रतीकारो दृष्टः कृकलासशरीरं प्राप्य मुक्त इति तत्राह—भुवीति। यथा स्थितस्य न प्रतीकार इत्यर्थः॥ ३३॥

तमपि विशेषमाह—हिनस्ति विषमत्तारमिति। अप्रतीकारेपि विषमत्तारमेव हिनस्ति विषादग्निः क्रूर इति तत्तुल्यो भविष्यतीत्याशङ्क्याह-अद्भिः अग्निः प्रशाम्यतीति दृष्टत्वात् न लौकिके हेतुर्वक्तव्यः अलौकिकेपि "आपोग्नेर्भ्रातृव्यः" इति श्रुतेः। अद्भिः प्रशाम्यत्येव ब्रह्मस्वस्य अशान्तौ हेतुमाह—कुलं समूलं दहतीति ब्रह्मस्वमेव अरणिद्वयाभ्यां मथने अग्निर्भवति स हि यजमानं यदर्थे आधीयते तमपि दग्ध्वा शाम्यति यावज्जीवाधिकारादग्निहोत्रस्य ब्रह्मस्वलक्षणत्वारणिः कुलार्थमेव प्रविष्टेति कुलमेव दग्ध्वा शाम्यति न हि कश्चित् धर्मार्थं परलोकार्थं वा ब्रह्मस्वं गृह्णाति शरीरमपि कुलोद्भवमिति वंशजनकमिति च कुलमेव पोषयति निषिद्धार्थं ब्रह्मस्वग्रहणे उभाभ्यां सर्वनाशः कुलमित्युपलक्षणं वा यत्रैव कश्चिद्ब्रह्मस्वं सम्बध्यते तमेव दहतीति सर्वमविचारं समूलमिति कुलरक्षकधर्ममपि उपजीवकत्वात् दहति॥ ३४॥

सामान्यतः कुलनाशकत्वं ब्रह्मस्वस्योपपाद्य विशेषतो व्यवस्थामाह—ब्रह्मस्वं दुरनुज्ञातमिति। दुष्टतया अनुज्ञातं मनसि अदत्वैव वाङ्मात्रेणानुज्ञातं यथा बलात् गृहीत्वा अनुज्ञां प्रार्थयति ततो बलिष्ठं ज्ञात्वा मारणादिशङ्कया अनुगृह्णाति तद्दुरनुज्ञातं तच्चेद्भक्षितं तदा त्रिपुरुषं हन्ति भोक्ता तत्पुत्रः पौत्रश्चेति त्रयः पुरुषाः चौर्यभुक्तं तु निषिद्धत्वात् महापातके पर्यवस्यति प्रसह्य धृष्ट्वा अतिक्रमं कृत्वा शास्त्रतः बलात् लोकतश्च भुक्तमेकविंशतिपुरुषान् दहति तत्र दशपूर्वाः पितृपितामहादयः परं पुत्रपौत्रादयः स्वयमेकविंशः प्रसहनबलयोरान्तरबाह्यभेदेन व्यवस्था वैदिकलौकिकभेदेन वा कश्चित् बलात् गृह्यमाणं प्रयच्छति स्वयं बलमकृत्वा कश्चित्तु स्वयमपि बलं करोतीति न पौनरुक्त्यम्॥ ३५॥

नन्वेवं धर्मशास्त्रे प्रसिद्धे कथं ब्रह्मस्वापहारो भविष्यतीत्याशङ्क्याह—राजान इति। प्रथमतो राजत्वादेव तत्रापि राजलक्ष्म्या चकारादभिजनादिमदैः आत्मनः पातं न विदन्ति यतस्ते शास्त्रोक्ता राजानः अन्यथा राज्यान्ते नरकं ध्रुवमिति न स्यात् अन्यत् क्षत्रियस्य व्याप्यमेव ब्राह्मण एव परं व्यापकः तेचेद्ब्रह्मस्वं जानीयुः नरकसाधकत्वेन तदा न गृह्णीयुः न हि कश्चित् नरके पतति अत एव निरयरूपं ब्रह्मस्वं साधु मन्यन्ते यतो बालिशाः॥ ३६॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किं दुर्जरमन्नमिव न विषादप्यतितीव्रमित्याह—नेति। हालाहलं हि शम्भुर्जरयामासैव अस्य प्रतिविधिः प्रतिक्रिया॥ ३३॥

तादृशं विषमपि वरं भोक्तव्यं नतु ब्रह्मस्वमित्याह—वह्निर्हि मूलान्यवशेषयति ब्रह्मस्वारणिपावको हि दुरुपशमत्वाद्वह्निविशेषः पुरातनतरुकोटरमध्यस्तवह्निर्यथा कालेनान्तः प्रवृत्तो बहुवार्षिकजलैरपि न निर्वाति किन्तु मृत्तिकान्तर्गतमूलपर्य्यन्तमपि तरुं दहति तथा कुलं तदपि समूलम्॥ ३४॥

दुरनुज्ञातमिति दुःशब्देन यथावदननुज्ञातमित्यर्थः। अयं मे बन्धुरुपकारी मदन्नं मयाप्यलब्धदत्तमपि भुङ्क्ते चेद्भुङ्क्तामित्येवमनुज्ञातमित्यर्थः। त्रिपुरुषं स्वं पुत्रं पौत्रं च प्रसह्य हठात् बलात् राजाद्याश्रयतश्च॥ ३५॥

राजकुल्याः राजकुलप्रसूताः ये ब्रह्मस्वमभिमन्यन्ते ते निरयं नरकमेवाभिमन्यन्ते अतो बालिशा अज्ञाः आत्मपातं न चक्षते॥ ३६—३९॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ब्रह्मस्वलक्षणारणिजः पावकस्तु कुलं तदपि समूलं दहति॥ ३४॥

दुरनुज्ञातं यथावदननुज्ञातं प्रसह्य हठात् बलात् राजाद्याश्रयतः पूर्वान् पितृपितामहादीन् अपरान् पुत्रपौत्रादीन्॥ ३५॥

निरयम् अन्यायतो गृहीतत्वात् निरयप्रदं ब्रह्मस्वं ये साधु मन्यन्ते ते बालिशाः आत्मपातं न विचक्षते॥ ३६—३९॥

### भाषा टीका।

जिस विष निवृत्ति का उपाय है उस हाला हल विषका मैं विष नहि मानता ब्राह्मणका धन हि'विष कहाहै क्योंकि इस विष के दूर करने का उपाय पृथिवी में है ही नही॥ ३३॥

विषतो खाने वारेहि को मारता है और अग्नि जलसे शान्त होता है परन्तु ब्राह्मण के धन रूप काष्ठसे उत्पन्न हुआ अग्निनो कुल को मूल सहित भस्म करदेता है॥ ३४॥

किसी प्रकार के प्रमाद से नहि जान कर भोग्यो गयो ब्राह्मण क्रोध भोगने वारो उसका पुत्र और पौत्र इस प्रकार तीन पुरुष को नाश करता है यदि हठसे अथवा किसी प्रकार के बलसे भोग्यो गयो तो पिता पितामह आदि दश पुरुष पहले और पुत्र पौत्र आदि दश पुरुष पिछले

गृह्णन्ति यावतः पांसून् क्रन्दतामश्रुबिन्दवः ।
विप्राणां हृतवृत्तीनां वदान्यानां कुटुम्बिनाम् ॥ ३७ ॥
राजानो राजकुल्याश्च तावतोऽब्दान्निरङ्कुशाः ।
कुम्भीपाकेषु पच्यन्ते ब्रह्मदायापहारिणः ॥ ३८ ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ३९ ॥
न मे ब्रह्मधनं भूयाद्यद्गृध्वाऽल्पायुषा नराः ।
पराजिताश्च्युता राज्याद्भवन्त्युद्वेजिनोऽहयः ॥ ४० ॥

भाषा टीका ।

तथा स्वयं भोग करने वारा इस प्रकार इक ईश पुरुष को नाश करती है ॥ ३५ ॥

जो राज लक्ष्मी से अन्धे हुये अति मूर्ख राजा लोग ब्राह्मणं के धनकी काङ्क्षा करते हैं तथा भोगते हैं वेयह नहि जानते हैं कि हमारा नरक में पतन होगा ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

गृध्वा अभिकाङ्क्ष्य ॥ ४०—४१ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निरयमेव दर्शयति—गृह्णन्तीति युग्मकेन । वदान्यानाम् आतिथ्यादिपराणाम् अतो हृतवित्तत्वेन तदसिद्ध्या कुटुम्बभरणाशक्त्या च दुःखेन रुदतां सतां गृह्णन्तीत्यादिकं नरककालसङ्ख्यादर्शनार्थं काचित्कमेवोक्तं रोदनाभावेपि नरकप्राप्तेः निरङ्कुशाः स्वतन्त्राः अत एव ब्रह्मस्वापहारवन्तश्च भवन्ति तदा कुम्भीपाकेषु तद्भेदेषु प्रत्येकं तावदब्दान् व्याप्य पच्यन्ते यमदूतैः ॥ ३७—३८ ॥

अहो कुम्भीपाकानन्तरञ्च महती दुर्गतिरित्याह—तत्रैव वृत्तिहरणमपि विशेषयाह—स्वेति । जायते तत्रैव तावत्कालं पुनः पुनर्मृत्वा जायत इत्यर्थः ॥ ३९ ॥

किं वक्तव्यं ब्रह्मस्वहरणात् दुर्गतिरिति बलच्छलादिना तज्जिहीर्षयापि जन्मद्वयं दुःखं स्यादित्यन्येषामभयदर्शनार्थं स्वयमप्यरुच्यतिशयेन भीत इवाह—नेति । मे मदर्थं मत्सम्बन्धिवा न भूयात् न भवतु न मयि पर्यवस्यतु तत्र हेतुः यदिति गृध्वा बलेन छलेन याच्ञया वा इदं गृह्णामीत्यभिकाङ्क्ष्यापि इह जन्मनि अल्पायुषः जीवन्नपि शत्रुभिः पराजिताः सन्तो राज्यात् च्युता भ्रष्टा अन्यस्मिंश्च सर्पा भवन्ति येन लोकेषूद्वेगं ददति स्वयञ्च लभते इत्यादि महादुःखभाज एव चिरं भवन्तीति भावः नृपा इत्यत्र नरा इति पाठः ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गृह्णन्तीत्यादिश्लोकद्वयमेकान्वयं हृतं वित्तं येषां तेषामत एव रुदतां विप्राणाम् अश्रुबिन्दवः यावतः पांसून् गृह्णन्ति आर्द्रान् कुर्वन्ति तावतोऽब्दान्वत्सरान् कुम्भीपाकेन निरयेण पच्यन्ते ब्रह्मदायापहारिणः ब्रह्मस्वापहारिणः निरङ्कुशाः दुर्निवाराः राजादिविशेषणमिदं त्रयम् ॥ ३७ ॥ ३८ ॥

स्वदत्तामिति । ब्रह्मवृत्तिं ब्राह्मणस्य जीविकाम् ॥ ३९ ॥

ब्रह्मस्वं न मांस्पृशेदित्याशास्ते—नम इति । विपर्ययेऽनर्थमाह—यदिति । यद्ब्रह्मधनं गृध्वा अभिकाङ्क्ष्य अल्पायुषः पराजिताश्च राज्यात् अभ्रष्टाश्च भवन्त्यतो वयमुद्वेजिनः भीतिमन्तो भवेम ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्ब्रह्मस्वं जग्ध्वाऽल्पायुषो भवन्ति ॥ ४० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सामान्यतो नरकमुक्त्वा विशेषत आह—गृह्णन्तीति द्वाभ्याम् । हृतवृत्तीनां रुदताम् अश्रुबिन्दवो यावतः पांसून् गृह्णन्ति अतः शोके हि रोदनं तस्य च परिमितिः अश्रुभिर्भवति अश्रूणाञ्च परिमाणं कार्यवशादतो रेणूनां सङ्ख्ययैव शोकसङ्ख्यानिमित्तान्तरं निराकर्तुं हृतवृत्तीनामिति वदान्यानामिति लोभादिदोषनिषेधः कुटुम्बिनामिति ह्रियमाणपदार्थावश्यकत्वं तदा ब्रह्मस्वता सम्पद्यते अत्यावश्यकत्वाच्च निषिद्धायाः क्रियायाः ब्राह्मणविषयायाः पांसुग्रहैर्वानिष्टनिर्णयो वेदे निरूपितः "यावतः प्रस्कन्द्य पांसून् सङ्गृह्णात् ततः सम्वत्सरान् पितृलोकं न प्रजानात्" इतिश्रुतेः ॥ ३७ ॥

एकेन निमित्तमुक्त्वा अपरेण फलमाह—राजानो राजकुल्याश्चेति । राजकुल्याः राजकुलोत्पन्नाः चकारात्तत्सम्बन्धिनोऽन्ये च य एवं हरणे समर्थाः तावतः अब्दान् वर्षान् अभिव्याप्य कुम्भीपाकेषु पच्यन्ते प्रासङ्गिकदोषपरिहारार्थमाह—ब्रह्मदायापहारिण इति निरङ्कुशा इति तेषां नियामकश्चेत् स्यात् अन्यथा तस्यैव दोषो भवेत् ॥ ३८ ॥

विप्रं कृतागसमपि नैव द्रुह्यत मामकाः।
घ्नन्तं बहुशपन्तं वा नमस्कुरुत नित्यशः ॥ ४१ ॥
यथाऽहं प्रणमे विप्राननुकालं समाहितः।
तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥ ४२ ॥
ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः।
अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ४३ ॥
एवं विश्राव्य भगवान् मुकुन्दो द्वारकौकसः।
पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे नृगोपाख्यानं नाम
चतुष्षष्टितमोऽध्यायः ॥६४॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ब्रह्मस्वविशेषस्य अपहारे दोषविशेषमाह—स्वदत्तामिति। पूर्वं स्वेनैव दत्तां पश्चात् ब्राह्मणास्वारस्ये हृतापरेण राज्ञा दत्तापरराज्यहरणेन हृता पित्रादिदत्तां स्वदत्तामेवाह-स्वयमेव पित्रेति नात्र धनं विषयः किन्तु वृत्तिर्भूम्यादिः यत्र निरन्तरं जीवनसाधनमुत्पद्यते ब्रह्मवृत्तिर्ब्राह्मणानामेव जीवनसाधनोत्पत्तिस्थानं तादृशः षष्टिवर्षसहस्राणि नरकरूपायां विष्ठायां कृमिर्भूत्वा तिष्ठति षष्टिसंज्ञकः सम्वत्सरः प्रभवाद्यः तस्य संज्ञाः ते सहस्रधा आवृत्ता इति तावद्वर्षाणि सर्वतो बीभत्सितास्तेति उत्पत्तिरेव तत्रेति न कचिदपि तस्मिन् शरीरे सुखसम्बन्ध इत्युक्तम् ॥ ३९ ॥

एवं ब्रह्मस्वदोषानुक्त्वा स्वकीयेषु तदभावं प्रतिजानीते न मे ब्रह्मधनं भूयादिति। स्वतो दैववशाद्वा ब्रह्मस्वं सङ्क्रान्तं न भवतीति मे न भूयादिति देवप्रार्थने वचनं प्रमादादागते को दोष इति चेत्तत्राह—यद्गृध्नुाल्पायुष इति। यद्गृध्नाः यदभिकाङ्क्षिणश्च ते अल्पायुषश्च ग्रहणमात्र एवायुःक्षयो भवतीत्युक्तम् आपन्नानां तथा दोषो न भवतीति नृपा इत्युक्तं दैवगत्या मरणाभावेपि शत्रुभिः पराजिता भवन्ति राज्यश्रष्टयुताः ततो मृताः स्थानभ्रष्टाः जनोद्वेजनकर्त्तारः सर्पा भवन्ति अत ऐहिकामुष्मिकदोषस्य विद्यमानत्वात् तत्सङ्क्रमो मा भवत्विति ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यद्गृध्ना अभिकाङ्क्ष्यापि किमुत हृत्वेत्यर्थः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गृध्ना अभिकाङ्क्ष्यापि किमुत वक्तव्यं हृत्वेति ॥ ४०—४४ ॥

### भाषाटीका।

जिनकी जीविका राजा लोगों ने हरली है और उदार चित्त वारे तथा कुटुम्बी और जीविका हरण होने से रुदन करते हैं उन ब्राह्मणों के आंशून की बुंदन से जितनी भूमिकी रज भीजती हैं ॥ ३७ ॥

उतने हि वर्ष पर्य्यन्त शास्त्र की आज्ञा के उल्लंघन करने वारे और ब्राह्मण के धन कौ अपहार करने वारे राजा लोग तथा उनके कुल के और मन्त्री आदि नौकर चाकर ये सब कुम्भी पाकआदि अनेक नरकन में अग्नि से उलाए जाते हैं ॥ ३८ ॥

जो पुरुष अपनी दई भई अथवा दूसरे की दई भई ब्राह्मण की जीविका को हरता है वह साठि हजार वर्ष पर्य्यन्त विष्ठा का कीडा होता है ॥ ३९ ॥

हमको ब्राह्मण का धन कभी न होना जिसकी अति वाञ्छा हि करने मात्र से राजा लोग अल्प आयु वारे होजाते हैं और शत्रुन से पराजित होजाते हैं तथा राज्य ऐश्वर्य्य से भ्रष्ट होजाते हैं और मरण के अनन्तर नरक में पडते हैं पश्चात् अव शेष पापमें पराये को उद्वेग करने सर्प होते हैं ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

न केवलमर्थवादविभीषिकेयं किन्तु प्रत्यक्षमित्याह—ब्राह्मणार्थ इति ॥ ४३—४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, यदि विप्र एवास्माकं धनं हरेत् कथञ्चित् क्षिप्याज्ञा तदा किं कार्य्यमित्यपेक्षायामाह—विप्रमिति । मा द्रुह्यत हन्तुमिच्छामपि न कुरुत एवशब्देन मदा सर्वथा च सा निरस्ता हे मामका इति ये मदीयास्ते न द्रुह्यन्तु अन्यथा तु मदीया न स्युर्मयापि न रक्ष्या इति भावः । घ्नन्तं ताडयन्तमपि ॥ ४१ ॥

नचापराधादिनि अप्यनादरेण नमस्कारः कार्य्यः किन्तु भक्त्यैवेत्याह—यथेति । अनुकालं सदा समाहितः सावधानः सन् विप्रानिति बहुत्वेन तज्जातीन् सर्वानेव सङ्गृह्णाति च अपि यूयमपि यो जनोऽन्यथा करोति स मे दण्डभाग्भवति यमादिद्वाराऽमुत्र साक्षात्स्वयञ्च दण्डयिष्यामीति भावः ॥ ४२ ॥

एतमिति युष्माभिः साक्षादनुभूतम् ॥ ४३ ॥

विशेषेण प्रत्यक्षदर्शनेन श्रावयित्वा तेषां शिक्षाव्याजेन सर्वेषां लोकानां पावनः तान् पावयितुमित्यर्थः । यथा लोकहितार्थमेव नरावतारं स्वप्रियसखं श्रीमदर्जुनं प्रति गीतोपदेश इति भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुष्षष्टितमोऽध्यायः ॥६४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्रमिति । मामका यदि यूयं मदीयास्तर्हि कृतापराधमपि विप्रं नैव द्रुह्यत आर्षत्वात् "क्रुध द्रुह" इति चतुर्थ्यभावः । किन्तु बहु यथा तथा शपन्तमपि नित्यं नमस्कुरुत ॥ ४१ ॥

इदमेव स्वदृष्टान्तेन दृढयति—यथेति । अनुकालं त्रिसन्ध्यं प्रणमे नमस्करोमि योऽन्यथा न नमेत्स दण्डभाक् मे मत्त इति शेषः ॥ ४२ ॥

न केवलमर्थवाद इति विभीषिकेयं किन्तु प्रत्यक्षमित्याह—ब्राह्मणार्थ इति । ब्राह्मणार्थो विप्रधनं हर्त्तारमधो नरके पातयति यथाऽजानन्तमप्येनं नृगं ब्राह्मणस्य गौरपातयत्तद्वत् अजानन्तमपीत्यनेन किमु वक्तव्यं जानन्तं पातयतीति कैमुत्यन्यायोऽभिप्रेतः ॥ ४३ ॥

एवंविदिति । द्वारकौकसः प्रत्येतदुक्तम् श्रावयित्वा तत्र हेतुः सर्वलोकानां पावनः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्रुह्यत द्रोहं न कुरुत ॥ ४१-४३ ॥
सर्वलोकानां पावनः शुद्धिकर्त्ता ॥ ४४ ॥

श्रीशुक उवाच ।

(मूलम्) सद्भिः समागमो राजन् कदाचिन्नाफलो भवेत् ।
विमुक्तो नरकाद्राजा नृगः साधु समागमात् ॥
साधूनां दर्शनं स्पर्शो कीर्तनं स्मरणं तथा ।
तीर्थानामिव पुण्यानां सर्वमेव हि पावनम् ॥
एतच्छ्रुत्वा त्वया सन्तः सदोपास्याः परन्तप ।
ब्रह्मस्वं नैव हर्तव्यं यदीच्छसि पराङ्गतिम् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
( श्रीविजयध्वजतीर्थरीत्या सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, ब्राह्मणः स्वयं चेदपराधं कुर्यात् असह्यं तदा [illegible] कर्त्तव्यमिति चेत्तत्राह—विप्रं कृतागसमपीति । मामका [illegible] ब्रह्मण्यदेवत्वात् स्वस्य देवता सुतरां मान्या [illegible] अद्रोहे हेतुरुक्तः नियमेन द्रोहं मा कुरुत प्रमादापराध[illegible] मेनादित्याशङ्क्याह—घ्नन्तं बहु शपन्तं चेति । मानसापराधे [illegible] वक्तव्यं कायिकवाचिकापराधेऽपि द्रोहं मा कुरुत बहिर्मुख[illegible] सम्बध्यते हननमत्र ताडनं न तु शिरश्छेदः "जिघांसन्तं जिघांसीयात्" इति वाक्यात् [ शापेवगूरणं ] मदीयनाशो यो न भवतीति भयाभावात् केवलं तूष्णीं स्थातव्यं तथा [illegible] ब्राह्मणस्य भयोत्पत्तिसम्भवात् पुनरपकारः स्यात् किन्तु [illegible] नमस्कुरुत शङ्काभावार्थम् ॥ ४१ ॥

ननु, सर्वात्मकत्वाद्भगवतः व्यवहारस्यापि न तथा [illegible] वेदलोकविरुद्धं कथं कर्त्तव्यमिति चेत्तत्राह—यथाहमिति । [illegible] यानां हि मत्कृतं कर्त्तव्यं किं लोकेन वेदेन वा अहन्तु त्रिकाल[illegible] सावधानो भूत्वा भृगुमिव विप्रत्वेनैव विप्रमात्रं प्रणमे [illegible] यूयमपि नमत न हि मत्तो यूयमधिकाः चकारात् भगवदीयाः अनङ्गीकारे बाधकमाह—योऽन्यथा सावधानतया ब्राह्मणं न नमस्करोति स मे दण्डभाक् मम दण्डयुक्तो भविष्यति ॥ ४२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, किमेवं निर्बन्ध इति चेत्तत्राह—ब्राह्मणार्थ इति । मदीयाः ऊर्ध्वगतिमेव यास्यन्ति ब्राह्मणार्थस्तु अपहृतः स हर्तारं पातयति अपहारे कृते ऽधः पातयत्येवं अज्ञानन्नमपि अज्ञाने फले न किञ्चिद्वैगुण्यम् एवं नृगं ब्राह्मणगौरिवेति स्पष्टो दृष्टान्तः ॥४३॥

एवमुपदेशं कृत्वा प्रसङ्गात् पूर्वद्वारकायामागतः तत्रैव तिष्ठे-दित्याशङ्क्य ततो गतस्य मुख्यद्वारकास्थगृह एव स्थितिमाह-- एवं विश्राव्येति । सर्वान् विशेषेण श्रावयित्वा भगवांस्तावदेव कार्यं मत्वा सर्वेषां मोक्षदाता ब्राह्मणातिक्रमाभावे मोक्षो भवि-ष्यतीति द्वारकौकस इति निरुक्ता एवेति मोक्षदात्रा संरक्षिताः भगवत्स्थान एव स्थिताः भगवतैव पूताः ताननुसृत्य सम्भारा-न्निजमन्दिरं स्वगृहं विवेश अनेन सामान्यतः सात्विकानां निरोध उक्तः ॥ ४४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभ-दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे पञ्चदशाध्यायविवरणम् ॥ १५ ॥ ६४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, विप्र एवास्माकं यदि धनं हरेत् विनैवापराधं क्षिप्याद्वा किङ्कार्य्यमित्यपेक्षायामाह-विप्रमिति द्वाभ्याम् । हे मामकाः ! इति ये केचन मदीया भवन्ति तानपि प्रत्यादिशामि न केवलं युष्मानेवेति अन्यथा तु तेषु मया मामकत्वाभिमानस्त्यक्तव्य इति भावः ॥ ४१ ॥

प्रणमे प्रणमामि ॥ ४२ ॥

न केवलमर्थवादविभीषकेयं किन्त्वयमर्थः प्रत्यक्ष एवेत्याह— ब्राह्मणार्थ इति ॥ ४३—४४ ॥

इतिसारार्थ दर्शिन्याम् हर्षिण्याम भक्तचेतसाम् ।
चतुर्ष्षष्टितमाऽध्यायःदशमे ऽजनि सङ्गतः ॥६४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुष्षष्टितमाऽध्यायार्थप्रकाशः ॥ ६४ ॥

---

भाषाटीका ।

हे मेरे सम्बन्धीओ ! अपराध करने वारे ताडना करने वारे बहुत सी गाली देने वारे अथवा शाप देने वारे भी ब्राह्मण का आप लोग द्रोह न करो और आप लोग उस ब्राह्मण को नित्य प्रति नमस्कार करो ॥ ४१ ॥

प्रातःकाल, मध्यान्ह सायंकाल में मैं जैसे सावधान होके ब्रह्मणों को नमस्कार करता हुं, तैसे हि आप सब भी प्रणाम करो और जो प्रणाम नहि करैगा सो मेरे दण्ड का भागी होगा ॥ ४२ ॥

यह निश्चय है कि अपहार किया गया ब्राह्मण का धन अपहार करने वारे को नरक में गिराय देता है जैसे बिना जाने इस नृग राजा को ब्राह्मण की गौ ने नीच योनि में गेर दिया ॥ ४३ ॥

सब लोकन को पवित्र करने वारे श्रीकृष्ण भगवान इस प्रकार द्वारका वासियों के प्रति उपदेश करके निज मन्दिर में पधारते भए ॥ ४४ ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धमें चोसठके अध्यायकी भाषाटीका समाप्ता ॥ ६३ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ।

—•—

श्रीशुक उवाच ।

बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः ।
सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥
परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च ।
रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥
चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः ।
इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥
गोपवृद्धांश्च विधिवद्यविष्ठैरभिवन्दितः ।
यथावयो यथासख्यं यथासम्बन्धमात्मनः ॥ ४ ॥
समुपेत्याथ गोपालान् हास्यहस्तग्रहादिभिः ।
विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः ॥ ५ ॥
पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा ।
कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चषष्टितमे रामश्चक्रे गोकुलमागतः ।
रममाणस्तु गोपीभिः कालिन्द्याः कर्षणं मदात् ॥
रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत् ।
पौण्ड्रकान्तादि कृष्णस्य पृथगुक्तमतः परम् ॥

॥ १ ॥

आशीर्भिरभिनन्दितो बभूव ॥ २ ॥

तदाह—चिरमिति ॥ ३ ॥

गोपवृद्धांश्च विधिवदभिवन्द्य यविष्ठैरभिवन्दितो बभूवेत्यर्थः । अपिच यथावय इति ॥ ४ ॥

ते सर्वे स्वेषु यादवेषु तं राममनामयमारोग्यं पप्रच्छुः ते च तेन पृष्टा इति ॥ ५ ॥

कृष्णे कृष्णप्राप्त्यर्थं सन्न्यस्ताखिलराधसस्त्यक्तसर्वविषयाः ॥ ६-८ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ श्रीपरीक्षितस्तत्तल्लीलानन्दमनुभवतोपि बलादनुगच्छता श्रीगोकुलव्याकुलतास्मरणेन दूयमानं मनो विज्ञाय श्रीमन्मुनिराजः पुनस्तदाश्वासनकथां कथान्तरावेशेन त्यक्तामपि पातयति बलभद्र इत्यादिना । सम्बोधनेन तं श्लाघते च हे कुरुश्रेष्ठेति! बलभद्रो भगवानिति च तं प्रति श्लाघागर्भं सुहृदः श्रीवसुदेवादिनोपि पितृत्वादिमयशुद्धस्नेहांशेन शोभनं हृदेषां तान् श्रीनन्दादीन् दिदृक्षुः सन् प्रययौ यः पूर्वत एवोत्कण्ठः चिरविरहेण नित्यतद्दर्शनोत्सुकः तदा तु लब्धश्रीकृष्णानुज्ञ इति ज्ञेयं तथाच हरिवंशे "जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः" इति अत एवात्रापि वक्ष्यति कृष्णस्य सन्देशैः सान्त्वयामासेति एतावद्दिनं तदनुज्ञाच्च सहैव स्वगमनेच्छयेति लक्ष्यते तच्च श्रीवसुदेवादीनां श्रीनन्दादिप्रेमवशोऽसौ तत्रैव तिष्ठेदित्यननुज्ञयेवेति पूर्ववज्ज्ञेयम् अत एव श्रीनन्दादिषु निजागमनसन्देशादिगोपनार्थमेकाकित्वेनैव तत्प्रस्थापनमपि एवमन्तस्तद्भावभावितत्वेन प्रययाविति गोपवेषधारणादिप्रकर्षेण ययावित्यर्थः । तथा च तत्रैव—

"स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्वजः ।
वन्येन रमणीयेन वेषेणालङ्कृतः प्रभुः ॥"

इति रथस्थितत्वं तु परमोत्कण्ठितत्वाच्छीघ्रगमनार्थमेव ॥ १ ॥

तद्भावभावितत्वमेव दर्शयति—परीत्यादिभिः । परिष्वक्तः परीति सर्वाङ्गसङ्गतत्वाद्दृढं बहुविधमश्रुपुलकादिचालितं चाश्लिष्टः यतश्चिरोत्कण्ठैः पितराविति तस्य तयोश्च भावानुसारेणोक्तं तत्र

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रथममितस्ततो बन्धुभिर्गोपैर्मिलनं व्रजाभ्यन्तरे तु गोपीभिर्मातृवयस्याभिर्वृद्धाभिरपि एवञ्चेत्यनुक्तस्यापि समुच्चयात्पुरोहितादिभिश्चेति ज्ञेयं तत उद्दिश्य प्रथममिलनौ पितरौ श्रीयशोदानन्दावभिवाद्य स्थितो रामस्ताभ्यामपि परिष्वक्तः स चाशीर्भिरप्यभिनन्दित इत्यर्थः ॥ २ ॥

चिरं पाहीति वाग्भङ्ग्या दीर्घायुष्ट्वाप्रतिहतबलवीर्य्याद्याशिषः सूचिताः जगदीश्वरः सन्नित्याशीरनन्तरं यद्यपि स्वेषामपि दाशार्हत्वं वर्त्तते तथापि पाण्डवकौरवप्राचुर्य्यप्रयोगाविवक्षया यादवेष्वेव मुख्यत्वात्तच्छब्दप्रवृत्तिरिति श्रीवसुदेवपुत्रत्वेन तथा सम्बोधितं यद्यपि लोकरीत्या स्वीयोऽपि पुत्रभावस्तस्मिन् अधिकस्तथापि स्वप्रियभ्रातृश्रीवसुदेवपुत्रतामवलम्ब्यैव स्वयं पुत्रत्वेनासौ पालित इति सौजन्यात्तत्सम्बन्धमेव बहुतरं मत्वा तेनात्मनश्चैक्यं व्यञ्जयित्वा स्वपुत्रभाव एव विशिष्य दर्शितः अत एव सानुज इत्यनेन साक्षात्स्वपुत्रेऽपि तदनुजत्वमुक्तं तस्यैव प्राधान्यविवक्षया गौणत्वञ्च अत एव न इत्यविशेषेण यादवानस्मांश्चेत्यर्थः । अथवोत्कण्ठया श्लेषेण सम्प्रति तयोः स्वेष्वौदासीन्यं व्यञ्जितं तत्त्वनुचितमित्याह—न इति । यथा यादवान् पासि तद्वदप्यस्मान् पाहीत्यर्थः ॥ ३ ॥

ततश्च तत्सङ्कृतैर्मिलनमाह—गोपेत्यर्द्धेन, यथेति सार्द्धद्वयकम् । अथ तद्दिनानन्तरदिन इत्यर्थः । गोपालान् वयस्यादीन् सम्यक् स्नेहादरादिपूर्वकम् उपेत्य उप समीपे तत्तद्गृहादौ एत्य स्वयमागत्य तत्रापि आत्मनो वय आद्यनुरूपं हास्यहस्तग्रहणादिभिः समुपेत्य विश्रान्तं तत्तत्कृतोपचारैर्लब्धविश्रामं सन्तं तत्रैव भोजनाद्यनन्तरं सुखमासीनञ्च परि सर्वत उपागताः समीपोपविष्टाः सन्तस्ते स्वेषु सम्बन्धिषु यादवेषु विषयेषु अनामयं पप्रच्छुः तत्र वयस्या यथा सख्यं तत्तारतम्येनेत्यर्थः । अन्ये तु यथासम्बन्धं पितृभ्रातृपुत्रवर्गत्वानुरूपं तत्रापि यथावयः वयस्तारतम्येनेत्यर्थः । एवं हास्यहस्तग्रहौ वयस्यानाम् उद्धवागमनोक्तयुक्तिरीत्या रहसि तेषां मुहुस्तदागमनस्फूर्त्तेर्मिथो हर्षोदयात् आदिग्रहणात्पितृवर्गादीनां वन्दनादयो ज्ञेयाः तथा च तत्रैव—

"स तानभाषत प्रीत्या यथापूर्वमरिन्दम ।
गोपीश्चैव विधिना यथान्यायं यथावयः ॥
तथैव प्राह तान् सर्वान् तथैव परिहर्षयन् ।
तथैव सह गोपीभिर्योजयन् मधुराः कथाः ॥" इति

पृष्टाश्चेति तदनन्तरं ते च तेन पृष्टा इत्यर्थः । तथा पप्रच्छुरित्यत्र पृष्टाश्चेत्यत्र च विशेषणं प्रेमेत्यादि उभयत्रापि हेतुत्वेन तेषां विशेषणं, कृष्ण इत्यादि, कृष्णे स्वभावत एव सर्वाकर्षके कमलपत्राक्षे सौन्दर्य्यतोऽपि तादृश इत्यर्थः । तथा प्रथमेन सर्वेषामानन्दरूपत्वं द्वितीयेन सर्वतापहरत्वं च व्यञ्जितं तन्निमित्ते संन्यस्ताखिलराधस इति "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्युक्तरीत्या पूर्वं तदर्था एव सर्वे विषया अतस्तद्विरहिणां वस्तुतस्तदनभिरुचेरपि तदागमनाशयैव तद्धारित इत्यर्थः । तत्र दैत्यादिभिः सङ्कटं भुवस्ताश्च तत्तद्विघ्ननिरसनाय संन्यस्तानि देवब्राह्मणेष्वर्पितानि राधांसि गृहान्तर्गतभोग्यानि द्रव्याणि यैस्ते ते श्रीकृष्णार्थमेव सम्प्रति तत्सहायेषु तेष्वनामयं पप्रच्छुः श्रीकृष्णार्थसंन्यस्तसर्वार्थत्वेन परमानुकम्पाविमन्तयोर्विषयत्वात् पृष्टाश्चेत्यर्थः । अत्र प्रकरणे कष्टान्वयतया श्रीमन्मुनीन्द्रस्य तत्स्मरणवैवश्यं व्यज्यते ॥ ४-६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

पितरौ यशोदानन्दगोपौ ॥ २—१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ प्रत्येकं रामकृष्णयोश्चेष्टितानि वर्णयति—बलभद्र इति । हे कुरुश्रेष्ठ सुहृद्दिदृक्षुरिति समस्तपदं सुहृदो बन्धून् द्रष्टुमिच्छुः तत्र हेतुरुत्कण्ठः प्रेमयुतः तद्विषयाभिलाषयुतो वा ॥ १ ॥

परिष्वक्त इति । आलिङ्गितः पितरौ यशोदानन्दगोपौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनन्दितश्च ॥ २ ॥

तदेवाह—चिरमिति । हे दाशार्ह । हे जगदीश्वर ! इदं सम्बोधनद्वयं हेतुगर्भं जगदीश्वरत्वात् स्वाश्रितसंरक्षणार्थं दाशार्हेष्ववतीर्णत्वाच्च सानुजस्त्वं नोऽस्मान् चिरं पाहि चिरमात्मरक्षाप्रार्थनयैव तयोर्दीर्घायुष्ट्वादिकं सर्वं प्रार्थितप्रायमेव तेन विना तदनुपपत्तेरित्याशयेन चिरं पाहीत्युक्तम् । इतीति । आश्लिष्यास्य नेत्रैर्नेत्रजैर्जलैः हर्षजलैरसिषिचतुः स्नापयामासतुः ॥ ३ ॥

गोपवृद्धानिति । ततो गोपवृद्धांश्चाभिवन्द्येति शेषः । यविष्ठैः न्यूनवयस्कैरभिवन्दितः किञ्च यथावय इति अथ ततो हास्यादिभिः आदिशब्देनालिङ्गनादिसङ्ग्रहः आत्मनः स्वस्य वयः सख्यसम्बन्धानुरूपं गोपान् समुपेत्य उपविवेश इति शेषः । विश्रान्तमिति सार्द्धमेकान्वयम् अनामयमारोग्यं पृष्ट्वा कमलपत्राक्षे कृष्णे संन्यस्ताः सम्यक् निहिता राधसः बुद्धयो यैस्ते कृष्णैकप्रवणचित्ता इत्यर्थः । प्रेम्णा गद्गदया गिरा परिपप्रच्छुः ॥४-६॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवच्छिक्षितकेशाविष्टस्य शेषावतारस्य बलभद्रस्य हरिमाहात्म्याविनाभूतं माहात्म्यं वर्णयत्यनेन प्रारीप्सितेनाध्यायत्रयेण,—तत्र प्रथमे यमुनामदहरणलक्षणं विक्रमं वक्तुं बलस्य गोकुलगमनं वक्ति, द्वितीये द्विविदवधलक्षणं तृतीये कौरवगर्वनिर्वापणार्थं तत्पुराकर्षलक्षणं वक्तुं दुर्योधनसुताहरणं वक्ति ॥ १ ॥

पितरौ यशोदानन्दगोपौ ॥ २ ॥

इति समासाभिवादनादिकर्माणं तं राममङ्कमारोप्य नेत्रैः अश्रुनाडीनिर्गतैः "नेत्रं नाड्यान्तरोर्मूले" इति यादवः ॥ ३ ॥

यविष्ठैः कनिष्ठैः ॥ ४ ॥

हास्येन मन्दस्मितेन हस्तग्रहेण आदिशब्देन परिरम्भणादिकं गृह्यते ॥ ५ ॥

संन्यस्ताखिलराधसः समर्पितसमस्तसम्पदः ॥ ६—८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

बलभद्र इत्यत्र कृष्णस्यानुमते स्थित इत्यपि श्रीहरिवंशाल्लभ्यते। तथाहि—

"कदाचिदथ कालस्य स्मृत्वा गोपेषु सौहृदम्।
आगमिको व्रजं रामः कृष्णस्यानुमते स्थितः"॥

इति। तेन सह स्वागमनस्य सम्प्रत्ययोग्यतायां। तत्तद्व्रजस्थसान्त्वनार्थं तमेकमेव श्रीकृष्णः स्वयमनुगतवानिति भावः॥१-२॥

सानुजस्त्वं जगदीश्वरस्सन् चिरं सर्व्वदैवास्मान् पाहीत्याशिषं ददे। तत्र सानुज इति ज्येष्ठत्वमात्रेण। तथा स्वस्य तस्मिन् पुत्रभावाधिक्येऽपि दाशार्हेति श्रीवसुदेवेन सह स्वाभेदविवक्षया सा चातिस्नेहेन अथ तद्दिनानन्तरे दिने इत्यर्थः॥३—४॥

हास्यहस्तग्रहौ वयस्यानाम उद्धवागमनोक्तयुक्तिरीत्या रहसि तेषां मुहुः तदागमनस्फूर्त्तैः मिथो हर्षोदयात् आदिग्रहणात् पितृवर्गादीनां वन्दनादयो ज्ञेयाः॥५-८॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥१-८॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विशेषे सात्त्विके रोधे तामसादिविभागशः।
पूर्वं राजसमापन्नाः सत्त्वभावं तथानयत्॥
तेषां सात्त्विकरूपाणां सकामत्वाद्बलेन हि।
निरोधं कारयामास षोडशे तन्निरूप्यते॥
ततः स्वरूपभावानां दुष्टानां दोषनुद्धरिः।
प्रसङ्गादिदमत्रोक्तं वाराणस्यास्तु दाहनम्॥
बलात्तामसभावानां राजसानां तथैव च।
सात्त्विकानां तथा मानखण्डकस्तु निरूप्यते॥
ततस्त्रीणान्तु भगवान् एको नैव करिष्यति।
सप्तमाश्रय एकत्र धर्मिणः पृथगीरिताः॥
एवं प्रमेयबलतो निरोधः पञ्चधा भवेत्।

पूर्वाध्याये सात्त्विकाश्चिषिद्धाद्व्यावर्त्तिताः षोडशेऽध्याये लौकिकात् सात्त्विकभावमापादिता गोपिका निरुध्यन्ते ततो वैदिकादपि काशीदाहे निरोधं वक्ष्यति ततः अशास्त्रभक्तेः द्विविदादीनां ततो भीष्मादीनां शास्त्रभक्तेश्च ततः शास्त्रप्रवर्त्तकस्य नारदस्यापि मुख्यभावात् स्वशक्तिर्द्विधा स्थापितेति साधनशक्तिरूपो बलभद्रः गोपिकानां निरोधं कृतवानिति निरूपणार्थं गोकुले बलभद्रगमनादिकमुच्यते—बलभद्रः कुरुश्रेष्ठेति विश्वासार्थं सम्बोधनं भगवानिति निरोधोऽन्यकर्त्तव्यो न भवतीति साधनरूपो भगवांस्तत्राविष्ट इति भगवान् रथमास्थितः ननु पूर्ववत् गुप्तः सुहृद्दिदृक्षुः नन्दादिदर्शनेच्छया पूर्वभावमापन्नात् तदर्थं परमोत्कण्ठायुक्तः नन्दगोकुलं प्रययौ तेषां निरोधस्तत्र कर्त्तुं शक्य इति॥१॥

तत्र गतस्य पूर्वं तदासक्तिद्वारा पश्चाद्भगवदासक्तिः सुलभेति प्रथमं लौकिकप्रकारेणैव तदासक्तिमाह—परिष्वक्तश्चिरोत्कण्ठैरिति। गोपानां गोपीनाञ्च एक एव परिचयलक्षणो भाव इति सह निरूपणं गोपीभिरेवेति चेति द्वयोरपि गोपैरालिङ्गितः परं वस्तुतो गोपीभिरेवालिङ्गितः चकारात् नन्दयशोदाभ्यां तत्कृत्यमुक्त्वा बलभद्रकृत्यमाह—रामोभिवाद्य पितराविति। पितृत्वमेव स्थापितमिति नान्यः शब्दो निरूपितः तौ वैद्यावपि आशीर्भिरेवाभिनन्दितः ताभ्यां पूर्वनिरोधस्य गमने उत्तरोत्तरत्र क्रियमाणो व्यर्थः स्यादिति पूर्वसम्बन्धः तथैव स्थितः इति निरूप्यते चिरं नः पाहि दाशार्हेति अस्मान् चिरं परिपालय यतस्त्वं दाशार्हः उभयोरेव पुत्रभावः इति सानुज इत्युक्तं कृष्णसहितः जगदीश्वर इति पूर्वं माहात्म्यज्ञानं वृत्तमनूद्यते लौकिकोपि स्नेहः पूर्वसिद्ध एव प्रकटीकृत इत्याह—इत्यारोप्येति। अङ्कमारोप्य प्रौढमपि बालकमेव मत्वा आलिङ्ग्य नेत्रजैः सिषिचुः बलमिति सर्वाङ्गम् अन्यथाशिक्षा अनुक्ता एव समागमेयुः॥२॥३॥

आवश्यकानां प्रणिधानमुक्त्वा अनावश्यकानामाह—गोपवृद्धांश्च विधिवदिति। विधिपूर्वकमभिवादनं रामापेक्षया यविष्ठश्चाभिवादितः ज्ञातेपि माहात्म्ये लौकिकभावस्थापनं निरोधान्तरङ्गं यथावयो यथासख्यं यथासम्बन्धमिति कालतः करणदेहधर्माणामनतिक्रम उक्तः आत्मन इति यद्यपि ते सर्व एव माहात्म्यज्ञानात् भगवद्भावमेव मन्यन्ते तथापि स्वयं यथा तान् मन्यते तथा कृतवानित्यर्थः॥४॥

समुपेत्य सम्यक् मिलित्वा अभिवादित इति पूर्वेण सम्बन्धः अथ गोपालान् हास्यहस्तग्रहादिभिः यथायोगमभिवादितवानिति अर्थवशाद्विपर्ययेण योजनीयं हीनेषु हस्तग्रहः समेषु हास्यं उत्तमेष्वभिवादनमिति एवं कायिकमुपसंहरन् वाचनिकमाह—विश्रान्तं सुखमासीनं पप्रच्छुरिति। ज्येष्ठा अपि सन्तीति आसीनमित्युक्तं परितः उपागताः नतु कश्चिदपि तत्रोपेक्षां कृतवानित्यर्थः॥५॥

प्रथमं लौकिकमाह—पृष्टाश्चानामयं तेष्विति। पर्युपागताः प्रथमतः अनामयं पृष्ट्वा अथ भिन्नप्रक्रमेण प्रेमगद्गदया गिरा पप्रच्छुरिति सम्बन्धः अयं विशेषो यद्यपि सर्वेषां तथापि विशेषमाह—तेषु ये कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः सर्वा एव सिद्धयो लौकिक्यो वैदिक्यश्च भगवत्येव स्थापिताः तत्र हेतुः कमलपत्राक्ष इति दृष्ट्यैव सर्वतापनाशं मोहञ्च सम्पादयतीति॥६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पञ्चषष्टितमे रामो गोष्ठं गत्वा स्वबन्धुभिः।
मिलितः स्वीयगोपीभी रेमे कृष्णां चकर्ष च॥

बलभद्र इति। ननु प्रेममहोदधिः कृष्णः कथं व्रजं न ययाविति चेदुच्यते "प्रेयसीः प्रेमविख्याताः पितरावतिवत्सलौ। प्रेमवश्यश्च कृष्णस्तांस्त्यक्त्वा नः कथमेष्यति॥ इति मत्वैव यदवः प्रत्यवघ्नन् हरेर्गतौ। व्रजप्रेमप्रवार्द्धिस्वलीलाधीनत्वमीयुषः"॥ ननु तर्हि

कच्चिन्नो बान्धवा राम सर्वे कुशलमासते ।
कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥
दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ।
निहत्य निर्जित्य रिपून् दिष्ट्या दुर्गं समाश्रिताः ॥ ८ ॥
गोप्यो हसन्त्यः पप्रच्छू रामसन्दर्शनादृताः ।
कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥
कच्चित् स्मरति वा बन्धून् पितरं मातरञ्च सः ।
अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ।
अपि वा स्मरते ऽस्माकमनुसेवां महाभुजः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बलदेवोपि स्वप्राणप्रेष्ठभ्रातरं कृष्णं त्यक्त्वा एकाक्येव गन्तुं नार्हति तत्राह—उत्कण्ठः अत्युत्कण्ठलुलितधैर्यविवेकादिरित्यर्थः ॥ १ ॥

नित्यानन्दस्वरूपोपि प्रेमतत्तो व्रजौकसाम ।
ययौ कृष्णमपि त्यक्त्वा यस्तं रामं मुहुः स्तुमः ॥

गोपीभिर्गोपवयस्याभिः पितराविति तस्य तयोश्च भावानुसारेणोक्तम् अभिनन्दितो बभूव ॥ २ ॥

सानुजोपि त्वं जगदीश्वर इति सर्वत्र श्रूयसे तदपि वृद्धौ स्वमातापितरावावां न पालयसि कथमित्युक्त्वा प्रथमं नन्दस्ततो यशोदा च बलादङ्कमारोप्य सचुम्बनमालिङ्ग्य नेत्रैः नेत्रजैः ॥३॥

गोपवृद्धानभिवाद्य यविष्ठैरभिवन्दितो बभूवेत्यन्वयः यथावय इति वय आद्यनुरूपं गोपालान् हास्यहस्तग्रहालिङ्गनादिभिः समुपेत्य तत्समीपगमनादिना मिलित्वा विश्रान्तं भोजनानन्तरं कृतशयनं पुनश्च सुखमासीनं तम अनामयं कुशलं पप्रच्छुः तेन रामेणापि स्वेषु गोपेषु या प्रेम्णा गद्गदा गीः तया ते गोपाः कुशलं पृष्टाः ते गोपाश्च कृष्णे सम्यक्प्रकारेण न्यस्तान्यर्पितान्यखिलस्य देहादिव्यवहारस्य राधांसि सिद्धयो यैस्ते कृष्णगमनदिनमारभ्य तेषां स्वाभाविक्योपि शयनभोजनादिक्रियाः नैव सिद्ध्यन्तीत्यर्थः ॥ ४-६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ कालिन्द्याकर्षणादिकं बलचरितं पौण्ड्रकवधादिकं श्रीकृष्णचरितञ्च पृथगाह—तत्र पञ्चषष्टितमे कालिन्द्याकर्षणं बलचरितमाह—बलभद्र इति ॥ १-३ ॥

गोपवृद्धांश्चाभिवाद्येति शेषः । यविष्ठैरभिवन्दितो बभूवेत्यर्थः । किञ्च आत्मनो यथावयः यथासख्यं यथासम्बन्धं हास्यादिभिर्गोपान् समुपेत्य आसीनो बभूवेति शेषः ॥ ४ ॥

तेच रामेण पृष्टाः कृष्णसन्यस्ताः निहिताः अखिलराधसः सर्वेन्द्रियवृत्तयो यैस्ते कृष्णैकप्रवणेन्द्रियवृत्तयः सुखासीनं रामं स्वेषु यादवेषु अनामयं पप्रच्छुरित्यन्वयः ॥ ४-८ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले कि हे कुरु श्रेष्ठ ! नन्द आदिक सुहृदन को देखने की इच्छा कर उत्साह धारे भगवान् बलदेवजी रथ पर विराजमान होकर नन्दजी के गोकुलको आते भये ॥ १ ॥

बहुत काल से दर्शन को उत्कण्ठा धारे गोप और गोपीयोंने बलदेवजी का आलिङ्गन किया तथा नन्द यशोदा माता पिता का आपने प्रणाम किया पश्चात् उनोने बलदेवजी को आशीर्वाद दिया ॥ २ ॥

हे जगदीश्वर ! हे दाशार्ह ! श्रीकृष्ण सहित आप बहुत पर्य्यन्त हमारा पालन करिये, इस प्रकार कहकर नन्द और यशोदा दोनो बलदेवजी का आलिङ्गन कर, तथा गोदी मे बैठाकर नेत्रों के जलसे बलदेवजी को भिजे देते भए ॥ ३ ॥

और बलदेवजी नें वृद्ध २ गोपन को विधिपूर्वक प्रणाम किया, पश्चात् अपने से अवस्था में छोटे गोप लोगोंने बलदेवजी को प्रणाम किया, द्वितीय दिन में अपनी अवस्था के अनुगुण मित्रता के अनुगुण सम्बन्ध के अनुगुण ॥ ४ ॥

किसी के साथ हांसी किसी का हस्त ग्रहण करना इत्यादि प्रकार से गोप लोगों को मिलकर श्रीबलदेवजी विराजमान होते भए, इस प्रकार सुखपूर्वक विराजमान और निवृत्त परिश्रम वारे बलदेवजी के प्रति चारोंतर्फ से पास में आए हुए गोप लोग पूछते भये ॥ ५ ॥

प्रथम बलदेवजी ने अपने गोप लोगों के विषय में उन से कुशल प्रश्न किया, पश्चात् कमलदललोचन श्रीकृष्ण की प्राप्ति के वास्ते जिनोने सर्व विषयों का परित्याग किया है एतादृश गोपलोग प्रेमसे गद्गद वाणी करके बलदेवजी से कुशल प्रश्न करते भए ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रामस्य सन्दर्शनेनाऽऽदृताः सादराः ॥ ६—११ ॥

परं भावं भगवतो भगवन् मामजानतीम् ।
मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ॥ २७ ॥
ततो व्यमुञ्चद्यमुनां याचितो भगवान् बलः ।
विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥ २८ ॥
कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे ।
भूषणानि महार्हाणि ददौ कान्तिः शुभां स्रजम् ॥ २९ ॥
वसित्वा वाससी नीले मालामामुच्य काञ्चनीम् ।
रेजे स्वलङ्कृतो लिप्तो महेन्द्र इव वारणः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यमुनां कालिन्दीं भगवदवतारस्य भगवत्प्रियाधर्षणलीला न विरुद्धा ॥ २३ ॥

आहुता आहूता ॥ २४ ॥

चकिता शङ्किता ॥ २५ ॥

एकांशेन शेषाख्येन ॥ २६—२७ ॥

भाषा टीका ।

जलक्रीडा के वास्ते सर्व नियन्ता बलदेव जी ने यमुना को बुलाया बलदेव जी को मद मस्त समुझाय कर उनके वचन का अनादर कर यमुना जी नहि आई तवतो बलदेव जी क्रोध में भर कर हल के अग्रभाग से यमुना को खींचने लगे ॥ २३ ॥

पश्चात् बलदेवजी बोले कि हे पापे ! जिस कारण से मेरी बुलाई भई तू मेरा अनादर करके नहि आई इसी लिये हलके अग्रभाग से तेरे सौ टूकडा कर दूंगा तू स्वतन्त्रता से विचरने वारी है इस प्रकार बलदेव जी ने यमुना को धमकाया ॥ २४ ॥

हे नृप ! इस प्रकार की जब धमकी दई तब यमुना जी भयभीत और कम्पायमान होकर बलदेवजी के चरणों में गिरकर बलदेवजी के प्रति बोलती भई ॥ २५ ॥

हे राम ! हे राम ! हे जगत्पते ! जिस आप के एक अंश करके इस पृथिवी का धारण होरहा है उस शेष रूप आपके प्रभाव को भूलगई ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विजगाहावगाहनं कृतवान् ॥ २८ ॥

उत्तीर्णाय निर्गतायासिताम्बरादीनि कान्तिर्ददौ कान्तिर्लक्ष्मीः यथोक्तं वैष्णवे —

"वरुणप्रहिता चास्मै मालामम्लानपङ्कजाम् ।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥ इति हरिवंशे च बलं प्रति लक्ष्मीवाक्यम् —

"जातरूपमयं चैकं कुण्डलं वज्रभूषणम् ।
आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम् ॥
देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् ॥

इत्यादि ॥ २९ ॥

वसित्वा परिधाय आमुच्य कण्ठे निधाय चन्दनादिभिरालिप्तः ॥ ३०—३१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव परं भावं महासङ्कर्षणत्वलक्षणं स्वभावं तव त्वया ज्ञायत एवेत्याह, भगवन् हे सर्वज्ञेति तत्र हेतुः विश्वस्य आत्मन् परमात्मन्निति अतो विकर्षणान्मोक्तुमर्हसि ननु मदाकर्षिणीं त्वां कुतो मुञ्चेऽहं तत्राह—प्रपन्नां शरणागतां प्रपन्नजने च तव कृपैवोचितेत्याह—हे भक्तवत्सलेति ॥ २७ ॥

विशेषेण समाश्वासनपूर्वकममुञ्चत् तथा तत्रैव "शान्तिं व्रज महाभागे गम्यतां च यथासुखम्" इत्यादि विमोचनेन दूराकृष्टिरपि ध्वनिता तथाच तत्रैव "वृन्दावनस्य मध्ये तु सा नीता यमुना नदी" इति. श्रीविष्णुपुराणे च—

"सा कृष्टा तेन सहसा मार्गं सन्त्यज्य निम्नगा ।
यत्रास्ते बलदेवोऽसौ प्लावयामास तद्वनम्" ॥ इति

जलं तत्रागतं नदीभागम् ॥ २८ ॥

कान्तिर्लक्ष्म्याः मूर्तिविशेषः श्रीविष्णुपुराणादौ तु लक्ष्मीरित्यंशेनाभेदाभिप्रायात् इयमेव द्वितीयव्यूहस्य सङ्कर्षणस्य पत्नी ॥ २९ ॥

वसित्वेति स्पष्टम् ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवतस्तव परं निरवधिकं भावं प्रभावं हे भगवन्नजानतीमधुना प्रपन्नां च मां मोक्तुमर्हसि तदुपयुक्तं सम्बोधयति भक्तवत्सलेति मुञ्चेत्यस्य यथापूर्वं गमयेत्यर्थः ॥ २७ ॥

तत इति । बलो राम इत्थं याचितो यमुनां व्यमुञ्चत् ततः स्त्रीभिः सह जलं विजगाहे च तथा करेणुभिः सहेभराडैरावतः तद्वत् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कामभिति। कामं यथेच्छं विहृत्योत्तीर्णाय निर्गताय रामायासितनाम्बरे नीलाम्बरे महार्हाण्यमूल्यानि भूषणानि कान्तिमतीमम्लानश्रियं स्रजं मालाञ्च ददौ यमुनेति कर्तृपदाध्याहारः यथोक्तं—
"वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम्।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥
इति वैष्णवं वचनं तत्रापि लक्ष्मीर्दर्शनीयरूपा मूर्तिधरा यमुनेति व्याख्येयम् ॥ २९ ॥

वसित्वेति। वसित्वा परिधाय काञ्चनीं स्वर्णमयीं मालामामुच्य कण्ठे निधाय काञ्चनीं मालामित्यनुक्तभूषणोपलक्षणम् इत्थं सुष्ठु अलङ्कृतः स्त्रीभिः सह रेजे यथा माहेन्द्रो वारणः तद्वत् ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भावमभिप्रायं माहात्म्यं वा ॥ २७—२८ ॥
असिताम्बरं नीलवस्त्रं ददौ यमुनेतिशेषः ॥ २९—३० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कान्तिर्लक्ष्म्यंशा ॥ २९—३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, ज्ञायत एव सङ्कर्षणो महानिति सर्वशास्त्रसिद्धं तत्कथमज्ञानमिति चेत्तत्राह—परम्भावं भगवन इति। त्वयि मनुष्यभाव एव आधिभौतिकभावो वा लोकसिद्धः ननु परो भावः यथा भगवति कृष्णे स एवात्राविष्ट इति न कोपि जानाति अतः परम्भावं साक्षाद्भगवतः तं अजानतीं मां मोक्तुमर्हसि भगवन्निति सम्बोधनात् इदानीं ज्ञातमिति नाग्रे अपराधः सम्भविष्यतीति सूचितं जातेप्यपराधे क्षमा कर्त्तव्येति सम्बोधनान्तरमाह—विश्वात्मन्निति। आत्मापराधः कस्यापि न दोषकर इति तथाप्यधिकारावेशेन भेददर्शनात् अक्षमेतिचेत्तत्राह—भक्तवत्सलेति, आत्मनो भक्तत्वमाह—प्रपन्नामिति ॥ २७ ॥

एवं कर्मज्ञानभक्तिप्रकारैः प्रार्थनायां कृतायां त्यक्तवानित्याह—ततो व्यमुञ्चदिति। तथैव मोचनार्थं याचितः यतो भगवान् महत इयमेव व्यवस्था पुनरपकारं न करिष्यतीति बुध्वा तथा कृतवान् इति पक्षं व्यावर्त्तयति—बल इति बलाभिनिवेशादेव तथा कृतवान् ननु ज्ञात्वेत्यर्थः। तस्यां प्रसन्न इति ज्ञापयितुं क्रीडामाह-विजगाह जलं स्त्रीभिरिति। पूर्ववन्मर्यादां त्यक्तवानिति ज्ञापयितुं दृष्टान्तमाह—करेणुभिरिवेभराडिति ॥ २८ ॥

एतावत्पर्यन्तं भगवत्त्वमुक्त्वा तिरोहितो भगवानिति ज्ञापयितुं तस्य वस्त्राणां क्लेदनात् वस्त्रान्तरपरिधानमाह—कामं विहृत्य सलिलादुत्तीर्णायेति। कान्तिर्भगवतः चतुर्थी शक्तिः अत एव तामसी मूर्त्तिश्चतुर्थी तद्धितार्थं तस्य प्रिये नीले अम्बरे भूषणानि च तदीयानि शुभ्रां स्रजं कल्याणसूचिकां मालां ददौ अन्यथा अपराधस्मरणात् जीवितमेव न भवेत् भगवत्येवं सत्कृत इति तस्यान्तस्तापो निवृत्तः ॥ २९ ॥

ततस्तत्परिधानात् बहिर्मालिन्यमपि निवृत्तमित्याह—वसित्वा वाससी नीले इति। सजातीयेनैव सजातीयं व्यावर्त्यम् इति नीले वाससी वसित्वा मालां च कीर्तिमयीमामुच्य काञ्चनीं स्वरूपतोऽप्यमृतमयो नित्यसद्गुणरूपां निर्दोषगुणवान् भूत्वा रेजे एवं स्वाभाविकीमवस्थामापन्नः पश्चात् स्वलङ्कृतो जातः लिप्तश्चाङ्गरागैः सर्वेषां दर्शनीय एव जातो न तु गुप्त इति दृष्टान्तमाह—माहेन्द्र इव वारणः इति ऐरावत इव ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परं भावं महासङ्कर्षणस्वरूपं त्वत्स्वरूपम् ॥ २७—२८ ॥
कान्तिर्लक्ष्म्याः मूर्त्तिविशेषः यदुक्तं वैष्णवे—
"वरुणप्रेषितां चास्मै मालामम्लानपङ्कजाम्।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥ इति
इयमेव द्वितीयव्यूहस्य सङ्कर्षणस्य श्रीरिति प्राञ्चः ॥ २९ ॥

वसित्वा परिधाय आमुच्य कण्ठे निधाय लिप्तचन्दनेन वारणः ऐरावतः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विजगाह अवगाहनं कृतवान् ॥ २८ ॥

कामं यथेच्छं विहृत्य उत्तीर्णाय निर्गताय असिते नीले अम्बरे महार्हाणि अमूल्यानि भूषणानि कान्तिः लक्ष्मीर्विभूतिभूता ददौ अत एव वैष्णवे लक्ष्मीशब्दप्रयोगः—
"वरुणप्रहिताञ्चास्मै मालामम्लानपङ्कजाम्।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत"॥
इति ॥ २९ ॥

लिप्तश्चन्दनादिभिः ॥ ३०—३१ ॥

भाषाटीका।

हे विश्वात्मन्! हे भक्तवत्सल! ज्ञानशक्ति आदि षड्गुणसम्पन्न आपके सङ्कर्षणरूप परं भाव को नहिं जानने वारी और आपके शरण में आई मो को आप छोडने के योग्य हौं ॥ २७ ॥

इस प्रकार यमुना से प्रार्थित हुए बलदेव भगवान् यमुना जी को छोड देते भये पश्चात् हस्तिनीयों के साथ जैसे हस्ती क्रीडा करता है तैसे ही स्त्रीयों के साथ यमुना जल में प्रवेश कर जलक्रीडा करते भए ॥ २८ ॥

इच्छा के अनुसार विहार करके जलसे बाहिर निकसे बलदेवजी के अर्थ नीलाम्बर और अमोल भूषण तथा सुन्दर माला को श्रीकान्ती देवी देती भई ॥ २९ ॥

नीलाम्बर धारण करके तथा स्वर्णजटित माला को कण्ठ में धारण कर सुन्दर अलङ्कार धारण किये चन्दन लगायें बलदेव जी इस प्रकार शोभाय मान होते भए कि मानो इन्द्र को ऐरावत हस्ती शोभायमान होवे ॥ ३० ॥

अद्यापि दृश्यते राजन् यमुनाकृष्टवर्त्मना।
बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥ ३१ ॥
एवं सर्वा निशा याता एकेव रमतो व्रजे।
रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३२ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे बलदेवविजये यमुनाकर्षणं नाम
पञ्चषष्टितमोऽध्यायः॥६५॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एकेव एकेव निशा यथा तथा माधुर्यैर्विलासैः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

श्रीबलदेवप्रीत्या तथैवाद्यापि वहतीत्याह— अद्येति। कृष्टेन हलजातेन वर्त्मना लक्षिता किम्वा तेन वीर्य्यं सूचयन्ती स्वावस्थाविशेषेण किञ्चिज्ज्ञापयन्ती इवेत्यबुद्धिपूर्वकत्वात् किञ्चिदर्थे हेतुः अनन्तेति हि प्रसिद्धौ तथाच तां प्रति तस्याज्ञा श्रीहरिवंशे —

"लाङ्गलाविष्ट मार्गा त्वमिमं मे प्रियदर्शने।
देशमम्बुप्रदानेन प्लावयन्त्याखिलं शुभम्।
यावत्स्थास्यति लोकोऽयं तावत्स्थास्यति मे यशः ॥

इति ॥ ३१ ॥

एकेवेति। प्रतिरजनि नवनवायमानानुभवात् इति देवीवर्गतोपि तासां माधुर्य्यविशेषो दर्शितः तदेवमपूर्वं भोगवृन्दं श्रीमद्व्रजसान्त्वनसन्तुष्टहृदयेन श्रीकृष्णेनैव तस्मै दूरतोपि दापितमिति गम्यते अत्र यद्यपि श्रीरामोऽसौ श्रीकृष्णबन्धूनां सर्वेषां स्वस्य प्रेयसीनाञ्च स्वगमनसमये पूर्वतोप्यधिकं नित्यलीलानुभावनाद्विना नूनं सान्त्वनं कृतवानेवास्ति एतदर्थमेवागतत्वात् तथेव हि तेन श्रीकृष्णोपि सान्त्वयिष्यते हरिवंशे "सर्वेषां कुशलं कृष्ण येषां कुशलमिच्छसि" इति तथाप्यापाततः प्रकटलीलादर्शनेन दुःखांशसञ्चायमयत्वात्तद्गमनं न वर्णितमिति ज्ञेयं किञ्चित् तु दृष्टं विष्णुपुराणे "मासद्वयेन यातश्च पुनः स द्वारकां पुरीम्" इति ततः श्रीकृष्णमिलनन्तु हरिवंशे—

"तथैवाध्वगवेषेण सोपस्पृष्टो जनार्दनम्।
प्रत्यग्रवनमालेन वक्षसातिविराजता ॥
स दृष्ट्वा तूर्णमात्मानं रामं लाङ्गलधारिणम्।
सहसोत्थाय गोविन्दः प्रददावसनोत्तमम् ॥
उपविष्टं ततो रामं पप्रच्छ कुशलं व्रजे।
बान्धवेषु च सर्वेषु गोषु चैव जनार्दनः ॥
प्रत्युवाच ततो रामो भ्रातरं साधु भाषिणम्।
सर्वेषां कुशलं कृष्ण येषां कुशलमिच्छसि ॥
ततस्तयोर्विचित्रार्थाः पौराण्यश्चाभवन् कथाः।
वसुदेवाग्रतः पुण्या रामकेशवयोस्तदा ॥" इति

तत्र सभोपविष्टत्वादापाततः सामान्यत एव प्रश्नोत्तरे इमे श्रीकृष्णगोकुलप्रेयसीपर्य्यन्तविषये ज्ञेये विशेषस्त्वेकान्त एवाभवदिति गम्यते ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

आकृष्टवर्त्मना सूचयतीत्यन्वयः ॥ ३१—३२ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चषष्टितमोऽध्यायः ॥६५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हलेनाकृष्टा यमुनेत्येतदसम्भावितं मन्वानस्य राज्ञः संशयनिराचिकीर्षयाह— अद्यापीति। हे राजन्! अनन्तं वीर्यं यस्य तस्य बलस्य रामस्य वीर्यं सूचयतीव "लक्षणहेत्वोः" इति शत्रन्तात् ङीप् सूचयितुमित्यर्थः। आकृष्टवर्त्मना हलाकृष्टमार्गेण यमुना स्यन्दमानेति शेषः ॥ ३१ ॥

एवमिति। आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य व्रजे रमतो रामस्य माधुर्यैर्विलासैः सर्वा निशाः रात्रयः योषितामेकेव यता गता एकनिशाप्राया बभूवुरित्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आकृष्टेन वर्त्मना मार्गेण दृश्यते ॥ ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एका निशेव व्रजस्त्रीणां माधुर्यैः सौन्दर्यैः कर्णरम्यवचनैः आक्षिप्तमाकृष्टं चित्तं यस्य स तथा तस्य ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

( श्रीविजयध्वजतीर्थरीत्या अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इतिश्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य माहात्म्यमग्रेपि दृश्यत इत्याह—अद्यापि दृश्यत इति । अन्यथा अग्रे अपकीर्त्तिः स्यादिति आकृष्टवर्त्मना हलाकर्षणमार्गेण महत एव वीर्यस्य वीर्यं सूचयन्तीव सा जाता नतु तावदेव बलमिति वस्तुतस्तु तदप्रयोजकं न पूर्णमाहात्म्यसूचकं भवितुमर्हतीति इतीवशब्दः ॥ ३१ ॥

एवं एकदिनकृत्यमुक्त्वा यावत्कालं स्थितः सर्वेष्वेव दिवसेषु तद्गतिदिशति—एवं सर्वा निशा याता इति । एकेवेति प्रकारे विशेषाभावः व्रजे चरत इति स्थानस्य समानत्वात्रैलक्षण्यं न प्रकाशितवान् न त्वसामर्थ्यादिति सूचितं स्वपौरुषख्यापनमपि न कृतवानित्यत्र हेतुमाह-व्रजयोषितां माधुर्यैराक्षिप्तचित्तस्येति । रामो हि साधनप्रधानः भगवद्गुणाः तत्र प्रकाशन्त इति तत्साधनार्थम् इतरापेक्षया तत्समीचीनमिति तावन्मात्रेण पर्यवसितमिति माधुर्यैर्भगवद्धर्मैः वशीकृतचित्तस्य एकेव निशा यातेत्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे षोडशाध्यायविवरणम् ॥ १६ ॥ ६५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आकृष्टवर्त्मना उपलक्षिता ॥ ३१ ॥

एकेवेति प्रतिरजनि नवनवायमानानुभावात् ॥ ३२ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
पञ्चषष्टितमोऽध्यायः दशमे ऽजनि सङ्गतः ॥६५॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चषष्टितमोऽध्यायार्थप्रकाशः ॥ ६५ ॥

भाषाटीका ।

हे राजन्! जिस स्थान में बलदेवजी ने यमुना को खींचा है उसी हलके खींचे हुए मार्ग से बहती हुई अनन्त बलधारे बलदेवजीके पराक्रम को मानो सूचन करती भई अब पर्यन्त यमुना वैसे हि दीखती है ॥ ३१ ॥

उस प्रकार वनमें रमण करने वारे और व्रज की गोपियों के अनेक प्रकार के मधुर विलास करके जिनका चित्तहरागया एतादृश बलदेवजी को व्रज में दो मास पर्यन्त रमण करने २ दो मास की सब रात्री एक रात्रि के समान व्यतीत होती भई ॥ ३२ ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धमें पैंसठके अध्यायकी भाषाटीका समाप्ता ॥ ६५ ॥

श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ।

—•••❀•••—

### श्रीशुक उवाच ।

नन्दव्रजं गते रामे करूषाधिपतिर्नृप ।
वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १ ॥
त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ।
इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥ २ ॥
दूतञ्च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने ।
द्वारकायां यथा बालो नृपो बालकृतोऽबुधः ॥ ३ ॥
दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ।
कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

षट्युक्षष्टितमे काशीं गत्वाऽहन् पौण्ड्रकं हरिः ।
तन्मित्रञ्च ततो दृप्तं सुदक्षिणवधादिकम् ॥

॥ १ ॥

प्रस्तोभितः प्रोत्साहितः स्तुत्या बालैरज्ञैः ॥ २ ॥

बालकृतो नृपो बालैर्नृपत्वेन क्रीडायां परिकल्पितः ॥ ३—७ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं श्रीरामकृतगोकुलसान्त्वनस्मरणेन स्वस्थचित्तस्तस्य व्रजगमनानन्तरं द्वारकायां कौतुकविशेषं स्मृत्वाऽऽह- नन्देति । रामे नन्दव्रजं गते इति श्रीकृष्णमेकाकिनं मत्वेति भावः । अन्यथा तत्र श्रीरामे स्थिते दुर्निवारतत्क्रोधजन्मतो वक्ष्यमाणकौतुकं न स्यादिति च वासुदेवः परमेश्वरोऽहमिति सन्दिदृक्षेत्यर्थः । यतोऽसौ निर्बुद्धिः अज्ञत्वादेव स्ववत् श्रीकृष्णेऽपि भगवत्त्वमारोपितं मन्यमान इत्यर्थः । नृपेति सकौतुकं सम्बोधनम् ॥ १ ॥

अज्ञत्वमेव विवृण्वन् दूतप्रस्थापनं विवृणोति--त्वमिति द्वाभ्याम् । सर्वान्तर्यामित्वेन वासुदेवाख्यो भगवान् सर्वैश्वर्य्ययुक्तः अतो जगत्पतिर्यः स एव त्वमवतीर्णोऽसीति अच्युतं सर्वैश्वर्य्यपूर्णं भगवन्तम् ॥ २ ॥

न केवलं मेने द्वारकायां तादृशदेवमुनिराजादिसम्वलितायां दूतञ्च प्राहिणोदिति तस्यात्यन्तदुर्बुद्धित्वेन कौतुकात् पुनरुक्तिः अतो मन्दोऽत्यधमः निर्बुद्धिः यतो यथा बालैरन्यैर्नृपत्वेन कल्पितः कश्चिदबुधो बालस्तादृश इत्यर्थः । किञ्च न व्यक्तं वर्त्मापि यस्य तस्मै इति तस्य तु सुतरां तत्त्वज्ञानाद्यक्तया तदुक्तमेवेति भावः । यथा स बालः तद्वदबुधः ॥ ३

तुशब्देन दूतस्य ततोऽपि निर्बुद्धित्वं बोधयति, तदेवाह-- द्वारकामेत्येत्यादिना । तत्र द्वारकां तादृशालौकिकसम्पत्तिमतीं सभायां तत्तन्महानुभावपालितायां प्रभुं सर्वशक्तियुक्तं कृष्णं स्वयं भगवन्तं कमलपत्राक्षं माधुर्य्येण च सर्वोत्कृष्टमित्यर्थः । एवं क्रमाधिक्यमपिशब्दश्च सर्वत्र गम्यं तेन तेन च तस्यैव भगवत्त्वयोग्यतोक्ता कमलपत्राक्षमित्यनेन दूतं प्रति सकौतुकनिरीक्षणात् श्रीनेत्रयोः प्रसक्तिविशेषश्चाभिप्रेतः ॥ ४ ॥

---

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—२ ॥

यथा बाला अज्ञतुल्यः बालकृतोऽबुधः बालैरज्ञैरबुधः कृतः ॥ ३-७ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ श्रीकृष्णस्य चरितं पौण्ड्रकवधकाशीपुरदहनात्मकमनुवर्णयति–नन्दव्रजमित्यादिना । हे नृप ! करूषाणां देशानामधिपतिरहमेव वासुदेव इत्यभिमन्यमानोऽत एवाज्ञः कृष्णाय दूतं प्राहिणोत् प्रेषयामास दूतमुखेन वक्ष्यमाणं वचः प्राहिणोदित्यर्थः ॥ १ ॥

तदेवाह--त्वमिति । इतीत्थं बालैरज्ञैस्त्वं प्रस्तोभितः स्तुत्या मुधा प्रोत्साहितः अहन्त्वात्मानमेवाच्युतं वासुदेवं मेने मनवै ॥ २ ॥

दूतमिति । अस्यै तद्व्यक्तमित्यादि न व्यक्तं वर्त्मयाथात्म्यं यस्य तस्मै किं वक्तुमित्यत आह—द्वारकायामिति । बालैरज्ञैर्यथा बालः क्रीडायां नृपः कृतः नृपत्वेन कल्प्यते तथा त्वमपि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अबुधोऽसौ द्वारकायां नृपत्वेन कल्पित इत्यतस्त्वं वासुदेव इति पूर्वोक्तञ्च वक्तुमित्यर्थः ॥ ३ ॥

दूत इति । तत् ततः राजसन्देशं राज्ञः पौण्ड्रकस्य सन्देशम् ॥४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १—४३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥१—४३॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कामस्य पूर्तिमुक्त्वाऽत्र क्रोधस्यापि निरूप्यते ।
कंसादेरिव दुष्टानां मोक्षोऽत्र विनिरूप्यते ॥
सबान्धवस्य सदेवस्य पौण्ड्रकैः सहितस्य च ।
विपक्षिणां नाशरूपः पूर्वस्मात्सर्वथा पृथक् ॥
लौकिकैरपि वाक्यैर्यः कामादौ प्रविशेत्पुमान् ।
तं कृष्णो मोचयत्यस्य सर्वथेति निरूप्यते ॥
पौण्ड्रकस्य समित्रस्य कर्मोपासनसंयुतौ ।
साधारवंशमात्रस्य नाशः सप्तदशे ऽभवत् ॥

पूर्वाध्याये पूर्वोक्तानां तामसप्रभृतीनां सात्त्विकत्वापादनात् गोपिकानां सकामसात्त्विकप्रकरणे कामः पूरितः अधुना कंसवत् प्राकृतैरपि वाक्यैर्ये भावं कृतवन्तः तेषां मोक्षरूपो निरोधो निरूप्यते. दैत्यांशानां द्विष्टानां साक्षान्मोक्षो नास्तीति निरोधरूप एव मोक्षो निरूप्यते तत्रापि कामक्रोधयोः समानकाले प्रादुर्भाव इति शक्तिरपि विभक्तेति यदैव गोपिकानिरोधार्थं भगवान् रामो गतः तदैव साक्षाद्भगवतोऽपि नियोगं वक्तुं काशीदाहकथा आरभ्यते। तस्याः प्रस्तावनामाह—करूषान्मानवाद्यासीदिति कारूषा एव करूषाः क्षत्रियाः ते वस्तुतः उत्तरापथराजानः ब्राह्मणभक्ता धर्मपराश्च तेषामधिपतिः कश्चित् कस्यचित् वसुदेवनाम्नः पुत्रः पुराणेषु वासुदेवोऽवतरिष्यतीति श्रुत्वा वसुदेवपुत्रत्वादहमेव वासुदेव इति भगवदिच्छया तस्य वासुदेवोऽहमेवेति निरन्तरं भावनोत्पन्ना तद्देहात्मवादिन एवेति बहिर्मुखस्यैव वासुदेवभावनया स्वदेशं परित्यज्य काश्यां वासे बुद्धिरुत्पन्ना ततः काशिराजेन सह मैत्रीं विधाय काश्यामेव स्थितः एवं स्थितौ वासुदेवद्वैविध्यं शास्त्रसिद्धं न भवतीति स्वस्मिन् वासुदेवभावना दृढेति अन्तर्बहिरेकरूपा युक्तेति बहिरपि भगवच्चिह्नानि धृत्वा स्थानवशात् महादेवकृपया च सानुभावोऽपि सन् भगवतो दुर्गाश्रयणाद्दिव्यामोहकलीलां साक्षिण्य वासुदेवे तत्रानुपपन्नमिति स्वयमेव वासुदेवो नान्य इति निश्चित्य मुख्यनिषेधार्थं कृष्णाय भगवते दूतं प्राहिणोत्

ननु स्वयं वासुदेवो भवत्येव नापि द्वैधमस्ति अवतारबाहुल्येपि समानकालीनेन विरोध इति किमिति प्राहिणोदिति चेत्तत्राह—अबुध इति । नायं किञ्चिच्छास्त्रतोऽनुभवतो वा जानाति ॥ १ ॥

तर्हि कथमेवं कृतवान् इत्याशङ्क्याह--त्वं वासुदेवो भगवानिति। बाला अनभिज्ञाः दुर्बुद्धिमूर्खबालकाः ते वासुदेवो लोके अवतीर्ण इति श्रुत्वा सन्निहितपरित्यागे कारणाभावात् निकटस्थमेव तं वासुदेवं वासुदेवनामानं पौण्ड्रक इत्यपराभिधेयं त्वं वासुदेव इत्याहुः बालकवाक्यात् तैः प्रस्तोभितः आत्मानमच्युतं मेने वासुदेव इति योगव्यावृत्त्यर्थं भगवानपि तादृशस्य कथं जन्मेत्याशङ्क्याह–अवतीर्ण इति। किमर्थमवतीर्ण इत्याशङ्क्याह---जगत्पतिरिति । जगदुद्धारार्थमवतीर्ण इत्युक्तं भवति ॥ २ ॥

एवं प्रस्तोभितः प्रोत्साहितो बालकवत् आत्मानमच्युतमेव मेने तदा द्वैतबुद्धिर्बाधिकेति अज्ञत्वात् बहिर्मुखत्वात् मुख्याद्वैतमज्ञात्वा बाह्याद्वैतं निराकर्तुं दूतं च प्राहिणोत् बहिर्मुखस्य तथा भावनमेवैकोऽपराधः सुतरां भगवते दूतप्रेषणमिति अपराधसमुच्चयार्थश्चकारः । ननु कथं सद्भिर्न निवारितः इति चेत्तत्राह--मन्द इति । मन्दस्तुच्छः हीनबुद्धिरिति यावत् तेन सद्भिरुपेक्षित इत्यर्थः। तर्हि स्वापेक्षयापि भगवदुत्कर्षं पश्यन् गोवर्धनोद्धरणादिकमपि शृण्वन् कथं प्रतिस्पर्धां कृतवानित्याशङ्क्याह--अव्यक्तवर्त्मन इति कृष्णायेति । भगवन्मार्गः कुत्रापि नाभिव्यक्तः अतो माहात्म्यस्य अस्पष्टत्वात् तथाकरणमुचितमेवेत्यर्थः तथापि द्वारकायां "काश्येव द्वारका प्रोक्ता कलौ नान्या कथञ्चन "इति वाक्यात् भ्रान्तपरिकल्पितान्या द्वारकापि न भवतीति निश्चित्य द्वारकायामेव स्थिताय भगवते नाट्यक्रीडायामिव उन्मत्तवाक्यमिव प्रेषितवान्॰ सर्वथा अप्रसिद्धोऽर्थः पुरः स्फूर्तिकबाधे सर्वसम्मतो न भवतीति एतादृशोपि लोके व्यवहारोऽस्तीति ज्ञापयितुं दृष्टान्तमाह--यथा बालो नृपो बालकृत इति । सोपि स्वक्रीडायामेव स्वकीयेषु वदतीति ननु मुख्ये समागत्येति चेत्तत्राह--अबुध इति एतदपि न जानातीत्यर्थः ॥ ३ ॥

दूतोपि स इव भ्रान्त इति तस्य कथं गमनमिति आशङ्कां निवारयन् कृत्यमाह–दूतस्त्विति । द्वारकां समागत्य तत्रापि सभायां स्थितं प्रभुं तत्र सभायां स एव प्रभुरिति सर्वैरङ्गीक्रियमाणं वस्तुतोपि कृष्णं सदानन्दं दृष्ट्यैव सर्वतापनाशकं सानुभावं कमलपत्राक्षं राज्ञः पौण्ड्रकस्य सन्देशमब्रवीत् अनेनावश्यवक्तव्यत्वे दोषाभावश्च सूचितः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षट्षष्टितम ऐश्वर्यं पौण्ड्रकस्यार्धधीश्वरः ।
तत्सखिश्च तत्पुत्रः काश्यदाहस्त वारिणा ॥

नन्दव्रजं गते सति राम इति कृष्णमेकाकिनं मत्वेति भावः । वासुदेवोऽहमिति मत्वातिदोषः ॥ १ ॥

प्रस्तोभितः स्तुत्या प्रोत्साहितः ॥ २ ॥

वासुदेवोऽवतीर्णोऽहमेक एव न चापरः ।
भूतानामनुकम्पार्थं त्वन्तु मिथ्याऽभिधां त्यज ॥ ५ ॥
यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत ।
त्यक्त्वैहि मां त्वं शरणं नो चेद्देहि ममाहवम् ॥ ६ ॥

श्रीशुक उवाच ।

कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः ।
उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥ ७ ॥
उवाच दूतं भगवान् परिहासकथामनु ।
उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दूतश्च प्राहिणोदिति तस्यातिनिर्बुद्धित्वेन विस्मयात् पुनरुक्तिः । बालकृतः क्रीडायां बालैर्नृपत्वेन कल्पितः कश्चिद्बालो यथा ॥ ३-४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पौण्ड्रकवधादिकं हरिचेष्टितं वर्णयति-नन्दव्रजङ्गते इति षड्भिः ॥ १ ॥

प्रलोभितः प्रोत्साहितः ॥ २ ॥

यः क्रीडायां बालैर्बालो नृपः कृतस्तद्वत् ॥ ३-७ ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि-हे नृप ! बलदेवजी को नन्दजी के ब्रज में जाने पर करूष देश का पौण्ड्रक नाम अज्ञानी राजा मैंही वासुदेव हूं ऐसा मानकर श्रीकृष्ण के प्रति दूत को भेजता भया ॥ १ ॥

मूर्ख लोगों ने स्तुति करके उसको इस प्रकार का उत्साह बढाय दिया कि जगत्के पालन करने वारे वासुदेव भगवान आप हि हो आपने हि विश्व की रक्षा के वास्ते अवतार लिया है इस प्रकार की बडाई करने से उस ने अपने को भगवान् मान लिया ॥ २ ॥

जैसे बाल क्रीडा में किसी बालक का बालक लोग मे राजा बना देते हैं तो वह बालक अपने को राजा मान लेता है तैसे हि मन्द बुद्धि पौण्ड्रक राजा भी अपने को वासुदेव मान कर श्रीद्वारका में विराजमान और अप्रकट माहात्म्य वारे श्रीकृष्ण के प्रति दूत भेजता भया ॥ ३ ॥

पश्चात् वह दूत द्वारका में आय कर सुधर्मा सभा में विराजमान कमलदललोचन प्रभु श्रीकृष्ण के प्रति पौण्ड्रक राजा सन्देश को कहता भया ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे मूढ ! उत्स्रक्ष्ये त्वयि प्रहेष्यामि यैः सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः । यद्वा, यैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवं श्लाघसे तान्युत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूतानमनुकम्पार्थमेक एव वासुदेवो यः सोहमेवावतीर्णः न चापरः कश्चिद्वासुदेवः ईश्वरस्यैकत्वात् अतो मिथ्याभिधां वासुदेव इति मिथ्याभिधां (संज्ञां) त्यज सर्वभूतावासत्वादिनिरुक्त्याविषयत्वात् वसुदेवपुत्रत्वेऽपि रूढिवृत्यभावादितिभावः । भूतानामिति कृतेन ससैन्यराजादिवधेन मत्प्रातिकूल्यं तव नोचितमिति भावः । किं वा भूतानामनुकम्पार्थं त्यज अन्यथा आवयोर्युद्धे सर्वप्राणिनां किं वा द्वारकावासिनां पीडा स्यादिति भावः ॥ ५ ॥

किञ्च, यानीति । अस्मदीयान्येव चिह्नानि चक्रादीनि सात्वत हे यादवविशेष ! इत्यनादरात वस्तुतस्तु न चाहं भूतानामनुकम्पार्थं वासुदेवोऽवतीर्णः यतोऽपरः अभेद्यस्तुच्छ इत्यर्थः । किन्तु एकस्त्वमेवावतीर्णः अतः मुक्तौ रजतस्येव मयि तव या मिथ्याऽभिधा तां त्यज त्याजयइत्यर्थः । तथा च प्रतिवक्ष्यते साक्षात् प्रति भगवानेव "त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम्" इति तथा मौढ्यादेतोर्यान्यस्मच्चिह्नानि कल्पितानि चक्रादीनि तद्रूपाणि त्वं बिभर्षि नित्यमेव धरसि अतस्तानि त्यक्त्वा प्रक्षिप्य शरणं मुक्तिदत्वादाश्रयस्सन् मामेहि स्वीकुर्वित्यर्थः । नोचेदादि सहसाक्षविमोक्षं न करोषि तदा मम महाम् आहवं युद्धं देहीति अत्राक्षमोक्षणं यथायथं प्रतिवक्ष्यते दूतम्प्रति तम्प्रति च "उत्स्रक्ष्ये मूढ चिह्नानि" इति तान्यस्त्राणि उत्स्रक्ष्यामि त इति च शरणापत्तिस्तु "महात्मानमग्निः" इत्यादिवचनस्मिन् समस्तरे

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सोपहासोक्तेरेव युक्तत्वादन्यथाऽन्यथैव प्रतिवक्ष्यते"भविता शरणं शुनाम "इति "व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम"इति च ॥ ६ ॥

कत्थनमात्मश्लाघनम् अल्पमेधसस्तुच्छबुद्धेः उप श्रीभगवत्समीप एवाकर्ण्य ॥ ७ ॥

परिहासकथामन्विति सभ्यानामुच्चैर्हासानन्तरं या मिथो दूतं प्रति च तत्कथा तदनन्तरमित्यर्थः । तत्राद्यत्यागो य आदिष्टः तं करिष्याम्येवेत्याह–उत्स्रक्ष्य इति । तैर्व्याख्यातं यद्वा यैर्मदीयैः चिह्नैरात्मीयत्वेन विकत्थसे संश्लाघसे तान्युत्स्रक्ष्य त्वयि विक्षेप्स्यामीत्यर्थः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यैर्विकत्थसे मच्चिह्नैस्त्वं विकत्थसे ॥ ८—१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह–वासुदेव इति । न चापरः न त्वं वासुदेव इति भावः । किन्तु त्वं भूतानां स्वसम्बन्धविषयभूतानामनुकम्पार्थं मिथ्या वासुदेवोऽतस्तामभिधामाख्यां त्यज ॥ ५ ॥

यानीति । हे सात्वत ! अस्मदसाधारणानि यानि चिह्नानि शङ्खचक्रादीनि त्वं मौढ्याद्बिभर्षि तानि त्यक्त्वा मां शरणमेहि आगच्छ नोचेच्छरणं नाभ्येषि तर्ह्याहव युद्धं देहि युध्यस्व इत्यर्थः ॥ ६ ॥

विकत्थनमिति । तदुक्तम् अल्पबुद्धेः पौण्ड्रकस्य विकत्थनमाकर्ण्य सभ्याः सभायां स्थिताः जहसुर्हसितवन्तः ॥ ७ ॥

उवाचेति । परिहासकथामनु उग्रसेनादीनां परिहासकथनानन्तरं प्राह, तदेवाह–उत्स्रक्ष्य इति । हे मूढ ! चिह्नानि त्वया धृतानि उत्स्रक्ष्य त्याजयिष्यामि तत्र हेतुत्वेन विशिनष्टि–यैः चिह्नैः त्वमेव विकत्थसे ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यैः काशीराजादिभिः ॥ ८—१४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

राजवाक्यमाह द्वयेन—वासुदेवोऽवतीर्णोऽहमिति । स एक एव भवितुमर्हति उभयोः प्रयोजनाभावात् तर्हीदं वाक्यं विपरीतं कुतो न भवतीत्याशङ्क्याह– न चापर इति । अपरः यो न राजा सामान्यभावश्च प्राप्तः स न भवतीत्याशयः किञ्च कार्यमपि त्वयि विरुध्यते न मयीत्याशयेनाह–भूतानामनुकम्पार्थमिति त्वया अक्षौहिणीवधेन भूतानुकम्पा न क्रियत इति अभिप्रायः नन्वेवमस्तु दूतः किमिति प्रेषित इति चेत्तत्राह—त्यजस्वेति । मिथ्याभिधाञ्च वसुदेवपुत्रत्वेन वासुदेव इति संज्ञां सत्त्वतो तु "सत्त्वं विशुद्धं वसुदेवशब्दितम" इति वाक्यात् शुद्धसत्त्वे आविर्भूतत्वमेव अतो मिथ्याभिधात्वमिति ॥ ५ ॥

ननु, योगस्य विद्यमानत्वात् कथं मिथ्यात्वं कथं वा त्यागः कर्तुं शक्य इति चेत्तत्राह—सत्यं न हि लोके पितृपुत्रत्वेन नाम भवति अन्यथा नामकरणं व्यर्थं स्यात् अतो योगो विद्यमानोपि व्यवहारे न वक्तव्यः अयमेव च त्यागः यल्लौकिकवैदिकव्यवहारेषु तन्नामाख्यापनं भ्रमजनकत्वात् मिथ्यात्वमिति मन्यते वासुदेवः परब्रह्मणोपि नामेति 'अन्यान्यपि' चिह्नानि त्यक्तव्यानीत्याह—यानि त्वमस्मच्चिह्नानि इति । पूर्वं स्वस्मिन् वासुदेवत्वं सिद्धमिति अस्मच्चिह्नत्वं चक्रादीनां न त्वस्मासन्य- चिह्नानि कथं भवेयुः अतोऽस्मच्चिह्नान्येवैतानीत्याशङ्कायामाह— मौढ्याद्बिभर्षीति अस्मन्मौढ्याच्चिह्नानि बिभर्षीति वास्तवोर्थः जीवा भगवदाविर्भावेपि भगवन्तं न जानन्तीति भगवान् चिह्नानि बिभर्ति अस्मदिति पञ्चमीबहुवचनम् अस्मद्धेतोस्तत्रापि प्रयोजकधर्मात् मौढ्याद्धेतुत्वमुद्धारार्थमेव नाशस्य पूर्वमेव सिद्धत्वात् सात्वतेति वंशनाम्ना वैष्णवनाम्ना वा सम्बोधनं तेन वैष्णवन्यायेन शङ्खचक्रादिधारणं न निषिध्यत इति सूचितं भवति सत्त्वप्रधानाः सात्त्वाः सात्वत इति तसिल् विसर्गपाठो वा लोपो वा द्रष्टव्यः भक्तजनानुरोधात् बिभर्षीति एवं विरुद्धनिराकरणं स्वबुद्ध्योक्त्वा स्वस्य कृपालुतामाविष्कुर्वन्नाह—एहि मां त्वं शरणमिति । लौकिकदृष्ट्या सामर्थ्यं न दृष्टमिति यदि नागमनं तदा मम आहवं देहि आ समन्तात् त्वं मामेहि प्राप्नुहि यथा निकटे गते मम सायुज्यसिद्धिर्भवति अहमितः स्वत्स्थाने गन्तुमशक्तः इति इदमपि कृपाकार्यं स्वयमागत्योद्धारणं नोचेत् मम त्वम आह मह्यमेतावत् सुखं दास्यामीति वद तदा निश्चिन्ततया सन्देहाभावात् त्वत्समीपागमने यत्नं करिष्यामीति ॥ ६ ॥

एतद्वाक्यात् भगवद्भक्तानां क्रोधे उत्पन्ने तस्य परलोकसिद्धिरपि न भवतीति तेषां तच्छ्रवणेन कौतुकरस एव जात इत्याह—कत्थनं तदुपाकर्ण्येति । कत्थनं स्वश्लाघां पौण्ड्रकेति नाम्ना तस्य हीनत्वमुक्तमेव पुण्ड्राः हीनाः चण्डालविशेषाः तद्भावादुत्पन्नः पौण्ड्रः कुत्सितार्थे कप्रत्ययः अधमस्वभावोत्पन्नेष्वधम इति तत्रापि न देह एव तस्य दुष्टः किन्त्वन्तःकरणमपीति ज्ञापयितुमाह—अल्पमेधस इति । सभ्याः सभार्हाः उग्रसेनो राजा येषामिति धर्मविचारो निरूपितः सर्व एव विचारकाः प्रमेयमत्यन्तं बाधितमिति उच्चैर्जहसुस्तदेति विचारात्पूर्वमेव ततः परिहासकथां कृतवन्तः अज्ञा इव भूत्वा कीदृशो वासुदेवः कथं भक्तपरायण इत्यादिप्रस्तावनावाक्यैः ॥ ७ ॥

परिहासकथामुक्त्वा स्थितेषु तेषु भगवान् दूतमुवाच भगवद्भावं प्राप्तो वदतीति तस्य वाक्याकरणे तस्याग्रे भगवत्त्वमपि न संस्यतीति तद्वाक्यं यथा कथञ्चित् सत्यं करोति उत्स्रक्ष्ये मूढ चिह्नानीति यैर्यैर्मौढ्यं प्रतीतं भाति जीवत्वं वा प्राकृतत्वं वा मूढेति सम्बोधनं लोकप्रतीत्या यैः कृत्वा त्वमेवं विकत्थसे आत्मानमेव बहुमन्यसे यद्यहमक्षत्वादिधर्मप्राकट्यं न कुर्यां तदा तवैवं विकत्थनं न भवतीति; अत एवास्मच्चिह्नानीति जीवधर्माणां ग्रहणं निरूपितं मद्धर्मपरित्यागद्वारा

मुखं तदपिधायाङ्ग कङ्कगृध्रवटैर्वृतः ।
शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ ९ ॥
इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् ।
कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥ १० ॥
पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः ।
अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥ ११ ॥
तस्य काशीपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृपः ।
अक्षौहिणीभिस्तिसृभिरपश्यत्पौण्ड्रकं हरिः ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मामेव परित्यज्य मां शरणमेहि शरणरूपं मां प्राप्नुहि जीवाश्रयो भवान् भवतीति जीवाभिनिवेश निष्टत्तीति शिष्टमङ्गीकृतं न विरुद्धमिति यदुक्तमहं शरणार्ह इति तज्जीवानां नाश्रयत्वं किन्तु ब्रह्मण एवेति प्रार्थितत्र देयमिति ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्लोकद्वयस्य सरलतया अभिमतो वास्तवार्थो यथा अवतीर्ण इति भागुरिमतेऽकारलोपे सति पुनर्नञोऽकारः वासुदेवोऽहं न अवतीर्णः किन्तु भूतानामनुकम्पार्थं त्वमेक एव वासुदेवो नान्यः अतः शुक्तौ रजतस्येव मयि या मिथ्याभिधा तां त्यज त्याजयेत्यर्थः । अत एव भगवता प्रतिवक्ष्यते "त्याजयिष्ये ऽभिधानम्" इति ॥ ५ ॥

मौढ्यादेव हेतोरस्मच्चिह्नानि कृत्रिमशङ्खचक्रादीनि यानि वर्त्तन्ते तानि बिभर्षि अस्मन्निग्रहाकरणात् त्वमेव पालयसि नतु दूरीकरोषि एतदन्याय्यमिति भावः । तस्मान्मां त्यक्त्वा तानि चिह्नानि त्याजयित्वा यदि मोक्षदानार्थं कृपया आगच्छ नोऽस्माकमसुराणां मोक्षदातृत्वात्त्वमेव शरणं संसारात् रक्षिता चेद्भवसि तदा मम मह्यम् आहवं युद्धं देहि युद्धे मां हत्वा मोक्षं प्रापयेति भावः ॥ ६—७ ॥

हे मूढ !, चिह्नानि उत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः । यद्वा चिह्नानि स्वीयसुदर्शनादीनि उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि यैस्सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यैः कृत्रिमैश्चिह्नैस्त्वमेवं विकत्थसे श्लाघसे तानुत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

भाषा टीका ।

दूत बोला कि पौण्ड्रक महाराज ने यह कहा है क्योंकि प्राणियों के विषय में कृपा करने के अर्थ मैंहि एक वासुदेव जन्योहूं दूसरा नहि और तुम तो मिथ्याहि वासुदेव नाम को धारण करते हो इस लिये इस नाम को छोड देओ ॥ ५ ॥

फिर भी दूत बोला कि पौण्ड्रक महाराज ने कहा यह है कि हे कृष्ण ! जिन हमारे शङ्खचक्रादि चिन्हन को तुम मूर्खता से धारण करतो हो उनको छोडकर हमारे शरण में आओ नहि तो हम को युद्धदेओ ॥ ६ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले—कि अल्पबुद्धि पौण्ड्रक के दूत मुखसे दुर्वचनको श्रवण कर सभा में बैठे हुए उग्रसेन आदिक बडे हँसने लगे ॥ ७ ॥

पश्चात् श्रीकृष्ण भगवान् भी दूत के प्रति परिहास वचन को बोले कि हे मूढ ! पौण्ड्रक नकली बनाय के धारण किये जिन शङ्खचक्रादि चिन्हों से तू इस प्रकार बकता है उन चिन्होंका मैं त्याग करा दूंगा ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मां शरणमेहीत्यस्योत्तरम्-मुखमिति । वटाः कङ्कादिवत्पक्षिविशेषाः तत्र तदा शुनां शरणमाश्रयो भवितासि ॥ ९ ॥
काशीमिति । पौण्ड्रकस्यापि तदा मित्रपुरेऽवस्थानात् ॥ १०-११ ॥
पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२—१३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किन्तु मां शरणमेहीति यदादिष्टं तद्भागधेयं शुनामेव सम्पत्स्यते नान्येषामित्याह— मुखमिति । तत्कथनपरं मुखमपिधाय अधोमुखतया निपातेन वालुकादिभिराच्छाद्य अन्योपि शयानो मुखं वस्त्रेणाच्छाद्य शेते कङ्कादिभिर्वृत इति तदाप्याधुनिकवत्सहायास्तव भविष्यन्तीति भावः । वटा मांसाहारितीक्ष्णतुण्डाः भवितेति तृच्प्रत्ययान्तः शयिष्यस इति मध्यमपुरुषेण त्वम्मङ्गलाभाव भवितासीत्यर्थः । अन्यसेः यद्वा

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उत्सक्ष्ये त्वयि मोक्ष्यामि यैरस्त्रैस्त्वं शयिष्यसे येनैव विकत्थसे तन्मुखञ्चापिधायेत्यन्वयः ॥ ९ ॥

तं पूर्वोक्तमाक्षेपं पाठान्तरे तदाक्षेपं तत्कृतमाक्षेपम् उप काशीसमीपे जगाम ह हर्षे अन्यत्तैर्व्याख्यातं । यद्वा काशीतिकाशी करुषदेशयोर्नैकट्यात् ॥ १० ॥

महारथः महायोद्धा यद्वा गरुडध्वजरथारोहणात् ॥ ११ ॥

तस्येत्यर्द्धकम् । नृप इति सम्बुद्धिं सूचयति नृपेति क्वचित्पाठः अक्षौहिणीभिरिति सार्द्धद्वयकम् । श्रीवत्सोपि परोमरोपणया कृत्रिम एव वेषं कृत्रिममिति वक्ष्यमाणात् श्रीविष्णुपुराणेपि "वक्षस्यलङ्कृतञ्चास्य श्रीवत्सं ददृशे हरिः" इति आदिशब्दात् पद्मादि इति चतुर्भुजत्वं महादेववरेणेति पाद्मोत्तरखण्डे असेः कक्षाधःप्रतिमुक्तत्वात् एतदपि रचितं ज्ञेयम् ॥ १२—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मां शरणमेहीत्यस्योत्तरमाह—मुखमिति । हे अङ्ग । तत् येन इत्थं विकत्थितं तन्मुखमपिधायाच्छाद्य कङ्कादिभिर्वृतः शयिष्यसे वटाः कङ्कादिवत्पक्षिविशेषाः ततः तत्र शयनस्थले भवान् शुनां शरणं भविता भविष्यति मया हतं शयितं च त्वा श्वशृगालादयः खादिष्यन्तीतिभावः ॥ ९ ॥

इतीति । आक्षेपमधिक्षेपं स्वामिने पौण्ड्रकाय समाहरत्—आगत्य न्यवेदयदित्यर्थः । कृष्णोपीति । रथमास्थायाधिष्ठाय काशीमुपजगाम तत्समीपमुपजगामेत्यर्थः ॥ १० ॥

पौण्ड्रकोपीति । तस्य कृष्णस्योद्योगमुपगम्य उपलभ्य ज्ञात्वा द्रुतं शीघ्रं पुरात्करुषपुरान्निश्चक्राम यद्वा पौण्ड्रकस्य तदा मित्रपुरं अवस्थानात्काशीपुरादितिवार्थः ॥ ११ ॥

तस्येति । तस्य पौण्ड्रकस्य मित्रं सखा काशिपतिः काशीराजः पार्ष्णिग्राहः पृष्ठतो रक्षकः सहायभूतस्सन् तिसृभिरक्षौहिणीभिः सहान्वयादनुजगाम तदा हरिः कृष्णः पौण्ड्रकं ददर्श ॥ १२॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शरणे निर्णयमाह—मुखं तदपिधायेति । नत्रैव काशीनिकटे त्वं शुनां शरणं भविता अहोरात्रसमसङ्ख्याताः तद्देवताः यमालये श्वानस्तिष्ठन्तीति प्रसिद्धिः जीवाश्च श्वान इत्यपरे गतिसामान्यात् क्षुत्परीतो यथा दीन इति वाक्यादिन्द्रियाणि वा कुत्सिततरतानि त एव हि तादृशं शरीरमाश्रयन्ति कालावयवा जीवा इन्द्रियाणि वा मुखापिधानकर्त्ता भवति सर्व एव मारणीया इति मुखस्यापिधानमेव अत्रेति ज्ञानिमोक्षानेन देहो दग्धो भवति इति शेषप्रतिपत्तिः यथा कथञ्चिदपि भवतीति अपिधानं न दूषणं भवेत् अतस्तत्प्रवृत्त्यर्थं सम्बोधनं कङ्कास्तामसाः गृध्रा राजसाः बकाः सात्त्विका इति त्रिविधैरपि भक्षकैर्वेष्टितः आधिभौतिकाद्यभिमानिन्यो देवताः सर्वाश्चातःपरं क परिपालयिष्यन्तीति शरणं हि तेषामनुद्वेजकं भवति तज्जीवतो भवतीति "एतस्मै" यदा शयिष्यसे तदा शुनां शरणं भवितेति संस्काराभावोप्युक्तः देहस्य येयं प्रतिपत्तिरुक्ता सा स्मृता अन्ते युद्धसमये तत्रासक्तो न भविष्यतीति बोधनार्थं तदैव तस्य मोक्षो भवेदिति मोक्षदाता तथैव वक्तव्यम् ॥ ९ ॥

स दूतस्तथैवोक्तवानिति दूतो गुरुत्वाभे जात इत्याह—इति दूत इति । भगवतोक्तमाक्षेपं स्वामिने स पोषक इति तद्धितार्थं सर्वमेवाहरत् नत्वन्यथाभावं न्यूनं वा कृतवानित्यर्थः । वाक्यं प्रेषयित्वा स्वयमपि प्रस्थित इत्याह—कृष्णोपि रथमास्थायेति । यथापि भगवान् तत्रैव प्रादुर्भूतः तस्य मुक्तिं दातुं शक्तः तथापि कृष्णः फलरूपः भक्तकृपालुर्वा सोपि अभेदमार्गेण भक्तो भवतीति तत्स्त्रीणां दुःखं भवतीति यद्यपि भगवता न गन्तव्यं तथापि रथास्थितः सुस्थो भक्तकार्यं करोतीति काशीमुपजगाम तामसस्थाने भगवदाविर्भावः सहसा न भवतीति स्वमपि काश्यां न प्रविष्टः अन्यथा काशीत्वमेव न स्यादत एव उप समीपं समीप एव जगाम ॥ १० ॥

सोपि ग्रामाद्बहिर्भगवन्तं द्रष्टुमागत इत्याह—पौण्ड्रकोपीति । अन्यथा तस्य काश्यां किम्वा भवेदिति तस्य भगवत उद्योगमेतावत् दूरं समागमनं महारथ इति युद्धाभिनिवेशात् शौर्यलक्षणः स्वधर्म उक्तः अक्षौहिणीभ्यां सहितः तस्य तावत् बलं सहजं सर्वसामग्र्या सहितो भगवत्समीपं गच्छेदिति द्रुतं पुरान्निश्चक्रामेति भगवदिच्छया समागतः कालः तत्रैव शरीरं गृह्णीयादिति भिया द्रुतमेव पुरात् निर्गमनं काशिराजोपि तन्मित्रमिति ॥ ११ ॥

तस्याप्यूर्द्ध्वगतिर्भविष्यतीति तस्याप्यागमनमाह—तस्य काशिपतिरिति । मित्रत्वात्पार्ष्णिग्राहो भूत्वा अन्वयात् नृपेति सम्बोधनं राजधर्मस्तथाविध इति ज्ञापयितुं तिसृभिरक्षौहिणीभिः सहित इति तस्य तावदेव बलं तत्र भगवान् प्रथमं कृपया पौण्ड्रकं दृष्टवानित्याह—अपश्यत्पौण्ड्रकमिति । भगवज्ज्ञानेन दुष्ट स्वाभाविकं दोषं त्यजतीति यतो हरिः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

येन मुखेन सम्प्रत्येवं ब्रूषे तन्मुखम् अपिधाय आच्छाद्य वटाः कङ्कादिवत् पक्षिविशेषाः शुनां शरणं भवितासीति श्वानस्त्वां सुखेन भोक्ष्यन्ते इति भावः ॥ ९-१३ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वत्कृतेहि मां त्वं शरणमित्यस्योत्तरमाह—मुखमिति ॥ ९ ॥

तदानीं पौण्ड्रकस्य मित्रपुरेऽवस्थानात् काशीमुपजगाम इत्युक्तम् ॥ १०—११ ॥

पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२—१६ ॥

---

शङ्खार्यसिगदाशार्ङ्ग श्रीवत्साद्युपलक्षितम् ।
बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३ ॥
कौशेयवाससी पीते वसानं गरुडध्वजम् ।
अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम् ॥ १४ ॥
दृष्ट्वा तमात्मनस्तुल्यवेषं कृत्रिममास्थितम् ।
यथा नटं रङ्गगतं विजहास भृशं हरिः ॥ १५ ॥
शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ।
असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥ १६ ॥

### भाषा टीका ।

और हे अज्ञ ! जिस मुखसे तू इस प्रकार की बकवाद करता है रणभूमि में मरकर उसी मुखको फाडकर और कङ्क गीध चील्ह आदि पक्षीयों से युक्त होकर तू सोवेगा और तोकों कुत्ता भक्षण करेगा ॥ ९ ॥

इस प्रकार श्रीकृष्ण के तर्क वचन को दूतन जाय कर पौण्ड्रक से निवेदन किया । श्रीकृष्णभगवान् भी रथ पर विराजमान होकर काशी को जाते भए ॥ १० ॥

महारथ पौण्ड्रक भी श्रीकृष्ण के संग्राम के उद्योग को जानकर दो अक्षौहिणी सेना से संयुक्त होकर युद्ध के वास्ते शीघ्रहि पुर से निकसता भया ॥ ११ ॥

हे नृप ! पौण्ड्रक का मित्र काशी का राजा उसका सहाय होकर तीन अक्षौहिणी सेना के साथ आता भया । तब तो श्रीकृष्णने पौण्ड्रक को देखा ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गरुडः कृत्रिमो ध्वजे यस्य तम् अमूल्यो ऽनर्घ्यो मौलिराभरणं यस्य तम् ॥ १४—१६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अमूल्येति । यद्यतो दिव्यभगवन्मुकुटानुकरणार्थं ज्ञेयम् ॥१४॥
आत्मनस्तुल्यम् आत्मना तुल्यमिति वा पाठः कृत्रिममिति श्रीभगवच्छङ्खादीनां तु स्वाभाविकत्वं सूचयति ॥ १५ ॥
अरय इति । प्रहारे वैमुख्यं सूचितम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अरि अरयुक्तं चक्रम् ॥ १३—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथम्भूतं शङ्खादिभिरुपलक्षितं तत्र अरि अरयुक्तं चक्रं कौस्तुभमणिं बिभ्राणं वनमालया विराजितम् ॥ १३ ॥

पीते पिशङ्गे कौशेयवस्त्रे वसानं परिदधानं गरुडः कृत्रिमो ध्वजे यस्य तममूल्यमनर्घं मौल्याभरणं यस्य स्फुरन्ती मकरे कुण्डले यस्य तम् ॥ १४ ॥

आत्मना कृष्णेन तुल्यो वेषो यस्य तम् अथापि कृत्रिमं वेषमास्थितं तत्र दृष्टान्तः, यथा नटं रङ्गगतमिति. रङ्गे नृत्यस्थले नटमिव गतं स्थितमित्यर्थः । तमेवम्विधम् दृष्ट्वा हरिर्भृशं प्रहसितवान् ॥ १५ ॥

शूलैरिति । तदा अरयः शत्रवः कृष्णं शूलादिभिः प्राहरन् प्रत्याहतवन्तः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेषं कृत्रिममास्थितमित्यत्र महादेववरप्राप्तित्वादिति पाद्मोत्तरखण्डाल्लभ्यते ॥ १५—२८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथा कृपायां तस्य जीवत एव सारूप्यं हेतुत्वेन वर्णयति– शङ्खेति । कृत्रिमसहजभुजेषु शङ्खम् अरिश्चक्रं च सहजयोः धृतवान् गदाशार्ङ्गौ कृत्रिमयोः श्रीवत्सादिचिह्नान्यपि कृतवान् कौस्तुभसमानाकृतिं मणिं कृत्वा कण्ठे स्थापितवान् अन्येतु श्रीवत्सकौस्तुभौ चर्म छित्वा तत्र स्थापितवानित्याहुः तथासत्यकृत्रिमता स्यादिति वनमालाविभूषितमिति यथैव नित्यनूतना भवति तथा वनमालां सम्पादयतीति ॥ १३ ॥

कौशेयवाससी पीते भगवानिव वसानः समागतः नतु कञ्चुकादिकं परिधाय अन्यथा वेषवशात् अन्यथागतिः स्यात् गरुडध्वजमिति चित्रमयीं दारुमयीं वा गरुडमूर्त्तिं ध्वजे स्थापितवान् इति भजनीयोऽन्यो नास्तीति धर्मश्च अन्यो न कर्त्तव्य इति भक्तैः सह स्वयमात्मानमेव पूजयतीति अमौल्यमेव मौलिमाभरणानि च सम्पादितवान् तथैव मकराकृतिकुण्डले ध्यानेन भगवदावेशाच्च सर्व एव भगवद्धर्मास्तत्राविष्टा इति स्फुरत्पदेन सूचितम् ॥ १४ ॥

तस्य रूपं दृष्ट्वा भगवान् सन्तुष्टः अभिनन्दनं कृतवान्

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत्।
गदासिचक्रेषुभिरार्दयद्भृशं यथा युगान्ते हुतभुक्पृथक्प्रजाः ॥ १७ ॥
आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणाऽवखण्डितैः।
बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८ ॥
अथाह पौण्ड्रकं शौरिर्भो भो पौण्ड्रक यद्भवान्।
दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ १९ ॥
त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम्।
व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥ २० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इत्याह—दृष्ट्वा तमात्मनस्तुल्यं वेषं कृत्रिममास्थितमिति। परं कृत्रिममास्थितमिति तत्रासक्तिर्महतीति वेषस्य न केनाप्यंशेन भङ्गः सूचितः कृत्रिमत्वे गतिर्न भविष्यतीत्याशङ्क्य रसोत्पादकत्वात् स्थाय्येव भावो रस इति अधिकं तत्रानुपविष्टमिति निरूपयितुमाह—यथा नटं रङ्गगतमिति। अतिहर्षात् भृशं विजहास तस्य सर्वं भावं स्मृत्वा सर्वस्यैवाभिनन्दनं कृतवानित्यर्थः। यतो हरिः ॥ १५ ॥

ततः सेनायाः प्रथमं भगवत्यतिक्रममाह—शूलैरिति। शिवप्राधान्यात् प्रथमं शूलग्रहणं दशभिरायुधैः सर्वप्रकारेण हरिं तूष्णीं स्थितं तामगणयन्तः प्राहरन् ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

गरुडः कृत्रिममूर्त्तिर्ध्वजे यस्य तम् अमूल्यः कृत्रिमत्वादल्पमूल्यो मौलिराभरणं यस्य तम् ॥ १४—१६ ॥

---

### भाषाटीका।

बना हुए नकली शङ्ख चक्र खड्ग गदा शार्ङ्ग श्रीवत्स आदि धारण किये कौस्तुभमणि धारण किये वनमाला से अलङ्कृत ॥ १३ ॥

दो पीताम्बर धारण किये रथ पर गरुड़ की ध्वजा लगाये बड़े२ अमोल आभूषण धारण किये स्फुरायमान मकराकृति कुण्डल धारण किये ॥ १४ ॥

इस प्रकार अपने समान नकली वेष को धारण किये जैसे नृत्य भूमि पै राजा के वेष को धारण करने वारे नट को देख कर हँसते हैं तैसे हि उस पौण्ड्रक को देख कर श्रीकृष्ण भगवान् अत्यन्त हँसते भए ॥ १५ ॥

इस के अनन्तर शत्रुलोग त्रिशूल गदा बेंडा शक्ति पोलादी प्रास भाले तरवार द्विधारा कांडे बाणन से श्रीकृष्ण के ऊपर प्रहार करते भए ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

गजस्यन्दनादिचतुरङ्गबलमर्दिताम् पृथक् प्रजाश्चतुर्विधं भूतग्रामं यथा युगान्ताग्निरिति ॥ १७ ॥

आयोधनं रणस्थानम् अरिणा चक्रेण चितमाकीर्णम् आक्रीडनमिव कल्पान्तरुद्रस्य क्रीडाकाननमिव ॥ १८—२० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तुशब्दो वैशिष्ट्ये अरयः प्राहरन्नेव नतु किञ्चित्कर्तुं शकवन्तः श्रीकृष्णस्तु भृशमत्यर्थमार्दयत् सञ्जहारेत्यर्थः ॥ १७ ॥

तत्र विशेषतोऽशेषायुधश्रेष्ठचक्रकृतमाह—आयोधनमिति। रथादीनां यथापूर्वं युद्धार्थमग्रेऽभिगमने श्रेष्ठ्यात्तत्क्रमेणावखण्डनम् उल्बणम् अन्येषां भयङ्करमित्यर्थः ॥ १८ ॥

अथ अर्द्दनानन्तरं सम्यग्व्यवधाने गते शौरिः शूरवंशेऽवतीर्णः स्वयं भगवान् भोभो इत्युपहासात् अत एव भवानिति च यदाह तेन तानि त्वदुक्तानि तुभ्यमुत्सृजामि ॥ १९ ॥

त्वन्तु मिथ्याभिधानस्त्यजेति यदुक्तं तत्राह—त्याजयिष्य इति। धातूनामन्तर्भूतण्यर्थतयापि प्रयोगदर्शनादनन्यथार्थमेव करिष्यामीतिभावः। ननु दूतवाक्यानुसारेण व्यवहरसि चे तर्हि मां शरणमेहि तत्राह, व्रजामीति. त्वमवैहि मां त्वं शरणमित्यादौ तत्राऽऽहवस्यैव प्रथमविहितत्वादिति भावः। अद्य त्वद्दर्शनावसरे अद्येति पाठेऽपि न विद्यते हो बलादित्युपहासव्यञ्जना ॥२०॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

व्रजामि संयुगं नेच्छामि चेत् संयुगाद्भीतोऽस्मि चेत् त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥ २०-२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कृष्णस्त्विति। गजादयोऽस्य सन्तीति तथा चतुरङ्गमित्यर्थः। तत्पौण्ड्रककाशीराजयोर्बलं गदादिभिर्भृशमर्दयत्पीडयामास आजघ्ने इति यावत् यथा युगान्ताग्निः पृथक् 'प्रजाः चतुर्विधभूतग्राममार्दयिष्यति तद्वत् ॥ १७ ॥

इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम्।
शिरोऽवृश्चद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥२१॥
तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः।
न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

आयोधनमिति। अरिणा चक्रेण चकाराद्गदादिभिश्च खण्डितैः रथादिभिस्तदायोधनं युद्धस्थलं मनस्विनां शूराणां चिरं सन्तोषावहं सद्भेजे आक्रीडनमिव कल्पान्ते रुद्रस्य क्रीडास्थानमिव उल्बणं दारुणं सद्बभौ इति सम्बन्धः ॥ १८ ॥

अथेति। उक्तिमेवाह—भो भो इत्यादिना संयुगमित्यन्तेन। भो भो पौण्ड्रक! दूतवाक्यमुखेन भवान् मां प्रति यदाह "यानि त्वमस्मच्चिह्नानि" इत्यादि तान्येवास्त्राण्युत्सृजामि प्रयोक्ष्यामि ॥ १९ ॥

हे अज्ञ! मे आत्मसम्बन्धि मदसाधारणमभिधानं नाम ते त्वया मृषा धृतं तस्त्याजयिष्ये यदि संयुगं नेच्छामि संयुगाद्भीतोऽस्मि चेत्त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततोऽक्लिष्टकर्मा भगवान् तां सेनां दूरीकृतवानित्याह—कृष्णस्त्विति। तुशब्दो भगवतो जयमाह तद्बलं प्रहरणकर्तृपौण्ड्रककाशिराजयोरिति सात्विकतामसभावापन्नयोरपि राजसा एव हन्तव्या इति तयोरमारणमाशङ्क्य नामग्रहणम् अङ्गानि गणयति, गजेति। तयोराजसत्वात् सेनाव्यवस्था कदाचित्र भवेदिति तदर्थं गणना गदादिभिः चतुर्भिरेव आ समन्तात् आर्दयत् पीडितवान् अस्त्रादिसहितैर्बाणैः कृत्वा दाहपर्यन्तं कृतवानिति वक्तुं दृष्टान्तमाह-यथा युगान्त इति। प्रजानां यथो यस्मात् तादृशो हुतभुक् प्रलयाग्निः ॥ १७ ॥

ननु, महादेवः कथं न तत्साहाय्यं कृतवानित्याशङ्क्याह—आयोधनमिति। चक्रेण खण्डितैः रथादिभिः कृत्वा आयोधनं रणभूमिर्बभौ तैश्चितं व्याप्तं प्रसारितं तर्हि तत्र रुद्रा मूलभूतौ पलायितौ भविष्यत इत्याशङ्क्याह—मोदवहं मनस्विनामिति। मोदं वहन्तीति भूतपतेर्महादेवस्याक्रीडनं क्रीडास्थानं कृतवान् तत्राप्युल्बणम् अत्युत्कटं यत्र कोपि न स्मृतः ॥ १८ ॥

अथ पौण्ड्रकवधार्थमुद्यतः स्वोपदिष्टोर्थस्तेन विस्मृतो मा भवत्विति पुनः स्मारयति—अथाहेति द्वाभ्याम्। शौरिरिति पितृपितामहनाम्ना भगवत उत्कर्षः पौण्ड्रकेति तस्यापकर्षश्चाह—भो भो पौण्ड्रकेति। तस्य सहजो दोषः भगवता कीर्तित इति तथाशो निरूपितः अत्रवान् दूतवाक्येन मामाह तान्यस्त्राणि उत्सृजामि ते इति तुभ्यं त्वदर्थम् उत्सृजामि चेत्त्वं सहजतादृशो भविष्यसि ॥ १९ ॥

मे अभिधानं वासुदेवेति यत् त्वया मृषा धृतं भगवद्भावात् पूर्वमेव बालकवाक्येन स्थापितं तत् त्याजयिष्ये सहजं तु दास्यामि इति यदि संयुगे न हनिष्यामि तदा निकटे समागत्य सायुज्यं दास्यामि इदानीं युद्धार्थमेवागत इति सारूप्यमेव प्रयच्छामि अयं दोषः दूतप्रेषणाज्जातः अन्यथा सायुज्यमेव भवेत् यदि तूर्ष्णीं तिष्ठेतेत्यर्थः। अनेनैवमपि सूचितम् इदानीमपि शरणे चेत्पतति सायुज्यमेव दास्यामीति ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हुतभुक् प्रलयाग्निः पृथक् प्रजाः जरायुजादिपृथग्भेदप्रजाः ॥ १७ ॥

आयोधनं युद्धस्थानं रथादिभिश्चितं व्याप्तम् अरिणा चक्रेण ॥ १८-२१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पृथक् प्रजाः जरायुजादिचतुर्विधाः प्रजाः ॥ १७ ॥
अरिणा चक्रेण ॥ १८-२० ॥

भाषा टीका।

श्रीकृष्णभगवान् भी गदा खड्ग चक्र बाणन करके गज रथ अश्व पयादे वारी पौण्ड्रक और काशीराज की उस सेना को इस प्रकार से अत्यन्त पीडित करते भए कि जैसे प्रलयकाल में भिन्न २ प्रजा को अग्नि नाश करता है ॥ १७ ॥

चक्र करके खण्डित भए रथ अश्व कुंजर पयादे खर ऊंटन से व्याप्त भया वह युद्धस्थान मानो प्रलयकाल में रुद्र अति भयङ्कर क्रीडा के स्थान के समान शूरवीरों को हर्षदायक होकर शोभा को प्राप्त होतभया ॥ १८ ॥

इस के अनन्तर श्रीकृष्णभगवान् पौण्ड्रक से बोले कि हे पौण्ड्रक! दूतके वाक्य से तैने जो मेरे प्रति यह कहा कि हमारे चिन्हों को तू छोडदे सो उनहि चक्रादि अस्त्रों को तेरे बधके वास्ते तेरे ऊपर छोडता हूं ॥ १९ ॥

हे अज्ञ! जो वासुदेव ऐसा मेरा नाम अपना मिथ्या धर लिया है मैं उस को तेरेसे परित्यागकराऊंगा और जो मैं यदि तेरे साथ संग्राम करता नहि चाहूंगा तो अब हि तेरे शरणि में आवता हूं ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गिरेः शृङ्गं यथेति ॥ २१—२४ ॥

**एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः ।**
**द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥ २३ ॥**
**स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः ।**
**बिभ्राणश्च हरेराजन् स्वरूपं तन्मयोऽभवत् ॥ २४ ॥**

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्षिप्त्वा आक्षिप्य ॥ २१ ॥

अनिल इत्यदृश्यकर्तृत्वेनोपमानीकृतं तथा पत्त्रिणामपि तत्प्रक्षिप्यैव निवृत्तेरदृश्यकरणत्वेन च ॥ २२ ॥

मत्सरिणं भगवदुत्कर्षासहनं सिद्धैर्जीवन्मुक्तैर्विमानगामिभिश्च सर्वैस्तन्महाकौतुकदर्शनार्थमागतैर्गीयमानं कथामृतं पौण्ड्रकवधादिलक्षणं यस्य तथाभूतस्सन् ॥ २३ ॥

मत्सरावेशमपि दर्शयन् द्वेष्यादिवन्मुक्तिमाह—स पौण्ड्रकः हरेः स्वरूपं स्वीयं रूपं चतुर्भुजत्वादि तद्बिभ्राणः अनुकुर्वाणः तन्मयः प्राचुर्येण तद्रूपोऽभवत् सारूप्यं प्रापेत्यर्थः । यतो नित्यमित्यादि तादृशभावनया पेशस्कारिहतकीटवदिति भावः ॥२४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वरूपं वेषं बिभ्राणस्तन्मयो ऽभवत् तदीयवेषप्रचुरो ऽभवत् शिरश्छेदेन दोषस्य प्रायश्चित्तं कृतम् अतो भगवद्ध्यानस्य फलमनन्तरमित्यभिप्रायः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । उक्त्वेतिशेषः । रथाङ्गेन चक्रेण शिरोऽवृश्चत् चिच्छेद यथेन्द्रो वज्रेण गिरेः शृङ्गं तद्वदित्यर्थः ॥ २१ ॥

तथेति । पत्त्रिभिर्बाणैः काशिपतेः कायाच्छिर उत्कृत्य उत्प्लुतं यथा तथा छित्वा काशीपुर्यां न्यपातयदनिलो वायुः पद्मकोशमिव ॥ २२ ॥

एवमिति । ससखं सकाशिराजं मत्सरिणं शत्रुं पौण्ड्रकं हत्वा सिद्धैः गीयमाना कथैवामृतं यस्य स हरिर्द्वारकां विवेश ॥ २३ ॥

स इति । स पौण्ड्रकः भगवतः श्रीकृष्णस्य ध्यानेन ध्वस्तान्यखिलानि बन्धनानि कर्मबन्धनानि यस्य सः हेतुगर्भमिदं तथा हरेः कृष्णस्य रूपं रूपतुल्यं स्वरूपं स्ववेषं बिभ्राणम् इत्यपि तस्मात्तन्मयस्तदीयवेषप्रचुरो बभूव साधर्म्यं गत इत्यर्थः शिरश्छेदेन दोषस्य प्रायश्चित्तं कृतमतो भगवद्ध्यानस्य फलं तत्साधर्म्यं लब्धमिति भावः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यथाध्यानेवृत्तं भगवान् मारितवानित्याह—इति क्षिप्त्वेति । क्षेपो दोषस्मारणं शितैस्तीक्ष्णैर्बाणैः अश्वान् हत्वा विरथीकृत्य चक्रेण शिरश्चिच्छेद भक्तवधोऽनुचित इत्याशङ्क्य परोपद्रवकारित्वात् मारितवानिति ज्ञापयितुं दृष्टान्तमाह—वज्रेणेन्द्रेति । यद्यपि "विष्णुः पर्वतानामधिपतिः" इति तेषाम्पक्षच्छेदोऽनुचितः तथापि लोकोपद्रवकर्तृत्वात् हननमिन्द्रद्वारा पक्षावेव शिरःस्थानीयौ ॥ २१ ॥

सात्त्विकवधमुक्त्वा तामसवधमप्याह—तथा काशिपतेरिति । विरथीकृत्य तमप्याक्षिप्य चक्रेण हतो मुक्तो भविष्यतीति छिन्नमपि शिरो भगवान् पश्येत्तथापि मुक्तो भवेदिति कालावयवभूतैः पत्त्रिभिर्बाणैः शिर उत्कृत्य काशिपुर्यां न्यपातयत् साहाय्यं शरीरेण कृतमिति शरीरांशः तस्य मुक्तः कृतः तस्य मध्ये पतनादिकमाशङ्क्य दृष्टान्तमाह—पद्मकोशमिवानिल इति । अनेन व्याजेन भगवान् महादेवे तच्छिरःकमलपूजां कृतवानिति द्योतितम् ॥ २२ ॥

युद्धमुपसंहरन् भगवतो द्वारकागमनमाह—एवं मत्सरिणं हत्वेति । भक्तस्यापि हनने मात्सर्यमेव हेतुः काशिराजवधे तत्सखित्वं हेतुरिति ततो भगवत्कृतं लोकशास्त्राविरुद्धमिति ज्ञापयितुं सिद्धैर्गीयमानकथामृत इत्युक्तम् एवं सर्वदुःखहर्ता तेषां दुःखं दूरीकृत्य द्वारकामावसत् ॥ २३ ॥

पौण्ड्रकस्य हननानन्तरं या गतिर्जाता तामाह—स नित्यमिति । स तन्मयो ऽभवत् तेन व्याप्तोऽभवत् आत्मनि परमात्मा आविष्टः तेनावशी जातः शरीरेन्द्रियप्राणान्तःकरणसद्भावे आधिदैविकानि शरीरादीनि तत्राविष्टानि स्वतन्त्रावेशेनैव भगवद्रूपो जातः तत्र च भगवत इव तस्यापि लीला भविष्यतीति मुख्यः पक्षः विष्णुदेवतानुरूपपक्षत्वे तु वैष्णवलोके तथात्वमपि शङ्खचक्रादिभावस्यैव प्राधान्यादिति केचित् तस्य तथात्वे हेतुमाह—नित्यं भगवतो ध्यानेन प्रध्वस्तानि अविद्याकामकर्मादीनि मात्सर्यादीनि च पश्चादुत्पन्नानि उभयविधान्यपि बन्धनानि यस्य अनेन देहान्तरोत्पादकं कर्मनिवर्त्तितं भगवद्भावे हेतुमाह—बिभ्राणश्च हरेरूपमिति । हरिः रूप्यते अनेनेति शङ्खचक्रादिभावसमुदायः तं बहिर्बिभ्रत् स्वरूपन्तु मनसा बिभ्रत् चकारात् तत्क्रियादीनां सर्वेषामाध्यानमुक्तम् एवं सर्वसामग्र्यां तन्मयत्वं युक्तमेव पौण्ड्रकस्य गतिमुक्त्वा तेन सहागतस्य काशिराजस्यापि कथं सा न गतिरिति शङ्कां वारयितुं तदुत्पन्नानां तदीयानां सर्वेषामेव परमं दोष माह—यावदध्यायपरिसमाप्ति । अर्थान्तेपि निरुद्धाः तीर्थमपि निरुद्धं भवतीति निरूपितम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

काशिराजस्य शिरसः काशीमध्ये निक्षेपे इदं कारणमुन्नेयं भोभो काशीस्थाः ! अद्य शत्रोः शिरः दैवं काशीमध्ये आनेष्यामि मा त्रसं शोच्यमिति प्रतिज्ञयैव युद्धाय काशि-

शिरः पतितमालोक्य राजद्वारे सकुण्डलम् ।
किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥ २५ ॥
राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः ।
पौराश्च हा हता राजन्नाथ नाथेति प्रारुदन् ॥ २६ ॥
सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ।
निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७ ॥
इत्यात्मनाऽभिसन्धाय सोपाध्यायो महेश्वरम् ।
सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राज्ञो यदगच्छत् भस्मद्भर्ता द्वारकापतिः शिरोऽस्यावश्यमेवार्पयतीति तत्पत्न्योऽपि पापिन्यः सम्प्रीतिलब्धयस्याः प्रतिवर्त्स्यन्ते तत एव हेतोस्तस्यैव शिरः काशीमध्ये तत्रस्थजनान् विस्मापयितुं प्रवेशयामास कौतुकी भगवानिति ॥ २२—२३ ॥

हरेः स्वरूपं चतुर्भुजत्वम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा गिरेः शृङ्गमित्यध्याहृत्य योज्यम् ॥ २१-२३ ॥

तन्मयोऽभवत् भगवत्सायुज्यलक्षणं प्राप्तवानित्यर्थः ॥ २४ ॥

---

भाषा टीका ।

इस प्रकारके वचनों से, पौण्ड्रकका तिरस्कार कर, और तीक्ष्ण बाणोंसे उसको विरथ करके जैसे इन्द्रने वज्रसे पर्वतको शिखरको काटाहै तैसेहि श्रीकृष्णजीने सुदर्शनचक्र से उसके मस्तकको काट दिया ॥ २१ ॥

उसी प्रकार उसके मित्र काशिराजके शिरको भी बाणोंसे कायाते छेदन करके जैसे पवन कमलकी डांडीको गिरा देताहै, तैसेहि उसके शिरको श्रीकृष्णजी काशीपुरीमे गिरा देते भए ॥ २२ ॥

इस प्रकार जिनके कथारूप अमृतका सिद्धलोग गानते ऐसे श्रीकृष्णभगवान् मत्सरताचारे पौण्ड्रकको उसके मित्र सहित मारकर श्रीद्वारकापुरीमें, आप आते भए ॥ २३ ॥

हे राजन् नित्यप्रति वैर भावसे भगवान्के ध्यान करके सब कर्म बन्धन जिसके नष्ट होगये इसीलिये पौण्ड्रक भगवानके चतुर्भुज रूपको धारण कर भगवान्के सायुज्य भाव को प्राप्त होगया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथमं किमिदमिति पश्चाद्वक्त्रमिति विभाव्य कस्य चेति संशयिरे संशयं कृतवन्त इति ॥ २५—२६ ॥

संस्थाविधिमुत्तरक्रियाम् अपचितिं निष्कृतिम् ॥ २७ ॥

आत्मनाऽभिसन्धाय बुद्ध्या व्यवस्य सुदक्षिणोऽस्युदारः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

संशिश्यिरे तस्य वाऽन्यस्य वेदमिति नानाप्रकारं तर्कयामासुः जनाः साधारणाः ॥ २५ ॥

हा हताः स्म इति शेषः ॥ २६ ॥

तत्सुतस्तु ततोपि दुर्बुद्धिरित्याह—सुदक्षिण इत्यादिना । तत्रादौ द्वयं युग्मकं सुदक्षिणस्तत्संज्ञः सोपाध्यायः पुरोहितसहितः समाधिना एकाग्रचित्ततया ॥ २७—२८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

संशिश्यिरे संशयञ्चक्रुः ॥ २५—४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शिर इति । प्रथमं किमिदमिति पश्चात् सकुण्डलत्वाच्छिर इति ततः कस्येदं मुखमिति संशिश्यिरे संशयञ्चक्रुः ॥ २५ ॥

राज्ञ इति । ततः क्रमेण काशीपतेः राज्ञ एवेदं शिर इति ज्ञात्वा निश्चित्य महिष्यस्तस्य भार्याः पुत्रादयश्चरुरुदुः ॥ २६ ॥

पुत्र इति । तस्य काशीराजस्य सुदक्षिणो नाम पुत्रः आसीदिति वाक्यान्तरं स च सुदक्षिणः पितुः संस्थाविधिम् उत्तरक्रियां कृत्वा मत्पितृहन्तारं हत्वा पितुरपचितिम् ऋणापनयनात्मिकां निष्कृतिं यास्यामि ॥ २७ ॥

प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद्भवः ।
पितृहन्तृवधोपायं स वव्रे वरमीप्सितम् ॥ २९ ॥
दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् ।
अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ३० ॥
साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः ।
इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् व्रती ॥ ३१ ॥
ततोऽग्निरुत्थितः कुण्डान्मूर्त्तिमानतिभीषणः ।
तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थमभिसन्धाय उपाध्यायेन सहितः परमेण समाधिना ध्यानयोगेन महेश्वरं रुद्रमाराधयामासेति सम्बन्धः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्भगवता पत्रिभिः शिरः छिन्नं तद्राजद्वारे पतितं तदालोक्य राजत्वज्ञापनाय सकुण्डलमिति मुखं रुधिराविलमिति कुण्डले अभिज्ञापके निरूपिते आदौ पतनसमये किमिदं पतितमिति बुद्धिरुत्पन्ना ततः शिर इति ज्ञात्वा कस्येति ततो राज्ञो भविष्यतीति ज्ञातेपि वक्तुमयुक्तत्वात् संशिशियिरे संशयं प्राप्ताः ॥ २५ ॥

ततोन्तरङ्गाः समागत्य निश्चयं चक्रुरित्याह—राज्ञः काशिपतेरिति। महिष्यः स्त्रियः बान्धवाः गोत्रिणः पौराः सेवकाः चकारादन्येपि साधारणाः तथा वक्तुमनुचितमित्याशङ्क्य तेषां तुल्यव्यसनत्वं निरूपयितुमाह—हा हता राजन्निति। माहात्म्ये राजन्निति स्नेहे नाथेति यथा स्ववधे राजा बोध्यते तद्बोधयाञ्चक्रुरित्यर्थः। चकारात्पितः स्वामिन्नित्याद्यपि स्ववधे यथा क्लेशेन रोदनं तथा मुख्यतो वदन्त एव रोदनं कृतवन्तः ॥ २६ ॥

ततः क्षत्रिया इति मानभङ्गार्थं भगवतैवं प्रदर्शितमिति वैरं सिसाधयिषुः विष्णुं समानौ ब्रह्मशिवौ ज्ञात्वा तयोः आराधनार्थं प्रवृत्त इत्याह- सुदक्षिणस्तस्य सुत इति। ब्राह्मणमहादेवौ पितृहन्ता तस्य महतो देवादिदोष इति तद्वधार्थं प्रयत्नं करोति इति तूष्णीं स्थितौ जानश्चार्थः तथैव बहुदक्षिणयज्ञादुत्पन्नः सुदक्षिण इति वैदिकप्रकारे तस्य श्रद्धा अन्यथा राज्ञामनुवृत्तिमेव लौकिकीं कुर्यात् संस्थाविधिः पारलौकिकीक्रिया पितृत्वात्तदावश्यकत्वम् ॥ २७ ॥

ततोपि क्षत्रियो न निष्कृतो भवतीति पितृहन्तारं स्वादृष्टशरीरादिकं हत्वैव अपचितिं यास्यामीति स्वबुद्ध्यैव विचारितवानित्याह–इत्यात्मनाभिसन्धायेति। सोपाध्यायो ब्राह्मणसहितः महेश्वरमिति ब्राह्मणादपि महादेवं महान्तं मन्यते कदाचित् ब्राह्मणाः ब्रह्मण्यो भगवानिति पक्षपातं कुर्युरिति परमेण समाधिनेति योगेन महादेवस्तुष्यतीति परमः साक्षान्महादेवप्रीतिजनकः समाधिः चित्तैकाग्र्यं तेन तुष्यतीति शैवतन्त्रसिद्धत्वात् तथा कृतवान् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रथमं किमिदमिति पश्चाच्छकमिति संशिशियिरे सन्देहं प्रापुः ॥ २५—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संशिशियरे संशयं चक्रुः ॥ २५—२८ ॥

---

भाषाटीका ।

काशीपुरीमें राजाके दरवाजे के पास कुण्डल सहित पडे हुए मस्तकको देखकर वहांके लोगोंने प्रथमतौ यह तर्कना करी कि यह क्या वस्तुहै पश्चात् कुण्डल सहित देखनेसे यह कहा कि यह मस्तकहै पश्चात् यह सन्देह किया कि कि यह मस्तक किसका है ॥ २५ ॥

पश्चात् काशि राजका हि यह मस्तक है ऐसा निश्चय कर उसकी राणी तथा पुत्र और बान्धव तथा पुरवासी हे राजन् हेनाथ आपके मरणे पर हम सबहि मरेहि सदृश हैं इस प्रकार से विलाप करते भए ॥ २६ ॥

काशिराजाका पुत्र सुदक्षिण, अपने पिताकी दाह क्रिया करके यह संकल्प करता भया कि पिताके मारने वारे कृष्णका, बध करके अपने ऊपरसे मैं पिताके ऋणको दूर करूंगा ॥ २७ ॥

इस प्रकार बुद्धिसे निश्चय करके उपाध्याय सहित सुदक्षिण, अत्यन्त एकाग्र चित्तसे महादेवकी अर्चना करता भया ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरमदात् वृणीष्वेत्युक्तवानित्यर्थः ॥ २९ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका।

ऋत्विजमृत्विंजमिव स्वनियोगकारिणम् "यज्ञस्य देवमृत्विजम्" इति श्रुतेः ॥ ३० ॥

अब्रह्मण्ये प्रयोजित इति कृष्णे प्रयोजितो विपरीतो भविष्यतीति सूचितम्, अभिचरन्नभिचारं कुर्वन् व्रती गृहीतनियमः ॥ ३१ ॥

तप्तं ताम्रमिव शिखाः श्मश्रूणि च यस्य सः अङ्गारोद्गारीणि लोचनानि यस्य सः ॥ ३२ ॥

---

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रीत इति तत्प्रीत्यपेक्षया अविमुक्तः तत्रस्याविमुक्ताख्यतीर्थाधिष्ठातृत्वेन तत्संज्ञः तथा च श्रीविष्णुपुराणे "अविमुक्ते महाक्षेत्रे तोषितस्तेन शङ्करः" इति भगवानिति सर्वज्ञत्वादेव सव्याजं वरं ददाविति भावः। वधस्य उपायमेव ननु वध इति तदानीमपि बुद्धिविभ्रंशं तस्य चकारेति लक्ष्यते ॥ २९ ॥

दक्षिणेति युग्मकम्। ब्राह्मणैस्समममिति तस्यापि यज्ञस्य तन्मूलत्वात् तदुक्ते तु स न छिद्येत् एते च ब्राह्मणा न भवन्तीति भावः। तथैवाह–अब्रह्मण्य इति। अब्रह्मण्येतु न किञ्चित् करिष्यति ब्रह्मण्यदेवे तु तस्मिन् प्रयोजितः सन् प्रयोजयितृणां हलान्तं ब्रह्मवर्चसमितिवद्ब्रह्मण्यादिकं नाशयन् देहनाशं करिष्यतीति श्रीरुद्राभिप्रायः कचिद्ब्रह्मण्यानामपि तस्मिन्नमस्कारादिश्रवणाच्च तस्य ब्रह्मण्यत्वमिति सुदक्षिणादीनामभिप्रायः। वस्तुतस्त्वेवं ज्ञेयं सर्वाराध्योपि भगवान् कचिदाराधकत्वेनच यल्लीलायते तत्रोभयत्र च स्वस्मिन् प्रेमदानमेव मुख्यं प्रयोजनं "भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः" इति श्रीकुन्तीवाक्यात् भक्तियोगविधानार्थमवतीर्णं त्वामिति टीकाश्च मुख्यत्वञ्च तस्य सालोक्येत्यादिवाक्यशतात् तत्प्रेम च तत्कर्तृकाराधनेन विप्रादीनां तद्गौरवातिक्रमरूपं दोषमपि निरस्य हिताय प्रवर्त्तते श्रीनारदादीनां परमतत्त्वकत्वाख्यभिचारश्रवणात् श्रीभगवत्स्फुरणमात्रस्यापि तथा स्वभावः श्रूयते किमुत तत्प्रेम्णः तत्र तत्कर्मकाराधनं तन्महिमज्ञानपूर्वमिति भक्त्यात्मकं प्रेम जनयति तत्कर्तृकाराधनन्तु तादृशमहिम्नोऽपि तस्य विनयादिसाद्गुण्यदर्शनावेशेनापि तेन शुद्धं प्रेम निदधाति यत्खलु कचित्तन्महिमस्फूर्तिमप्याच्छादयति तदिदं शुद्धप्रेम च परमत्वेन स्तूयते नेमं विरिञ्च इत्यादौ इत्थं सतामित्यादौ नायं श्रियोऽङ्ग इत्यादौ च तस्मादाराधकतयाराध्यतया च ब्राह्मणादीनामेतादृशप्रेमदानाद्ब्राह्मणानां सर्वेषामपि हितमेवाचरतीति न ब्रह्मण्यताव्यभिचारः प्रत्युतान्येषां तथा हिताचरणाशक्तेर्ब्रह्मण्यदेवत्वमेव तस्य सिद्ध्यतीति ( नितरामाराधयिष्यतीति भावः। ) सम्यगिति पाठे क्रियाविशेषणं अर्थः स एव सङ्कल्पं त्वदभीष्टं कृष्णाय साक्षाद्भगवद्वधमप्यभिचरन् हिंसात्मकक्रियां कुर्वन् ॥ ३०—३१ ॥

तत इति युग्मकम्। ततश्चिरकालात्तत्कर्मसमाप्त्यनन्तरम् ॥ ३२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पितृहन्तुरिति। स सुदक्षिणः प्रसन्नं परमेश्वरं रुद्रं प्रति वधोपायमेव वरं वव्रे "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (१-१-३१) इति न्यायेन महेश्वरं परमेश्वरमिति च मुनिप्रयोगः। प्रीत इति। विविक्ते एकान्ते प्रीतः प्रसन्नो भवो रुद्रस्तस्मै वरम् ददौ ॥ २९ ॥

वरमेवाह—त्वमिति। सम्यक् ऋत्विजो यस्य तं दक्षिणाग्निमभिचारहोमेन परिचर आराधय स च परिचरितोऽग्निः प्रमथैः परिवृतः॥ ॥ ३० ॥

अब्रह्मण्ये प्रयुक्तः (प्रयोजितः) सङ्कल्पं त्वदभिसन्धिं साधयिष्यति ब्रह्मण्ये प्रयोजितस्तु स्वयमेव हन्यत इति भावः। इतीति। इतीत्थमादिष्टः कुबुद्धिः सुदक्षिणः तथा यथोक्तं कृष्णायाभिचरन् दुह्यन् चक्रे ॥ ३१ ॥

तत इति। कथम्भूतोऽग्निर्मूर्त्तिमान् विग्रहधारी अतिदारुणः तप्तं यत्ताम्रं तद्वच्छिखाः श्मश्रूणि च यस्य अङ्गारोद्गारिणि लोचने यस्य ॥ ३२ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधनी।

ततः प्रीतो महादेवः ॥ ननु भगवत्सान्निध्य एव समाधिः फलसाधक इत्याशङ्क्याह—अविमुक्त इति। तत्र हि पूर्वं महादेवः पञ्चमशिरो ब्राह्मणः छित्वा ब्रह्महत्यया व्याप्तः नारायणाश्रमं गत्वा पृष्टवान् बदरीनाथं कथं ब्रह्मवधाद्विमोक्ष इति तदाह भगवान् स्वस्थानं गच्छ यत्र चास्य कपालस्य पतनं ततश्चाव्यावृत्तिः कर्त्तव्येति ततः काश्यामागतस्य तथाजातमिति ततःप्रभृति महादेवेन तद्विमुक्तम् अतो नित्यसान्निध्यात् महादेवस्तत्र प्रसन्नः स च भगवान् भवति नामसकलेषु तद्रूप एव भगवानिति यत उद्भवरूपः अतस्तस्मै वरं दत्तवान् वरं ब्रूहि दास्यामीत्युक्तवानित्यर्थः। ततः स्वाभिलषितमाह—पितृहन्तुरिति। ननु, कथमस्य वरत्वं दुःखाभावसुखरूपत्वाभावात्तत्राह–ईप्सितमिति। नहि वरो नाम कश्चिन्नियतोऽस्ति य एव कश्चन मनस्यभिलषितो भवति स एव वर इति ॥ २९ ॥

तदा महादेवः उभयथाप्यनिष्टमिति ज्ञात्वा भक्तहितार्थं व्याजेन साधनमुपादिशति अन्यथा न निवृत्तो भवतीति शिववाक्यमाह–त्वं दक्षिणाग्निं परिचरेति "अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन् एषा वास्य घोरा तनूर्यद्रुद्रः तस्मै एवैनमावृश्चति ता जगार्त्ति मार्च्छति" इति श्रुतेः। दक्षिणाग्नावेवाभिचारहोमः अतः आह त्वं दक्षिणाग्निं परिचरेति तत्राप्येकाकिना न कर्त्तव्यमिति ब्राह्मणैः सममित्युक्तम् ऋत्विजां मध्ये ऋत्विजां सम्बन्धी वा तेन चातुर्होत्रविधानेन कर्त्तव्यमिति तत्राप्याभिचारविधानेन इष्टिप्रकृतिकश्चेत् न शरमयादिपशुप्रकृतिकत्वे तु तूपरः पशुः स्यो यूपः शरमयं बर्हिः वैभीतिकः इध्मः अत्र तु पुरोडाश एव यतोऽग्निरेव देवः स च प्रमथैर्वृतः अतो रुद्रवानेवाग्निः अभिचारसामान्यात् शरमयादिर्वा ततो यक्ष्यति तदाह—सचाग्निरिति। तव कः प्रसाद इति चेत् अग्निरपि प्रसन्नो मत्कृपया अन्योपि प्रसाद इति वक्तुं प्रमथैर्भूतगणैर्वृत इत्युक्तं भवति ततस्ते सङ्कल्प

दंष्ट्रोग्रभ्रुकुटीदण्डकठोरास्यः स्वजिह्वया ।
आलिहन् सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलत् ॥ ३३ ॥
पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम् ।
सोऽभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥ ३४ ॥
तमाभिचारदहनमायान्तं द्वारकौकसः ।
विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥ ३५ ॥
अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः ।
त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साधयिष्यति यदि अब्रह्मण्ये प्रयोजितो भविष्यतीति अन्यथा विपरीतो भूत्वा त्वामेव भक्षयिष्यतीति भावः "तस्मादग्निविश्वा-चरित वै प्रत्यगेनमभिचारस्तृणुत" इति श्रुतेः । सुदक्षिणस्तु भग-वन्तं ब्रह्मण्यं न जानाति चकारात्तदङ्गदेवता अपि कार्यं करिष्य-न्तीति सूचितम् ॥ ३० ॥

एवं महादेवेनाज्ञप्तस्तथैव चक्रे परमुद्देश्यः न तदुक्त इति ज्ञापयितुमाह—कृष्णायाभिचरन्निति । कृष्णो ब्राह्मणानां फलरूपः ब्राह्मणहितश्च अतः कुधीः उत्पादने वैगुण्याभावात् अग्निरुत्थित इत्याह-अग्निरुत्थितः कुण्डादिति दक्षिणाग्निकुण्डात् ज्वालारूपतां धारयति मूर्त्तिमानिति प्रसन्नदेवतारूपतां वारयति अतिभीषण इति मृत्युरूपतां वर्णयितुं तं वर्णयति तप्तताम्रमिति द्वयेन तप्त-ताम्रसदृशानि श्मश्रूणि यस्य अङ्गारानेवोद्गिरन्ति लोचनानि यस्य यथा कालीयादेः अङ्गारोद्गारिलोचनः ॥ ३१ ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अविमुक्तो महादेवः वरमत्रात वृणुष्वेत्यवदत् ॥ २९ ॥

ऋत्विजम् ऋत्विजमिव स्वनियोगकारिणं "यज्ञस्य देवमृत्विजम्" इति श्रुतिः । अब्रह्मण्ये प्रयोजित इति श्रीकृष्णे तु प्रयोजितो विप-रीतो भविष्यतीति श्रीरुद्राभिप्रायः । क्वचिद्ब्राह्मणानामपि कृष्णे नमस्कारश्रवणात् कृष्णस्य विप्रनमस्कारजिघृक्षोर्ब्राह्मण्यता नैवास्तीति सुदक्षिणादेरभिप्रायः ॥ ३०—३३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अविमुक्तसंज्ञो भवो महादेवः ॥ २९ ॥

ऋत्विजम् ऋत्विजमिव स्वनियोगकरिणम् "यज्ञस्य देवमृत्विजम्" इति श्रुतेः । सङ्कल्पं त्वदभिसन्धिम् अब्रह्मण्ये प्रयोजितः साध-यिष्यति ब्रह्मण्ये प्रयोजितस्तु विपरीतो भविष्यतीति भावः ॥ ३०—३१ ॥

अङ्गारोद्गारीणि लोचनानि यस्य सः ॥ ३२ ॥

———

भाषा टीका ।

काशीपुरी के अधीश भगवान् महादेवजी प्रसन्न होकर उस को वरदान देते भए वह सुदक्षिण भी पिता के मारने वारे कृष्ण के वधके उपाय रूप अपने अभीष्टवर को मांगता भया ॥ २९ ॥

पश्चात् महादेवजी बोले कि ब्राह्मणों के साथ शत्रु मारण कर्म विधान से ऋत्विज के समान दक्षिणाग्नि की परिचर्या तू कर उस अग्नि का यदि तू अब्रह्मण्य के ऊपर प्रयोग करैगा तो वह मेरे प्रमथगणों से युक्त होकर तेरे सङ्कल्प को सिद्ध कर देवेगा ॥ ३० ॥

इस प्रकार जब उसको कहा तब तो सुदक्षिण व्रतधारी होकर कृष्ण के मारने के वास्ते द्रोह करके उस कर्म को करता भया ॥ ३१ ॥

उस के पश्चात् तपायमान ताम्र के समान शिखा डाढी मूछवारा अँगारेन को उगलने वारे नेत्र वारा अति भयङ्कर साक्षात् मूर्त्तिमान अग्नि कुण्ड से निकसा ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

दंष्ट्राभिश्चोग्रैर्भ्रुकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः त्रिशिखं त्रिशूलम् ॥ ३३ ॥

दिशः प्रदहन् ॥ ३४—३५ ॥

त्राहि त्राहीत्याहुरिति शेषः ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतिभीषणत्वमेव दर्शयति—दंष्ट्रा इत्यन्तेन । स्वयाद्विस्तीर्ण-त्वादितोऽसाधारणया जिह्वया सृक्किणी सृक्किण्यौ आ सर्वतो लिहन् ॥ ३३ ॥

ततश्च पद्भ्यामिति । भूतैः प्रमथैः ॥ ३४ ॥

श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानाञ्च साध्वसम् ।
शरण्यः सम्प्रहस्याह माभैष्टेत्यविताऽस्म्यहम् ॥ ३७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वनेति दृष्टान्तेन गन्यस्थानान्तराभावादिना त्रासाधिक्यं सूचितम् ॥ ३५ ॥

अग्नेरिति । प्रागुक्तार्थमेव पुरं प्रकर्षेण दहतः दग्धुं समीपमागतस्य वह्नेः सकाशात् त्राहि त्रायस्व पुरं वीप्सातिभयात् त्रिलोकेशेति लोकत्रयरक्षकेण त्वयैतत् सुकरमेवेति भावः ॥ ३६ ॥

सम्भवति भगवन्तामिति सर्वथा समर्थं भयातुरा इति न तेषामवसरानवसरपरिज्ञानमिति सूचितम् भीतानां वाक्यमाह—पाहिपाहीति । त्राहित्राहीति कचित्पाठः तत्रापि परस्मै पदं छान्दसमिति कचित् उभयपदीधातुरिति अपरे त्रिलोकेशेति महादेवादिनिराकरणेऽपि सामर्थ्यं सूचितं पुरं प्रदहतो वह्नेः सकाशात् पालयेति यथा पुरदाहो न भवति तथा यत्नं कुर्विति चेत् न वदेयुः तदा भगवान् तूर्ष्णीं स्थितः दाहप्रारम्भपर्यन्तं पश्चादतिक्रोधे पक्षान्तराणां मूलच्छेदमेव कुर्यात् यथा न कदापि भगवद्विपक्षाणाम् उद्गमः स्यात् ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दंष्ट्राभिरुग्रैश्च भ्रुकुट्या दन्तैः कठोरं क्रूरमास्यं यस्य सः स्वजिह्वया सृक्किणीम् उत्तरोष्ठोर्ध्वदेशमालिहन्नास्वादयमानः तिस्रः शिखाः यस्य तं शूलं धुन्वन् कम्पयन् ॥ ३३ ॥

स इति । सोऽग्निर्भूतैः प्रमथैर्वृतः ॥ ३४ ॥

तमिति । आयान्तमागच्छन्तं विलोक्य तत्रसुः वनदाहे सति यथा मृगाः त्रस्यन्ति तद्वत् ॥ ३५ ॥

अग्नेरिति । पुरं द्वारकां प्रदहतो वह्नेः सकाशादस्मान् त्राहीत्याहुरिति शेषः ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दंष्ट्रया उग्रः भ्रुकुटी च दण्डरूपाः एताभ्यां स्वरूपतोऽपि कठोरमास्यं यस्याः स्वजिह्वया सृक्किणी आलिहन्निति कार्याभिनिवेशो निरूपितः नग्न इति स्वदेहमपि न जानातीत्युक्तम् तेनाविचार्यैव क्रूरं करिष्यतीति साधनमपि तथाविधमाह—विधुन्वन् त्रिशिखमिति । ज्वलन्निति क्रोधादिना अग्नित्वात् स्वभावतोऽपि ॥ ३३ ॥

गतिसामर्थ्यार्थमाह—पद्भ्यां तालप्रमाणाभ्यामिति । अग्रे कार्यं भविष्यतीति ज्ञापयितुम् इदानीं तस्य महत्सामर्थ्यमाह—कम्पयन्नवनीतलमिति । तस्योद्योगमाह-सोऽभ्यधावदिति । भूतैः प्रमथगणैर्वृतः ॥ ३४ ॥

ततो द्वारकायामपि तद्दर्शनेन भयं जातमित्याह-तमाभिचारदहनमिति । यतो दिशः प्रदहन् समागतः अतस्तं दृष्ट्वा उत्पत्तिविचारेणापि अभिचारदहन इति तत्राप्यायान्तं द्वारकौकस इति पूर्वमेव स्थानं त्यक्त्वा यथा कथञ्चिदन्तः स्थितम् अत्रापि भये किङ्कर्तव्यमिति विलोक्यैव तत्रसुः महन्यमाना अपि तत्र बलिष्ठाः शूरा न तथा भविष्यन्तीत्याशङ्क्याह-सर्वे इति । उपजीव्यनाशात् प्रतिक्रियायाः महासामर्थ्यात् महतोऽपि भयमिति ज्ञापयितुं दृष्टान्तमाह-वनदाहे यथा मृगा इति ॥ ३५ ॥

अन्यकालेऽप्यशरणाः निश्चिन्तं भगवन्तं विज्ञापयामासुरित्याह-अग्नेः सभायां क्रीडन्तमिति । अनेनान्तर्बहिः चिन्ताभावो निरूपितः सभ्याज्ञानार्थं क्रीडयतीति ज्ञापयितुं सभायामित्युक्तं अत उत्थानं न

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वारकामभिमुखीकृत्य अभ्यधावत् दिशः प्रदहन् ॥ ३४ ॥

आयान्तं दूरादेव विलोक्य वनदाहे भविष्यति सति यथा मृगाः त्रस्यन्ति ॥ ३५ ॥

त्राहि त्राहि त्रायस्व त्रायस्वेत्याहुरिति शेषः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दंष्ट्राभिरुग्रैर्भ्रुकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः ज्वलत् त्रिशिखं त्रिशूलम् ॥ ३३ ॥

दिशः प्रदहन् ॥ ३४—३५ ॥

त्राहि त्राहि त्रायस्व त्रायस्वेति प्राहुरिति शेषः ॥ ३६-३८ ॥

---

भाषाटीका ।

डाढों करके भयंकर भ्रुकुटी दण्डों करके क्रूर मुखवारे अपनी जिह्वा से नीचे ऊपर दोनों गलफुटेन को चाटने वारा नंगा तिधारा त्रिशूल को घुमाने वारा प्रकाशमान है ॥ ३३ ॥

ताल के प्रमाण दोनों पांवन से पृथिवी तलको कम्पायमान करनेवारा सब दिशान को भस्म करने वारे भूत पिशाचों से युक्त होकर वह अग्नि द्वारकापुरी के संमुख धावता भया ॥ ३४ ॥

सम्मुख आने वारे उस मारक अग्नि को देखकर सबहि द्वारकावासी, दावानल के होने पर जैसे मृग आदिक भय भीत होते हैं तैसेहि भयभीत हो गए ॥ ३५ ॥

पाशेन से सभा में क्रीडा करने वारे श्रीकृष्ण के प्रति हे त्रिलोकेश ! पुरी को दाह करने वारे अग्नि से रक्षा करिये इस प्रकार भय से आतुर होकर द्वारका वासी विज्ञापन करते भए ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहमविताऽस्मि रक्षिष्यामीति ॥ ३७-३८ ॥

सर्वस्यान्तर्बहिः साक्षी कृत्यां माहेश्वरीं विभुः ।
विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ३८ ॥
तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम् ।
स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रमथाग्निमार्दयत् ॥ ३९ ॥
कृत्यानलः प्रतिहतः स रथाङ्गपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः ।
वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत् स्वकृतोऽभिचारः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रोदसी च प्रकाशयदिति शेषः । यद्वा स्वतेजसा खादीन्प्रति जाज्वल्यमानमत्यर्थं प्रकाशमानमित्यर्थः । आर्दयदपीडयत् ॥ ३९ ॥

अर्दितोऽग्निर्यत्कृतवांस्तदाह— कृत्याऽनल इति । सहर्त्विग्भिर्जनैश्च वर्तमानम् अभिचर्यते मार्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जनानां पौराणां वैक्लव्यं भयार्तिवाक्यं स्वानां यादवानां साध्वसमापातशङ्कां सम्यगुक्तैः प्रकर्षेण अवहेलया भङ्गीविशेषेण हसित्वेति तदतिलाघवादिबोधनाय तच्च तेषां भयनिवृत्त्यर्थं यतः शरण्यः निजजनरक्षापरः अहमित्याश्वासनार्थं स्वप्रभावं द्योतयति ॥ ३७ ॥

विशेषतः स्वभक्तमहेश्वरस्य तादृशाभिप्रायसमेतं ज्ञात्वा पार्श्वस्थमिति सदा श्रीभगवदाज्ञापेक्षया मूर्त्तिमत्त्वेन समीपेऽवतिष्ठमानमित्यर्थः ॥ ३८ ॥

अथ आदेशानन्तरमेव कार्त्स्न्येनार्दयत् सुदर्शनमिति । तादृशतिग्मतेजोमयत्वेऽपि भक्तैः सुदृश्यत्वं बोधयति मुकुन्देति तद्बन्धानां मुक्तिप्रापिश्च ॥ ३९ ॥

कृत्येतियुग्मकम् । रथाङ्गपाणेरिति तस्य सदा चक्रहस्तत्वेन चक्रस्य माहात्म्यं सूचितं विभग्नमुखः पराङ्मुखः सन् वाराणसीं प्रति समेत्य प्रतिकूलतया सम्यग्भूतगणसाहित्येनेत्य सम्यक् भस्मावशेषतयाऽदहत् स्वकृत इत्याश्चर्येण आनन्देन च प्रयोगः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुत्वेति । तज्जनानां वैक्लव्यं अधैर्यं(दैन्यं) श्रुत्वा स्वानां साध्वसं भयं च दृष्ट्वा प्रहस्योवाच, तदेवाह—शरण्योऽहमविता चाखिलं भयं माकुरुत युष्मत्संसारात् सम्भवद्भयं वो न विद्यते इति ॥ ३७ ॥

सर्वस्येति । सर्वस्य लोकस्यान्तर्बहिश्च साक्षाद्द्रष्टा हेतुगर्भमिदम् अतो माहेश्वरीं कृत्यां विज्ञाय तद्विघातार्थं कृत्यानाशनार्थं पार्श्वस्थं चक्रं सुदर्शनमाज्ञापयामास ॥ ३८ ॥

तद्भगवताऽऽदिष्टं चक्रं कर्तृ अग्निमार्दयत् कथंभूतं चक्रम् सूर्याणां कोटिः प्रतिमा तुला यस्य तत् सुदर्शनाख्यमतिशयेन ज्वलत् प्रलयाग्नेरिव प्रभा यस्य तत् स्वतेजसा खमन्तरिक्षं रोदसी द्यावापृथिव्यौ ककुभो दिशश्च प्रकाशयदिति शेषः । मुकुन्दस्यैवासाधारणमस्त्रम् ॥ ३९ ॥

अर्दितस्सन् किमकरोदित्यत आह—कृत्यानल इति । रथाङ्गपाणेस्तेन प्रसिद्धेन तेजसा तेजःप्रचुरेण सुदर्शनेन भग्नं मुखं यस्य सः प्रतिहतश्चात एव निवृत्तः सः प्रसिद्धः कृत्यानलो हे नृप ! वाराणसीं प्रत्यागत्य स्वेन कृतः अभिचारो येन तमृत्विग्जनैः सहितं प्रथमान्तपाठे ऋत्विग्भिर्जनैश्च वर्तमानमभिचरति मारयतीति तथा स कृत्यानलः तं सुदक्षिणमदहत् ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तावद्विलम्बं लोका न सहन्त इति भगवान् भक्तकृपालुः तद्वैक्लव्यात् स्वामिकार्यमेव कृतवानित्याह—श्रुत्वा तज्जनवैक्लव्यमिति । तत् प्रसिद्धं जनानां वैक्लव्यं दृष्ट्वा च निमित्तं तेषां साध्वसं भयं च दृष्ट्वा स्वयं शरणार्हः प्रहस्याह—इदमाशार्थं कृतवानिति मा भैष्टेत्याह—हेतुवाक्यव्यतिरेकेण भयस्यानिवृत्तत्वादाह—अवितास्म्यहमिति ॥ ३७ ॥

निदानपरिज्ञानेऽपि सुदर्शनं सर्वार्थमिति सुदर्शनावलम्बेनैव कदाचित्प्रतीकारं कुर्यादित्याशङ्कयाह—सर्वस्यान्तर्बहिः साक्षीति माहेश्वरीं कृत्यां च विभुत्वाद्विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् चक्रं हि सचेतनं चक्ररूपेणैव विभुत्वाच्च चक्रसामर्थ्येन किञ्चित् किन्तु स्वसामर्थ्येनैवेत्युक्तं तस्य विघातः अग्रे कार्यप्रतिघातः न तु स्वरूपनाशः पार्श्वस्थ इति च सर्वथा हृदयाभिज्ञः ॥ ३८ ॥

ततः भगवदिच्छानुसारेण चक्रकृत्यमाह—तत्सूर्यकोटिप्रतिममिति । सूर्यकोटिसमानतेजस्त्वं स्वाभाविकी शक्तिः जाज्वल्यमानमिति तस्योत्साहो निरूपितः प्रलयानलप्रभमिति तस्य क्रोधावेशः तत्र क्रोधवशात् उत्कटधान्तसधर्मो जात इत्याह—स्वतेजसा खं ककुभः रोदसी च अर्दयदिति । अन्तरिक्षं दश दिशः द्यावापृथिव्यौ च ज्वालवतीव पतत्सामर्थ्यं न, स्वस्य किन्तु भगवत इति वक्तुं मुकुन्दास्त्रमित्युक्तम् एवं सर्वं तुच्छेव पश्चादग्निमग्रक्रमेण अग्निमर्दयत् मा सर्वतः । सर्वथैव अग्रसंकल्पं कृतवान् ॥ ३९ ॥

चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम् ।
सगोपुराट्टालककोष्ठसङ्कुलां सकोशहस्त्यश्वरथान्नशालाम् ॥ ४१ ॥
दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् ।
भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ॥ ४२ ॥
य एनं श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् ।
समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते ॥ ४३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे पौण्ड्रकादिवधो नाम
षट्षष्टितमोऽध्यायः॥६६॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—कृत्यानलः प्रतिहत इति । स स्वतन्त्रोपि कृत्यानलः श्रुत्या साधितोपि रथाङ्गपाणेरिति तस्य लौकिकवैदिकसामर्थ्यनाशकत्वमुक्तं तत्रापि भक्तत्वात् अप्रतिहतरूपमेव तथापि तस्य ओजः तेन हतः सन् भग्नमुखो भूत्वा निवृत्तो जातः ततो काशिराजस्यापि महानिति प्रतिसमेत्य व्यावृत्त्य समागत्य सुदक्षिणं तं स्वोत्पादकं सर्त्विग्जनम् ऋत्विग्जनसहितं सम्यगदहत् अनेन ब्राह्मणा हता इति न भगवद्दोषः कोपि यतः स्वकृत एवाभिचारः आत्मीयश्चेत् बाणः स्वात्मानं विध्यति तदा नास्यापि दोष इति ते सर्वे कृत्यानलेन भस्मसात्कृता इत्यर्थः ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जनानां पौराणां वैक्लव्यं स्वानां तत्पालकानां यादवानामस्य साध्वसं कारणाज्ञानाद्भयम् ॥ ३७ ॥

चक्रमादिशदित्यल्पस्य कार्यस्य हेतोर्मे द्यूतक्रीडासुखभङ्गो मा भवत्वित्यभिप्रायेण ॥ ३८ ॥

रोदसी च व्याप्येति शेषः चक्रं कर्तृ अग्निं कृत्यानलम् आर्दयत् ॥ ३९—४३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आर्दीत् व्याप्येति शेषः अग्निं कृत्यानलमार्दयत् ॥ ३९ ॥

स्वकृतः स्वप्रवर्तितः अभिचर्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥

भाषा टीका ।

सर्व रक्षक श्रीकृष्णभगवान् द्वारकावासियों के उस विकलता के वचन को श्रवणकर और निज भक्तजनों के भय को देखकर और पश्चात् हँसकर बोले कि आप भय मत करो मैं आप को रक्षा करूंगा ॥ ३७ ॥

सर्वत्र व्यापक और सर्व के बाहिर भीतर के साक्षात् देखने वारे श्रीकृष्णभगवान् महादेव की करतूत को जान कर उसके नाशकरने के वास्ते निज पास में स्थित सुदर्शन चक्र को आज्ञा देते भए ॥ ३८ ॥

कोटि सूर्य्य के समान और प्रलयकाल के अग्नि के तुल्य प्रभायुत तथा निज तेजसे अन्तरिक्ष और सब दिशा तथा स्वर्ग और पृथिवी के प्रति अत्यन्त आज्वल्यमान वह श्रीकृष्ण का अस्त्र सुदर्शनचक्र पश्चात् उस अग्नि को पीडित करता भया ॥ ३९ ॥

हे नृप ! चक्रधारि श्रीकृष्ण के सुदर्शन तेज से वह कृत्याग्नि रुक गया पश्चात् मुख भंग होकर वहां से लोटा फिर काशी में आय कर ऋत्विज तथा अन्यजनों के साथ उस सुदक्षिणको सम्यक प्रकार भस्म कर देता भया क्योंकि वह कृत्याग्नि सुदक्षिणने किया रहा इस लिये व्यत्यास होने से उसी के नाश का हेतु होगया ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अट्टादिसहिताम् अट्टा मञ्चाः ॥ ४१—४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्,
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

चक्रं च वाराणसीं प्रति समदहत् इति पूर्वेणान्वयः शालिनीमिति शालामिति वा पाठः ॥ ४१ ॥

सुदर्शनमिति सुदर्शकरूपं सदितिभावः । न चेदमाश्चर्य्यमिति तस्य स्वभावमनुवदति अक्लिष्टेति ॥ ४२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी

एतद्भगवद्बहिर्मुखानां काशीवासिनां दमनरूपमाख्यानम उत्तमश्लोकस्य विक्रमा यस्मिन् तत् एतमितिपाठः स्पष्टः समाहितः सावधानः सभक्त इत्यर्थः । किं वक्तव्यं स्वपरहितकारी श्रावयित्वा प्रमुच्यत इति केवलमात्महितकर्तृवत् श्रोतापि प्रमुच्यत इति वाशब्दार्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चक्रं च विष्णोरिति समदहदित्यनुषङ्गः ॥ ४१—४३ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, चक्रमिति । तद्विष्णोश्चक्रं वाराणसीमनुकृत्यानलमनुसृत्य प्रविष्टं सददहदिति पूर्वेण सम्बन्धः कथम्भूताम्? अट्टादिभिः सहितां तत्र सभालया सभागृहाणि सभा आलयाश्चेति वा अट्टालकाः उपरीतनप्रदेशाः गोपुरादिसहितैर्गोकुलैर्व्याप्तां सङ्कुलां कोशादीनां शालादिभिस्सहितां तत्र कोशो धनम् ॥४१॥

दग्ध्वेति । भूयः पुनरक्लिष्टकर्मणः उदारचेष्टितस्य कृष्णस्य पार्श्वमुपातिष्ठत् पार्श्वसमीपे तस्थौ इत्यर्थः ॥ ४२ ॥

उक्तकथाश्रवणादिफलमाह-यइति । यः पुमानेतदुत्तमश्लोकस्य चेष्टितं मर्त्यान्प्रति श्रावयेत् यद्वा समाहितः शृणुयात् स सर्वैः पापैर्मुक्तो भवेत् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(एतदध्यायव्याख्यानं तु अष्टोत्तरत्रिशततमे पृष्ठे द्रष्टव्यम् ।)

( श्रीविजयध्वजतीर्थरीत्या एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे । षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः सुदर्शनं भगवद्धृदयं जानातीति काशीमपि पीडितवदित्याह—चक्रञ्च विष्णोरिति । तदनु—कृत्यानलमनुप्रविष्टं सत् वाराणसीं समदहदिति सम्बन्धः । विष्णोश्चक्रत्वात्र तस्य भयं यद्विष्येव दग्धामीति शङ्कां वारयितुं सदृशालयापणमित्युक्तम् अट्टादयः सौधगृहाः सभास्थानान्यपि तथा आपणाः पण्यवीथयः ते अद्यापि लोके सुधा धवलिताः भवन्ति साधारणा एते इति विशिष्टानामपि दाहं निरूपयति—सगोपुरेति । पुरद्वारसहिता अट्टालकाः हर्म्याः धनिनां गृहाः कोष्ठाश्च धान्यादिसंग्रहस्थानानि सगोकुलाट्टालकगोष्ठसङ्कुलामिति पाठे गोष्ठादीनां गोकुलस्य तत्रापि प्रसिद्धगोपानाम् अट्टालकसहितस्य कदाचिद्दाहं न कुर्यादितिशङ्का स्यात् तन्निवृत्त्यर्थमेवमुक्तं लक्ष्म्या आयतनं न पीडयिष्यतीति आशङ्क्याह—सकोशहस्त्यश्वरथान्नशालामिति । कोशा भण्डारगृहाः हस्त्यादयस्ताश्च शालाः रथनिर्माणं यत्र क्रियते सा रथशाला स्थापिता अपि रथा गृहेष्वेव तिष्ठन्ति अन्यथा धर्मोपुपद्रवो भवतीति ॥ ४१ ॥

एवं सामान्यविशेषप्रकारेण दाहमुक्त्वा सर्वदाहो न भविष्यतीत्याशङ्क्य विशेषं वदन्नुपसंहरति—दग्ध्वा वाराणसीं सर्वामिति । विष्णुचक्रत्वात् कार्यसिद्धिः सुदर्शनमिति एवं कर्तुरपि दोषाभावः पुनरग्रेपि कार्यम् एतादृशं भविष्यतीति आशङ्क्या कृष्णस्यैव पार्श्वमुपातिष्ठत् ननु भगवान् स्वयमेव करिष्यतीति किं सुदर्शनेनेति आशङ्क्याह—अक्लिष्टकर्मण इति । नहि भगवान् क्लिष्टं करोति कदाचित्र तथा कर्तव्यं भवति तदागतः अनेन सुदर्शनस्यापि निरोधो निरूपितः ॥ ४२ ॥

कदाचिदियं तथा काशीदाहं प्रतिपादयतीति धर्महेतुभिः न श्रोतव्या भवेत् तदर्थमाह—य एतच्छ्रावयेन्मर्त्य इति । हेत्वपेक्षायामाह—उत्तमश्लोकस्य विक्रममिति । उत्तमैः श्लोक्यत इति स्वभावत एव भगवच्चरित्रं श्रोतव्यं तत्रापि विक्रमः पराक्रमो यः श्रावयेत् यो वा समाहितः शृणुयात् अवहेलां न कुर्यात् स सर्वथा पापैः प्रमुच्यत इति भक्तैरिव धर्मपरैरपि श्रोतव्यमिति निरूपितम् ॥ ४३ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे सप्तदशाध्यायविवरणम् ॥ १७ ॥ ६६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् । षट्षष्टितमोऽध्यायो दशमे ऽजनि सङ्गतः ॥६६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चक्रं च वाराणसीं समदहदित्यनुषङ्गः ॥ ४१-४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षट्षष्टितमोऽध्यायार्थप्रकाशः ॥६६॥

---

भाषा टीका ।

उस कृत्याग्नि के पाछे अनुसरण करके प्रविष्ट भया श्रीविष्णुका चक्र, मञ्च सभा गृह वजार सहित गोपुर अट्टा कोठेनसे व्याप्त तथा कोश हस्ति अश्व रथ अन्नशाला सहित काशीपुरीका दहन करदेता भया ॥ ४१ ॥

श्रीविष्णुका सुदर्शनचक्र, सब काशीको दग्ध करके, पुनरपि उदार चेष्टावारे श्रीकृष्णके समीपमें स्थित होगये ॥ ४२ ॥

जो पुरुष सावधान चित्त होकर उत्तम यशयुत श्रीकृष्ण-के इस चरित्रको श्रवण करावेगा अथवा जो कोई मनुष्य श्रवण करेगा वह सब पापनते छूट जावेगा ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धमें छेयासठके अध्यायकी
भाषाटीका समाप्ता ॥ ६६ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ।

—•••:•:•••—

### राजोवाच ।

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः ।
अनन्तस्याप्रमेयस्य यदन्यत्कृतवान् प्रभुः ॥ १ ॥

### श्रीशुक उवाच ।

नरकस्य सखा कश्चिद्द्विविदो नाम वानरः ।
सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥
सख्युः सोऽपचितिं कुर्वन् वानरो राष्ट्रविप्लवम् ।
पुरग्रामाकरान् घोषानदहद्वह्निमुत्सृजन् ॥ ३ ॥
क्वचित्स शैलानुत्पाट्य तैर्देशान् समचूर्णयत् ।
आनर्तान् सुतरामेव यत्रास्ते मित्रहा हरिः ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तषष्टितमे रामो गिरौ रैवतके मदात् ।
स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं बलम् ॥

कालिन्दीविदारणानन्तरं रामचरितं द्विविदवधादिसङ्कृत-मप्यनुक्त्वा तत्पूर्वभावित्वेन पौण्ड्रकवधादि निरूप्येदानीं तदेव पृच्छतीति—भूयोहमित्यादिना । रामचरितश्रवणेच्छायामद्भुत-कर्मत्वं हेतुस्तत्र चानन्तत्वं तत्राप्यप्रमेयत्वमिति ॥ १ ॥

नरकस्य सखेति हरिणा वैरे कारणं सुग्रीवसचिव इति तस्य मन्त्रबलम् मैन्दस्य भ्रातेति रामायणेऽतिप्रसिद्ध-त्वेन वीर्याधिक्यमुक्तमिति ॥ २ ॥

सख्युर्नरकस्यापचितिमानृण्यं राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहदिति ॥ ३ ॥

किञ्च कश्चिदिति कदाचित्स द्विविदः मित्रहा सखि-हन्ता ॥ ४ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कालिन्दीत्यादिटीकायामेवमेव ज्ञेयं प्रस्तुतश्रीरामलीलामध्ये यत् पौण्ड्रकवधादि निरूपितं ततस्य तत्रैव जातत्वादुक्तमेव अतस्तद्विच्छेदयद्वा राजा पृच्छतीति पृच्छतीति निरूप्य स्थितं श्रीशुकमिति वाक्यशेषात् भूय इत्यादौ कर्मेति शेषः । तदेवाह यदन्यदिति विभुः सर्वशक्तिपूर्ण इति सर्वत्र हेतुः ॥ १ ॥

यद्यपि श्रीसुग्रीवसङ्गी तथापि वक्ष्यमाणदुर्बुद्धित्वे हेतुत्व-मित्याह—नरकस्येति । एवं दुःसङ्गस्य दौरात्म्यातिशयो दर्शितः तस्य कारणञ्च बलगर्वितत्वात् श्रीलक्ष्मणाविष्वनादर एवेति । ज्ञेयं यौतु मैन्दद्विविदौ श्रीरामपूजायामावरणदेवौ तौ तदीय-वैकुण्ठस्थावन्यावेव एतौ पुनस्तदंशावावेशिनाविति च ज्ञेयं तयोस्तदसम्भवात् जयविजयवत् सदपराधफलदर्शनार्थं तादृश-बुद्धित्वादेर्बहिरेव व्यञ्जनमिति वा अथैतस्यानन्तर्ये मैन्दस्यानन्तर एवायं भ्रातेति तेनातिसादृश्यबोधनाय ॥ २ ॥

अपचितिरानृण्यलक्षणः सम्मानः वानर इति पुनरुक्ति-र्जात्यैव तावच्चञ्चलदुष्टप्रकृतिरिति व्यञ्जनाय राष्ट्रं श्रीद्वारकानिकट-वर्तिसौराष्ट्रादि तस्य विप्लवो यत्र तादृशं यथा स्यात् यद्वा राष्ट्रविप्लवरूपामपचितिं पुरादीनां यथोत्तरं न्यूनत्वं कैमुतिक-न्यायेन व्याख्येयम् ॥ ३ ॥

तैः प्रक्षिप्तैः ॥ ४ ॥

---

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १-९ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमन्तरागर्भिणीतिन्यायेन श्रुतश्रीकृष्णचरित्रः पुनः बलभद्र-चरित्रबुभुत्सया पृच्छति राजा-भूय इति । अद्भुतं कर्म चेष्टितं यस्य तस्य अनन्तस्य अनन्तावताररूपस्य अप्रमेयस्य अपार-महिम्नो रामस्य चेष्टितं श्रोतुमिच्छामि किं पूर्वोक्तं नेत्याह—यदन्यदिति । विभू रामः यदन्यत्कृतवांस्तच्चेष्टितम् ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्विविदवधात्मकं कर्माख्यातुं तावद्द्विविदस्य दुश्चेष्टितमाचष्टे—नरकस्येत्यादिना । द्विविदो नाम कश्चिद्वानरः स च नरकस्य सखा सुग्रीवस्य सचिवो मन्त्री मैन्दस्य भ्राता च वीर्यवांश्चेति रामायणादौ प्रसिद्ध इति तात्पर्यम् ॥ २ ॥

सख्युरिति स द्विविदः सख्युर्नरकस्य अपचितिमानृण्यं कुर्वन् "लक्षणहेत्वोः" इति शता कर्तुं राष्ट्रस्य विप्लवो नाशो यथा तथा पुरादीन् वह्निमुत्सृजन् ददाह ॥ ३ ॥

कचिदिति । स द्विविदः तैरुत्पाटितैः शैलैर्देशांस्तत्राप्यानर्तान्सुतरामचूर्णयत् तत्र हेतुत्वेन तान् विशिनष्टि यत्र येष्वानर्तेषु मित्रहा नरकघ्नो हरिरास्ते ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तस्य शेषस्य एव विष्णुना प्रमेयस्य ज्ञेयस्य ॥ १—२ ॥
सख्युर्नरकस्य अपचितिं निष्कृतिम् ॥ ३—४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रामस्येति चरितमिति शेषः । तदेवाह—यदन्यदिति ॥ १ ॥

यद्यपि श्रीरामचन्द्रसङ्गी तथापि वक्ष्यमाणदुर्बुद्धित्वे हेतुरयमित्याह—नरकस्येति । दुःसङ्गदोषादिति भावः । तत्कारणञ्च श्रीलक्ष्मणादौ बलगर्वितत्वेनानादर एवेति ज्ञेयम् । यौ तु मैन्दद्विविदौ श्रीरामपूजायामावरणदेवौ तौ तु तदीयवैकुण्ठस्थावन्यावेव एतौ पुनस्तच्छक्त्यावेशिनाविति ॥ २-१८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—२८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कंसस्य चरितं वक्ष्यन् तत्क्रमात्तु पौण्ड्रकः ।
तथोक्तवानिति ह्युक्तं अर्थादेतद्वधस्य हि ॥
बलरूपहरेः कार्यं न समाप्तमिति स्थितिः ।
अतो विशेषतो वक्तुं प्रश्नो राज्ञो निरूप्यते ॥
अष्टादशे तु द्विविदवधः सम्यक् निरूप्यते ।
गोपिकानामिवात्रापि स्त्रीणां माहात्म्यबोधने ॥
बलक्रियाण्यथात्रत्र निरुद्धा न भवन्ति हि ।
तदा विभागो व्यर्थः स्यात् निरोधानुपयोगतः ॥
ततः सर्वकर्मनाश चरितं हि करिष्यति ।
यस्यावेशस्य चरितमेवं तस्य किमद्भुतम् ॥

पूर्वाध्याये नन्दव्रजं गते राम इति रामे विद्यमाने नैवं पौण्ड्रको वक्तुं शक्त इति प्रतिभाति अतो बलस्य विशेषं पृच्छति—भूयोऽहमिति । यमुनाकर्षणादिमाहात्म्यं श्रुतम् अन्यदपि श्रोतुमिच्छामि अद्भुतकर्मण इति अलौकिकचरितं तस्य वर्णत एव वक्तव्यमिति प्रश्नः यथा भगवतः कार्यकरणार्थं गते तस्मिन् वहेव कार्यं भगवत आपतितं तथान्यदपि भविष्यतीत्याशयेन अद्भुतकर्मत्वमुक्तम् अनन्तस्येति चरित्राणामप्यनन्तता तेन तादृशचरित्रबाहुल्यम् अप्रमेयस्येति स्वतः कल्पयितुमशक्यम् अत एव तादृशस्य अन्यदपि चरित्रं श्रोतुमिच्छामि तच्चरित्रं दैवाज्जातं न वक्तव्यं किन्तु समर्थो भूत्वा यत् कृतवान् तदेव वक्तव्यमिति ॥ १ ॥

निरोधे स्त्रिय एव मुख्या इति तदर्थमेव अन्यदिति निरूपयन् द्विविदवधमाह—नरकस्य सखा कश्चिदिति । नरकासुरो भगवता हत इति स्त्रीणामेवार्थ इति च तत्सखाप्येवमेव मारणीय इति वध्योपि स एतावत्कालमुपेक्षित इत्युक्तं कश्चिदिति विशेषतः दैत्यत्वेन वा देवत्वेनवा न ।नेवर्त्तव्यः द्विविद इति द्विधा वित् ज्ञानं यस्येति द्विःस्वभावोयं तेन रामावतारे भक्तोप्ययं साम्प्रतमन्यथा जात इति अनेन द्विःस्वभावा अपि वध्या एवेति निरूपितं वानर इति उपेक्षायां हेतुः भगवतैवार्द्धनराः कृताः पुनः किमर्थं वध्या इति तर्हि तद्वधे रामस्य किं माहात्म्यमित्याशङ्क्य माहात्म्यमाह—अथ भिन्नप्रक्रमेण सुग्रीवसचिवः चत्वारो मन्त्रिणः तस्य हनुमदादयः तन्मध्ये परिगणनात् तत्तुल्यतापि निरूपिता स इति स्वभावतोपि रामायणे प्रसिद्धः मैन्दस्य भ्रातेति रामायणे मैन्दशौर्यं निरूपितं तद्भ्रातापि तत्तुल्य इति ततोपि विशेषमाह—वीर्यवानिति ॥ २ ॥

तर्ह्येतादृशो महान् प्रसिद्धश्च कथं विरुद्धो जातः इति चेत् तत्राह—सख्युः सोपचितिमिति । नरको भगवता मारित इति अपचितिं कुर्वन् क्षुद्रः केनापि न प्रतिपक्षतया विचार्येत इति राष्ट्रविलम्बं कृतवान् यथा सर्वमेव राष्ट्रं नष्टं भवति नाशमेवाह—पुरग्रामेति । राष्ट्रविप्लवो यथा भवति तथेति सर्वक्रियासु सम्बध्यते पुराणि नगराणि ग्रामा अल्पाः आकराः रत्नादिस्थानानि घोषाः आभीरग्रामाः लौकिकास्त्रिविधा निरुक्ताः वैदिकादिदोषासिद्ध्यर्थं दोषा उक्ताः वह्निना वह्निदाहेन अनेन चौर्येण दाहो निरूपितः अन्यथा वह्निपदं व्यर्थं स्यात् अग्निना उपद्रवमुक्त्वा पर्वतैराह—कचित्स शैलानुत्पाट्येति स्थानादुत्पाट्य देशोपरि पातयित्वा देशस्थानं चूर्णयदिति सुतरामेव भगवदीयानित्याह—आनर्तान् सुतरामेवेति । तत्र हेतुः, यत्रास्ते नरकघाती गोविन्दः ॥ ३-४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गिरौ रैवतके क्रीडन् प्रेयसीभिरहन् कपिम् ।
कदर्थयन्तं द्विविदं सप्तषष्टितमे बलः ॥

कृष्णलीलायामत्यावेशाद्रामलीलां कांश्चिदुलङ्घ्य महामुनिरयं माधावत्विति पृच्छति—भूय इति । अद्भुतकर्मण इति स्वमज्जनार्थं नदीं कोपि स्वान्तिकं नानीतवानिति भावः । नचैतावदेव तत्कर्मेति वाच्यं यतोऽनन्तस्य न च तत्कर्माणि स्वं जानास्येवेति वाच्यं यतोऽप्रमेयस्य मादृशबुद्ध्या प्रमातुमशक्यत्वात् ॥ १ ॥

नरकस्य सखेति महाभक्तराजसुग्रीवसचिवत्वेपि दुस्सङ्गदोषस्यानर्थकारित्वज्ञापनार्थमुक्तं दुस्सङ्गस्यापि कारणं श्रीमद्

क्वचित्समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ।
देशान्नागायुतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥
आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ।
अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥ ६ ॥
पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ।
निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥ ७ ॥
एवं देशान् विप्रकुर्वन् दूषयंश्च कुलस्त्रियः ।
श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रमणे तस्य पूर्वमनादर आसीदिति ज्ञेयं यद्यपि मैन्दद्विविदादीनां श्रीरामपूजायामावरणदेवत्वाभिव्यक्तिरत्वमेव तदपि महदपराधदुस्सङ्गादिदोषज्ञापनार्थं जयविजयवदेकेन प्रकाशेनैव द्विविदस्य भ्रंशोयं दर्शितः ॥ २ ॥

सख्युर्नरकस्य अपचितिरानृण्यं राष्ट्रस्य विप्लवो नाशो येन तथा स्यात्तथाऽदहत् ॥ ३—४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुनर्बलभद्रचरितबुभुत्सु राजानं प्रति द्विविदवधरूपं तच्चरितं सप्तषष्टितमे वर्णयति ॥ १—२ ॥

अपचितिमानृण्यं राष्ट्रस्य विप्लवो नाशो यथा स्यात्तथा पुरादीनदहत् ॥ ३—४ ॥

भाषा टीका ।

राजोवाच ।

राजा परिक्षितजी श्रीशुकदेवजी के प्रति बोले कि आश्चर्य्य कर्म करने वारे और परिपूर्ण तथा जिनके स्वरूप रुप गुण विभूति का अन्त नहि ऐसे श्रीबलदेवजी के चरित्र को फिर भी श्रवण करने की मैं इच्छा करता हूं। इस लिये सर्व व्यापक श्रीबलदेवजीने जो कुछ अन्य कर्म किया है उस को आप कहियेगा ॥ १ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-नरकासुर का सखा और सुग्रीव का मन्त्री और वह मैन्द का भ्राता तथा स्वयं पराक्रमी कोई एक द्विविदनामा वानर रहा ॥ २ ॥

वह द्विविद निज सखा नरकासुर के ऋण को दूरकरने के वास्ते द्वारका के समीप देश का नाश जैसे होवै तैसेहि अग्नि लगाकर शहर ग्राम आनि ज्वाला लोगों के मकान को भस्मकरने लगा ॥ ३ ॥

और वह किसी काल में पर्वतन को उखाड़कर उनसे देशन का चूर करने लगा और द्वारका के समीप आनर्त देशन को तो अत्यन्त ही चूर करने लगा क्योंकि वहां मित्र नरकासुर के मारने वारे श्रीकृष्ण विराजमान रहे ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य समुद्रस्य जलं बाहुभ्यामुत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् प्लावयामासेति ॥ ५ ॥

आश्रमस्थान् वनस्पतीन् भङ्क्त्वा आहवनीयाग्निषु मूत्रादि कृतवान् ॥ ६ ॥

अप्यधात् पिदधे पेशस्कारी भ्रमरः ॥ ७-९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वेलाकूले वर्त्तमानानिति शेषः । कूलानिति पाठेपि स एवार्थः अयो आयत्न् प्राणो बलम् ॥ ५ ॥

ऋषिमुख्यानां भगवद्भक्तर्षीणाम् ॥ ६ ॥

योषितश्चेत्यन्वयः दृप्तः बलेन गर्वितः कीटकमिति जात्येकत्वम् ॥ ७ ॥

विप्रकुर्वन् पीडयन् एवमुत्तरेत्तरं तस्य दुष्टत्वाधिक्यं ज्ञेयम् अन्यच्चोक्तं श्रीविष्णुपुराणे ।

"कामरूपी महारूपं कृत्वा सस्यान्यशेषतः ।
लुठन् भ्रमणसम्मर्दैः सञ्चूर्णयति वानरः" ॥

इति ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अप्यधात् पिहितवान् छादितवान् पेशस्कारिवमपि प्रकुर्वन् अपीडयत् ॥ ७-१४॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिदिति । दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलम् उद्धृत्य उत्क्षिप्य

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वेलायां कूले वर्तमानान् देशानमज्जयत् तत्र हेतुत्वेन तं विशिनष्टि -नागायुतप्राणः नागानां गजानामयुतस्य दशसहस्रस्य प्राणं बलं यस्य सः ॥ ५ ॥

आश्रमानिति । ऋषिमुख्यानामाश्रयभूतान् वनस्पतीन् भस्मसात्कृत्वा दग्ध्वेत्यर्थः । भग्नवनस्पतीनिति पाठे भग्ना वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैः मलमूत्रैर्वैतानिकान् यज्ञीयानाहवनीयादीनग्नीनदूषयत् यतः स खलः दुरात्मा ॥ ६ ॥

पुरुषानिति । दुष्टो द्विविदो गिरेः कन्दरेषु गुहासु च निक्षिप्य शृङ्गैः गिरिशृङ्गैरप्यधात्पिहितवान् पेशस्कारी भ्रमरः कीटमिव ॥ ७ ॥

एवमिति । विप्रकुर्वन् पीडयन् तत्रतत्र कुलस्त्रीर्दूषयंश्च सललितं मधुरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वेलया समुद्रजलाभिवृद्ध्या कूलानीचभूमीः समुद्रतीरनिकटवर्तिदेशान् अनाशयदित्यर्थः ॥ ५ ॥

वैतानिकान् यज्ञसम्बन्धिनः ॥ ६ ॥

क्ष्माभृद्द्रोणीगुहासु पर्वतनितम्बगुहासु ॥ ७—९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जलकृतोपद्रवमाह--कश्चित्समुद्रमध्यस्थ इति । दोर्भ्यामुद्धृत्येति बाह्वोः स्थूलता निरूपिता देशान् समुद्रतीरस्थान् आपाततः केनापि मारयितुं न शक्यत इति वक्तुं नागायुतप्राण इत्युक्तं दशसहस्रहस्तिबलैः वेलाकूले यतेति मज्जने सौकर्यमुपपत्तिश्चोक्ता ॥ ५ ॥

साधारणानाम् उपद्रवमुक्त्वा वैदिकानामप्युपद्रवमाह-आश्रमानृषिमुख्यानामिति । तेषां पूर्तस्येष्टस्य च नाशं करोतीति वक्तुं भग्नवनस्पतीन् कृत्वा वैतानिकान् वैदिकान् अग्नीन् गार्हपत्यादीन् अदूषयत् नन्वेवं कृते स्वस्य कः पुरुषार्थः न हि ब्राह्मणाः नरकस्यान्यस्य वा द्विष्टा भवन्ति तत्राह---खल इति । दुरात्मायम् अतो निष्प्रयोजनमपि परोपतापार्थं करोतीति ॥ ६ ॥

देशोपद्रवं पृथिव्यप्तेजोभिरुक्त्वा वैदिकान् देशस्थानपि निरूप्य अन्यान् स्त्रीपुरुषसाधारण्येन तदुपद्रुतान् निरूपयति-- -पुरुषान् योषितो दृप्त इति । सह स्थितान् तत्सङ्गभङ्गार्थं रसश्च बीभत्सयितुं दृप्त उच्छृङ्खलः क्ष्माभृतः पर्वतस्य द्रोणीगुहासु द्रोण्याम् उभयपर्वतमध्ये गुहासु च अत्र रमध्वमिति । उपहसन्निक्षिप्य अप्यधात् शैलैः पर्वतैस्तदुपरि पर्वतान् आरोपयति तथा करणे हेतुमाह— पेशस्कारीव कीटकमिति । स हि स्वस्मरणेन स्वतुल्यः कीटो भवत्विति तथाकरोति तथायमपि विश्वस्यैव मदात्मकता भवतु न भगवदात्मात्मकतेति तथा कृतवान् ॥ ७ ॥

एवं सर्वमुपद्रवं निरूप्य तदुपसंहरन् असह्यं निरूपयति एवं देशान् विप्रकुर्वन्निति । असह्यमेतत् दूषयंश्चेति इतरदूषणं न दोषायेति कुलपदम् अनेन नरकगृहान् भगवता समानीतास्ता इति तथाकरोतीति सूचितम् एवमुत्कृष्टे पापे तेनैव मरणार्थं स्वयमेव समागत इत्याह-- श्रुत्वा सुललितं गीतमिति । यथा सर्वे विषयास्तेन निराकृताः सर्वेषां तथा सुललितमपि मयि स्थिते कोऽयं गायतीति तन्निराकरणार्थं रैवतकं ययौ तेनैव गीतानुमानात् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वेला समुद्रजलं तत्कूलभवान् देशान् पुंस्त्वमार्षम् ॥ ५—६ ॥

अप्यधात् आच्छादयामास ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेलायाः कूले वर्तमानान् ॥ ५ ॥

भग्ना वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैर्मलमूत्रैः वैतानिकान् यज्ञीयान् ॥ ६ ॥

अप्यधात् छादयामास पेशस्कारी भ्रमरः ॥ ७ ॥

विप्रकुर्वन् पीडयन् ॥ ८ ॥

---

भाषा टीका ।

दशहजार हस्तीन के समान बलवान् वह द्विविद कहूं समुद्र के मध्य मे खडा होकर दोनो भुजान की अञ्जलीन से जल को उठा कर समुद्र के तीर के देशन को डुबाने लगा ॥ ५ ॥

वह द्विविद वानर श्रेष्ठ ऋषीन के आश्रमन के वृक्षन का भङ्ग करके उन ऋषीन के यज्ञशाला के अग्नीन को विष्ठा और मूत्र से दूषित करता भया ॥ ६ ॥

वह गर्वधारी द्विविद पर्वतन की सन्धि और गुहान मे स्त्री पुरुषन को गेर कर पर्वतन के शिखरों से इस प्रकार करने लगा कि जैसे भौंरा कीडा को बिलये मूद देता है ॥ ७ ॥

इस प्रकार देशन को पीडित और जहां तहां अच्छे कुल की स्त्रीन को दूषित करत श्रीबलदेवजी के कराये हुए मधुर गान को श्रवण कर वह द्विविद गिरिनारपर्वत पर चलागया ॥ ८ ॥

---

तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम्।
सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥ ९ ॥
गायन्तं वारुणीं पीत्वा मदविह्वललोचनम्।
विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥ १० ॥
दुष्टः शाखामृगः शाखामारूढः कम्पयन् द्रुमान्।
चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन् ॥ ११ ॥
तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः।
हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

प्रभिन्नम मत्तम् ॥ १०-११ ॥

जात्या स्वभावेनैव चापलं यासां ताः ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्रेति युग्मकम्। यदूनां पतिमिति सर्ववैभवपूर्णत्वं परमसुखित्वादिकञ्चाह राममिति स्वभावत एव रमणरसिकत्वं पुष्करेति तदुपलक्षितविदग्धवन्यवेषत्वं सुदर्शनीयेति स्वतोऽपि सौन्दर्यं ललनेति तदुचितपरिकरशोभमानत्वम् ॥ ९ ॥

गायन्तमिति। वैदग्धीं विलासञ्च मदेति तत्र स्वाभाविकं विलासं वारुणीमिति तत्र तत्रातिशयं विभ्राजमानमिति तेजस्वित्वं दृष्टान्तस्तु प्राकृतश्रोतृचित्ते तत्कालिकशोभामाधुरीस्फूर्तिसोपानत्वाय ॥ १० ॥

एकशाखारूढत्वेऽपि बहुद्रुमकम्पनमतिघनीभूतत्वात् किलकिलाशब्दमव्यक्तरावमित्यर्थः। प्रकर्षेण बृहत्त्वप्रकटनेन तत्रापि मत्स्यत्वेन पराक्रमप्रकटनेन च दर्शयन् ॥ ११ ॥

विशेषेण उच्चैर्जहसुः यतो हास्यमेव प्रियं यासां ताः तत्र हेतुः, जातीति। तत्रापि तरुण्य इति नच महाधृष्टादपि तस्य भयादिकमित्याह— बलेति ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्रेति। तत्र रैवतकोपवने पुष्करमाला पद्ममालाऽस्यास्तीति तथा तं व्रीह्यादित्वान्मत्वर्थीय इनिः सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्य तं योषित्समूहमध्यगतम् ॥ ९ ॥

गायन्तमिति। वारुणीं मदिरां पीत्वा मदेन विह्वले घूर्णिते लोचने यस्य तं प्रभिन्नं मत्तं वारणमैरावतमिव स्थितं राममपश्यदितिसम्बन्धः ॥ १० ॥

दुष्ट इति। दुष्टश्चासौ शाखामृगश्च शाखामृग इत्यनेन स्वभावत एव दौष्ट्यं व्यज्यते। दुष्ट इत्यनेन तत्रापि किलकिलेत्यनुकरणम् आत्मानं स्वशरीरं दर्शयाञ्चक्रे ॥ ११ ॥

तस्येति। तस्य द्विविदस्य धार्ष्ट्यं दौष्ट्यं प्रागल्भ्यं दृष्ट्वा जात्या स्वभावेनैव चापलं यासां हास्यं प्रियं यासां ताः परिगृह्यन्त इति परिग्रहाः बलदेवस्य परिग्रहाः तत्प्रतिगृहीता इत्यर्थः। हेतुगर्भाण्येतानि अतो विजहसुः प्रहसितवत्यः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रभिन्नं मदजलक्लाविन्नम् ॥ १०—११ ॥

कपिजातिचापलं दृष्ट्वा ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो गीतकर्त्तारं दृष्टवानित्याह—तत्रापश्यदिति। तस्य मात्सर्योत्पत्त्यर्थं रामस्य दशगुणान् वर्णयति एतावन्त एव गुणा इति तत्रादावैश्वर्यं दृष्टवानित्याह—यदुपतिमिति। यादवानां स्वामी स्वामिचिह्नानि बिभर्तीति तथा ज्ञानं परिचयं प्याप्नोतीति वा अनेन कर्तुमकर्तुं सामर्थ्यमुक्तम् इदं लौकिकम् अलौकिकमाह—राममिति। विभक्तवीर्यत्वात्, सर्वलोकानुरञ्जनमपि तस्यासाधारणो गुणः स्वरूपतः कार्यतश्चोत्कर्ष उक्तः पुष्करमालिनमिति कमलमालया लक्ष्म्या वृत इति ज्ञापयन् भूषितत्वमाह—इत्यैश्वर्यादयश्च उक्ताः सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्येति सौन्दर्येण शारीरकीर्तिरुक्ता ललनायूथमध्यगमिति बहिः कीर्तिरुक्ता शोभाजनितैव कीर्तिरिति ॥ ९ ॥

गायन्तमिति। स्वानन्दपूर्णता ज्ञानफलरूपा निरूपिता वारुणीं पीत्वेति देहविस्मरणं ज्ञानफलं द्विविधमप्युक्तं मदेन विह्वले लोचने यस्येति बहिर्ज्ञानदृष्टिः विह्वला वैराग्यफलरूपा निरूपिता विभ्राजमानं वपुषेति विगतभ्राजनं वा विशिष्टभ्राजनं वा विकलतया उभयमपि वैराग्यं कार्यं भवति शरीरेण विराजमानं ततो वैराग्यस्वरूपमाह—प्रभिन्नमिव वारणमिति। त्यक्तमर्यादो भवति यः प्रकर्षेण भिन्नः स्वतन्त्रः एवं कारणफल सहिताः षट् गुणा भगवति निरूपिताः ॥ १० ॥

एतादृशमपि दृष्ट्वा स्वदौष्ट्यं प्रकटितवानित्याह—दुष्टः शाखामृग इति भगवन्तं दृष्ट्वा किलकिलाशब्दं चक्रे तज्जातीय-

ता हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः ।
दर्शयन् स्वगुदं तासां रामस्य च निरीक्षतः ॥ १३ ॥
तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ।
स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ॥ १४ ॥
गृहीत्वा हेलयामास धूर्तस्तं कोपयन् हसन् ।
निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलम् ॥ १५ ॥
कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः ।
तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

शब्दः तादृशः यदा स्वस्मिन् महत्त्वबुद्धिर्भवति तदा स्वजातिशब्दं कुर्वन्ति प्रकृते तु भगवन्तमपि दृष्ट्वा तथा करणे हेतुर्दुष्ट इति ख्यापयितुं शाखामृग इति भूमिं भूरुहं वा नाश्रयति किन्तु शाखा एव शाखाः चारूढ इति स्वल्पः स्वस्थाने स्थितो मत्तो भवतीति सूचितं द्रुमान् कम्पयन्निति स्वाश्रयाश्रयणमप्यवगणना निरूपिता तादृशस्यैश्वरावर्णना-युक्तेति निलीय रसजननार्थमपि तथा कुर्यादिति एवं ख्यापयितुमाह—आत्मानं सम्प्रदर्शयन्निति। स्वस्वरूपं गुह्यदेशं वा ॥ ११ ॥

अल्पस्यैवङ्करणमयुक्तमिति भक्तमिव तं दृष्ट्वा केवलेन तेन क्षोभो न भवेदपीति स्त्रीणां हास्यमाह–तस्य धार्ष्ट्यं कपेर्वीक्ष्येति तस्यापराधकरणात् वध्यस्य कपेस्तुच्छजीवस्य धार्ष्ट्यं तथा करणं वीक्ष्य तरुण्यो जात्यैव चपलाः स्ववयोपि स्वभावोपि तासामस्थिरतां सम्पादयतीति हास्यमेव प्रियं यासामिति इन्द्रियान्तःकरणधर्मोपि तादृश इति बलदेवस्य निर्भयस्य पूर्वोक्तस्य वा परिग्रहाः विवाहिताः स्त्रियः सर्वथा निर्भयाः अविद्यात्मकानां चतुर्विधगुणानां विद्यमानत्वात् विजहसुः रामस्तु न किञ्चिदुक्तवान् गणनाया एवाभावात् ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रभिन्नं प्रस्रुतम् ॥ ९–११ ॥

जात्या स्वभावेन चापलमगाम्भीर्यं यासां ताः ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रभिन्नं प्रस्रुतम् ॥ ९–१० ॥

जात्या स्वभावेन चापलं यासां ताः तत्रापि तरुण्यः विजहसुः हास्यं चक्रुः ॥ ११ ॥

हेलयामास भ्रूक्षेपैः सम्मुखागमनादिभिः आदिना दन्तप्रदर्शनादिसङ्ग्रहः रामस्य पश्यत इत्यनादरे षष्ठी राममनादृत्य तासां स्वगुदं दर्शयन् ताः हेलयामास अवज्ञातवान् ॥ १२ ॥

———

भाषाटीका।

उस पर्वत के उपवन में द्विविदने श्रीबलदेवजीको देखा वह बलदेवजी कैसे हैं कि यादवन के पालन करने वारे और कमल के पुष्पनकी माला धारण किये सुन्दर दर्शन के योग्य सर्व अङ्ग वारे तथा स्त्रीयों के झुण्ड के बीच में विराजमान ॥ ९ ॥

और वारुणी मदिराका पान करके गायरहे हैं मद-से जिन के नेत्र घूम रहे हैं मद मत्त हस्ति के समान गौर वर्ण शरीर करके प्रकाशमान ॥ १० ॥

इस प्रकार श्रीबलदेवजीको देखकर वह दुष्ट द्विविद वानर वृक्षकी शाखा पर बैठ कर वृक्षनको कम्पायमान करत् और उस कम्पन से अपने शरीरको दर्शावत् किल-किल इस प्रकार के शब्दको करता भया ॥ ११ ॥

तरुण अवस्थावारी स्वभाव से हि चपल और हास्य में प्रीतिवारी वे श्रीबलदेवजीकी स्त्रीजन उस वानरकी ढिठाई को देखकर हास्य करने लगीं ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

हेलयामासावजज्ञे निरीक्षतो निरीक्षमाणस्य तमनादृत्येत्यर्थः ॥ १३–१४ ॥

आस्फालयद्धर्षितां वासांस्याकृष्य पाटितवान् ॥ १५ ॥

विप्रचक्रे एवमपकृतवान् ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक् नानागातिमुखं यत्र तदादिभिः तासां ताः प्रति ॥ १३ ॥

तमित्यर्थकम् ॥ १४ ॥

कोपयन् कोपयितुं हसन् यद्वा पूर्वं कोपयन् पश्चात्तद्दर्शनेन हसन् बलं सर्वतोधिकबलमपि कदर्थीकृत्य मुहुः खेदयित्वा यतो मदेन गर्वेणोद्धतः अविनीतः उद्धत इति तु श्लेषः हेतुः बलवानिति ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देशांश्चैतदुपप्लवेनैव भग्नान् दृष्ट्वा अनुसन्धाय ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हेलयामास अपराधेन कलुषीचकार ॥ १५ ॥

विप्रचक्रे विकारः अनिष्टाचरणम् ॥ १६—१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ता इति । कपिर्द्विविदः भ्रूविक्षेपैः सम्मुखागमनादिभिः आदि-शब्देन दन्तप्रदर्शनादिसङ्ग्रहः स्वगुदं तासां दर्शयन् रामस्य पश्यतस्सत एव ताः हेलयामास अवजज्ञे ॥ १३ ॥

तमिति । ग्राव्णा पाषाणेन तं कपिं प्राहरत् स कपिः तं रामं कोपयन् हसंश्च हेलयामास अवमतवान् ॥ १४ ॥

किञ्च, निर्भिद्येति । इतो गर्वितः कलशं मदिरापात्रं निर्भिद्य योषितां वासांसि आकृष्य आत्मानं प्रापितवान् मदेनोद्धतो बलवांश्च कपिरेवं बलं रामं कदर्थीकृत्य तुच्छीकृत्य विप्रचक्रे ऽपचकार तं कपिं तस्याविनयं धार्ष्ट्यं दौष्ट्यं तेनोपद्रुतान् देशांश्च विलोक्य ॥ १५-१९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

हेलयामास अवज्ञाताञ्चक्रे सम्मुखादिभिः पुरः स्थित्यादिभिः ॥ १३-१८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उभयमपि स्वस्य हीनत्वापादकमिति तासामवगणनां कृतवानित्याह—ता हेलयामासेति । अवहेला मुखतः जाति-चेष्टाभिरपीत्याह—भ्रूक्षेपैः तिर्यक् निरीक्षणयुक्तैः सम्यक् मुखं यत्रेति सम्मुखादिभिर्विकारैः परितोऽग्रतश्च हेलनमुक्त्वा पृष्ठतोऽप्याह—दर्शयन् स्वगुदं तासामिति तूष्णीं भावेनावगणित इति रामस्याप्यवहेलनं कृतवानित्याह—रामस्य च निरीक्षत इति । निरीक्षतः सतस्तासामपि निरीक्षतीनां सतीनां दर्शने सर्वेषां साधारण्यस्यापि सङ्कोचो भवति अस्य तु तथात्वे न ज्ञानमिति दोषं वक्तुं वर्णितम् ॥ १३ ॥

ततो विचारमकृत्वैव अल्पदोषे अल्पैव शिक्षेति ज्ञापयितुं पाषाणप्रक्षेपमात्रं कृतवानित्याह—तं ग्राव्णेति । वानराः कृतोपकारादयो विषयाः चेति उपेक्षां परित्यज्य किमिति ग्राव्णा प्राहरत् तत्राह—क्रुद्ध इति । क्रोधे तस्याल्पस्य महदतिक्रमो हेतुः अनावेशात् हलमुशलस्मरणात् पूर्वं सर्वं कृतवान् तेन न विचारकृतो दोषः बल इति तस्य माहात्म्यं ज्ञात्वापि स्वस्य बलिष्ठत्वादेव तथा कृतवान् काकादिरिव कमलं निवारणार्थतां प्रहरणस्य निवारयति प्रहरतां वर इति । ततस्तेनैव व्यथितो भवेदिति तथा प्रकारं कृतवान्

स तु पूर्वं परमेश्वरस्य भक्त आसीदिति भगवत्स्वरूपपर्यवे तस्य जातं सामर्थ्यमनुवदति—स वञ्चयित्वेति तस्योद्धतस्य स्वत एव मरणार्थं प्रवृत्तस्य अपराधे असह्ये क्रोधान्मारणमिति वक्तुं तादृशमतिक्रममाह— ग्रावाणं वञ्चयित्वा मदिराकलशम् ॥ १४ ॥

गृहीत्वा हेलयामासेति यतो धूर्तः पानव्यसनिनां तदपहारे महान् क्रोधो भवतीति जानाति अपकारार्थं नेदं कारणं किन्तु कोपयन् केवलं कोपार्थताप्रदर्शनार्थं हसन् तर्हि पानार्थं नयनं भविष्यतीत्याशङ्क्य तत्कृतं चरित्रमाह—निर्भिद्येति । कलशं निर्भिद्य तथा कृते जीवनमपि गमिष्यतीति शङ्काभावाय आह—ततः स्थापितानि जलक्रीडोत्तरं परिधेयानि स्त्रीणां बलस्य च वासांसि च निर्भिद्य बहुधा छित्वा ततो बलमास्फोटयत् मल्ल इव युद्धाकारणार्थं बाहुस्फोटं कृतवान् नन्वल्पः कथमेवं करोतीत्याशङ्क्याह—बलवानिति । ननु बलोऽपि बलवान् नहि तुल्येष्वेवं क्रियते तत्राह—कदर्थीकृत्येति । तुच्छीकृत्य तदपि मनस्येवेति वक्तुमाह—मदोद्धत इति । विप्रचक्रे अपकारं कृतवान् ततो बलः विचारपूर्वकं भगवदाविष्टः तद्वधार्थं यत्नं कृतवानित्याह—तं तस्याविनयमिति । वस्तुतस्त्विदं ज्ञानमात्रं मुख्यस्तु अपराधः तदुपद्रुतान् देशान् विलोक्येति यद्यपि पूर्वं दृष्टं तथापीदानीं स्मृतमित्येके इदानीमेव भगवदावेश इति तस्य चापरोक्षज्ञानमेव सर्वत्रेति इदानीमेव दृष्टेति युक्तम् ॥ १५—१९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हेलयामास अवज्ञातवान् सम्मुखादिभिः सम्मुखस्थितिगतिमूत्रणादिभिः तासां ताः रामस्य निरीक्षमाणस्येत्यनादरे षष्ठी ॥ १३—१४ ॥

वासांसि शय्योपरिस्थितानि आस्फालयत् आकृष्य पाटितवान् ॥ १५ ॥

विप्रचक्रे एवमपकृतवान् ॥ १६—१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ग्राव्णा पाषाणेन ॥ १३ ॥

तं रामं कोपयन् हेलयामास अवज्ञातवान् ॥ १४ ॥

आस्फालयत् पाटितवान् इत्थं विप्रचक्रे अपकृतवान् ॥ १५-१७ ॥

---

भाषा टीका ।

वह द्विविद श्रीबलदेवजीके देखते२ उनका अनादर करके स्त्रीनको अपनी गुदा दिखावत् भ्रकुटीके चलाने करके तथा सन्मुख आना और दांतोका दिखाना इत्यादि वानर चेष्टा करके उन स्त्रीकी अवज्ञा करता भया ॥ १३ ॥

प्रहार करनेवारोंके मध्यमें श्रेष्ठ श्रीबलरामजी क्रोधित होकर द्विविदके प्रति पाषाणसे प्रहार करते भए, पश्चात् वह धूर्त द्विविद हंस कर बलरामजीको कोपि करावत प्राप्राण

क्रुद्धो मुसलमादत्त हलञ्चारिजिघांसया ।
द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ १७
अभ्येत्य तरसा तेन बलं मूर्द्धन्यताडयत् ।
तन्तु सङ्कर्षणो मूर्ध्नि पतन्तमचलो यथा ॥ १८ ॥
प्रतिजग्राह बलवान् सुनन्देनाहनच्च तम् ।
मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ १९ ॥
गिरिर्यथा गैरिकया प्रहारं नानुचिन्तयन् ।
पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ २० ॥

भाषा टीका ।

को उखाड़ कर मदिराके कलशको लेकर बलदेवजीकी अवज्ञा करता भया ॥ १४ ॥

मदसे उन्मत्त ढीठ और बलवान् वह द्विविद, बलदेवजी तथा स्त्रीयों के धरे हुए वस्त्रोंको फाड़कर इस प्रकार बलदेवजीको कुछ नहिं समुझ कर उनका अपराध करता भया ॥ १५ ॥

उस वानरकी उस दुष्टताको देखकर और उस कर के उपद्रवको प्राप्त हुए देशनको सुनकर श्रीबलदेवजी क्रोधित होकर उसके बध करनेकी इच्छा कर के हल और मुसल को लेते भए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शालं वृक्षम् ॥ १७—१८ ॥

सुनन्देन मुसलेनाहनत् अहनदित्यर्थः । मस्तिष्कं मस्तकावयवविशेषः ॥ १९ ॥

गैरिकया लोहितधातुना नानुचिन्तयन्नगणयन् ॥ २०-२३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्रुद्धः पुनरतिक्रुद्धः सन् [ पादेनैकेन ] पाणिनैकेनोत्पाट्य अभ्येत्य अभिमुखमेत्य ॥ १७—१८ ॥

प्रतिजग्राह स्वीकृतवान् अचलो यथेति तस्य तेनाकिञ्चित्करत्वं सूचितं तदिदं च क्षमा पौनःपुन्यं तस्य श्रीराघवेन्द्रसेवाप्राग्भावमनुसन्धाय कृतमिति गम्यते । मुसलेति युग्मकं । नानुचिन्तयन्नित्यस्य परेणान्वयः ॥ १९—२० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुनन्देनाहनत मुसलेनाहनत् ॥ १९-२३ ॥

अकलजत् अयोधयत् ॥ २४—२८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्रुद्धो रामः हलं मुसलञ्चाददे ॥ द्विविदोऽपीति । महद्वीर्यं यस्य सः द्विविदोऽपि सालवृक्षमुत्पाट्य ॥ १७ ॥

बलमूर्द्धनि रामभूर्द्धनि तेन सालेनाताडयत् । तमिति । पतन्तं न सालं प्रतिजग्राह गृहीतवान् तत्प्रहारमङ्गीकृतवानित्यर्थः । यथा पर्वतः तद्वत् ॥ १८ ॥

ततः सुनन्देन मुसलेन हरिं कपिमहनत्ताडयामास । मुसलेनाहतो मस्तिष्कः मस्तकावयवविशेषो यस्य सः अत एव रक्तधारया रेजे ॥ १९ ॥

यथा गिरिर्गैरिकधारया राजते तद्वत् ततस्तं प्रहारमनुचिन्तयन् पुनरन्यं रसालमोजसा बलेनोत्पाट्य पर्णरहितं कृत्वा ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गैरिकया गिरिधातुररूधारया ॥ १९-२० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मस्तिष्कं मस्तकमज्जा ॥ १९——२८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवता सहैव मुसलादीनामप्यागमनात् मुसलं हलञ्च तज्जिघांसया आदत्त आयुधवत् चिह्नार्थमग्रहणमाह—क्रुद्ध इति । अकृत्यशङ्काव्यावृत्त्यर्थमरीति चकारात् अन्यपि धर्मा भगवता आविष्कृता इति अलौकिकं बलमपि ज्ञातव्यं तावतापि न निवृत्त इति अक्लिष्टकर्मत्वं भगवतो वदन्नाह—द्विविदोऽपि इति । युद्धं वक्तुं तस्य प्रसिद्धनामग्रहणं महावीर्य इति रामायणादौ तत्पराक्रमो निरूपितः स्मार्यते युद्धस्मरणाभिनिवेशाय एकेन पाणिना सालवृक्षमुत्पाट्येति बलस्य कार्यं न तु केवलं प्रशंसापरमिति ज्ञापयितुम् अभ्येत्य निकटे समागत्य तरसा रामोद्यमात् पूर्वमेव तेन शाखेन मूर्द्धिप्रदेशे अताडयत्

तेनाहतस्सुसंक्रुद्धस्तं बलः शतधाऽच्छिनत् ।
ततोऽन्येन रुषा जघ्ने तञ्चापि शतधाऽच्छिनत् ॥ २१ ॥
एवं युद्ध्यन् भगवता भग्नेभग्ने पुनःपुनः ।
आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम् ॥ २२ ॥
ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः ।
तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥
स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः ।
आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥ २४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गृहीत्वैव लकुटेनेव ताडितवान् बलपदाच्छत्रोर्भयाभावः सूचितः । ततस्तन्निराकरणमाह—तन्तु सङ्कर्षण इति । पर्वते वृक्षप्रक्षेपः न पर्वतस्य भयजनक इति मूर्ध्नि पतन्तमपि वृक्षं यथा अचलः पर्वतो गृह्णाति ॥ १७—१८ ॥

तस्य हि वृक्षा लोमप्रायास्तं हस्तेन गृहीतवान् बलेनेपि भूमिस्ताडिता भवतीति ततः सुनन्देन मुसलेन तमहनत् हतवान् चकारात् वृक्षमपि तेनैव हत्वा तदुपरि प्रक्षिप्तवान् तस्य वृक्ष इव मुसलमपि कार्यव्यभिचारि भविष्यतीत्याकुल आह—मुशलाहतमस्तिष्क इति । मस्तिष्कं मस्तकमज्जा ततो रुधिरप्रवाहोपि जातः तेनापि विरेजे न तु मूर्च्छितो हतो वा ननु प्रहारेण सकार्येण कथं शोभेत्याशङ्क्य दृष्टान्तमाह—गिरिर्यथा गैरिकयेति । नन्वाकन्निसाम्येपि अन्तर्दुःखानुभावात् म्लानतैव युक्ता न तु शोभेति चेत्तत्राह—प्रहारं नानुचिन्तयत् रेज इति पूर्वेण सम्बन्धः उत्तरत्र वा पुनरन्यं सङ्कुतिक्षप्येति त्रिसत्या देवा इति समानमपि युद्धं वारत्रयमुच्यते त्रियजुःपेतिवत् अन्यं मूलात्समुत्क्षिप्य निष्पत्रञ्च कृत्वा अन्यथा सर्वाः शाखा अग्रभागे हस्ते धर्तुं न योग्या भवन्तीति मूलभागेन च ताडयितुं निष्पत्रकरणम् ओजसेति ॥ १९—२० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुनन्देन मुसलेन मस्तिष्कं मस्तकावयवविशेषः ॥ १९–२३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं सालं जग्राह तं वानरं सुनन्देन मुसलेन अहनत् ताडयामास ॥ १८ ॥

मुसलेन आहते मस्तिष्के मस्तकावयवविशेषो यस्य सः ॥ १९–२२ ॥

### भाषाटीका ।

महा पराक्रमी द्विविदभी हस्त से शालवृक्षको उखाड कर और वेगसे धाय कर उस वृक्ष से बलदेवजीको मस्तक में प्रहार करता भया ॥ १७ ॥

श्रीबलदेव भगवान् निज मस्तक पर गिरते हुए वृक्ष को हस्त से पकड लेते भए और उस के प्रहार से पर्वत के समान अचल बने रहे फिर सुनन्दनामा मूशल से द्विविद के प्रति प्रहार करते भए ॥ १८ ॥

मूशल से उसके कपाल में घाव होगया उससे रक्तकी धारा निकसी उस धारा करके द्विविद इस प्रकार शोभायमान भया कि मानो गेरू की धारा से पर्वत शोभायमान होवे और मूशल के प्रहार को उसने कुछ नहि गिना ॥ १९ ॥

पश्चात् अत्यन्त क्रोध कर दूसरे शालवृक्ष को उखारकर उसके पत्तान को झाड कर उस वृक्ष को श्रीबलदेवजी के ऊपर चलाका श्रीबलदेवजी ने उस वृक्ष को छेदन करके टुकडे कर दिया ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अरूरुजत्ताडयामास ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत इत्यर्द्धकम् । जघ्ने द्विविदः अभिमहलः ॥ २१ ॥

भगवतेति प्रायस्तत्कृतप्रहारप्रतीकारमेवाकरोत् न तु तं तदापि प्राणतो मारयत् लीलामात्रप्रयोजनत्वादिति भावः ॥ २२ ॥

ततो वृक्षाभावे सतीत्यर्थः ॥ २३ ॥

शिलानामप्यभावे सति बाहू मुष्टीकृत्य दृढबद्धकराग्रौ कृत्वा रोहिणीपुत्रमिति श्रीरोहिणीप्रेमकारणेन तत्र मुनेर्दुःखोक्तिः ॥ २४ ॥

यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले।
जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन् ॥ २५ ॥
चकम्पे तेन पतता सटङ्कः सवनस्पतिः।
पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि ॥ २६ ॥
जयशब्दो नमःशब्दः साधुसाध्विति चाम्बरे।
सुरसिद्धमुनीन्द्राणामासीत्कुसुमवर्षिणाम् ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तेन सालेनाहनत् तं साले बलो रामः शतधा चिच्छेद ततोऽन्यमुत्पाट्य प्रयुक्तं तथा चिच्छेद ॥ २१ ॥

एवमिति। प्रयुक्ते साले भग्ने सति सर्वतो वृक्षानाकृष्य तद्वनं वृक्षरहितं चकार ॥ २२ ॥

तत इति। बलस्य रामस्योपरि तच्छिलाजालं सर्वम् ॥२३॥

स बाहू इति। ताभ्यां मुष्टीकृताभ्यां बाहुभ्याम् अरुरुजत् ताडितवान् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अरुरुजत चूर्णयामास ॥ २१-२५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

शीघ्रं सुतरां सम्यक् क्रुद्धः प्रहारवीर्ययोराविर्भूतत्वात् तत्र प्रतिग्रहो न पीडयतीति बलस्तं शतधाच्छिन्नत् विदीर्णं कृतवान् तृतीयपर्याये पुनराह— ततोन्न्त्युद्धमर्तिविशति ततोऽन्येति। एवं युध्यन्निति। भगवता सह युध्यन् भगवतैव वृक्षभग्ने क्रमेण सर्वेष्वेव वृक्षेषु पुनः पुनः आकृष्य इक्षुदण्डमिव मूलादुत्पाट्य सर्वत एवं करणेन वनभूमिं निर्वृक्षमकरोत् लतागुल्मादीनां विद्यमानत्वात् वृक्षमात्रमेव गतं न तु वनमेव ॥ २१—२२ ॥

ततः पाषाणवृष्टिं अमोघमं कृतवानित्याह—ततो मुञ्चच्छिलावर्षमिति। तत्प्रहितं सर्वमेव चूर्णयामासेति तस्य साधनस्य भगवत्प्रतिकूलस्य पुनः साधनतां निवारयति तत्र क्लेशाभावमाह—लीलयेति। अलौकिकप्रकारं वारयितुमाह-मुसलायुध इति ॥ २३ ॥

ततो महासाधनो बाहुयुद्धार्थमागत इत्याह-स बाहू इति। तालसङ्काशाविति दीर्घत्वौद्धत्यवत्त्वाभ्युक्तानि मुष्टरत्नमुष्टीकरणं तयोरन्ते मोहितत्वं शङ्कितं व्यावर्तयितुमाह-कपीश्वर इति। मारणपर्यन्तं दूर्णां चित इति रोहिणीपुत्रमित्युक्ताभ्याम् इलाभ्यां मिलिताभ्याम् वक्षसि अरुरुजत् पीडां प्रापितवान् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मुष्टीकृत्य मुष्टिमन्तौ कृत्वेत्यर्थः। अरुरुजत् ताडयामास ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अरुरुजत् अताडयत् ॥ २३ ॥

जत्रौ कण्ठबाहुमूले ॥ २४ ॥

---

भाषा टीका।

फिर भी क्रोध करके द्विविदने तीसरे शालवृक्ष करके श्रीबलदेवजी के ऊपर प्रहार कि उसके भी बलदेवजीने सौ टुकडे कर दिये ॥ २१ ॥

इस प्रकार श्रीबलदेवजी के साथ युद्ध करते २ श्रीबलदेवजीसे वारम्वार वृक्षन का भङ्ग होता गया और वह द्विविद वारम्वार चारोतर्फ से वृक्षन को उखाडकर बलदेवजी के ऊपर फैंकता गया इस प्रकार करने से उस वनको वृक्ष शून्य कर देता भया ॥ २२ ॥

इसके अनन्तर द्विविद क्रोधित होकर बलदेवजी के ऊपर शिलान की वरषा करने लगा मुशलायुध धारी श्रीबलदेव जीने लीला हि करके उस सब शिला वर्षा का चूर्ण कर दिया ॥ २३ ॥

तब तो वह वानर शाल के समान दोनो हाथोंका मुका बांधकर बलदेवजी के पास आय कर मुका बँधे हुए दोनो हाथों से बलदेवजी के वक्षस्थल में प्रहार करता भया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यादवेन्द्रः सङ्कर्षणः क्रुद्धस्सन् जत्रौ कण्ठबाहुमूले ॥ २५ ॥

टङ्काः सतोयविवराणि तत्सहितः ॥ २६—२७ ॥

एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ।
संस्तूयमानो भगवाञ्जनैः स्वपुरमाविशत् ॥ २८ ॥
इति श्रीभागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे द्विविदवधो नाम
सप्तषट्षष्टितमोऽध्यायः ॥६७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जगतो व्यतिकरं नाशमावहतीति तथा तम् ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मुसललाङ्गली त्यक्त्वेति । तस्य निरायुधत्वेन तत्र्याच्चत्वात् दोर्भ्यां तद्वत् समुच्छ्रितयामेव अभित आर्दयत् आक्रमात् आर्षः स द्विविदः ॥ २५ ॥

सटङ्क इति । तेन अलप्लावनं व्यञ्जितं "जङ्घायामङ्घ्रिभित्तौ च खनित्रे ग्रावदारणे । कपित्थे चालियां टङ्कः" इति तु त्रिकाण्डशेषः ततश्च लावरण इत्यर्थः ॥ २६ ॥

साधु साध्विति शब्दश्चासीत् सुरादिषु इन्द्राणां श्रङ्गानाम् एते च शब्दाः सर्वेषां प्रत्येकमेवानन्दभक्तिविस्मयैर्जाताः भावभेदेन सुरेन्द्रादीनां यथासङ्ख्यमेव वा ॥ २७ ॥

जनैः स्वर्गस्वर्भूमिष्ठैश्च भगवानिति सार्वत्र्यकारुण्यादिव्यञ्जनात् एवं द्रोण्यादिषु द्विविदकृतलोकमोचनादिकञ्च ज्ञेयम् स्वशब्देन स्वजनसमागममहोत्सवश्च सूचितः ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।
इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यादवेन्द्रो रामोऽपि मुसललाङ्गलौ त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूलेऽभ्यर्दयदताडयत् स कपिः रुधिरं वमन्नुद्गिरन् पपात च ॥ २५ ॥

चकम्प इति । पतता तेन द्विविदेन कण्ठादिसहितो गिरिश्चकम्पे चचाल हे कुरुशार्दूल ! यथा वायुना नौरम्भसि कम्पते तद्वत् ॥ २६ ॥

जयशब्द इति । कुसुमानि वर्षन्ते इति तथा तेषां सुरादीनां यथायोग्यं जयशब्दादिरासीत् ॥ २७ ॥

एवमिति । जगतो व्यतिकरं नाशमावहत्यापादयतीति तथाभूतं द्विविदमेवं निहत्य जनैः संस्तूयमानो भगवान् रामः स्वपुरं द्वारकां प्रविवेश ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सकण्टकाः वनस्पतयो यस्मिन् स तथा ॥ २६ ॥

जगतो व्यतिकरं नाशमावहति करोतीति जगद्व्यतिकरावहस्तम् ॥ २७—२८ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
( श्रीविजयध्वजतीर्थरीत्या एकोननवतितमोऽध्यायः ॥ ८९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।
इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तषष्टितमोऽध्यायः ॥ ६७॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
सप्तषष्टितमोऽध्यायः ॥ ६७॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः स्वयमपि अशस्त्रेण सशस्त्रो न युध्येदिति स्वयमपि त्यक्त्वा मुसललाङ्गले दोर्भ्यां जत्राबभ्यर्दयत् तथा सामर्थ्ये धर्मे ज्ञाने च लौकिकमेव साधनमित्याह—यादवेन्द्र इति । ततः पूर्वमपि स रामभक्त इति तथाकरणं अनुः कण्ठास्थिस्थितमस्ति तस्मिन् भग्ने मृत एवेति अतो रुधिरं वमन् पतितः ॥ २५ ॥

तस्य पराक्रममुक्त्वा देहस्यापि महत्त्वमाह—चकम्प इति ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सटङ्क इति प्रसिद्धः पर्वतः स वनस्पतिसहितः सम्यक् पञ्चिमार्थम् एतदुक्तं सर्वतस्प्रकम्पे टङ्कशब्देन उपरितनः भागः वलभीसदृशः वप्रापरपर्यायः तत्सहितः पर्वत एव भवति सपर्वतपाठस्तु सुगमः विश्वासार्थं सम्बोधनम् अधिकाम्दोलार्थं दृष्टान्तः तत्रस्थानां भयोत्पादनार्थं वातेन तस्मिन् पतिते सर्वाः स्त्रियो रामसालिङ्गितवत्यः इति कामरसेन मध्यं न भिन्नः, किन्तु तत्पोषक एव जात इति फलति ॥२६॥

भक्तत्वादल्पत्वाच्च कदाचिदयुक्तो भवेदिति देवानां सम्मतिमाह— जयशब्द इति । उत्कृष्टानां जयशब्दः मध्यमानां नमःशब्दः शिष्टः साधुशब्द इति त्रिविधानामपि सम्मतिरुक्ता पूर्वं 'जयशब्दः आशीरूपः पश्चान्मारणार्थं प्रार्थनारूपो नमःशब्दः, साधुसाध्विति मारणानन्तरं द्विविदस्यन्यथावचने ततः पात एव भवेदिति सूचितं सुरसिद्धमुनीन्द्राणामिति त्रिविधानामपि तथात्वं कुसुमवर्षिणामिति कायिको व्यापारः ॥२७॥

एवं सर्वात्मना देवानामनुमोदनमुक्तं भूमिष्ठानामप्याह—एवं निहत्य द्विविदमिति । हनने हेतुर्जगतो व्यतिकरं नाशमावहतीति अत एव जनैः संस्तूयमानः एतावत्योपपत्तिर्भगवानिति पूर्वं तस्य प्रस्तापत्तिरनुक्तेति मध्ये भगवतः कार्यं पतितम् अग्रेऽपि तथा पतिष्यतीत्याशङ्क्य तस्य द्वारकाप्रवेश उच्यते स्वपुरमाविशत इति ॥ २८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे अष्टादशाध्यायविवरणम् ॥ १८ ॥ ६७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

त्यक्त्वा मुसललाङ्गलाविति तस्य निरायुधत्वे सति स्वस्यापि निरायुधत्वौचित्यात् जत्रौ कण्ठबाहुमूले ॥ २५ ॥

सटङ्कः भित्तिसहितः पर्वतः रैवतकः "जङ्घायामद्रिभित्तौ च खनित्रे प्रावदारणे । कपित्थे चाखियां टङ्कः" इति त्रिकाण्डशेषः ॥ २६—२८ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
सप्तषष्टितमोऽध्यायो दशमे ऽजनि सङ्गतः ॥६७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ २५ ॥

सटङ्कः सजलविवरसहितः ॥ २६—२७ ॥

जगतो व्यतिकरं नाशमावहतीति तम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तषष्टितमाऽध्यायार्थप्रकाशः ॥६७॥

---

भाषा टीका।

श्रीबलदेवजीभी क्रोधित होकर हल मूशलको छोडकर दोनों हाथन से उस के जावडे में प्रहार करते भए बलदेवजी के मारने से वह द्विविद मुख से रुधिरकी वमन् करत् भूमि पर गिर पडा ॥ २५ ॥

हे कुरुशार्दूल ! गिरते हुए द्विविद करकें जल के टीकेने सहित और वनस्पति सहित वह पर्वत इस प्रकार कम्पायमान होगया कि जैसे जल में पवन करके नौका कम्पायमान हाव ॥ २६ ॥

पश्चात् देवता और सिद्धजन तथा मुनीश्वरोंने बलदेवजी के ऊपर पुष्पनकी वर्षा करी और हे श्रीबलदेवजी ! आपकी जय होइ और आपके अर्थ हमारी नमस्कार है। और आपने इस द्विविदका बध किया इसलिये लोक में मङ्गल भया इस प्रकारका शब्द आकाश में देवादिकनका होता ॥ २७ ॥

जगत्के नाश करने वारे द्विविदको इस प्रकार मारि कर देवता आदि जनों से जिनकी स्तुति होरही है ऐसे बलदेव भगवान् द्वारका पुरी आइ गया ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धमें सरसठके अध्यायकी भाषाटीका समाप्ता ॥ ६७ ॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ।

—:०:—

### श्रीशुक उवाच ।

दूर्योधनसुतां राजन्लक्ष्मणां समितिंजयः ।
स्वयम्वरस्थामहरत्साम्बो जाम्बवतीसुतः ॥ १ ॥
कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ।
कदर्थीकृत्य नः कन्यामकामामहरद्बलात् ॥ २ ॥
बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः ।
येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥ ३ ॥
निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः ।
भग्नदर्पाः शमं यान्ति ( १ ) प्राणा इव सुसंयताः ॥ ४

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टषष्टितमे साम्बे निबद्धे कौरवैर्युधि ।
तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥

रामचरित्रान्तरं निरूपयितुमाह-दुर्योधनसुतामिति । समितिंजयः सङ्ग्रामजित् ॥ १—२ ॥

नोऽस्माकं महीमस्माभिर्दत्ताम् न ते भूपतय इति भावः ॥ ३ ॥

शान्ति यास्यन्ति प्राणा इन्द्रियाणीव सुसंयताः प्राणायामादिभिर्दमिताः ॥ ४ ॥

—

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

"हृतो यदैव प्रद्युम्नः शम्बरेणात्मघातिना ।
मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यामजायत" ॥

इति श्रीहरिवंशोक्त्या प्रायः प्रद्युम्नसमवयस्कत्वाच्छ्रीसाम्बस्य पूर्ववृत्तमपि विवाहं श्रीबलदेवविक्रमप्रसङ्गादत्राह-दुर्योधनेत्यादिना । पूर्वं टीकायां प्रद्युम्नजन्मजाम्बवत्यादिविवाहयोर्व्यतिक्रमेण स्वीकारस्त्वत्र यथाक्रमश्रवणापेक्षयेति ज्ञेयम् । जाम्बवत्याः सुत इति तस्याः सौभाग्याधिक्यसूचनेन तस्मिन् पितृस्नेहाधिक्यं दर्शितम् अत एव तस्यास्तत्समसुन्दरपुत्रप्रार्थनया श्रीभगवता स्वयमेकवराशिवस्य माहात्म्यं तन्वता तमाराध्य स प्राप्त इति दानधर्मे अत एव स्नेहेनम्बया सह सदा वर्तत इति साम्बः अत एव च तत्र तद्विशेषणत्वं तस्य श्रूयते एवं सति जाम्बवतीसुतस्याख्य नाम्नि दन्त्यपवर्गोष्मा न तु तालव्य इत्यायातम् ॥ १ ॥

कौरवाः दुर्योधनादयः अर्भकोपि विनयरहितः सगर्व इत्यर्थः । यद्वा अर्भकोऽयं विद्यादिभिराशिक्षित इति तामध्यधिक्षिपन्ति यतः कदर्थीकृत्य खेदयित्वा तत्रापि अकामां तद्वरणेच्छारहिताम् ॥ २ ॥

बध्नीतेति हननिषेधो द्योत्यते स चाधुना तत्स्पृष्टायाः कन्यायाः वरान्तरायोग्यत्वेन जामातृत्वावश्यकत्वात् श्रीभीष्मविदुरादीनां तथा सम्मतेश्च अत एवाग्रे जिघृक्षव इति बन्धने हेतुः दुर्विनीतमिति अन्यथाऽस्माकं पराभव एव जनैर्दृश्यत इति भावः ॥ ३ ॥

शमं यान्ति अस्माकं वश्या भविष्यन्तीत्यर्थः । दुर्दान्तानामपि वश्यत्वे दृष्टान्तः प्राणा इति ॥ ४ ॥

—

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ॥

॥ १—४ ॥

—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रामस्यैव चेष्टितान्तरमनुवर्णयितुमुपोद्घातमाहाष्टषष्टितमेन

---

(१) धीर्यवन्ता इवाशवः इति विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुर्योधनसुतामित्यादिना । समितौ सङ्ग्रामे जयतीति तथा समितिश्शत्रुस्तं जयतीति वा स जाम्बवत्याः सुनः साम्बो लक्ष्मणां नाम दुर्योधनस्य सुतां स्वयम्बरस्थां हृतवान् ॥ १ ॥

कौरवा इति । उक्तिमेवाह—दुर्विनीत इत्यादिना सुसंयता इत्यन्तेन । नोऽस्मान् कदर्थीकृत्य तुच्छीकृत्य बलादकामयमानामपि कन्यामहरत् ॥ २ ॥

अत एव दुर्विनीतं मूर्खं बध्नीत बन्धयत वृष्णयः किं करिष्यन्ति न किमपीत्यर्थः । तत्र हेतुः, य इति. ये वृष्णयः अस्माकं प्रतापेन पराक्रमेण उपचितामेधितां समृद्धामिति यावत् नोऽस्माभिर्दत्ताञ्च महीं भुञ्जते अनुभवन्ति ते न भूमिपतयो बभूवुरिति भावः ॥ ३ ॥

निगृहीतमिति । निगृहीतं बद्धं सुतं श्रुत्वा यदि वृष्णयः आगमिष्यन्ति तर्हि भग्नो दर्पो येषां ते तथाभूताः शमं शान्तिं यास्यन्ति सुसंयताः प्राणायामादिभिः दमिताः प्राणा इन्द्रियाणीव ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समितिशब्देन सङ्गरसभे गृह्येते उभे अपि शस्त्रेण वाचा जयतीति समितिञ्जयः अश्मस्थयो मुमागमो ऽनुस्वारः समितिः संगरसभयोरित्यभिधानम् ॥ १ ॥

अकामां कुमारकामविधुराम् ॥ २ ॥

अस्मत्प्रसादेनोपचिताः सम्वर्धिताः अत एव नो महीं भुञ्जते दत्तामस्माभिरिति शेषः ॥ ३ ॥

निगृहीतं बद्धं शीर्णदन्ताः भग्नदन्ताः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—१८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—५४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत्यलौकिकमाश्चर्यचरित्रमधुनोच्यते ।
एकोनविंशे रामस्य सर्वलोकातिशायिनः ॥
एवं रामस्य कृष्णस्य त्रितयं त्रितयं द्वयोः ।
चरित्रमीरितञ्च स्यात् षड्गुणानां विभागकृत् ॥
धर्मः सिद्धो भगवति कर्मसिद्धः तथापरे ।
अद्वितीयहरिस्त्वन्तु कृष्णे सिद्धं फलन्ततः ॥
जगद्दोषनिवृत्तिस्तु रामे सिद्धा हि साधने ।
अलौकिकं साधनत्वं रामे कृष्णे फलं तथा ॥
अन्नावान्तरभेदानां धर्मिणः पृथगीरिताः ।
विभागज्ञापनार्थाय यथैवं विनिरूप्यते ॥
यमुनायां पर्वते च कृतं पूर्वं निरूपितम् ।
गङ्गायामपि यत्कार्यं तदत्र स्फुटमुच्यते ॥
लक्ष्मणोद्वहने बद्धः साम्बो रामेण मोचितः ।
निगृहीता विपक्षाश्च तदत्र विनिरूप्यते ॥

पूर्वाध्याये दुष्टनिवारणलक्षणं चरितमुक्त्वाशिष्टशिक्षणरूपं चरित्रमाह—तत्र साम्बहृतलक्ष्मणा प्रसङ्गभूता निरूप्यते, दुर्योधनसुतामिति । राजमिति राजकन्यायाः स्वयम्बर एव धर्म इति ज्ञापयति लक्षणैर्विशिष्टेति लक्ष्मणा सर्वत्र भगवदीयाः स्वयम्बरं गच्छन्ति तत्र सकामामकामां वा बलं विचार्याविचार्य वा हरन्ति तथा ऽयमपि अविचार्यैव स्वयम्बरस्थाने तूर्णीं स्थितामहरत् समितिञ्जय इति तस्य धार्ष्ट्ये हेतुः जाम्बवतीसुत इति अविचारे ॥ १ ॥

एवं हरणे निमित्ते जाते कौरवाणां भगवन्मार्गोल्लङ्घनं जातम् अपराधं निरूपयति—कौरवाः कुपिता ऊचुरिति त्रिभिः । पाण्डवा अपि कौरवाः तथापि ते न तत्र तिष्ठन्ति यद्यपि भीष्मादयः भगवद्भक्ताः तथापि मर्यादा स्थिता इति शास्त्रव्यतिरेकेण भगवदीयानपि न मंस्यन्ते वरणानन्तरमेव कन्या तदीया भवतीति बलाद्धरणं सम्भाव्य कुपिता जाताः कौरवाः महान्तः कुलकर्मभ्यां श्रेष्ठा ऊचुः स्वगोष्ठ्यामेव दुर्विनीतोऽयम् अर्भक इति महतो बालकस्य विनयोऽपेक्ष्यते तदत्र नास्तीति बन्धनेपि न दोष इति अथवा कैश्चिदुक्तं दुर्विनीतोयमिति कैश्चिदर्भक इति दोषाभावार्थमनेन हृतापि दुष्यतीत्यपि सूचितं नहि बालकस्पृष्टा दुष्यति ननु को दोषः कुतो निवार्यत इति चेत् तत्र दोषमाह—कदर्थीकृत्येति । अस्मान् तिरस्कृत्य क्षत्रियाणां मानं हृत्वा नोऽस्माकं कन्या कुलीनानाम् अनेन ज्ञापकता न कुलीन इति सूचितं किञ्च कन्याप्यकामा वरणं दूरे इच्छापि तस्या नास्ति नन्ववश्यं केनचित् नेया देयैव च कन्या, तत्राह—बलादिति । क्षत्रियाभासेभ्य एव बलिष्ठैर्नीयते बलात् ॥ २ ॥

तर्ह्येवं सति किं कर्तव्यं तत्राहुः, बध्नीतेमं दुर्विनीतमिति । दुर्विनय एवं बन्धने हेतुः नन्वेवं कृते यादवाः क्रोधं करिष्यन्तीति चेत्तत्राहुः—किं करिष्यन्ति वृष्णय इति । कथं न करिष्यन्तीति आशङ्कायामाहुः—येऽस्मत्प्रसादोपचितामिति । उपजीव्यत्वात् अस्मासु क्रोधं न करिष्यन्ति स्वयमागत्य युद्धादिकरणसम्भावनैव नास्तीत्याहुः, येऽस्मत्प्रसादोपचितां जीवनपर्याप्ता तु सेवायामपि प्राप्यते कृष्यादिना च अतः पुष्टा प्रासङ्ग्यात्स यादवानां स्वाभाविकी न भवतीति परकीया प्राह्या तस्य परस्परदुर्बलत्वेपि न्यायसिद्धत्वात् बलिष्ठैः सेवया रक्ष्यते तत्र पक्षपाते भूमिस्तस्य गच्छति तथा यादवानाम् अस्मत्प्रसादोपचिता भूमिर्भवति किञ्च मण्डलेश्वरराज्ञा तत्तद्भूमिस्तेभ्यस्तेभ्यो दीयते यदाभिषिक्तो भवति अतो वयं पूरुवंशोद्भवत्वात् राजानः अतः सामान्यविशेषप्रकारेण अस्मद्दत्तामेव भूमिं भुञ्जते ॥ ३ ॥

ननु, पुत्रे धृते भूम्यपेक्षामपि त्यक्ष्यन्तीति चेत्तत्राहुः निगृहीतं सुतं श्रुत्वेति । भग्नो दर्पो येरिति स्तुतिः येषामिति निग्रहं यदीति श्रुत्वा नायास्यन्त्येव यथा कृपया ऽस्माभिर्भूमिर्दीयते तथा पुत्रमपि प्रेषयिष्यन्तीति विश्वासात् तदा प्रेषयिष्याम

इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ।
विजय पाठः। (सदुःशासनगान्धारी दुर्मन्त्रैकान्तशीलिनौ ।
एतेऽतिक्रम्य विदुरं गान्धारीञ्च यशस्विनीम् ।)
साम्बमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः ॥ ५ ॥
दृष्ट्वाऽनुधावतः साम्बो धार्तराष्ट्रान् महारथः ।
प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥
तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः ।
आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन् ॥ ७ ॥
सोपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः ।
(१) नामृष्यत्तदचिन्त्यार्भः सिंहः क्षुद्रमृगैरिव ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इति इत्थम् अथ यदि अस्मासु विश्वासं कृत्वा अस्य धा बलोत्कर्षं मत्वा आयास्यन्तीति तत्रापीह विषमदुर्गं तदा पूर्वसिद्धोऽपि दर्पः अत्रापक्षीणो भविष्यतीति सम्यं शान्तिमेव यान्ति ते नूनमुपजीवका इति न निराकार्याः किन्तु बहुकालं निरुद्धाः सन्तः गतदर्पाः प्रार्थनया गृहं गमिष्यन्तीति भावः। यद्वा यथा इयाम्यन्ति तत्र दृष्टान्तमाह—प्राणा इवेति। यद्यपि अन्येषां प्राणाः स्वतन्त्रा भवन्ति तथापि योगिनः संयता यथेति आत्मानं योगिस्थानीयं मन्यन्ते ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अष्टषष्टितमे साम्बे निरुद्धे कुरुभिर्हली।
दुरुक्त्या कोपितश्चक्रे गजाह्वयविकर्षणम् ॥
समितिञ्जयः सङ्ग्रामजित् ॥ १—२ ॥
नोऽस्माकं महीमस्माभिर्दत्तां न ते भूपतयः इति भावः ॥ ३ ॥
शान्तिं यास्यन्ति प्राणा इन्द्रियाणीव ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथाष्टषष्टितमे रामचरितान्तरं वर्णयितुं प्रथममुपोद्घातमाह—दुर्योधनसुतामित्यादिना। समितौ सङ्ग्रामे जयतीति तथा ॥ १–२ ॥
ये अस्माकं प्रसादेन पराक्रमेणापचितां समृद्धां नोऽस्माभिर्दत्तां महीं भुञ्जते न अतो महीपतय इति भावः ॥ ३ ॥
शान्तिं यास्यन्ति प्राणा इन्द्रियाणि ॥ ४ ॥

भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले कि हे राजन्! दुर्योधन की पुत्री लक्ष्मणा का स्वयम्बर रहा वहां से संग्राम को जीतने वारे जाम्बवती का पुत्र साम्ब उस को हरता भया ॥ १ ॥

तब तो कौरव परस्पर में बोले कि हम को तुच्छ समझ कर इस साम्ब की कामना नहि करने वारी हमारी कन्या का इसने जबरदस्ती से हरण किया है इस लिये यह साम्ब बालक दुःख से भी नम्र होने का योग्य नहि है ॥ २ ॥

इस वास्ते इस दुष्ट स्वभाव वारे साम्ब को बाँधलो और जो हमारी प्रसन्नता से दई भई पृथिवी को भोगते हैं वे यदुवंशी क्या करेंगे ॥ ३ ॥

जो कदाचित् साम्ब को बंधा सुन कर युद्ध के वास्ते यादव यहां आवेंगे तो प्राणायाम से दमन किये, इन्द्रियें जैसे शान्ति को प्राप्त हो जाते हैं तैसे हि अहङ्कार भग्न हो कर शान्ति को प्राप्त हो जावेंगे ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

कुरुवृद्धो भीष्मस्तेनानुमोदितास्तत्सहिताः बद्धुं इत्यर्थः ॥ ५–६
कर्णोऽग्रणीर्येषां ते ॥ ७ ॥
नामृष्यत् असहत् अचिन्त्यस्य भगवतोऽर्भोऽर्भकः अचिन्त्यप्रासादार्भोऽर्भेति वा ॥ ८–९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

शलादयश्चायः सोमदत्तपुत्राः तत्र यज्ञकेतुर्भूरिश्रवाः। कुरुवृद्धेति तेषामुत्साहकारणं तेन तु तेषामभिमानवञ्चनार्थमेवानुमोदनमिति। ज्ञेयम् ॥ ५ ॥
प्रकर्षेण सज्जीकरणादिना गृहीत्वा ॥ ६ ॥
सन्धर्णाकिरन् व्याप्नुवन् ॥ ७ ॥
अतिशयेन विद्धः पाठान्तरे अपकर्षणात् विद्धः हे कुरुश्रेष्ठेति पूर्वेषां दुर्विनयेन लज्जमानं राजानं सान्त्वयति यदुनन्दन इति—

(१) नामृष्यत परिभवं स्वपाहत इवोरग इति विज० पाठः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"बाल्यात्प्रभृति रामेण सोऽस्त्रेषु विनियोजितः ।
रामादनन्तरश्चैव मानितः सर्ववृष्णिभिः" ॥

इति श्रीहरिवंशोक्तं माहात्म्यं सूचयति स्वरूपतश्चाऽचिन्त्यार्भः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं निश्चित्य कर्णादयः कुरुवृद्धैः धृतराष्ट्रादिभिरनुमोदिताः साम्बं बद्धुमारेभिरे आरब्धवन्तः ॥ ५ ॥

दृष्ट्वेति । अनुधावतः पृष्ठतः आगन्तून् दृष्ट्वा एकश्चोऽसहायः सिंह इव तस्थौ ॥ ६ ॥

तत इति । ते धार्तराष्ट्राः तं साम्बं जिघृक्षवः गृहीतुमिच्छवः कर्णः अग्रणीः पुरतो नायको येषां तथाभूताः आसाद्य समीपमेत्य बाणैः समाकिरन् पिदधुः ॥ ७ ॥

स इति । हे कुरुश्रेष्ठ ! कुरुभिरभितो विद्धस्ताडितः स यदुनन्दनः साम्बः अचिन्त्यस्य भगवतोऽर्भः अर्भकः हेतुगर्भमिदमतस्तद्वेधनं नामृष्यत् न सेहे तत्र दृष्टान्तः क्षुद्रमृगैर्विद्धः सिंह इव ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एते इत्यचक्षोक्य साम्बं बद्धुमारेभिरे असत्कृताः विनाभूताः ॥ ५ ॥

एकलः अपुरुषद्वितीयः ॥ ६ ॥
जिघृक्षवः ग्रहीतुकामाः ॥ ७-८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतादृशं वाक्यं भीष्मादीनामपि चेत्तदा सम्बद्धार्थमपि भवेदिति वकुन् गणयन्तीति इतिशब्दः प्रकारवाची एवं विधान्यन्यान्यपि वाक्यानि दुष्टाश्चत्वारो वकाराः ये भारते कर्णः शलः भूरिश्रवसो भ्राता भूरिः यज्ञकेतुश्च तेषामेव प्रधानभूताः त्रय एते मध्ये दोषरूपा गणिताः चतुर्णां प्रधानभूतावाद्यन्तयोर्गणितौ दुःशासनोऽप्यग्रानुसन्धेयः अग्रे षड्रथानिति षड्मापि साम्बं बद्धुमारेभिरे परितः समागत्य धृत्वा बन्धनीय इति. ननु जामाताऽयं जात एव तथा सति बन्धने कुले दूषणं भवेदित्याशङ्क्याह-कुरुवृद्धानुमोदिता इति । अनेनैतत्कथानिरूपणस्य दशमे प्रयोजनमुक्तं यतो भक्ता अप्येते बहिर्मुखा जाताः अतः सात्त्विका अपि निरोधयोग्या इति अन्यथा निरोधो न युक्तः स्यात् ॥ ५ ॥

ततोऽस्य साम्बस्य त्रिधा गतिः सम्भवति कन्यया सह पलायनं तां त्यक्त्वा वासं सुखतया युद्धं दैन्यं चेति तत्र पलायनदैन्ये अकृत्वा युद्धार्थमुद्युक्त इत्याह—दृष्ट्वाऽनुधावत इति । अनुद्रुतमग्रे आत्मानं धर्मंमनुधावतः षड्थान् दृष्ट्वा साम्बः तेपि पुत्राः पितुरेव पुत्रा धार्तराष्ट्राः अयन्तु महारथो न पितुर्न मातुरग्रे वद इति इदानीं युध्यतीति रुचिरं चापमिलषितं चापं परिगृह्य सान्तरङ्गसेवकेष्वपि पलायितेषु एकलः एक एव तस्थौ शङ्काभावाय सिंह इवेति न हि सिंहः सहायमपेक्षते ॥ ६ ॥

ततस्ते स्थितमपि स्वप्रौढिख्यापनार्थं ग्रहणेच्छया न मारणीय इति दूरात् बाणप्रयोगमकृत्वा आसाद्य निकटे समागत्य धन्विनो भूत्वा कर्णं पद्मप्रणीयैषां ते धनुर्विद्यायामतिनिपुणाः षट्च बाणैः समाकिरन् ॥ ७ ॥

ततो भीतस्य दैन्यमाशङ्क्य निराकरोति—सोपि विद्ध इति । न केवलं परितो बाणप्रक्षेपः किन्तु सोपि विद्धः अपिशब्दाश्चाः सारथिश्च निपुणास्त इति न कन्या विद्धा स्वयंशस्य हीनतां मत्वा श्रवणे विरक्तो भविष्यतीति तन्निराकरणार्थं सम्बोधनं कुरुश्रेष्ठेति । ते तु कौरवमात्रमत एव कुरुभिरिति अग्रे पौरुषं करिष्यतीति यदुनन्दनः तत्तेषां वेधनं नामृष्यत यतः अचिन्त्यस्य भगवतः अर्भो बालकः यस्य पिता अन्यैरपि न चिन्त्यः स कथं स्वयं चिन्तां कुर्यात् मौर्ख्यादप्येवं भवति ज्ञानादपीति तत्पक्षद्वयं निराकर्तुं दृष्टान्तमाह—सिंहः क्षुद्रमृगैरिवेति । न हि शृगालादिपीडां सिंहो मन्यते ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शलादयश्चयः सोमदत्तपुत्राः यज्ञकेतुर्भूरिश्रवाः कुरुवृद्धो भीष्मस्तेनानुमोदिता इत्येतत् स्पृष्टायाः कन्यायाः वरान्तरायोग्यादयमेव वरो भवेत् किन्त्वेतदन्यायस्वशौर्यद्योतनार्थं-मयं बन्धनीय एव ननु वध्य इति कृतानुमोदनाः तत्र तेनापि सहिताः कर्णादयः षडित्यर्थः ॥ ५—६ ॥

समाकिरन् सम्यगाकीर्णं चक्रुः ॥ ७ ॥

अपविद्धः अपकर्मणा अन्यायेन विद्धः नामृष्यत् नसहत अचिन्त्यस्य भगवतोऽर्भः ॥ ८—९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कुरुवृद्धेन भीष्मेणानुमोदिताः तत्समाहिताः ॥५-७॥
अचिन्त्यस्य श्रीकृष्णस्यार्भः नामृष्यत् नासहत् ॥ ८-११ ॥

भाषाटीका ।

इस प्रकार कौरवन में वृद्ध भीष्म से अनुमति को प्राप्त हो कर कर्ण शल भूरिश्रवा यज्ञकेतु दुर्योधन भीष्म ये (६) महारथी साम्ब को बांधने के वास्ते प्रारम्भ करते भए ॥ ५ ॥

अपने पाछे धाय कर आने वारे धृतराष्ट्र के पुत्रों को देख कर महारथी साम्ब सुन्दर धनुष को लेकर सिंह के समान अकेला हि खड़ा हो गया ॥ ६ ॥

कर्ण जिन में अग्रगामी ऐसे कौरव साम्ब को पकड़ने की इच्छा कर तू खड़ा रह २ इस प्रकार संभाषण करते साम्ब

विस्फूर्ज्य रुचिरं चापं सर्वान् विव्याध सायकैः ।
कर्णादीन् (१)षड्रथान् वीरस्तावद्भिर्युगपत्पृथक् ॥ ९ ॥
चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् ।
रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् ॥ १० ॥
तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ।
एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ ११ ॥
तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि ।
कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ १२ ॥

भाषा टीका ।

के प्रति आयकर बाणों से उस को ढकदेते भए ॥ ७ ॥

हे कुरुश्रेष्ठ! वह अतर्कणीय साम्ब बालक यदुनन्दन इस प्रकार अन्याय से बाणों कर सिद्धहुआ उस वेधन को सहन नहि करता भया जैसे छोटे २ मृगों से ताडित सिंह नहि सहन करता ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्प्रपञ्चयति—चतुर्भिरिति । चतुर्भिश्चतुर इत्यत्र वीप्सानुसन्धेया तत्कर्म ते सम्मानितवन्तः ॥ १०—११ ॥

स्वस्य दुर्योधनस्य कन्यां च नीत्वेतिशेषः ॥ १२—१३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विस्फूर्ज्येति युग्मकम् । गाढमाकृष्य रुचिरं यथा स्यात् तावद्भिः षड्भिः पृथक् प्रत्येकं तत्रापि युगपत् अभितः अपूजयन् शशंसुरित्यर्थः । ... अपूजयन् शश्लाघिरे ॥ ९—१० ॥

कथं चक्रुस्तदाह—चत्वार इति पद्याभ्याम् एकः कर्णः अन्यो भीष्मः ॥ ११ ॥

विरथीकृत्य पश्चाद्बद्ध्वा अन्यथा तत्राशक्तेः कन्यां चादायेतिशेषः । कुमारमिति । प्रौढैर्बहुभिर्बहुभिश्च बालकस्यैकस्य बन्धनादिकमन्याय्यमिति भावः । जयिनः सन्तः अविशन्नित्यार्षं इत्युक्तत्वादेतदपि श्रीमदनिरुद्धवच्छ्रीभगवल्लीलाविशेषकृच्छ्रैव जातमिति भावः ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चतुर्भिरिति विव्याधेत्यन्वयः ॥ १०—१५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विस्फूर्ज्येति । आरोपितज्यं चापं विस्फूर्ज्य ज्यानिर्घोषवत् ध्वनयित्वा वीरस्साम्बः कर्णादीन् पूर्वोक्तान् षट्सङ्ख्याकान् तावतो रथांश्च तावद्भिः सायकैः बाणैः युगपत्पृथक् प्रत्येकं विव्याध ॥ ९ ॥

तथा चतुर्भिश्चतुर्भिः सायकैश्चतुरो वाहानश्वानेकैकेन बाणेन सारथींश्च विव्याध रथिनश्चेति ते रथिनः कर्णादयः तस्य साम्बस्य तत्कर्म अपूजयन्नभ्यनन्दन् ॥ १० ॥

तमिति । ते कर्णादयस्तं साम्बं विरथं चक्रुः तदेवाह चत्वार इति । आजघ्नुरिति वचनपरिणामेन चत्वार इत्यस्य सम्बन्धः । तमिति । एवं युद्धे तं साम्बं कृच्छ्रेण प्रयासेन विरथीकृत्य जयिनः प्राप्तजयाः कुमारं साम्बं स्वकन्यां स्वस्य दुर्योधनस्य कन्यां चादायेति शेषः । पुरं हास्तिनपुरमाविशन् ॥ ११-१२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हयानामग्रण्यम् अग्रणीभवं कर्म तेन सह वर्तन्त इति सहयाग्रण्यास्तान् यावन्तः तावद्भिः शरैः ॥ ९ ॥

एतदेव विवृणोति—चतुर्भिरिति । साम्बस्य तत्कर्म सम्हृष्य कुरवः, किमकुर्वन्नत्राह—महेष्वासा इति ॥ १० ॥

अत्र साम्बस्य पराजयो नास्तीति भावेनाह—चत्वार इति ॥ ११ ॥

गृह्य गृहीत्वा जयिनो जेतुकामा एव न तु लब्धजया इति तात्पर्यार्थः ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तस्य पौरुषमाह—विस्फूर्ज्येति । वरो हि क्षत्रियाणां शौर्येण उत्कृष्टो भवति अतः स्वपरीक्षां प्रयच्छन्निव लघुहस्ततां दर्शयति । सर्वान् कर्णादीन् षड्भिः षड्भिः बाणैरेकैकं युगपद्विव्याध ॥ ९ ॥

(१) सहयाग्रयायान् इति विज० पाठः ।

तच्छ्रुत्वा नारदोक्तेन राजन् सञ्जातमन्यवः।
कुरून् प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १३ ॥
सान्त्वयित्वा तु तान्रामः सन्नद्धान् वृष्णिपुङ्गवान्।
नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः ॥ १४ ॥
जगाम हास्तिनपुरं रथेनादित्यवर्चसा।
ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥ १५ ॥
गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः।
उद्धवं प्रेषयामास(१) धृतराष्ट्रं बुभुत्सया ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

षड्गुणानां विनियोगमाह—चतुर्भिश्चतुरो वाहानिति। एतदपि कौशलं यथा सर्व एव विद्धा भवन्ति समागताः अन्यथा तं तथा न स्मरेयुः एकैकेन सर्वानेव सारथीन् एकैकेनैव रथिनः कर्णादीन् तर्हि अप्रयोजकास्ते भविष्यन्तीति आशङ्क्याह—महेष्वासा इति। अनवस्थिता भविष्यन्तीत्याशङ्क्य आह—तस्य तत्तेभ्यपूजयन् इति। साम्बस्य तत्कर्म महारथिनोपि कर्णादयः अभ्यपूजयन् साधु-साध्विति प्रशंसां कृतवन्तः एतदेव साम्बस्य बन्धने निमित्तं जातं तैस्ततः प्रतीकारं न कृतवान् अन्यथा ब्रह्मास्त्रादिभिः युद्धं कुर्यात् ॥ १० ॥

एवं ते कपटं कृत्वा स्तोत्रेण मोहयित्वा युद्धं कृतवन्त इत्याह—तन्तु ते इति। तुशब्दः धर्मयुद्धं व्यावर्तयति एकैकाश्ववधेन बहुभिरेव बाणादिभिः चत्वारो महारथाः तं विरथं चक्रुः एकस्तु प्रथमः सारथिं जघ्ने अन्यः षष्ठः शरासनं धनुश्चिच्छेद एकैकस्य आयुधानां प्रयोगाणां वा न संख्या ॥ ११ ॥

ततो यज्जातं तदाह—तं बध्वेति। कृच्छ्रेण आदौ तं विरथीकृत्य पश्चात् लौकिकन्यायेन बध्वा यतः कुरवः कुरुणा हि भूयान् धर्मः कृत इति तद्वंश्यानामपि मनोरथसिद्धिः युधीति बन्धनेपि लज्जाभाव उक्तः युद्धं हि जयपराजययोरनियतत्वात् किञ्च स्वकुमारं स्वकन्याञ्चेति सुतरामेव बन्धनेन विगानं दुर्योधनो हि बलस्य जामाता तस्यैवैषा कन्या अतः उभयोरपि स्वकीयत्वमेव कुमारं सत्स्वस्य कन्यामिति पाठे स्वकन्यासहितं कुमारमद्यापि विवाहरहितमिति बन्धने हेतुरुक्तः मध्ये स्थापिते कश्चित्नेष्यति पलाय्य वा गमिष्यतीति स्वपुरं प्राविशन् जयिन इति प्रवेशो सन्तोषो निरूपितः ॥१२॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसन्धेया तत्कर्म ते सम्मानितवन्तः ॥ १०—११ ॥

कुमारं कन्याञ्च गृहीत्वेतिशेषः ॥ १२—१३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वस्य दुर्योधनस्य कन्यां च नीत्वेति शेषः ॥ १२—१५ ॥

भाषा टीका।

वह साम्ब सुन्दर धनुष को टङ्कार करके कर्ण से आदि लेके छहों महारथीन को और उनके रथन को उतनेही बाणों से सब को जुदा २ वेधन करता भया ॥ ९ ॥

चार २ बाणोंसे तो एक २ रथी के चार २ घोडन को बांधा और एक २ बाण से एक २ रथी को और एक २ बाण से एक २ सारथी को बींधा तब तो महाधनुषधारी कर्ण आदि वीर साम्ब के उस कर्म की श्लाघा करते भए ॥ १० ॥

तबतो कर्ण आदिक सब मिलकर साम्ब को विरथ कर देते भए और उनमें से चार वीरोंने साम्ब के चारों घोडों को मार दिया और एक ने उसके सारथी को मारदिया और छठवें ने साम्ब के धनुष काट दिया ॥ ११ ॥

इस प्रकार युद्धमें साम्ब को बडे कष्ट से विरथ कर और उस को बांध कर कौरव लोग साम्ब और कन्या को लेकर तथा विजय प्राप्त हो कर हस्तिनापुर में चले गये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यतः कलिं नैच्छदतः सान्त्वयित्वा जगामेति ॥ १४-१५ ॥
धृतराष्ट्रम्प्रति बुभुत्सयेति अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नारदेनोक्तमुक्तिस्तेन तद्द्वारेण उग्रसेनेनैव चोदिता यादवाः नतु श्रीकृष्णेन परमात्मीये ज्येष्ठे च भवद्बन्धुवृन्दे सति स्वयं स्वपुत्रार्थमुद्यमस्यानर्हत्वात् अग्रजाभिप्रायज्ञानात् उग्रसेने दत्तराज्यसम्माननत्वाच्च ॥ १३ ॥

सान्त्वयित्वेति युग्मकम्। कुरूणां वृष्णीनामिति श्रीरोहिणी-

(१) राजन् तेषां बुभुत्सया इति वरि० पाठः धृतराष्ट्रसमीप्सया इति ग्रन्थपुस्तके पाठः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

कुन्त्यादिसम्बन्धेनैकतां प्राप्तत्वादितिभावः। कलिं कलहं नैच्छत् यतः सामान्यतोपि कलहादिकलिकालदोषापहः यद्वा कलेर्दुर्योधनस्य मलमभिमानादिकमपहन्ति तन्मात्रं दूरीकरोति, नतु तमपि हन्तुमिच्छतीति तथा करुणस्वभावत्वादिति भावः। एवं भगवद्भागवतद्वेषदोषस्य तेनापि कुरुन्मूलत्वं दर्शितमिति च॥ १४—१५॥

धृतराष्ट्रमिति। राजत्वात् दुर्योधनादीनां दुर्बुद्धेस्तन्मूलकत्वाच्च॥ १६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

समीप्सया बुभुत्सया॥ १६—१९॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदिति। हे राजन्! नारदोक्त्या तद्वृत्तान्तं श्रुत्वा सञ्जातो मन्युर्येषां ते उग्रसेनप्रचोदिताश्च यदवः कुरुन्प्रत्युद्यमं प्रतिचिकीर्षां चक्रुः॥ १३॥

सान्त्वयित्वेति। सन्नद्धान् गन्तुमायत्तानाशु सान्त्वयित्वा रामः कुरूणां वृष्णीनाञ्च मिथः कलिं कलहं नैच्छत् यतः स कलिमलं कलहात्मकं मलमपहन्तीति तथा॥ १४॥

किन्तु आदित्यस्येव वर्चो यस्य तेन रथेन गमनमात्रेण ब्राह्मणैर्गुरुशुक्रादिभिः चन्द्र इव ब्राह्मणादिभिः परिवृतो हास्तिनपुरं जगाम॥ १५॥

गत्वेति। गजाह्वयं हास्तिनपुरं हे राजन्! तेषां कुरूणां बुभुत्सयाऽभिप्रायजिज्ञासया उद्धवं प्रेषयामास॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्।

नारदोक्तेन नारदवचनेन॥ १३॥

कलिं विरोधम्॥ १४—१६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नारदो हि निरोधनिदानमिति सात्विकानां स्वासक्तिसिद्ध्यर्थं नारदः समागत्य वृत्तमित्याह—तच्छ्रुत्वेति। भगवानक्लिष्टकर्मा पुत्रसाहाय्यं न करिष्यतीति उग्रसेनेनैव प्रचोदिताः यादवाः कुरून् प्रत्युद्यमं चक्रुः सञ्जातमन्युत्वं युक्तमिति राज्ञः सम्बोधनम् उपाहरणे ऽपि विपक्षस्यैव दोषः अत्र तु न तथेति तूष्णीं भावो भगवतः एवं तदा साधनशक्तिर्मुख्या बल इति अत्रत्यं कार्यं भगवत एवेति कुरुमूलभूतो भगवत इति यदुवंश इव कुरुवंशेपि देवा अवतीर्णा इति देवानामन्योन्यविरोधो धर्मनाशकः पापपोषक इति तान् महोपाख्याने शपथकरणाद् एव प्रथमं द्रुह्यति स नष्टो भवतीति बहुदोषदुष्टत्वात्॥ १३॥

कलहस्य तन्निवारणार्थं रामः प्रवृत्त इत्याह—सान्त्वयित्वेति। वृष्णिपुङ्गवा इति महत्त्वं सान्त्वने हेतुः सन्नद्धा इति तत्कार्यं स्वयं चेत् कुर्यात् तदैव सान्त्विता भवन्ति इति। ज्ञापितं कार्यं साम्बस्य समीपस्यानयनं तत्प्राप्त्यैव चेत् भवति तदा कलहो व्यर्थ इति कुरूणां वृष्णीनां नैच्छत् उभयेषां देवभावात् रामश्च कलिमलापहः देवविरोधे सत्त्वस्य सर्वथा तिरोभावात् तमः केन हन्येत कारणसत्त्वेन सह विरोधाभावात् अन्यथा तमसस्तत्कार्याणाञ्च स्थितिर्न स्यात् अन्यथा कलावुत्पत्स्यमानानाम् उद्धारो न भवतीति जन्मकारणनिर्द्धारो व्यर्थः स्यात् तुशब्दः कुरुपक्षपातं व्यावर्त्तयति तान् प्रतिक्रुधमिति हीनभावोपि नाभ्यर्थनीय इति सूचितं तेन ऋजुमार्गेण सिद्धौ वक्रेणापि तत् करिष्यतीति सिद्धं ज्ञानशक्तिरत्र न पूर्णेति कश्चित् लोकानुरोधी भगवानित्यपरे नीतिमार्गानुसारिणी साधनशक्तिः पुष्टिमार्गानुसारिणी फलशक्तिरिति सिद्धान्तः॥ १४॥

सान्त्वनसिद्ध्यर्थं रामस्य गमनमाह—जगामेति। हस्तिनोनात्र सहभाव इति ऋजुभावेन गमनम् आदित्यवर्चसेति तेषां प्रतिबोधने नीतिमार्गोपयोगिन आह—ब्राह्मणैः कुलवृद्धैरुद्धवादिभिरन्यैरपि शक्तिभिः कुरूणामनभिप्रेतं साम्बविमोचनं भवतीति तत्तापार्थं गच्छतीत्याशङ्क्य तेषां तापापनोदार्थं गच्छतीति वक्तुं दृष्टान्तमाह—चन्द्र इव ग्रहैरिति। बृहस्पतिप्रभृतिभिः नीतिपरैरेवेयं शक्तिरिति ज्ञापयितुं लोकदृष्ट्यापि द्विषतां पुरं न प्रविशेदिति बहिःस्थित एव स्वागमनं ज्ञापितवानित्याह—गत्वेति। अत एव रामः बाह्योपवनमिति नगरसीमाप्रवेशा उक्तः आस्थितिस्तत्र विमोचनं नीतिज्ञः उद्धवः धृतराष्ट्रो गन्धर्वदैत्यावेशसहितो देवांशः स बुध्यतामिति बुभुत्सया धृतराष्ट्रं प्रति बोधयितुम् इच्छया वा॥ १५—१६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सान्त्वयित्वा जगामेत्यन्वयः यतो नैच्छदित्यादि॥ १४—१५॥

बुभुत्सया तदभिप्रायजिज्ञासया॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

धृतराष्ट्रं प्रति उद्धवं प्रेषयामास बुभुत्सया तदभिप्रायजिज्ञासया॥ १६—२१॥

---

भाषा टीका।

हे राजन्! इस वृत्तान्त को नारद जी ने द्वारका में आय कर कहा तब तो नारद जी कहे हुये वृत्तान्त को सुनकर यादवन को बड़ा क्रोध भया इस पर उग्रसेन महाराज ने उनको आज्ञा कि कौरवन से युद्ध करो तब तो यादव लोगोने कौरवन के साथ युद्ध करने की तैयारी करी॥ १३॥

कलिकाल के मलको नाश करने वारे, श्रीबलदेव जी युद्धके वास्ते तयार हुये श्रेष्ठ यादवन को समुझाय कर

सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणञ्च बाह्लिकम् ।
दुर्योधनञ्च विधिवद्राममागतमब्रवीत् ॥ १७ ॥
तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् ।
तमर्चयित्वाऽभिययुः सर्वे मङ्गलपाणयः ॥ १८ ॥
तं सङ्गम्य यथान्यायं गामर्घ्यञ्च न्यवेदयन् ।
तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ १९ ॥
बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ।
परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २० ॥

भाषा टीका ।

कौरव और यादवन के परस्पर कलह की इच्छा नहि करते भए ॥ १४ ॥

प्रभात शुक्रादि ग्रहन से युक्त जैसे चन्द्रमा होइ तैसे हि ब्राह्मण और कुलवृद्धों से युक्त होकर और सूर्य्य के समान तेजवारे रथ पर बैठ कर श्रीबलदेवजी हस्तिनापुर को जाते भए ॥ १५ ॥

श्रीबलदेवजी हस्तिनापुर जायकर उस के बाहिर समीप वागीमें ठहर गए तत्पश्चात् कौरवन के अभिप्राय जानने की इच्छा करके धृतराष्ट्र के पास उद्धवजी को भेजते भए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विधिवद्भिवन्द्य ॥ १७ ॥
तमुद्धवमर्चयित्वा सत्कृत्य मङ्गलपाणयः उपायनहस्ताः ॥१८॥
वृद्धा अपि प्रणेमुः ॥ १९—२१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अभिवादने श्रीयुधिष्ठिरादीनामनुक्तिस्तदानीमिन्द्रप्रस्थवासात् दुर्योधनञ्चेति चकारो निष्कर्षे स च तस्यानर्हत्वेऽपि लोकरीत्यैवेदं बहिरभिवन्दनमिति बोधयति अन्तस्तु तद्विधशास्तृसर्वान्तर्यामिस्वरूपायैवेति ॥ १७ ॥

सुहृदो यादवाः सुहृत्तराः श्रीवसुदेवादयः तेष्वपि पौरव्याः श्रीरोहिण्याः पुत्रत्वेन सुहृत्तमं यद्वा परमोपकारिणं दुर्य्योधनं प्रति गदाविशिक्षणात् अतोऽतिप्रीताः यद्वा साम्बमोचनार्थमस्माननुनेतुं प्रीतमित्यभिप्रेत्यातिप्रीताः ॥ १८ ॥

ये श्रीभीष्मादयः ॥ १९ ॥

श्रुत्वेत्यत्र हेतुः, शिवं क्षेमम् अनामयञ्चारोग्यं परस्परञ्च पृष्टेति तदेवं (द)पृष्ट्वा श्रुत्वा स्थितेष्विति शेषः । अथो तत्प्रश्नानन्तरमेव अविक्लवं निर्भयम ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम ।

अविक्लवमिति पदम् ॥ २०-२१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । उद्धवः अम्बिकायाः पुत्रं भीष्मं बाह्लीकेन सहितं दुर्योधनञ्च विधिवदभिवन्द्य ॥ १७ ॥

तेपीति । तेपि भीष्मादयोपि राममागतं श्रुत्वा प्रीताः तमुद्धवं सुहृद्भिर्वृतमर्चयित्वा सर्वे मङ्गलद्रव्याणि पाणिषु येषां तथाभूताः राममभिजग्मुः ॥ १८ ॥

तमिति । तं रामं यथान्यायं स्वस्ववयस्थानाद्यनुरूपमालिङ्गनादिभिः आलिङ्ग्य सम्यक् गां धेनुमर्घ्यञ्च तस्मै न्यवेदयन् तेषां मध्ये ये तत्प्रभावज्ञाः रामप्रभावविदस्ते बलं रामं शिरसा प्रणेमुः ॥ १९ ॥

बन्धूनिति । रामः परस्परं बन्धून् कुशलिनः श्रुत्वा अनामयमारोग्यं शिवं शुभं च पृष्ट्वा च अविक्लवमिति छेदः । अदीनं वचो बभाषे ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परस्परं शिवं सुखमनामयम् आरोग्यमविक्लवं धाष्टर्ययुक्तम ॥ २०—२१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सोऽभिवन्द्य ॥ १७—२१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य यथोचितं कारणमाह—सोभिवन्द्येति । अम्बिकापुत्रो धृतराष्ट्रः बाह्लीकः शन्तनोर्भ्राता चकारात् कृपादिब्राह्मणान् दुर्योधनो धरश्वशुर इति चकारात् तत्पक्षपातिनः एवमुभयविधा नमस्कृता बोधिताश्च विधिवदित्यन्ते तुल्यत्वस्य कथमागनमिति प्रश्नसमये राममागतमब्रवीत् ॥ १७ ॥

उग्रसेनः क्षितीशेशो यद्व आज्ञापयत्प्रभुः।
तदव्यग्रधियः श्रुत्वा कुरुध्वं माविलम्बितम् ॥ २१ ॥
यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम्।
अबध्नीताथ तन्मृष्ये बन्धूनामैक्यकाम्यया ॥ २२ ॥
वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः।
कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥ २३ ॥
अहो महच्चित्रमिदं कालगत्या दुरत्यया।
आरुरुक्षत्युपानद्वै शिरो मुकुटसेवितम् ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ते तां वार्तां श्रुत्वैव प्रीताः स हि सुहृत्तमः दुर्योधनश्वशुरः गुरुश्च यादवपक्षपाते परमन्यथा भविष्यति तमुद्धवमर्चयित्वा आभिमुख्येन ययुः यथाशास्त्रं मङ्गलपाणयः ॥ १८ ॥

सङ्गतावपि सौहार्दवाक्यमाह—तं सङ्गम्येति। प्रह्लादिप्रकारभेदैर्यथान्यायम् अतिथिवन्मधुपर्कादिना पूजितवन्त इति ज्ञापयितुमाह—गामर्घ्यञ्चेति। तेषां पूजकानां मध्ये ये तत्प्रभावाभिज्ञाः माहात्म्यविदः ते ज्येष्ठा अपि लौकिकीं दृष्टिं दूरीकृत्य प्रणेमुः अनेन सर्वे लौकिकाः केचनैव तत्प्रभावाभिज्ञा इति निरूपितम् अभिज्ञा अपि बलं बलाधिक्येनैव नत्वलौकिकानुभावेन अन्यथा ते विषमान् बोधयेयुः ॥ १९ ॥

एवं कायिकव्यवहारमुक्त्वा वाचनिकमाह—बन्धून् कुशलिन इति। शिवं कल्याणं सुखरूपम् अनामयं दुःखाभावरूपं बन्धून् धर्मिणः परस्परं कुशलिनः श्रुत्वा एतदपि परस्परं पृष्ट्वा अथो भिन्नप्रक्रमेण रामः अविक्लवम् अदीनम् अन्यथा यादवानां दीनता स्यात् भक्ताश्च ते सर्वदेवाधिपत्यं भगवतोग्रसेनाय दत्तमिति तदाज्ञा सर्वैरेव देवैः कर्तव्या ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

युधिष्ठिरादीनामभिवादनेऽनुल्लेखस्तदानीं तेषामिन्द्रप्रस्थेऽवस्थानात् ॥ १७ ॥

तमुद्धवं सत्कृत्य ॥ १८ ॥

तेषां मध्ये ये भीष्मादयस्ते प्रणेमुः ॥ १९ ॥

परस्परं श्रुत्वा पृष्ट्वा स्थितेषु सत्स्विति शेषः ॥ २० ॥

---

भाषाटीका।

उद्धवजी श्री हस्तिनापुर में जायकर धृतराष्ट्र भीष्म द्रोणाचार्य बाल्हीक दुर्योधन इन सब को विधिवत् अभिवादन करके आए हुए श्रीबलदेवजी को कहते भए ॥ १७ ॥

वे भीष्म आदि सब अतिसुहृद श्रीबलदेवजी को आए सुनकर अति प्रसन्न होकर प्रथम उद्धवजी का सत्कार कर के पश्चात् अपने २ हस्तमें भेट लेकर श्रीबलदेवजी के प्रति जाते भए ॥ १८ ॥

न्यायके अनुसार श्रीबलदेवजी का समागम करके उनके अर्थ गौ और अर्घ्य का निवेदन करते भए और उनके मध्य में जो भीष्म आदि श्रीबलदेवजी के प्रभाव को जानते रहे वे मस्तकसे श्रीबलदेवजी को प्रणाम करते भए ॥ १९ ॥

श्रीबलदेवजी निज बंधुजन कौरवन को परस्पर में कुशलयुक्त सुनकर और उनके मङ्गल तथा आरोग्य को पूछकर पश्चात् अदीनता का वचन बोलते भए ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यद्यूयमित्युग्रसेनवाक्यं मृष्ये सहे अथाशु तमानीय समर्पयतेति शेषः ॥ २२ ॥

वीर्यं प्रभावः शौर्यमुत्साहो बलं सत्त्वं तैरुन्नद्धमुत्कूलं कथम् आत्मनः शक्तेः सममनुरूपम् ॥ २३ ॥

उपानत्पादरक्षा शिर आरोढुमिच्छतीति हीना अस्मान् आज्ञापयन्तीत्यर्थः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आज्ञापनयोग्यत्वमाह—क्षितीशेशः तत्र हेतुः प्रभुः महेन्द्रादीनामप्याज्ञापकः इति राजत्वमात्रं ययातिना निषिद्धं नतु राजेशत्वमिति न्यायश्च दर्शितः अव्यग्रधियः सावधानास्सन्तः यद्वा तेन साक्षिवादिष्टमिति तत्रान्यथा शङ्कया व्यग्रमकुर्वाणा इत्यर्थः ॥ २१ ॥

अधर्मेणेति छेदः। अथ कार्त्स्न्ये ऐक्यमभेदः ॥ २२ ॥

अस्य वाक्यविशेषाकथनं च तेषां तावन्मात्रश्रवणेनैव दुर्वचने प्रवृत्तत्वात् प्रकर्षेण कोपितास्तद्वचसैव ॥ २३ ॥

अहो विस्मये न च चित्रमित्याहुः—कालस्य गत्या गतिः सोऽस्यानेटादेशः छान्दसः दुरत्यया दुर्लङ्घ्या कदाचिदसम्भवोदयात् तदेव दर्शयति—आरुरुक्षतीति ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अधर्मेणेति पद्यम् ॥ २२ ॥

वीर्यम् अविकृतिः बलं धारणसामर्थ्यम् ॥ २३-२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह--उग्रसेन इति द्वाभ्याम्। तदाज्ञापितमव्यग्रधियः अवहितचित्ताः सन्तः श्रुत्वा कुरुध्वं तन्मा निर्विलम्बनम् इदं मा विलम्बितव्यमित्यर्थः ॥ २१ ॥

किञ्च यद्यूयमिति। एकमसहायं धार्मिकञ्च बालं बहवो यूयमधर्मेण जित्वा अबध्नीत बद्धवन्त इति यत्तदहं मृष्ये सोढवानस्मि कुतः बन्धूनामैक्यकाम्यया मिथः सौहार्दकामनया अथाशु तमानीय समर्पयतेति शेषः ॥ २२ ॥

वीर्यमिति। वीर्यं युद्धे ग्लान्यभावः शौर्यं तत्र स्वगृह इव प्रवेशसामर्थ्यं बलं धारणसामर्थ्यम् एभिरुन्नद्धमुच्छूनं बलदेवस्य वचो निशम्याकर्ण्य कुरवः प्रकोपिताः प्रोचुः ॥ २३ ॥

उक्तिमेवाह--अहो इति षड्भिः। दुरत्ययया दुरतिक्रमणीयया कालगत्या अहो महदिदं चित्रं जातं किन्तदित्यत आह—आरुरुक्षतीति। उपानत् पादरक्षा मकुटेन भूषितं शिरो मूर्धानमारोढुमिच्छति उपानत्स्थानीया यदवः किरीटालङ्कृतशिरःस्थानीयान् अस्मानाज्ञापयन्तीत्येतदतिचित्रम् इतिभावः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अधर्मेण अबध्नीत बन्धनमकार्ष्ट मृष्ये सहेयम् ॥ २२—२३ ॥
आरुरुक्षति आरोढुमिच्छति ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गत्या गतिः। लौटादेशश्छान्दसः ॥ २४—२६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधनी।

अतो याञ्चां परित्यज्य उग्रसेनाज्ञापनमाह—उग्रसेन इति। तस्याज्ञा भिन्नैः राजभिः कथं कर्तव्येत्याशङ्कयाह--क्षितीशानां सर्वेषामेव राज्ञामीश इति। यद्वा युष्मान् प्रति आज्ञापयत् आज्ञापनावाक्यमग्रे वक्तव्यं साम्बः सभार्यः प्रस्थापनीय इति तद्वाक्यात् पूर्वमेवापराधक्षमावाक्यं एव क्रुद्धाः परुषभाषिणो जाता इति तत्कथनं तदग्रे विवक्षितं कर्तव्यमिति हितोपदेशो रामस्य, मा विलम्बितामिति द्वितीयमन्यथेश्वरः राज्ञां विलम्बं न सहत इति पश्चात् कृतमपि व्यर्थं स्यादिति ईश्वरवचनोल्लङ्घने अनिष्टं शीघ्रमिति ज्ञापितम् ईश्वरत्वमाह—प्रभुरिति ॥ २१ ॥

कदाचित्कृतापराधस्य दण्डं करिष्यतीत्याशङ्कायामाह-यद्यूयमिति। यद्यपि भवन्तो दण्डार्हाः तथापि बान्धवानामन्योन्यं कलहो भविष्यतीति तदपराधं मृष्ये ईश्वरेणापि क्रियमाणे दण्डे बन्धुभिरेव कारितमिति कदाचित् वैमनस्यं स्यात्तन्नाभिप्रेतं किन्तु ऐक्यमेवाभिप्रेतं शास्त्रनिषिद्धं ह्येकेन सह बहूनां युद्धं तथाकरणे च दण्डो राज्ञाऽवश्यं कर्तव्यः ततस्तमपराधमनुवदति--यूयं बहवः तुशब्देनान्यथाकरणं निवार्यते महास्त्रप्रयोगः पलायनं वा धर्म इति अधर्मेण एककाले बहवो युद्धाभिज्ञाः बालकं स्त्रीरक्षायां व्यग्रं खण्डशः साधननाशेन जितवन्त इति बन्धनञ्चापरो दोषः ॥ २२ ॥

एतावच्छ्रुत्वा रुष्टा जाता इत्याह—वीर्येति। वीर्यं क्रियाशक्तिः शौर्यं स्वभावः बलं देहस्य त्रिभिरुन्नद्धं वचः फलपर्यवसायीति उग्रसेनो युष्मानाज्ञापयदिति वीर्येणोक्तं क्षितीशेश इति शौर्येण मा विलम्बितमिति बलेन यद्यूयमिति आत्मशक्तिसमं कुरुत इति अभिमानार्थं तद्धर्मे एव युक्ताः ननु तदीयाः राजानमप्रयोजकं जानन्त्येव बलस्य परं तादृशं वचनं यदि स्वयं वदेत् ममाज्ञयैव तत्कर्तव्यमिति तदा क्रोधो न भवेत् वस्तुत ईश्वरत्वात् अस्माकं तेषामपि भक्तत्वाविशेषेपि यादवेष्वेवैश्वर्यं स्थापयित्वा अस्मास्वीशितव्यत्वं स्थापयति तत्र हेतुः न कुलीनत्वादिः तथा सत्यस्मास्वेवोचितं स्यात् साधारणलीलेयं न भवतीति न स्वेच्छया यथा सुखकरणं भक्तार्थे हि भगवानवतीर्णः सा च भक्तिः कारणानुरोधात् उद्गता कौरवेष्वेव पुष्टा भवितुमर्हति न कौरवेषु ईश्वरत्वाद्भक्तिमपि तेभ्य एव प्रयच्छतीति चेत् तत्तथा सति वैषम्यं स्यात् अतः सिद्धामेव भक्तिमाश्रित्य भगवान् वदतीति कारणाधीनत्वं च भक्तेर्ज्ञात्वा स्वोत्कर्षं स्थापयितुं किञ्चिदुक्तवन्त इत्यर्थः। यतस्तैरेव वाक्यैः अन्तर्यामितया वा प्रकर्षे कोपिताः ॥ २३ ॥

स्वोत्कर्षस्थापकानि पञ्चवाक्यान्याहुः—अहो महच्चित्रमिति। देहेन्द्रियप्राणान्तःकरणात्मधर्मैः उत्कर्षाः क्रमात् निरूप्यन्ते तत्र देहोत्कर्षे वस्तुतो विचार्यमाणे यादवाः धर्मरहिताः स्वेच्छाचाराः चर्मपुटप्रायाः कौरवास्तु देवाधिष्ठिताः मुकुटाश्रयशिरःस्थानीयाः अयमर्थः पारमार्थिकः एवं सति कौरवेभ्योपि यादवोत्कर्षे वस्तुसामर्थ्याभावात् कालवशादेव तथा भवतीति कालश्चेश्वरो नियन्तुमशक्य इति पूर्वं कदाप्येवं न जात इति महच्चित्रं भवति तत्र हेतुः दुरत्यया कालगत्येति ईश्वरवाक्यात् दुरत्ययत्वम् अन्यथा असम्बद्धवाक्यतायां न किञ्चित् दूषणं स्यात् वै निश्चयेन उपानद्भिः आरुरुक्षतीति मुकुटैः वस्त्रादिभिर्वासादिभिर्वा सेवितम् ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

क्षितीशा यूयं युष्माकमपीशो राजा तत्र हेतुः प्रभुः सुधर्मापारिजाताद्युपायनसमर्पका महेन्द्रादयोऽपि यस्याज्ञाकारिणस्तत्र के यूयं वराका इति ययातिना यदूनां राजत्वमात्रं निषिद्धं नतु राजेशत्वमिति भावः। अव्यग्रधियः सन्त इत्यन्यथा स युष्मान् दण्डयिष्यतीति भावः ॥ २१ ॥

यद्यूयमित्युग्रसेनस्य वाक्यम् अधर्मेण जित्वेति तन्मृष्ये सहे तस्मादाशु तमानीय समर्पयेति वाक्यशेषस्याप्रयोगस्तेषां तावन्मात्रश्रवणेनापि दुर्वचने प्रवृत्तत्वात् ॥ २२ ॥

एते यौनेन सम्बद्धाः सह शय्यासनाशनाः।
वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः॥ २५॥
चामरव्यजने शङ्खमातपत्रञ्च पाण्डुरम्।
किरीटमासनं शय्यां भुञ्जन्त्यस्मदुपेक्षया॥ २६॥
अलं यदूनां नरदेवलाञ्छनैर्दातुः प्रतीपैः फणिनामिवामृतम्।
ये ऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत॥ २७॥
कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः।
अदत्तमवरुन्धीत सिंहग्रस्तमिवोरणः॥ २८॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वीर्यं प्रभावः शौर्य्यमुत्साहः बलञ्च तैरुल्बणमुच्छ्रितम् आत्मनः शक्तेरनुरूपं समं प्रकोपिताः अर्थाद्वचसैव॥ २३॥

कालगत्या कालगतिः उपानत् चर्मपादुकापि शिरस्तथापि मुकुटयुक्त॥ २४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वपूयमित्युग्रसेनाज्ञा मुध्ये सह मय शीघ्रं तमानीय समर्पयतेति भावः॥ २२॥

वीर्यं प्रभावः शौर्यमुत्साहः बलं सत्वं तैरुल्बणमुत्कृष्टं बलदेवस्य वचः निशम्य आत्मनः शक्तेः समं यथा भवति तथा प्रोचुः कथम्भूताः प्रकोपिताः वचसेति शेषः॥ २३॥

आरुरुक्षति आरोढुमिच्छति उपानत्स्थानीयाः निकृष्टाः यादवाः शिरस्स्थानीयानुत्कृष्टान् अस्मान् आज्ञापयन्तीति महद्वैपरीत्यमित्यर्थः॥ २४॥

भाषा टीका।

राजाधिराज प्रभु उग्रसेन महाराज ने आप को जो आज्ञा करी है उसको मोस सावधान चित्त होकर सुनके शीघ्र हि करो॥ २१॥

उग्रसेन महाराज का यह कहना है कि धर्मयुद्ध करने वारे एक साम्ब को आप अनेक मिलकर अधर्म से जीत कर जो उस को बांधलिया सो बंधून का परस्पर में सुहृदपना बनारहे इस कामना से उस अपराध को मैंने सहलिया अब आप शीघ्र हि साम्ब को लायकर समर्पण करो॥ २२॥

वीर्य्य शूर वीरता बल इन सब से निरङ्कुश और निज शक्तिके अनुरूप इस प्रकार के बलदेवजी के वचन को सुन कर और उस वचन से कोप को प्राप्त होकर कौरव बोलते भए॥ २३॥

अहो कालकी दुस्तर गति करके यह बडा ही आश्चर्य भया क्योंकि जिस काम की गति करके पगन में पहरने की जोडी मुकुटयुक्त मस्तक पर चढने की इच्छा करती है। जूतीन के समान अतिनीच यादवलोग मस्तक के समान अति उत्तम हम को आज्ञा करने लगे॥ २४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

असैव प्रपञ्चः, एत इति चतुर्भिः। यौनेन पृथावा विवाहेन॥ २५॥

किञ्च, चामरव्यजने इति। भुञ्जत्युपभुञ्जत इत्यर्थः। अस्मदुपेक्षया अस्माकमनाग्रहेण॥ २६॥

अलमिति। अतःपरं तान्यपहरिष्याम इत्यर्थः॥ २७॥

अवरुन्धीत स्वीकुर्यात् उरणो मेषः॥ २८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एत इति। साक्षाद्बलदेवोद्देशेन सम्बद्धाः सम्बन्धं प्रापिताः अतः सह एकत्र शय्यादयो येषां ते॥ २५॥

चामरे एव व्यजने॥ २६॥

दातृणामस्माकं प्रतीपैः प्रतिकूलैः अमृतं क्षीरं तैरित्यर्थः भिसः सुभावेपि छान्दसः नोऽस्माकं प्रसादेनानुग्रहेणैवोपचितां वृद्धिं प्राप्ताः हि प्रसिद्धौ॥ २७॥

कथमपि तैरर्जुनस्य साहित्याभावेऽपि प्रद्युम्नमात्मनो गौरवार्थम्॥ २८॥

श्रीसुदर्शनसूरिकृतशुकपक्षीया।

यौनेन विवाहेन॥ २५—३०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एतदेव प्रपञ्चयति—चतुर्भिः। एते वृष्णयः यौनेन पृथाविवाहेन सम्बद्धाः सम्बन्धिनः सम्बन्धशब्दोऽर्थो भावक्त्तः अत एवास्माभिः सह शय्यासनभोजनानि येषां तेऽस्माभिर्दत्तं नृपास

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

येषां ते अत एव तुल्यतामस्माभिः साम्यं प्रापिताः वस्तुतो न समा इति भावः ॥ २५ ॥

किञ्च, चामरेति। अस्मदुपेक्षया हेतुभूतया चामरादीन् भुञ्जते उपभुञ्जते इत्यर्थः। तत्रासनं नृपासनम् ॥ २६ ॥

अलमिति। यदूनां नरदेवलाञ्छनैः चामरादिभिरलमतःपरं तान्यपहरिष्याम इति भावः। तत्र हेतुत्वेन तानि विशिषन्ति दातुः प्रतीपैरिति दातृणमस्माकमेव प्रतीपैः प्रतिकूलैः तत्र दृष्टान्तः फणिनामिवामृतमिति। सर्पाणां पोषणाय यद्दत्तममृतं क्षीरं दातुरेव प्रतीपं तद्वत् एतदेव दार्ष्टान्तिकेऽनुगमयति-य इति। ये यादवा अस्मदनुग्रहेणोपचिता एधिता नोऽस्मानेवाधुना आज्ञापयन्ति अहो बतेति निर्लज्जाः खलु यद्वा गतत्रपाः सन्त आज्ञापयन्ति बतेत्याश्चर्ये ॥ २७ ॥

कथमिति। इन्द्रोऽपि भीष्मादिभिः कुरुभिरदत्तं कथम् उपयुञ्जीत सिंहग्रस्तम् उरणो मेष इव ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यौनेयेन यौनिनिमित्तेन सम्बन्धो येषां ते तथा ततः किमत आह—सह इति ॥ २५ ॥

अस्मद्दत्तेत्युक्तं विवृणोति-चामरेति। मह्यं महनीयम् आसनं भुञ्जन्ति भंजन्ति अन्योपद्रवमन्तरेण रक्षन्ति "भुजोऽनवने" इति पाणिनिः ॥ २६ ॥

दातृणामस्माकं प्रतीपैः विरोधिभिः दत्तैरमृतैः क्षीरादिरसैः विषात्मना परिणतैः दातृणां मरणप्रदत्वेन प्रतीपैः ॥ २७ ॥

अवरुन्धीत प्राप्नोति सिंहग्रस्त उरणः अविर्यथा केवलं न गृह्णाति सिंहग्रस्तमिति पाठे कवलमादातुं न शक्तः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अमृतं क्षीरं तैरित्यर्थः ॥ २७-५४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ऐन्द्रियकव्यवहारो विवाहशयनादौ हीनत्वमाह—एते यौनेन सम्बद्धा इति। यूनो भवः विवाहो यौनं तेन सम्बद्धाः पूर्वमेकोत्पन्ना अपि व्यवहारे हीना इति त्यक्ता अपि पुनः यौनेन सम्बद्धा इत्यर्थः। पृथादयः स्त्रियः तेभ्यः समानीता इति ननु तथापि "स्त्रीरत्नं दुष्कुलादपि" इति न्यायेन समानयनमात्रेण तुल्यता भवन्तीतिचेत्तत्राह-सहशय्यासनाशना इति। शयनमासनं भोजनं चेत् सह येन स तत्तुल्य एव भवतीति स्थितिः अत एव वृष्ण्यस्तुल्यतां नीताः अनेन अज्ञानान्निषिद्धाचरणे प्रायश्चित्तं कर्तव्यमिति पक्षो निवारितः एवं कुलधर्मविचारेण स्वस्योत्कर्षमुक्त्वा ऐश्वर्यविचारेणाप्युत्कर्षमाहुः—अस्मद्दत्तनृपासना इति। पूर्वं हि ययातिना पुरवे एव राज्यं दत्तम् अन्ये ज्येष्ठा अपि तदधीनाः ॥ २५ ॥

एवं साधनानि स्वाधीनान्युक्त्वा तेषां भोगोऽप्यस्मदधीन एव, चामरव्यजनेति। चामरव्यजने परितः शङ्खोऽग्रे आतपत्रं पश्चात् तत्रापि पाण्डुरं श्वेतं किरीटमुपरि आसनमधः शय्या निद्रावस्थायाम् एतानि सप्त महाराजचिह्नानि अन्येषामयुक्तानि राजभिरवद्ध्यम् अन्यत्र दृष्टानि निषेद्धव्यानि तथापि तुल्यतां नीता इति राजभिरस्माभिरुपेक्षिता भुञ्जते भोगः प्राणधर्म इति तदुत्कर्षो निरूपितः ॥ २६ ॥

आज्ञापनाविरन्तःकरणधर्म इति तदसहमानैः तन्निषेधपूर्वकं तदपकर्षमाहुः—अलं यदूनामिति। नरदेवलाञ्छनानि पूर्वोक्तानि उपेक्षाविषयाणि अलमिति निषेधार्थे नरदेवलाञ्छनैरलम् अतःपरं पूर्ववत्तामग्रे न स्थापनीयमित्यर्थः। दत्तापहारे हेतुः, प्रतीपैरिति। अज्ञानात् दत्तं स्वानिष्टसम्पादकत्वे निवारणीयमित्यत्र दृष्टान्तमाह—फणिनामिवामृतमिति। सर्पस्य हि पयःपोषः पोषकस्यापि अनर्थकर इति स हि मत्ततां सम्पादयतीति पश्चादन्धस्सन् पोषकमपि भक्षयति तदस्मासु जातमित्याह—ये यादवाः नः प्रसादोपचिताः अपगतत्रपाः सन्तः अस्मानेवाज्ञापयन्तीति बतेति खेदे ॥ २७ ॥

वस्तुविचारेणात्मधर्ममाभिस्याहुः-कथमिन्द्रोऽपीति। भीष्मो हि कालकामपरशुरामादीनां जेता ततोऽप्यधिको द्रोणः विद्यया तुल्योऽपि ब्राह्मण्यादधिकः ततोऽप्यर्जुनः तच्छिष्योऽपि महादेवादिप्रसादैरुपचितः एते त्रय आधिभौतिकादिरूपाः आदिभूताः येषां तैरदत्तम् इन्द्रोऽपि कथमवरुन्धीत इन्द्रो वस्तुतः सर्वाधिपतिः तथाप्येते अधिकृताः नहि देहादिषु प्रतिकूलेषु ईश्वरोऽपि भोगं प्राप्तुमर्हति ननु स्वभागस्तेषां का दानापेक्षेत्याशङ्क्य दृष्टान्तमाह—सिंहग्रस्तमिवोरण इति। यद्यप्युरणस्य अल्पमेषस्य पुत्रो भार्या वा भागो भवति तथापि ग्रस्तः तत्कृपयैव प्राप्यते तथैव साम्बः सभार्योऽस्माभिरवरुद्ध इत्यर्थः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एते यौनेन पृथाविवाहेनेति श्यालकभावो व्यञ्जितः ॥ २५ ॥

भुञ्जन्ति अस्माकमुपेक्षयेति अपेक्षालक्षण आदरोऽस्माकमेषु न सम्भवत्येव किन्तूपेक्षालक्षण अनादर एवास्ति हीनकुलत्वेनाहतत्वादेतदौद्धत्यं वयमुपेक्षामहे इति भावः ॥ २६ ॥

अतःपरमेषामपराधोपेक्षाऽनुचितैवेत्याह— अलमिति। तेन एतेभ्यो नृपलाञ्छनान्युत्तारयिष्याम इति भावः ॥ २७ ॥

अस्माकमिन्द्रः खल्वनुकूलोऽस्तीति यदहङ्कुरुध्वे तत्रापि रे यदवः शृणुध्वमित्याह—कथमिति। अवरुन्धीत गृहीतुं शक्नुयात् उरणो मेष इति यत्रेन्द्रमपि मेषमिव पश्यामस्तत्र यूयं के इति भावः ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यादवानां निकृष्टत्वं कौरवाणामुत्कृष्टत्वमाहुः—एते इति चतुर्भिः। यौनेन कुन्त्यादिविवाहेन ॥ २५ ॥

भुञ्जन्ति उपयुञ्जत इत्यर्थः ॥ २६ ॥

अलमिति अधुना नृपलाञ्छनान्यपहर्तव्यानीति भावः ॥ २७ ॥

अवरुन्धीत उपयुञ्जीत ॥ २८ ॥

---

श्रीशुक उवाच।

जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ।
आश्राव्य रामं दुर्वाच्य(१)मसभ्याः पुरमाविशन्॥ २९॥
दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वा(२)ऽवाच्यानि चाच्युतः।
अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन् मुहुः॥ ३०॥
नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः।
तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा॥ ३१॥
अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः।
सान्त्वयित्वाऽहमेतेषां शममिच्छन्निहागतः॥ ३२॥

भाषा टीका।

कुन्ती के विवाह सम्बन्ध से इन यादवन को हमने अपने सम्बन्धी बना लिए और हमारे साथ में इन की एक शय्या. एक स्थान मे बैठना. एक पंक्ति में भोजन करना और महाराजहि दिया इन को राजसिंहासन है॥ इस प्रकार हमने इन अपने समान बना लिये॥ २५॥

और हमने चामरादिकन की छीनवे की इच्छा नहि करी इसीलिये. चामर. बीजना. श्वेतछत्र. और किरीट. सिंहासन. शय्या इन को राज चिन्हों के ये यादव लोग भोग करते हैं॥ २६॥

हमने हि इन को राज चिन्ह दीये और हमारे हि प्रति कृघ्न होगये इसलिये यादवन के चमर छत्र आदि को छीनलेना चाहिये वह तो ऐसा भया कि जैसे सर्प को दूध पिवाना जो यादव लोग हमारी कृपा से समृद्धि वारे हुए निर्लज्ज होकर हमारे हि ऊपर आज्ञा करते हैं यह बडा आश्चर्य है॥ २७॥

भीष्म द्रोणाचार्य्य अर्जुन आदि कौरवों ने जिस वस्तु को नहि दिया उस को इन्द्र भी कैसे भोगि सकता है जैसे सिंह से ग्रसी हुइ वस्तु को उस के विना दिये क्या मेढा भोगि सकता है कदापि नहि॥ २८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

जन्मना बन्धुभिश्चोपलक्षितया श्रिया उन्नद्ध उत्कटो मदो येषां ते दुर्वाच्यं परुषं वाक्यम् असभ्या दुर्जनाः॥ २९-३०॥

नानाधनाभिजनादिमदैरुन्नद्धास्तेषां दण्ड एव प्रशमः प्रकर्षेण शमयतीति तथा यथा लगुडो दण्डः॥ ३१—३२॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आ सम्यक् महाकोपेनोच्चैरन्तिके श्रावयित्वा आ सम्यग् वैमुख्यद्युतगत्यादिनाऽविशन् असभ्याः साधुव्यतिरिक्ताः श्रीभीष्मादयस्तु तत्रैव स्थिता इत्यर्थः। भरतर्षभा इति भरतर्षभेति वा पाठः॥ २९॥

दौःशील्यं क्रोधावेशादिकम् अच्युतः सर्वशक्तिपूर्णः अतः कोपेन संरब्धः आविष्टः अत एव दुष्प्रेक्ष्यः भ्रुकुट्याद्याटोपेन द्रष्टुमशक्यः कोपादेव मुहुः प्रकर्षेण हसन् स हसन्निति च॥ ३०॥

हि एव दण्ड एव न शमादिः॥ ३१॥

अहो इति खेदे सुसंरब्धान् योद्धुमभ्युद्यतान् अतिक्रुद्धान् वा अतः शनैः सान्त्वयित्वा शममुपद्रवराहित्यम्॥ ३२॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

लगुडः यष्टिविशेषः॥ ३१—३६॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

जन्मेति। हे भरतर्षभ! अभिजनबन्धुसम्पद्भिर्लब्धः मदो येषां ते अत एव असभ्याः कुरवः इत्थं रामं प्रति दुर्वाच्यं परुषं वाक्यं श्रावयित्वा पुरं हस्तिनं विविशुः॥ २९॥

दृष्ट्वेति। दौःशील्यं दौर्जन्यं दृष्ट्वाऽवाच्यानि वचांसि श्रुत्वाऽच्युतः स्वासाधारणकल्याणगुणजातान्न च्यवत इत्यच्युतो रामः कोपेन संरब्धोऽत एव दुष्प्रेक्ष्यः पुनः पुनः प्रहसन्नुवाच॥ ३०॥

उक्तिमेवाह—नूनमिति। नानाधनादिमदैरुन्नद्धा असाधवो दुरात्मान एते नूनं शान्तिं नेच्छन्त्यतस्तेषां दण्ड एव प्रशमः शान्तिकरः यथा पशूनां उन्मत्तानां लगुडो यष्टिविशेषः तद्वत्॥ ३१॥

(१) अटव्यां पुरमाविशन् इति (२) वाच्यानीत्यवाच्यताम् इति च विज० पाठः॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अहो इति। सुसंरब्धान् हरिं कृष्णञ्च सान्त्वयित्वा शमं शान्तिपूर्वकं सन्धिम् इच्छन्निहागतोऽस्मि ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अटव्यामुपवने स्थितं रामम् ॥ २९ ॥

वाच्यातिवाच्यतां अपवादातिशयिताम् अपवादताम् ॥ ३० ॥

प्रशमः शान्तिकरः लकुटः यष्टि ॥ ३१-३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं पञ्चात्रयमहङ्कारवाक्यं भावयित्वा निर्गता इत्याह-जन्मेति। धार्म्मिककायिकातिक्रमे निरूपिते मानसिकोपि निरूपितप्रायः एवमतिक्रमे हेतुः जन्मबन्धुश्रिया उन्नद्धमदा इति जन्म सत्कुले बन्धु बान्धवं श्रीः लक्ष्मीश्च जन्मनिबन्धुकृपायाः श्रीः औत्पत्तिकलक्ष्मीः तया वा उन्नद्धः मदो येषां भरतर्षभेति सम्बोधनं राज्ञो मायामोहाभावार्थं "दौष्यन्तिरत्यगान्मायाम" इति वाक्यादन्यथा क्षत्रियः स्वकीयापकर्षं न सहत इति इयं कथा श्रवणविघातिका स्यात् इदं वाक्यं रामं प्रत्येव स्पष्टं वाक्यं न त्वन्तःकरणेनापि स्वकीयेषु, तदाह—दुर्वाच्यं रामंश्राव्य पुरमाविशन्निति। ननु गृहे समागते नैवं वक्तुमुचितमित्याशङ्क्याह-असभ्या इति। सतामेवैषा कथा श्रीमदेनैव तेषामसत्त्वम् अन्यथाग्रे ऋजुत्वं न स्यात् ॥ २९ ॥

ततो यज्जातं तदाह-दृष्ट्वा कुरूणामिति। अवगणनां कृत्वा गमनं दौःशील्यम् अन्यथा बान्धवातिक्रमो महदतिक्रमश्च न भवेदिति अवाच्यान्यपि श्रुतवान् अवाच्यानि तादृशवाक्यानि वा अच्युत इति भयाभावाय स्वयमपि तानि वाक्यानि दूषयितुमवोचत् अन्यथा हेतुना निराकरणेपि वाक्येन निराकृताः स्युः कोपसंरब्ध इति भगवत्कृते न मन्यन्त इति अन्तर्गुप्ते क्रोधे अपकार एव झटिति कृते क्लिष्टता स्यादिति क्रोधस्य बहिराविष्कारमाह-दुष्प्रेक्ष्य इति। प्रहसन्निति दुःखाभावाय यतः प्रभुः ॥ ३० ॥

पञ्चवाक्यानाम् अर्थं सानन्वयेन नवभिः श्लोकैर्निराकृत्य कर्तव्यं प्रतिज्ञाय रामोऽप्यवादीत्—नूनमिति दशभिः श्लोकैः। "विद्यामदो धनमदः" इत्यादिवाक्यैर्मदा निरूपिताः तदुक्ताः नातिवाक्यानि मन्यन्ते न भवन्तस्तेषां प्रकारः कियेव वाक्यानि अतो यदेतैर्निराकृतमनङ्गीकारणवाक्यैः तदुक्तमेव अतः शमार्थं प्रयुक्ता विफला जाता इति कियेव दण्डरूपया शमः कर्तव्यः तदाह—तेषां हि प्रशमो दण्ड इति एतत् स्वोपक्रमानुसारेणोपक्रमविचारेणोक्तम् उपसंहारे त्वन्यथा वक्तव्यं शममात्रमुपक्रमो मारणमुपसंहारः नायं विरोधः मारणोत्तम एव शमो भवतीति ननु क्रियया दण्डे सुतरामेव प्रकोपः स्यादित्याशङ्क्य दृष्टान्तमाह-पशूनां लकुटो यथेति। सहि दण्डो लोकप्रसिद्धः स यथा दृष्ट एव पशूनां भयजनको भवति उद्यतो वा तथा सर्वस्वनाशः उद्यतो ज्ञातो वा पशुतुल्यानां भयजनकः ॥ ३१ ॥

नन्वेवं सति यादवाः किमिति निवारिता इत्याशङ्क्य तथा सति वैषम्यं स्यात् दण्डः नहि शत्रुत्रयादिदण्डो भवति। अतो हितकारिण एव वयमिति पूर्वोपक्रान्तां स्वक्रियामाह—अहो इति। शान्तिकर्तरि प्रकोपश्चाश्चर्यं यदवः सर्वे सुसंरब्धाः मारणोन्मुखाः समर्थाश्च मन्वहदयशादुर्वरिताः किं तव पौरुषमिति चेत्तत्राह-कृष्णञ्च कुपितमिति। भगवद्विचारमात्रेणैव सर्वं सिध्यति किम्पुनः कुपितं कृष्ण इति भक्ताधीनः कालात्मा वा तेनाहष्टादयस्तदनुगुणा एवेति तेषां सर्वेषामेव प्रतिकूलं तान् सर्वान् शनैः सान्त्वयित्वा न तु बलात् स्वसामर्थ्यप्रकाशनेन तथाकरणे हेतुः, अहमिति अहङ्कारादेते बन्धनं कृतवन्त इति तदधिष्ठाता चाहमिति तेषां शान्तिमेव वाञ्छन्निहागतः सा च शान्तिः वाक्यैर्न जातेति ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

जन्म सत्कुलजत्वं बन्धवो भीष्मादयस्तद्रूपया श्रिया च उन्नद्ध उत्कटो मदो येषां ते दुर्वाच्यं परुषवाक्यम् ॥ २९ ॥

एते किंवा वदन्ति किं वा कुर्वन्ति तद्वदनु कुर्वन्त्विति स्वपेक्षयैव तदानीं तूष्णीमासीत् गतेषु तेषु पौरलोकेषु तु स्थितेषु स्वसमुचितं वक्तुं कर्तुं च कोपमाविष्कारेत्याह-दृष्ट्वेति। क्रोधसंरब्धः कोपाविष्टः ॥ ३० ॥ ३१ ॥

नानाधनादिमदैरुन्नद्धाः दण्ड एव नानामदान् प्रशमयतीति प्रशमः न तु सामादिरूपाय इत्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

जन्मना सत्कुलजत्वेन बन्धुभिर्भीष्मादिभिः उपलक्षितया श्रिया उन्नद्धः उत्कण्ठो मदो येषां ते ॥ २९-३० ॥

प्रकर्षेण शमयतीति प्रशमः ॥ ३१-३२ ॥

---

भाषाटीका

श्रीशुक उवाच।

श्री शुकदेवजी बोले कि हे भरतर्षभ! अच्छे कुल में और और शूरवीर बन्धु जन इन करके सहित राज्य संपत्ति से अत्यंत मदमत्त दुर्योधन आदि दुर्जन श्रीबलदेवजी को कठोर वाक्य सुनाय कर अपने पुर में चले गए ॥ २९ ॥

श्रीबलदेवजी कौरवन की दुष्टता को देखकर और उनके कठोर वाक्यन को सुनकर क्रोध से व्याप्त होकर भयंकर रूप वारे होकर वारंवार अत्यंत हंसते हुए बोले ॥ ३० ॥

नाना प्रकार के मदसे निरंकुश दुर्जन लोग दण्ड के बिना शांति को प्राप्त नहि होते यह निश्चय है इस लिये जैसे पशून को हांकने करने की लकुट होयतो रस्ता में यथावत् चलते हैं वे तैसे हि मदमत्त पुरुषों को दण्ड हि शांति कारक है ॥ ३१ ॥

अहो क्रोध के आवेश ते युद्ध करने को तैयार हुए यादवन को और क्रोध युक्त श्री कृष्ण को धीरे समझाय कर इनकी शांति की इच्छा कर मै इहां आयो ॥ ३२ ॥

त इमे मन्दमतयः कलहाभिरताः खलाः ।
तं मामवज्ञाय मुहुर्दुर्भाषान् मानिनोऽब्रुवन् ॥ ३३ ॥
नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः ।
शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३४ ॥
सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः ।
आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥ ३५ ॥
यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ।
स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्भाषान् अवाच्यशब्दान् ॥ ३३ ॥

दुर्भाषणमनुस्मरति षड्भिः—नोग्रसेन इति । विभुराज्ञापयितुं समर्थः ॥ ३४ ॥

अहो धृष्टा श्रीकृष्णमप्याधिक्षिपन्तीति कुपित आह—सुधर्मेत्यादिभिस्त्रिभिः ॥ ३५-३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

ते मया चिकीर्षितसमाः मन्दमतित्वादिकमेव दर्शयति—त इमा-मिति तं मामिति क्वचित् ॥ ३३ ॥

ननु, त्वमप्ययुक्तमेवावोचन इति चेत्तत्राह—नेति । किल किमर्थे अनृते वा अपितु विभुरेवेत्यर्थः । यद्वा उग्रसेनः किल निश्चयेन विभुरिति विरोधलक्षणया ॥ ३४ ॥

टीकायां कृष्णमप्याक्षिपन्त्य इत्यत्र समुदायोक्तेरिति भावः । अमराणामङ्घ्रिप इति मनुष्याभोग्यत्वं तथा तदर्थमिन्द्रादिदेव-निर्जयादिकञ्च सूचितं न अध्यासनं सिंहासनम् अर्हतीति तथा सः किल शिरश्चालने उपहासे वा किन्तु सुतरामेव तदर्हण इति यद्वा किल निश्चयं तादृशोऽसौ तदपि तुच्छं नार्हत्येवेत्यर्थः । एवमग्रेऽपि ॥ ३५ ॥

अहो कियद्वा तावन्माहात्म्यं यतो यस्येति साक्षाच्छ्रीः स्वरूप-शक्तिरूपा वैकुण्ठेश्वरी यद्वा ततोऽपि पूर्णाविर्भावा रुक्मिणी-रूपा अत एवाखिलानां मत्पर्यन्तानामीश्वरी तत्र वा का वराकी मायावृत्तिरूपा स्वर्गादिश्रीरित्यर्थः । श्रीश इति पुनरनुवादस्तद्व्यक्त्यर्थः ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त इम इति । खला मूर्खाश्च मामवज्ञाय अवहेल्य मानिनो दुरहङ्कारिणो दुर्वाक्यान्यूचुः ॥ ३३ ॥

दुर्भाषणमेवानुस्मरति—नेति । उग्रसेनो विभुः न प्रभुः किलेति काकुः काका सूचितमनुशयमेव व्यञ्जयितुं विशिनष्टि—भोज-वृष्ण्यन्धकेश्वर इति । एवमग्रेऽपि इन्द्रादयो यस्य यदुराजस्य आज्ञानुवर्तिनः किल पूर्ववद्विशिनष्टि—लोकपाला इति ॥ ३४ ॥

सुधर्मेति । सुधर्मानाम सभा येनाक्रम्यते अधिष्ठीयते सोऽसौ कृष्णः सिंहासनार्हो न किल ॥ ३५ ॥

पुनस्तमेव विशिषन्नेतदेवाह—यस्येति द्वाभ्याम् । अखिलानां ब्रह्मादीनां ईश्वरी लक्ष्मीः साक्षाद्यस्य पादयुग्मम् उपास्ते सोऽसौ भग-वान् श्रियःपतिर्नरदेवचिह्नानि नार्हति किल श्रीश इति पाठे त्रिलोकेशः ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽसौ कृष्णः ॥ ३५—३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्रियार्थमाह—त इम इति । यतो मन्दमतयः तर्हि युक्तोपमे लौकिके शान्ता भविष्यन्तीत्याशङ्क्याह—कलहाभिरता इति । पर-स्परकलह एव अभितो रतिर्येषां कलहे तु युद्धे मरणमेव शान्तिर्नेति नन्वन्तर्यामितया प्रेरणीया इति चेत्तत्राह—खला इति । मूलेच्छया तानन्तर्यामी तथैव प्रेरयतीति तथापि त्वया शमार्थमुद्यमः कृतः इति तदेव कर्तव्यमिति चेत्तत्राह—तम्मा-मवज्ञायेति । तादृशशमकर्तारं मां तत्र तत्र वा अङ्गीकारे हि वाक्यैः हिताचरणादिभिश्च प्रबोधो भवति नान्यथा तेऽवज्ञा-मेव कुर्वन्ति मुहुरिति पुनः परीक्षा निषिद्धा अवज्ञाया मानसो दोष इत्युक्तः दुर्भाष्यान् दुष्टवाक्यानि अब्रुवन् अयं वाच-निको दोषः मानिन इत्यग्रेऽप्यसमाधानम् ॥ ३३ ॥

ननु, युक्तमेतेषां वाक्यम् उग्रसेनस्यैक्यत्वेन त्वयापि कि-मित्युच्यते इत्याशङ्क्योग्रसेनस्य सर्वराजाधिपत्यं साधयति—नोग्र सेनः किल विभुरिति । स्वतो बलाभावायाह—किलेति । नाम्नैव तस्येश्वरत्वं पूर्वसिद्धं सूचितं तथापि विभुः लौकिक-न्यायेनापि समर्थः अन्यथा तत्पुत्रः कंस एव राजा न भवेत् किञ्च साम्प्रतं भोजवृष्ण्यन्धकानामीश्वरः त्रिविधानामपि यादवानां

यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।
ब्रह्मा भवोऽहमपि यस्य(१)कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥ ३७ ॥
भुञ्जते कुरुभिर्दत्तं भूखण्डं वृष्णयः किल ।
उपानहः किल वयं स्वयन्तु कुरवः शिरः ॥ ३८ ॥
अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ।
असम्बद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥ ३९ ॥
अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ।
गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रभुः अलौकिकं सामर्थ्यमाह---शक्रादयो लोकपाला इति । भगवतः इच्छया आज्ञया वा मयि भृत्य उपासीन इत्यैतद्विवृतं यस्योग्रसेनस्य आदेशमात्रां अनुवर्तन्त इति अन्यथा यथाभिलषितवृष्ट्यादि न भवेत् ॥ ३४ ॥

किञ्च येन सुधर्मा आक्रम्यते इन्द्रादयोपि नमस्कृत्य तां सभामारोहन्ति तादृशीमप्याक्रमति अमराङ्घ्रिपश्च पारिजातः आक्रम्यते तन्मर्यादादूरीकरणात् तस्याप्याक्रमणम् इन्द्रादीनाम् अननुमतौ॰ कथमेतत् द्वयं स्यात् भगवत्सामर्थ्यमेतदिति नाशङ्कनीयं भगवतैवोग्रसेने ऐश्वर्यकला स्थापितेति नरत्ववत्तदधीनत्वमप्यङ्गीकृतमित्यङ्गीकृता ग्लानिर्न दोषाय अनधिकारिणा एते अस्माभिस्तुल्यतां नीताः राज्यं च दत्तमिति यदुक्तं तन्निराकरोति-आनीय भुज्यते सोऽसौ न किलाध्यासनार्हेण इति । न हि सर्वे राजानो भवन्ति यद्येको राज्यार्हो न भवेत् तदैतद्वचनं सार्थकं स्यात् तत्र भाग्यं क्रियाशक्तिश्च प्रयोजके तत्रापि क्रियाशक्तिः प्रयोजिका यदिन्द्रं निर्जित्य पारिजातः आनीय भुज्यते ननु सा शक्तिः साम्प्रतं कुण्ठिता भविष्यतीति चेत्तत्राह-सोऽसाविति । स एव भगवानिदानीं ममाग्रे तिष्ठति नैतं किलेत्युपालम्भार्थं प्रसिद्धिः ॥ ३५ ॥

भाग्योत्कर्षमाह-यस्य पादयुगमिति । सर्वेषां भाग्यं लक्ष्म्याधीनम् अतः सा सर्वेश्वरी सापि नीचतया भगवच्चरणारविन्दं सेवते साक्षादित्याधिदैविकी न तु दिव्या स्त्रीरूपा नापि राज्यलक्ष्मीरूपा यदाहुः, चामरव्यजने शङ्खमिति । तद्दूषणार्थं हेतुमुक्त्वा तदनूद्य दूषयति-स नार्हति किल श्रीश इति । चामरव्यजनादयो नरदेवपरिच्छदाः अनर्हत्वे हि तदुपेक्षया भोगो भवति अन्यथा इन्द्रादीनामपि तथात्वं स्यात् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तं प्रसिद्धमेतेषां हितकारिणमपि माम् ॥ ३३ ॥

दुर्भाषणान्यनुस्मरति षड्भिः-नोग्रसेन इति ॥ ३४ ॥

अहो दुर्वृत्ताः अलं यदूनामित्युक्त्वा कृष्णमप्याक्षिपन्तीति कुपित आह-- सुधर्मेत्यादिभिस्त्रिभिः । अध्यासनं नृपसिंहासनं तदपि नार्हति ॥ ३५--३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुर्भाषान् अवाच्यान् ऊचुः ॥ ३३ ॥

दुर्भाषणमनुस्मरति-नेति षड्भिः । शक्रादयो देवा लोकपालाः यस्यादेशानुवर्तिनः स उग्रसेनः विभुराज्ञापयितुं समर्थो न भवति नरान् भूखण्डपालकान् कौरवान् प्रतीति भावः ॥ ३४ ॥

अलं यदूनामित्यनेन सामान्यतः श्रीकृष्णमप्याक्षिप्तवन्तः अत एव क्रुद्धः सुधर्मेति त्रिभिराह—येन श्रीकृष्णेन सुधर्मा नाम सभा आक्रम्यते अधिष्ठीयते ॥ ३५ ॥

साक्षात् श्रीरुक्मिणी ॥ ३६ ॥

---

भाषा टीका ।

सोये मन्दमति और कलह में प्रीतिवारे तथा अहङ्कारी कौरव लोग, मेरो तिरस्कारके वारम्वार इनोंने दुर्वाक्य सुनाये ॥ ३३ ॥

इन्द्रादि लोकपाल भी जिसकी आज्ञाके अनुसार वर्तते हैं और भोजवृष्णि अन्धक आदिके राजाधिराज ऐसा उग्रसेन भी क्या राज्यके योग्य नहीं है ॥ ३४ ॥

देवतान के भी दुर्लभ सुधर्मा नाम सभामें जो बैठने वारा और जो इन्द्रके नन्दन बागसे पारिजात को लायकर उसका भोगकरने वारा सो वह श्रीकृष्णभी क्या मनुष्य राजा के सिंहासनके योग्यनहीं है ॥ ३५ ॥

अखिल सम्पत्ति को ईश्वरी महालक्ष्मी साक्षात जिसके चरण युगल की उपासना करती है सो लक्ष्मीपति श्रीकृष्ण क्या राजान के चिन्ह छत्र चामरादिकन योग्य नहि है ॥३६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मौल्युत्तमैर्मौलियुक्तैरुत्तमाङ्गैः उत्तमैर्मौलिभिरिति वा उपा-

(१) कलाः कलायाः भजामहे सुचिरमितिविज पाठः । कलाकलांशा इति वीर॰ पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

सितानि तीर्थानि यैः योगिभिः तेषामपि तीर्थं यद्वा उपासितं सर्वैः सेवितं तीर्थं गङ्गा तस्यास्तीर्थं तीर्थत्वनिमित्तं किञ्च ब्रह्मा भवः श्रीश्चाहमपि उद्वहेम कथम्भूता वयम् यस्य कलाया अंशस्य कला अंशाः ॥ ३७—३८ ॥

मत्तानामिव मद्यादिना रूक्षाः परुषाः अनुशासिता स्वयं दण्डधरः सन् ॥ ३९—४० ॥

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

अथाखिलानामखिलैश्वर्यास्तस्याश्चोपास्यत्वं विशेषतो दर्शयन्नाह—यस्येति । अङ्घ्रिपङ्कजस्य रज इति जात्यैकत्वविवक्षया यत्किञ्चिदेकमपि रजः कथञ्चित्कुत्रचित्प्राप्तम् अस्य ईदृशस्य नृपासनं क अपितु कुत्रापि नास्तीति क्रोधोपहासः वस्तुतस्तु क्षत्त्रियातिनिकृष्ट एव पद इत्यर्थः ॥ ३७ ॥

ननु, श्रीभगवन्तमुद्दिश्य नोक्तं किन्त्वन्यानेव यादवानित्याशङ्क्यापि सोपहासमाह—भुञ्जत इति । इत्तमेव तत्रापि भूखण्डं कतिपयानेव देशान् अहोऽस्माकमपि यादवत्वादस्मानप्युद्दिश्योक्तवन्तीति पुनः सक्रोधोद्रेकमाह—उपेति ॥ ३८ ॥

ऐश्वर्येण मत्तानां हतविचाराणाम् अतो मानिनामभिमानिनाम् अत एवासम्बद्धा निरर्गला उन्मर्यादा इत्यर्थः । किञ्च रूक्षाः शब्दतश्चार्थतश्च कर्कशाः अनुशासितेत्यन्यथानुशासितृत्वहान्या सर्वेषामप्युच्छृङ्खलतापत्तिः स्यादिति भावः ॥ ३९ ॥

अतोऽद्यैव करिष्यामि इत्येतद्वदन् अमर्षितः क्रुद्धः सन् ॥ ४० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अधीशाः त्रिलोकेशाः ॥ उपासिततीर्थतीर्थं परमं पवित्रं यद्वा उपासितगुरूमन्त्राणां सतामपि तीर्थं पावनम् ॥ ३९—४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्येति । अखिलैर्लोकपालैः कर्तृभिर्मौल्युत्तमैर्मौलियुक्तैरुत्तमैरुत्तमाङ्गैः शिरोभिर्यस्याङ्घ्रिरजो धृतं कथम्भूतम् उपासिततीर्थतीर्थम् उपासितानि तीर्थानि गङ्गादीनि यैर्योगिभिस्तेषामपि तीर्थं पावनं यद्वा उपासितगुरूणां सतामपि पावनम् उपासितानां गङ्गादितीर्थानामपि पावनं वा यस्य च कलायाः कला अंशांशभूताः अहमनन्तः श्रीलक्ष्मीः उद्वहेम बिभृमः अङ्घ्रिरज इत्यनुषज्यते अस्यैवम्भूतस्य नृपासनं क कथं वा तदधिकारः इति काकुः ॥ ३७ ॥

भुञ्जत इति भुञ्जते किल ॥ ३८ ॥

अहो इति । मत्तानां मद्यादिना प्रमत्तानां मानिनां स्वैरिणाम् ऐश्वर्येण मत्तानामसम्बद्धाः रूक्षाः परुषाश्च गिरः को वा अनुशासिता दण्डयितुं समर्थश्चेत्सहेत ॥ ३९ ॥

अतोऽद्य भूमिं निष्कौरवां करिष्यामीत्यभिसन्धायेति शेषः । अतिक्रुद्धो जगत्त्रयं दहन्निव हलं जगृहे गृहीत्वोदतिष्ठत् ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रद्धामहे आकाङ्क्षामहे सर्वैरुपासितं निषेवितं तीर्थं भागीरथी अस्या अपि तीर्थं शुद्धिकरम् अस्य कृष्णस्य ॥ ३७—३८ ॥

अनुशासिता शिक्षाकरः ॥ ३९—४२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यदप्युक्तम् अलं यदूनामिति तत्तदा स्यात् यदि स्वतः सिंहासनं न स्यादिति वक्तुं तस्य सिंहासनोपपत्तिमाह—यस्याङ्घ्रिपङ्कजरज इति । अष्टौ लोकपालाः परितः उपरि ब्रह्मा अधः शेषोऽहम् एतेषां दशानामाशापालानां मध्ये प्रभुणा भाव्यं स एव मुख्यो राजशब्दार्थः । प्रभुत्वञ्च दिक्पालकानां सर्वथा हीनभावावलम्बनेन भवति एतत्तु सर्वैरेव दृष्टमिति सिद्धवन्निरूप्यते तस्य चरणकमलरजः अखिललोकपालैः सर्वैरेव पूर्वोक्तैर्मौल्युत्तमैरिति करणे तेषामपि भगवदीयत्वसिद्ध्यर्थं लौकिकन्यायेन स्वामिसेवायां वा ऐश्वर्योत्कर्षमुक्त्वा धर्मोत्कर्षमाह—उपासिता तीर्थानामपि तीर्थभूता गङ्गा यस्य कीर्तिमाह—ब्रह्मा भवोऽहमपि यस्य कलाः कलाया इति । भगवतः कला जगदुत्पत्तिस्थितिविनाशकर्त्री काचित् तस्याश्चांशाः सत्त्वादयः तत्र रजो ब्रह्मा भवः अहं सत्त्वं भूधरत्वात् श्रियमाह—श्रीश्चेति । चकारादन्तःस्थिते ज्ञानवैराग्ये निरूपिते वयं सर्व एव यस्य रजः शिरसि स्थापयामः तस्य नृपासनं क भवतीति श्रियोक्तिः ॥ ३७ ॥

एवमभिप्रेतार्थं निरूप्य साक्षात्तदुक्तमर्थं खण्डयति—भुञ्जते कुरुभिर्दत्तमिति । यद्दत्तं भूखण्डमात्रमेव भवति तत्रापि स्वरूपतोऽपि हीनत्वम् उपानहः किल वयमिति उत्कर्षस्य निरूपितत्वाद्बाधितार्थत्वं स्पष्टमेव ॥ ३८ ॥

तर्ह्येवं सति किं कर्तव्यमिति चेत्तत्राह—अहो ऐश्वर्यमत्तानामिति तेषां वाक्यमसोढव्यं ततो यत्कर्तव्यं तदग्रे वक्ष्यते आदरणीयानां वाक्यं कर्तव्यं लोकेऽपि मत्तास्त्वनादरणीयाः तत्राप्यैश्वर्येण नित्यमत्ताः बहिर्व्यवहारे माननीयत्वमाशङ्क्य मत्तस्याज्ञानादेव तथात्वमिति ज्ञापयन् दृष्टान्तमाह—मत्तानामिवेति । इवेत्यग्रेऽपि सम्बध्यते मानिनामिवेति च आत्मानमेव बहु मन्यमाना उन्मत्ता भवन्ति ते सर्वदैव न माननीया इति दृष्टान्तद्वयं किञ्च वाक्यान्यपि असम्बद्धानीत्याह—असम्बद्धा गिरो रूक्षा इति । स्नेहेन बाधितार्था अपि प्रयोजका भवन्तीति तदभावमाह—रूक्षा इति । तत्र सहनमुभयेषामिति सम्भवत्यविवेकिनामसमर्थानाञ्च वयन्तु नोभयविधा इत्याह—अनुशासितेति । लोके अनुशासनाधिकारिभिः न सोढव्या इति ॥ ३९ ॥

ततो यत्कर्तव्यं तत्प्रतिजानीते—अद्य निष्कौरवां पृथ्वीं करिष्यामीति । यादवेभ्यः कौरवमात्रस्यैव तैरुत्कर्षो निरूपित इति भगवद्धस्ते भूतानां स्वर्गोऽस्तीति भूमिमेव निष्कौरवीं

लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ।
विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥ ४१ ॥
जलयानमिवाघूर्णं गङ्गायां नगरं पतत् ।
आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥ ४२ ॥
तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः ।
सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम् ॥ ४३ ॥
राम रामाखिलाधार प्रभावं न विदाम ते ।
मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम् ॥ ४४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रतिजानीते आद्यो मनसि तस्योद्यममाह-अमर्षित इति । कायिकमाह-गृहीत्वा हलमुत्तस्थाविति । तस्योद्यमः सर्वजनीनो जातः इति ज्ञापयितुं दृष्टान्तमाह-दहन्निव जगत्त्रयमिति । सङ्कर्षणो हि प्रलये तथोत्तिष्ठति यस्य मुखाद्वहिरुद्गच्छति त्र्यक्षश्च महादेवः तद्रूपं प्रकटितवानित्यर्थः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मौल्युत्तमैर्मौल्युत्तमेषु धृतम् उपासिततीर्थो योगीन्द्रास्तेषामपि तीर्थरूपं किञ्च ब्रह्मैव युष्मद्विधानां स्रष्टा इन्द्रादिभ्योऽप्यैश्वर्यगुणाधिकः ततोपि भवः ततोऽप्यहमेवमेते ब्रह्मादयो वयं यस्य कलाया एकस्या एव कलाः तथा अस्मत्तः सर्वेभ्योऽप्यधिकश्रीः स्वरूपभूता शक्तिः उद्वहेम उत्कर्षेण वहामः अस्य कृष्णस्य नृपासनं क किमेतेभ्यः सकाशात् भिक्षित्वैव एतत्कृपयैव लभ्यं स्यादिति वक्रोक्तिः ॥ ३७—३८ ॥

एवं वक्रोक्त्या उपहस्य तत्त्वमाह—सार्द्धपादाधिकेन श्लोकेन अहो इति । मत्तानां मदिरामत्तानामिव मानिनां गर्ववताम् अनुशासिता स्वयं दण्डकर्त्ता सन् मादृशः खलु कः सहेत अन्यः सहतां नामेति भावः ॥ ३९—४० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्य श्रीकृष्णस्य अङ्घ्रिपङ्कजरजः अखिलैः सकलैर्लोकपालैरिन्द्रादिभिः मौल्युत्तमैः शिरोभूषणयुक्तैः शिरोभिर्धृतम् किम्बहुना यस्य कलायाः कलाभूताः ब्रह्मा अहं श्रीश्च भवः उपासितानां तीर्थानामपि तीर्थं शुद्धेर्निदानम् अङ्घ्रिरजः उद्वहेम अस्य क नृपासनम् ॥ ३७—३८ ॥

मत्तानां मदिरादिना मत्तो गर्वस्तद्वतां रुक्षाः नीरसाः अनुशासिता स्वयं दण्डकर्ता कः ॥ ३९—४० ॥

### भाषाटीका ।

जिसके चरणारविन्द की रज को इन्द्रादिक सब लोकपालोंने उत्तम मस्तकों पर धारण करी है और रज निज श्रेय को वाँछाकरने वारो सें सेवित गंगादिक तीर्थन को भी पवित्र करने वारे है और जिस की कला की भी कलारूप ब्रह्मा महादेव और मैं शेष तथा लक्ष्मी ये सब रज उस को चिर काल से मस्तक करके धारण करते हैं ऐसे श्रीकृष्ण को राज सिंहासन कहां अर्थात् वह राज सिंहासन के योग्य नहि है क्या ॥ ३७ ॥

और कौरवन के दीये हुए हि भूमि के खण्ड को यादवन लोग भोगते हैं यह कहना भी ठीक है और हम यादवन लोग पावन की जोडी हैं तथा कौरव लोग स्वयं मस्तक हैं यहभी ठीक है ॥ ३८ ॥

जैसे उन्माद से मत्त वारेन की वाणी नहिसाही जाती तैसेहि एश्वर्य्य से मत वारे अहंकारी खलन की अयुक्त कठोर वाणीन को दण्ड देने में समर्थ कौन सहन करेगा ॥ ३९ ॥

इस लिये आज पृथिवी पर कौरवन नाम मात्र नहि रहने दूंगा ऐसा निश्चय करके मानों त्रिलोकी को भस्महि करदेवेंगे इस प्रकार अत्यन्त क्रोधित होकर हलको लेकर श्रीबलदेव जी खड होगए ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

लाङ्गलाग्रेण दक्षिणतः प्राकारमूले निखातेन उद्विदार्य उत्पाट्य ॥ ४१—४२ ॥

जिजीविषव इत्यक्षराधिक्यं सोढव्यम् ॥ ४३ ॥

मूढानां प्रभावानभिज्ञानाम् अतिक्रमम् अपराधम् ॥ ४४-४५ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गङ्गायां विचकर्ष बलादानेतुमारभत किमर्थं प्रहरिष्यन् संहर्तुमित्यर्थः । किं वा गङ्गायां प्रहरिष्यन् प्रक्षेपेण पातयिष्यन्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निमज्जयितुमित्यर्थः । एवं तदिच्छया लाङ्गलस्य दैर्घ्यादिकं ज्ञेयम् ॥ ४१ ॥

जलेति युग्मकम् । आदावाघूर्णतीत्याघूर्णं पश्चात् पतदालोक्य तत्पश्चादाकृष्यमाणं तेन जिजीविषव एवेति सर्वाभिमानो निरस्तः प्रभुमिति परमेश्वरबुद्ध्या शरणं जग्मुरित्यर्थः । यद्वा सर्वापराधक्षमासमर्थम् इति शरणे योग्यतोक्ता यद्वा साम्बस्य विशेषणं प्रभुभावेन पुरस्कृत्य एतच्च पुरीपतनेनैतयोरनिष्टं स्यादित्यभिप्रायव्यञ्जनेन श्रीरामस्य प्रीतये प्राक् तदपेक्षितसमर्पणेन च श्रीरामस्य तु साम्बपतनशङ्कानपेक्षा पुर्याकर्षणस्य भीषणतामात्रतात्पर्य्येण ॥ ४२ ॥ ४३ ॥

कथं शरणं जग्मुस्तदाह—रामेति । हे जगत्सुखप्रद ! वीप्साति भयात् ननु भक्तानेव रमयामि नत्वन्यानिति चेत्सत्यं तथापि जगतस्त्वमेव गतिः नत्वन्यः कोपीत्याहुः हे अखिलानामाधार आश्रयेति तत्र हेतुः अधीश्वर हे ब्रह्मादीनामपीश्वरेति अतोऽस्माकं अपराधमिति शेषः यद्वा नः अस्मान् क्षन्तुमर्हसि ननु महापराधिनो यूयं न क्षमायोग्याः तत्राहुः मूढानामज्ञानाम् अतः कुबुद्धीनां दुरभिमानिनां दुष्टविचाराणां वा यतस्तव प्रभावं न विद्मः अतोऽस्मदादीनामपराधो दीनवात्सल्येन न ग्राह्य एवेति भावः ॥४४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सलक्ष्मणं लक्ष्मणया स्वभार्यया सहितम् ॥ ४३-४५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लाङ्गलाग्रेणेति । स रामः गजाह्वयं नगरमुद्धिदार्थं दक्षिणतः प्राकारमूले निखातेनोत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुं इत्यर्थः विचकर्ष आकृष्टवान् यतोऽमर्षितः ॥ ४१ ॥

जलयानमिवेति । आकृष्यमाणमत एव जलयानं प्लवमिवाघूर्णं भ्रमद्गङ्गायां पतच्च नगरमालोक्य जातः सम्भ्रमः सम्यक् भ्रमः कम्पो येषां ते ॥ ४२ ॥

जिजीविषवः जीवितुमिच्छवः कुटुम्बैः सहिताः तं राममेव शरणं ययुः सलक्ष्मणं लक्ष्मणया सहितं साम्बं पुरस्कृत्य पुरतो निधाय बद्धाञ्जलयः प्रोचुश्च ॥ ४३ ॥

उक्तिमेवाह–रामरामेति पञ्चभिः । कुबुद्धीनां नोऽस्माकमपराधमिति शेषः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुटुम्बीनामिति दीर्घश्छान्दसः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्रियामाह–लाङ्गलाग्रेणेति स्त्रियो बालाश्च युद्धे मारयितुमशक्या इति तस्यां भूमावुत्पन्नाः कौरवा एवेति लोके प्रसिद्धा भविष्यन्तीति नगरमेवोद्विदार्य जन्मान्तरेपि तथात्वाभावाय गङ्गायां प्रहरिष्यन् विचकर्ष क्रियाद्वयं निष्पन्नं त्रितीयां क्रियां निवारयितुं चकारः प्रहरणे विलम्बहेतुमाह–अमर्षित इति । अभिक्रोधावेशात् न कृतवान् अविचारं वा प्रहरणबुद्धौ हेतुः ॥ ४१ ॥

कथमेतावता शिक्षा जातेत्याकाङ्क्षायामाह—जलयानमिवेति । आ समन्तात् घूर्णा यस्मिन् तदाघूर्णान् नगरं शश्वत् क्रियाभिन्नं वाक्यं गङ्गायां पततदिति मरणावश्यकताप्रतिबोधनं मरणञ्च ज्ञापितवान् तत्र हेत्वन्तरनिराकरणाय बलक्रियादर्शनं कौरवाणामाह—आकृष्यमाणमिति । कौरवत्वप्रसहजदोषाभावः जातसम्भ्रमा भीताः अनेन गर्वनिवृत्तिरुक्ता अतो दोषस्य निवृत्तत्वात् गुणस्य च विद्यमानत्वात् शरणं जग्मुः ऐकमत्यमाह—सकुटुम्बा इति । मोक्षाभावायाह–जिजीविष इति निमित्ते विद्यमाने शरणागतिमपि नाङ्गीकुर्यादिति साम्बस्य सभार्यस्यानयनमाह—सलक्ष्मणमिति । लक्ष्मणासहितं प्राञ्जलयो विज्ञापनार्थाः कथमपकर्षोऽङ्गीक्रियत इति चेत्तत्राह—प्रभुमिति । ते हि पूर्वं वार्त्तामात्रहारित्वं भगवतो ज्ञातवन्तः पश्चात् क्रोधे कृते भीताः ॥ ४२—४३ ॥

स्तोत्रमाहुः पञ्चभिः—रामरामेति—

पूर्वं कृतापराधस्य क्षमापनमिहोच्यते ।
क्रीडार्थत्वं तत्र हेतुः महत्त्वञ्चापि सान्त्वनम् ।
अन्यार्थश्च समारम्भः शरणञ्च वयङ्गताः ॥ ”

तत्रापराधक्षमायां पञ्चहेतूनाह—रामेति । रमणात्मकस्वविरेण क्लिष्टसम्बोधनमयमपि हेतुः परं भगवद्धर्मः अखिलाधारेति वयमाधेयाः न हि योऽयं बिभर्त्ति स तदपराधं मन्यते अज्ञानमपि हेतुरित्याह– प्रभावं न विदामह इति । यद्यपि सहजः प्रभावो ज्ञायते तथाप्यत्राविष्कारं न करिष्यसीति न जानीमः सर्वत्रावतारेषु प्रतिज्ञातार्थमात्रपूरकत्वात् , नन्वेतादृशोऽप्यर्थः प्रतिज्ञासिद्ध एवेति कथमज्ञानं तत्राह– मूढानामिति । विचाररहितानामिति ननु सर्वेषां कथं विचाराभावः । तत्राह–कुबुद्धीनामिति । दुर्बुद्धित्वात् कैश्चिदुक्तमपि न गृहीतमित्यर्थः—

“बुद्धिर्न शुद्धा नो शास्त्रं नापि ज्ञानं स्वतः क्वचित् ।
प्रभुः स्वामी भवांश्चापि धारकः क्षमामर्हति ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लाङ्गलाग्रेण तदिच्छया वर्द्धितस्य लाङ्गलस्याग्रेण दक्षिणतः प्राकारमूलं निखातेन उद्विदार्य्य उत्पाट्य विचकर्ष बद्धाञ्जलान्तिकमानिनाय किं कर्तुं प्रहरिष्यन् प्रहर्तुं साम्बं विना सर्वमेव नगरं स्वजलेनैव प्रहृत्य वध्यतामिति गङ्गां प्रतीत्यादेशात् निष्कौरवां पृथ्वीं करिष्य इति प्राक्प्रतिज्ञातश्च सर्वमग्नरनिमज्जनेऽपि साम्बस्य न किमप्यमङ्गलमभविष्यदिति ज्ञेयम् ॥४१॥

जलयानमुडुपमिव आ समन्तात् घूर्णत इत्याघूर्णं जिजीविषव इत्यक्षराधिक्यं न दोषः नवाक्षरकपादो वृत्तभेदोऽस्तीति. भाषावृत्ताधुकः सलक्ष्मणं साम्बं पुरस्कृत्येति रामं सद्यः प्रसादयितुम् ॥ ४२—४५ ॥

स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ।
लोकान् क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥ ४५ ॥
त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६ ॥
कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ।
बिभ्रतो भगवन् सत्त्वं स्थितिपालनतत्परः ॥ ४७ ॥
नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय ।
विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणङ्गताः ॥ ४८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उद्धिदार्थं उत्पाट्य गङ्गायां प्रहरिष्यन् निमज्जयितुमित्यर्थः । विचकर्ष आकृष्टवान् लाङ्गलवृद्धिः साम्बगोविप्रादिरक्षासु तत्-सङ्कल्पावेशेनेति ज्ञेयम् ॥ ४१—४३ ॥

क्षन्तुमर्हसि अपराधमितिशेषः ॥ ४४ ॥

### भाषा टीका ।

श्रीबलदेव जी अत्यन्त क्रोधित होकर हलके अग्रभाग करके हस्तिनापुर को उखाडकर उसको गङ्गा में गेरने को खीचते भए ॥ ४१ ॥

जब नगर खिचने लगा तब तो नौकाके समान घूमकर गङ्गा में गिरने लगा उसको देखकर कौरवन को सम्भ्रम होगया ॥ ४२ ॥

कुटुम्बसहित जीनेकी इच्छा करके लक्ष्मणा सहित साम्ब को आगे कर के और अञ्जलि जोडकर सर्व शक्तिमान् श्रीबलदेवजी केहि शरणि जाते भए ॥ ४३ ॥

और इस प्रकार प्रार्थना करने लगे कि हे राम २ हे अखिलाधार ! आप के प्रभावको हम सब नहि जानते इस लिये मूर्ख कुबुद्धि हम लोगों के अपराधकों आप क्षमा करने के योग्य हो ॥ ४४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शेषे शयनङ्करोषि शेषपर्यङ्के परिशिष्यमाणो यः स च त्वमेवेति ज्ञा ॥ ४६ ॥

अस्मासु कोपश्च तवायमुचित एवेत्याहुः—कोपस्त इति । स्थितिपालने तत्परस्तात्पर्यवान् कोपः पाठान्तरे सम्बोधनम् ॥ ४७ ॥

विश्वं कर्म कृत्यं यस्य स त्वमिति सम्बोधनम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदंशभूतसङ्कर्षणाख्यमहत्स्रष्टृपुरुषाभेदेनाधीश्वरत्वमेवाभि-व्यञ्जयन्ति—स्थितीति । स्थितेरादौ निर्देशः सम्प्रति पालनापेक्षया न च तेषु तवाप्यपेक्षाऽस्तीत्याहुः निजाश्रय इति पाठः क्वचित् नच तैः प्रयोजनमपीत्याहुः लोकानिति । "लोकवत्तु लीला-कैवल्यम्" इतिन्यायेनेति भावः । तदुक्तं नारायणाध्यात्मे—

"सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु ।
कुरुते केवलानन्दात् यथा मत्तस्य नर्त्तनम्" ॥ इति.

किन्तु सङ्कल्पमात्राद्यथावत्करणाच्च त्वयि सर्वज्ञत्वादिकन्तु विशेष इति भावः । अतः क्रीडता त्वया वयं यथा नियुक्ताः स्मः तथैव प्रवृत्ता इति कुबुद्धित्वेप्यस्माकं को नाम दोषस्तत क्षन्तुमेवार्हसीति तात्पर्यं निजाश्रय इति पाठे भक्तमात्रापेक्षया स्थित्यादिकर्त्ताप्यानुषङ्गिकतयान्येषामपि स्थित्यादिकर्त्ता भवसीति व्याख्येयम् ॥ ४५ ॥

तत्रापि निजमूर्त्तिविशेषेण परमकृपया पृथ्वीधारणात् पालनमेव तव मुख्यमित्याहुः—त्वमिति । अनन्त हे अपरिच्छिन्नत्वादनन्तसंज्ञक अतो हे सहस्रमूर्द्धन् ! अतो लीलयैव तवैकेन मूर्ध्ना इदं सर्वाधारं बिभर्षि नच प्रलयेपि पालकत्वं व्यभिचरसीत्याहुः—अन्तेचेति । नैमित्तिकप्रलये स्वस्य आत्मनि विग्रहे निरुद्धं स्थापितं संरक्षितं विश्वं येन स गर्भोदकशायिरूपेण शेषे अद्वितीय इति तदानीं त्रैलोक्ये न विद्यते द्वितीयो यस्य सः ॥ ४६ ॥

अतः कोपोपि तव जगत्पालनायैवेत्याहुः—कोप इति । खलु निश्चितम् अखिलेति पाठे अखिलस्य शिक्षार्थं हितायेत्यर्थः । यतः स्थितये यत्पालनं तत्परः अत एव न द्वेषान्न च मत्सरात् यतः सत्त्वं गुणं श्रीविष्णुरूपेण बिभ्रतः पुष्णतः तेन च न तत्रोपकृतिरित्याहुः—हे भगवन् ! स्वाभाविकशक्तिविलासैश्वर्यादिप्रशस्तेति अतो लोकरक्षयैव तत्पोषणमिति भावः ॥ ४७ ॥

तथाप्याकर्षणादनिवृत्तं दृष्ट्वा अतिभीत्या तत्प्रियनामसङ्कीर्त्तनेन मुहुः प्रणमन्तः शरणं यान्ति—नम इति । नमस्कारे हेतुः हे सर्वेषाम्भूतानाम् आत्मन् अन्तर्यामिन् ! अत एव सर्वशक्तिधर सर्वेन्द्रियविविधवृत्तिप्रवर्त्तनात् यतोऽव्यय हे सर्वैश्वर्यपूर्ण ! अतो विश्वकर्मन् हे जगत्स्रष्टरित्यर्थः । अस्त्विति नमस्कारस्य नित्यसत्तां प्रार्थयन्ते शरणगमनयोग्यता च तैरेव विशेषणैः तत्र सर्वेति परमैश्वर्यमुक्तं तत्र हेतुः सर्वशक्तिधरेति तथाप्यव्ययेति तदेव दर्शयन्ति विश्वेति ॥ ४८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अद्वितीयः समाभ्यधिकरहितः दग्धवीर्यः स्वभावः कार्योन्मुखं कुर्वन् ॥ ४६—४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्थितीति । अप्ययः प्रलयः तेषां त्वमेक एव हेतुराधारनयेतिभावः । कस्तर्हि मम हेतुस्तत्राहुः-निजाश्रय इति । निज आत्मा आधारो यस्य सः हे ईश ! क्रीडतस्ते तवेति क्रीडनकान् क्रीडोपकरणभूतान् वदन्ति त्वद्याथात्म्यविदः ॥ ४५ ॥

त्वमेको हेतुरित्येतदेव प्रपञ्चयति—त्वमिति । हे अनन्त मूर्द्धेत्यस्य सहस्रेत्यादिः सहस्रमूर्द्धा त्वमेक एवेदं कृत्स्नं भूमण्डलं मूर्द्धि लीलयैव बिभर्षि अन्ते प्रलये आत्मनि ग्रस्तं लीनं विश्वं यस्य स अत एवावशिष्यमाणोऽत एवचाद्वितीयः समाभ्यधिकरहितः शेषे शयिष्यसे परमात्मसन्दर्भेऽनुक्तम् ॥ ४६ ॥

कोप इति । हे क्षितिपालनतत्पर ! हे भगवन् ! सत्त्वं शुद्धसत्त्वमयं शरीरं बिभ्रतस्तव कोपः केवलं शिक्षार्थमेव न तु द्वेषात्नापि मत्सराच्च द्वेषोऽप्रीतिः मत्सरः कौटिल्यम् ॥ ४७ ॥

शरण्यत्वोपयुक्तगुणैः सम्बोधयन्तः शरणं व्रजन्ति—सर्वभूतात्मन्नित्यनेन सार्वज्ञं सर्वशक्तिधरेत्यनेन सर्वशक्तित्वम् अव्ययेत्यनेन रागद्वेषादिविकाररहितत्वम् अत एव सर्वसुहृत्त्वं विश्वकर्मन् इत्यनेन परत्वञ्चोक्तं भवति क्रियत इति कर्म कार्यं विश्वं यस्य कार्यं तथाभूतेत्यर्थः । सर्वमिदं परमात्मसन्दर्भोक्तम् ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रीडनकान् क्रीडासाधनानि ॥ ४५ ॥

अन्ते जगत्संहारे परिशिष्यमाणोऽद्वितीयः शेषे ॥ ४६ ॥

जगद्विभ्रतः ते कोपोऽखिलशिक्षार्थं सत्त्वं स्थित्यादितत्परः सद्भिरत्र हलधरं यथोचितं प्राह्यमनुचितमन्तर्यामिविषयमिति तात्पर्यमवगन्तव्यं विश्वस्य प्रपञ्चस्यानुग्रहार्थं कर्म विक्रमलक्षणो व्यापारो यस्य स तथा तस्य सम्बुद्धिः हे विश्वकर्मन् ॥ ४७ ॥ ४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्चास्माभिरेवमपि न प्रार्थयितव्यं यतस्तवैव लीलार्थमिदं जगदिति तदाह—स्थित्युत्पत्तीति । एकनैवोत्पत्त्यादिकं क्रियते स्वस्मिन्नेव स्थिते न तत्र तथाकरणे प्रयोजनं लीला तदाह-लोकान् क्रीडनकानिति । ईश इति सम्बोधनम् अन्यथा न कुर्यादिति ज्ञापयति क्रीडनका यन्त्रादयः अन्यक्रीडार्थपरं व्यावर्त्तयति-क्रीडतस्त इति । वदन्तीति प्रमाणं व्यासादयः शुकश्चायमर्थः पूर्णत्वान्यथाप्रवृत्तिरयुक्ता ॥ ४५ ॥

किञ्च समानेषु दण्डः क्रियते न तु मशकतुल्येषु अतोऽतितुच्छत्वादस्मासु क्रोधो न युक्त इत्याशयेनाह-त्वमेव मूर्द्धेदमिति । अस्य कियती वार्ता पञ्चाशत्कोटिविस्तीर्णं भूमण्डलम् अनन्त मूर्द्धा लीलया बिभर्षि तादृशसहस्रमूर्द्धा भवान् भूमण्डलादधिकमात्रपरिमाणमायाति- न व्यापकतेत्यनन्तेति न केवलं मन्यप्रेरणया धारणं किन्तु स्वरुच्या यतः अन्ते आत्मनि ग्रस्तं विश्वं यतस्तादृशो भवान् अद्वितीयः शेषे शिष्टो भवसि यतः परिशिष्यमाणः त्वमेव अतः शेषनामेति भावः ॥ ४६ ॥

एवमपि महतः अत्यल्पेषु क्रियाविकारोऽनुचित इति निरूप्य कृतस्य कोपस्यान्यथाविनियोगमाह—कोपस्त इति । लोके द्वेधा कोपो भवति द्विष्टे वा महत्युत्कर्षासहनाद्वा तदुभयं न प्रकृते किन्तु शिक्षार्थमेव सर्वे एव भगवतो बालका इति ज्ञापयितुमखिलपदं तत्र हेतुः, गृह्णतो भगवन् सत्त्वमिति । गुणान्तरैरसंस्पृष्टसत्त्वमन्यथाबाधितं स्यात् सत्त्वस्य च महत् प्रयोजनमित्याह-स्थितिपालनतत्पर इति । जगतां मर्यादा पालनञ्चान्यथा न स्यात् ॥ ४७ ॥

शरणागतिं प्रार्थयितुं नमस्यन्ति-नमस्त इति । नमनमात्रेणैव प्रसादयोग्याय सर्वभूतात्मन्निति आत्मा स्वरूपेणापि तुष्यति सर्वशक्तिधरेत्यस्मदादितामसत्वाच्चयोऽपि तवैव अस्मदीयं सर्वं धर्माधर्मौ च भवानित्युक्तम् एवं सत्यस्मदीयदोषसम्बन्धः स्यादित्याशङ्क्याह-अव्ययेति । किञ्च एतत्पुरभङ्गः पुनरप्येतत् कर्त्तव्यः स्यादित्याशयेनाह—विश्वकर्मन्निति । विश्वं कर्म यस्येति मन्यदाप्यतिक्रमाभावाय नमनं प्रार्थयन्ते नमस्तेऽस्त्विति एवं प्रसन्नं विधायाहुः त्वां वयं शरणं गता इति ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शेषे स्वपिषि शेषपर्य्यङ्केऽद्वितीयः त्रैलोक्ये त्वदन्यस्य तदानीमविद्यमानत्वात् ॥ ४६ ॥

सत्त्व पालनार्थकं सत्त्वगुणमिदानीं बिभ्रतस्तव कोपोऽयमखिलानां शिक्षणार्थमेव कोपः कीदृशः स्थितेः, शिष्टमर्य्यादाया पालने तत्परस्तात्पर्य्यवान् यदयङ्कोपः कृतस्तत् एव वयं शिष्टाः सम्प्रत्यभूम पूर्वन्तु दुष्टास्त्वामपश्यन्तो गर्वान्धा एवास्मेति भावः निर्विसर्गपाठे सम्बोधनपदम् ॥ ४७ ॥

दुष्टान् वो वधिष्याम्येति चेत्तत्राह—सर्वशक्तिधर अस्माकं मारणेऽपि पालनेऽपि शक्ति दधास्येव अव्ययेत्यस्माकं जीवने मरणे वा तव न किमपि व्येति किञ्च हे विश्वकर्मन्निति विश्वमिदं तवैव कर्म कार्य्यमिति जीवयितुमेवास्मानर्हसीति भावः ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्रीडनकान् क्रीडोपकरणान् ॥ ४५ ॥

अन्ते संहारे स्वात्मनि ग्रस्तविश्वः ग्रस्तं प्रलीनं विश्वं यस्मिन् सः अत एव परिशिष्यमाणः अत एव अद्वितीयः निस्समानातिशयः शेषे शयिष्यसि व्यूहाद्विरहं बोध्यम् ॥ ४६ ॥

श्रीशुक उवाच।

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः।
प्रसादितः सुप्रसन्नो माभैष्टेत्यभयं ददौ ॥ ४९ ॥
दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान्।
ददौ च द्वादशशतान्ययुतानि तुरङ्गमान् ॥ ५० ॥
रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम्।
दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५१ ॥
प्रतिगृह्य तु तत्सर्वं भगवान् सात्वतर्षभः।
ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनन्दितः ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इहहो इच्छया इति अखिलानां शिक्षार्थम् ॥ ४७—४८ ॥

भाषा टीका।

जगत्की सृष्टि पालन संहार के एक आपहि कारण हो और आप स्वयं निराधार हो, हे ईश ! जिस कारण से आप क्रीडा करते हो इसी लिये ऋषिलोग सब लोकन को आप की क्रीडा के साधन कहते हैं ॥ ४५ ॥

हे अनन्त ! हे सहस्र शिर ! इस भूमण्डलको लीला करकेंहि आप अपने मस्तकपर धारण करते हो, और प्रलय कालमें इस विश्वको अपने शरीर में रखकर अव शेष अद्वितीय होकर जो शयन करने वारा कारण है सो आपहि हो ॥ ४६ ॥

हे भगवन् ! शिष्ट पुरुषों की मर्य्यादा के परिपालन में तत्पर होकर आप शुद्ध सत्व गुणको धारण करते हो इसीलिये आपका कोप सबको शिक्षा के अर्थ है कुछ द्वेष अथवा मत्सरपने से आपका कोप नहिं है ॥ ४७ ॥

हे सर्वभूतात्मन् ! हे सर्वशक्तिधर ! हे अव्यय ! आप के अर्थ नमस्कार है, हे विश्वकर्मन् ! पुनरपि आप के अर्थ नमस्कार होय हम सब आप के शरणि में आये हैं ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

वेपमानमयनं पुरं येषां तैः ॥ ४९ ॥

तुरङ्गमांश्च द्वादशायुतानि ॥ ५०-५१ ॥

सुहृद्भिः कौरवैः ॥ ५२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यगुद्विग्नैर्भीतैः तत्र हेतुः—वेपेति। सम्प्रसन्नस्त्यक्तकोपोऽभूत ततश्च प्राकारमूलाद्धलमुद्धृत्य सम्भृतवानिति ज्ञेयम् ॥ ४९

दुरिति युग्मकम्। तावज्ज्ञाने हेतुः, दुहित्रिति। अनेन श्रीबलदेवे न तत्रस्थे च लोके प्रीते सति मम दुहितुरनादरो न स्यादिति विचिन्त्येति भावः ॥ ५०—५१ ॥

भगवान् सर्वैश्वर्य्यपूर्णोऽपि प्रतिगृह्य स्वीकृत्य कुतः सात्वतर्षभः श्रीभीष्मादिभक्तवात्सल्यादिति भावः। यद्वा यादवश्रेष्ठः यदुकुलप्रीत्यर्थमिति अभिनन्दितः अनुमोदितः आनन्दप्रदानेन अनुज्ञात इत्यर्थः ॥ ५२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

वेपमानैः कम्पमानैः भीतैः ॥ ४९—५४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवमिति। संविग्नैः भीतैरत एव कम्पमानैरत एव प्रपन्नैः प्रसादितः प्रसन्नश्चासौ हलायुधः रामः भवं माकार्ष्टेत्येवमभयं ददौ ॥ ४९ ॥

दुर्योधन इति। पारिबर्हमुपायनं ददाविति सम्बन्धः, तदेव प्रपञ्चयति—द्वितीयान्तैः षष्टि हायना वत्सरा येषां तान् द्विशतञ्च साहस्रञ्च तयोः समाहारः तावतो गजान् ददौ द्वादशसाहस्रमितिपाठान्तरे तु स्पष्टोऽर्थः। तुरङ्गमांश्च द्वादशनियुतानि ददौ ॥ ५० ॥

रथानामिति। रौक्माणां स्वर्णालङ्कृतानां सूर्यस्येव वर्चो येषां तेषां रथानां निष्कं पदकाख्यं भूषणं कण्ठे यासां तासां दासीनां सहस्रं ददौ तत्र हेतुः दुहितृवत्सल इति ॥ ५१ ॥

प्रतिगृह्येति। तत्सर्वम् उपायनं प्रतिगृह्य सात्वतर्षभो रामः सुतेन स्नुषया च सहितः सुहृद्भिः कौरवैरभिनन्दितो ययौ ॥ ५२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

संविग्नैर्भयसञ्जातैः वेपमानानां कम्पमानानाम् अङ्गोपाङ्गानाम्

ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बन्धूननुरक्तचेतसः।
शशंस सर्वं यदुपुङ्गवानां मध्येसभायां कुरुषु स्वचेष्टितम् ॥ ५३ ॥
अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम्।
समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्धे हस्तिनापुरकर्षणविजयोनाम
अष्टषाष्टितमोध्यायः ॥ ६८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अयनैराश्रयैः ॥ ४९-५० ॥

रौक्माणि हेमचिताग्याभरणान्येषां सन्तीति रौक्मिणस्तेषाम् ॥ ५१—५३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तैः स्वाभिप्रायो जात इति प्रसन्नो जात इत्याह—एवमिति। प्रपन्नैः प्रतीकारः संभ्रिप्ता मनसि पूर्वधर्मरहिताः वेपमानमयनं स्थानं गृहं शरीरञ्च येषामिति भये हेतुः शरीरे च गर्वाभाव उक्तः अतस्तेषामुत्तमधर्मवद्भिः प्रसन्नो जातः प्रसादकार्यं कृतवानित्याह—माभैष्टत्यभयं ददाविति। धाम्ना सहकारिकं कृत्वा मानसमभयं ददौ ॥ ४९ ॥

कन्यासमर्पणं वारयितुं पारिबर्हमाह-दुर्योधन इति। षष्टिहायनाः पूर्णसम्वत्सराः सहस्र शतद्वयञ्च गजा द्वादशैवायुतानि तुरङ्गमाः रुक्मसम्बद्धानाम् ॥ ५० ॥

रथानामिति। बलप्रीतिः सूचिता सूर्यवर्चसां सर्वलोकप्रसिद्धानां भासा सम्वत्सरा ऋतवश्च शतादिसङ्ख्यया प्रीणिता इति कालक्षोधा सन्तोषतः शाम्बश्च महादेवावतारः बलश्च तथा त्रयोपि प्रीणिताः अन्यां प्रीणयति। दासीनामिति सहस्रेण दुहितृवत्सल इति दाने तस्याभिप्रायः ॥ ५१ ॥

उपदाने कदाचिदेते दुहितरि कोपं कुर्युरिति तेषां प्रणिपत्तिमुक्त्वा बलभद्रस्य तदङ्गीकारमाह—प्रतिगृह्येति। तानाभिनन्दनार्थं प्रतिग्रहपदम् अभयं दत्तवान् स्वयञ्च तद्दत्तं गृहीतवान् तत्सर्वमिति असङ्कोचात् शुद्धभावः तस्य स्थापितः तस्य हेतुर्न दाने किन्तु स्वपक्षे भगवान् तत्पक्षे सात्वतर्षभ इति भक्तानां स्वामी अन्यजीवाःमापराधा एव भवन्तीति तथाविधस्यानङ्गीकारे भक्तिमार्गे उत्सन्नः स्यात् स्वस्य तद्ग्रहणं वारयति—ससुतः सस्नुष इति। सुहृद्भिरनुमोदित इति पराक्रमेण वैषम्याभाव उक्तः ॥ ५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वेपमानमयनं पुरं येषां तैः ॥ ४९ ॥

कुञ्जरान् द्वादशशतानि तुरङ्गमांस्तु द्वादशायुतानि ॥ ५०-५४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वेपमानं कम्पमानमयनं पुरं येषां तैः ॥ ४९ ॥

पारिबर्हं विवाहकाले देयम् कुञ्जरान् द्वादशशतानि तुरङ्गमांश्च द्वादशायुतानि ॥ ५०—५४ ॥

---

भाषाटीका।

जिन का पुर घूम रहा है इसीलिये भयभीत होरहे और शरणि में आये हुये कौरवोंने प्रसन्न कराए श्रीबलदेवजी अत्यन्त प्रसन्न होकर बोले कि आप भय मत करो इस प्रकार कौरवनको अभय देते भए ॥ ४९ ॥

पुत्री में प्रेम वारा दुर्योधन दायजे में साठि रै वर्ष वारह से हस्ती और वारह हजार तुरङ्ग देता भया ॥ ५० ॥

सुवर्ण से मढे हुए सूर्य्य के समान तेज वारे हजार रथ और कण्ठ में धुकधुकी धारण किये एक हजार दासी देता भया ॥ ५१ ॥

यदुवंशीन में श्रेष्ठ श्रीबलदेव भगवान् दुर्योधन दिए हुए सब दायजेको लेकर पुत्र सहित और वधू पुत्र सहित और कौरवों से आनन्दको प्राप्त होकर द्वारकापुरीको आवते भए ॥ ५२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मध्येसभायां सभामध्ये ॥ ५३-५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टषष्टितमोध्यायः ॥ ६८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स्वीयां पुरीम् ततः प्रकर्षेण गीतमङ्गलवादित्रादिनाऽऽविष्टः सन् बन्धून् श्रीकृष्णवसुदेवादीन् यतोऽनुरक्तचेतसः अनुरागं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सदा तद्धर्मनिरीक्षकानित्यर्थः । पश्चाद्यदुपुङ्गवानुग्रसेनादीन् प्रति शशंस सभायां विषये यन्मध्यं तस्मिन् सभामध्य इति तेषामेव प्रहर्षणाय अतः स्वस्य चेष्टितमेव प्राधान्येन तेषां तु किन्तु यत्किञ्चिदुक्तमित्यर्थः ॥ ५३ ॥

अहो महान् प्रभावः श्रीमतो बलदेवस्येति सहर्षमाह—अद्यापीति । च इति' चेति वा पाठद्वयम् एतदिति साक्षाद्दर्शयति दक्षिणतो गङ्गायां गङ्गाया दक्षिणे पुरी दक्षिणभाग इत्यर्थः । अनु निरन्तरं दृश्यते ॥ ५४ ॥

अहो धाष्टर्यं साहसञ्च सन्तः पश्यन्तु मेऽद्भुतम् ।
स्वाम्यसौ मौनकृद्यत्र तत्र वाचालतां भजे ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । स्वपुरीं द्वारकाम् अनुरक्तं चेतो येषां तान् बन्धून् यदून् समेत्य यदुपुङ्गवानां मध्येसभायां सभायामत्र्य गन्कुरुषु स्वचेष्टितं तत्सर्वं शशंस कथयामास ॥ ५३ ॥

यद्बलेन गङ्गायां पुरपातनं तदसम्भावितं मन्वानं राजानं प्रत्याह मुनिः—अद्यापीति । यो युष्माकं पुरं हास्तिनं रामपराक्रममद्यापि सूचयन्नास्ते तत्र लिङ्गमाह—समुन्नतमिति । गङ्गायां दक्षिणतः समुन्नतं सत् दृश्यते ननु ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रामविक्रमो जलरेखावत् नश्वरो न किन्तु सर्वचक्षुर्विषय इत्याह—अद्यापीति । रामविक्रमं सूचयत् गङ्गायां दक्षिणतः समुन्नतं दृश्यत इत्यन्वयः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
( श्रीविजयध्वजतीर्थरीत्या नवतितमोऽध्यायः ॥ ९० ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बलभद्रचरित्रस्य प्रत्यापत्तिमाह—ततः प्रविष्ट इति । अन्यथा नन्दव्रजं गत इतिवत् भगवतः किञ्चित्कर्तव्यशङ्का स्यात् स्वपुरीं द्वारकां निर्विचारप्रवेशार्थमुक्तं हलायुध इति विचाराभावः सर्वान् ज्ञापयित्वा समलङ्कृते पुरे प्रवेष्टव्यं विवाहे विरोधे वा न कर्तव्यो मैत्रीवेति उभयकरणात् विचाराभावतः पुरप्रवेशानन्तरं बन्धून् समेत्य असम्मत्यभावायानुरक्तचेतस इति स्वपौरुषञ्च स्वयमेवोक्तवान् तन्निमित्तञ्च स्वचेष्टितं नगराकर्षणम् ॥ ५३ ॥

तस्य चरित्रस्य सर्वलोकप्रसिद्धत्वमाह—अद्यापीति । एतद्धास्तिनापुरं गङ्गासमीपे गङ्गामध्य इव वा तस्य सहजरूपं तत्र भवतीत्याह—सूचयद्रामविक्रममिति । अतो दक्षिणतः समुन्नतं कूलस्थानं कूलप्रदेश एवोन्नतो भवतीति तत्परः इदन्तु विपरीतमिति रामपराक्रमस्य सूचकं भवति इदानीन्तु तन्नगरं गङ्गायां पतितमिति ज्ञातव्यं "गजाह्वये हृते नद्या" इति द्वादशे वक्ष्यति अतो तद्दर्शनविरोधः शङ्कनीयो भवति कथनसमयेतु दृश्यत एव ॥ ५४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
एकोनविंशाध्यायविवरणम् ॥ १९ ॥ ६८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
अष्टषष्टितमोऽध्यायो दशमे ऽजनि सङ्गतः ॥ ६८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टषष्टितमोऽध्यायार्थप्रकाशः ॥ ६८ ॥

---

भाषा टीका ।

अब श्रीबलभद्रजी के चरित्र की श्रीशुकदेवजी फिर प्रत्यापाति वर्णन करते हैं, कि—तदनन्तर हल जिनका आयुध ऐसे श्रीबलदेवजी अपने श्रीद्वारका नगर में प्रवेश करके अनुराग युक्तचित्तवारे अपने बन्धुओं के साथ मिल कर यदु श्रेष्ठों की सभा के मध्य में जो आपने कौरवन के बीचमें हस्तिनापुर में जाकर चेष्टा करी उस सब समाचार को कहते हुए ॥ ५३ ॥

अब श्रीबलदेवजी के इस चरित्र की प्रसिद्धि सर्व जनों में है यह कथन करते हैं श्रीशुकदेवजी कहते हैं, कि- हे राजन् ! यह हस्तिनापुर इस समय में भी श्रीबलदेवजी के पराक्रम को सूचन-कर रहा है। क्योंकि ? हलसे उकसा-कर जो आपने खींचा है अब भी गंगाजी में दक्षिण की तरफ ऊंचा देखपडता है। परंच यहां यह इतनी बात जानने की है अब इस समय वह नगर श्रीगंगाजी में गिरपडा क्योंकि ? आगे द्वादश स्कन्ध में कहेंगे कि—" गंगाने जब हस्तिनापुर को हरलिया " तौ इसी कारण से अब वह हस्तिनापुर यदि गंगा तट पर दक्षिण की तरफ ऊंचा न दृष्टि-पडे तौ कुछ विरोध नहीं है क्योंकि उसको सब गंगा बहा लेगई जब शुकदेवजी ने कहाथा तब तौ उसीतरह देख ही पडता रहा ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें अरसठके अध्यायकी
भाषाटीका समाप्ता ॥ ६८ ॥

श्रीमद्भागवते महापुराणे दशमस्कन्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ।

—•◆◆:•:◆◆•—

### श्रीशुक उवाच ।

नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ।
कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ १ ॥
चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥ २ ॥
इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् ।
पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३ ॥
उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः ।
छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम् ।
कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥

॥ १ ॥

दिदृक्षामभिनयेनाऽह—चित्रमिति । द्व्यष्टसहस्रस्त्रीरुदावहत्परिणीतवान् ॥ २ ॥

तां द्वारवतीमनुवर्णयति—पुष्पितेति सार्धत्रयेण । पुष्पितेषूपवनेष्वारामेषूद्यानेषु च द्विजानामलीनाञ्च कुलानि तैर्नादिताम् ॥ ३ ॥

छुरितेषु व्याप्तेषु ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नरकं हत्वा तद्गृहादानीतानां तासां कन्यकानां विवाहानन्तरमेव तद्दिदृक्षया श्रीनारदागमनसम्भवात्तदानीमेव वक्तुं योग्यमप्येतद्रूपं तत्प्रसङ्गेन प्रसक्तानुप्रसक्तं चरितान्तरं समाधाय एकाग्रचित्तः प्रस्तौति—नरकमित्यादिना । कृष्णेन नितरां ससैन्यत्वादिना हतं श्रुत्वेति तस्य प्रहर्षः सूचितः तथा चित्रं बतेति वक्ष्यमाणरीत्या तेनैव बह्वीनां योषितामुद्वाहं च श्रुत्वेति तस्य विस्मयश्च सूचितः तत्र सर्वज्ञत्वेन स्वतस्तद्विज्ञानसम्भवेऽपि श्रुत्वेति परमाश्चर्यतया सर्वतोगीयमानत्वेन तयोराधिक्यं सूचितम् अत एव तत्तादृशं श्रीकृष्णस्य वैभवं दिदृक्षुरभूत् स्म प्रसिद्धो यतस्सुविख्यातमेवेत्यर्थः ॥ १ ॥

तस्य विस्मयमेव प्राधान्येन दर्शयंस्तद्धेतुकतादृशश्रीकृष्णवैभवदर्शनार्थद्वारकागमनं कथयंस्तत्पोषणाय द्वारकामपि वर्णयंश्चित्रमित्यादि पञ्चकमाह—अत्र च विस्मयदर्शकेनैकेन द्वारकागमनकथनमर्द्धं प्रथमतो योज्यम् एतद्बत अहो चित्रम् असदादावविम्र्श्य शक्तिमयं किं तत् एको द्व्यष्टसाहस्रं स्त्रिय उदावहदिति नन्वन्येषामितोऽप्यधिका विवाहा दृश्यन्ते तत्राह—युगपदिति । ननु, सौभर्यादिवच्छ्रीनारदादिष्वपि कायव्यूहकर्तृत्वादिशक्तयः सन्ति तर्हि यौगपद्येऽपि सिद्धे कथं तस्यापि विस्मयस्तत्राह एकेन वपुषेति नन्वेकस्मिन्नेव वपुषि विस्तीर्णानेकद्वारादित्वं विधाय तत् तेषामपि न चित्रं स्यात् सौभर्यादितोऽपि महाप्रभावत्वात् तत्राह गृहेषु पृथगिति तत्र गृहे गृहे पृथक् आविर्भावादिकं विधायेत्यर्थः । अत एव उदावहदित्यत्रार्षं प्रयोगः स च छन्दसि व्यवहितश्चेति न्यायेन आ सम्यक् उदवहदिति योज्यम् ॥ २ ॥

अथ तद्धेतुकं तस्य द्वारकायामागमनमाहार्द्धेन—इतीति एतद्विभाव्येत्यर्थः । द्रष्टुं तादृशश्रीकृष्णवैभवमिति शेषः । श्रीद्वारवतीमेव क्रमेण सार्द्धैस्त्रिभिर्वर्णयन्नादौ तस्या बाह्यं भागं वर्णयति पुष्पितेति सार्द्धेन तैर्नादितां कारितनादामित्यर्थः ॥ ३ ॥

उत्फुल्लानि इन्दीवरादीनि तैश्छुरितेषु इन्दीवरकुमुदोत्पलानि नीलश्वेतरक्तान्युत्पलान्येव कह्लारं सौगन्धिकमपि तद्भेद एव अम्भोजञ्च विविधम् एषामपि क्रमेण निर्देशस्तथैव तत्र स्थितेः सरस्सु उपवनाद्यन्तास्तद्बहिश्च वर्त्तमानेषु उच्चैरिति तत्तद्रसपानादिना मत्तत्वात् हंसादीनामेवोक्तिः प्राधान्यात् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १-१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथैको भगवानष्टाधिकषोडशसहस्रपत्नीभिः सह कथं रमते इति दिदृक्षयाऽऽगताय नारदाय प्रदर्शितम्भगवच्चेष्टितमनुवर्णयति—नरकमित्यादिना । एकेन कृष्णेन सह कर्त्रा या बह्वीनां योषितामुद्वाहश्च श्रुत्वा नारदस्तं कृष्णं दिदृक्षुरासीदिति शेषः । अत्रोद्वाहशब्देन तत्पूर्वकक्रीडा च विवक्षिता ॥ १ ॥

दिदृक्षामेवाभिनयति—चित्रमिति । एतच्चित्रं बत इति चित्रमित्यर्थः । किं तद्यदेकेन वपुषा विग्रहेण युगपदेव पृथक् पृथक् बहुषु गृहेषु योषित्समानसङ्ख्याकगृहेष्वित्यर्थः । द्व्यष्टसाहस्रं षोडश सहस्रसङ्ख्याकाः स्त्रियः स्त्रीः एक उपयेम इत्येतत् ॥ २ ॥

इतीति । इत्थं द्रष्टुमुत्सुको देवर्षिर्नारदः द्वारकां ययौ तां विशिनष्टि—सार्द्धत्रयेण । पुष्पितेषूपवनेष्वारामेषूद्यानवनेषु च द्विजानां पक्षिणामलीनां च कुलैर्नादिताम् ॥ ३ ॥

उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसैः सारसैः चोच्चैर्नादिताम् ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।

( अस्याध्यायस्यारम्भपठितश्लोकत्रयं चतुश्शतसङ्ख्यात्मके पृष्ठे द्रष्टव्यम् )

नरकं निहतं श्रुत्वा तथा एकेन कृष्णेन बह्वीनां योषितामुद्वाहं श्रुत्वा नारदस्तन्मूर्तिं दिदृक्षुरभूदित्यन्वयः ॥ १ ॥

ततः किमिति तत्राह- चित्रमिति । एकः एकेन वपुषा पृथक् गृहेषु द्व्यष्टसाहस्रं स्त्रियः एकस्मिन् मुहूर्ते उद्वाहितवानिति यत्तदिदं विचित्रमाश्चर्यमिति च ॥ २ ॥

सन्तोषादुत्सुको भूत्वा देवर्षिः कृष्णचेष्टितं द्रष्टुं द्वारवतीमागमदित्यन्वयः । कीदृशीं द्वारवतीनामपुरं पुष्पिताः उपवनारामाः यस्मिंस्तत् द्विजानामलीनां पक्षिणां कुलेन नादितम् ॥ ३ ॥

उत्फुल्लेन्दीवरादिभिः छुरितेषु मिश्रितेषु सरस्सु हंसादिभिरुच्चैः प्लुतस्वरेण कूजितं यत्र सा मामान्यत उक्तं नारदागमनं विशिनष्टि-पुष्पितेत्यादिना । प्रथमतो द्विजादिनादितं पुष्पितोपवनारामं प्राप पश्चादुत्फुल्लेन्दीवरादिभिः छुरितेषु सरस्सु हंसादिभिरुच्चैः कूजितं स्थलमाप ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

चित्रम् ॥ २-६ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—१५॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सात्त्विकानां निरोधे तु मुख्यो नारद ईरितः ।
अतस्तस्यापि कर्तव्यं पूर्ववुद्धेर्निवारणम् ॥
भक्तिमार्गानुरोधस्य पृथक्त्वं स्याद्यतः स्फुटम् ।
त्रिंशे नारददृष्टानां कृष्णानां चरितं महत् ॥
अलौकिकत्वसिद्ध्यर्थं निरोधो विनिरूप्यते ।
प्रकीर्णकं प्रकरणं न सङ्गतिरिहोच्यते ॥
तथापि साम्बकथने समायातस्तथाकरात् ।
भ्रान्त्यभावाय भगवान् बोधयामास तादृशम् ॥
निरोधस्तेन संसिद्धः सात्त्विकानामतः परम् ।

पूर्वाध्याये साम्बवृत्तज्ञापनार्थं समागतो नारदः शास्त्रदृष्ट्या निर्दोषपूर्णगुणविग्रहो भगवानिति लोके च पुत्रं हत्वा तदवरोधात् बह्व्यः स्त्रियः समानीता इति लोकशास्त्रविरोधमाशङ्क्य तं विरोधं स्वदृष्ट्या साधयन् पश्चादन्यतरनिर्द्धारं करिष्यन् स्वयं द्रष्टुं प्रवृत्त इत्याह—नरकं निहतं श्रुत्वेति । केचित्तु इतःप्रभृति सात्त्विकप्रकरणमाहुः त्रयस्त्रिंशदध्यायैः पूर्वं इति तत्र नारदः सात्त्विकेषु मुख्य इति स निरूप्य इति तत्रैकैकादशैकैकादशभिः तेषामवान्तरप्रकरणव्यवस्था सात्त्विकास्तु त्रिविधा एव सकामनिष्कामभेदेनेति तेषां मते दशेन्द्रियाणि अन्तःकरणं च निरुध्यते इति निरोधसिद्धिः एतन्मतमवष्टभ्यास्माभिर्निबन्धे निरूपितं लक्ष्मणाहरणावधीति एतावताः स्त्रियः समाप्ताः तासु भोगो भगवत्कृतः शास्त्रविरोधाय मन्तव्य इति प्रामाण्यार्थं नारददृष्टिरनुवर्ण्यते, नारदो हि भगवदीयशास्त्रेषु अक्लिष्टचरित्राण्येव श्रुतवानिति नरकवधादिकं न पूर्वं श्रुतवान् यद्यपि नरकवधमात्रम्पूर्वसिद्धं तथापि तदवरोधाद्विवाहः साम्प्रतमेव श्रुत इति स विचारणीयः इदञ्चरित्रं न पूर्वमृषिभिर्विचारितम् अतः परं सह स्वेष्वपि चरित्रेषु मीमांसितमेव चरित्रं विचार्यते अत एव आत्मा लौकिकदृष्टिर्भगवतेवाग्रे निवारणीया यदैव नरको हतः तदैव तेनैव प्रक्रमेण योषितामुद्वाहश्च श्रुतः एकस्मिन् क्षणे नानागारेषु विद्यमानानाम् एकेन कृष्णेन तत्र यद्यपि रूपभेदः स्पष्ट एव उरुरूप इति वाक्यात् तथा सति अवतारान्तरन्यायेन भिन्नावतारत्वं ततः कृष्णेनैव विवाहिता न भवेयुः न हि सर्वास्ता देवकीपुत्रवध्वो भवन्ति तस्यैवानन्तरूपत्वं तु पूर्वावतारेषु न सिद्धमिति विमर्शः कर्त्तमुचितः वाक्ययोस्तु युक्त्या बाधितुं शक्यते ननु दृष्टं नहि दृष्टे अनुपपन्नं नामेति बह्वीनामेकेन कृष्णेन विवाहो विचित्रमिति तद्दिदृक्षुर्नारदो जात इत्यर्थः ॥ १ ॥

ननु, भगवच्चरित्रे किमिदमाश्चर्यं यतो नारदस्यापि दिदृक्षेत्याशङ्क्य वैचित्र्यमुपपादयति—चित्रमिति । बत इति हर्षे तदा सर्वत्रैव स्त्रिया भक्त्या भगवता अनुग्राह्या इति न क्वापि गमनक्लेश इति एकेन वपुषेति वपुषो ब्रह्मवद्विस्तीर्णत्वं न शास्त्रसिद्धं वपुर्भेदेतु कृष्णपत्नीत्वं तासु न स्यात् अतो वपुषो ब्रह्म-

प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ।
महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ५ ॥
विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ।
संसिक्तमार्गाङ्गणवीथिदेहलीं पतत्पताकाध्वजवारितातपाम् ॥ ६ ॥
तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ।
हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥ ७ ॥
तत्र षोडशभिः सद्मसहस्रैः समलङ्कृतम् ।
विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धर्मत्वं वा अवपुष्टं वा कल्पनीयं स्यात् तत्रावपुष्टे लौकिकधर्मसम्बन्धो न युक्तः अन्यधर्मत्वं तु वैलक्षण्यमात्रदर्शकं ब्रह्मणा ऽप्येकत्र यो धर्मः स नान्यत्रेति लोके तथा दर्शनात् नारदश्च सूक्ष्मदर्शी तत उभयमप्यनुपपन्नमिति चित्रं युगपदेकस्मिन् काले एकेन करणेन पृथक् पृथक् गृहेषु स्थिताः द्व्यष्टसहस्रसंख्यया व्याप्ताः कलानामिवानन्त्यपक्षेऽपि भ्रुवायानानन्त्यमिति षोडशसहस्रं भवत्येव वैचित्र्यं स्त्रिय इति तासां योगजधर्मो निवारितः येनैकत्र जातो दृश्येत आकाशवत् परिच्छेदभेदेनेति मायावृत्तयथार्थत्वेन वा विपक्षं व्यावर्त्तयति एक इति उद्वाहश्च ॥ २ ॥

यावदवतारं परिपालनीय इति न प्रदर्शनमात्रपरत्वम् अतो हर्षोत्सुको जात इत्याह—इत्युत्सुको द्वारवतीमिति । सहि देवगुह्यमपि जानाति अतो देवर्षिः देवानामपि मन्त्रद्रष्टा अयं हि गुप्तार्थोपदेष्टा अतो द्रष्टुमागमत् नारदस्य द्वारकां लौकिकबुद्धिसिद्ध्यर्थं तां वर्णयति–पुष्पितोपवनामिति सार्द्धैः । पुष्पितानि उपवनानि येषु ये आरामाः क्रीडास्थानानि तेषु द्विजानामलीनां च यानि कुलानि अवान्तरजातिभेदाः तैर्नादितां तच्छब्दश्रुतामिति सहजो मधुरः शब्दस्तत्रत्यो निरूपितः ॥ ३ ॥

द्वारकावनजलस्थलरूपा त्रिविधा भवति तत्र वनरूपा निरूपिता जलरूपां निरूपयति–उत्फुल्लेति । उत्फुल्लानि इन्दीवराणि यानि पञ्चविधानि पुष्पाणि तैः छुरितेषु व्याप्तेषु सरस्सु हंसैः सारसैः तत्र कूजद्भिः जुष्टामित्यग्रेण सम्बन्धः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकोनसप्ततितमे कृष्णो मुनिमदीदृशत् ।
अस्यैकस्यापि वपुषः प्रकाशान् प्रतिमन्दिरम् ॥

दिदृक्षुरभूत् ॥ १ ॥

एकेनैव वपुषा युगपदेकस्मिन्नेव क्षणे पृथक् पृथक् गृहेषु पृथक् पृथक् प्राचीराद्यावृतद्व्यष्टसहस्रसङ्ख्यगृहाङ्गणेषु उद्वहत् परिणीतवान् चित्रं वर्तेतादिति । सौभर्य्यादयो हि कायव्यूहं कृत्वैव युगपत् बह्वीभिः स्त्रीभीरमन्ते स्म मत्वकेनैव कायेनेति भावः । इत्यत एव हेतोः ॥ २–३ ॥

द्वारवतीं वर्णयति सार्द्धत्रयेण । छुरितेषु व्याप्तेषु ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बह्वीभिः प्रियाभिः सहैको हरिः कथं रमते इत्येवं सन्दिहानं देवर्षिं प्रति हरिणा प्रतिमन्दिरं दर्शितं रूपं वर्णयति नरकमित्येकोनसप्ततितमे । स्त्रियः स्त्रीः उदावहत् उपयेमे एतत् चित्रमत्याश्चर्य्यम् ॥ १–२ ॥

इति इत्थं द्रष्टुमुत्सुको देवर्षिर्द्वारवतीमागमत् तामनुवर्णयति—पुष्पितेति सार्द्धैस्त्रिभिः । पुष्पाणि सञ्जातानि येषां तेषूपवनेष्वारामेषूद्यानेषु द्विजानामलीनाञ्च यानि कुलानि तैर्नादिताम् उत्फुल्लैर्विकसितैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसादिभिरुच्चैः कूजितां नादिताम् ॥ ३–४ ॥

---

भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि– नारदजी नरकासुर को मारा सुन कर और श्रीकृष्ण के साथ बहुतसी स्त्रीन के विवाह को सुन कर तदनन्तर उन स्त्रीन के साथ श्रीकृष्ण के वर्त्ताव के दर्शन की इच्छा नारदजी भई ॥ १ ॥

यह अत्यन्त आश्चर्य्य हैं, कि— एक श्रीकृष्ण भगवान् एक हि रूप से एक हि काल में जुदे २ गृहन में सोरह हजार स्त्री का विवाह करते भये ॥ २ ॥

इस प्रकार के उत्साह युक्त होकर श्रीनारदजी श्रीकृष्ण के दर्शन करने को द्वारावतीपुरी को जाते भए जहां पुष्पित उपवन नये और बागन में पक्षी और भ्रमरन को गुञ्जार हो रही है ॥ ३ ॥

प्रफुल्लित नील कमल और अन्य प्रकार के कमल तथा कल्हार कुमुद रक्त कमल इन करके व्याप्त सरोवरन में हंस और सारसन का जहां अत्यन्त शब्द हो रहा है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महामरकतैः प्रख्यायन्ते प्रकाशन्ते इति तथा तैः स्वर्णरत्न-

श्रीधरस्वामिकृतभावार्थदीपिका।

मयाः परिच्छदाः परिकारा येषु तैः ॥ ५ ॥

पतन्त्यः प्रचलन्त्यः पताका येषु तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥ ६ ॥

तस्यां द्वारकायां सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम् षोडशभिः सद्मसहस्रैः समलङ्कृतं हरेरन्तःपुरं विवेश तत्र तस्य शौरेः भवनेष्वेकतमं विवेशेत्यन्वयः। यत्र च स्वकौशलं त्वष्ट्रा पत्नीनां दर्शितमित्यन्तःपुरभवनयोर्विशेषणम् ॥ ७-८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आन्तरं वर्णयति-प्रासादेति। स्फाटिकैः राजतैश्च ॥ ५ ॥

आनन्दावृन्दे दीर्घच्छन्दसा मध्यं वर्णयति—विभक्तेति। विभक्ता असङ्कीर्णतया रचिता ये रथ्यादयस्तैः रथ्या राजमार्गाः पन्थानोऽन्ये विविधाः शालाः अश्वादिगृहाः सभाश्च वर्गशः पृथक् पृथक् स्वस्वास्थान्यः ताभिः सुरालयैश्च रुचिरां रथ्यादीनां यथोत्तरं रुचिरतासाधनत्वे श्रेष्ठ्यं सम्यक् सिक्ताः सुगन्धिजलादिभिरभ्युक्षिता मार्गादयो यस्यास्तां वीथयो गृहसंलग्नचत्वराणि देहल्यो गृहद्वारवेदिकाः मार्गादीनां यथोत्तरमान्तरत्वम् उपरितनं वर्णयति पतन्तीति ॥ ६ ॥

तस्यामिति षट्कम्। तत्राद्यद्वयं मिथोऽन्वितं श्रियः सर्वाः शोभाः सम्पत्तयश्च तदुक्तं स्वीयमसाधारणं कौशलं शिल्पनैपुण्यं त्वष्ट्रा दर्शितं प्रकटितं इति प्रागुक्तप्रासादवर्गेभ्यः सद्मनामेषां महोत्कर्ष उक्तः अत एव सम्यगलङ्कृतं महदित्यनेन सर्वज्येष्ठायाः श्रेष्ठायाः श्रीरुक्मिण्या इति बोध्यते वक्ष्यते च सहसोत्थितः श्रीपर्य्यङ्कात् इति। अयमेव प्राक् तत्प्रवेशे हेतुश्च अन्यत्तैः यद्वा यत्र हरेः स्वकौशलं कार्त्स्न्येन त्वष्ट्रा दर्शितमिति तच्छिल्पयैव त्वष्ट्रा सर्वं प्रकटितमिति नतु स्वशक्त्या नतु वा रचित इत्यर्थः ॥ ७—८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नवभिः प्रासादानां लक्षैर्जुष्टामित्यर्थः। कथम्भूतैः स्फटिकमयैः रजतमयैश्च महामरकतस्येन्द्रनीलस्य स्वर्णश्रेष्ठस्य रत्नानाञ्च परिच्छदास्तन्मयाः परिच्छदाः उपकरणानि येषु तैः महामरकत प्रख्यैरिति पाठे महामरकतैः प्रख्यान्ति प्रकाशन्त इति तथा तैः स्वर्णरत्नमयाः परिकरा येषु तैः ॥ ५ ॥

किञ्च,विभक्तेति। विभक्तैः रथ्यापथादिभिः शालादिभिः सभाभिः सुराणां देवताप्रतिमानामालयैश्च रुचिरां शोभमानां रथ्यापथाः राजवीथयः संसिक्ता मार्गादयो यस्यां तां पतन्तीभिश्चलन्तीभिः पताकाभिर्ध्वजैश्च वारित आतपो यस्यां ताम् ॥ ६ ॥

तस्यामिति। तस्यां द्वारकायामन्तःपुरं तत्रापि शौरेरेकतमं भवनं गृहं विवेशेति उत्तरेण सम्बन्धः। अन्तःपुरं विशिनष्टि-श्रीमत् भोग्यभोगोपकरणादिसमृद्धिमत् सर्वैः धिष्ण्यपैः लोकाधिपतिभिरर्चितम् बहुमतं त्वष्ट्रा विश्वकर्मणा विनिर्मितैः मुक्तादामानि विलम्बयन्ति इति तैः वितानैरुल्लोचनैरुपलक्षितामित्ति दो अर्चितमित्यस्य बानुषङ्गस्यालङ्कृतमित्यर्थः। किञ्चयत्र यस्मिन्नन्तःपुरे हरेः हर्म्ये त्वष्ट्रा स्वकौशलं स्वशिल्पनैपुण्यं कार्त्स्न्येन प्रदर्शितम् ॥ ७ ॥

किञ्च, तत्रेति। षोडशभिः शौरेः पत्नीनां गृहसहस्रैः समलङ्कृतम् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ततः पश्चात्स्फाटि राजतैः स्फाटिकाविनिर्मितैः नवभिः नूतनैः प्रासादलक्षणैर्जुष्टं स्थलमपि कीदृशैर्महामरकतप्रख्यैः इन्द्रनीलविहितसोपानैः स्वर्णरत्नानि सुवर्णश्रेष्ठानि परिच्छदा येषां तानि यथा अत्युत्तमसुवर्णस्थलविचित्रितानीत्यर्थः तैः ॥ ५ ॥

किञ्च, विभक्तैः विभक्तरथ्यापथैः रथमार्गैश्चत्वरैरापणैश्च शोभितां ततः परं शालाभिः सभाभिरतिरुचिरां सुरालयैः देवगृहैश्च मनोरमां गोमयचन्दनोदकादिना संसिक्ता मार्गाश्च अङ्गणानि च वीथयश्च गृहपङ्क्तिपुरोमार्गाश्च संसिक्तमार्गाङ्गणवीथयः ताश्च गेहानि चास्याः सन्तीति संसिक्तमार्गाङ्गणवीथिगेहिनी तां पतन्त्यः विवरणावरणे कुर्वन्त्यः पताका येषां ते पतत्पताकाः तेच ध्वजाः पतत्पताकध्वजास्तैः वारितस्तम्भितः आतपो यत्र सा तथा ताम् एवम्विधायां तस्यां कुशस्थल्यामन्तर्भागे हरेः पुरं सर्वसम्पदा पूर्णं स्थानमस्तीति शेषः। सर्वधिष्ण्यपैः समस्तैः ब्रह्मादिभिरर्चितं धिष्ण्यं गृहं मध्यगृहपतिश्रेष्ठा परितः पतय इन्द्रादयः यत्र पुरं त्वष्ट्रा विश्वकर्मणा ॥ ६—७ ॥

ततः परितः कृष्णस्य पत्नीनां षोडशभिः सद्मसहस्रैः गृहसहस्रैस्सन्दर्शनीयतयाऽलङ्कृतं भवनानामेकतमं भवनम् ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यत्र हरेः स्वकौशलं कार्त्स्न्येन त्वष्ट्रा दर्शितमिति तच्छिल्पयैव त्वष्ट्रा सर्वं प्रकटितं नतु स्वशक्त्या नतु वा रचितमित्यर्थः ॥ ७-१५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भूमिरूपां वर्णयति—प्रासादलक्षैरिति। नवलक्षप्रासादाः महता गृहाः स्फटिकमया राजतमयाश्च भित्तिर्वा स्तम्भभेदेन रजतास्तम्भाः महामरकतनिर्मिता भूः तया. प्रख्याः प्रसिद्धाः प्रासादाः स्वर्णरत्नमयानि परिच्छदानि, येषु यथा गृहे दारुमयानि तथा स्वर्णमयानि यथा, शिलामयानि तथा रत्नानि गृहोपकरणान्यपि परिच्छदानीत्युच्यन्ते तथाप्यनवसरत्वाच्च तानि ग्राह्याणि ॥ ५ ॥

एवं पुरीं बहिर्वर्णयित्वा अन्तस्तां वर्णयति—विभक्तेति। विभक्ताः पृथक् पृथक् कृताः रथ्यादयः नतु सङ्कीर्णाः रथ्याः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

राजमार्गः, पन्थाः अन्यः चत्वरमङ्गणमापणः पण्यवीथीति स्थानान्येतानि स्थितिस्थानान्याह-शाला अन्नादिभोजनस्थानानि सभाः उपवेशनस्थानानि ताभिः रुचिराम् ऐहिकार्थं द्वयमेव पारलौकिकार्थमाह—सुरालयैश्च रुचिरामिति। नैमित्तिकातिशयमाह—संसिक्तेति। सम्यक् सिक्ताः मार्गादिदेहल्यन्ताः यस्याम् उपरिशोभामाह—पतत्पताकाध्वजैः वारितः आतपो यस्यामिति॥६॥

सामान्यतो नगरीं वर्णयित्वा विशेषतो भगवद्गृहं वर्णयति—नारदइत्यम् एवं प्रकारेण नारदो दृष्टवानिति तदा लौकिकोत्कर्षः सम्पद्यते तच्च तस्यानभिप्रेतमिति सिद्धे हि लौकिकत्वे सिद्धे तत्र बुद्धिस्थैर्ये लौकिकस्य विरोधः सम्पद्यत इति तस्यां द्वारकायां हरेरन्तःपुरं श्रीमत् स्वतः शोभायुक्तम् अनेन वैकुण्ठातिरेकस्तत्र निरूपितः लक्ष्मीस्थितिर्वा अन्यत्रावतारेषु अवतीर्णैव लक्ष्मीः तिष्ठति न मूलरूपेणेति उपपत्त्या अन्तःपुरं वर्णयति—सर्वधिष्ण्यपैरर्चितं स्वकौशलं त्वष्ट्रा कार्त्स्न्येन प्रदर्शितमिति प्रकारद्वयेन रत्नस्वर्णादयस्तु पुर एव निरूपिताः न भगवदन्तःपुरे विशेषं सम्पादयन्ति वक्तव्यश्च विशेषः अतो भूमिष्ठाः पदार्थाः साधनभावात् निरूपिताः इन्द्रादयो हि धिष्ण्यपाः लोकपालाः तेषामपि परम्परोपार्जितान्यतिदुर्लभानि रत्नादीनि पूजोपसाधनानि भवन्ति तैरर्चितमिति तन्निर्माणार्थं तैस्तानि दत्तानीत्येके। यतः अग्रे त्वष्ट्रा विश्वकर्मणा शिल्पाचार्येण हरेरर्थे स्वकौशलं प्रदर्शितम् अतिनैपुण्येन निर्मितं रत्नानि इन्द्रादिभिर्दत्तानि। विश्वकर्मणा तु सम्यग्योजितानीत्यर्थः॥७॥

एवं सामान्यतोऽन्तःपुरं वर्णयित्वा तत्रस्थान् गृहान् प्रत्येकं वर्णयितुं विभागमुक्त्वैकं गृहं वर्णयति—तत्र षोडशभिरिति। ते गृहाः स्वतः प्रधानभूता अपि परस्परमेकस्यापि सर्वेषु भाजनका भवन्ति समप्राधान्ये तु विशिष्टो रसो नोत्पद्यत इति यदेव गृहं निकटे स्थितं तत्रैव नारदस्य विशिष्टबुद्धिरुत्पन्नेति तत्र प्रविष्टः एकमपि गृहं षोडशभिः सद्मसहस्रैः समलङ्कृतं तेच गृहाः पत्नीनामेव निकटे गतस्य तदेव गृहं महत्त्वेन भासत इति महदित्युक्तं ननु गृहेषु न्यूनाधिकभावोऽस्ति तथा सति भगवतस्तत्र वैषम्यं स्यात् सर्वत्र विवाहरमणपुत्रसम्पदां तुल्यत्वात् अतस्तं वर्णयति स्थाणीपुलाकन्यायेन॥८॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

महामारकतैश्चूडावलभ्यादिगतैः प्रख्या शोभा येषां तैः। स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः॥५॥

रथ्या राजमार्गाः पन्थानोऽन्यमार्गाः पतन्त्यश्चलन्त्यः पताकाः येषु तैर्ध्वजैः॥६॥

तस्यामन्तःपुरं समलङ्कृतं वर्त्तते। तत्रान्तःपुरे पत्नीनामेकतमं भवनं विवेशेत्यन्वयः॥७—८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रासादानां लक्षैर्नवभिर्जुष्टाम् कीदृशैः स्फटिकमयैः रजतमयैश्च महामरकतैः प्रख्यायन्ते प्रकाशन्ते इति तथा तैः स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः॥५॥

विभक्तैः यथास्थानं रचितैः रथ्यादिभिः शालासभाभिश्च सुराणां देवप्रतिमानामालयैश्च रुचिरां संसिक्ताः मार्गाद्याः। यस्यां तां पतन्त्यः पताका येषु तैर्ध्वजैर्वारित आतपो यस्यां ताम्॥६॥

तस्यां द्वारवत्यां हरेः अन्तःपुरम् गुह्यस्थानं श्रीमत् श्रीः रुक्मिणीः परमा सम्पत् विद्यते यत्र तत् अत एव सर्वैः धिष्ण्यपैः सर्वलोकाधिपतिभिरर्चितं पूजितं त्वष्ट्रा विश्वकर्मणा यत्र अन्तःपुरे स्वस्य कौशलं नैपुण्यं दर्शितम्॥७॥

यत्र यस्मिन् अन्तःपुरे शौरेः पत्नीनां षोडशभिः सद्मसहस्रैः समलङ्कृतम् एकतमं भवनं विवेश श्रीनारद इति शेषः। अत एव महत् सर्वेभ्यः सद्मभ्यः श्रेष्ठं रुक्मिण्या भवनमित्यर्थः॥८॥

---

भाषाटीका।

स्फटिक मणि और चाँदी तथा मरकत मणीन करके प्रकाश वारे और सुवर्ण जटित तथा रत्न जटित शय्यादि सामग्री युक्त नवलक्ष महलों से शोभाय मान होरही है॥५॥

जुदे२ राज मार्ग तथा अन्य मार्ग और आँगण तथा बजार से और शाला सभाओं से और देवताओं के मंदिरों से शोभाय मान और जहां मार्ग आँगण गली देहलीन का छिरकाव हो रहा है और पवन से हिलवारी पताका तथा ध्वजाओं से जहां सूर्य की घाम दूर होरही है॥६॥

उस द्वारकापुरीमें श्रीकृष्णके एक महलमें नारदजीने प्रवेश किया, वह महल कैसाहै? कि-इन्द्रादिक सब लोकपालन पूजित और सब सम्पत्ति युक्त जिसमें विश्वकर्माने अपनी सर्वप्रकार चातुर्य्य दर्शा यहीहै॥७

और तहां श्रीकृष्णकी सोरह हजार स्त्रियोंके सोरहहजार महलोंसे अत्यन्त शोभायमान और महान् वह भवन है॥८॥

विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः ।
(१) इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥ ९ ॥
वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामावलम्बिभिः ।
दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥
दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम् ।
पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ ११ ॥
रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदनुवर्णयति चतुर्भिः-विष्टब्धमिति । विद्रुमस्तम्भैर्विष्टब्धं विधृतं वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयणानि छादनानि तैः इन्द्रनीलमणिमयैः कुड्यादिभिश्चोपलक्षितं जगत्या भूमिकया च इन्द्रनीलमणिमय्या न हता त्विट् यस्यास्तया ॥ ९ ॥

मुक्तादाम्नां विलम्बा विविधानि लम्बनानि विद्यन्ते येषु तैः मण्युत्तमैः परिष्कृतैर्भूषितैः ॥ १०—११ ॥

ईक्ष्य समीक्ष्य घनो मेघोऽयमिति बुद्धिः येषां ते ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेकतमं वर्णयन्नादौ तस्य मुख्याङ्गं वर्णयति—विष्टब्धमिति । अहतत्विषेति कथमपि मालिन्याद्यप्राप्तेः क्वाथं वर्त्तमान एव ॥ ९ ॥

वितानैरिति द्वयम् । मिथोऽन्वितं तत्र मुख्यपरिच्छदान् वर्णयति-वितानैरिति । त्वष्ट्रा निर्मितैरिति पूर्ववत् आसनानि च पर्य्यङ्काश्च तैः ॥ १० ॥

तत्र परिवारान् वर्णयति-दासीभिरिति । पुम्भिश्च बालकादिभिर्दासैरलङ्कृतं सुवस्त्राणि शोभनान्यधः- परिधानीयादीनि ॥ ११ ॥

ऊर्द्ध्वशोभां वर्णयति—रत्नेति । एषां गृहान्तःस्थितिरपि बोध्या अनेन रात्रावेवागमनमस्य बोधितं तदैव तस्य युगपत्प्रतिगृहस्थितेः सुष्ठु परीक्षणीयत्वात् अग्रे च श्रीभगवतः प्रियापर्य्यङ्कस्थितत्वेन वर्णयिष्यमाणत्वात् अगुरुधूपस्य शिखण्डिभिर्निश्यपि दर्शनन्तु तादृशरत्नप्रदीपसद्भावादेव यत्र भवने एवमन्यासामपि श्रीमहिषीणां गृहाणि ज्ञेयानि ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुरं भवनञ्चैव विशिनष्टि-विष्टब्धमिति चतुर्भिः । विद्रुमस्तम्भैः वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च विष्टब्धं प्रतिबद्धम् इन्द्रनीलमयैर्जालैर्गवाक्षैर्मरकतमयैरुत्तमैश्च स्तम्भैर्विष्टब्धम् ॥ ९ ॥

त्वष्ट्रा विश्वकर्मणा निर्मितैः मुक्तादामानि विलम्बयन्तीति तथा तैः वितानैः उल्लोचैः दान्तैः निर्मलैः मणिश्रेष्ठालङ्कृतैश्चासनैः पर्यङ्कैश्च उपलक्षितमिति शेषः । अलङ्कृतमित्युपरिष्टात्सम्बन्धो वा ॥ १० ॥

शोभनानि वासांसि यासान्ताभिर्दासीभिः शोभनानि कञ्चुकादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥ ११ ॥

रत्नप्रदीपानां ये निकराः समूहास्तेषां द्युतिभिर्निरस्तं तमो यस्मिंस्तत् किञ्च यत्रान्तःपुरे भवने च वलभीषु स्तम्भाग्रप्रसारितवक्रदारुविशेषेषु शिखण्डिनो मयूराः गवाक्षमार्गैः निर्यान्तं कृतमगरुधूपं वीक्ष्य घनो नीलाम्बुदोऽयमिति बुद्धिर्येषां तथाभूताः अत एव उन्नदन्तः उच्चैर्नदन्त नृत्यन्ति तथाभूतश्च ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कीदृशं तद्गृहमत्राह—विष्टब्धमिति । मूले अग्रे च फलकोत्तमानि येषां ते तथा तैः जालैः गवाक्षैः ॥ ९ ॥

मुक्तादामविलम्बिभिः अवलम्बमानमौक्तिकमालैः दान्तैर्गजदन्तनिर्मितैः ॥ १०—११ ॥

अक्षैर्गवाक्षैः निर्यान्तं निर्गतं विहितागुरुचूर्णं धूपं दृष्ट्वा शिखण्डिनो मयूराः ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विष्टब्धमिति । पुरुषार्थचतुष्टयं सम्पन्नमिति ज्ञापयितुं चतुर्भिः प्रवालस्तम्भैर्विष्टब्धं धृतं वैदूर्यनिर्मितफलकैस्तदाच्छन्नम् अनेन स्तम्भा उपरि प्रसारितदारुरूपाश्च द्विविधा ज्ञातव्याः उपरि फलकानामेव वैदूर्यमयत्वं स्थूलफलकाः स्तम्भेष्वेव विशालाः स्थापिता. तत्रापि कुड्यान्तर्गतस्तम्भानां तथात्वं वक्तव्यमिति धरणी स्तम्भाश्चात्र विद्रुममयाः ज्ञातव्याः इन्द्रनीलमयैः मणिभिः कुड्यानि जगतीभूमिकुट्टिमा तत्रत्या अलङ्कृतमिति सम्बध्यते, न सूर्यादिभिरहता त्विट् यस्याः तादृश्या जगत्या अलङ्कृतमिति ॥ ९ ॥

वितानैश्चन्द्रातपैस्त्वष्ट्रा निर्मितमिति अद्भुतत्वं मुक्तादामानि विलम्बन्ते येष्विति दन्तनिर्मितैरासनैः पर्यङ्कैश्चालङ्कृतं. मण्युत्तमैः मणिश्रेष्ठैः अलङ्कृताः आसनपर्यङ्काः ॥ १० ॥

स्त्रियः पुरुषाश्च दासीदासरूपाः शोभायामवश्यं वक्तव्या इति तान्निर्दिशति—दासीभिरिति । नित्याभरणेषु सत्स्वेव

(१) इन्द्रनीलमयैर्जालैस्तम्भैर्मरकतोत्तमैः । इति वीर० पाठः ।

तस्मिन् समानगुणरूपवयस्सुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या।
विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३ ॥
तं सन्निरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १४ ॥
तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ।
ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पदकाभरणमिति निष्ककण्ठीभिरिति अनेन कटककुण्डलाद्याभरणानि सूचितानि सुवासोभिरिति सर्वतः शोभार्थमुक्तं यादृशीरेव वस्त्रैः शोभा सम्पद्यते अन्यथा शोभाकथनं व्यर्थं स्यात् पुम्भिरप्यलङ्कृतं पाश्चात्यो वेष इति उत्तमानि कञ्चुकानि उष्णीषाणि मध्ये बन्धकानि मणियुक्तानि कुण्डलानि च येषामिति सर्वतोऽलङ्कारो भगवद्गृहदासानामुक्तः ॥ ११ ॥

सार्वकालीनशोभामुक्त्वा रात्रौ विशेषतःशोभामाह-रत्नप्रदीपनिकरेति । रत्नसमूहकान्तिभिः निरस्तं ध्वान्तमन्धकारो यत्र रात्रौ गार्हस्थ्ये कामरसो वर्ण्यत इति उद्दीपनविभावान् वर्णयति—विचित्रवलभीषु मणिमयनिर्मितवक्रदारुषु मयूराः स्थिताः सन्तो नृत्यन्ति अङ्गेति सम्बोधनं स्नेहसूचकं तेनास्याः कथायाः भगवद्विषयत्वाद्योगिचिन्त्यत्वमेव नतु बाह्यतया साधारणत्वमिति सूचितं नृत्ये अलौकिकं हेतुं वर्णयति यत्र विहितागुरुधूपं गृहसंस्कारार्थं कृतं गवाक्षमार्गेण निर्यान्तं निरीक्ष्य घनोऽयमिति तेषां बुद्धिरुत्पन्नेति घनबुद्धयः अत एव ऊर्ध्वं नदन्तो जाताः मेघा गगने हि तेषां नृत्यं भवति नृत्यदर्शनेन च रस आविर्भूतो भवतीति गीतवाद्यरहितं नृत्यं न शोभां करोतीति उन्नादो हि स्निग्धभावो निरूपितः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भवनं वर्णयति—चतुर्भिः । विद्रुमं विधृतं वैदूर्यमयानि फलकोपमानि स्तम्भाश्रयाणि छादनानि तैर्जगत्या भूमिकया॥९-११॥
विहितमगुरुधूमम् अक्षैर्गवाक्षमार्गैः निर्यान्तम् ईक्ष्य वीक्ष्य घनोऽयमिति बुद्धिर्येषां ते ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भैवनं विशिनष्टि-विद्रुमेति चतुर्भिः । विद्रुमस्तम्भैः वैदूर्यमयानि फलकोपमानि स्तम्भाश्रयाणि छादनानि तैश्च कुड्यादिभिश्च विद्रुमं विधृतं प्रतिबद्धमित्यर्थः ॥ ९ ॥
मुक्तादाम्नां विलम्बाः विविधानि लम्बमानानि वितानानि येषु तैर्वितानैः मण्युत्तमैः परिकृतैर्भूषितैर्दान्तैर्गजदन्तमयैरासनपर्यङ्कैश्च अलङ्कृतमित्युत्तरेण सम्बन्धः ॥ १० ॥
निष्कानि पदकानि कण्ठे यासां ताभिः शोभनानि वासांसि यासां ताभिः शोभनानि वस्त्रादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥ ११ ॥
रत्नप्रदीपनिकराणां द्युतिभिर्निरस्तं तमो यस्मिन् तं यत्र विहितमगुरुधूपम् अक्षैर्गवाक्षमार्गैर्निर्यान्तम् ईक्ष्य वीक्ष्य घनोऽयमिति बुद्धिर्येषां ते विचित्रवलभीषु शिखण्डिनो मयूराः नन्दनः सन्तः नृत्यन्ति ॥ १२ ॥

भाषाटीका ।

और वे भवन कैसा रहा, कि मूंगाके खम्भासे तथा उनके ऊपर वैदूर्यमणिके छज्जेसे शोभायमान और नीलमणि जटित भीं तनसे तथासूर्य आदिसे अहत कान्ति युक्त नीलमणिजटित भूमिकासे वह भवन अलङ्कृत रहा ॥ ९ ॥
और विश्वकर्माके निर्माण किए भए मोतियनकी मालाके गुच्छा जिनमें लटक रहेहैं ऐसी चांदनी न करके, और उत्तममणियोसे अलङ्कृत तथा हस्तीके दान्तके आसन और पर्यंकों वह से भवन अलङ्कृत रहा ॥ १० ॥
और कण्ठ में पदक धारण करने वारी औसिदरर वस्त्र धारण करने वारी दासीन से वह भवन अलङ्कृत रहा तथा अगरखी सहित पगडी और सुन्दर वस्त्र और मणि जटित कुण्डल धारण करने वारे पुरुषों से वह भवन शोभायमान रहा ॥ ११ ॥
और हे राजन् ! रत्नों के दीपकन के समूह के प्रकाशों कर के जिस भवन में अन्धकार दूर होगया है और जिस भवन में खम्भान के आगे के विचित्र छज्जेन पर वैठे हुए मोर झरोखान से निकसे भए किए हुए अगरु धूप के धूमको देख कर उस धूमको नील मेघ जान कर ऊँचे स्वर से कोह कारी करते हुए नृत्य करते हैं ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुसवं सर्वकालम् आत्मना समानानि गुणरूपवयांसि सुवेषोऽलङ्कारश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह ॥ १३ ॥
श्रियो रुक्मिण्याः पर्यङ्कतः अवीविशदुपवेशयामास ॥ १४ ॥
अबिभ्रदबिभः दधारेत्यर्थः । बिभ्रदिति शत्रन्तं वा तदा

**सम्पूज्य देव ऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ।**
**वाण्याऽभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवामहे किम् ॥ १६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

सम्पूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः। कथम्भूतः ? यस्य चरणशौचं गङ्गा अशेषतीर्थं सः अत एव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः । सताम्पतित्वे हेतुः ब्रह्मण्यदेव इति यद्गुणकृतं नाम तस्यैव यतो युक्तं समञ्जसमतस्तद्धर्मप्रवर्तनायैवमाचरणमित्यर्थः ॥ १५ ॥

अभिभाष्य दिष्ट्यात्र त्वदागमनमित्यादिप्रियमुक्त्वा ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तस्मिन् भवने समानगुणादिकेन दासीसहस्रेण युतयाऽपि गृहिण्या गृहेश्वर्य्या रुक्मिण्या स्वयमेव प्रेम्णा परितः सर्वाङ्गेषु वीजयन्त्या चमरस्य मृगविशेषस्य पुच्छरूपेण व्यजनेन ननु कथमसौ सहसान्तःपुरं प्रविष्टवान् तत्राह—विप्र इति। तज्जातिमात्रत्वमपि तत्र हेतुरिति भावः। सात्वतपतिमिति सात्वतपद्धतिगुरोः श्रीनारदस्य तद्दर्शने भक्तिविशेषोदयद्योतकं श्रीयदूनां पतिमिति वा तदाविर्भावविशेषेण चमत्कारविशेषद्योतकम् ॥ १३ ॥

तमिति। सहसागमनेन सन्निधौ निरीक्ष्य प्रसन्नदृष्ट्याऽवलोक्य सहसा सपदि भगवानपि कौस्तुभादितादृशभगवत्त्वाभिव्यञ्जकपरमकिरीटजुष्टेन तत्सेवार्हेणापि आसक्त्या तत्स्पर्शनादिना नत्वा तत्र हेतुः सकलेति सद्धर्मप्रवर्तनतादृशलीलारसाविष्ट इत्यर्थः। स्वे स्वीये ॥ १४ ॥

जगतो गुरुतमः महापूज्योऽपीत्यर्थः। हि हेतौ अस्य परेणान्वयः। अशेषाणि तीर्थानि यस्मिन् तत् सर्वतीर्थस्वरूपं वा यस्य चरणशौचं सोऽपि ॥ १५ ॥

विधिवत्पूजाविहितायां हेतुः ऋषिर्मन्त्रप्रवर्त्तकः तत्रापि पुराणः पुरापि नवः स्वयं भगवत्त्वादनादित एव तादृशतया वर्त्तमान इत्यर्थः। यद्वा तथापि तस्याङ्घ्रियुगं नवनवमित्याद्युक्तन्यायेन सदा येन व इति न पुराणः किन्तु पुराणवदाचरतीत्येव पुराणः किञ्च नारायणो नरसखः तादृशधर्मविधिप्रवर्त्तनाय लोकेऽपि तद्रूपेणावतीर्णः अभेदनिर्देशोऽयं तत्र नारायणैरपि प्रबोधाभिप्रायेण तदुक्तं चतुर्थे—

"ताविमौ वै भगवतो हरेरंशाविहागतौ ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥

इति तौ चांशरूपौ कर्तृभूतौ कृष्णौ कर्मभूतौ आगतौ आगमयन्तौ प्रविष्टवन्ताविन्यर्थः। "एते चांशकलाः इत्यादेः तस्य तत्र तादृशलीलाविर्भावे हेतुः, ऋषिवर्य्यमिति। भक्ताविर्भावानुरूप्यादितिभावः। ननु, सतु सर्वादि ऋषिर्नारायणत्वं च तस्य साक्षादेव गुरुरिति कथं तेन तत्पूजनं योग्यम् ? इत्यत्रापि सिद्धान्तः विधिनोदितेनेति। सम्प्रत्याविष्कृतक्षत्रियलीलस्य स्वस्य ब्राह्मणपूजाविधियोग्यैव लोकवत्तु लीलाकैवल्यादिति भावः। यद्वा "नारायणस्त्वं नहि सर्वदेहिनाम्" इत्यादिब्रह्मस्तवरीत्या स्वयं भगवानपि नरसखः नरलील इत्यर्थः। अतो विधिनोदितेनेति अतः "सत्यं ब्रूयात्प्रियं ब्रूयात्" इति स्मृत्यनुसारेण प्राक् पूर्वं मितया शास्त्रादिप्रमाणसिद्धत्वेन सत्यतया अमृतमिष्टया प्रियया च वाण्या अभिभाष्य स्तुत्वा प्राह प्रार्थयामासेत्यर्थः। प्रार्थनमेव दर्शयति—प्रभो इति। हे प्रभो विप्रत्वेनास्मत्स्वामिन् अतः किङ्करवाम किं कर्त्तुं शक्नुमः अपितु न किञ्चिदिति व्यञ्जनाय इति कौतुकविशेषाय तं प्रति वचसा तु निजैश्वर्य्यमत्यन्तमाच्छादितं तादृशनिजवैभवं प्रति तस्य तादृशस्वांप्त्याश्चर्य्यबुद्धित्वं दृष्ट्वा किञ्चिदुपालम्भमिव च ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्मिन्निति । तस्मिन्नेव भवने गृहिण्या भार्य्यया रुक्मिण्या समं सहितमित्यर्थः । सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्श कथम्भूतया अनुसवं सर्वकालमात्मना समानानि गुणरूपवयांसि सुवेष अलङ्कारश्च यस्य तेन दासीनां सहस्रेण युक्तया रुक्ममयो दण्डो यस्य तेन चामरव्यजनेन वीजयन्त्यां च ॥ १३ ॥

तमिति। तं दृष्टवन्तं नारदं सम्यक् निरीक्ष्य भगवान् श्रियो रुक्मिण्याः पर्यङ्कादाशूत्थितः तदिष्टदेवतभूतः किमित्युत्थित इत्यतो विशिनष्टि—सकलधर्मभृतां वरिष्ठः धर्मात्मभिर्महत्स्वेवं वर्तितव्यमिति प्रदर्शनार्थमिति भावः। अत एव च किरीटालङ्कृतेन शिरसा तस्य पादयुगलं प्रणम्य अञ्जलिना सहितः स्वे स्वकीये आसने अवीविशदुपवेशयामासेत्यर्थः ॥ १४ ॥

तस्येति । स भगवान् जगतां साधुजनानां गुरुतरोऽपि परमगुरुरपि हि यतः सतां पतिरपि तस्य नारदस्य चरणौ अवनिज्य प्रक्षाल्य तदपः अवनेजनजलानि मूर्ध्नि बिभ्रत् बिभ्राणः आसेति शेषः । दधारेत्यर्थः । अबिभ्रत् इति वा छेदः अबिभ्रत् अबिभरत् दधारेत्यर्थः। युक्तञ्चैतदित्याह—ब्रह्मण्येति। ब्रह्मणि ब्राह्मणकुले साधवो ब्रह्मण्यास्तेषां देव इति यद्गुणनाम अन्वर्थं नाम तस्यैव यतो भगवत एवासाधारणमित्यर्थः। अतः युक्तं ब्रह्मण्यदेवत्वाद्विप्राङ्घ्रिजलधारणमित्येतदुचितमेवेत्यर्थः । अन्यथा तु न घटत इत्यभिप्रायन् विशिनष्टि—यच्चरणशौचं यस्य भगवतश्चरणसम्बन्धाच्छौचं पवित्रता यस्य तथाभूतमशेषं गङ्गादितीर्थं तस्यैवम्विधस्योक्तादेव हेतोस्तदुचितमित्यर्थः ॥ १५॥

सम्पूज्येति। नरस्य सखा नारायणः पुराण ऋषिरुक्तादेव हेतोर्देवर्षिवर्यं नारदं शास्त्रोक्तेन विधिना सम्पूज्यामृतेन जुष्टया अमृतवर्षिण्येत्यर्थः। मितया स्वल्पाक्षरया वाचयाऽभिभाष्य सम्बोध्य प्राह-उक्तिमेवाह-प्रभो भगवते करवाम किन्ते। हे प्रभो! भगवते तुभ्यं किङ्करवाम किङ्करा वयमित्यर्थः। किमिष्टं करवामेति वा किं यत्किञ्चिदिष्टमस्ति तत्करवामेति वा ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

चामरव्यजनेन चामराख्यव्यजनेन तस्मिन् भवनं आविवेश उपविष्टः॥१३—१४॥

श्री परीक्षिदेतच्चित्रमित्याह—ब्रह्मण्यदेव इतीति। यस्य चरणशौचजलमशेषाणि तीर्थानि शुद्धान् करोतीति अशेषतीर्थं यत्र अशेषाणि तीर्थानि यस्मिंस्तस्य हरेः ब्रह्मण्यदेव इति यत्तद्गुणनाम तस्यैव युक्तमित्यवधारयेत्यर्थः॥१५॥

शास्त्रीदितेन विधिना सम्पूज्य॥१६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विधिपूजाविहितायां हेतुः ऋषिर्मतप्रवर्तकः तत्रापि पुराणः पुरापि नवः, स्वयं भगवत्त्वादिना स्वयेव तादृशतया वर्त्तमान इत्यर्थः। किञ्च नारायणो नरसखः तादृशधर्म्मविधिप्रवर्त्तनाय लोकेऽपि तद्रूपेणावतीर्णः अभेदनिर्देशोऽयं तत्र श्रीनारायणपेरपि प्रवेशाभिप्रायेण तस्य तत्र तादृशलीलाविर्भावे हेतुः, ऋषिवर्य्यमिति। पूरोहितादिवन्नृकविशेषाविर्भावानुरूप्यादिति भावः। ननु, सतु सर्व्वादि ऋषिः नारायणत्वे च तस्य साक्षादेव गुरुरिति कथने तत्पूजनयोग्यम् इत्यत्रापि सिद्धान्तः। विधिनोदितेति सम्प्रत्याविष्कृतक्षत्रियलीलस्य स्वस्य ब्राह्मणपूजा योग्यैव लोकवत्तु लीलाकैवल्यादिति भावः। अनन्तायाः भक्तवृन्दस्यापवर्गे परमपुरुषार्थरूपं ब्रह्मादिभिर्मुक्तैरपि इति विधिरूपं संसारकूपपतितानां मुमुक्षूणामुत्तरणमवलम्बमिति॥१६—२१॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

सम्पूज्येत्यादि। देवः श्रीकृष्णः ऋषिवर्यं नारदं सम्पूज्य प्राह कीदृशः? पुराणः आदिः तर्हि किं नारायणः न ततोपि पर इत्यादि अनारायणः अजलशायी अनरसखः अनरा अर्जावाः सखायो यस्य ऋषि अलिप्तः एवम्भूतः गार्हस्त्येपि नासक्तः॥१६—३७॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदर्थमेतन्निरूपितं तन्निरूपयति—तस्मिन्निति। समाना गुणाः औदार्यादयः रत्युपयोगिनो वा मृदुत्वादयः रूपं सौन्दर्य वयस्तारुण्यं सुवेषो वस्त्रादिभिः रसो हि निर्वेदः शङ्कां करोतीति स्वल्पश्च न प्रोषको भवतीति महारसानुभवार्थं दास्यो निरूप्यन्ते नायिकानां मेलने भिन्नस्वभावत्वात् रसो नोत्पद्यते इति तासां च कामना नैवम्विधेति केवलभोगरूपत्वं वारयितुमाह-गृहिण्येति। अनुसवं सर्वकालं दासीसहस्रयुतया भार्यया चमरव्यजनेन सान्त्वतपतिं यस्तुतः स्वपसि परिवीजयन्त्या सह सात्वतपतिं ददर्शेति सम्बन्धः चमरकृतं व्यजनम् उद्दीपनकरं तथा सुवर्णदण्डयुक्तं च अयं भगवत्प्रदर्भुतप्रकारो निरूपितः नैवम्विधः समानानां प्रकारो लोके सामान्यानां सम्भवति अनेन रात्रावयं भोगकाले गत इति सूचितम्॥१३॥

तत्र भगवता कृतम् आतिथ्यप्रकारमाह-तं सन्निरीक्ष्येति त्रिभिः। कायिकमानसिकवाचनिकैः कायिकपूजा सर्वेणापि स्वयोग्या कर्त्तव्या अतो भगवानपि तं दृष्ट्वा स्वपदे निवेशितवानिति निरूप्यते न ह्येतस्मादधिका पूजा सम्भवति अन्यथा लौकिकी सा सर्वसाधारणी अन्यदोषत्वेन निरूप्यते एवङ्करणे हेतुमाह—भगवानिति। अन्यथा अन्यस्माद्भगवति को विशेषः स्यात् यदि स्वपदे नोपवेशयेत् सहसोत्थित इति तं प्रति लौकिकभावस्थैर्य सूचितम् अन्यथा स्वधर्माविर्भावे सेवकं प्रति भगवदुत्थानं नोचितं स्यात् "ये यथा मां प्रपद्यन्ते" इति भगवत्प्रतिज्ञा स च लौकिकबुद्ध्या भगवन्तं दृष्टवानिति भगवानपि तथैव चकार श्रीपर्यङ्कृत इति अनौचित्यं निरूपितं केवललौकिकप्रकारेण तथात्वं भवतीति वैदिकमाह—सकलधर्मभृतां वरिष्ठ इति। धर्मभृतो निरन्तरधर्मकर्त्तारः ते जीवा एव भवन्ति तेषां मध्ये श्रेष्ठ इति सजातीयोत्कर्षात् बहिः दृष्टिरेव तस्य स्थिरीक्रियते अत एव भगवान् पादयुगलमानम्य तत्रापि शिरसा धर्मनिष्ठां सूचयितुं किरीटजुष्टेनेति लोकनिष्ठा न केवलं स्वयं यद्धर्मावलम्बनं कृतवान् किन्तु तत्रापि स्वधर्मे योजितवान् इत्याह—साञ्जलिः स्वे आसने अवीविशदिति। स्वासने तं निवेशयामासेत्यर्थः। अन्तर्भावितणिच्प्रयोगः भगवानेव तत्र वस्तुतः स्वधर्मं स्थापितवानिति स्वयमेव तत्रोपविष्ट इति धर्मव्यत्यासं स्थापयितुमवीविशदित्युक्तवान् आसनञ्च श्रीपर्यङ्कमित्येव लक्ष्यते तत एवोत्थित इति स्वपदेनापि तदेवेति गम्यते आसनपदेन स्वसिंहासनमिति तथापि अग्रे पृथुकोपाख्याने "निवासितः प्रियाजुष्टे पर्यङ्के" इति वाक्यात् पर्यङ्कमेव आसनस्थानीयम्॥१४॥

ततस्तस्य चरणाववनिज्येति कायिकोपि व्यापारः मानसशेषत्वेन निरूप्यते स्वतः प्रक्षालनं भक्तस्यैव सम्भवति तदपः पादावनेजनीरादः स्वस्मिन् नारदधर्मावेशात् भक्तानां भगवच्चरणारविन्दोदकं धार्यमेवेति स्वमूर्ध्ना अबिभ्रत् मन्येवमपि लोको भगवन्माहात्म्याभिज्ञः कथं मन्येत? तत्राह—जगद्गुरुतरोपि इति। यद्यपि जगतामत्यन्तगुरुः शास्त्रप्रणेता उपदेष्टा प्रेरकः उपदेशश्च तथापि सतां पतिर्भवतीति "यद्यदाचरति श्रेयान्" इतिवाक्यात् भगवत्कृतमेव भगवदीयः करोतीति सतां पालनार्थं तथा कृतवान् अन्यथा गजेन्द्रवद्वैष्णवानाम् उपद्रवोपि सम्भवेत् तस्माद्भगवता युक्तमेव भक्तरक्षार्थं कृतमिति हिशब्दार्थः। नन्वेवं सति भक्तिमार्गे विरोधः स्यात् तत्राह—ब्रह्मण्यदेवेति। ब्राह्मणानां हितः तेषां कार्यसाधको देवः ब्रह्मण्यश्चासौ देवश्चेति तेषामेव पूज्यः इदं भगवतो गुणनाम अतदैवयुक्तं भवति यदि तन्मनोरथं साधयेत् ब्राह्मणाश्च पूजां वाञ्छन्ति नत्वन्यत्र तद्भगवत्येव तद्धर्मप्रवर्त्तके अन्यः प्रवर्त्तेत ननु यस्मिन् कस्मिंश्चित् ननु एतावतापि कथं लोकः प्रवर्त्तेत? तत्राह-तस्यैव यच्चरणशौचमिति। अशेषाणि तीर्थानि यस्मिन् गङ्गाजले "तिस्रः कोट्योर्द्धकोटीच" इति वाक्यात् अनेन स्वापकर्षाभावोपि निरूपितः॥१५॥

स्तोत्रमाह-सम्पूज्येति। पूजायाश्च अनुवादः उत्तरशेषत्वेन तेन पूजा वाक्यापेक्षया हीना निरूपिता देवर्षिवर्यमिति अनेन देवा ऋषयश्च पूजितेन प्रीता भवन्तीति गार्हस्थ्ये

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ऋणत्रयापाकरणे आवश्यके द्वयमनेनैव भवतीति तस्याऽऽवश्यकता सूचिता। ऋषिरिति नारायणोऽयम् अनिरुद्धांशेनैवं करोतीति सूचितं पुराणो ऋषिः नारायण एव तथापि वेदोद्गमरूपोऽपि भवतीति तन्निराकरणार्थं नारायणो नरसख इति निरूपितं तस्य प्रत्यापत्तिः अस्यैव प्रकरणस्यान्ते प्रत्यापत्तिं वक्ष्यति 'प्रत्येष्यतां निकाशम्म इतिवाक्यं' विधिनोदितेनेति पूजायां प्रकार उक्तः अन्यथा ऐश्वर्येण राजसी पूजा प्राप्नोति वाण्या मितया अतिमिष्टया आभाष्य भो भो नारद! इत्युक्त्वा तं नारदं प्राह सर्वोत्कर्षः स्वस्वामित्वं स्वस्य च तदाज्ञाकारित्वं पदत्रयेणाह–भगवने, हे प्रभो! तं किङ्करवामेति तृतीयं पदत्रयात्मकं त्वत्सेवा त्रिविधाऽप्यत्र कर्त्तव्येति सूचनार्थं तदाज्ञापयेति वाक्यशेषाभिप्रायः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तस्मिन् गृहिण्या सहितं सात्वतपतिं ददर्श। अनुसवं समुचितं प्रतिसमयम् ॥ १३ ॥

अवीविशत् उपवेशयामास ॥ १४ ॥

तस्य चरणौ अवनिज्य प्रक्षाल्य सतां पतिं प्राहेत्युत्तरेणान्वयः। ननु, स्वदासस्य नारदस्य चरणक्षालनादिकमनुचितं तत्राह—ब्रह्मण्यदेव इति। यस्य गुणनाम गुणसूचकं नाम तद्युक्तं नारदस्य ब्राह्मणत्वात् तस्य ब्रह्मण्यदेवत्वादेतत् सर्व्वमुचितमेवेत्यर्थः। नच स स्वपवित्रीकरणार्थमेवेदञ्चकारेति वाच्यमित्याह यत् यस्मात् तस्यैव चरणशौचं गङ्गा अशेषतीर्थं भवति। नारदस्तु दासोऽपि स्वप्रभोरिच्छाप्रातिकूल्ये प्रभुत्वं नाविश्चकारेति ज्ञेयम् ॥ १५ ॥

उदितेन शास्त्रोक्तेन विधिना सम्पूज्येत्यत्र हेतुः ऋषिर्मन्त्रप्रवर्त्तकः किञ्च पुराणः स्वयं भगवत्त्वात् नवः यः खलु तादृशधर्म्मप्रवर्त्तनार्थमत्र भारतभूमौ नरसखो नारायणो भवतीत्यर्थः मितया परिमितया अमृतेनापि जुष्टया सेवितया परममधुरयेत्यर्थः। हे प्रभो विप्रत्वेनास्मत्स्वामिन् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्मिन् भवने अनुसवं सर्वसमयम् आत्मना समानानि समानकल्पानि गुणरूपवयांसि सुवेषः सुष्ठ्वलङ्कारश्च यस्य तेन दासीसहस्रेण युतया ददर्श ॥ १३ ॥

तं देवर्षिं सन्निरीक्ष्य श्रीपर्यङ्कुतः रुक्मिण्याः पर्यङ्कात् आशूत्थितः शिरसा पादयुगलमानम्य स्वे आसने अवीविशत् उपवेशयामास। ननु, सर्वेश्वरस्य सन्निरीक्षणोत्थानादिचेष्टितं किमभिप्रायमत्राह–धर्मभृतां वरिष्ठः धर्मशिक्षकः महत्यागते धर्मभृद्भिरेवं कर्तव्यमिति लोकशिक्षार्थमित्यर्थः। यथोक्तं महाभारते—

"चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम्।
उत्थाय चासनं दद्यात्स यज्ञः पञ्चदक्षिणः॥

जगतामनन्तकोटिब्रह्मादीनां सर्वेषां पतिः स्वाम्यपि यत् यस्य चरणशौचं चरणप्रक्षालनजलं श्रीगङ्गाविरूपमशेषतीर्थं स एवम्विधोऽपि तस्य ब्रह्मपुत्रस्य स्वामन्यदासस्य स्वामिलीलाप्रातिकूल्यभयात् तूष्णींस्थितस्य सर्वत्र प्रसिद्धस्य चरणौ अवनिज्य प्रक्षाल्य स्वमूर्ध्ना बिभ्रत् बिभ्राणः देवर्षिवर्यं सम्पूज्य अभिभाष्य च प्राहेत्युत्तरेणान्वयः। एवम्विधे आचरणे करणं कारणं दर्शयन्ति–ब्रह्मण्यदेव इति। यद्गुणकृतं नाम तस्यैव युक्तं नान्यस्य अयमर्थः ब्राह्मणेभ्यः वेदविप्रपुरश्चरेभ्यो हितकृतो ब्रह्मण्याः धार्मिकास्तेषु शिक्षकरूपेण नानावतारैर्दीव्यतीति देवः लोकशिक्षार्थे, तथाविधमाचरणं कृतवानिति फलितार्थः ॥ १५ ॥

ऋषिर्मन्त्रप्रवर्तकः पुराणः पुराहि नवः नारस्य नरसमूहस्य अयनमाश्रयः नरसखः अभिभाष्य स्वागतमित्यादिप्रियमुक्त्वा ॥ १६ ॥

---

भाषाटीका।

उस भवन में सर्व काल में अपने समान गुण रूप अवस्था सुन्दर अलङ्कार वारी हजार दासीयों से युक्त होने परभी सुवर्णकी डँडी के चमर विजना से स्वयं बीज़ना चमर करने वारी रुक्मिणी सहित श्रीकृष्णका दर्शन नारदजी करते भए ॥ १३ ॥

सकलधर्म धारीन में श्रेष्ठ श्रीकृष्णभगवान् नारदजीको सम्यक प्रकार देख कर पश्चात् पर्यङ्क से शीघ्रहि उठ कर किरीट युत मस्तक से नारदजी के चरण युगलको दण्डवत् नमस्कार करके अञ्जलि बांधकर अपने आसन पर नारदजीको विराजमान करते भए ॥ १४ ॥

ब्रह्मादिकनके अत्यन्त पूज्य भी है तथापि श्रीकृष्ण सत्पुरुषों के पालन करने वारे हैं इसलिये नारदजी के दोनों चरणका प्रक्षालन करके उस चरण प्रक्षालन जलको अपने मस्तक से धारण करते भए और ब्राह्मण कुल में भक्ति वारेनको प्रवृत्त करते हैं इस प्रकारकोंजो गुण युक्त ब्रह्मण्य देवनाम है सो श्रीकृष्णकोंहि घटता है जिस के चरणारविन्दका प्रक्षालन गंगाजल ब्रह्मादिक सबको पवित्र करने वारा तीर्थ है ॥ १५ ॥

नर के सखा पुराण ऋषि नारायण श्रीकृष्ण शास्त्र उक्त विधि से देवर्षि श्रेष्ठ नारदजीकी सम्यक प्रकार पूजा कर के अमृत के तुल्य मधुर अल्पवाणी से हे प्रभो! आपका आगमन मंगल रूप है इस प्रकार नारदजीका सम्बोधन करके परमपूज्य आप के अर्थ हम कहा करैं इस प्रकार नारदजी से श्रीकृष्ण बोलते भए ॥ १६ ॥

नारद उवाच ।

नैवाऽद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ।
निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥
दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥
ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ।
योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ १९ ॥
दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च ।
पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥
पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ।
क्रियते किन्नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥
अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ।
स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भगवता स्वस्यार्हणमनर्हं मन्यमानस्तत्सम्भावयन्नाह—नैवेति । सर्वमित्रत्वादेवमर्हणं न तु मम गौरवात् तर्हि कथं कंसादिष्वमैत्री ? तत्राऽऽह-खलानां दमश्च नैवाद्भुतमिति कुतः ? जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः अतः खलदमः साधुसम्माननञ्च युक्तमिति भावः ॥ १७ ॥

यदुक्तं प्रभो किङ्करवामेति तत्राऽऽह—दृष्टमिति । भक्तजनताया अपवर्गरूपं. किञ्च, अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिन्त्यं किञ्च संसारकूपे पतितानामुत्तरणायावलम्बमाश्रयम् एवम्भूतं तवाङ्घ्रियुगलं मया दृष्टमतः कृतकृत्योऽस्मि तथापि त्वत्स्मृतिर्यथा स्यात्तथा अनुगृहाण ततस्तद्ध्यायन्नेव नित्यं चरामीति ॥ १८—१९ ॥

अक्षैर्दीव्यन्तमित्यादौ ददर्शेति ज्ञातव्यम् ॥ २०—२३ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नैवाद्भुतमिति सामान्यविवक्षया नपुंसकत्वमेकत्वञ्च किं तदित्यपेक्षायां विशेषविवक्षयाह मैत्री यथार्हसत्कारः अखिललोकनाथ इति तद्रूपत्वेन स्वतस्तत्र तत्र तुल्योऽपि तद्द्वयं नैवाद्भुतमित्यर्थः । तत्र हेतुः, निःश्रेयसायेति । तत्र निःश्रेयसं स्वभक्तिप्रचुरमङ्गलं मुक्तिमात्रञ्च तद्द्वयं यथायथं दत्तमित्यर्थः । तत्र तत्र सामर्थ्ये हेतुः, विभो इति. अत एव हे उरुगाय ! सर्वतो गीतकीर्त्ते ॥ १७ ॥

जनतेति सिद्धशुद्धपरिजनभावानां पर्य्यवसानफलरूपं ब्रह्मादिभिरित्यन्येषां परममहतामपि हृदि परमरहस्यहृद्वृत्तिविशेषे विचिन्त्यं यत्नातिशयेन स्मरणीयं संसारेति किं बहुना सर्वेषामपि संसारिणां संसारकूपोत्तरणार्थमाश्रययोग्यं तवाङ्घ्रियुगलं दृष्टम् अहो मम भाग्यमहिमेतिभावः । अथ तादृशस्य भाग्यस्य स्थैर्य्यं दुर्लभं मन्यमानः प्रार्थयते-ध्यायन्निति । चरामि चरेयमित्यर्थः । ननु तत्तव मनःसाध्यमेव किं प्रार्थनया तत्राह यथा स्मृतिः स्यात्तथाऽनुगृहाणेति तदपि त्वदनुग्रहैकसाध्यं नान्यसाध्यमित्यर्थः । यद्वा यथा ध्यायंश्चरामि तथाऽनुगृहाण यथा च स्मृतिर्मद्विषयककृपानुसन्धानं तव स्यात्तथा चानुगृहाणेत्यर्थः ॥ १८ ॥

तत्तदनन्तरम् अन्यत् श्रीरुक्मिणीगृहादपरं पत्न्याः क्रमप्राप्तत्वात् श्रीसत्यभामायाः गेहमाविशत् । योगमाया चित्रं वतैतदित्यादिना तर्किता परमाचिन्त्यशक्तिः तस्या विवित्सया कार्यद्वारा अनुभवेच्छया ॥ १९ ॥

तत्रापि श्रीकृष्णं ददर्शेति शेषः । किम्वा अन्वऐति वक्ष्यमाणेनैवान्वयः । उद्धवेन च तत्र साक्षितया स्थापितेन चकाराभ्याम देवने द्वयोरपि प्राधान्यं बोध्यते साक्षिणोऽपि तत्क्रीडासाहाय्यात् पूजितोऽसौ श्रीभगवता ॥ २० ॥

पृष्ट इति सार्द्धकम् । अविदुषा तदागमनादिकमजानतेव पृष्टश्च किन्तत् कदेत्यादि क्रियत इत्यादि च । इतिशब्दस्य कुर्वित्यन्तेऽप्यन्वयात् अस्मदिति बहुत्वं श्रीबलदेवाद्यपेक्षया ब्रूहि किञ्चिदादिश ॥ २१ ॥

अन्यत्र अपश्यत् गोविन्दं तादृशलीलाकौतुकाय पृथ्व्यामवतीर्णं साक्षाद्भगवन्तं तत्रापि तथाम्रे सर्वतोऽपि तस्य पूर्व-

श्रीमच्छ्रीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्पूजादिकं ज्ञेयं पूर्वत्र तत्रापीत्यादिशब्दस्वारस्यात् इत्यर्थश्चर्मे-कामेष्वित्यत्र तथैव व्याख्यास्यमानत्वाच्च शिशून् सुतानिति सुतान् शिशूनिति वा पाठः ॥ २२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नरनारायणीयं हि वैभवं वर्णयन् मुनिः ।
कृष्णं नारायणञ्चाहानन्तमूर्तिं स्वशोपिणम् ॥

स्थितिः रक्षणञ्च विरोधिनिरसनं ताभ्यां तदर्थं निःश्रेयसाय मोक्षप्रदानाय स्वैरावतारः स्वेच्छावतारः ॥ १७—१८ ॥

योगमाया आश्चर्यशक्तिः ॥ १९—४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युक्तः प्राह नारदः—नैवेति द्वाभ्याम् । तावदात्मार्हणमनर्हणमन्यमानस्तत्सम्भावयन्नाह—नैवेति । सर्वेषु जनेषु विषयभूतेषु मैत्रीत्येतल्लोकनाथे त्वयि नैव चित्रं सर्वमित्रत्वादेवमर्हणं नतु (मयि) गौरवादितिभावः । कथं तर्हि कंसादिष्वमैत्री ? तत्राह—दम इत्यादि । खलानां दमश्च नैवाद्भुतम् इति भावः । कुतः हि यस्मात् हे उरुगाय जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां चतुर्थ्यन्तमिदं निःश्रेयसाय मोक्षप्रदानाय च ताभ्यां सह मोक्षप्रदानायेतिवा स्वैरावतारः स्वेच्छावतारः इति वयं सुष्ठु सम्यक् विद्मः अतः खलदमनः साधुसम्माननञ्च तव युक्तमिति भावः । वयमिति भगवन् कृतार्थत्वादात्मानं बहुमन्यमानः प्राहेत्यर्थः ॥ १७ ॥

यदुक्तं प्रभो भगवते करवाम किं त इति तत्र स्वमनीषितं तत्प्रार्थयते— दृष्टमिति । तावत्तवाङ्घ्रियुगलं दृष्टं मयेति शेषः । कथम्भूतम् ? जनतायाः प्रपन्नजनसमूहस्यापवर्गमपवर्गसाधनं फलभूतं वा किञ्चातिदुर्लभतया ब्रह्मादिभिर्योगीश्वरैरपि हृदि विचिन्त्यः अगाधः बोधो विज्ञानं यस्मात् तथाभूतं संसारकूपे पतितानाम् उत्तारणायावलम्बमाश्रयम् एवम्भूतं दृष्ट्वा कृतार्थोऽहमस्मीति भावः । अतस्तदेव ध्यायन् चरामि किन्तु तद्विषया स्मृतिर्यथा स्यात्तथाऽनुगृहाण ॥ १८ ॥

तत इति । स नारदः अन्यत्कृष्णपत्न्यागृहमाविशत् किं कर्तुमिच्छया अङ्ग हे राजन् ! योगीश्वरेश्वरस्य भगवतो योगमायामाश्चर्यशक्तिं वेत्तुमिच्छया ॥ १९ ॥

दीव्यन्तमिति । तत्रापि गृहे प्रियया उद्धवेन च सहाक्षैर्देवनाक्षैर्दीव्यन्तं क्रीडन्तं ददर्शेति शेषः । असौ नारदः प्रत्युत्थानादिभिः उत्कृष्टया भक्त्या तत्पूर्वकं पूजितः ॥ २० ॥

अविदुषाऽजानतेव भगवता पृष्टश्च, प्रश्नमेवाह—कदेत्यादिना कुर्विति अन्तेन । इतिशब्दः कुर्वित्यनन्तरं योज्यः इति पृष्टश्चेत्यन्वयः । आयात इति खेदः अपूर्णैरागन्तुकपूर्तिरहितैः स्वत एव परिपूर्णैरवाप्तसमस्तकामैरिति यावत् तैरस्मदादिभिः पूर्णानां युष्माकं किं क्रियते निरपेक्षत्वात् किमपि न क्रियत एवेति भावः ॥ २१ ॥

यद्यप्येवमथापि हे ब्रह्मन् ! ब्रूहि ममैतज्जन्म शोभनं कुरु सफलं कुर्वित्यर्थः । भागवतकैङ्कर्यमकुर्वतः शरीरमशुभमिति भावः । सत्विति । स तु नारदोपि विस्मितस्तूष्णीम् उत्थायान्यदपि गृहमाजगाम ॥ २२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र नारदः प्रतिवक्ति—नेति । त्वयि अद्भुतं नैव मानादिदानमितिशेषः । स्वैरावतारः स्वेच्छावतार इति सुष्ठु विद्म ॥ १७ ॥

अद्य दृष्टं तवाङ्घ्रियुगलं ध्यायन् चरामि यथा स्मृतिः स्यात्तथा अनुगृहाण ॥ १८—१९ ॥

अक्षैः दीव्यन्तं देवनक्रियां कुर्वन्तम् ॥ २० ॥

अविदुषेवपूर्वं गृहे नारदागमनमजानतेव हरिणा भवान् कदाऽऽयात इत्यसौ नारदः पृष्टः ॥ २१—२३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यत् अन्यस्या इत्यर्थः ॥ २२—२६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्रोत्तरमाह नारदः—नैवाद्भुतमिति । वक्तव्यं तु न किञ्चित् कृतानुमोदनन्तु कर्तव्यं भवति अन्यथा पूजा कृतैव न स्यात् अनङ्गीकारात् तत्स्वतोऽङ्गीकारे अयुक्तं स्यात् अतो भगवदीयधर्मत्वेनाभिनन्दनमुच्यते हे विभो ! सर्वकरणसमर्थ ! एतत् ब्राह्मणपूजनं त्वयि नाद्भुतम् अखिललोकाः शिक्षणीया इति भगवांश्चाखिललोकनाथः त्रिविधं हि कर्म जगद्रक्षार्थं क्रियते खलानां दमः अन्तर्यामितया सर्वसख्यम् एतादृशी ब्राह्मणपूजा च एतस्य कर्मणः बन्धहेतुत्वमाशङ्क्य निराकरोति— निःश्रेयसायेति । अन्येषामपि मोक्षार्थमेतत् करणं श्रोतॄणां कीर्तयितॄणाञ्च युक्तश्चायमर्थः । अन्यथा त्रिविधानि कर्माणि लोकानां नाशान्तानि भवेयुः सजातीयनिवर्त्तकाभावात् एतत् जीवैरपि कर्तुं शक्यत इति भगवतो विशेषं वक्तुमाह—जगतः स्थितिरक्षणाभ्यां सहेति । स हि जगत् स्वात्मनि धारयति पालयति च स्वेच्छावतारेपि च सम्बोधनं तादृशस्यापि कर्मकरणं लीलार्थमिति सूचयति सप्तम्यन्तं वा एवं हेतुप्रकथनाय अन्यथा कथं लोकाः कीर्तयेयुः कथं वा मुक्ता भवेयुः इति अत्र प्रमाणमाह विद्मेति सुष्ठ्विति अनुभवश्रुतिभ्यां नतु तर्कमात्रेण ॥ १७ ॥

एवं कृताभिनन्दनं कृत्वा भगवदुक्तं नान्यथा कर्तव्यमित्यभिप्रेत्य स्वाभिलषितं किञ्चित् प्रसङ्गात् प्रार्थयते—दृष्टं तवाङ्घ्रियुगलमिति यदेतत् दृष्टं तद्ध्यायन् सर्वत्र चरामीति बाह्यव्यवसायः अत्र यथा स्मृतिः स्यात् तथाऽनुगृहाणेति कर्तव्यप्रार्थना दुर्लभं ह्येतदेव प्राप्तेपि बहवो बाधका अतः स्मृतिर्भविष्यती न विश्वासः कर्तव्यञ्च मम नान्यत् भवच्चरणस्मरणात्

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मनुग्रह एव कर्त्तव्यः दृष्टमित्येतेन ज्ञानपक्षो निराकृतः भगवच्चरणयोरेव जीवब्रह्मत्वात् स्वात्मपरमात्मसाक्षात्कारः सिद्ध एवेति मोक्षमपि ज्यावर्त्तयति, जनताया एवापवर्गं करोति इति, तत्रास्मदपवर्गे कः सन्देह इति भावः। एतस्मान्यत् दुर्लभमस्तीति अभिप्रायेणाह—अगाधबोधैः पूर्णज्ञानैरपि ब्रह्मादिभिर्हृदि विचिन्त्यमेव न तु साक्षात् द्रष्टुं शक्यते तस्माद्ब्रह्मादीनामप्येतदेव दुर्लभमिति नातःपरं किञ्चित् मृग्यम अनेन चरणस्य ऐहिकपारलौकिकफलेऽप्योपि महत्त्वं निरूपितं किञ्च भक्तिमार्गस्यैतदेव प्रवर्त्तकमित्याह—संसार कूपेति। यावन्मूकायमितिन्यायेन शास्त्रानुसारेण ये स्वहितं न कृतवन्तः 'तावोचेत् प्रमत्तमिति न्यायेन विषयकूपे पतिताः तेषामुत्तरणे तीर्थाभावात् पक्षाभावाच्च, कर्मवल्ली अन्तरेव सम्भूता नोपरि नयतीति ज्ञानञ्च सूत्रवत् नोपर्याकर्षतीति भगवच्चरणारविन्दद्वयमेव संसारकूपे पतितानां तत उत्तरणे अवलम्बनं भवति अतो मार्गत्रयेऽप्येतदेव शरणमिति ध्यायन् चरामि एतावदुक्त्वा भगवता अनुज्ञातः निर्गत इति ज्ञातव्यम्॥ १८॥

ततो निर्गतस्य गृहान्तरप्रवेशमाह—ततोऽन्यदाविशद्गेहमिति। अन्यत्पूर्वोक्तं समानं कृष्णपत्न्या इति भगवान् पूर्वगृहे दृष्ट इति नारदस्य भगवत्पत्नीवात्र स्थास्यतीति बुद्धिरिति कृष्णपत्न्या इत्युक्तं सतु कृपां प्रार्थयित्वा निर्गतः ततोपि बहिर्मुखत्वाद्गृहान्तरमेव प्रविष्टः यतो नारं द्यति खण्डयति व्यसनस्वभावः तस्य गृहान्तरप्रवेशो मनीषितमाह—योगेश्वरेश्वरस्येति। योगस्यैव गतिर्दुर्ज्ञेया अलौकिकत्वात् तत्रापि योगेश्वरस्य यो योगमपि वशीकृतवान् तेषामपीश्वरो भगवान् तैस्यापि योगमाया तस्याः विवित्सा यस्याः वैभवं भगवानपि न मन्यते एतावदिति अज्ञेयप्रतारणार्थं सम्बोधनं तत्र स्थितस्य भगवतः पूर्वदृष्टापेक्षया भिन्नमेव सन्निवेशमाह—दीव्यन्तमक्षैरिति। सर्वत्र तादृश एव सन्निवेशो वक्तव्यः येन पूर्वगृहस्थितस्य शीघ्रं समागमनशङ्कापि न सम्भवतीति तत्रापि भगवन्तं ददर्शेति पूर्वा क्रियैवानुसन्धेया परं प्रियया भार्यया उद्धवेन च सह अक्षैर्दीव्यन्तमिति॥ १९-२०॥

तस्य नारदस्य भगवान् मायया तथा प्रदर्शयतीति बुद्धिव्यावृत्त्यर्थं भगवान् किञ्चिदुक्तवान् इत्याह—पृष्टश्चाविदुषेवासाविति। असौ पूर्वदृष्ट एव भगवान् प्रत्यभिज्ञातस्य दृष्टत्वात्• तथापि कदाऽऽयातो भवान् इति पृष्टवान् असौ नारदो भगवता पृष्टः यथा सः स्वाकारगोपनं करोति परीक्षार्थं तथा भगवानपि कृतवानित्यभिप्रायेणाह—तथा अविदुषेवेति 'चकारात् पूजाकृतं सर्वं कृतवान् स्तुतिश्च कृतवानित्याह—किन्नु पूर्णानामिति। पूर्ववद्भगवन्नारदयोः धर्मव्यत्यासो द्रष्टव्यः तदोपपद्यत एव पूर्णानां भवताद अपूर्णैरस्मदादिभिः किं कर्त्तव्यमिति यथा अज्ञानतात्वम॥२१॥

एवं तत्कार्यनाट्यवाक्यमपीति केचित् लौकिकी वा माया सम्मोहार्था तदुक्तौ भगवान् परिच्छिन्नो भासत इति "ये यथा मां प्रपद्यन्ते"इतिन्यायेन भगवद्वचनमित्यपरे तथापि समागतस्य भगवद्गुणनिर्द्धारार्थं प्रवर्त्तमानस्य हितं कर्त्तव्यमिति भक्तिशास्त्रमनुसृत्याह—अथापि ब्रूहि नो ब्रह्मन् इति। अस्मान् प्रति ब्रूहि किञ्चित् प्रार्थयेत्यर्थः। ब्रह्मन्निति ब्राह्मणस्य याचनमुचितमिति किञ्च एतन्मम जन्म अवतारः भक्तोद्धारक एवेति तत्र मुक्यो भवानिति स्वात्मानं पूर्णं कुर्वन् जन्म शोभनं कुरु स्वजन्म वा ततो यज्जातं तदाह—स तु विस्मित उत्थायेति। पारमार्थिकमेतद्वचनं न भवतीति स्वमनसि निश्चित्य मां वञ्चयति शीघ्रं तत आगतेति सम्भावनां कुर्वन् शीघ्रमुत्थाय ततो गत इत्याह—हेत्वदर्शनाद्विस्मितो जातः भगवतो वैभवेन समागमनं निराकरोति तुशब्दः॥ २२॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

लोके हि सेव्यो यदि सेवकं पूजयेत् तदा सेवकस्यामङ्गलं भवेत् त्वन्तु स्वतन्त्रः स्वसेवकं सम्पूज्यापि तस्मात् पूजां गृहीत्वापि तं दण्डयित्वापि तस्य यथार्हं मङ्गलमेव करोषीत्याह—नैवेति। अखिललोकनाथे त्वयि नाद्भुतमेतत् किन्तविस्मत आह सकलेषु जनेषु मैत्री हितकारित्वमेव। तथाखिललोकनाथत्वादखिललोकानां जीवत्वात् त्वत्सेवकत्वमेव वस्तुतो भवेत्। यदुक्तं पाद्मे प्रणव व्याख्याने "अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते। मकारस्तु तयोः दासः पञ्चविंशः प्रकीर्तितः॥" इति पञ्चविंशो जीवः। तत्र केषाञ्चिदस्माकं विप्राणां त्वामभीक्ष्णं सेवमानानामपि त्वत्कर्तृकं पूजनम् अस्मन्मनोऽतिदुःखप्रदं केषाञ्चिदन्येषामुद्धवविदुरादीनां त्वां सेवमानानां त्वत्कर्तृकं पूजाग्रहणं तन्मनोऽतिदुःखप्रदम् अन्येषां पशुतुल्यसांसारिकजनानां त्वामभजतां त्वत्कर्तृकः कृपावलोकः। अपरेषां खलानां जरासन्धादीनां दमस्त्वत्कर्तृकः सर्वमिदं ते मैत्री हितकारित्वमेव यतो जगतः स्थितिर्धारणं रक्षया पालनं ताभ्यां सह निःश्रेयसाय प्रेमभक्तियोगाय मोक्षाय च स्वैरोऽयमवतार इति जानीमः॥ १७॥

भो महामुने! किमर्थकमिदमागमनं किमत्रैव तिष्ठा सा अन्यत्र वा प्रतिष्ठा सेत्यपेक्षायामाह—दृष्टमिति॥ १८॥

विवित्सया उपलम्भेच्छया॥ १९॥

तत्र सत्यभामागृहेऽक्षैः दीव्यन्तं तं ददर्श॥ २०-२१॥

तूष्णीं स्थितं नारदमतिविस्मितं प्रत्याह—अथापीति॥ २२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्थं सत्कृतः श्रीनारद उवाच—नैवाद्भुतमिति द्वाभ्याम्। हे विभो! सकलेषु जनेषु मैत्रीत्येतल्लोकनाथे त्वयि न चित्रम् सर्वजनमित्रत्वादित्थं मम सत्कारस्त्वया कृतो न तु मयि गौरवादितिभावः। ननु कंसादिषु अमैत्र्यपि प्रसिद्धा तत्कथं सकलजनमित्रत्वं ममेत्यत आह—दम इति। हि निश्चितं खलेषु दमोपि त्वत्कर्तृको निःश्रेयसाय तेषां कल्याणाय निखिलमित्रत्वं प्रतिपादयति—हे उरुगाय! जगतां स्थितिरक्षणाभ्यां धारणाय पालनाय च स आर्य तव स्वैराव-

तत्राप्यचष्ट गोविन्दं लालयन्तं सुताञ्छिशून्।
ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥ २३ ॥
जुह्वन्तञ्च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः।
भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् ॥ २४ ॥
क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्।
एकत्र चासिचर्मभ्यां चरन्तमसिवर्त्मसु ॥ २५ ॥
अश्वैर्गजैरथैः क्वापि विचरन्तं गदाग्रजम्।
क्वचिच्छयानं पर्यङ्के स्तूयमानञ्च वन्दिभिः ॥ २६ ॥
मन्त्रयन्तञ्च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः।
जलक्रीडारतं क्वापि वारमुख्याऽबलावृतम् ॥ २७ ॥
कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः।
इतिहासपुराणानि शृण्वन्तं मङ्गलानि च ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नारः जातावेकवचनं तव स्वेच्छावतारा इति वयं सम्यक् विद्मः ॥ १७ ॥

भगवते किं कुर्वामेति यदुक्तं तत्राह—दृष्टमिति। तवाङ्घ्रियुगलं दृष्टमेतावतैव कृतार्थोऽस्मीति भावः। तथापि यथा स्मृतिः तवाङ्घ्रियुगलस्मृतिः स्यात् तथाऽनुगृहाण तदेव ध्यायन् नित्यं चरामि ॥ १८—१९ ॥

दीव्यन्तं क्रीडन्तं ददर्शेति शेषः। तत्रापि भक्त्या पूर्ववत् पूजितः ॥ २० ॥

कदा ऽऽयातो भवानिति अविदुषेव पृष्टः एवं पूजनप्रश्नादिकममेपि बोध्यम् ॥ २१—२२ ॥

भाषा टीका।

नारद उवाच।

श्रीनारदजी बोले, कि—हे विभो! हे अखिललोकनाथ सब साधुजनों में मित्रता करनीं और खलनको दण्ड देना आप के विषय में यह कुछ आश्चर्य नहि है हे उरुगाय! इसी लिये जगतका धारण पालन सहित महात्माओं का कल्याण के अर्थ अपनी इच्छा से हि आपका अवतार है इस प्रकार हम सब सम्यक् जानते हैं ॥ १७ ॥

और आप के चरण युगलका दर्शन मैने कि वह चरण युगल भक्तजन समूह के मोक्षका कारण है और अगाध ज्ञान वारे ब्रह्मादिकों से निज हृदय में उस चरण युगल का ध्यान मात्रहि होता है और संसार कूप में पड़े हुए जनोंको उस कूप से बाहिर होनेका अवलम्ब है वह चरण युगल इस लिये मोको उस चरण युगलकी जैसे निरन्तर स्मृति बनी रहे इस वास्ते उस का ध्यान करते भयो मैं विचरूं तैसा आप अनुग्रह करो ॥ १८ ॥

हे राजन्! श्रीकृष्णजीने नारदजीको जहां से विदा किया तब तो उस गृह से निकस गया योगेश्वरन केभी ईश्वर श्रीकृष्णकी योगमायाका जानिवेकी इच्छा करके नारदजी श्रीकृष्ण भार्य्या के अन्य गृह में जाते भए ॥ १९ ॥

उस गृह मेंभी प्रिया के साथ और उद्धव के साथ पाशेन से क्रीडा करते भए श्रीकृष्ण के दर्शनको नारदजी करते हुए और परम भक्ति के साथ आगे से आगे उठना आसन देना इत्यादि प्रकार से श्रीकृष्णने नारदजीकी पूजा करी और जैसे नहि जाने वारा पूछै तैसेंहि श्रीकृष्णजीने नारदजीको पूछा कि आप कब पधारे ॥ २० ॥

हम से आदि लेकर अपरिपूर्ण पुरुषों से आप के सदृश परिपूर्ण महात्माओंका क्या कार्य्य होसकता है कुछभी नहि तौभी आप किसी कार्य्यकी आज्ञा करो और आज्ञा करनेसे हमारे इस जन्मको आप सफल करो ॥२१॥

तबतो नारदजी विस्मित होकर वहां से उठकर चुप चाप अन्य गृह में गए ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

वितानाग्नीनाहवनीयादीनग्निहोत्रेण पञ्चभिर्मखैर्महायज्ञैर्यजन्तम् ॥ २४—३१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत इति सार्द्धत्रयोदशकम् । तत्र तस्य रात्रावागमनेऽपि योगीन्द्रत्वान्मनोजवत्वेऽपि वक्ष्यमाणनानासमयलीलादर्शनं योगमायाविलासेनैव युगपत्समयवैचित्र्यात् अन्यथा तस्य विस्मय एव न स्यादिति तत्र मज्जनाय स्नानायेति प्रातर्लीला ॥ २३ ॥

"पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः,, एतैः पञ्चभिः महायज्ञैर्यजन्तम् अवशेषितम् अवशिष्टं भुञ्जानमित्यन्तं मध्याह्नस्य ॥ २४ ॥

क्वापि केषुचित् सन्ध्यामुपासीनं ब्रह्म गायत्रीं वाग्यतं वाचो यतं यमनं यत्र तत्कृतमौनं यथा स्यादित्यर्थः । इति कालत्रयस्यैव असिवर्त्मसु खड्गविद्याशिक्षागतिषु ॥ २५ ॥

क्वापि केषुचित् स्थानेषु अश्वादिभिर्विविधतया चरन्तमिति प्रायः पूर्वाह्णस्य गदाग्रजमिति तत्सहितमिति भावः पर्य्यङ्के शयानमिति रात्रिशेषस्य वन्दिभिः स्तूयमानत्वात् ॥ २६ ॥

आदिशब्दगृहीतकञ्चुकिभिः चकाराच्छ्रीबलदेवादिभिश्च एवमुद्धवादीनामपि प्रतिगृहं स्थितिरुद्दिष्टा वारमुख्याबलावृतं वारमुख्या वेश्याश्रेष्ठाः अबला महिष्याद्याः ताभिरावृतम् ॥२७॥

कुतूहलकृताः सौवर्णभृङ्गादिभिः इति प्रायो मध्याह्नस्य मङ्गलानि शान्तिसूक्तानि पुण्यगीतादीनीति वा प्रायोऽपराह्णस्य इतिहासपुराणाभ्यां षष्ठसप्तमकौमयेदिति विधानात् ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रापि गृहे गोविन्दमाचष्ट ददर्श कथम्भूतं लालयन्तम् उपच्छन्दयन्तं । तत इति । मज्जनाय स्नानाय कृत उद्यमो यत्नो येन तथाभूतम् ॥ २३ ॥

जुह्वन्तमित्यादिद्वितीयान्तानां क्वचिदित्यादि ददर्शेत्यन्तः वितानाग्नीन् यज्ञीयानाहवनीयादग्नीन् पञ्चभिर्मखैर्महायज्ञैः । भोजयन्तमिति । अवशेषितं परिवेषणावशेषितम् ॥ २४ ॥

कश्चिद्ब्रह्म स्वात्मानं जपन्तमवलोकयन्तमित्यर्थः । ब्रह्म प्रणवं वा यद्वा ब्रह्म वेदं जपन्तं "वेदमेव जपेन्नित्यम्" इति शास्त्रात् क्वचिद्वाग्यतं मौनीभूतं स्थितम् एकत्र क्वचिदसिचर्मभ्यां खड्गखेटाभ्यां सहासिवर्त्मसु खड्गभ्रामणगतिषु चरन्तं गदाग्रजं कृष्णं । क्वचिच्छयानमिति । वन्दिभिः स्तुतिपाठकैः स्तूयमानञ्च ॥ २५—२६ ॥

स नारदः क्वचिदुद्धवादिभिः मन्त्रिभिर्मन्त्रयन्तं वारमुख्याभिर्गणिकाश्रेष्ठाभिरबलाभिः स्त्रीभिः परिवृतम् ॥ २७ ॥

कुतूहलकृताः धेनूर्ददतं प्रयच्छन्तम् मङ्गलानि मङ्गलस्तुतीश्च शृण्वन्तम् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्वापि गृहे ब्राह्मणदत्तावशेषितमन्नम् ॥ २४ ॥

असिचर्मभ्यां शिष्यवर्त्मसु चरन्तं शिष्यान् शिक्षयन्तम् ॥२५-२६॥

वारमुख्याभिरबलाभिरावृतं वेष्टितम् ॥ २७ ॥

ददतमिति पाठः । ददन्तमिति पाठे "दद दाने" इत्यस्य धातोः शत्रादेशः ॥ २८-३१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उत्थाय तूर्णमेव यद्गृहमगात्तत्र निवेशान्तरमाह—तत्रा-प्यचष्टेति । शिशून् पुत्रादीन् तत्र भगवन्तं दूरादेव सन्निवेशान्तरस्थितं दृष्ट्वा तत्सन्निकृष्टपर्यन्तं तत्सङ्गावस्थितं भगवन्तं पश्यन् तत्रतत्र प्रविश्य ततस्ततो निर्गत इत्याह—ततोऽन्यदस्मिन्नित्यादि । अथोवाचेत्यतः प्राकरणेन । मज्जनाय मर्द्दनान्तरं स्नानाय कृत उद्यमो येन ॥ २३ ॥

वितानाग्नीन् यज्ञवितानस्थितान् गार्हपत्यादीन् "सोमं विधाय अवभृथस्नानानन्तरं स यावद्राश्रेः रूपिस्तुते" इति न्यायेन मध्यरात्रावप्यग्निहोत्रहोमः तथैवान्यत्र पञ्चमखा देवयज्ञादयः पञ्च गृहेषु क्वापि गृहे द्विजान् भोजयन्तं रात्रिभोजनेन ततोऽवशेषितं भुञ्जानं गृहान्तरे एते सप्त गृहाः पूर्वोक्तैः सह द्वादश ॥ २४ ॥

पुरुषार्थचतुष्टयं साधयन्तमाह—तत्र धर्मः क्वापि सन्ध्यामुपासीनम् अन्यत्र जपन्तं तस्यैव विशेषणं वाग्यतमिति मौनव्रतधरं भिन्नमिति विमर्शः एकत्र असिचर्मभ्यां चरन्तम् असिवर्त्मसु शास्त्रोक्तखड्गमार्गशिक्षासु तथैव ॥ २५ ॥

अश्वैः रथैर्गजैः सह विचरन्तं गदाग्रजं भक्तरक्षार्थं तथा यतमानमित्यर्थः । पर्यङ्के क्वचिच्छयानम् अन्यत्र वन्दिभिः स्तूयमानं दशधायं धर्मो निरूपितः ॥ २६ ॥

अर्थं निरूपयति-मन्त्रयन्तमिति । कामं निरूपयति-जलक्रीडारतमिति ॥ २७ ॥

मोक्षं निरूपयन् सर्वाण्यङ्गानि निरूपयति कुत्रचिद्द्विजमुख्येभ्य इति । श्रवणमितिहासपुराणानीति विशेषो मङ्गलानि भगवद्गुणान् ऋणमपाकुर्वन्निवाह ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्राप्यचष्ट अपश्यदिति तत्रैव गृहेषु प्रायः कृष्णकर्तृकपूजान्तत्यादिकं ज्ञेयम् अपश्यदित्येव क्रिया अतः परेष्वपि सार्द्धचतुर्द्दशश्लोकेष्वनुवर्त्तनीया । अत्रैकस्य कृष्णवपुषो यथा बहून् प्रकाशान् अभिमानभेदक्रियाभेदसहितान् अपश्यत् एकेनामेषोऽवादिवपुषामपि बहून् प्रकाशान् किञ्चैकस्मिन्नेव क्षणे मनोवेगेन प्रत्येकं षोडशसहस्रगृहान् गतो मुनिः पृथक् पृथक् कालभेदान् क्रियाभेदांश्चापश्यदित्यत एक क्षणमध्यमेव षड्घटिकं कालं पृथक् पृथक् स्थले प्रातरादिस्वभागांस्तदुचितक्रियाभेदसहितान् प्रकाशयन् प्राविशदित्यतः प्रातरादिकालानामपि षड्घटिकीनां क्रियाणामपि सर्वकालवर्त्तित्वं मुनिर्ज्ञातवानिति ज्ञेयं । मज्जनायेति प्रातः समयो व्यञ्जितः ॥ २३ ॥

हसन्तं हास्यकथया कदाचित्प्रियया गृहे ।
क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ २९ ॥
ध्यायन्तमेकमासीनं पुरुषं प्रकृतेः परम् ।
शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३० ॥
कुर्वन्तं विग्रहं कैश्चित्सन्धिञ्चान्यत्र केशवम् ।
कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥ ३१ ॥
पुत्राणां दुहितॄणाञ्च काले विध्युपयापनम् ।
दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३२ ॥
प्रस्थापनोपानयनैरपत्यानां महोत्सवान् ।
वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३३ ॥
यजन्तं स (स्व)कलान् देवान् क्वापि क्रतुभिरूर्जितैः ।
पूर्तयन्तं क्वचिद्धर्मं कूपाराममठादिभिः ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कश्चिद्वितानाग्नीनाहवनीयादीन् अग्निहोत्रेण जुह्वन्तमिति पूर्वाह्णः क्वापि पञ्चभिर्मखैरिति ।"पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः" इति पञ्चमहायज्ञैः यजन्तमिति मध्याह्नः भोजयन्तं भुञ्जानमित्यपराह्णः ॥ २४ ॥

सन्ध्यामुपासीनमिति सायाह्नः । असिचर्मभ्यामिति पुनः प्रातः ॥ २५ ॥

अश्वगजैरिति पुनर्मध्याह्नः कचिच्छयानमिति रात्रिशेषः ॥२६॥

मध्ययन्तश्चेति प्रदोषः । जलक्रीडारतमित्यपराह्णः ॥ २७ ॥

गाः ददतमिति पूर्वाह्णः इतिहासेत्यपराह्णः । इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयर्विात स्मृतः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्राप्याचष्टापश्यत मैज्जनाय कृतोद्यममपश्यत अपश्यादित्य-येपि सम्बध्यते ॥ २३ ॥

वितानाग्नीन् आहवनीयादीन् अग्निहोत्रेण जुह्वन्तम् पाठ-होमातिथिसपर्य्यातर्पणबलिदानाख्यैः पञ्चमखैः ॥ २४—३१ ॥

---

भाषा टीका ।

वहांभी बालक पुत्रोंका लाड करते हुए श्रीगोविन्दका दर्शन करते भए उसके पश्चात अन्यगृह में स्नान के वास्ते तयारी करते हुए श्रीकृष्ण का दर्शन नारदजी करते भए और किसी गृह में यज्ञ के अग्नि योंमे हवन करते हुएन को देखा तथा किसी गृह में पञ्चयज्ञन करके देवादि कनका यजन करते हुए श्रीकृष्ण का दर्शन नारदजी ने किया ॥ २३ ॥

कहुं ब्राह्मणोंको भोजन कराते और कहुं ब्राह्मण भोजन से बचे अवशेष अन्नको स्वयं भोजन करते तथा कहुं सन्ध्याकी उपासना करते कहुं गायत्रीके जप करते कहुं मौनव्रत लिये हुये श्रीकृष्णको नारदजीने देखा ॥ २४ ॥

और एक मकानमें ढाल तरवार सहित तरवारके पैंतरानमें विचरते हुये कहुं घोडा हस्तिथनपर बैठकर विचारते हुए श्रीकृष्णको नारदजीने देखा ॥ २५ ॥

कहुं शय्या पर शयन करतेहुए कहुं बन्दीजन जिन की स्तुति करते हैं और कहुं उद्धव आदि मन्त्रीयों के साथ विचारकरते हुए को देखे ॥ २६ ॥

कहुं श्रेष्ठ अप्सराओं के समूहसे युक्त होकर जलक्रीडा करनेमें प्रीति संपन्न को कहुं श्रेष्ठब्राह्मणोंके अर्थ सुंदर अलङ्कार वारी गौनका दान करते हुए श्रीकृष्णको देखा ॥ २७ ॥

और कदाचित् मङ्गल पाठक इतिहास पुराणों का श्रवण करते हुए और कहुं गृहमें प्रियाभार्यों के साथ हांसी की कथा से हांसी करते हुए श्रीकृष्ण को देखे ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

काले तत्तत्समये विधिना उपयापनं प्रापणं विवाहमित्यर्थः । कल्पयन्तं विभूतिभिर्विभवैः ॥ ३२ ॥

प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तत्तद्गृहप्रतिनयनम उपानयनं तत्तद्गृहात्पुनरानयनं तैर्महोत्सवान् कल्पयन्तं योगेश्वरेशस्य तेषामपत्यानां महोत्सवान्वीक्ष्य लोकाः सर्वे विसिस्मिरे विस्मयञ्चक्रुः तथाभूतान् कल्पयन्तम् ॥ ३३-३४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गृहे कार्श्मश्चित् धर्मं सेवमानं भक्त्याऽनुतिष्ठन्तं कामं सेवमानम् उपभुञ्जानम् अर्थं सेवमानं साधयन्तम् ॥ २९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं त्रिवर्गपरतालीलामुक्त्वा मोक्षपरतालीलामाह—ध्यायन्तमिति । मनुष्यचेष्टानुकरणलीलामात्रत्वाच्च वैष्णवसिद्धान्तहानिरिति भावः । तयोरावश्यकमुख्याङ्गलीलामाह— गुरून् श्रीसान्दीपनिगर्गवसुदेवादीन् कामादिभिः शुश्रूषन्तं कामाः अभीष्टपदार्थाः भोगा उपभोगार्हपदार्थाः सपर्या परिचर्या देवशुश्रूषयात्वग्रे वक्ष्यत इति मध्याहारैः एवमुत्तरत्रापि समया उभयाः ॥ ३० ॥

कुर्वन्तं कर्तुमिच्छन्तमारभमाणं वा केशवं तत्रतत्र ब्रह्मेशयोरपि मोहनाव्यक्तीकृततत्सामार्थं कैश्चिदित्यनेन अन्यैश्चेत्यनेन च तत्तत्पृथग्गृहद्वये ज्ञेयम । अन्यत्रेति क्वचित्पाठः सतां पाण्डवादीनां शिवं कथं स्यादिति विचारयन्तामित्यर्थः ॥ ३१ ॥

कुलकमध्य एव पुत्राणामिति युग्मकम् । तत्सदृशैः पुत्रसदृशैर्दारैः पुत्राणां दुहितृसदृशैर्वरैर्दुहितॄणां विभूतिभिः कृत्वा अस्य परेणान्वयः । तत्र केषुचिद्गृहेषु पुत्राणां केषुचिद्गृहेषु दुहितॄणामिति ज्ञेयम् ॥ ३२ ॥

एवमग्रेपि लोका विसिस्मिरे लोकातीतत्वात् तत्कुतः योगेश्वराणामीशस्य यद्वा योगेश्वरस्य सनकादिप्रभोः श्रीवैकुण्ठनाथस्य लोकाः श्रीगरुडादयोपि विसिस्मिरे ॥ ३३ ॥

स्वस्य कलाः प्रतिमादिरूपान् साक्षाच्छ्रीविष्ण्वादिरूपांश्च क्रतुभिरर्चनात्मकैर्होमात्मकैश्च ऊर्जितैः समृद्धैः पूर्तयन्तं पूर्ताख्यतया सम्पादयन्तम आलया देवादिगृहाणि ॥ ३४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कदाचित् कस्मिंश्चिद्गृहे प्रियया सह हास्यकथया हसन्तम ॥२९॥

प्रकृतेः "भूमिरापोनलो वायुः" इत्यादिश्लोकद्वयोक्तप्रकृतिद्वयात्परं विलक्षणं परमपुरुषभूतं स्वात्मानं ध्यायन्तमनुभवन्तम् सपर्यया पूजया च गुरून् शुश्रूषन्तं परिचरन्तम् ॥ ३० ॥

कैश्चिद्विग्रहं विरोधं कुर्वन्तमन्यत्र गृहे सन्धिं कुर्वन्तं केशवं सतां साधूनां शिवं योगक्षेमं चिन्तयन्तम् ॥ ३१ ॥

पुत्राणामिति । काले तत्तत्समये पुत्राणां तत्सदृशैर्दारैः दुहितॄणान्तु तत्सदृशैर्वरैश्च विधिना शास्त्रोक्तेन उपयापनं प्रापणं विवाहमित्यर्थः । तद्विभवैः कल्पयन्तं घटयन्तम ॥ ३२ ॥

प्रस्थापनेति । प्रस्थापनं दुहितृस्नुषाजामात्रादीनां स्वगृहं प्रति नयनं तद्गृहात्पुनरानयनम् उपानयनं तैरपत्यादीनां पुत्राणां दुहितॄणां च महोत्सवान् कल्पन्तं तानेव विशिनष्टि, योगेश्वरेशस्य भगवत एवमपत्यादीनां महोत्सवान् वीक्ष्य लोकाः सर्वेपि विसिस्मिरे विस्मयञ्चक्रुः तथाभूतानुत्सवान्कल्पयन्तमितिसम्बन्धः ॥ ३३ ॥

यजन्तमिति । स्वकलान् स्वांशभूतान् देवानिन्द्रादीन् ऊर्जितैर्बहुदक्षिणैः क्रतुभिर्यजन्तं कूपादिनिर्माणैर्धर्मं पूरयन्तं पूर्तं स्मार्तं धर्मं कुर्वन्तमित्यर्थः । पूर्तशब्दात्तत्करोतीति णिजन्ताच्छतृ माविर्षणानां वृत्तिर्नेत्यादिनिषेधस्य विशेष्याविषयत्वात् अत्र पूर्तस्य धर्मं प्रति विशेषणत्वात् सापेक्षस्यापि नामधातुवृत्तिरवगन्तव्या ॥ ३४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

काले प्राप्ते विध्युक्तप्रकारेण उपनायनम उपनयनं स्वगृहं प्रत्यानयनं ब्राह्मणीकारणं कल्पयन्तं पुत्राणां दारैः सह दुहितॄणां वरैः सह योगं कल्पयन्तम ॥ ३२ ॥

प्रस्थापनं परगृहं प्रति दुहितृप्रेषणम् उपनयनं स्वगृहं प्रत्यानयनं येषामिति षष्ठीद्वितीयार्थे लोकाः यानि कर्माणि वीक्ष्य विसिस्मिरे तानि कुर्वन्तं कर्मणामाचरणं वीक्ष्येति वा ॥ ३३ ॥

कूपादिभिः पूर्तयन्तं पूर्ताख्यधर्ममाचरन्तम् ॥ ३४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हसन्तमिति । तत्रैवार्गिकं तत्रैव शेषतया निरूपितमाह, धर्मं सेवमानमिति ॥ २९ ॥

ध्यायन्तमेकमिति । निदिध्यासितं शुश्रूषन्तं गुरूनिति गुरुसेवा त्रिविधा ॥ ३० ॥

एवमलौकिकपुरुषार्थानुक्त्वा लौकिकं व्यवहारमाह—कुर्वन्तं विग्रहं कैश्चिदिति । राज्यान्तरशिष्टानाङ्गीकृताः सन्ध्यावङ्गीकृताः केवलमित्यनेन समयभेदेनापि सन्धिविग्रहौ निरूपितौ ततो लोकन्यायेन मलभद्रेण सह मन्त्रणं कथं सतां शिवं भवेदिति अलौकिकेन वा कलावुत्पत्स्यमानानाम् ॥ ३१ ॥

पुत्राणां विवाहो दुहितॄणाञ्च विधिपूर्वकमुपपादनं काले युक्तसमये किञ्च पुत्राणां दारैः सह विभूतिभिः कल्पयन्तं कस्मिंश्चिद्गृहे पुत्रं सभार्यं परमोत्सवयुक्तं करोतीत्यर्थः । तथा दुहितॄणामपि तत्सदृशैर्वरैः सहितानां विभूतिभिः कल्पयन्तं जामातृसहिताः दुहितरः ऐश्वर्यादिसम्पन्नाः कृता इत्यर्थः ॥ ३२ ॥

तासामेव प्रस्थापनम् उपनयनञ्च भर्तुर्गृहात् स्वगृहे समानयनं पुत्रवधूनां वा अपत्यानां महोत्सवान् कल्पयन्तमिति सम्बन्धः आवश्यकत्वादनभिनिवेशेन करणं सम्भवतीति तद्व्यावृत्त्यर्थं महतीं समृद्धिमुपपादयति—वीक्ष्येति । योगेश्वराणामपीश्वरत्वात् सामग्रीमनेकविधाम् अनायासेन शीघ्रं सम्पादयति- ततो येषां महोत्सवानां सम्बन्धिनो लोकाः तां दृष्ट्वा अभूतपूर्वत्वाद्विसिस्मिरे ॥ ३३ ॥

एवं लौकिकधर्मेषु केवललौकिकानुपपाद्य तदनुरूपधर्मानुपपादयति—यजन्तं स्वकलान् देवानिति । स्वस्य कला येषु भगवदावेशयुक्तान् ऊर्जितैः लौकिकसाधनैः पुष्टैः क्रतुभिः यज्ञादिभिः शान्तिकपौष्टिकैर्वा, पूर्तमप्याह—पूर्तयन्तमिति । कूपारामादिप्रतिष्ठार्थं देवतावाहनं कृत्वा अधिवासने उपविष्टमित्यर्थः । आरामा वाटिकाः तत्र आलया गृहाः देवस्थानानि वा तामसादिभेदा उक्ता इति अन्येषां तदादित्वम् ॥ ३४ ॥

---

चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् ।
घ्नन्तं ततः पशून् मेध्यान् परीतं यदुपुङ्गवैः ॥ ३५ ॥
अव्यक्तलिङ्गं प्रकृतिष्वन्तःपुरगृहादिषु ।
क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥ ३६ ॥
अथोवाच हृषीकेशं नारदः प्रहसन्निव ।
योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥ ३७ ॥
विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् ।
योगेश्वरात्मन्निर्भाता भवत्पादनिषेवया ॥ ३८ ॥
अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान् ।
पर्यटामि तवोद्गायँल्लीलां भुवनपावनीम् ॥ ३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हास्यकथयेति निशीथसमयः धर्ममर्थकामाविति दिनरात्री ॥ २९ ॥

ध्यायन्तमिति ब्राह्ममुहूर्तः ॥ ३०—३१ ॥

विधिना उपयापनं प्रापणं विवाहमित्यर्थः । कल्पयन्तं कारयन्तं विभूतिभिर्बहुसम्भारैः । वार्षिकोत्सवसमाप्तौ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तद्गृहप्रापणं उत्सवारम्भे उपानयनं तद्गृहात् पुनरानयनं तैर्महोत्सवान् कल्पयन्तम् ॥ ३२ ॥

योगेश्वरस्य कृष्णस्य येषाम् अपत्यानां महोत्सवान् वीक्ष्य लोकाः विस्मयं प्रापुः ॥ ३३ ॥

क्वचिद्देवान् यजन्तमिति चैत्रादौ चातुर्मासे वा पुण्यकाले क्वचिद्युगाद्यादौ पूर्त्तयन्तं पूर्त्ततया सम्पादयन्तम ॥ ३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काले तत्तद्विवाहसमये पुत्राणां तत्तत्सदृशैर्दारैः दुहितॄणाञ्च तत्तत्सदृशैर्वरैः विधिना उपयापनं प्रापणं विवाहं तत्तद्विभूतिभिर्विभवैः कल्पयन्तं कारयन्तम् ॥ ३२ ॥

प्रस्थापनानि भार्यानयनार्थं पुत्राणां तत्तद्भर्तृगृहे भर्तृसहितानां दुहितॄणाञ्च स्वगृहात् उपानयनं दुहितॄणां सभार्याणां पुत्राणाञ्च स्वगृहं प्रति तैः अपत्यानां पुत्राणां दुहितॄणाञ्च महोत्सवान् कल्पयन्तम् अपश्यत् प्रसङ्गात् लोकविस्मयमाह—योगेश्वरेशस्य येषामपत्यानां महोत्सवान् वीक्ष्य लोकाः विसिस्मिरे विस्मयं प्रापुः ॥ ३३ ॥

कूपारामादिभिः क्रियमाणैः धर्मं पूर्तयन्तं पूरयन्तम ॥ ३४—३५ ॥

---

भाषा टीका ।

कहुं धर्म का आचरण करते हुए और कहुं अर्थ काम का सेवन करते हुए कहुं माया से परे अद्वितीय व्यापक निजस्वरूप का ध्यान करते बैठे हुए श्रीकृष्ण को देखा ॥ २९ ॥

कहुं पूजा की सामग्री से और वस्त्र आदि से तथा भोजन से गुरुन की सेवा करते हुए और कहुं, किसी के साथ विरोध करने, को प्रारंभ करते हुए तथा किसी के साथ मेल करते हुए श्रीकृष्ण को देखे ॥ ३० ॥

कहुं बलदेवजी के साथ सत्पुरुषों के मङ्गल का विचार करते हुए को देखे ॥ ३१ ॥

और कहुं समय२ पर पुत्रों को उनके सदृश स्त्रीयों के साथ विधि से विवाह करते हुव और पुत्रीयों को उनके सदृश वरों के साथ विवाह करते हुए और उनको अनेक प्रकार के वैभव से संपन्न करते हुए श्रीकृष्ण को देखे ॥ ३२ ॥

किसी उत्सव की प्राप्ति में दुहिता और जामाता आदि का निजगृह से विदा करना और पुनरपि किसी उत्सव के प्रारम्भ में उनको उनके गृहसे बुलाना इत्यादि अनेक प्रकार से महोत्सव करते हुए श्रीकृष्ण को देखे ब्रह्म शिवादिकन के भी ईश्वर श्रीकृष्ण के जिन पुत्रादिकन के महोत्सवन को देखकर सब लोग विस्मय करते भए ॥ ३३ ॥

किसी गृहमें इन्द्र आदिक सब देवतान को बहुत दक्षिणा वारे यज्ञों से यजन करते भए और कहुं कूप बाग मठ मन्दिर आदि के निर्माण कराने से धर्म को सम्पादन करते हुए श्रीकृष्ण को देखा ॥ ३४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अव्यक्तलिङ्गं वेषान्तरेणच्छन्नम् ॥ ३६—३७ ॥

हे योगेश्वर ! आत्मन् आत्मनि मम मनसि तव पादसेवानिर्भाताः प्रतीतास्तव योगमायाः केवलं विदाम विद्मः न तु त्वत्परमार्थमिति भावः ॥ ३८ ॥

श्रीभगवानुवाच ।

ब्रह्मन् धर्मस्य वक्ताऽहं कर्ता तदनुमोदिता ।
तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वम्मांनुष्यनाट्येन मुह्यस्यतो मां प्रस्थापयेत्याह—अनुजानीहीति ॥ ३९ ॥

तत्तस्माल्लोकं शिक्षयन्निमं धर्ममाश्रितो नतु तत्त्वतः हे पुत्र ! माखिदः मोहं मा प्राप्नुहीति ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

सैन्धवं सिन्धुदेशोद्भवं द्रुतगतित्वाय ततस्तत्र मेध्यानिति यथार्थमिति बोधयति यदुपुङ्गवैः सात्यक्यादिभिः ॥ ३५ ॥

प्रकृतिषु अमात्येषु निजान्तःपुरादिषु चाव्यक्तलिङ्गम् आकारान्तरेणाच्छन्नं यतो योगेशं सर्वज्ञमपीत्युभयत्राप्युपोद्बलकं लीलेच्छया कस्याश्चिच्छक्तेः प्रकटनात् कस्याश्चित्तिरोधानाच्च प्रकृतीनामन्तःपुरस्थादीनाञ्च भावो ऽभिप्रायः तस्य बुभुत्सया एवमन्यत्रापि दृष्टं किन्तु विस्तारशङ्कया न सर्वमुक्तमिति यद्वा श्रीनारद एव मुग्धस्तदन्वेषणाविष्ट इति ज्ञेयम् ॥ ३६ ॥

उवाच तस्मिन्नेवान्ये गेहे हृषीकेशमिति यच्च तेन बृहदैश्वर्येण सङ्कोचाद्यक्रमत्र नोक्तं तदपि स्वयं ज्ञातमिति व्यक्तीभावित्वादुचितपदन्यासः इवेति सङ्कोचात् प्रहासस्य सम्यक्त्वमुद्रामपि बोधयति प्रहासे हेतुः मानुषीं रतिमीयुषः मनुष्यक्रीडाविष्टस्यैव योगमायोदयं तदानुकूल्येनैवाचिन्त्यशक्त्याविर्भावं ; तत्राप्याच्छन्नवेषत्वादिकं वीक्ष्येति ॥ ३७ ॥

विदामेत्यादौ ब्रह्मन्निति वक्ष्यमाणश्रीभगवत्प्रतिवचनानुसारेणेदं गम्यते तदेवं श्रीनारदः सर्वां महाविनोदमयीं लीलां दृष्ट्वा महासुखमेव लब्धवान् किन्तु तत्तद्देवताद्युपासनादिमयधर्माचरणं दृष्ट्वा खेदः तन्तु सङ्कोचेन साक्षादप्रकटयन् भङ्ग्या प्रकटयति—विदामेति द्वाभ्याम् । ते तव योगमायाः स्वरूपभूताचिन्त्यशक्तिवृत्तिरेता विदाम किमर्थं कां प्रकटयसीति वेत्तुं प्रार्थयामहे कीदृशीरपि योगिनां नानाशक्तिधारिणां दुर्दर्शा अपि तथा भवत्पादनिषेवया ये योगेश्वरास्तेषामेवात्मनि मनसि निर्भाताः स्वयम्प्रकाशमाना अपि यद्वा, हे योगेश्वर ! स्वरूपभूतत्वात् आत्मनि त्वय्येव निर्भाताः प्रकाशमाना अपि भवत्पादनिषेवया विदाम ॥ ३८ ॥

तर्ह्यत्रैव स्थित्वा क्रमेण जानीथेत्याशङ्क्याह—अन्विति । तवान्योपासनां द्रष्टुं न शक्नुम इति भावः तत्र च तद्यशोमाहात्म्योक्तिस्तदन्यत्वायोग्यताख्यापनार्थमेव तथा हे देव ! सर्वाराध्येति च आप्लुतान् व्याप्तान् आप्लुतशब्देन यशसः सर्वतीर्थमयत्वं ध्वन्यते ॥ ३९ ॥

हृषीकेशत्वेन तदभिप्रायं विज्ञाय प्रतिवक्ति—ब्रह्मन्निति । यस्माद्धर्मस्य वक्ता तत्तस्मात्कर्त्ताऽनुमोदिता च परैः क्रियमाणस्य प्रीत्याऽभिनन्दकः अन्यथा न कश्चिन्मन्येतेति भावः । अत एव तद्धर्मे लोकं प्रति शिक्षयन् एवं वचसा कर्मणा भावेन चात्मनो धर्मप्रवर्त्तकत्वमुक्तं हे ब्रह्मन्निति वेदमयत्वात्त्वं तद्वेत्स्येवेति वेदमार्गरक्षणेन त्वादृशामेव सुखार्थमिति भावः । आश्रितः अनुतिष्ठन्नस्मि तथापि लीलाकीर्त्तनादिना तद्भक्तिमात्रप्रवर्त्तनेच्छोः तस्य खेदशान्तिमदृष्ट्वा तदनभिमतं भावगौरवं परित्यज्य तदभिमतभावनानुग्रहेण सलालनं सम्बोधयति पुत्रेति ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चरन्तमिति । सैन्धवं सिन्धुदेशोद्भवं हयमश्वमारुह्य मृगयां चरन्तं मेध्यान् यागार्हान् पशून् विशसन्तं कतिपययदुश्रेष्ठैः परिवृतम् ॥ ३५ ॥

प्रकृतिष्वमात्यादिष्वन्तःपुरचरादिषु तत्तदभिप्रायं बोद्धुमिच्छया अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वासाधारणचिह्नं यस्य तं चरन्तं ददर्श ॥ ३६ ॥

अथेति । मानुषीं गतिं चेष्टां तनुं वा ईयुषः प्राप्तवतः परिगृहीतवत इति यावत् तस्य भगवतो योगमायोदयमाश्चर्यशक्तिवैभवमवलोक्य प्रहसन्निव प्राह—अचिन्त्यविविधविचित्रशक्तावस्मिन्नेतच्चित्रम् इतीवशब्दाभिप्रायः ॥ ३७ ॥

उक्तिमेवाह—विदाम इति द्वाभ्याम् । हे योगेश्वर ! योगिनां दुर्दर्शामपि ते तव योगमायामाश्चर्यशक्तिं भवत्पादनिषेवाप्रभावेनात्मन्यात्मनि मनसि निर्भातां नितरां भातां विदामः जानीमः ॥ ३८ ॥

किन्तु, हि हे देव ! मामनुजानीहि आज्ञापय तव यशसा व्याप्तान् लोकान् चरामि भुवनपावनीं तव लीलामुद्गायन् परितः चरामि ॥ ३९ ॥

इत्युक्तः प्राह भगवान्—ब्रह्मन्निति । हे ब्रह्मन् वक्ता उपदेष्टा तद्धर्मोपदेशतदनुष्ठानतदनुमोदनादिकं शिक्षयन् शिक्षयितुं जनान् प्रतीति शेषः । इमं लोकं मनुष्यदेहमास्थितः परिगृहीतवानस्मि प्राकृतचेष्टामनुवर्त्ते इति भावः । अतो हे पुत्र ! मा खिदः स्वयमीश्वरोऽप्यधुना प्राकृतो बभूवेत्येवंविधं मोहं न प्राप्नुहीत्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सैन्धवं सिन्धुदेशभवं तीर्थे शास्त्रे विहितान् पात्रे प्राप्ते वा यज्ञे वा ॥ ३५ ॥

अव्यक्तलिङ्गप्रकृतिम् अस्पष्टलक्षणस्वभावं तेषां तेषां भावानां पदार्थानां बुभुत्सया स्वभावजिज्ञासया ॥ ३६ ॥

मानुषीं रतिं मनुष्यक्रीडाम् ॥ ३७ ॥

आत्मनि हृदये निर्मातस्य भवतः पादयोर्निषेवया ॥ ३८ ॥

आप्लुतानिति पाठे यशसा तीर्थेन स्नातानित्यर्थः ॥ ३९ ॥

लोकानुकारिचरितदर्शनेन नारदस्यान्यथाज्ञानं निवारयन्निति तत्त्वमुपदिशति–ब्रह्मन्निति। इमं लोकमास्थित : अस्मिन् लोके स्थितः तं धर्मकर्तारम् अनुमोदकः अनुज्ञाता ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मानुषीमपि रतिं क्रीडामीयुषः प्राप्तस्य योगमायानामचिन्त्यानां स्वरूपशक्तीनामुदयमिति ॥ ३७ ॥

कौतुकविशेषो दर्शितः तांश्च यत्किञ्चिज्जाता इति व्यञ्जयितुमात्मनो भावि सम्यक् तज्ज्ञानतां सम्भावयति। भवत्पादनिषेवया विदाम वेदाम वेत्स्याम इत्यर्थः। तन्निषेवाच ममेयमेवेति प्रार्थयते ॥ ३८ ॥

अन्विति। तत्र यज्ञादौ देवतान्तरोपासनाविना जातं तस्य खेदं निवर्त्तयति--ब्रह्मन्निति। श्रीशुकदेवोऽपि धर्म्माचरणे नानात्वे च सिद्धान्तसारमाह-इतीति। गृहीतानां श्रवणादीनामपि पवित्रताहेतून् धर्मान् एकं एकविग्रहम् ॥ ३९—४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

विदामेत्यादि। ते तव योगमायाः विदाम कीदृशीः योगिनामपि दुर्दर्शा दुर्ज्ञेयाः तत्कथं भवन्तो विदन्तीति नाशङ्कनीयं वयं भक्ता इति गूढं व्यञ्जयं तदेव प्रकटयति योगेश्वरात्मन्नित्यादि। भवत्पादनिषेवया निर्भाताः ॥ ३८—४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततोऽन्तःपुरस्थपर्वतोपवनादिषु सैन्धवं समुद्रोद्भवं हयमारुह्य मृगयायां चरन्तं न रात्रावपि गृहं प्रविष्टः गृहस्थैः तथोक्तः मृगयास्थाने तथाविधं दृष्टवानित्यर्थः। तथैव कचित् मेध्यान् पशून् श्राद्धार्थं घ्नन्तं तत्रान्येषामप्यर्थे तथा करोतीति ख्यापयितुं पतीतं यदुपुङ्गवैरित्युक्तम् ॥ ३५ ॥

गुप्तचर्यां चरन्तं दृष्टवानित्याह—अव्यक्तलिङ्गेति। अव्यक्तानि लिङ्गानि सत्वासत्वख्यापकानि यासां प्रकृतीनां स्त्रीणाम् अन्तःपुरं गृहादिकं येषां तेषामपि तस्य तस्य सतोऽसतो वा भावबुभुत्सया कश्चिच्चरन्तं गूढरीत्या यथा राज्ञां गुप्तचर्या भवति तत्रैव नारदः अयमपि तथा धर्मपर इति नारदादीन् भगवान् पुनरन्वेषतीति "ये यथा मां प्रपद्यन्ते" इति समानशीलत्वात्तत्र भगवत्साक्षात्कारो जातः ॥ ३६ ॥

ततो निकटे मिलितः पलायनेऽप्यशक्तः लज्जितस्सन् किञ्चिद्भगवन्तमुवाचेत्याह—अथोवाचेति। हृषीकेशेत्यनेन स्वापराधो निवारितः भगवतैव तथा प्रेरित इति आदावन्योन्यदर्शनेन प्रहसनं ततो लज्जया विषादादिवेति एतावद्दर्शनेन नारदस्य किं मौढ्यमासीदाहोस्विद्भगवदाविर्भूतैश्वर्यपरिज्ञानेन तथात्वम् अथवा मायैषेति मायापक्षे सर्वथा प्राकृतबुद्धिः। प्रथमपक्षे तु नारदस्य सर्वथा प्राकृतत्वं मध्यमे तु उभयोस्तमत्वमिति त्रयोपि बुद्धिविशेषाः नारदबुद्धौ न स्फुरिताः किन्तु योगगतिरेषेति स्वस्य भगवतश्च तुल्यतया परिज्ञानं मध्यमभावश्च स्फुरित इति ज्ञापयन्नाह—योगमायोदयं वीक्ष्येति। योगमाया योगस्याधिदैविकी देवता साधनरूपा वा भगवच्छक्तिस्तथेति ॥ ३७ ॥

तावन्मात्रं ज्ञातं विनिश्चित्य तत्रैव प्रर्यवसितमति अधिकार्थापरिज्ञानात् नायकोत्कर्षाभावे प्रमेयभक्तिमार्गो न साधीयानिति ततो निवृत्तिं वाञ्छन्निव प्रमाणबलेनैव भक्तिमार्गमुपदेक्ष्यामीति निश्चित्य भगवन्तं प्रार्थयते—विदामेति ज्ञास्याम् ते योगमायायाः यथेच्छं प्रवर्त्तमानस्य तत्तदिच्छापूरिकाः विदाकः इदं ज्ञानं स्वस्यैवासाधारणमिति ज्ञापयितुमाह—दुर्दर्शा अपि योगिनामिति। कारणपरिज्ञानं योगिनामपि दुर्लभं कार्यस्य लौकिकपरिज्ञाने कारणजिज्ञासैव नोत्पद्यत इति तर्हि तव कथमुत्पन्नेत्याशङ्कायामाह — योगेश्वरात्मन् भवत्पादनिषेवया निर्माता इति योगेश्वराणामस्मदादीनामात्मत्वेन स्फुरितो भवानेव पादभजने हेतुरिति सम्बोधनं चरणसेवा तु योगमायापरिज्ञाने हेतुः ॥ ३८ ॥

अत एतावत्काले कृता प्रमेयबलभक्तिः एतदर्थपरिज्ञान एवोपक्षीणा जातेति एतन्मतपरित्यागेन कीर्तनमार्गेणैव स्थास्यामीति प्रार्थयते—अनुजानीहीति। देवलोकाभिप्रायादिस्थानानि ते यशसा आप्लुतान् व्याप्तानि उद्गायन् पर्यटामि भुवनपावनीः लीलाः पूर्वसिद्धा एव एतासामदृष्टानां शास्त्रे प्रसिद्ध्यभावात् एता असम्मता इत्यर्थादुक्तं भवति ॥ ३९ ॥

तत्र भगवान् विचारार्थं प्रवृत्तोऽप्यपरिज्ञानात् खिन्नो जातः मार्गमेव परित्यक्तुं वाञ्छतीति निश्चित्य प्रबोधयति ब्रह्मन् धर्मस्येति केवलकथने वेदादौ क्रियाप्रवेशाभावे लोको न मन्यते इति धर्मस्याहं कर्त्तापि यदि क्रियमाणस्य अनुमोदनं न कुर्याम् वचनाचरणादिभिः तदापि लोको न प्रवर्त्तेतेति तस्य धर्मस्यानुमोदिताप्यहमतो लोके धर्मप्रवृत्त्यर्थं तच्छिक्षयन् लोके धर्मं ग्राहयन् इमं लोकमास्थितः अयं भावः समाश्रित इत्यर्थः। इति, स्वकृतस्वनानाविधधर्मस्याभिप्रायो वर्णितः नतु त्वद्भ्रमार्थं माया प्रदर्शितेति पक्षं निवारयितुं सम्बोधनमाह—पुत्रेति। क्रीडायाः तत्त्वापरिज्ञानात् मा खिदः तत्त्वमुक्तमिति ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चरन्तमिति सैन्धवं सिन्धुदेशोद्भवम् ॥ ३५ ॥

### श्रीशुक उवाच।

इत्याचरन्तं सद्धर्मान् पावनान् गृहमेधिनाम्।
तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४१ ॥

#### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रकृतिष्वमात्यपुरेषु निजान्तःपुरादिषु च। तत्तद्भावबुभुत्सया तत्रत्यजनानामभिप्रायान् ज्ञातुम् अव्यक्तलिङ्गं वेषान्तरेणाच्छन्नं योगेशं सर्वज्ञमपीति प्रेममय्या लीलाशक्त्यैव सर्वज्ञताशक्तेराच्छादनादिति भावः ॥ ३६ ॥

प्रहसन्निवेति। सर्वज्ञत्वेपि बुभुत्सादृष्ट्या प्रहासः। इवेत्यैश्वर्यदृष्ट्या सङ्कोचात्तत्संवरणमुद्रा च। मानुषीं रतिमीयुषः स्वीयमनुष्यक्रीडाविष्टस्यापि योगमायोदयं वीक्ष्येति विस्मयो व्यञ्जितः ॥ ३७ ॥

भवतः पादनिषेवया विदाम वेदाम प्रार्थनायां लोट् साक्षादनुभवितु प्रार्थयामह इत्यर्थः। ननु, युष्माद्विधैः सर्वज्ञैः किं दुर्बोध्यं तत्राह योगिनामपि योगिभिः श्रीरुद्राद्यैरपि दुर्दर्शाः द्रष्टुमप्यशक्याः कुतोऽनुभवितुं कुतस्तरां कर्तुमिति भावः। हे योगेश्वर आत्मन् आत्मनि त्वय्येव निर्भाताः ॥ ३८ ॥

तवैता अद्भुता लीलाः दृष्ट्वा धैर्य्यं कर्तुं न शक्नोम्यतः स्वेष्टमित्र बन्धुभ्यां नानादिग्देशवर्त्तिभ्यो वक्तुं यामीत्याह—अनुजानीहीति ॥ ३९ ॥

किञ्च। त्वदेकान्तदासस्य मम त्वन्निकटस्थितावियमेव महद्दुःखं यन्मे अभ्रमण पर्य्यटनकठोरौ दुर्भगौ पादौ स्वहस्तकमलाभ्यां प्रक्षालयसीति, तत्राह—ब्रह्मन्निति। तत्तस्मात् लोकं शिक्षयन् इमं धर्मम् आस्थितः। अहं तावत् क्षत्रियो गृहस्थस्त्वां ब्राह्मणं स्वगृहमायातं यदि नार्चयामि तदा स्वाचरणेन मत्प्रचारितो धर्मः कथं तिष्ठेत्? "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायात्तेन धर्मप्रचारणार्थमेव त्वत्पादौ मयाद्य क्षालितौ न तु वस्तुतः। यदा तु मया धर्मप्रचारणलीला नारब्धा तदा केशिवधानन्तरं मदन्तिकमायातस्य तव बहुस्तुत्यादिकमश्रौषमेव न तु किमप्यणुमात्रमप्यर्हणमकरवमिति स्मृत्वा पश्येति भावः। ननु तदपीदानीं तत्कर्तृकावमेजनकर्मणि त्वपदस्पृष्टस्वपाने ममापराधो भवत्येवेत्यत आह—हे पुत्रेति। स्नेहं ज्ञापयित्वा सान्त्वयति। यथा पितरि तदङ्कनिहितपादोऽपि पुत्रस्य नापराधस्तथैव मयि तवेति बुध्यस्वेति भावः ॥ ४० ॥

#### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अव्यक्तलिङ्गम् सुगुप्तवेषम् ॥ ३६ ॥

मानुषीं गतिं चेष्टामीयुषः गार्हस्थ्यमेवम्विधं प्रवृत्तिधर्मनिष्ठैरनुष्ठेयमिति द्योतयितुं मनुष्यचेष्टामनुकुर्वत इत्यर्थः ॥ ३७ ॥

स्वस्य भगवतः कृपामात्रतां दर्शयति—विदाम इति। हे योगेश्वर! याः योगिनामपि दुर्दर्शाः द्रष्टुमशक्याः ताः योगमायाः अत्यद्भुताः शक्तीः आत्मन् आत्मनि बुद्धौ नितरां भाताः वयं विदाम विद्मः अहो ऽस्माकं भाग्यमितिभावः ॥ ३८ ॥

योगमायोदयं त्वद्भक्तेभ्यस्तत्रतत्रानुवर्णयिष्यामीत्याशयेन प्रस्थापयेति हृष्ट आह—अनुजानीहीति ॥ ३९ ॥

अखिलसङ्कोचनेनैव तमनुज्ञाप्य पूर्णकामः पञ्चयज्ञादिकं किमर्थं करोतीति संशयं मा कुरु इत्याह—ब्रह्मन्निति। लोकं प्रवृत्तिनिष्ठं शिक्षयन् धर्मं पूर्वोक्तमास्थितः अतो मा खिदः पूर्णकामस्येदृशं चेष्टितं किमभिप्रायमिति संशयं मा प्राप्नुहीति फलितार्थः ॥ ४० ॥

#### भाषाटीका।

कहुं सिन्धु देश के घोडा पर सवार होकर बडे २ वीर यदुवंशीन से युक्त होकर सिकार खेलते हुए और उस में श्राद्ध आदि कर्म के योग्य पवित्र पशुन का वध करते हुए श्रीकृष्ण को देखा ॥ ३५ ॥

और कहुं मन्त्रि आदि तथा अन्तःपुर गृह आदि में रहने वारे मनुष्यों के अभिप्राय जानने की इच्छा करके अपने रूप के छिपाय कर मन्त्रि आदि ये तथा अन्तःपुर गृह आदि वासी जनों में अप्रकट चिन्ह; होकर विचरते हुए श्रीकृष्ण को नारदजी ने देखे ॥ ३६ ॥

इस प्रकार मानुष शरीर और चेष्टा को प्राप्त भगवान् की योग माया के उदय को देखकर नारदजी अनन्तर मानो हंसते हुए श्रीकृष्ण के प्रति बोले ॥ ३७ ॥

हे योगेश्वर! माया वारे ब्रह्मादिकन को भी दुःख से नहि देखी जावें आप के चरणारविन्द की सेवा से मनमें प्रकाश भई आप की माया न हम जानते हैं ॥ ३८ ॥

हे देव भुवननको पवित्र करनेवारी आपका लीलाका ऊंचे स्वरसे गानकर, आपके यशसे व्याप्त लोकनमें जैसे मैं भ्रमण करूं तैसेहि जानेके वास्ते आज्ञा दीजिये ॥ ३९ ॥

##### श्रीभगवानुवाच।

श्रीकृष्णभगवान् नारदजी से बोले कि हे ब्रह्मन्! धर्म का उपदेश करने वारा और लोक संग्रह के वास्ते उसका आचरण करने वारा तथा धर्म के आचरण करने वानको उत्साह बढाने के वास्ते उनकी आज्ञा करने वाराभी मै हि हों इसलिये लोकको धर्म ग्रहण कराने के वास्ते वर्णाश्रम के धर्म में श्रद्धा कर के मै स्थित हों इस वास्ते हे पुत्र! हमारे धर्माचरणको देख कर तू इस मोहको प्राप्त मत हो ॥ ४० ॥

#### श्रीधरस्वामिकृतभावार्थदीपिका।

इत्येवमननुगृहीतस्तमेकमेव सन्तं ददर्शेति ॥ ४१ ॥

कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ।
मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः ॥ ४२ ॥
इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ।
सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन् ययौ ॥ ४३ ॥
एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४४ ॥
यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ ४५

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे कृष्णगार्हस्थ्यदर्शनं नाम
एकोनसप्ततितमोऽध्यायः॥ ६९॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मुहुर्मुहुर्दृष्ट्वा जातकौतुको मुनिर्विस्मितोऽभूदिति ॥४२ ॥

श्रद्धितः श्रद्धया युक्त आत्मा यस्य तेन ॥ ४३ ॥

नारददृष्टां श्रीकृष्णलीलां निगमयति-एवमिति । अखिलस्य भवायोद्भवाय गृहीताः शक्तयो नानामूर्तयो येन सः सव्रीडश्च तत्सौहृदश्च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥

अनन्यविषयाण्यसाधारणानि अपवर्गमार्गे मोक्षप्रदे ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति एवमाग्रहेण सतां धर्मान् सदाचारान् गृहमेधिनां पावनान् प्रायो गृहस्थधर्मशिक्षया तेषामेव सर्वमलशोधनान् यद्वा गृहमेधिनां ये सन्तःउत्तमा धर्मास्तान् तत्सेवनादिना सामान्येन सर्वलोकानां पावनान् एवं सर्वगेहेषु बहुधा स्थितमपि एकमेव तं ददर्श एकत्वञ्चेदं श्रीविग्रहपरमेव श्रीभगवति विग्रहविग्रहिभावस्य निषिद्धत्वात् विग्रह एव विभुत्वादेर्दर्शितत्वात् विग्रहिणस्तु विभुत्वे साध्ये श्रीनारदस्य सन्देहे नदुपगमानुपपत्तेः कृतकायव्यूहैः सौभर्य्यादिभिस्तुल्यतापत्तेश्चित्रत्वानुपपत्तेश्च अतश्च अमीलितदृक्त्वधारयादिति मम दृष्टिगोचर एव आविरात्मेति श्रीविग्रहतात्पर्य्येण यथोक्तं श्रीभीष्मेण "प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः" इति अर्कस्य दूरस्थविस्तीर्णमण्डलत्वेन नानात्वं श्रीभगवद्विग्रहस्याचिन्त्यशक्त्येति विशेषेपि दृष्टान्तोयमेकस्यैव तत्रतत्र स्फुरितत्वांशे एवं "चित्रं बतैतदेकेन वपुषा" इत्यादिचिन्तनानुरूपमेवानुभूतमिति ॥ ४१ ॥

अतः ऋषिः सर्वज्ञोपि स्वस्यापि दुरवगोचरं योगमायामहोदयं सर्वोत्कृष्टाविर्भावं दृष्ट्वा ते च जातकौतुकः सन् मुहुर्दृष्ट्वा विस्मितोऽभूदित्यर्थः ॥ ४२ ॥

अर्थेषु उत्तमपदार्थेषु कामेषु उपभोगेषु धर्मेषु यज्ञादिषु सम्यग्यथा स्यात्तथा सभाजितः श्रीकृष्णकौतुकार्थं स्वकौतुकार्थं परार्थं वा ,तेषु यत्रयत्र तस्येच्छाऽऽसीत् तत्तत्सम्पाद्य पूजित इत्यर्थः । तत्र हेतुः श्रद्धितात्मनेति एवं कतिचिद्दिनानि विलम्बोपि बोधितः ॥ ४३ ॥

एवं श्रीनारददृष्टां लीलां निगमयंस्तासाम् क्रमिभावं दर्शयति-एवं मनुष्यपदवीं तल्लीलामनुवर्तमानो यो नारायणः "नारायणस्त्वं नहि सर्वदेहिनाम्"इत्याद्युक्तलक्षणः इतरसर्वनारायणानां स्वयमङ्गी तत एव मुख्यो ,महान् नारायणः स्वयं भगवान् कृष्णः सम्प्रति चाखिलानां भवाय स्वस्मिन् आकृष्टतत्तन्निजांशः सः षोडशसहस्रसङ्ख्यानां वराङ्गनानां सव्रीडो यः सौहृदविशेषः तत्पूर्वकनिरीक्षणहासाभ्यां जुष्टः प्रीतिमवापेति ॥ ४४ ॥

एतत्प्रसङ्गेन सकलानामपि श्रीकृष्णलीलानां गानादिफलमुत्तरोत्तरक्रमेण सर्केमुत्यमाह—विश्वविलयादिहेतुरपि हरिरिह परमपूर्णावतारे यानि कर्माणि चकार कीदृशानि अनन्यविषयाणि स्वैकतात्पर्य्यकाणि स्वस्वरूपैकपर्य्यवसानानि यद्वा अनन्या भक्ता एव विषया उद्देश्या, येषां तानि ननु विश्वविलयादिवदन्यविषयाण्यपि भगवति "कृष्णस्तु भगवान् स्वयम्"इति प्रसिद्धपूर्णभगवत्त्वे तस्य ,दौर्लभ्यमाह-अपवर्गो मोक्षमार्गः प्राप्त्युपायो यस्य सः संसारक्लेशध्वंसे सत्येव निर्विघ्नभक्तिसिद्ध्या प्राप्यत्वात् -

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते, पराम्" ॥ इति

श्रीगीताभ्यः यद्वा अपवर्गो

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मार्गो यस्य तस्मिन् यद्वा अपवर्गा अपगतवर्गाः उपेक्षितचतुर्वर्गा भक्तास्तैरपि मृग्यत इति तस्मिन् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पूर्वं बदरिकाश्रमे तवाग्रे स्वस्य नारायणत्वात् ॥ ४५ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कदाचिदपि तस्य मोहसम्भावनामपि निवर्त्तयितुं भगवता प्रदर्शितं मायोत्म्यं ददर्श विस्मितश्च बभूव मुनिरित्याह-इतीति द्वाभ्याम्। गृहमेधिनामाविद्यान् विहितान् धर्मानेवम् आचरन्तं तत्रैव पुनः सर्वदेहेषु एकरूपेणात्मतया सन्तं वर्त्तमानं ददर्श ॥ ४१ ॥

कृष्णस्येति। अनन्तवीर्यस्य अपरिच्छिन्नस्य कल्याणगुणस्य कृष्णस्याश्चर्यशक्तेर्माहात्म्यं येगमम् उत्सुकस्सन् मुहुर्मुहुर्दृष्ट्वा ऋषिवीरको विस्मितो बभूव ॥ ४२ ॥

इतीति। अर्थादिषु श्रद्धितः लोकशिक्षार्थं सञ्जातश्रद्धः आत्मा मनो यस्य तेन कृष्णेन समाजितो बहुमतः प्रीतश्च तं कृष्णमेवानुस्मरन् ययौ ॥ ४३ ॥

नारदाय दर्शितं योगमायोदयं निगमयति-एवमिति। स्वयं नारायणस्सन् अखिलानां भवायाभ्युदयाय गृहीता उपात्ता शक्तिः दिव्यतनुर्येन सः मनुष्यचेष्टामनुवर्त्तमानः अङ्ग हे राजन्! सव्रीडश्च तत्सौहृदश्च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥

उक्तविधभगवच्चेष्टितगानादिफलमाह—यानीति। विश्वस्य विलयः प्रलयः उद्भवः उत्पत्तिः स्थितिरासां हेतुर्हरिर्यानि देहेषु अवतारेषु इह लोके वा अनन्यसाधारणानि कर्माणि चकार तानि अङ्ग हे राजन्! यः पुमान् गायति तस्यापवर्गमार्गे मोक्षप्रापके "अमृतस्यैषसेतुः" इति श्रुतेः। मार्गशब्दः प्रापकपरः भगवति भक्तिर्भवेत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपसंहरति-इतीति। इतिशब्द आदिवचनः ॥ ४१-४२ ॥

इत्यर्थधर्मकामेषु अवहितात्मना कृष्णेन ॥ ४३-४४ ॥

साक्षान्मोक्षहेतुत्वात् भगवच्चरितमिदं बुभुक्षुभिरप्यसंनीयमाश्वसनीयं ननु विरक्तस्यवदुपेक्षणीयमिति भावेनाह—यानीति। अङ्ग विष्णुरात! विश्वविलयोद्भववृत्तिषु हेतुर्हरिः यानि अनन्यविषयाणि कर्माणि चकार यस्तु तानि गायति शृणोति अनुजानाति वा तस्य स पुंसोऽपवर्गमार्गे भगवति भक्तिर्भवति हि यस्मात्तस्मादवश्यं मुमुक्षुणा मेव्यानीति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

( श्रीविजयध्वजतीर्थरीत्या सप्तसप्ततितमोऽध्यायः ॥ ७७॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अर्थेषु उत्तमपदार्थेषु धर्मेषु यज्ञादिषु कामेषु उपभोगेषु सम्यक् यथा स्यात्तथा समाजितः श्रीकृष्णकौतुकार्थं स्वकौतुकार्थं परार्थं वा तेषु यत्र यत्र तस्येच्छाऽऽसीत् तत्तत् सम्पाद्य पूजित। इत्यर्थः। तत्र हेतुः अवहितात्मनेति ॥ ४३ ॥

एवं कतिचिद्दिनानि विलम्बोऽपि बोधितः अपवर्ग एव मार्गो यस्य तस्मिन् "ब्रह्मभूतः प्रसन्नात्मा" इत्यादि ॥ ४४-४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इत्याचरन्तमित्यादि। तमेव श्रीकृष्णमेव सर्वगेहेषु सन्तम् अथ च एकं ददर्श ननु पृथगिति ज्ञातवान् एतेन श्रीकृष्णविग्रहस्य व्यापकत्वमुक्तं भवति सन्तमिति वर्त्तमानकालनिर्देशः ॥ ४१ ॥

योगमाया विदाम इति यत्पूर्वमुक्तं तदहङ्कारशमनं वर्णयन्नाह--कृष्णस्यानन्तवीर्यस्येत्यादि। योगमायामहोदयं वीक्ष्य जातकौतुकस्सन् विस्मितो ननु तत्त्वं वेद ॥ ४२-४३ ॥

एवमित्यादि। मनुष्यपदवीं मनुष्यवर्त्म मनुष्यलीलामित्यर्थः। नारायणः श्रीकृष्णः नारो नयः "नृ नये धातु रूपं तस्यायनं यस्मात् नारायण इति नामत्रयाणामेव प्रसिद्धं शेषशायिनो नारायणस्य भारतवर्षदेवस्य च स्वयं भगवतः श्रीकृष्णस्य च कृष्णाष्टकं पठितवान् आगमेषु कृष्णायनमः नारायणायनमः वासुदेवायनमः इत्यादि तेनायं नारायणनामैव न त्वब्धिशयनशायी यमकृराय दर्शयामास गृहीता शक्तिर्लीलाख्या नित्य शक्तिर्येन ॥ ४४-४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तस्य रूपद्वर्शनानन्तरमध्यवसायश्च श्लोकद्वयेनाह—इत्याचरन्तमिति । सतां त्रिविधान् धर्मान् गृहमेधिनां पावनान् पवित्रकरान् एवञ्चैत्कश्चिदाचरति भगवानाचचारेति तदा पवित्री भवतीति अतो ध्यानमूर्त्तिं तमेव सर्वगेहेषु सन्तं ददर्श ॥ ४१ ॥

ततो यज्जातं तदाह—कृष्णस्येति । अनन्तानि वीर्याणि यस्येति लीलयैवं स्त्रीषु स्थितिः नतु वस्तुतः यतोऽयं सर्वशक्तिः तत्रापि योगमायायाः महानुदयोऽयं न कदाप्येवं दृष्टः अतो धर्मधर्मिणोरलौकिको भावो दृष्ट इति विस्मितः पुनर्दर्शने जातकौतुकश्च जातः ॥ ४२ ॥

ततः सर्वदर्शनानन्तरमर्थकामधर्मेषु श्रद्धितात्मना भगवता सम्यक् सभाजितो ब्राह्मणबुद्ध्या ऋषिबुद्ध्या च यथेष्टं भोजनादिना सन्तुष्टः तमेव भगवन्तम् अनुस्मरन् ययौ नतु प्रमाणबलमाश्रित्य ॥ ४३ ॥

एवं नारददृष्टां भगवल्लीलामुपपाद्योपसंहरति—एवं मनुष्यपदवीमिति । तद्धर्माणाम् अनाचरणे तत्तदनुसर्पणं न भवतीति मनुष्यपदवीमनुवर्त्तमानः षोडशसहस्रवराङ्गनानां सव्रीडादिभिर्जुष्टो परमनुष्यपदव्यामप्यागतः मूलरूप एवेति ज्ञापयितुमाह—नारायण इति । तस्यैवङ्करणे किं प्रयोजनमित्याशङ्क्याह—अखिलभवाय गृहीतशक्तिरिति । सर्वेषामुद्भवार्थं सात्त्विक्यः शक्तयः सर्वाः सङ्गृहीताः तत्र मनुष्येषु धर्मात् प्रवृत्तौ सर्वेषामुद्भवो न भवतीति तथाकरणम् अक्रूरप्रतारणाय सम्बोधनम् अष्टमहिषीणां न विवाद इति नरकासुरपरिगृहीतानामेव षोडशसहस्रवराङ्गनानामिति वरशब्देन तद्दास्यो व्यावर्त्तिताः अन्या वा गोप्यः सङ्गृहीताः व्रीडापूर्वकोऽयं सौहृदनिरीक्षणविशेषः तत्पूर्वको हासः तेन जुष्ट इति त्रिविधो भावो निरूपितः तामससात्त्विकादिभेदेन ॥ ४४ ॥

एवं रमणमुपसंहृत्य लौकिकीयां लीला धर्मार्थिभिर्न श्रोतव्येति शङ्कां वारयितुं फलश्रुतिमाह—यानीति । सर्वविधकर्मकरणे भगवतो हेतुमाह—विश्वस्य विलयः उद्भवः उत्पत्तिः वृत्तिः स्थितिः तेषां हेतुः अत एवानन्यविषयाणि कर्माणि चकार न ह्यन्यो जगदुत्पत्त्यादिहेतुर्भवति लीलायां च नान्यं प्रवेशयति किन्तु स्वयमेव तत्रतत्राविष्टः तथा करोति अतो नान्यो विषयः विशेषलीलायाः प्रयोजनं हरिरिति अतो य एतां लीलां गायति स्वत एवानन्देन कीर्त्तयति वा अन्यैर्गीयमानां शृणोति असंनिहितः वा कालान्तरे कथावसाने वा अनुमोदते श्रोतृवक्तृकथाः सः भक्तिं लभेत भगवति पूर्णपुरुषे भक्तेरन्यत्र विनियोगाभावादाह—अपवर्गमार्ग इति । मोक्षे नान्यो मार्गोऽस्तीत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे त्रिंशाध्यायविवरणम् ॥ २० ॥ ६९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उक्तमर्थमेकेनैव श्लोकेन सङ्क्षिप्याह—इतीति । एकम् एकवपुषम् एकेन वपुषेति पूर्व्वोक्तेः । अत्र नारदस्य तथा द्रष्टुमिच्छया भगवतश्च दर्शयितुमिच्छयैव तथा दर्शनमभूत् किन्तु द्वारकावासिनस्तु ये यत्रत्यास्ते तत्पुर एव कृष्णं पश्यन्ति न त्वन्यत्र पुरेषु कार्य्यान्तराय तत्र तत्र कदाचिद्गच्छन्तोपीति ज्ञेयम् ॥ ४१—४२ ॥

श्रद्धितः श्रद्धायुक्त आत्मा यस्य तेन ॥ ४३ ॥

ननु, परमेश्वरस्य अर्थादिश्रद्धया किमित्यत आह—एवमिति । मनुष्यवर्त्मानुसृत्या तस्य किमित्यत आह । अखिलानां भवाय मनुष्यचेष्टा हि मनुष्यैः सुखेन स्मर्य्यन्त इति तादृशलीलास्मारणया तेषां संसारं निवर्त्तयितुमित्यर्थः । तत्संसारनिवर्त्तनया तस्य किमित्यत आह—गृहीता शक्तिः कृपाख्या येन सः किञ्च शाश्वतिकया मनुष्यचेष्टया न केवलमेतावदेव प्रयोजनं किन्तु स्वरूपभूतस्वप्रेयसीभिर्मानुषीभिः लक्ष्म्यादिभ्योऽप्युत्कृष्टाभिर्मानुषाकृतेः स्वस्य वैकुण्ठनाथादीनामप्यंशिनो अनन्या भक्ता एव विषया येषां तानीति वा । शाश्वतिकं रमणमपीत्याह—रेमे इति ॥ ४४ ॥

न च कृष्णलीला केवलं संसारमोक्षार्थैव किन्तु प्रेमभक्तिप्रदा चेत्याह—यानीति । विलयश्च उद्भवश्च वृत्तिः स्थितिश्च तासां हेतुरपि कृष्णो यानि कर्माण्यनन्यविषयाणि स्वरूपान्तरासाधारणानि । अनन्या भक्ता एव विषया उद्देश्या येषां तानीति वा । अपवर्गो मोक्षो मार्गे भजनलक्षणे वर्त्मन्येव लभ्यो यस्य तस्मिन् । भगवति भक्तिः प्रेमविलक्षणा तस्य तरेत् संसारान्मोक्षस्तु भजनारम्भ एव स्यादिति ॥ ४५ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
एकोनसप्ततितमो दशमेऽजनि सङ्गतः ॥ ६९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पावनान् पशुवृत्तिदोषनिर्नाशकान् ॥ ४१—४३ ॥

गृहीताः शक्तयो नानामूर्त्तयो येन सः अखिलानां श्रोतृणां भावयितॄणां भवायोद्भवाय मनुष्याणां पदवीं चेष्टामनुवर्तमानोऽनुकुर्वाणः सव्रीडश्च निरीक्षणं हासश्च ताभ्यां जुष्टः हे अङ्ग राजन् ! रेमे ॥ ४४ ॥

भगवल्लीलागानादिफलमाह—यानीति । विश्वस्य संहारोत्पत्तिस्थितिहेतुः अनन्यविषयाणि स्वासाधारणानि कर्माणि चकार तानि अपवर्गमार्गे मुक्तिप्रदे तस्य भक्तिर्भवेत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनसप्ततितमाऽध्यायार्थप्रकाशः ॥ ६९ ॥

भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी राजा परिक्षत से बोले कि-इस प्रकार पवित्र करने वारे गृहस्थाश्रमियों के समीचीन धर्मों का आचरण करते एक श्रीकृष्ण कोहि सब गृहन में वर्त्तमान नारदजी देखते भए॥ ४१॥

इस प्रकार श्रीकृष्ण के दर्शन में उत्साह वारे नारदजी अनन्तशक्ति सम्पन्न श्रीकृष्ण की योगमाया के महान् उदय कों अनेक गृहन में वारंवार देखकर आश्चर्य युत हो गया॥ ४२॥

इस प्रकार संसार के अर्थ काम धर्मों के विषय में श्रद्धा युक्त चित्त वारे श्रीकृष्ण से सत्कार को प्राप्त होकर और उस सत्कार से प्रसन्न होकर नारदजी श्रीकृष्ण का हि स्मरण करत वहां से जाते भए॥ ४३॥

हे राजन्! इस प्रकार मनुष्य पदवी का अनुवर्त्तन करने वारे और अखिल जीवों को धर्मादिक के लाभ के अर्थ नाना प्रकार की शक्तियों का ग्रहण करने वारे श्रीमन्नारायण तथा सोरह हजार उत्तम स्त्रियों के लज्जा सहित सुहृद भाव से कटाक्ष करने और उनके हास से सेवित होकर रमण करते भए ४४॥

हे राजन्! इस कृष्णावतार में जगत्की उत्पत्ति पालन संहार करने वारे श्रीहरिने अन्य किसी से, नहि होने वारे जिन चरित्रों को किये हैं। उनका जो गान करता है अथवा जो उनका श्रवण करता है अथवा श्रवण करके जो उनकी प्रशंसा करता है उसको मोक्ष देने वारे भगवान् के विषय में भक्ति होगी॥ ४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धमें उनहत्तरके अध्यायकी भाषाटीका समाप्ता॥ ६९॥

---

श्रीमद्भागवते महापुराणे दशमस्कन्धे एकोनसप्ततितमोऽध्यायः॥ ६९॥

---

# सप्ततितमोऽध्यायः ।

—•✽•:✱:•✽•—

## श्रीशुक उवाच ।

अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् ।
गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥
वयांस्यरूरुवन् कृष्णं बोधयन्तीव वन्दिनः ।
गायत्स्वलिष्वनिद्राणि मन्दारवनवायुभिः ॥ २ ॥
मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् ।
परिरम्भणविश्लेषात्प्रियबाह्वन्तरङ्गता ॥ ३ ॥
ब्राह्मे मुहूर्त्त उत्थाय वार्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरण आत्मानं तमसःपरम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ।
दूतनारदयोः कार्ये कार्यमन्त्रविचारणम् ॥
अगन्मङ्गलचरित्रमाह्निकं जगदीशितुः ।
नारदेन कश्चित्किञ्चिद्दृष्टमाह यथाक्रमम् ॥

अथेति । इत्यर्थकामधर्मेषु कृष्णेन भक्तितात्मनेति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारे ऽथशब्दः उपवृत्तायामासन्नायां पतिभिः श्रीकृष्णैः माधव्यो माधवस्य भार्याः ॥ १ ॥

वन्दिन इव श्रीकृष्णं बोधयन्ति सन्ति वयांसि पक्षिणो ऽरूरुवन्नतिशयेनाकूजन् मन्दारवनवायुभिर्गायत्स्वलिष्वनिद्राणि निद्रारहितानि वयांसि ॥ २ ॥

वैदर्भीत्युपलक्षणं परिरम्भणविश्लेषात्तं पर्यालोच्य ॥३-४॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीनारदद्दष्टसदाचारप्रसङ्गात् श्रीभगवत आह्निकमाह—अथेत्यादिना कथा इत्यन्तेन । गृहीतकण्ठ्य इति पतिभिरङ्कशायितानामुपधानतया कल्पितेन श्रीवामभुजेन । कण्ठग्रहणात् इति महासौख्यमुक्तम् अत एव विरहेण प्रातर्भाविनाप्यातुराः विकलाः सत्यः कुक्कुटान् क्रीडाकुक्कुटविशेषान् अशपन् म्रियन्तामिति मूकीभवन्त्विति वा चुक्रुशुः तत्कूजनेन प्रातर्ज्ञानात् स्नानाद्यर्थं स्वपरित्यागेन पत्युः करणानोपपत्तेः पतिभिरिति बहुत्वं प्रकाशभेदात् ॥ १ ॥

वन्दिन इवेति तेपि प्रबोधयन्तो बहुधोच्चैरस्तुवन्नित्यर्थः । ननु, तान्येव कथमादौ प्रबुद्धानि तत्राह-गायत्स्विति । प्रीतः स्वभावेनादौ शीतवातः ततो महावृक्षाणां प्रचलनं ततः पुष्पादिस्थितानामलीनां गानं तेनानिद्राणि गतनिद्राणीत्यर्थः । एवं सङ्क्षेपेण प्रातर्वर्णनम् ॥ २ ॥

विश्लेषो विघ्नः ॥ ३ ॥

ब्राह्म इति युग्मकम् "रात्रेश्चतुर्दशो भागो मुहूर्तो ब्राह्म उच्यते" लोकशिक्षापणार्थमेव नरलीलाकौतुकार्थञ्च दध्यावित्यादिकं तत्तदर्थानुकरणलीलाख्यानं तथैव प्रसन्नकरणः प्राणायामादिना स्थिरचित्तः सन्नित्यर्थः । तमसः प्रकृतेः परं परमेश्वररूपमात्मानं दध्यौ ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १-४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवतो दिनचर्यात्मकं चेष्टितमनुवर्णयन् मागधनिरुद्धराजसन्देशहर्तृसन्निवेदितवृत्तान्तयुधिष्ठिराभिप्रायाभिज्ञ—नारदनिवेदिततद्वृत्तान्तान्यतरनिश्चिचीषाप्रयुक्तमुखबोद्देशात्मकं भगवत्प्रश्नमाह — अथेत्यादिना । अथ ननु हे राजन्! यद्वात्राथशब्दो भगवद्दिनचर्याप्रस्तावद्योतकः अथ भगवद्दिनचर्या प्रारभ्यत इत्यर्थः । उषसि प्रभातवेलायामुपवृत्तायामासन्नायां सत्यां, पतिभिः कृष्णैर्गृहीताः कण्ठाः यासां ताः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

माधव्यः श्रीकृष्णस्य स्त्रियः विरहेण भाविना आतुराः कूजतः शब्दायमानान् कुक्कुटानशपन् ॥ १ ॥

वयांसीति । वन्दिन इव कृष्णं बोधयन्ति सन्ति वयांसि पक्षिणो मन्दारवनवायुभिरनिद्रेष्वलिषु गायत्सु सत्सु अरुरुवन् पुनः पुनरकूजन् ॥ २ ॥

मुहूर्त्तमिति । प्रियस्य बाह्वोरन्तरं गता वैदर्भीत्यन्यासामप्युपलक्षणं परिरम्भविश्लेषाद्धेतोस्तं मुहूर्त्तमतिशोभनमपि नामृष्यन्त सेहे असमीचीनममन्यतेत्यर्थः ॥ ३ ॥

ब्राह्म इति । वारि शुद्धं जलमुपस्पृश्य आचम्य प्रसन्नानि करणानि इन्द्रियाणि यस्य सः तमसः प्रकृतेः परं विलक्षणमात्मानं दध्यौ ध्यातवान् स्वात्मावलोकनपरो बभूवेत्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।

राज्ञां दैनन्दिननित्यनियमप्रकारं कथयत्यस्मिन्नध्याये तत्रादौ माधवीनां ग्राम्यधर्मलौल्यातिशयं कथयति—अथेत्यादिना ॥ १ ॥

वयांसि कोकिलादीनि वन्दिनः कृष्णं बोधयन्तीवोपतस्थुरित्योद्धत्यादिवेति । मन्दारवनवायुभिः पारिजातवनवायुभिः सह ॥ २ ॥

तं मुहूर्त्तोपलक्षितकालं प्रियस्य कृष्णस्य बाह्वन्तरं वक्षःस्थलम् ॥ ३ ॥

नित्यप्रसन्नान्तःकरणः आत्मानं स्वमेव ॥ ४ ॥

---

श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

॥ १—३ ॥

साधारणलोकशिक्षार्थमेव दध्यावित्यादिकं तदर्थानुकरणलीलाख्यानं नृलोके क्रीडापरमित्यर्थः ॥ ४—४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—३ ॥

दध्यौ प्रसन्नकरण इत्यादि । प्रसन्नानि प्रसादयुक्तानि करणानि कार्य्याणि लीला यस्य आत्मानं स्वयमेव स्वं दध्यौ ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सात्त्विकानां निरोधे तु प्रथमे बलतः पुरा ।
षड्भिः सर्वनिरुद्धास्ते साधनेनोच्यतेऽधुना ॥
षड्भिरेव तथाध्यायैर्धर्मोऽत्र भगवत्कृतः ।
कारितश्च द्विरूपो हि वर्ण्यतेऽन्यनिषेधने ॥
तत्रैकोऽशताध्याये धर्मो हि भगवत्कृतः ।
निरूप्यते यतो लोका जाता हरिपराः स्वतः ॥
सर्वे धर्मा विशेषेण तत्तद्भेदेन चैव हि ।
पूर्वाध्याये निरूप्यैव ह्याह्निकं त्वत्र रूप्यते ॥
तेनैव शुद्धचित्तास्ते राजानः सात्त्विकास्तथा ।
प्रपन्नाः सर्वथा कृष्णे प्रयोजनमिदं मतम् ॥
अन्यथा ह्याह्निको धर्मो निष्प्रयोजनतां व्रजेत् ।
सभायां गमनं चैव रक्षां सूचयति क्षतात् ॥

एवं पूर्वाध्यायैर्भगवता प्रमेयबलमाश्रित्य सर्वे आत्मसात्कृता इदानीं धर्मादिसाधनैर्भगवानात्मसात्करोति तत्र प्रथमतो भगवत आह्निको नित्यो धर्मो निरूप्यते ततो धर्मपरस्य यत् कृत्यं तत्कालनिमित्तकमेवेति अरुणोदयावधि पूर्वदिनकृत्यं सर्वं निरूपयति—अथेति । अवान्तरप्रकरणभेदप्रतिपादकोऽयमथशब्दः उषस्यरुणोदये उपवृत्ताःयामारम्भपर्यन्तं "चतस्रो घटिकाः प्रातररुणोदय उच्यते" इतिधर्मार्थकामानाम् आवृत्तिः भगवत्कृता क्रियत इति ज्ञापयितुं कामपराणां धर्मासहिष्णुत्वमाह—कुक्कुटान् कूजतोऽशपन्निति । तत्र हेतुः, पतिभिः कृष्णैः गृहीतकण्ठ्यो ननु गार्हस्थ्यो भोजनवत् भोगस्यापि नियतत्वात् प्रातःकालसूचके कुक्कुटशापः कथमितिचेत् तत्राह—विरहातुरा इति । तत्र हेतुः, माधव्य इति. माधवस्य स्त्रियः माधव्य इति स्वविश्लेषमात्रेणैव लक्ष्म्याः सम्भवात् अतो विरहः सम्भावित इति प्राप्तफलानां साधने द्वेषो युक्त इति भगवत्कृतधर्मस्य च सात्त्विकनिरोधपरत्वात् सम्बद्धानामिच्छामात्रेणैव निरोधः सिद्ध इति कुक्कुटशापो युक्तः ॥ १ ॥

ननु कुक्कुटादयो वा किमिति भगवदनभिप्रेतं कुर्वन्तीत्याशङ्कायामाह—वयांस्यरूरुवन्निति । वयसामपि पक्षिणां भगवल्लावण्यामृतप्राप्तिरभीष्टेति स्वार्थमेते बोधयन्ति तथासत्यपराधो भवेदिति शङ्कां वारयितुं दृष्टान्तमाह—वन्दिन इवेति । तेन प्रबोधने अधिकृता अपि पक्षिण इति सूचितं ननु, बहिरङ्गा एते भगवदभिप्रायमज्ञात्वा कथं नित्यं बोधयन्तीत्याशङ्कायामाह—गायत्स्वलिष्विति । येऽप्यन्तरङ्गा अलयः भगवदभिप्रेतं ज्ञात्वैव गायन्ति न च स्वभावादेव वयांस्यरूरुवन्नित्याशङ्कनीयं यतः अनिद्राणि तत्रापि निद्राभावः सहेतुक इत्याह मन्दारवनवायुभिरिति । आमोदेनाकृष्टचित्तानि देवताधिष्ठानाच्च साक्षाद्भोग्यशक्तानि अत आकाङ्क्षायां विद्यमानत्वात् अनिद्राण्येव ॥ २ ॥

एतत्सर्वं स्त्रीणां न भविष्यतीत्याशङ्क्य मुख्यायाः रुक्मिण्या अप्येतदित्याह—मुहूर्त्तमिति । तं प्रसिद्धं ब्रह्मसम्बन्धि तुशब्देन अन्यथाशङ्कां व्यावर्त्तयति ननु लक्ष्म्याः अवतारः कथमेवमभूदित्याह—वैदर्भी दर्भाभावेन कर्मराहित्यमुक्तम्, अतिशोभनमपि सर्वोद्बोधकत्वात्सर्वपुरुषार्थसाधकत्वाच्च तथापि नामृष्यत् तत्र हेतुः फलानुभव इत्याह—प्रियबाह्वन्तरङ्गतेति । तादृश्याः परिरम्भणविश्लेषः अनङ्गीकारे हेतुः ॥ ३ ॥

एवं सर्वासामनभिप्रेतत्वे तद्वश्यश्चेद्भगवानपि नोत्तिष्ठेदिति तन्निराकारणार्थं भगवत उत्थानपूर्विकाः सर्वाः क्रियाः निरूपयति—ब्राह्मे मुहूर्त्त इति । उत्थानं निद्रापगमलीला शय्यातो वा ततो वार्युपस्पर्शनं भगवद्धस्तादिप्रक्षालनमात्रमिति केचित् स्नानमित्यपरे आचमनमात्रमिति सिद्धान्तः ध्यानस्यापि शुद्धयर्थमेव क्रियमाणत्वात् अन्तश्शुद्धिलीलां कृत्वैव बहिःशुद्धि-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लीला कर्त्तव्येति । यथा नद्याः स्नानेन शौचं स्नानानन्तरेण च धर्मः तथा ध्यानेपि ज्ञातव्यं ननु पूर्णो भगवान् बोभूयमानस्वरूपः परमानन्द एव अन्तःकरणाद्यभावात् कथं प्रणिधानं कृतवानित्याशङ्क्याह—माधव इति । लक्ष्मीशक्तिं स्वीकरोतीति मधुवंशेनावतीर्ण इति यथैषा लीला तथा ध्यानमपीत्यर्थः । प्रसन्नानि करणानि इन्द्रियाणि यस्येति शुद्धसत्त्वस्य सर्वत्र आविर्भावः सूचितः तत आत्मानमेव दध्यौ न तु योऽन्यां देवतामुपास्त इति आत्मातिरिक्तदेवतायाः ध्याननिषेधात् नन्वात्मनः प्रत्यक्षस्य स्फीता लोकवृत्तिघटवत् प्रकाशमानस्य किं ध्यानेनेत्याशङ्कयाह--तमसः परमिति । कालस्याप्यग्रे तमस्तिष्ठति तस्याग्रे भगवान् स एव तमोगुण इति केचित् सत्त्वगुणो बहिरावरणमेव सर्वस्यैवात्मत्वात् ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अध्याये सप्ततितमे प्रातःकृत्यकथा हरेः ।

सुधर्म्मायां दूतनारदयोः कार्य्यविचारणा ॥

इत्यर्थधर्म्मकामेषु कृष्णेन श्रद्धितात्मनेत्युक्तमतो ब्राह्ममुहूर्त्तमारभ्य कीदृशं धर्माचरणमित्यपेक्षायामाह—अथेति । उप आधिक्येन वृत्तायां जातायां सत्यां पतिभिरिति प्रकाशबाहुल्याद्बहुत्वं माधव्यो रुक्मिण्याद्याः अशपन् । रे रे कुक्कुटाः प्रियविश्लेषकप्रातःसमयप्रादुर्भावकाः ! यूयं शीघ्रमेव म्रियध्वमिति शापं ददुः ॥ १ ॥

मन्दारवनवायुभिः सुगन्धैः प्रबुद्धा गायत्सु सत्सु अलिषु तद्गानशब्देन अनिद्राणि वयांसि पक्षिणः कीदृशानि वन्दिन इव कृष्णं बोधयन्ति ॥ २ ॥

परिरम्भणस्य विश्लेषात् विश्लेषहेतुत्वात् तं ब्राह्म्यं मुहूर्तं शोभनमपि न अमृष्यत् अशोभनमेव मेने इत्यर्थः । वैदर्भीत्युपलक्षणं सर्व्वा एव ॥ ३ ॥

आत्मानं स्वं दध्यौ । यथान्यजनो ब्राह्ममुहूर्त्ते तं ध्यायति तथैव सोऽपि स्वमेव दध्यौ तमसः प्रकृतेः परम् ॥ एकमितीश्वरस्यैकस्यैवौचित्यात् । अतः स्वयंज्योतिं स्वयमेव प्रकाशमानं ननु सङ्कर्षणादयोऽपीश्वराः श्रूयन्ते, तत्राह--अनन्यं न कोऽप्यवतारोऽन्यो यस्मात्तं किञ्च सङ्कर्षणादिषु स्वांशावतारेषु पृथक् नित्यं वर्त्तमानेष्वप्यव्ययं परिपूर्णमित्यर्थः । प्रादुर्भावे तु कृपैव कारणमित्याह--स्वसंस्थया स्वस्य सम्यक् सर्वजनदृश्यतया स्थित्या निवृत्तं कल्मषमविद्या यस्मात् किञ्च ब्रह्मण आख्या सम्यक् ख्यातिः प्रकाशो यस्मात् तं यदुक्तमष्टमे "मदीयं महिमानञ्च परं ब्रह्मेति शब्दितं वेत्स्यस्यनुगृहीतं मे" इत्यादि "ब्रह्मणोहि प्रतिष्ठाहम्" इत्यादि च यद्वा "ब्रह्माख्यं ब्रह्मनामकं "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्युक्तेः सर्व्वश्रेष्ठ्यमाह अस्य विश्वस्य उद्भवः उद्भिक्तो तद्भवः संसारस्तस्य नाशहेतुभिः स्वशक्तिभिर्ज्ञानप्रदत्वभक्तिरसदत्वादिभिर्लक्षिता सर्वत्रानुभूता भावानां मर्त्यादीनां निर्वृतिः यस्मात्तं तत्र भक्तानां तद्दत्तप्रेमातिशयेन शिष्टानां तत्तल्लीलासुखपालनेन दुष्टानां तद्ध्यानान्तरमुक्तिप्राप्त्या निर्वृतिः ॥ ४-५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीकृष्णाह्निकं दूतवर्णिते जरासन्धनिरुद्धराजकार्ये श्रीनारदवर्णिते युधिष्ठिरकार्ये च कर्तव्ये प्रथमं किङ्कर्तव्यमिति उद्धवं प्रति भगवत्प्रश्नञ्चानुवर्णयति । सप्ततितमेनाध्यायेन. क्वापि धर्मं सेवमानमिति श्रीनारदेन दृष्टं लोकसङ्ग्रहार्थं भगवता कृतमाह्निकं तदधिकारीन् ग्राहयितुं विस्तरेण वर्णयति, अथेति । उषसि प्रातर्वेलायाम् उपवृत्तायामासन्नायां पतिभिः । श्रीकृष्णैः माधव्यो माधवभार्य्या विरहातुराः कृत्यकालसूचनेन पतिविरहे हेतवो यूयमाशु म्रियध्वमित्यशपन् शापं ददुः ॥ १ ॥

मन्दारवनवायुभिः हर्षं प्राप्य गायत्सु अलिषु तद्गानेन अनिद्राणि वयांसि पक्षिणः वन्दिन इव कृष्णं बोधयन्ति सन्ति अकूजन् अतिशयेनाकूजन् ॥ २ ॥

वैदर्भी रुक्मिणी सर्वैश्वर्याधिष्ठात्री अपि परिरम्भणविश्लेषाद्धेतोः शोभनमपि तं मुहूर्तं नामृष्यत् न सेहे तुशब्दादन्या न सेहिरे इति किमु वक्तव्यम् ॥ ३ ॥

उपस्पृश्याचम्य आत्मानं दध्यौ ध्यातवान् प्रकृतिवैलक्षण्यं भगवतो दर्शयति—तमसः परं प्रकृतिविलक्षणम् ॥ ४ ॥

---

### भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—शयन के अनन्तर पांच घड़ी रात्रि रहने पर अनेक मूर्ति श्रीकृष्ण से गृहीत कण्ठ वारी भगवान्की भार्य्या लोग भगवान् के विरह से भयभीत होकर उस समय में बोलने वारे कुरगान को कठोर वचन बोलती भई ॥ १ ॥

कल्पवृक्षों के शीतल मन्द सुगन्ध अनेक पवन से भ्रमर गुञ्जार करने लगे और निद्रा छांड़कर अनेक पक्षी वन्दियों के समान सूते हुए श्रीकृष्ण को बोध करावत वारंवार बोलने लगे ॥ २ ॥

श्रीकृष्ण के भुजान के मध्य में वर्त्तमान रुक्मिणी आदि सब भार्य्या स्नान पूजनादि के योग्य अति समीचीन उस मुहूर्तको भगवान् के आलिङ्गन से वियोग होने का हेतु होने से नहि सहती भई ॥ ३ ॥

श्रीकृष्ण भगवान् ब्राह्म मुहूर्त में उठकर हस्तपाद प्रक्षालन पूर्वक आचमन करके प्रसन्न मन होकर माया से परे निज शुद्ध स्वरूप का ध्यान करते भए ॥ ४ ॥

एकं स्वयञ्ज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम्।
ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम्॥ ५॥
अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी।
चकार सन्ध्योपगमादिसत्तमो हुतानलो ब्रह्म जजाप वाग्यतः॥ ६॥
उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः।
देवानृषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान्॥ ७॥
धेनूनां रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम्।
पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम्॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एकमखण्डं तत्र हेतुः अनन्यं निरुपाधिम् अत एव अव्ययं नित्यम् स्वयञ्ज्योतिश्च हेतुः नित्यनिरस्तं नित्यनिवृत्तं कल्मषमविद्या यस्मात्तत् उपलक्षणमाह—अस्येति। अस्य विश्वस्य लक्षितभावश्चासौ निर्वृतिश्च भावः सत्ता निर्वृतिरानन्दः तथाहि गुणक्षोभात्पूर्वं सत्तामात्रं यः "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतेः। स एवानन्दश्च "विज्ञानमानन्दम्" इत्यादिश्रुतेः। तं सदानन्दमित्यर्थः॥ ५॥

आप्लुतः स्नातः सन्ध्यायाः उपगम उपासनमादिर्यथा भवति तथा क्रियाकलापं चकार कायवत्त्वादुदयात्पूर्वमेव हुतानलः ब्रह्म गायत्रीं जजाप॥ ६॥

कला अंशान् देवान् ऋषीन् पितॄंश्च तर्पयित्वा॥ ७॥

गृष्टीनां प्रथमप्रसूतानाम्॥ ८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

परमेश्वरत्वमेवाह-एकमिति। अस्येत्यादिना जीवात्मतो वैलक्षण्यमुक्तम् उद्भवनाशेत्युपलक्षणम् अन्यत्तैः यद्वा आत्मानं स्वस्वरूपं दध्यौ तस्य तावच्छुद्धत्वमाह-तमसः परमिति। "तमसः परस्तात्" इति श्रुतेः। सङ्घातरूपत्वं निषेधति एकमिति "एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेः। एकत्वेपि स्वाभाविकशक्तित्वं व्यञ्जयति—स्वयञ्ज्योतिरिति। स्वयमात्मनैव ज्योतिर्ज्ञानप्रकाशो यस्य तम् "आत्मप्रकाशम्" इतिश्रुतेः। अत एव न विद्यते अन्यत् यस्य तं "नेह नानास्ति किञ्चन" इतिश्रुतेः अत एव "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इतिमन्त्रोपि अनयैव शक्त्या प्रकृतीक्षणञ्चाभ्युपगतं भाष्यकृद्भिः अतः प्राकृतविलक्षणत्वादव्ययम् अपक्षयादिशून्यम् एवं तत्स्वरूपस्य स्वतः शुद्धत्वं दर्शयित्वा तत्रान्यच्छायायाश्चाबल्यमपि निषेधति स्वसंस्थया स्वप्रभावेनैव नित्यं निरस्तं निवृत्तं कल्मषं असांनिध्यमात्रोपक्रियमाणया मायया शाबल्याभासोपि यत्र तम् "अयमात्मा अपहतपाप्मा" इतिश्रुतेः। एवं स्वरूपेण गुणेन च सर्वतो बृहत्तमत्वाद्ब्रह्मेत्याख्या यस्य तादृशम् "न तस्य कार्य्यम्" इत्यादेरेव श्रुतेः। तमेव तं कार्य्यद्वारापि लक्षयति—अस्येति। भावः स्वभावः स्वरूपशक्तिरित्यर्थः। निर्वृतिरानन्दैकस्वरूपत्वं तच्छक्तिभिस्ते लक्षिते यत्र तम् अस्येति हि दृश्यमानजाड्यादिदोषयुक्तत्वं सूचयित्वा तदुद्भवादिशक्तीनामपि सदोषत्वं दर्शितं ततो बहिरङ्गात्वञ्च ततस्तद्दोषास्पृष्टया तदुपजीव्यया चान्या स्वरूपभूता शक्तिर्बोधिता सर्वोत्तमत्वेन परमानन्दरूपं तत्स्वरूपञ्चेति। यद्वा एकमिति "स एक एवेतरथामिथ्याभयम्" इत्याद्युक्तन्यायेन ईश्वरस्यैकस्यैव युक्तत्वात् अतः स्वयञ्ज्योतिश्च स्वयमेव प्रकाशमानमित्यर्थः। ननु, सङ्कर्षणादयोपीश्वराः श्रूयन्ते तत्राह—अनन्यं न कश्चिदन्योऽन्यो भिन्नोस्ति यस्मात्तं स एव लीलया चतुर्व्यूहादिरूपेण वर्त्तते न तु ते ततो भिन्ना इत्यर्थः। तत्तत्प्रादुर्भावकत्वेप्यलं क्षयिष्णुत्वरोचरवदव्ययम् अत एव स्वीयया असाधारणरूपया संस्थया सम्यक् स्थित्या निरस्तं कल्मषं निकर्षरूपं यस्मात्तं किञ्च ब्रह्मणोपि आख्या ख्यातिः प्रकाशो यस्मात्तं तदुक्तमष्टमे श्रीमत्स्यदेवेन—

"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि"॥ इति

श्रीविष्णुपुराणे च "शुभाश्रयः स चित्तस्य सर्वगस्य तथाऽऽत्मनः" इति. श्रीभगवद्गीतासु च "ब्रह्मणो हि प्रतिष्ठाहम् इति अस्येत्यादि पूर्ववत्॥ ५॥

अथानन्तरमेव अम्भसि तीर्थ[illegible] प्रातः स्नाने तीर्थस्यापेक्षत्वात् इति प्रत्यन्तःपुरबहिर्भागगमनं बोध्यते सत्तम इति, सतां धर्मप्रदर्शनार्थमिति भावः। अन्यत्तैः। यद्वा सन्ध्योपगमादिषु कर्मसु सत्तमः परमकुशलः॥ ६॥

क्रियाकलापमेवाह—पक्षान्तरे चादिशब्दार्थमेवाभिव्यञ्जयति-उपस्थायेति त्रिकेण। कला विभूतीः श्रीत्रिविक्रमादिप्रतिमाश्च वृद्धान् कुलवृद्धान् विप्रांश्च आत्मा धृतिर्बुद्धिर्वा तद्वान् तत्तद्विधौ सावधानस्सन्नित्यर्थः॥ ७॥

साध्वीनां गुणरूपलक्षणादिभिरुत्तमानां तेनैवादौ स्वर्णकुण्डलादिभिः अलङ्कृतेभ्यः प्रतिगृहं बद्धदानानु एकविंशतिकोटयः सप्तलक्षाणि सप्तपञ्चाशत्सहस्राणि वा सप्तत्यधिकानि ( २१०७५७०७२ ) दिनेदिने इत्यत्रैव वीप्सया नित्यकर्मत्वे लब्धे बद्धमित्यत्र पुनर्वीप्सातिशयार्थेव प्रति-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

द्विनमेव बद्धस्य बहुत्वबोधनाय वा बद्धमित्यत्र दकारसंयोगितया बद्धमित्येव श्रौतेषु प्रसिद्धम् ॥ ८—९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

एकं समाभ्यधिकरहितम् अद्वयं जात्यादिकल्पनारहितं स्वसंस्था स्वगतशक्तिभिर्लक्षितभाववृत्तिं दृष्ट्या दृग्भिरुपलक्षितम् ॥ ५---१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कोसौ तमसः पर आत्मा? तं विशिनष्टि—एकमिति। एकं समाभ्यधिकरहितं जीवस्तु विपरीत इति भावः। स्वयञ्ज्योतिः स्वयं प्रकाशस्वरूपम् अनन्यं न विद्यतेऽन्यद्शरीरभूतं वस्तु यस्य तम् अव्ययं जात्यादिकल्पनारहितं स्वस्मिन् संस्था सम्यगविकृतत्वेन अवस्थितिस्तया नित्यं निरस्तं प्रतिक्षिप्तं कल्मषं पुण्यपापात्मकं हेयं यस्य तं ब्रह्मेत्याख्या बृहति बृंहयतीति निरुक्तिर्यस्य तम् अस्य जगतः उत्पत्तिनाशहेतुभिः स्वशक्तिभिः उद्भवनाशग्रहणं स्थितेरित्युपलक्षणं शक्तिरपृथक्सिद्धविशेषणं ततश्चोत्पत्तिकारणत्वस्थितिकारत्वलयकारणत्वरूपैर्धर्मैरित्यर्थः। भावः सत्ता सा च मानसं बन्धार्हस्वरूपा भावशब्दश्चात्र धर्मिपरः लक्षितो भावः सत्ताविशिष्टं स्वरूपं निर्वृतिरानन्दात्मकं यस्य तथाभूतम् अत्रास्येत्यादिना। भावेत्यन्तेन प्रकृतेः परस्यात्मनो लक्षणमभिप्रेतं जगज्जन्मादिकारणत्वं हि ब्रह्मणो लक्षणं निर्वृतिपदेनानन्दवाचिना "सत्यं ज्ञानमनन्तम्" "विज्ञानमानन्दम्" इति स्वरूपशोधकवाक्यार्थः स्मारितः अत्र कोसौ प्रकृतेः पर आत्मेत्यतो ब्रह्माख्यमित्युक्तं ब्रह्मशब्दस्यानेकार्थमाधारण्यात्किं तत् ब्रह्मेत्यपेक्षायामस्येत्यादिना जगत्कारणत्वं लक्षितमिति कारणत्वं चिदचिद्विशिष्टगतमिति विशेष्यभूतब्रह्मस्वरूपजिज्ञासायां निर्वृतिपदं प्रयुक्तं जगत्कारणत्वस्य हिरण्यगर्भादेरिव सुकृतविशेषप्रयुक्तत्वशङ्काव्युदासाय स्वसंस्थया नित्य निरस्तकल्मषमित्युक्तम् कारणत्वप्रयुक्तविकाराश्रयत्वशङ्काव्युदासायाऽव्ययमित्यधिष्ठात्रन्तरशङ्काव्युदासायैकमिति कारणत्वप्रयुक्तकार्यानन्यत्वं चैकमनन्यमित्युक्तमिति द्रष्टव्यं सच्छब्दापरपर्यायभावशब्देनोक्तार्थे वेदान्तानां प्रमापकत्वं सूचितम् ॥ ५ ॥

अथेति। अथ सत्तमो भगवानम्भस्याप्लुतः स्नातः वाससी परिधाय क्रियाकलापं चकारेति सम्बन्धः। कोसौ क्रियाकलापः? इत्यतस्तं प्रपञ्चयति—सन्ध्येत्यादिना। सन्ध्योपगमादि क्रियाकलापमित्यर्थः। सन्ध्योपगमः सन्ध्योपासनम् आदिशब्दसङ्गृहीतानाह—हुतानल इत्यादिना। हुतः अनलः आहवनीयो येन सः वाग्यतः वाचं यच्छतीति तथा मौनीभूत्वेत्यर्थः। ब्रह्म गायत्रीम् ॥६॥

उपस्थायेत्यादिश्लोकत्रयमेकान्वयम् आत्मनः स्वस्य कलाः अंशभूतान् देवादींस्तर्पयित्वा वृद्धान् कुलवृद्धान् विप्रांश्चात्मवान् अर्चायुक्तस्सन्नभ्यर्च्य दिनेदिने अलङ्कृतेभ्यः विप्रेभ्यः क्षौमकृष्णाजिनतिलैः सह धेनूनां पद्मं पद्मं ददौ पद्मं पद्ममिति महासङ्ख्यायुक्तसङ्ख्याभिधानं कथम्भूतानां रुक्म स्वर्णालङ्कारः शृङ्गयोः यासां मौक्तिकानां स्रजो यासां बहुक्षीराणां गृष्टीनां प्रथमप्रसूतानां शोभनो वत्सो यासां शोभनं वासो यासां तासां रौप्यं रजतालङ्कारः खुराग्रेषु यासां तासाम् ॥ ७-९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इतरवस्तुभ्य आत्मानं व्यावर्तयति—एकमिति। एकं मुख्यं स्वरूपभेदशून्यं वा आदित्यादिज्योतिभ्यः परं विलक्षणं "परं ज्योतिरूपं सम्पद्य" इति श्रुतिः। अनन्यम् अन्याधीनस्वभावरहितम् अन्यः स्वतन्त्रो यस्मात्स तथा तं वा अद्वयम् असदृशं स्वसंस्थया स्वव्यवस्थया स्वमहिम्ना स्वाकारेण वा नित्यनिरस्तदोषं किं तस्य नामधेयमत्राह—ब्रह्माख्यमिति। स्वलक्षणैः स्वरूपलक्षणैः व्यावर्तकधर्मैः अस्य जगतः उद्भवनादिहेतुभिः सृष्ट्यादिहेतुभिर्लक्षिता भावनिर्वृतिः स्वरूपानन्दो यस्य स तथा तं "यदेष आकाश आनन्दो न स्यात्" इतिश्रुतेः ॥ ५ ॥

सन्ध्योपगमादि सन्ध्योपासनादिकं क्रियाकलापं चकार ब्रह्म जजाप नियतस्वाध्यायाध्ययनं कृतवान् गायत्रीं वा जप्तवान् ॥ ६ ॥

स आत्मनः कलाः स्वसन्निधानविशेषोपेतान् आत्मवान् स्वाधीनप्रयत्नः स्वाधीनमना वा ॥ ७ ॥

साध्वीनां पादबन्धनादिक्रियानपेक्षाणां गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तदेव स्पष्टयति—एकमित्यादि। एकं ध्येयध्यातृभावेपि एकं स्वयंज्योतिः स्वयमेव आनन्दमयमेव ज्योतिः प्रकाशो यस्य इत्यादि सर्वमात्मानमित्युक्तस्य विशेषणं पुनः कीदृशं ब्रह्माख्यं ब्रह्मेति आख्यैव यस्य नतु निर्विशेषं ब्रह्मेत्यपि तं केचिदामनन्तीति भावः। अस्य विश्वस्योद्भवनादिहेतुभिर्ब्रह्मादिभिः स्वशक्तिभिर्लक्षिता भावस्य विलासादिभावस्य निर्वृतिर्यस्य तेषु न्यस्तभारतया स्वविलासत्वात् स्वसंस्थया स्वमर्य्यादया नित्यः शाश्वतः निरस्तकल्मषः क्षीणक्लेशश्च यस्मात् स च स च तम् आत्मशब्दोऽत्र विग्रहपरः स्वमेव विग्रहं दध्यौ इति भावः स्वविग्रहः स्वस्यापि ध्येयइत्यर्थः उक्तञ्च विस्मापनं स्वस्य चेत्यादि ॥ ५ ॥

अथेत्यादि। ब्राह्म्यमुहूर्त्तोत्थानादात्मध्यानानन्तरम् अम्भसि कासारादौ नतूद्धृतेनाम्भसा आप्लुतः। ब्रह्म निजनाम जजाप मनुष्यपदवीमनुवर्त्तमान इत्यस्यायं प्रपञ्चः एवं सन्ध्योपगमादावपि सच्चिदानन्दघनविग्रहस्य तस्यान्यविग्रहवन्मेध्यादिकर्म नास्त्येवेति दर्शयितुमाह्निकानुवर्णनं तत्र च, ब्राह्मयमुहूर्त्तोत्थानमारभ्य स्नानसन्ध्यादिवर्णनपर्य्यन्तं तस्यानुक्तत्वात् ॥ ६—२६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सर्वोपासकानामात्मोपासकत्वमाशङ्क्य केवलमात्मोपासकत्वसिद्ध्यर्थम् आत्मानं विशिनष्टि—एकमिति। तदात्मस्वरूपं षड्गुणैश्वर्ययुक्तं ब्रह्मैवेति वक्तुं सप्तविशेषणान्युच्यन्ते एकमिति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

असहायेन ऐश्वर्यमित्युक्तं स्वयञ्ज्योतिरलौकिकवीर्यम् अनन्तमिति कीर्तिः अव्ययमिति लक्ष्मीः स्वसंस्थया स्वरूपास्थित्यैव निरस्तानि कल्मषाणि यस्येति ज्ञानं ब्रह्मेत्याख्या यस्येति प्रापञ्चिकसर्ववैलक्षण्येन वैराग्यं धर्मिणामाह "जन्माद्यस्य यतः" (१-१-२) इतिन्यायेन अस्य जगतः उद्भवनाशहेतुभिः उद्भवः सत्त्वम् अभिहत्यै: तद्धेतुकत्वान्नाशस्तमः हेतूरजः एताश्च शक्तय एव तैर्लक्षिताः भावाः सात्त्विकादयोन्तःकरणस्य तेषां निर्वृतिः अपवर्गोयत्र भावैः सहितं निर्वृतश्चेति वा अनेन प्रपञ्चकर्त्ता प्रपञ्चरहितश्चेति विरुद्धसर्वधर्माश्रयत्वेन निरूपितः । अनेन वा वैराग्यं ब्रह्माख्यमिति धर्मी आत्मत्वेन सर्वत्र भेदनिराकरणार्थं प्रपञ्चभेदनिराकरणार्थं वा एकपदं प्रमाणाभावाय स्वयञ्ज्योतिश्च अनन्यत्वं भिन्नधर्मनिराकरणाय अव्ययत्वं ब्रह्मधर्माणां नित्यत्वाय साङ्ख्यादिमते अब्रह्मधर्मा एव ब्रह्मणि समागत्य गच्छन्तीति तन्निराकरणार्थमेतदवश्यं वक्तव्यं स्वरूपस्थितिश्च संसारात्मवदविद्यानिराकरणाय नित्यपदेन ज्ञानानन्तरनिवृत्तिर्निराकृता ब्रह्मपदेन सर्वश्रुतिसमन्वयः सर्वेषां बन्धमोक्षदातृत्वाय विरुद्धधर्मा ॥ ५ ॥

एवं भगवत्त्वं भावयित्वा तत्कार्यञ्च स्वनिष्ठस्सन्नपि तां निष्ठां परित्यज्य बहिर्धर्मानेव अन्तस्तथाभूतोपि भिन्नप्रक्रमेण कृतवानित्याह—अथेति । अम्भसि आप्लुत इति गोमत्यादौ अवगाह्य स्नानं नतूद्धृतजलैः अमले वाससी परिधायेति विशेषणविशेष्ययोर्दूरे समन्वयः स्नानेपि रात्रिवासःपरित्यागेनामले वाससी परिधाय पुनः स्नात्वा अमलवाससोः परिधानमाह—यथाविधीति । स्नानपरिधानयोः क्रियाकलापे चान्वयेति । क्रियाकलापमेव विशेषेणाह—सन्ध्योपगमादीति । वाग्यत इति सन्ध्यामौनं कर्माङ्गत्वेनैव कृतवानिति ज्ञापयति अर्घ्यदानान्ता सन्ध्या ततोऽग्निहोत्रहोमः ततो ब्रह्मजपः गायत्रीमन्त्रजपः सत्कृत इति तिलकावश्यकभूषणादिपरिधानमुक्तम् एवमेव वृतः धर्मो भवतीति क्रमविधाने निरूपिते अरुणकरप्रासात् पूर्वं ध्यानम् अरुणकिरणप्रासे स्नानं ततः सन्ध्या अर्घ्यान्ता ततोग्निहोत्रं ततो जपः सूर्योदयावधि ॥ ६ ॥

उदिते सूर्ये तूपस्थानम् उपस्थायार्कमुद्यन्तमिति । ततो देवर्षिपितृतर्पणमाह—आत्मनः कलाः तर्पयित्वेति "ऋषयो मनवो देवाः" इत्यादिवाक्यात् भगवत्कला एव यथा अवयवादीनां पुष्ट्यर्थमवयविना यत्नः क्रियते एवं कलानां पोषार्थं यत्नः न तु पास्यत्वेनेति ज्ञापनार्थं कलापदं "ततः प्रभृति पूज्यन्ते" इतिवाक्यात् लोकशिक्षापरत्वेनापि सिद्ध्यति सत्तम इति पाठे सत्तमो भगवान् षड्विधं देशादिनिरूपितुं धर्मं कृतवानिति सूचितं कला एव गणयति—देवानृषीन् पितॄनिति । वृद्धान् स्वजातीयान् क्षत्रियान् विप्रान् सर्वानेव एतेषामेवार्चनं गन्धादिभिः अस्मवानिति निष्कामत्वमुक्तं कामनयाप्येतेषां पूजनसम्भवात् अग्रेप्येतद्विशेषणं सम्बध्यते ॥ ७ ॥

ततो गोदानस्य नित्यत्वात् प्रत्येकापेक्षया समुदायस्योक्तत्वात् समुदाये अलङ्करणं न सम्भवति इति विचार्य अलङ्कारगुणान् निरूपयन्दानमाह—धेनूनामिति द्वाभ्याम् । आदौ गावः सवत्साः दीर्घ्न्यः एतादृश एव समुदाय इति पशूनां भाग्यातिशयो निरूपितः नहि द्वारकायां कश्चिद्विसदृशो दृष्टो भवतीति ज्ञापनार्थमुक्तम् अन्यथा धेनूनां बद्धता न सम्भवेत् रुक्ममये सुवर्णमये शृङ्गे यासां रौप्यमयाः अङ्घ्रयो यासां प्रत्येकं सुष्ठु वाससी प्रत्येकं यासां साध्व्यः शान्तस्वभावाः पयस्विन्यः बहुदोग्ध्र्यः गृष्टयः सकृत्प्रसूताः सर्वासां जीवद्वत्सत्वाय सवत्सत्वाय सवत्सानामित्युक्तं मौक्तिकानां स्रजो माला यासां पूर्वार्द्धविशेषणमेतत् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

क्रियाकलापं चकारेत्यन्वयः । सन्ध्याया उपगम उपासनं तदादिषु सत्तमः परमकुशलः ब्रह्म गायत्रीम् ॥ ६ ॥

आत्मवान् धैर्ययुक्तः ॥ ७ ॥

गृष्टीनां प्रथमप्रसूतानां गवां दिनेदिने प्रतिदिनं बद्धं चतुरशीत्यधिकानि त्रयोदशसहस्राणि ददौ यदुक्तं "बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश" इति बद्धं बद्धम् एकमेकं बद्धमित्यर्थः ॥ ८—९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रकृतिविलक्षणो जीवोपि ततो वैलक्षण्यमाह—एकमिति । निरस्तसमानातिशयं कालादिभ्यो वैलक्षण्यमाह—स्वयञ्ज्योतिरिति । स्वप्रकाशमित्यर्थः । स्वाश्रयत्वमाह—अनन्यं स्वाश्रयम् निर्विकारस्वरूपत्वमाह—अव्ययमिति । स्वभावतोपास्तसमस्तदोषत्वमाह—स्वसंस्थया स्वभावेन निरस्तकल्मषमिति निरतिशयबृहत्त्वं सर्वशक्त्याश्रयत्वं विश्वहेतुत्वञ्च वदन् सत्यत्वादिगुणवत्त्वमाह—अस्य विश्वस्योद्भवादिहेतुभिः प्रकृतिकालादिभिः लक्षितः अनन्तगुणशक्त्याद्याश्रयत्वेन द्योतितो भावः सत्ता लक्षणश्चासौ निर्वृतरानन्दश्च स तथा तम् सदानन्द—मित्यर्थः ॥ ५ ॥

आप्लुतः स्नातः सन्ध्या उपासनम् आदिर्येषां तेषु सत्तमः क्रियाकलापं चकार ब्रह्म गायत्रीम् ॥ ६ ॥

कलाः अंशानपि लोकसङ्ग्रहार्थं देवादीन् तर्पयित्वा गृष्टीनां प्रथमं प्रसूतानां दिनेदिने प्रतिदिनं प्रतिगृहञ्च बद्धम् एकमेकं बद्धम् अलङ्कृतेभ्यः तपोव्रताद्यलङ्कारयुक्तेभ्यो ददौ चतुरशीत्यधिकानि त्रयोदशसहस्राणाम् एकं बद्धम् ॥ ७—९ ॥

---

### भाषा टीका ।

वह परमात्म स्वरूप ऐसा है कि उस के समान अथवा अधिक कोई भी नहि हैं और स्वतः प्रकाशमान और जिससे कोई भी वस्तु पृथक् नहि है और वह निर्विकार है और अपनी स्वरूप स्थिति से हि जिसमे अज्ञान आदि दोष की निवृत्ति होरही है और इस संसार की उत्पत्ति पालन संहार के हेतु निज शक्ति रूप रज तम सत्वगुणों से जिसका सद्भाव लख्यो गयो है कि पर-

दद्यौ रूप्यखुराग्राणां क्षौमाजिनातिलैः सह ।
अलङ्कृतेभ्यो विप्रेभ्यो (१) बद्धं बद्धं दिनेदिने ॥ ९ ॥
गोविप्रदेवतावृद्धगुरून् भूतानि सर्वशः ।
नमस्कृत्यात्मसम्भूतीर्मङ्गलानि समस्पृशत् ॥ १० ॥
आत्मानं भूषयामास नरलोकविभूषणम् ।
वासोभिर्भूषणैःस्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११ ॥
अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः ।
(२) कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणाम् ।
प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥

भाषा टीका ।

मात्मा के विना जडस्वरूपगुणों की स्वतः प्रवृत्ति नहि हो सकती इसवास्ते इन का प्रेरक परमात्मा हि है और वह आनन्दस्वरूप है और वेदान्त में उसका ब्रह्म ऐसा नाम है एतादृश निज आत्मस्वरूप का ध्यान करते भए ॥ ५ ॥

ध्यान के अनन्तर श्रीकृष्णभगवान् निर्मल जल में स्नान-कर वस्त्र धारणकर विधि के अनुसार सन्ध्योपासनादि कर्म समुदाय को करते भए पश्चात अग्निहोत्र करके मौनव्रत हो कर गायत्री का जप करते भए ॥ ६ ॥

पश्चात सावधान होकर उदय होते सूर्य्य को अर्घ्य देकर और उपस्थान करके निज अंशरूप देवता ऋषि पितृओं का तर्पण करके और निज कुलवृद्धों का तथा ब्राह्मणों का पूजन करके ॥ ७ ॥

सुवर्ण से मढे सींगवारी सीधे स्वभाववारी मोतीन की माला वारी सुन्दर दूध देने वारी सुन्दर वस्त्र धारण करैं बच्छा सहित ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

बद्धमिति "हिरण्येन परीवृतान् कृष्णान् शुक्लदतो मृगान् मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च "इतिश्रुत्युक्तानि सप्तोत्तरशतं बद्धान्येकीकृत्य पुराणे चतुर्दशलक्षत्वेन गणितानि यथोक्तं भरतमेवाधिकृत्य नवमस्कन्धे

"मृगान् शुक्लदतः कृष्णान् सुवर्णेन परिष्कृतान् ।
अदात्कर्मणि कृष्णारे नियुतानि चतुर्दश ॥ इति

तत्रश्चेयं बद्धसङ्ख्या श्लोकेन सङ्गृह्यते—

"चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ।
बद्धं चतुरशीत्यग्रसहस्राणित्रयोदश" ॥ इति

दिनेदिने च प्रतिगृहश्चेति ॥ ९ ॥

आत्मसम्भूतीः स्वविभूतीः मङ्गलानि कपिलादीनि ॥ १० ॥

नरलोकस्य विभूषणरूपमात्मानम् स्वीयैः पीताम्बर-कौस्तुभादिभिः ॥ ११ ॥

कामानभिलषितानर्थान् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गाः वन्दनार्थमानीता विप्रानाशीर्वादार्थमागतान् गुरून् श्रीवसुदेवादीन् निकटगुप्तधर्मलब्धनिजनिजगृहस्थितान् सर्वभूतानि मनसि भावितानि अभिवाद्य यतः आत्मसम्भूतीः तेषां सम्मानप्रवर्त्तनार्थमिति भावः। यद्वा आत्मविभूतीरपि नरलीलाकौतुकेनैवेतिभावः ॥ १० ॥

नरलोकस्य जीवलोकस्य विशिष्टभूषणरूपमपि वासोभि-रिति बहुत्वं राजवेषत्वात् स्वीयैरात्मीयत्वेन नित्यप्रसिद्धै-स्तैस्तैरिति त्रिष्वेव योज्यं दिव्यशब्देन वनमालादीना-मम्लायित्वं बोधयित्वा तदेव कैमुत्येन साधयति ॥ ११ ॥

अवेक्ष्येति सार्द्धकम। गोवृषः गोषु स्थितोऽधिश्रितो वृषः गोश्रेष्ठो वा द्विजो विप्रः देवता निजेष्टदेवतामूर्त्तीः ताश्चावेक्ष्य प्रागभ्यर्चनादौ तेषां दर्शने सिद्धेपि पुनरवेक्षणं यतो मङ्गलार्थं प्रकर्षेण दातुमाज्ञाप्य प्रत्यनन्दत् तेषां सन्तोषणेन स्वयमधिकं प्रीतोऽभूत् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोविप्रेति । गवादीनां द्वन्द्वः तत्र वृद्धाः कुलवृद्धाः तानात्मनः स्वस्य सम्भूतीर्विभूतिभूतान्नमस्कृत्य मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि समस्पृशत् ॥ १० ॥

आत्मानमिति । नरलोकस्य भूषणरूपमात्मानं कौस्तुभ-पीताम्बरादिभिर्भूषयामास ॥ ११ ॥

कामानभिलषितानर्थान् प्रदाप्य प्रकृतीरमात्यादीन् प्रतोष्य तोषयित्वा प्रतिनन्दितवान् ॥ १२ ॥

(१) बद्ध बद्धमिति वीर० पाठः। कामगानिति शुको० पाठः।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बद्धं बद्धं द्वयं द्वयं एकैकस्मै विप्राय ॥ ९ ॥

गोविप्रदेवताः वयोवृद्धांश्च गुरुभूतान्यश्वत्थादीनि नमस्कृत्य एतत्सर्वं कीदृशमत्राह आत्मेति आत्मनः सम्भूतिं सन्निधेः प्रतिमां मङ्गलानि तिलादीनि ॥ १० ॥

नरलोकस्य मुक्तामुक्तस्य भूषणं अलङ्कारभूतम् ॥ ११ ॥

आदर्शं दर्पणं गवादींश्च प्रेक्ष्य देवताः प्रतिष्ठिताः कामिनामर्थिनां कामान् काम्यान् पदार्थान् किं बहुना सर्वान् कामैः पृथक् पृथक् प्रतोष्य सन्तोषं जनयित्वा स्वयमपि प्रत्यनन्दत सन्तुष्टोऽभूदित्यन्वयः ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतादृशीः गाः ददौ दानक्रियाणां समुदाये बद्धसङ्ख्या सम्बध्यत इति केचित् समुदाय एव दानमित्यपरे क्षौमाजिनतिलानां सहभावः शास्त्रीयः तदेकमेव विशिष्टदानं भवति अलङ्कृतेभ्यो विप्रेभ्य इति देयसमसङ्ख्या ब्राह्मणानां निरूपिता गोसमसङ्ख्या बद्धसमसङ्ख्या वा बद्धं बद्धमित्येव पाठःबद्ध बद्धमिति वैदिक शब्दः स मात्रानुसन्धेयः तत्रापि बद्धशब्दो बद्धपर्यायः चतुरशीत्यष्टसहस्राणि त्रयोदशेति केचित् तदत्रमे विचार्य निराकृतश्च तस्माद्गोष्ठपर्यायो बद्धशब्दः अत्र च विशेष संख्याया उपयोगाभावः अयुतलक्षादीनामेव नित्यदाने उपयोगाच्च दिनेदिने नतु गार्हस्थ्येनापि वर्षे प्रतिगृह्णमिति उपक्रमे बहुवचनस्योक्तत्वादध्यवसेयम ॥ ९ ॥

ततो नमस्कारादिकमाह—गोविप्रेति । गावो हविर्विप्रा मन्त्राः देवताश्च त्रितयमिति तं यागो भवतीति क्रमो निरूपितः वृद्धाः सर्वे सभासदः गुरवः कर्मोपदेष्टारः सर्वश इति शिष्यादिसहितान् एतेषां नमस्कारे हीनता भवतीति शङ्कां निवारयति—आत्मसम्भूतीरिति । एते सर्वे सम्भूतिरूपाः यथा स्वयं स्वपादक्षालनं करोति तद्वदित्यर्थः । ततो मङ्गलानि सम्यगस्पृशत् गोहिरण्यादीनि मङ्गलानि ॥ १० ॥

धर्मपरिष्कारमुक्त्वा धर्मिपरिष्कारमाह—आत्मानं भूषयामासेति । स्वस्य सच्चिदानन्दरूपं देहं भूषयतीति पक्षं व्यावर्त्तयितुमात्मपदं किं स्वात्मानमेव अध्यासादात्मपदं शरीरेपि वर्त्तते जीवेषु नतु भवतीति भूषणस्य प्रयोजनमाह—नरलोकविभूषणमिति । न हि स्वार्थमलङ्करणं करोति निरतिशयानन्दत्वात् किन्तु जगतो भूषणं तद्रूपं जगच्च लौकिकोत्कर्षमपेक्षते अतो यथा भूषणैःसंस्कारैर्भूषितः भवति एवं जगद्भगवता संस्कृतमित्यर्थः । पूर्वपरिधानीयवस्त्राद्यपेक्षया भिन्नान्येतानीति ज्ञापयितुं भूषणकरणानाम् अतो निरूपणमाह—वासोभिरिति । कञ्चुकोष्णीषादिभिः भूषणरूपैः स्वीयैः असाधारणैः मकरकुण्डलादिभिश्च दिव्यो गन्धो यस्य एतानि अनुलेपनानि बहुविधानि ततः सर्वाभरणभूषितः ॥ ११ ॥

आत्मानं तेजोमयं कर्त्तुम आज्यावेक्षणं कृतवान् तेन सर्व एव लोकस्तथा रोगादयो निवृत्ता भवन्ति ततः कान्तियोगार्थमाह आदर्शं दृष्टवान् गोवृषद्विजदेवतानाञ्च दर्शनं कृतवान् अत्र देवाः देवालयस्थाः ततो लौकिकोचितदानमाह—कामगमिति । कामं, गच्छति पूरयति प्राप्नोति वा कामगाः मनोहरा विषयाः सर्वेषामेवं न भवतीति ज्ञापयितुं सर्ववर्णानां मुख्यानां गौणानां चेत्युक्तं पौरान्तःपुरचारिणामिति लौकिकप्राधान्यार्थमुक्तम ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मङ्गलानि कपिलादीनि ॥ १०—११ ॥

प्रकृतीर्मन्त्रिणः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मसम्भूतीः स्वविभूतिभूतान् गवादीन् मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि स्पर्शनादिना मङ्गलावहानि ॥१०॥

नरलोकेत्युपलक्षणमन्यलोकानां सर्वलोकानां विभूषणमात्मानं स्वीयैः पीताम्बरकौस्तुभादिभिः भूषयामास ॥ ११ ॥

आज्यादीनवेक्ष्य दृष्ट्वा कामान् वाञ्छितानर्थान् प्रदाप्य प्रकृतीः अमात्यादीन् प्रतोष्य तोषयित्वा प्रत्यनन्दत प्रतिनन्दितवान् ॥ १२ ॥

---

भाषाटीका ।

चांदीसे मढे खुरवारी पहलोंन ब्याई ऐसी तेरहहजार चौरासी धेनुका रेसमीवस्त्र मृगछाला तिलनके साथ दिन२में सुन्दरअलाङ्कार धारे ब्राह्मणोंके अर्थ श्रीकृष्णभगवान् दान देते रहे ॥ ९ ॥

निज विभूतिरूप ब्राह्मण देवता कुलवृद्ध गुरूनको तथा माननी अन्यप्राणियोंको यथायोग्य नमस्कार करके कपिलागौ पञ्चगव्य दर्पण आदि मङ्गलीक वस्तूनका स्पर्श करते भए ॥ १० ॥

मनुष्यलोक का विभूषणरूप दिव्यदेह का पीताम्बर आदि निज वस्त्रोंसे तथा भूषणोंसे और अपने कौस्तुभ आदि से तथा दिव्यमालाओंसे और चन्दन आदि से अलङ्कार करते भए ॥ ११ ॥

घृत दर्पण गौ वृषभ ब्राह्मण देवताओं का दर्शन करके पुरवासियों को और अन्तःपुरनिवासियों को तथा सब वर्णों को उनके वाञ्छित पदार्थों को दिवायकर और मन्त्री आदि कों उनके अभीष्ट वस्तुओं से प्रसन्न करके पश्चात् आप प्रसन्न होते भए ॥ १२ ॥

सम्विभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः ।
सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततः स्वयम् ॥ १३ ॥
तावत्सूत उपानीय स्यन्दनं परमाद्भुतम् ।
सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥
गृहीत्वा पाणिना(१) पाणी सारथेस्तमथारुहत् ।
सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥
ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ।
कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः ॥ १६ ॥
सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ।
प्राविशद्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥ १७ ॥
तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विप्रादीन् स्रगादिभिः सम्विभज्य तेभ्यस्तानि दत्त्वेत्यर्थः उपायुङ्क्त भोगार्थमग्रहीत् ॥ १३—१४ ॥

पाणी कृतेऽञ्जलौ गृहीत्वा ॥ १५ ॥

सव्रीडप्रेमवीक्षितैरीक्षितः क्षणं स्थितस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादिति ॥ १६ ॥

एवं सर्वगृहेभ्यः पृथक् पृथङ्निर्गत्यानन्तरमेक एव सन् सुधर्मां प्राविशत् यन्निविष्टानां यत्र प्रविष्टानाम् ॥ १७ ॥

नृसिंहैर्नृषु श्रेष्ठैः ॥ १८ ॥

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

ततः पश्चादिति गृहस्थस्य शेषभोजित्वात् ॥ १३ ॥

अथ गुरुविप्रादिविसर्जनानन्तरं चरितमाह—तावदिति । अग्रत इति तत्सर्वान्तःपुरनिष्क्रमणमार्गाणामेकताप्राप्तिपदाग्रभागस्थमहागोपुराग्रभाग इत्यर्थः ॥ १४ ॥

पूर्वाद्रिमिवेति दृष्टान्तेन रथस्य बृहत्तरत्वादिकं तथा श्रीभगवतः स्वतो भूषणादिना च महातेजस्वित्वादिकं तथा तेनैव रथस्य शोभाभरजननादिकञ्च सूचितम् ॥ १५ ॥

अथ पुनस्तद्रथारोहात्पूर्वं वृत्तं दर्शयति—तत्र च पूर्वसूचितसर्वबहिर्जनतानिष्क्रमणानन्तरमेकान्ततामागते तस्मिन् नित्यकृत्यमङ्गलास्पदे सर्वमध्यमान्तःपुर बहिःस्थितकक्ष्याविशेषे प्रस्थानमङ्गलद्रव्यसङ्गततया सङ्गतानां तदङ्गनानां प्रेमपारिपाटीं वर्णयन्ति प्रथममन्तःपुरस्त्रीणां प्रेमवीक्षितैरीक्षितः विषयीकृतः चलितुमुद्यतोपि क्षणं स्थगित इत्यर्थः । पश्चात्कृच्छ्रेण किञ्चित् दर्शितमनाहिना विसृष्टः प्रस्थानेऽनुमत इत्यर्थः । जातहास इति तत्पश्चाच्च अहो प्रेमावृतविवेके कथं वृथा दूयसे मध्याह्न एव भोजनाद्यर्थमागच्छामीति सूचकेन हासेन तासां सान्त्वनेच्छया व्यञ्जितहास इत्यर्थः ॥ १६ ॥

सर्वैरिति । श्रीभगवदागमनं विना स्वयं सभामप्रविष्टैरिति ज्ञेयं प्रकर्षेण गीतवाद्यादिनाऽविशत् सुधर्मोक्त्यामिति सूचितं स्वर्गस्थत्वेपि तत्तन्महिमयुक्तत्वं किमुत श्रीकृष्णपुरस्थत्व इत्याह—यदिति ॥ १७ ॥

तत्र तस्मिन् यत्परमासनं सर्वश्रेष्ठतमासनं तस्मिन् यद्दत्तसारूप्यादावपि स्वगणे तस्य रूपादिपरमत्वेन भासतद्वत्परमतया विहितेष्वप्युग्रसेनाद्यासनेषु तस्यासनं परतया भासत इति भावः । तत्र च विभुः परः सहस्राङ्गसप्रमथमहासभारूपायां नानासभामध्यां तस्यां सुधर्मायां सर्वस्यामेव भासमान इत्यर्थः । अतः स्वीययैव भासा ककुभ अव समन्तात् भासयन् तथापि यदुभिर्वृतो बभौ यन्नृसिंहैस्तदीयनिजपरिकरत्वेन सर्वपुरुषश्रेष्ठतया तादृशैरेवेत्यर्थः यतः सोपि यदूत्तमः तज्जातीयश्रेष्ठतयैव विभुत्वं प्रकाशितमित्यर्थः । तत्रैव दृष्टान्तः यथेति ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विप्रान् सम्विभज्य सम्विभागेन प्रीणयित्वा ॥ १३—१६
षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवः ॥ १७—२१

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सम्विभज्येति । अग्रतः पुरतः उपवेशितानितिशेषः विप्रान् स्रगादिभिः सम्विभज्य सम्यग्विभागेन प्रीणयि

(१) पाणिम् इति वीर० सुर्दा० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आज्यादीन्यवलोक्य तत्रादर्शो दर्पणं सुहृदो मित्राणि दाराः पत्न्यश्च उपायुङ्क्त यथायोग्यमन्ववर्त्ततेत्यर्थः ॥ १३ ॥

तावदिति । सुग्रीवाद्यैरित्यादिशब्देन मेघपुष्पबलाहकसङ्ग्रहः तैरश्वैर्युक्तं स्यन्दनं रथमानीय प्रणम्याग्रतः अवतस्थौ ॥ १४ ॥

सारथेः पाणिं स्वपाणिना गृहीत्वा उदयाद्रिं भास्करः सूर्य इव आरुरोह ॥ १५ ॥

ईक्षित इति । व्रीडाप्रेमाभ्यां युक्तैर्वीक्षितैरीक्ष्यमाणः ताभिस्तैरेव वीक्षितैः कृच्छ्रात्कथञ्चिद्विसृष्टः तासां मनोहरन् सञ्जातः हासो यस्य तथाभूतो निर्जगाम ॥ १६ ॥

सुधर्मामिति । तां विशिनष्टि—यद्यत्र सभायाम् उपविष्टानां षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवो न सन्ति तथाभूतामित्यर्थः ॥ १७ ॥

तत्र सुधर्मायां स्वभासा स्वदीप्त्या ककुभो दिशः भासयन् नृसिंहैर्यदुश्रेष्ठैर्यदुभिः परिवृतो बभौ यथा दिव्याकाशे नक्षत्रगणैः चन्द्रो भाति तद्वत् ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्रव्यसंविभागक्रममाह— संविभज्येति । विप्रादीनुद्दिश्य स्रगादिभिस्तृतीया च द्वितीयार्थे प्रायुङ्क्त स्वयं स्वीचकार ॥ १३ ॥

तावत्तदा ॥ १४—१५ ॥

स्त्रीणां मनः ॥ १६ ॥

यन्निविष्टानां यत्र सभायामुपविष्टानाम् अशनपानादिषडूर्मयो न सन्ति न बाधन्ते ॥ १७ ॥

नृसिंहैः पुरुषश्रेष्ठैः ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साक्षात्तेषां ज्ञानं तेषामभीष्टं न भवतीति गोप्यार्थं प्रदाप्येत्युक्तं प्रकृतीः मन्त्रिणः अन्तःपुरस्त्रियो वा कामैः प्रतोष्य तैस्तत्कृतां पूजां प्रत्यनन्दत ततो भोगं वक्तुं मुख्यत्वात्ताम्बूलादिस्वीकारमाह—संविभज्येति । अग्रतः प्रथमं विप्रान् संविभज्य विप्रेभ्यो दत्वा स्रक्ताम्बूलानुलेपनानि सर्वैः सर्वेषां संविभागः लौकिकदानं सुहृदः प्रथमाः ततः प्रकृतयः मन्त्रिणः ततो दाराः यद्यपि प्रथमं स्वस्योपयोगः तथापि सन्ति भागाः सर्वेषां प्रथम एव भगवदुपयोगानन्तरं पदार्थोत्पत्त्यसम्भवात्ततः पश्चात् स्वयमुपायुङ्क्त शिष्टस्य सेवकगामित्वात् ॥ १३ ॥

ततस्त्रैलोक्यरक्षणार्थमुद्यतस्य सुधर्मायां गमनं निरूप्यते तावत्सूत इति चतुर्भिः । परमाद्भुतमिति वैकुण्ठात् समागतरथव्युदासः किन्तु धर्ममयो रथः सतु सङ्कर्षणोपकारी अश्वाः सूतश्च तत एवेत्याह—सुग्रीवाद्यैर्हयैर्युक्तमिति । अनिरुद्धप्राधान्यात् सुग्रीवाद्यैरित्युक्तं प्रणाम पूर्वस्मादेशिष्ट्य-द्योतकः अग्रे तूष्णीमवस्थानं कार्यस्यालौकिकत्वाभावाय ततः अप्रेरितोपि भगवान् सारथेः पाणिं पाणिना गृहीत्वा रथमारुहत तस्य क्रियाशक्तिः स्वक्रियाशक्त्या नियन्त्री अन्यथा धर्मप्रेरकोऽन्यथा प्रेरयेत पूर्वापरशिष्टत्वात् तं रथमारुह्येति भगवदारूढो धर्मः सर्वत्र सुहितरो भवतीति तमित्युक्तं रथारूपा क्रियाशक्तिश्च साधनत्वं धर्मे प्राप्नोति सात्यकयुद्धवसंयुक्त इत्युक्तम् उद्धवो भक्तः अधिकारिणामेव प्रकाशको भविष्यतीत्याशङ्क्य दृष्टान्तमाह— पूर्वाद्रिमिव भास्कर इति । प्रातः सर्वेषामेव प्रबोधो भवति न केवलमधिकारिणाम् ॥ १४—१५ ॥

ततो धर्मे कामनिवृत्तिमाशङ्क्य तन्निराकरणार्थमाह—ईक्षितोन्तःपुरस्त्रीणामिति । स्त्रीणामिति षष्ठीबहुवचनं न केवलं दर्शनमात्रं किन्तु तासां सम्बन्ध्यपि भगवानिति द्योतयति ज्ञानद्वारा सम्बन्धः आन्तरबाह्यो निवर्त्तक इति ज्ञाने त्रैविध्यमाह—सव्रीडप्रेमवीक्षितैरिति । व्रीडा तामसी प्रेम राजसं वीक्षितं सात्त्विकमिति ततो भावेन बद्धः "ये यथा मां प्रपद्यन्ते" इतिन्यायेन तासामपेक्षया स्वच्छन्दधर्मपरता न भविष्यतीति तासां निर्बन्धाभावमाह—कृच्छ्राद्विसृष्ट इति । कष्टेन ताभिर्विसृष्टः धर्मानुरोधात् निर्गच्छत्विति विचारितस्ततो निरगात् जातहास इति तासामपि धर्मानुरोधमालक्ष्य हास्यं नहि स्त्रीणां कामादुपरतिरस्ति तथापि धर्मपरताप्यासां माऽभूदिति ज्ञापनार्थं धर्मपरत्वं हास्यमत इति निरोधार्थमन्यथा लोके धर्मे वा चित्तमासक्तं भवेत् भगवान् विसृष्ट इति ॥ १६ ॥

सुधर्माख्यामिति । सुष्ठु धर्मो यत्रेति नाम्नैव धर्मपरत्वं सिध्यति सभा स्वभावतोपि धर्मनिर्णयस्थानं सर्ववृष्णिभिः परिवारित इत्येकमाधिदैविकधर्मत्वज्ञापनार्थं कालधर्मातिक्रममाह—यन्निविष्टानामिति । यत्रोपविष्टानां षडूर्मयो देहादिधर्माः आवश्यका अपि न सन्ति तत्रानावश्यकाः सुतरामेव न भविष्यन्तीति अर्थादुक्तम् ॥ १७ ॥

एवं सुधर्मामाहात्म्यमुक्त्वा तत्रोपवेशने धर्म एव केवल इत्याशङ्क्य सच निबन्धात्मक इति सुखोपवेशनमाह—तत्रोपविष्ट इति । तत्र सभायां तत्रापि मध्ये भगवदुपवेशनस्थानं परमासनं प्रान्ते पश्चिमभागे कुड्यसमीपे राजस्थानं मध्ये तत्सम्मुखे भगवतः स्थानमिति विमर्शः सभासदां मध्ये भगवतोऽनुप्रवेशं निवारयितुमाह— स्वभासा ककुभोऽवभासयन्निति । तत्र सामर्थ्यं विभुरिति राज्ञो मुख्यत्वाद्भानमाशङ्क्याह—सभाविति । सभाधर्मेण देवधर्मेण वा तथान्यमाशङ्क्य स्वभासेति अप्रधानं नापि प्रधानभानं सम्भवतीति तन्निराकरणार्थं दशदिश एवोक्ताः नतु तत्रत्या एव केवलाः अनेन सभाया भगवज्ज्ञानं निवारितम् एवं तर्हि सभासदामप्रयोजकमेव स्यादित्याशङ्क्य निराकरोति-वृतो नृसिंहैरिति । तेषामागन्तुकत्वं निराकरोति—यदुभिरिति । अन्यथा नृसिंहाः परशुरामव्यासादयो भवेयुः तुल्यतामाशङ्क्याह—यदूत्तम इति । तेषामेकत्र निवेशनमात्रं भगवतस्तत्रोप्युत्तमत्व एव स्यात् नतु नियामकत्वं ततो धर्म एकमुखो न भवेदिति

तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम् ।
उपतस्थुर्नटाचार्या नर्त्तक्यस्ताण्डवैः पृथक् ॥ १९ ॥
मृदङ्गवीणामुरजवेणुतालदरस्वनैः ।
ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः ॥ २० ॥
तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ।
पूर्वेषां पुण्ययशसां राज्ञां चाकथयन् कथाः ॥ २१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तेषां पतिर्भगवानिति दृष्टान्तेन निरूपयति-यथोडुराज इति । द्वितीयाधिभौतिकं निवारितं यथा देवरूपं ग्रहनक्षत्राणामपि केनचिदंशेन तुल्यतापोषकत्वञ्चास्तीति तारकागणैरित्युक्तम् उडुराज इत्यनेन स्वकीयानां तदधीनत्वमुक्तमेव ॥ १८ ॥

—————

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सम्विभज्य भागशो दत्त्वा विप्रान् विप्रेभ्यः स्रगादिभिः स्रगादीन् उपायुङ्क्त भोगार्थं जग्राह ॥ १३—१४ ॥

पाणी अञ्जलीभूतौ दक्षिणेन पाणिना गृहीत्वा ॥ १५ ॥

कृष्णः प्रथममीक्षितः अर्थात् सात्यक्युद्धवादिभिः । कीदृशः ईक्षितः अन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैस्त्वद्विरहतापमिमं कथं सहामहे इति वैयग्र्यव्यञ्जकैर्बद्ध इति शेषः । ततश्च भो अधीराः ! एतन्मात्रविरहेणैव विह्वलीभवथ अयमहमधुनैव भोक्तुमेष्यामीत्याश्वासव्यञ्जको हासो जातो यस्य सः। ततश्च मन्ये तादृशहासेनैव मनो हरन् कृच्छ्रादेव विसृष्टः तत्प्रेमानलोकबन्धाद्विमुक्तः सन् निरगात् ॥ १६ ॥

इत्थमेकैकस्मान्मन्दिरादेकैकेन प्रकाशेन बहिर्भूय तत्तत्पुरस्थैस्तत्तत्प्रतिवेशिभिश्च जनैरेव लक्षितो नत्वन्यैः पृथक् पृथक् प्रतोल्यां सुधर्म्मा सभा गोपुरवर्त्मपर्य्यन्तमागत्य तत्र पुनरेकीभूय सुधर्म्मा सभान्त्वेकेनैव प्रकाशेन प्रविशति स्मेत्याह सुधर्म्माख्यामिति । परिवारितः वृतः ॥ १७ ॥

नृसिंहैर्नृषु श्रेष्ठैः ॥ १८ ॥

—————

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अग्रतः पुरतः अक्षिगोचरानित्यर्थः । विप्रादीन् यथायोग्यं स्रगादिभिः सम्विभज्य लब्धभागान् विधाय ततः स्वयं भोगार्थमुपायुङ्क्त जग्राह ॥ १३—१४ ॥

सारथेः पाणी अञ्जलीभूतौ पाणिना गृहीत्वा तं स्यन्दनमारुहत् ॥ १५ ॥

अन्तःपुरस्त्रीणां रुक्मिण्यादीनां सव्रीडप्रेमवीक्षितैरीक्षितः भक्तवत्सलत्वात् तत्प्रेमबद्धः क्षणं स्थितः पुनस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादित्यर्थः ॥ १६ ॥

गृहेभ्यो बहुभ्यः बहुभिः रूपैर्निर्गत्य सुधर्माख्यां सभाम्तु एकामेक एव प्राविशत् इति भावः ॥ १७—१८ ॥

—————

भाषाटीका ।

पहलैं ब्राह्मणों का माला ताम्बूल चन्दन आदि देकर और सुहृद मन्त्री स्त्रीयों को यथायोग्य ताम्बूलादि देकर पश्चात् माला ताम्बूल चन्दन आदि का आप भोग करते भए ॥ १३ ॥

जहां पर्य्यन्त सब जनों के सत्कार पूर्वक आप भगवान ने भोजनादि किया उतने हि कालमें सुग्रीव आदि घोड़ाओं से युक्त अत्यन्त आश्चर्य्य सरूपक रथको लाकर दारुक नामा सूत भगवान् को लाय कर भगवान् के आगे स्थित हो गया ॥ १४ ॥

निज दक्षिण हस्त से अञ्जलियुत सारथी के दोनों हस्त को पकडकर सात्यकी और उद्धव सहित श्रीभगवान उस रथ पर विराजमान होते भए जैसे उदयाचल पर सूर्य्य विराजमान होवे ॥ १५ ॥

अन्तःपुर की स्त्रीयों ने लज्जा प्रेम सहित निज नैत्रों से जिनका दर्शन किया है और उन स्त्रीयों ने बड़े कष्ट से जिनको जाने की अनुमति दीहै एतादृश श्रीकृष्ण भगवान् हास्य करत उन स्त्रीयों के मनको हरणकरत वहां से निकसते भए ॥ १६ ॥

हे राजन् ! इस प्रकार सब गृहन से निकसकर पश्चात् एकहि रूप होकर सब यदुवंशीयों से युक्त होकर सुधर्मा नाम सभा में श्रीकृष्ण महाराज प्रवेश करतें भए ॥ जिस सभा में प्रवेश करने वारेन को क्षुधा पिपासा शोक मोह जरा मृत नहिं होते ॥ १७ ॥

उस सभा में सिंहासन पर विराजमान और मनुष्यों में सिंह सदृश यादवों से युक्त यदुवंशीयों में श्रेष्ठ श्रीकृष्ण भगवान् निज कान्ति से सब दिशान को प्रकाश करत इस प्रकार प्रकाशमान होते भए कि-जैसें आकाश में तारा गणों से युक्त होकर चन्द्रमा सब दिशान को प्रकाश करत आप भी प्रकाशमान होताहै ॥ १८ ॥

—————

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपमन्त्रिणः परिहासकाः पृथक्पृथक्. स्वस्वसमुदायैः ॥ १९ ॥

मृदङ्गादयः प्रसिद्धाः दरः शङ्खः सूतादयस्तुष्टुवुः ॥ २० ॥

तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः ।
विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥
स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः ।
राज्ञामावेदयद्दुःखं जरासन्धनिरोधजम् ॥ २३ ॥
ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः ।
प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्राह्मणाः ब्रह्म वेदमाहुर्मन्त्रान्व्याचक्षतेत्यर्थः । वादिनो वदनचतुराः ॥ २१—२३ ॥

गिरिव्रजे तत्संज्ञके दुर्गे रुद्धा आसन् तेषां च दुःखमावेदयदित्यन्वयः ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विभुं सर्वरसपरिपूर्णं हे राजन् इति कौतुकात् ताण्डवैः नृत्यैः उपतस्थुः असेवन्त ॥ १९ ॥

सूतादीनां नर्त्तनगाने पूर्वतो विलक्षणे ज्ञेये ॥ २० ॥

ब्राह्मणाः वेदार्थाभिज्ञाः कथाश्च कथयन् इतिहासपुराणवचनादिना ॥ २१ ॥

अपूर्वदर्शनः अदृष्टपूर्वः प्रतीहारैरित्यस्योभयत्रान्वयः ॥२२॥

परेशायेति । दूतस्य तादृशस्फूर्त्तिद्योतकं कृष्णाय राज्ञां दुःखमावेदयत् अर्थात्तमेव नमस्कृत्य दुःखमिति दुःखोत्तरवचनमित्यर्थः ॥ २३ ॥

के ते राजानः ! इत्यपेक्षायामाह—येचेति । तस्य जरासन्धस्य सन्नतिं तस्मिन्नत्यन्तनम्रतां ये न ययुः ये च येन हेतुना तेन जरासन्धेन रुद्धाश्चासन् रोधनप्रयोजनञ्चोक्तं सभापर्वणि युधिष्ठिरं प्रति श्रीभगवतैव—

"स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ।
महादेवं महात्मानमुमापतिमरिन्दम ।

इति ॥ २४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रेति । तत्र तदा हे राजन् ! उपमन्त्रिणः परिहासकाः हास्यरसैर्विभुं श्रीकृष्णम् उपतस्थुः तथा पृथक् स्वस्य समुदायैः नटाचार्यास्ताण्डवादिभिः ॥ १९ ॥

मृदङ्गादयः प्रसिद्धाः दरः शङ्खः तेषां स्वनैः ननृतुर्जगुश्च सूतादयः तुष्टुवुः तत्र मागधाः वंशावलीपाठकाः वन्दिनः स्तुतिपाठकाः ॥ २० ॥

तत्रस्थाः सभायां स्थिताः पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथाः कथयामासुः ॥ २१ ॥

एवमाह्निकमनुवर्णितम् । अथ जरासन्धनिरुद्धराजसन्देशहरागमनं प्रस्तौति—तत्रेति । इत्थं नीयमानदिनानाम् एकस्मिन् दिने हे राजन् ! अपूर्वदर्शनः न पूर्वं दर्शनं यस्य सः एकोऽसहायः कश्चित्पुरुष आगतः प्रतिहारैर्द्वारपालैर्भगवते ज्ञापितः ततः प्रवेशितश्च ॥ २२ ॥

स इति । स आगतः पुरुषः कृताञ्जलिर्बद्धोऽञ्जलिर्येन सः जरासन्धेन यो निरोधः तत्प्रभवं राज्ञां दुःखमावेदयत् ॥ २३ ॥

येचेति । तस्य जरासन्धस्य दिग्विजये ये ये नृपाः सन्नतिं नम्रतां न ययुः न प्रापुः ते द्वेऽयुते नृपाः गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन बलान्निरुद्धाः आसन् तेषां राज्ञामिति पूर्वेण सम्बन्धः ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नानाविधैः हास्यैः हसनविषयैः रसैः रागजनकवचनैः ॥१९॥
नटादयो ननृतुः सूतादयो जगुः ॥ २० ॥

गानानान्तरं कः प्रसङ्ग इत्यत्राह—तत्रस्था इति । स्थागतिनिवृत्ति वा विना शयित्वमुपविष्टत्वं वा सूच्यते अत्र तयोः का विवक्ष्यत इत्यत उक्तम् आसीना इति ॥ २१ ॥

तत्र तस्यामवस्थाम् ॥ २२ ॥

जरासन्धेन कृतोपरोधो निरोधः तस्माज्जातम् ॥ २३ ॥

गिरिव्रजे नगरे ॥ २४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो धर्मफलमिव वदन् मनसः परितोषमाह—तत्रोपमन्त्रिण इति । उपमन्त्रिणः कौतुकिनः राजन्निति ज्ञापनार्थं सम्बोधनं नानाविधा हास्यरसाः लौकिकी भाषेयं धर्मे वित्ताक्षेपणनिवारणार्थमुक्ता विभुत्वात्प्रेरिता अपि तथोपतस्थुः न केवलं हास्यरसा एव किन्तु शृङ्गारादयोऽपि विभावादिभिः प्रकाशिताः इत्याह-उपतस्थुरिति । नटाः रसाभिनयकर्त्तारः शुद्धस्वाङ्गप्रदर्शकाः स्त्रियो नर्त्तक्यः लास्यप्रदर्शिक्यः उभयविधा अपि सभायां ताण्डवैरेव पृथक् पृथक् उपतस्थुः नटाचार्यैः इति वा पाठः ॥ १९ ॥

भगवतः सभायां गमनमुत्सवरूपमिति ज्ञापयितुं वाद्यमाह—मृदङ्गेति । षड्विधानां स्वनैः सह ननृतुर्जगुस्तुष्टुवुः लोके नटादयो नात्यन्तमभिज्ञा इति सूतादीनिर्दिशति—सूतमागधवन्दिन इति ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निरस्तनेन विकर्मतयोक्ते तद्विरुद्धकर्मणि प्रवर्तनीं कुशले च प्रमादकारिणीं दृढवाञ्छालतां न चामी कथञ्चित् परिहर्तुं शक्नुवन्तीत्याहुः—बलवानिति । अनिमिषायेत्यनेन च तस्याः प्रमत्तता च सूचिता तस्मै नम इति तद्भयेनैवाधुना त्वद्भजनोद्यमात् यथोक्तं "मर्त्यो मृत्युव्यालभीतः पलायन्" इत्यादि ॥ २६ ॥

किञ्च, लोके भवानिति । जगदिनः साक्षात्सर्वेश्वर एव कलया अंशेन श्रीबलदेवेन सह अन्यः अनिगृह्यमाणः खलः किं कस्मादन्यस्मात् कारणादित्यर्थः । हे ईशेति जरासन्धादेरपि त्वदधीनत्वं तज्जनस्यापि कर्माधीनत्वं सूचितं तद्वयं न विद्मः अन्यत्तैः । तत्र चेदस्माकमित्यस्य स्थाने जनः स्वकर्मजमिति पाठोऽसभ्यः तथा सद्रक्षणार्थमित्यत्र चकारपातश्च ज्ञेयः ॥ २७ ॥

तथाप्यद्यापि न वयं तव मायया सम्यक् त्यक्ता इत्याहुः स्वप्नेति । अन्यत्तैः । यद्वा तव मायया अतिकृपणाः अतिशयेन हतबुद्धयः सन्तः क्लिश्यामहे तत्र हेतुः मृतकेन स्वतोऽचेतनत्वेन तद्रूपेण देहेन या धूस्तां मृतकरूपं भारं वहाम इत्यर्थः । न केवलं मृतकभारवाहित्वमेव क्लेशाय तत्रान्यच्चेत्याहुः—शश्वदिति । पुनःपुनः भूतप्रेतादित इव रोगकालादितो भयं यस्मिन् तेन किमर्थं वहथ तत्राहुः नृपस्य सुखं स्वस्मिंस्तद्यथा स्यात् तत्प्राप्त्यर्थमधुनापि तां न मुञ्चाम इत्यर्थः । तदेतदतीव गर्हितमिति भावः । न च तत्सुखे वास्तवत्वमपि यतः स्वप्नायितं नश्वरत्वमेव दोषाय अपितु दुःखमयत्वमपीत्याहुः परतन्त्रं राज्याद्यनेकाङ्गाधीनतामयं भवत्वपि तन्नाम यद्यन्यन्महासुखं स्वतःसिद्धं न स्यादित्याहुः—हित्वेति । तत् सकलनिगमप्रसिद्धमनिर्वचनीयं परमपुरुषार्थरूपं सुखं हित्वेति न केवं वा परतन्त्रं किन्तु स्वत एवात्मनि प्रकाशमानात् त्वत्तः सकाशादनीहैरेव भक्तैर्लभ्यमिति ॥ २८ ॥

अतोऽस्माकं परमकृपणानामनीहत्वाभावादात्मनि तत्र सिद्ध्येदिति स्वयमेव स्वं प्रकटयितुं तद्व्याघातकं बन्धं विमोचयेत्याहुः—तन्न इति । तत्तस्मात् त्वन्मायाकृतकार्पण्याद्धेतोः तदुद्दिष्टेत्यर्थः । नोऽस्मान् त्वमेव विमोचय यतो भवान् प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतः यद्वा अकारप्रश्लेषेण न विद्यते भवः श्रेयो येषु तान् परमार्त्तानित्यर्थः । मागधेति नाममात्रेणैव जरासन्धः तत्त्वतस्त्वस्माकं कर्मपाश एवायं मूर्तिमान् तस्मादित्यर्थः । अन्यत्तैः । यद्वा अन्यथा तस्येदृशी शक्तिर्न स्यादित्याशयेनाहुः—य इति ॥ २९ ॥

हे उदात्तचक्रेति चक्रग्रहणमात्रेणैव भग्न इति भावः नृलोके निरतमिति मनुष्यलोके क्रीडापरमित्यर्थः ॥ ३० ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कश्चित् किं त्वदीयं निदेशनम् आज्ञाम् अतियाति किम्वा तन्निरपेक्ष एव जनः स्वकर्मानुभवति तत्र विद्मः कर्मानुगुणमीश्वरो नियच्छतीत्यविरोधनिष्कर्षस्य दुर्विज्ञेयत्वमुक्तं भवति ॥ २७ ॥

मृतकेन शरीरेण धुरं वहामः शरीराख्यभरं वहामः ॥ २८ ॥ वियुङ्क्ष्व वियोजय अधीन् प्रजान् ॥ २९—३० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेषां विज्ञप्तिमेवाह—षड्भिः । तावच्छरण्यत्वोपयुक्तगुणविशिष्टं सम्बोधयन्तः शरणं व्रजन्ति—कृष्णकृष्णेति । "कृषिर्भूवाचकः शब्दः" इत्यादिना निरुक्तेन कृष्णशब्देन निखिलजगतानादरेण सर्वलोकानन्दकरत्वमत एव वैषम्यनैर्घृण्यादिराहित्यञ्च विवक्षितम् अप्रमेयात्मन् अपरिच्छेद्यस्वरूप ! अनेन अस्मदन्तरात्मतया ऽस्मद्दुःखं जानास्येवेति विवक्षितम् अत एव सर्वज्ञत्वञ्च प्रपन्नभयभञ्जनेत्यनेन वात्सल्यं विवक्षितं त्वां शरणं रक्षणोपायं यामः व्रजामोऽध्यवस्यामः यातिरत्रगत्यर्थः प्रावण्यस्य गतिपूर्वकत्वात् गत्यर्थानां बुद्ध्यर्थत्वात् कार्पण्यद्योतनायात्मनः विशिंषन्ति—भवभीताः भवशब्दोऽत्र सांसारिकमरणदुःखपरः भवाद्भीताः, पृथग्दृशः ( पृथग्दर्शिनः ) भिन्नमतयोऽज्ञाः तद्भयनिवर्तनोपायानभिज्ञाः इति यावत् ॥ २५ ॥

प्रपन्नभयभञ्जनेत्यनेनाप्रपन्नजननमरणभयाभञ्जनत्वं सूचितं तदेव विवृण्वन्तः प्रणमन्ति—लोक इति । तृतीयस्कन्धे ब्रह्मस्तुतौ पठितोऽप्ययं श्लोको विवक्षितसाम्यादर्थसौष्ठवाच्च अत्र विपर्यते यो लोको जनः विकर्मणि विविधे कर्मणि वैषयिकसुखार्थे कर्मणीति यावत् निरतः त्वदुदिते पञ्चरात्रगीतादिमुखेन भवतोपदिष्टे भगवदाराधनात्मके कुशले श्रेयस्साधने स्वानुरूपे च शरणवरणादिरूपधर्मे यावत् प्रमत्तः अनवहितस्तावत्तस्य यो जीविताशां सद्यः छिनत्ति तस्मै अनिमिषाय कालात्मने तुभ्यं नमोऽस्तु ॥ २६ ॥

न ह्येतावता लोकहिताचरणैकशीलस्य तव वैषम्यमस्तीत्यभिप्रयन्त आहुः—लोक इति । भो जगत ईश्वर ! त्वं सतां रक्षणाय खलानां दुष्टानां निग्रहाय च कलयांशेन बलभद्रेण सह अवतीर्णः जगतः आद्यः आदौ भवः कारणभूत इति वा सम्बन्धः खलनिग्रहेण विना सद्रक्षणासम्भवात्तस्यापि तादर्थ्यात् केवलहितैककारीत्वमिति भावः । यद्वा खलानां निग्रहस्यापि तेषामन्ततो हितत्वे पर्यवसानात्सोपि हितमेवेति भावः । तर्ह्येवम्भूते सति मयि कुतः कश्चित् दुःख्यतीत्यत्र कारणद्वयं सम्भावयन्तोऽन्यन्न विद्म इत्याहुः—हे ईश ! कश्चिज्जनस्त्वदीयं निदेशमाज्ञामतियात्यतिक्रामति किम्वा स्वकृतं पापफलं प्राप्नोति तदुभयव्यतिरिक्तं कारणान्तरं न विद्मः अन्यतरन्निश्चेतुं न क्षमा इति वा कर्मानुरूपम् ईश्वरो नियच्छतीत्यविरोधः ॥ २७ ॥

प्रकृतं स्वदुःखं निवेदयिष्यन्तस्तावदधुनैव न क्लिश्यामः किन्तु सदापीत्यभिप्रयन्त आहुः—स्वप्नायितमिति । हे ईश ! नृपसुखं यन्नृपाणां सुखं तत्स्वप्नायितं स्वप्नसुखतुल्यं क्षणिकमतितुच्छञ्चेत्यर्थः । तत्र हेतुत्वेन विशिंषन्ति-परतन्त्रमिति । परतन्त्रं कर्मायत्तम् अतोऽस्माकं बन्धनात्पूर्वमपि न सुखमिति भावः । ननु कल्याणतरनृपदेहसम्बन्ध एव सुखरूप इत्यत आहुः—शश्व-

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिति । मृत्युरेव सदा भयमभितोभ्यो यस्य तेन मृतकेन शवतुल्येन देहेन धुरं वहाम मृतकतुल्यशरीरा राज्यभारं वहाम इत्यर्थः । मृतकेनेति कर्मणः करणत्वविवक्षया तृतीया यद्वा लोके मृतकेनोपमानेन या धूर्भारस्तादृशीं धुरं भारं वहाम इत्यर्थः । नहि शवं वहतां तत्सम्बन्धः सुखरूपः किन्तु भारापादकतया दुःखरूप एव ( तथा नृप एव ) तथा नृपदेहसम्बन्धोपीति भावः । अतो हे ईश ! त्वच्छक्तः त्वदनुग्रहादित्यर्थः । यद्नीहैः निष्कामैः लभ्यमात्मनि त्वयि विषये सुखं तद्धित्वा अत एव नितरां कृपणास्तव मायया मोहिता इति शेषः । इह लोके क्लिश्यामहे ॥ २८ ॥

प्रकृतमात्मदुःखं निवेदयन्तस्तन्निराकरणं प्रार्थयन्ते—तन्न इति । प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतेति सम्बोधनं अनुकल्पविधानधुना बद्धांश्च नोऽस्मान् मगधाह्वयो जरासन्धव्याजरूपो यः कर्मपाशस्तस्माद्वियुंक्ष्व वियोजय भवद्भिरेव विक्रम्य ततो निष्क्रम्यतामित्यतो मागधं विशिंषन्ति—य इति । अयुतसङ्ख्यानां मतङ्गजानां वीर्यं बलमेक एव बिभ्राणः भूभुजोऽस्मान् सिंहोऽवीः मेषीरिव भवने दरोधं निरुद्धवान् तथाभूतमगधाह्वयकर्मपाशादिति सम्बन्धः । न वयं निर्गन्तुं शक्नुम इति भावः ॥ २९ ॥

किञ्च भवदीया वयमित्यस्मान् भृशं बाधत इत्याहुः—यो वा इति । भो उदात्तचक्र उद्यतसुदर्शन ! छिन्नवक्रत्वः अष्टादशवारं त्वया सह मृधे युद्धे प्रवृत्ते सति तत्र सप्तदशकृत्वो भग्नः पराजितः खलु पश्चादनन्तं वीर्यं यस्य तमपि नृलोकनिरतं मनुष्यचेष्टामनुवर्त्तमानमित्यर्थः । हेतुगर्भमिदम् अतस्त्वां सकृज्जित्वा प्राप्तदर्पः युष्मत्प्रजाः भवदीयानस्मान् रुजाति पीडयत्यतस्तत् सुखं विधेहि कुरु ॥ ३० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथग्धियः यथार्थज्ञानशून्याः ॥ २५ ॥

अयथार्थज्ञानी किङ्करोति किञ्च तस्य फलमिति तत्राह लोक इति । उक्तार्थोयम् ॥ २६ ॥

भगवानत्र किमर्थमवतीर्ण इति तत्राह—काल इति । चशब्दः एवार्थे समुच्चये वा सतां रक्षणाय खलानां दुष्टानां निग्रहाय इह जगत् अस्मिन् जगति कलयाऽवतीर्णो भगवानिति किमयदन्तो एतद्द्वयं विना नान्यत् कार्यं किं न किमपि कुतः कालेः तत्तत्काले तत्तत्कार्यसाधनसमर्थत्वात् कः खलः कोवाऽसन्निति विशिनष्टि—कश्चिदिति । हे ईश ! कश्चिज्जनस्त्वदीयं निदेशमतियाति अतिक्रामति स खलः किं सुकृतमृच्छति किंस्वित् त्वदीय निदेशमतियाति लङ्घयति सोऽसत्किं सुकृतमृच्छतीति वयं न विद्मः एकः सुखच्छेदकं लोकम् एकः सुखकरम् ऋच्छतीति भवान्वेत्तीति वाक्यार्थः "अतिस्यादधिकार्थोक्तौ प्रशंसायमतिक्रमे" इति ॥ २७ ॥

स्वर्गादिसुखस्य निर्विषयत्वेन राज्यसुखात्परं न किमपीति केषाञ्चित्प्रवादस्तत्राह—स्वप्नायितमिति । स्वप्नायितं स्वप्नवत् क्षणिकं तदपि न स्वाधीनमित्याहुः—परतन्त्रमिति । तत्र तन्नित्यमित्याशयश्च तन्मरणभयोपेतेन मृतकेन शवकल्पेन शरीरेण राज्यधुरं वहामः इत्यस्यान्यत्किं सुखमस्तीति तर्हि तद्धानौ बहायासात्क्लेशः स्यादिति तत्राह—हित्वेति । यदनीहलभ्यं निवृत्तिमार्गस्थैः साध्यमात्मनि सुखं तद्धित्वा कृपणा वयं क्लिश्यामहे एवंविधं ज्ञानमस्तिचेत् किमिति क्लेश इत्यत उक्तं तवेति ॥ २८ ॥

किमिदानीमावश्यकं तद्वद किमवद्धुमिच्छानुवादेनेति तत्राह तन्न इति । वियुंक्ष्व वियोजय अयुतमतङ्गजवीर्यम् अयुतगजपराक्रमं बिभ्रत् ॥ २९ ॥

उदात्तम् उन्नतं चक्रं सैन्यं यस्य स उदात्तचक्रः आशु च आश्वेव तस्य प्रतिक्रियाम् ॥ ३०—३४ ॥

---

## श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

लोके भवानित्यादि । जगदिनः जगत्प्रभुः कलया बलदेवेन ॥ २७-४२ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दूतस्तेषां वचनान्याह—कृष्णकृष्णेति षड्भिः । ऐश्वर्यादयो धर्मा भगवदीयाः क्रमेण निरूप्यन्ते भगवानेव हि जीवानां स्वगुणैर्मोचक इति तत्रैश्वर्यं निरूपयन्ति, आदरे वीप्सा ऐश्वर्यैनैश्वर्यबाधकम् अदृष्टकालादीनां बाधकत्वात् साधारणाधिकारित्वात् कथं भवतां दुःखनिवृत्तिरिति चेत्तत्राह—अप्रमेयात्मन्निति । प्रमातुं योग्ये हि कालादिविचारः तदयोग्ये तथाप्युदासीनो भवेदिति आशङ्क्याहुः प्रपन्नभयभञ्जनेति । "सङ्ग्रामे विप्रपन्नानाम्" इत्यादिवाक्यात् प्रपन्नभयनिवारकत्वं तवावश्यकत्वम् अतो वयं प्रपन्ना भवाम इत्याहुः—वयं त्वां शरणं याम इति । जरासन्धाद्विमोकपक्षं वारयन्ति भयभीता इति न ह्येकस्माद्भयात् कश्चिन्निवृत्तिं वाञ्छति सर्वभयनिवृत्तिसम्भवे बहिर्मुखानां संसारे सर्वतो भयं तदाहुः—पृथग्धिय इति । अनेन ज्ञानादिपक्षाः निवारिताः ॥ २५ ॥

ननु, सर्वे येन प्रकारेण संसारनिवृत्तिं वाञ्छन्ति तेनैव प्रकारेण संसारो निवर्त्तनीयः किं मच्छरणागमनेनेत्याशङ्क्याहुः—लोके विकर्मनिरत इति । कालरूपश्च त्वमेव अतस्त्वच्छरणागमनेनैव भयनिवृत्तिः नान्यथा यतस्तवाज्ञोल्लङ्घने त्वमेव भक्षयसि आज्ञोल्लङ्घनं प्रपञ्चयन्ति, विकर्मणि निषिद्धे विहितोल्लङ्घने वा निरतः तदेवादरेण करोति लोकस्य तत्रैव महती श्रद्धा कुशले विहिते प्रमत्तः असावधानः तत्पुनरीश्वरवाक्योल्लङ्घनरूपमिति वक्तुमाहुः—तवेदिति इति ! वीर्यवता वेदादिकर्त्रा त्वयैव तन्निरूपितं तत्रापि भवद्धर्मे भवत्पूजारूपे तन्त्रोक्ते साक्षाद्भगवतैवावतीर्णेन निरूपितं तत्रापि च श्रवणादिरूपे त्रिविधं कर्म भगवता निरूपितं वैदिकं पाञ्चरात्रं भागवतञ्च उत्तरोत्तरं प्राणिनामश्रद्धा अतः प्रमत्तः भगवानपि प्रमत्त इव न तूष्णीं तिष्ठति यतो जगत्कर्त्ता तदाहुः यस्तावदिति सद्यश्छिनत्ति अन्यथा प्रलयो न सम्भवेत् जीवधर्मापेक्षया ब्रह्मधर्मा विशिष्टा इति तावदिति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यावत्प्रमत्त एव तिष्ठति आशोल्लङ्घनसमनन्तरमेव अथ तत्तारणं प्रमाणं वा स्वानुभवरूपं निरूप्यते एतत्करणे यो गुणः प्रधानभूतः तं निर्दिशति—बलवानिति । साक्षान्मारणे न ज्ञायते न हि मरणे जन्मान्तरे वा मरणस्मृतिरस्ति अतो जीविताशामेव रोगादिना निराकरोति येन सर्वेषामेव मरणप्रतीतिर्भवेत् सर्वथाऽऽशोल्लङ्घने महान्तं व्याध्यादिकमुत्पादयतीत्यर्थः । जीववद्भगवानपि कदाचिदसावधानो भवेदिति आशङ्कायामाहुः—अनिमिषायेति । अतिसावधानाय अतस्तस्मै नमः पूर्वापराधक्षमापनार्थं शरणागतिस्तु मोक्षार्था अपराधे विद्यमाने साधनैरपि मोक्षो दुर्लभदुर्लभ इति ॥ २६ ॥

एवमैश्वर्यवीर्ये निरूप्य यशो निरूपयिष्यन्तः स्वोद्धरणाभावे तत्र न्यूनतां भावयमानाः सिद्धान्तापरिज्ञानात् पृच्छन्त इवाहुः—लोके भवानिति । जगदिनो जगत्स्वामी भवान् लोके कलया सहावतीर्णः ससहायः तत्र प्रयोजनद्वयं सद्रक्षणाय खलनिग्रहाय चेति । ईश्वरः साधारण्येन पालनार्थमेव तथा करोति सुतरां विशेषप्रयत्नवान् चकाराद्भक्तरक्षणार्थम् एवं त्रिविधकार्ये सन्दर्भेऽप्यस्मास्वेतादृश्यः स्तुष्ट्यः अनीश्वरः कारणकार्यप्रेरकस्य तव निदेशमाज्ञामतियाति अनर्थादिति चेत्तत्राहुः—ईशेति सम्बोधनमनुल्लङ्घ्यवाक्यत्वबोधनार्थं—

"मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ।
सकृदेव प्रपन्नानां तवास्मीति च यो वदेत् ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" ॥

साधारणस्तु स्वप्रारब्धमनुभवतीत्याह—किश्वा जन इति । एवं भगवद्वाक्यं साधारणमिति मन्यमाना वयं दुःखं वानुभूय तदत्र निर्णीतं न विद्मः दुःखानुभवो न निर्णायकः शास्त्रमात्रोच्छेदप्रसङ्गात् अतः स्ववाक्यपरिपालनार्थं मोचयेति तात्पर्यम् ॥ २७ ॥

ननु, प्रत्यक्षविरोधिनं सन्दिग्धमिमं मार्गं विहाय ज्ञानमार्ग एव सर्वत्यागात्मको निरभिमानात्मको वा कुतो नाश्रियन्त इत्याशङ्क्य परिहरन्तो भगवदीयं निरूपयन्ति—स्वप्नायितमिति । वस्तुतो ज्ञानमार्गयोग्यो विषयोऽस्ति तथाप्यपरित्यागे हेतुः तव माया भ्रान्तिरूपा अतो वाक्यं वा पालय मायां वा व्यावर्तयेति स्वप्नो मायामात्रमिति स्थितं नृपाणां सुखं लोके प्रसिद्धं तन्मायिकमेव व्यवहारे कापट्याधिक्यात् मायाहि कुहकाधीना अन्तर्यामिप्रतिनिधित्वेन लोको निरूपयन् भगवान् प्रतिकूल इति ज्ञापयतु सुखं बिभ्रीनहि—परतन्त्रमिति । अन्तर्यामिणः सख्युः अनुचितमेतदित्याशङ्क्य सम्बोधयति—ईशेति । माया स्वकार्यभोग्या तत्यागे भोग्येति ज्ञापयितुं साधनमाह—मृतकेनेति चेतनसम्बन्धाभावाय तथा वचनं मायाकार्यं साधनं स्पष्टमित्याह—शश्वद्भयेनेति । तेन भारवहनमत्यन्तं मायामोहितकार्यं लोकाः मृतकमेव कथं चिद्वहन्ति त्यजन्ति वा ननु मृतकेन किञ्चिद्वहन्ति वयन्तु तेन धुरं वहाम इति स्पष्टोऽस्मासु मोहः ननु सुखासक्त्या असाधनेऽपि प्रवर्तते प्रकारान्तरेण सुखमलभमान इति चेत्तत्राह—हित्वा तदात्मनीति । सुखस्य परमोत्कर्षमाह—तदिति । आत्मनीति गमनक्लेशाभावप्रक्रियासं व्यावर्तयति—अनीहलभ्य इति । नुशब्देन न्यायसिद्धान्तवचिदानन्दात्मपक्षो व्यावर्त्यते सुखप्राप्तिश्चानारम्भणीहया च निरोधाद्विनीहात्मकमयतीति "सर्वेहोपरतिस्तनुः" इति वाक्यात् सुखप्राप्तिः तथाप्यन्याभिनिवेशाद्योगं भोक्ता तारतम्यं जानातीति न्यायात् विषयसुखमेवोत्कृष्टं भविष्यति अन्यथा चित्तं कथं प्रवर्ततेत्याशङ्क्याह—क्लिश्याम इति । विषयनीहलभ्यमिति पाठे स्वस्मरणेन तत्सुखस्य सुलभता निरूपिता क्लेशस्यानुभवसिद्धत्वाद्धिमरीचिकात्वेन अलौकिकत्वेनानान्तरीयकत्वाच्च क्लेशपर्यवसानानुभवे घृतत्वादतिकृपणाः अनालोचनेन याचनादिना अतिदीनाः तत्र हेतुस्तवैव माया अतो विज्ञापना अन्यथेहविषयेच्छा न स्यात् वैराग्यहेतूनामानन्त्यात् ॥ २८ ॥

एवं श्रियं निरूप्य भगवतो ज्ञानशक्तिं निरूपयन्तः तत्फलं मोक्षं प्रार्थयन्ते—तन्नो भवानिति । ब्रह्मज्ञानं मोक्षहेतुः तदक्षरम् अवतारे तस्य पादत्वं भक्तार्थमेवावतार इति भक्ताज्ञापारव्यभिरेकेणापि अत एव तवाङ्घ्रिद्वयं प्रणतशोकहरं भवति तेन तव या ज्ञानशक्तिः सा चरणेन सम्वलिता प्रणतानां शोकं नयति तथापि नो भवत्समानकालावतारात् अतो बद्धान् वियुङ्क्ष्व मध्येताहशलौकिकबन्धनान्मोक्ष इति ज्ञानसाध्यं तत्कथमसाधनेन साध्यप्रार्थनेति चेत्तत्राहुः यमधो मागधो जरासन्धः कर्मपाशस्यैव नामान्तरं तत् "क्षीयन्ते चास्य कर्माणि" इति वाक्यात् देहनाशान्ता क्षित्वा अधिककर्मणोत्पत्तिसम्भवात् न भोगेन क्षयसिद्धिः ननु मागधस्य कर्मत्वे किं प्रमाणं तत्राहुः । यो भूभुज इति । नहि कर्माधीनः कश्चिदयुतमतङ्गजवीर्यो भवति अतो भूभुजामस्माकं भोगहेतुभूतमाधिभौतिकं कर्म विचार्य स्वयमाधिदैविकः केवलं ज्ञानैकनिवृत्तो भवति नहि तस्मै राज्यं दत्वा तत्सेवका एव कुतो न भवन्ति तत्राहुः—मृगराडिवाव्यारिति । सहि भक्षणार्थमेव मेषान् स्थापयति तथाऽस्मानपि प्रमथनाय भक्षाय वधार्थमेव स्थापितवानित्यर्थः । अतस्तामसदेवताये समर्पितानां तत्रैव प्रवेशात् कालान्तरेऽपि मोक्षो नास्तीति मरणात्पूर्वमेव वयं मोचनीया इति भावः ॥ २९ ॥

तद्भवने निरोधात् न पलायनसम्भावना भगवतो भोगासक्तिं निवारयन्त इव भक्तासक्तिं प्रकटयन्तः भगवदीयत्वं स्वस्य वदन्तः भगवतो वैराग्यशक्तिमुररीकुर्वन्तः वैमनस्यनैर्घृण्यपरिहारार्थं पूर्वं भगवद्वृत्तान्तमाहुः—यो वै त्वयेति । वस्तुतस्त्वष्टादशमेऽपि कार्यस्यासिद्धत्वाद्भङ्ग एव भक्त आह—द्विनव कृत्व इति । प्रजापतिर्वा विधाता न तस्य जयहेतुरिति रजस्तमोगुणावेव इतरसंश्लेषाधिदैविकाविभेदापन्नौ हेतू इति नव संख्यायाः आवृत्तिरुक्ता भगवन्माहात्म्यज्ञताधिदैविकैरेव भङ्गं व्यावर्तयितुमाह—उदात्तचक्रेति । चक्रेण कालस्वरूपेण भक्षणार्थं व्यावर्तया मृधे स भग्नः अस्मिंस्तु नाथ तिरोहितं किञ्चिदिति सूचितं ननु जयपराजययोरव्यवस्थितत्वात् कथमेकस्यैव पराजय इति चेत्तत्राहुः—भवन्तमनन्तवीर्यमिति—परिमितबलानामेव जयपराजयव्यवस्था तथापि कपटेन एकीकृत्य प्रकटित्वात्तद्विरोधाभावाय नृलोकनिरतं सतु भुवाक्रम्यावेत गूढहेतोर्वा त्रिरथा रुद्रदर्पो जातः वयन्तु केवलं भक्तपरिपाल्य एव मर्यादापरित्यागेन पुष्टिमार्गावलम्बनात् अतो बद्ध

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भवदपेक्षाभावः तेन सर्वथैव बाध्याः अतो युष्मत्प्रजाः रुजति पीडयति तर्हि लोकन्यायस्य स्वीकृतत्वात् कथं मोचनमिति चेत्तत्राहुः—हे अजितेति । तव स्वरूपमजित इति द्रव्यसंस्कार-विरोधेऽदृष्टं बलीय इतिन्यायेन लीलाप्रदर्शनं दूरीकृत्य अस्मान् पालयन् तत् स्वस्याजितत्वं विधेहि अनेन सर्वे सन्देहाः अनुपपत्तयश्च निराकृताः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेषां विज्ञप्तिमाह षड्भिः । तत्र ते प्रथमं शरणमाश्रयन्ते,कृष्ण कृष्णेत्यादरे द्विरुक्तम् अप्रमेयात्मन्निति त्वत्स्वरूपमज्ञात्वापि प्रपन्ने इति प्रपन्नपालकत्वमेव ज्ञात्वा शरणं यामः पृथग्धियः तद्भक्तौ प्रार्थनां परित्यज्य त्वत्तः पृथग्भूते स्वीयदुःखत्राणे एव धीः येषां ते ॥ २५ ॥

भवभीतत्वं विवृण्वन्तो नमन्ति-लोकोऽस्मद्विधः कुशले कर्मणि प्रमत्तः किं पुण्यकर्मणि न त्वदुदिते किं ज्ञानयोगसाधक-शमदमयमनियमादिकर्मणि न भवद्भजने त्वद्भजनं स्व इति तदेव लोकस्य वास्तवं स्वं धनम् भवदुःखनिवर्तकं त्वत्प्रेम-सुखभोगप्रदायकं चेतिभावः । किन्तु विकर्मणि स्त्रीपुत्रादिवैष-यिकसुखसाधके कर्मणि नितरां रतः किञ्च तत्सुखमपि दुर्भ-गस्यास्य न सिद्ध्यतीत्याहुः-यस्तावदिति । अनिमिषाय कालाय स्वच्छाकिरूपाय नम इति त्वदभक्तस्य तेन तथा करणं समुचित-मेवेति भावः ॥ २६ ॥

किञ्च साक्षादेव त्वां त्वद्भक्तांश्च यः कश्चिदिह द्वेष्टि स कथं कालसंहृतो न भवतीत्यस्माकं महान् विस्मय इत्याह, लोक इति । जगदिन जगदीश्वरः "कलना कालयोः कला" इति नानार्थकोशात् कलया कालेनावतीर्णः यद्वा बलदेवेन सह अन्यः खलः कश्चिज्जरासन्धादिस्त्वदीयं निदेशमतिक्रामयति साधून् द्वेष्टि खलान् पालयतीत्यर्थः । तत्र खलनिग्राहके त्वय्यवतीर्णेऽपि यत् खलो वर्त्तते तत् किं स खलः स्वकृतमृच्छति स्वप्रारब्धकर्म-फलं सुखं भुङ्क्ते तथा सद्रक्षके त्वय्यवतीर्णेपि साधुजनस्तत्पीडितो यद्भवति तत् किं सोऽपि स्वकर्मफलं दुःखं भुङ्क्ते इदं न विद्मः निश्चेतुं न शक्नुमः त्वत्तोऽपि कर्म-योगस्य जडस्य प्राबल्यमनुचितमिति भावः ॥ २७ ॥

ननु, तर्हि यूयं तावत् के मद्भक्ता मद्विद्वेषिणो वा ? तत्र न वयमुभये किन्तु सांसारिका जीवाः साम्प्रतं त्वां प्रपन्ना इत्याहुः-स्वप्नायितम् अचिरस्थायित्वात् स्वप्नतुल्यम् अमात्यसुहृत् सेनाद्यधीनत्वात् परतन्त्रं नृपसुखं नृपा वयमित्यभिमान-मात्रेणैव सुखं वस्तुतस्तु धुरं सन्धिविग्रहाद्यायासबाहुल्यप्रद-त्वान्महाभारमेव शश्वद्वहयं यस्मिंस्तेन मृतकतुल्येन शरीरेण वहामः अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामाः सन्तः त्वां नाश्रिता इत्याहुः । तत्सकलसज्जनैः स्तुतत्वात् प्रसिद्धं ननु नृपसुखमिव तैर्निन्दितम् आत्मनि स्वतः सिद्धमेव ननु परतन्त्रं । स्वत् त्वत्तः सकाशादेव ननु दुर्विषयेभ्यो जातम् अनीहै-र्निष्कामभक्तैः लभ्यं ननु सकामैः लब्धुं शक्यं सुखं हित्वा क्लिश्यामः ॥ २८ ॥

तस्मात्त्वन्मायाकृतं कर्मबन्धं त्वमेव, निवर्तयेति पार्थयन्ते तत्र इति । वियुङ्क्ष्व विमोक्षय मगधो जरासन्धस्तत्संज्ञकात् कर्मपाशात् भवद्भिश्च विक्रम्य निर्गम्यतामिति चेत्तत्राहुः यं इति । य एक एव अयुतमतङ्गजानां वीर्यं बिभ्रत् सन् स्व-भवने भूभुजो ऽस्मान् रुरोध सिंहोऽवीर्मेषीरिव ॥ २९ ॥

किञ्च स त्वद्विद्वेषी संप्रत्यस्मान् त्वत्प्रपन्नान् ज्ञात्वा प्रति-दिनमधिकं बाधत इत्याहुर्यो वा इति । हे उदात्तचक्र उत्कर्षेण धृतसुदर्शन ! छिन्नचक्रत्वः अष्टादशवारान् त्वया सह सङ्ग्रामे वर्त्तमाने सप्तदशकृत्वस्त्वया भग्नः पराजितः । नृलोक निरतं नृणां पलायनधर्मजिघृक्षाकौतुकिनं त्वां सकृदेकवारमेव जित्वा ऊढदर्पोऽस्मान् युष्मत्प्रजाः रुजति पीडयति तत्र यत् युक्तम् तत् विधेहि ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

राज्ञां विज्ञप्तिं तल्लिखितपत्रिकाञ्च कथयति कृष्णकृष्णेति षड्भिः । आदरे द्विरुक्तिः हे कृष्ण ! सदानन्द अप्रमेयात्मन् इयत्तानवच्छिन्न ! परमात्मन् हे प्रपन्नभयभञ्जन ! प्रपन्नानां भवभयभञ्जन वयं सांसारिकानन्दलुब्धाः पृथग्धियः विभिन्न-बुद्धयः पृथक्पृथक् अन्तःकरणपरिच्छिन्नस्वस्वरूपाः जीवा-त्मानः भवभीताः त्वां शरणं यामः ॥ २५ ॥

परमात्मपरमात्मविवेकपूर्वकं प्रपन्नानां संसारभयभञ्जनं भगवन्तं शरणीकृत्य स्वविमुक्तानान्तु संसारभयदोऽसीति वदन्तो नमस्कुर्वन्ति—लोक इति । यावत् लोको जनो विक-र्मणि निषिद्धे काम्ये च संसारप्रदे कर्मणि नितरां रतः कुशले मुक्तिप्रदे गीतापञ्चरात्रादिषु त्वयोदिते त्वदाराधन-रूपे स्वे स्वधर्मे प्रमत्तोऽनवहितः तावदेवास्य जनस्य यः सद्यो जीविताशां छिनत्ति पुनःपुनर्जन्ममरणलक्षणं संसारं ददाति तस्मै अनिमिषाय कालात्मने तुभ्यं नमः ॥ २६ ॥

ननु, प्रपन्नभयभञ्जनेत्यनेन प्रपन्नमुक्तिप्रदत्वं जीविताशां छिनत्तीत्यनेन स्वपराङ्मुखसंसारप्रदत्वं मम भवद्भिर्वर्णितं तत्र वैषम्यं नैर्घृण्यञ्च प्राप्नोतीत्यत्र नेत्याहुः—हे ईश ! जनः स्वकृतमृच्छति प्राप्नोतीति वयं किं वा न विद्मः अपितु विद्मः मोक्षप्रदत्वे शुभं संसारप्रदत्वेऽशुभं जीवकृतं कर्म निमित्तमतो न वैषम्यनैर्घृण्यं त्वयि भवतः तथाच सूत्रं "वैषम्यनैर्घृण्ये न कर्मसापेक्षत्वात" (२·१·३४) इति. अत एव जगदिन जगदीश्वरोपि सर्वेस्मोपि भवान् सद्रक्षणाय खलनिग्रहणाय च कलया बलेन सह लोके अवतीर्णः खललक्षणमाहुः—यः कश्चित्त्वदीयं निदेशमाज्ञामनियानि अति-लङ्घयति स अन्यः खल इत्यर्थः । तद्विपरीतः सदिति सल्लक्षण-मर्थादुक्तं भवति ॥ २७ ॥

जरासन्धकृतनिरोधादिदुःखमप्यस्मत्कर्मफलमेव तद्विमुक्ति-मपि भवतो नृपसुखार्थं न प्रार्थयामः किन्तु सुखपूर्वक-त्वद्ध्यानार्थमित्याहुः—स्वप्नायितमिति त्रिभिः । हे ईश ! यद्धुरं शश्वद्वह्यं यस्मिन् तेन मृतकेन मृतकतुल्येन देहेन धुरं

इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः ।
प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥

श्रीशुक उवाच ।

राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ।
बिभ्रत् पिङ्गजटाभारं प्रादुरासीद्यथा रविः ॥३२॥

*विज०पाठः (गायन् गिरा मधुरया प्रियकर्माणि जन्म च ।
द्रावयन्नघसङ्घांश्च लोकान्निरमयन् भृशं ।)

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहकलत्रादिचिन्तां वहामस्तत् नृपसुखं नृपाणां सुखं स्वप्नायितं स्वप्नसुखतुल्यमनित्यमित्यर्थः । परतन्त्रं परमतात्मभूतप्राकृतदेहगेहादिकं तत्तन्त्रम तदस्माकमिष्टं नेति भावः । किमिष्टमित्यतः स्वेष्टं सूचयन्ति-हित्वेति । यत् त्वत्प्रसादात् त्वत्तः अनीहैर्निष्कामैर्लभ्यम् आत्मनि सुखं ध्यानानन्दं हित्वा तव मायया शब्दादिविषयरूपया कृपणाः क्लिश्यामहे ॥ २८ ॥

तत्तथाभूतान् नृपसुखात् विरक्तान् त्वद्ध्यानसुखकामान् नोऽस्मान् मगधो जरासन्धस्तत्संज्ञककर्मपाशात् जरासन्धरूपेणास्मत्कर्मैव पाशस्तस्मात् विमुञ्च विमोचय बहूनामेकेन निरोधे कारणमाहुः--य इति । य एक एवायुतमतङ्गजवीर्य्यं बिभ्रत् सत भूभुजो बहून् भूपालान् स्वभवने रुरोध मृगराट् सिंहः अवीः मेषीरिव ॥ २९ ॥

किञ्च भवद्भिर् स भवदीयाज्ञो विशेषतो बाधते अतो यत्र यद्युक्तं तत्कुर्वित्याहुः---यो वा इति । हे उदात्तचक्र उद्धृतं आत्तं गृहीतं चक्रं येन स तथाभूत ! यः छिन्नचक्रत्वः अष्टादशवारान् त्वया सङ्ग्रामे प्रवृत्ते सति सप्तदशकृत्वः त्वया खलु भग्नः पराजितः पश्चादनन्तवीर्य्यमपरिमितबलमपि नृलोकनिरतं नृलोककार्यविशेषं पलायनेनैव साधयन्तं सकृज्जित्वा ऊढदर्पः सन् युष्मत्प्रजा नोऽस्मान् रुजति पीडयति त तत्र यद्युक्तं तद्विधेहि कुरु ॥ ३० ॥

भाषा टीका ।

उन राजा लोगों की तर्फ वह दूत श्रीकृष्ण ! के प्रति विज्ञापन करता है, हे कृष्ण ! हे कृष्ण ! अप्रमेयात्मन् ! हे प्रपन्न भयभञ्जन ! संसार से भीत होकर केवल देव मनुष्यादि भेद देखने वारे हम लोग आपके शरणि में आए हैं ॥ २५ ॥

इस संसार में हमारे सदृश सर्वहि जन जहां पर्य्यन्त शास्त्र से निषिद्ध और सकाम कर्म में प्रीति वारा होकर आपके कहे भए आपके अर्चन रूप निज कुशल कर्म के विषय में असावधान रहताहै इतने हि में यह बलवान् काल शीघ्र हि जरा रोग आदि सम्पादन करके उस अज्ञानी जनकी जीने की आशा का छेदन कर देता है तादृश कालरूप आपके अर्थ हमारा नमस्कार होइ ॥ २६ ॥

हे ईश निज ! भक्तन की रक्षा के अर्थ और भक्त विरोधी दुष्टजनों को दण्ड देने के अर्थ निजकलारूप बलदेवजी सहित जगत्के स्वामी आपने इस लोक में अवतार लियो ऐसा होने पर कोई एक जरासन्ध आदि जन आपके आज्ञा रूप शास्त्र का उल्लङ्घन करने से वर्त्तता है उस शास्त्र का उल्लङ्घन करने से वह जरासन्ध आपके भक्तजन हमको पीडा करता है अथवा हमसे आदि लेकर ये जन अपने किए भए कर्म के फल दुःखको हि प्राप्त हो रहा है इस को हम निश्चय करने को समर्थ नहि हैं ॥ २७ ॥

हे ईश ! आप की मायासे मोहित होने से संसार के विषयन में हम लोग आसक्त हैं इसी कारण आपके अनुग्रह से निष्काम पुरुषों को प्राप्ति के योग्य निज आत्मा में वर्त्तमान जिन आत्म सुख को छोडकर स्वप्न के समान तथा स्त्री आदि के पराधीन जो राजा लोगों का सुख है उस के वास्ते सदा भय युक्त होने से मृतक तुल्य शरीर से स्त्री पुत्र आदि के चिन्ता रूप भारको हम लोग वह रहे हैं इसी कारण इस संसार में हम लोग नाना प्रकार के क्लेश को भोगते हैं ॥ २८ ॥

शरणागत जनों के शोक को हरण करने वारे आपके दोनो चरण हैं इस लिये जरासन्ध रूप कर्म के फन्दा से बँधे हुए हमको आप छुडाइए दशहजार हस्तियों के बलको धारण करने वारे जिस अकेले जरासन्ध ने अपने भवन में हम राजा लोगों को इस प्रकार रोक राखा है कि जैसे अकेला सिंह अनेक भेडन को घेर कर राखे ॥ २९ ॥

हे अजित ! हे उदात्तचक्र ! आपके साथ जरासन्ध का अठारह वार युद्ध भया उस में सत्तरह वार वह आप से हारि गया पश्चात् अनन्त पराक्रम युत होने पर भी मनुष्य चेष्टा को अङ्गीकार करने वारे आपको अठारहवें प्राप्त भया जो जरासन्ध सो आप के प्रजा रूप हमको पीडा करता है इस लिये उस से हमको छुडाइए ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दूत आह—इतीति ॥ ३१—३४ ॥

* प्रियस्य तस्य कृष्णस्य गायन् कर्माणि जन्मच । कृष्णां सङ्घांश्च लोकांश्च द्रावयन् रमयन् भृशम् ॥ इति वीर० पाठः ॥

तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः।
ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३३ ॥
सभाजयित्वा विधिवत् कृतासनपरिग्रहम्।
बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन् मुनिम् ॥ ३४ ॥
अपिस्विदद्य लोकानां त्रयाणामकुतोभयम्।
ननु भूयान् भगवतो लोकान् पर्यटतो गुणः ॥ ३५ ॥
न हि तेऽविदितं किञ्चिल्लोकेष्वीश्वरकर्तृषु।
अथ पृच्छामहे युष्मान् पाण्डवानां चिकीर्षितम् ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

भूयान् महान् गुणो लाभोऽयमस्माकं यत्सर्वलोकवृत्तान्तज्ञानमिति ॥ ३५ ॥

ईश्वरः कर्ता येषां तेषु ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं तन्निवेदनद्वारा तद्दुःखं निवेद्य निगमयति—इतीति। इत्थं महार्त्यां प्रपन्नाः यतो मागधेन सम्यक् गिरिद्रोण्यां बन्धनादिना रुद्धाः अतः पित्रोर्बाला इव भवतो दर्शनकाङ्क्षिणः न केवलं संरोधनात्तेषां मोचनं कार्यं साक्षाद्दर्शनञ्च देयमिति भावः। तस्माद्दीनानां तेषां मङ्गलं क्रियताम् ॥ ३१ ॥

परमर्षिरिति। तदानीं तद्दीप्तेरधिकं प्राकट्यं सूचयति तच्च प्रथमतस्तद्वचनमाननाय श्रीभगवत एव तथाऽभिप्रायात् ॥ ३२ ॥

सर्वलोकेश्वराणां ब्रह्मादीनामीश्वरोऽपि मुदा आसनादुत्थितः सन् शीर्ष्णा ववन्द यतो भगवान् ब्रह्मण्यदेवत्वाद्यशेषात्मसत्कीर्त्यादिगुणप्रकाशनशील इत्यर्थः। सभ्याः पुरोहितादयः अनुगा उद्धवादयः ॥ ३३ ॥

विधिवत् स्वागतादिनीराजनान्तविधिनेत्यर्थः। श्रद्धया प्रीत्या यानि सूनृतानि तैः किम्वा श्रद्धया च तर्पयन् यतो मुनिं परमपूज्यमित्यर्थः। किम्वा श्रीभगवतस्तादृशचेष्टादर्शनादिना परमविस्मयोदयात् कृतमौनम् ॥ ३४ ॥

अपिस्वित्प्रश्ने त्रयाणां लोकानां सर्वब्रह्माण्डगतानामित्यर्थः। ईश्वरकर्तृष्विति वक्ष्यमाणात् तत्र तत्र भवतो भ्रमणमस्मद्धितार्थमेवेत्याह—नन्विति वितर्के निश्चये वा भगवतः परमादरणीयाद्भवतः सकाशात् अभ्यस्तैः यद्वा नन्वहं तत्सर्वं कथं जानामि तत्राह नन्विति गुणप्रभावः ॥ ३५ ॥

कोऽसौ? तमाह—नहीति। ईश्वरकर्तृष्विति लीलया स्वस्य मनुष्यत्वं व्यञ्जयति अथ अतो हेतोः हे अयि पूज्यपादाः एवं पाण्डवानामेव सर्वासु सृष्टिषु निजपरमापेक्षणीयत्वं व्यञ्जितम् ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

शं सुखम् ॥ ३१—३५ ॥

ईश्वरकर्तृषु श्रीभगवत्प्रेरितचिन्तितादिसकलकर्मसु ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीति श्लोको दूतवचनम् दीनानां तेषां राज्ञां शं सुखं विधीयतां क्रियताम् ॥ ३१ ॥

अथ नारदागमनादिकं प्रस्तौति—राजदूत इत्यादिना। राज्ञां दूते ब्रुवति सति परमा द्युतिर्यस्य सः बिभ्रद्बिभ्राणः प्रियस्य भगवतः कर्माणि जन्म च गायन् तं कृष्णं सद्धान् सभ्यसङ्घांश्च द्रावयन्नार्द्रचित्तान् कुर्वन् भृशमितरलोकान् रमयं आविरासीदिति सम्बन्धः ॥ ३२ ॥

तमिति तं नारदं मुदा हर्षेण ववन्दे ॥ ३३ ॥

सभाजयित्वेति। यथाविधि सभाजयित्वा पूजयित्वा कृत आसनपरिग्रहो येन तं मुनिं श्रद्धया मधुरैर्वाक्यैश्च तर्पयन् बभाषे ॥ ३४ ॥

तदेवाह—द्वाभ्याम् अपिस्विति। अधुना लोकानामकुतोभयं न कुतश्चिदपि भयं तदपिस्वित् अभयं कच्चिदिति इष्टप्रश्नः ननु हे ब्रह्मन् लोकान्पर्यटतो भगवतः त्वत्तः अस्माकमयं भूयान् महान् गुणः लाभः यत्सर्वलोकवृत्तान्तज्ञानमिति वाक्यशेषः ॥ ३५ ॥

नहीति। ईश्वरकर्तृषु स्वकर्तृकेषु लोकेषु किञ्चिदपि तवाविदितं न किन्तु सर्वं विदितमेवेत्यर्थः अथातः युष्मान प्रति पृच्छामहे ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अथ त्रयाणां लोकानामकुतोभयमपिस्वित्कुतोऽपि भयं नास्ति हि लोककुशलाकुशलजिज्ञासया पर्यटतो भवतो महान् गुणो भवतीत्याह—नन्विति ॥ ३५ ॥

पक्षिवत्पर्यटताऽनेन मया किं प्रयोजनमत्राह—नहीति। ईश्वरः कर्ता येषां तथा तेषु अथ तस्मात् ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तेषां प्रार्थना आज्ञापनरूपत्वात् दोषाय मा भवत्विति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रपत्तिरूपतां सम्पादयितुं दूतस्तात्पर्यमाह—इतीति। इति ते पादमूलं प्रपन्नाः मागधेन च संरुद्धाः इदं स्मृतेर्बलिष्ठमिति स्मरणेन न सेत्स्यतीति भवद्दर्शनकाङ्क्षिणः दीनानां प्रार्थितदानेन शं विधीयतामिति दूतस्य भगवत्साक्षात्कारे जाते तत्फलस्यैव प्रार्थना येन प्रार्थनाद्वयं दर्शनफलञ्चेति साधकत्रयम् ॥ ३१ ॥

एवं राजसानां भगवद्धर्मेण भगवत्परतां निरूप्य सात्त्विकानामपि भगवत्परतां निरूपयितुं सात्त्विकमुख्यस्य नारदस्य सात्त्विककार्यपरस्य समागमनं निरूप्यते—अन्यथा भगवत्कार्यं राजसमात्रपर्यवसायित्वं स्यात् क्षणमात्रविलम्बेऽपि भगवान् भक्तदुःखे विलम्बं न सहत इति। राजदूते एवं वदत्येव समागत इत्याह— राजदूत इति। वेदानामपि मन्त्रद्रष्टृत्वात् तदानीमागमनमुचितम् अन्येषां बाधकानां तेजोदूरीकरणाय परमद्युतिरिति अधिकारिणो नात्यन्तं वचनमादरणीयमिति शङ्कां वारयितुमाह-बिभ्रत्पिङ्गजटाभारमिति। तपोरूपमेतत् तत्रस्थानां तमोदोषव्यावृत्त्यर्थं यथा रविरिति रविपदेनैव भगवत्सान्निध्ये तमस्सम्भावना सूचिता अन्यथा दिनरात्रिव्यवस्था न स्यात् प्रादुरासीदिति ॥ ३२ ॥

तद्दूतवचस्यागतस्य वाक्यसन्माननार्थं लौकिकसन्माननं निरूप्यते-तं दृष्ट्वेति त्रिभिः। कायिकमानसिकवाचनिकैः तत्र कायिकमुत्थानं वन्दनञ्च सर्वैः सहेति त्रयं हर्षो मानसः हर्षेऽपि कृष्णत्वेनावतीर्ण इति तथात्वमुचितं शिक्षार्थमेतदिति ज्ञापयन्नाह-सर्वलोकेश्वरेश्वर इति। ऋषित्वाल्लोकस्थानीयः गुरुत्वादीश्वरो वा अतोऽवनतिर्न दोषाय सर्वपदेन देवर्षित्वकृतोऽप्युत्कर्षो निवारितः ॥ ३३ ॥

सभाजनं तन्मनःप्रीतिकरणं लौकिकम् ऋषित्वाद्वेदाभिनिवेशी इति तदप्याह—विधिवदिति। ईश्वरधर्मविचारेण कदाचिदनङ्गीकारं कृतं व्यर्थं स्यादिति अत आह—कृतासनपरिग्रहमिति। दत्तासनस्वीकारः परिग्रहः ततो वाचनिकारम्भमाह—बभाषेति। सूनृतैरिति। स हि श्रद्धया तुष्यति तदाह-श्रद्धया तर्पयन्निति। मानसमेतत् सोऽपि मुनिस्तेनैव परितुष्यति ॥ ३४ ॥

वाचनिकं द्वयेनाह-अपिस्विदिति। सर्वलोकाधिकारिणो लोकत्रयस्य गुरुत्वात् तत्कुशलप्रश्न एव कर्तुमुचितः स्तुतिरूपश्च भवति अपिस्विदिति सन्देहगर्भितसम्भावना राज्ञां बन्धनस्य श्रुतत्वात् सन्देहः अकुतोभयमिति स्वतं एवाज्ञानाद्भयं न स्यन्यत इति रहस्यं ननु लोकेश्वरस्य कथं पर्यटनमित्याशङ्क्याह—ननु भूयान् भगवत इति। लोकान् पर्यटतो भगवतस्तव सतो भूयानेव गुणो भवतीत्यर्थः। अतः सर्वलोकहितार्थं परिभ्रमणमित्यर्थः। अनेन तस्य स्तुतिरुक्ता ॥ ३५ ॥

प्रकृतोपयोगिकार्यं प्रष्टुं तस्य ज्ञानमाह—न हि ते विदितमिति। अयं हि ईश्वरस्येच्छाशक्तेराधिभौतिकरूपः यावद्भगवानिच्छति करोति च तत्सर्वमस्य विदितम् ईश्वर इति मूलभूतः काल इति विमर्शः अत ईश्वरेच्छया पाण्डवानां चिकीर्षितं तत्तव विदितमेवेति युष्मान् पृच्छामहे हे आयुष्मन्निति वा अथशब्दो हेत्वर्थः आनन्तर्यपर्यायः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

दूत आह—इतीति ॥ ३१-३४ ॥

तवाकुशलासम्भवादेव कुशलप्रश्नानौचित्यात् लोकानामेव कुशलं त्वां पृच्छामीत्याह—अपिस्विदिति। ननु तदहं कथं जानामीति तत्राह—नन्विति। भगवतस्तव पर्यटतो भूयानयं गुणो यतस्त्वत्त एव सर्वलोकवृत्तान्तज्ञानं भवेदतः पृच्छामीति भावः ॥ ३५ ॥

ईश्वरः कर्ता येषां तेषु अथेति प्रस्तुतो जरासन्धवधो भीमादेव सम्भवेदिति प्रकारं जानन् एव भगवतः पाण्डवचिकीर्षिते प्रश्नोऽयं ज्ञेयः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं राज्ञां वाक्यं श्रावयित्वा दूत आह—इतीति ॥ ३१ ॥

परमा द्युतिः कान्तिर्यस्य सः ॥ ३२ ॥

लोकान् शिक्षयितुं ववन्दे ॥ ३३ ॥

श्रद्धया विधिवत्सभाजयित्वा पूजयित्वा कृतः आसनपरिग्रहो येन तं मुनेर्भयासम्भवात् ॥ ३४ ॥

तदभयप्रश्नमकृत्वैव लोकानामभयं पृच्छति—अपिस्विदिति। ननु निखिलं लोकान् पर्यटतः भवतः सकाशात् भूयान् महान् गुणः लाभः अस्माकमिति शेषः। त्वत्तोऽस्माकं सर्वलोकवृत्तान्तज्ञानं भवतीत्यर्थः ॥ ३५ ॥

ईश्वरः कर्ता येषां तेषु युष्मान् इति बहुवचनं पूजार्थम् ॥ ३६ ॥

---

भाषाटीका।

दूत उवाच।

दूत बोला, कि-जरासन्ध से घिरे हुए और आप के दर्शनकी काङ्क्षा वारे राजा लोग इस प्रकार आप के चरणारविन्दमूल के शरणि भए हैं इसलिये उन दीन राजा लोगोंको सुखका विधान कीजिये ॥ ३१ ॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले कि राजाम का दूत इस प्रकार कहहि रहा है इतनेहि में पीत जटा भारको धारण किये परमतेजस्वी नारदजी सूर्य्य के सदृश प्रकट होते भए ॥ ३२ ॥

इन्द्र आदि सब लोकपालों के ईश्वर श्रीकृष्णभगवान् नारदजीको देख कर सभासद सहित और भृत्यों सहित उठ कर मोद के साथ मस्तक से वन्दना करते भए ॥ ३३ ॥

श्रीनारद उवाच ।

दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ।
भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिवच्छन्नरुचो न मेऽद्भुतम् ॥ ३७ ॥
तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ।
यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥
जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ।
लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥ ३९ ॥
अथाप्याश्रावये ब्रह्म नरलोकविडम्बनम् ।
राज्ञः पैतृष्वस्रेयस्य भक्तस्य च चिकीर्षितम् ॥ ४० ॥

भाषा टीका ।

श्रीकृष्णमहाराजने राजायुधिष्ठिर के रणमासका देखा जहां घर २ में प्रत्यंन्ते प्रकाशमान दीपकन से वह शोभायमान होरहा है और झरोखान से निकसे अगरुधूप से वह मनोहर है जिस में पताका शोभायमान होरही हैं और जिन के शिखरन पर सुवर्ण के कलश तथा उन के नीचें चाँदीकी भूमिका ऐसे २ अनेक भवन कर के युक्त एनादश रणमासको श्रीकृष्णने दूर सेहि देखा ॥ ३४ ॥

सब जनों के नेत्रों के आदरपूर्वक दर्शन के पात्र श्रीकृष्णको आये सुनकर उत्साहसे जिन के जूडा और वस्त्र बन्धन खुल गए ऐसीं स्त्रीजन अपने पतीनको शय्या परहि छोड़ कर तथा गृह के कामकाजको छोडकर शीघ्रहि श्रीकृष्ण के दर्शन करनेको राज मार्ग में चलीं गईं ॥ ३५ ॥

अपने २ महलों पर चढी भईं स्त्रीजन हस्ती अश्व रथ पयादेन से भरे हुए राज मार्ग में भार्य्याओं सहित श्रीकृष्णका दर्शन करके पुष्पन से वर्षा करके और मनसेहि श्रीकृष्ण के साथ मिल कर मन्दहास युक्त कटाक्ष सें हि वे स्त्रीजन मानो श्रीकृष्ण का कुशल प्रश्न करभईं ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमविदुषेव सर्वज्ञेन जरासन्धवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदो मायेशमिति ज्ञात्वाऽऽह—दृष्टा इति त्रिभिः । विश्वसृजश्च ब्रह्मणोऽपि मायिनो मोहकस्य ते स्वशक्तिभिर्विद्यादिभिर्भूतेष्वन्तर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते, तर्हि भूतानि मां किं न पश्यन्ति ? तत्राऽऽह वह्नेरिवच्छन्नरुच इति । स्वशक्तिभिरेवच्छन्ना रुक् प्रकाशो यस्य तस्य अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३७ ॥

इदं जगत् कथम्भूतम् ? असदेव यत्तव मायया विद्यमानात्मतयाऽवभासते तज्जगत्सृजतः किन्तु केवलं तुभ्यं नमनमेव शक्यमित्याह—तस्मै नम इति । कुतः स्वेन रूपेण सर्वतो विलक्षणात्मने अचिन्त्यायेत्यर्थः ॥ ३८ ॥

नन्वेवम्भूतस्य किं मायाचेष्टितैरित्यत आह—जीवस्येति । अविद्यातमसा वृतत्वेनानर्थप्रापकाच्छरीरात्संसरतः नेनैव तमसा तस्माच्छरीराद्विमोक्षोपायमजानतः प्राज्वालयत् प्रदीपितवान् तं त्वा त्वां यशःश्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥ ३९ ॥

आश्रावये श्रावयिष्यामि नरलोकविडम्बनं ब्रह्म त्वाम ब्रह्मामिति पाठेऽपि हे ब्रह्मन् ! परमात्मन्नरलोकानुकारिणं त्वां श्रावयिष्यमीति ॥ ४०—४१ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीभगवता लोकत्रयाकुतोभयं यत्पृष्टं तस्य ज्ञातत्वेन चोत्तरमदत्वा भगवान् सर्वदर्शित्वं यदुक्तं तत्तु तच्छक्तित्वेनैवाङ्गीकरोति—दृष्टा इति । मायाः मायिककार्य्याणि नाना ब्रह्माण्डगतानि तथा विश्वसृजः तत्तदन्तर्यामिब्रह्माविष्ण्वादयो मायिनस्त्वच्छक्तिधारिणश्च दृष्टाः तथ त्वं पर्य्यटन्नर्क इव त्रिलोकीमित्यादि प्रथमस्कन्धस्थ श्रीव्यासोक्त्यनुसारेण स्वस्य तव शक्तिभिस्त्वद्भक्तिमयमच्छक्तिभिरेव वा सर्वव्यापकवह्नेरिव छन्नरुचः सतो भूतेषु चरतो मम नाद्भुतमिति ॥ ३७ ॥

किन्तु तवेहितं सर्वज्ञत्वादौ मत्यपीड्यप्रश्नादिना स्वरूपादयितुमिष्टं को मद्विधो महत्तमो वा साधु सुष्ठु यथा स्यात्तथा वेदितुमर्हति तत्र हेतुः धत्पृष्टव्यं प्रश्नस्य गौणमुख्यकर्मभूतं तदिदं सर्वं सृजतः नियच्छतः नियन्तृतया प्रवर्त्तयतश्चेति किञ्च तत्रेदं सर्वं यस्य विद्यमानस्वरूपतया करतलविद्योतमानस्फटिकगोलकतुल्यतया अवभासते प्रकाशते तस्मै तुभ्यं केवलं नमः नतु स त्वमूहितुमर्हस इत्यर्थः । यतः स्वस्मात् विलक्षण आत्मा यस्य तादृशायेति ॥ ३८ ॥

अहो आस्तान्तावत् त्वदीहितं जीवस्य स्वमोक्षणप्रकारमप्यजानतस्तस्यार्थे यः परमकारुणिकः स्वयशोरूपं प्रदीपकं तदपि सर्वार्थप्रकाशकं प्राज्वालयत् तं त्वामेवाहं प्रपद्य इति

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

स्वाज्ञानादिप्रकाशनादिना (मो) मुह्यमानस्यापि मम त्वमेव शरणमिति भावः ॥३९॥

यद्यप्येवं त्वमेव सर्वज्ञः अथापि मा सम्यक् श्रावयामि कुतः नरलोकविडम्बनं तत्सदृशमित्यर्थः। अतः प्रश्नश्चायं भगवतो योग्य एवेत्याह—पितृष्वसुस्तद्भावप्राचुर्येण परमवत्सलायाः श्रीपृथाया अपत्यस्य स्वयमपि तथैव भक्तस्येत्यर्थः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायाः आश्चर्यशक्तयः ॥ ३७ ॥

विद्यमानात्मतया जन्मादिविकाररहिततया अवभासते यत् तत्सदा अस्त्येव अध्यवसीयते स्वतो विलक्षणस्य चिदचिद्वस्तुनः आत्मने शरीरिणे अत्यविलक्षणात्मने न स्वस्मात् स्वरूपात् विलक्षणः आत्मा विग्रहो यस्य तस्मै ॥ ३८ ॥

अनर्थवहात् दुःखवहाच्छरीरात् प्रज्वालय सम्प्रकाशयं॥३९-४२॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं सर्वज्ञेनाप्यविदुषेव जरासन्धवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदः केवलमिदं जनव्यामोहनमिति ज्ञात्वाऽऽह दृष्टेभि स्त्रिभिः। हे विभो! हे भूमन्! स्वशक्तितः सर्वज्ञत्वादिस्वशक्तिभिरेव सह भूतेष्वन्तरात्मतया चरतस्तव अनेन पाण्डवादिचिकीर्षितं तव विदितमेवेत्यभिप्रेतं विश्वसृजो ब्रह्मणोपि मायिनो व्यामोहकस्य तव पाण्डवानां चिकीर्षितं पृच्छाम इत्येतत् दुरतिक्रमणीया माया दृष्टा व्यामोहममात्रमेतदिति निश्चितमित्यर्थः। बहुशो दुरत्ययेत्यनेन स्वत्प्रपत्तैः स्वत्ययैवेति सूचितं यद्वा बहुशो दृष्टेति सम्बन्धः यथा मह्यं योगमायोदयः प्रदर्शितस्तद्वत्स्वं प्रश्नोपीति भावः। ननु भूतेषु चरामि तैः किं न दृश्य इत्यतो विशिनष्टि—भस्मना वह्नेरिति—वह्नेः छन्ना गूढा रुक् प्रकाशो यस्य तवेति सम्बन्धः अतस्तदेवं प्रश्नादिकं मम नाद्भुतमित्यर्थः ॥ ३७ ॥

पाण्डववृत्तान्तप्रश्नव्याजेन मागधजिघांसैवाभिप्रेतेत्यपि न निश्चेतुं शक्नुम इत्यभिप्रयन्नाह—तवेति। ईहितमभिप्रेतं साधु यथा तथा तद्वेदितुं को वार्हति न कोपीत्यर्थः। तत्र हेतुत्वेन तं विशिनष्टि—स्वमायया स्वसङ्कल्पेनेदं जगत् सृजतः नियच्छतोऽन्तरात्मतया प्रशासितुश्च तवेति सम्बन्धः त्वत्सृज्यस्त्वन्नियाम्यश्च अयञ्जनः कथं वेत्तुमर्हतीतिभावः। किन्तु यद्विद्यमानात्मतया यस्मिंस्त्वयि विद्यमान आत्मा भावोऽभिप्राय इति यावत् तत्त्वेनाध्यवसीयते निश्चीयते मयेति शेषः यस्य तवायमेवाभिप्राय इति मया न निश्चीयत इत्यर्थः। स्वेन स्वासाधारणस्वभावेन सर्वस्माद्विलक्षण आत्मा स्वरूपं यस्य तस्मै तुभ्यं नमः केवलं नमस्करोमि न त्वीहितं निश्चेतुं शक्नोमीति भावः ॥ ३८ ॥

यद्यप्येवमथापि त्वदवतारः केवलं साधुपरित्राणाय दुष्कृद्विनाशाय चेत्येतन्तु निश्चिनोमीत्यभिप्रयन् प्रपद्यते-जीवस्येति। यो भवान् संसरतोऽनर्थात् दुःखवहाच्छरीरान्मोक्षणं मोक्षणोपायमजानतश्च जीवस्य यश एव प्रदीपस्तं लीलावतारैः प्रज्वालयन् सन्दीपितवान् तं त्वामहं शरणं प्रपद्ये मुक्त्युपायमजानतः संसरतो जीवस्य यथान्धतमसावृतघटपटादीनजानतस्तद्ज्ञानोपायभूतप्रदीपप्रज्वलनं तद्वत् शृण्वतोऽनुस्मरतः कथं यतश्च मुक्त्युपायभूतं यशो विस्तृतवानित्यर्थः ॥ ३९ ॥

अथापीति। यद्यप्येवमथापि नरलोकं विडम्बयन्ननुवृत्त इति तथा तं त्वां प्रति राज्ञो युधिष्ठिरस्य चिकीर्षितं श्रावये ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मायामाहात्म्यानि मायिनः नित्याव्याहतमाहात्म्यस्य दारुषु छन्नरुचः वह्नेरुच इव तव रुचोप्यद्भुताः अचिन्त्याः ॥ ३७ ॥

वह्नेः रुचो मथनादिना व्यज्यन्ते न तथा तव रुच इति भावेनाह—तवेति। कुतो निर्वेदनमिति तत्राह—य इति। यो भवानविद्ययाऽज्ञानेनात्मतया अस्वामितयाऽवसीयते निश्चीयते शरीरिभिरिति शेषः। इति यदतो वेदनं दुःशकमित्यर्थः। तर्हि तत्सत्यं किं नेत्याह स्वेति। स्वतो विलक्षणस्वरूपाय तस्मात्स्वामित्वमेव सत्यमिति तत्राज्ञानमेव कारणमित्यर्थः। स्वरूपतो विरुद्धलक्षणस्वामिने कदाप्यनुपहतस्वामिन इत्यर्थः इति वा ॥ ३८ ॥

अज्ञानं मां कदापि न स्पृशेत्प्रत्युत ज्ञानमेव नित्यं प्रज्वलितं भूयादिति प्रार्थयते-जीवस्येति। अज्ञानतः संसरतो जीवस्यानर्थवहात् शरीरविमोक्षणं न जायत इति यत्तस्मादेतद्दहनाय लीलावतारैस्त्वं स्वयशःप्रदीपकं ज्ञानं प्रज्वालयस्तदर्थमहं शरणं प्रपद्य इत्यन्वयः। अनेन लीलावतारविषयाज्ञानं दूरीकृत्य तत्त्वज्ञानमेव विकसितं कुर्वित्युक्तं भवति ॥ ३९ ॥

यतस्त्वत्प्रसादादस्मदादेर्विज्ञाने तत्र किञ्चिदपि विज्ञाप्यं न पश्यामि अथापि तथापि अशेषपुरुषार्थप्राप्तौ भगवद्भक्तेः मुख्यहेतुत्वेपि नरदेवानां विडम्बनं यज्ञकरणम् ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवत्कृतं कायिकं वाचनिकञ्च तथा नोचितमिति कदाचिदुर्घटितमन्यथा कुर्यात् इति तन्निराकरणार्थं मायाभावम्प्रार्थयते दृष्टा मयेतित्रिभिः। अनेकधा सर्वजनव्यामोहिका बहुधा पूर्वं वर्त्तमाना मया दृष्टा तत्र स्वाज्ञानप्रकटनेन हीनभावप्रकटनेन च केवलमेकस्य मम व्यामोहने किमाश्चर्यमिति वाक्यार्थः। मायायाः स्वरूपज्ञानमेवात्ययोऽतिक्रमः तद्भगवन्मायासु न कस्यापि भवतीति दुरत्ययाः वस्तुव्यभिचारे सकृद्दृष्टे पुनः प्रदर्शिता माया ज्ञाता भवतीति शङ्कां वारयितुं बहुश इत्युक्तम् एका सहस्रधा प्रदर्शितापि न बुध्यत इति एवं करणे सामर्थ्यमाह—विभो इति. प्रयोजनमाह—विश्वसृज इति. मायया जीवव्यामोहाभावे विश्वोत्पत्तिर्न स्यात् चकारात् स्थितिप्रलयौ किञ्च मायी भगवान् मायानामेक एवाश्रयः तासामप्रदर्शने प्रचार एव न स्यादित्यावश्यकत्वमुक्तं किञ्च मायानामप्रकटीकरणे महत्त्वेनानुपपत्तिरित्यभिप्रायेणाह—भूतेषु भूमन्

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चरत इति। चरणावश्यकत्वाय सम्बोधनं सकलभूतसम्बन्धो हि भूतेष्वत्तदोषसम्बन्धाभावाय स्वशक्तिभिरित्यसाधारणसामर्थ्यैः अन्यथा ऽभिमानमात्रे जीवे सर्वावस्थाः प्रवृत्तयश्च न भवेयुः ननु भगवतः सर्वे गुणाः सर्वत्र प्रसिद्धाः मायागुणः क प्रसिद्ध इत्याशङ्क्य दृष्टान्तमाह—वह्निरिवच्छन्नरुच इति । वह्निर्जलादौ प्रविष्टः स्वकार्यं कुर्वन्नपि छन्नरुक् भवति रूपस्पर्शयोर्मध्ये अन्यतरप्राकट्यं ज्ञातधर्मस्य मायां विना न सम्भवतीति वह्नेः प्रथमोत्पन्नस्य स्वधर्मः प्रकट इत्यर्थः । यस्तु भगवतोमाहात्म्यं जीवेषु समत्वादिकञ्च पश्यति तस्य विरुद्धधर्मदर्शनादद्भुतम् ज्ञानं भवति ममतु दर्शनेपि सिद्धान्तार्थपरिज्ञानान्नाद्भुतम् आश्चर्यज्ञानजनकं न भवतीत्यर्थः इममेवार्थं पुरस्कृत्य मायाविरोधसमाधानमिति वाक्यं प्रमादन्यथा कश्चिद्योजितम ॥ ३७ ॥

नन्वद्भुतकर्मा भगवान् कथं तस्य चरित्रदर्शनेनाश्चर्यमिति तत्राह—तवेहितं कोर्हतीति । इदमित्थतया चरित्रज्ञाने प्रतिनियतधर्मे च चरित्रे विरोधज्ञानादाश्चर्यं भवति तदेवतु न सम्भवति यतः कोवा तवेहितं साधु इदमित्थतया वेदितुमर्हति तत्र हेतुः—स्वमाययेदं सृजतो नियच्छत इति । मायाबहिर्भूतोहि वस्तुतो मायाया वा याथात्म्यं जानाति विश्वमेव हि मायया सृजति हरति तस्मादिह लोके परलोके वा न कोपि तत्त्वं जानाति ननु बाधितार्थत्वेन मायायास्तत्त्वं कुतो न ज्ञायत इति चेत्तत्राह—यद्विद्यमानात्मतयावसीयत इति । यद्विद्यमानमपि विद्यमानतया निर्धार्यते अतो ज्ञानाभावात् केवलं तस्मै ते नमः जीवस्वरूपात्प्रमस्फुरणायोग्यत्वाय सर्ववैलक्षण्यमाह—स्वविलक्षणात्मन इति । स्वत एव विलक्षणः आत्मा यस्येति ॥ ३८ ॥

नन्वेवं सति भगवाननर्थहेतुः कथं सेव्य इति चेत्तत्राह—जीवस्येति । यः स्वयशःप्रदीपं दीपयन् प्रज्वालयन् तं त्वाऽहं प्रपद्य इति सम्बन्धः तदा भगवाननर्थहेतुः स्यात् यद्यनन्तं संसारं सृजेत्तत् द्वारभावं वा सर्वथा ज्ञानं वा प्रत्युत सर्वपदार्थज्ञानाय स्वयशःप्रदीपकं वेदपुराणेषु प्रसिद्धमवतारं गृहीत्वा प्राज्वालयत् अन्यथा शब्दैकनिष्ठस्य न कदापि धर्मः प्रसिद्धो भवेत् भगवन्मायान्धकारे यश एव प्रदीपो भवति न ज्ञानादिः ज्ञानप्रकाशेतिवाक्यात् प्रज्वालनहेतवोपि न दुःखसम्पाद्याः किन्तु लीलावताराः तत्प्रपन्नायैव प्रज्वालयतीति तं त्वामहं प्रपद्ये ॥ ३९ ॥

अतो यद्यपि कृत्वैव व्यामोहनार्थमज्ञाननाट्यं करोति तथापि पृष्टेर्थे उत्तरं दास्ये इत्याह—अथापीति । भूमन्निति तवासंयोगगोपनमावश्यकमिति कथने हेतुः ब्रह्मन्निति वेदवत्तवाज्ञा सर्वैरेव कर्तुं शक्येति सूचितं यदस्मत्सन्तोषार्थं लोककुशलं पृष्टं तस्य स्तुतिपरत्वात्तदुत्तरं न दास्यामि किन्तु पैतृष्वसेयस्य युधिष्ठिरस्य चिकीर्षितमाभावयिष्ये राज्ञो हि चिकीर्षितं प्रजानां हितकारि भवति बन्धोर्बन्धूनां भगवतः पक्षपातात् सर्वेषां हितकारि गुणवतः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वमाययैव त्रीन् लोकान् मोहयसि अथच तेषामकुतोभयञ्च प्रच्छसीत्यद्भुतं ते चरित्रमपि नरलीलस्य नैवमद्भुतमित्याह—दृष्टा इति । विश्वसृजश्च ब्रह्मादेरपि मायिनो मोहकस्य किञ्च हे भूमन् ! सर्वव्यापक ! भूतेष्वपि शक्तिभिर्मायादिभिः सहान्तर्यामितया चरतो वर्तमानस्य माया एव बहुशो दृष्टा किन्तु नरलीलत्वेन छन्ना कौतुकार्थमावृता येन तस्य तवैतादृशप्रश्नादिकं न मे मयि अद्भुतम् ॥३७॥

किञ्च यत् विश्वं विद्यमान आत्मा अन्तर्यामी यत्र तत्तयैव अवभासते चेतनीभवति तदेवेदं विश्वं कदाचित् सृजतः कदाचिन्नियच्छतस्तव ईहितमभिप्रायं तस्मात् स्वतःस्वभावादेव सर्वतो विलक्षणात्मने अतर्क्याय तुभ्यं नमः ॥३८॥

किञ्च विश्वस्याकुतोभयप्रश्नः स इच्छते चेत्याह—जीवस्येति । शरीरतो बन्धरूपात् विमोक्षणं न जानतो जीवस्य सम्बन्धे स्वयशोरूपं प्रदीपकं यः प्राज्वालयत् स्वतत्त्वं दर्शयितुमिति भावः । त्वा त्वां तस्मात् जगत्यस्मिंस्त्वन्मायामोहिताः सभयाश्च दृष्टा त्वदीययशःश्रवणकीर्तनपराः अकुतोभयाश्च बहवो दृष्टा इति श्लोकत्रयेण द्योतितम् ॥३९॥

द्वितीयप्रश्नस्योत्तरमाह—अथापीति पञ्चभिः । हे ब्रह्म पूर्णब्रह्मस्वरूप ! ब्रह्मन्निति पाठेऽपि स एवार्थः । सम्बुद्धौ नलोपस्यवैकल्पिकत्वात् । यद्यपि सर्वज्ञत्वात् जानास्येव तदप्याश्चर्यं यतो नरलोकं विडम्बयतीति व्यतिरेकालङ्कारेण नरलोकसमशीलामित्यर्थः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं सर्वलोकेश्वरेश्वरेण सर्वज्ञेन अर्चनपूर्वकं प्रश्नं कृतवता केवलं मयि कृपा कृतेति हृष्ट आह—दृष्टेति । ते तव भक्तवत्सलस्य माया कृपादृष्ट्या अनुभूता कथम्भूता बहुशः बहुभिः प्रकारैः दुरत्यया प्रतिकर्शमशक्या अतो हे विभो ! विश्वसृजो ब्रह्मणोपि मायागुणमयी बन्धनरज्जुस्त्वामयास्यास्तीति तथा तस्य नियन्तुरित्यर्थः । मे मयि दासे यद्विधिवदर्चनं शक्तिभिर्ज्ञानादिभिः भूतेषु चराचरेषु चरतः साक्षात् सर्वद्रष्टु प्रश्नश्च न अद्भुतम् नन्वित्थं मामन्ये कुतो न जानन्त्यत आह—वह्नेरिवच्छन्नरुच इति । वह्निर्यथा सूक्ष्मरूपः छन्नरुक् भवति काष्ठादिषु वह्निं तदुपासक एव जानाति न सर्वो जन इत्यर्थः । तथा छन्नरुचः रुक् गुप्ता सर्वजनाविषया रुक् प्रकाशो यस्य तस्य "नाहं प्रकाशः सर्वस्य" इति श्रीमुखवचनात् ॥ ३७ ॥

आस्तान्तावत् दुर्ज्ञेयत्वत्कार्यविश्वं तवाभिप्रेतं च कोपि न जानातीत्याह—तवेति विद्यमानस्य प्रतीयमानस्य सृष्ट्यादेः कार्यजातस्यात्मतया कारणत्वेन यत्प्रतीयते ननु स्वरूपतो विश्वं कोपि जानाति तदिदं विश्वं स्वमायया स्वदासत्या सृजतो नियच्छतश्च तवेहितं साधु वेदितुं कोर्हति न कोपीत्यर्थः । अतः स्वविलक्षणात्मने जीवविलक्षणस्वरूपाय ते केवलं नमः कर्तव्यं जीवेनेति शेषः ॥ ३८ ॥

यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः।
(१) पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम् ॥ ४१ ॥
तस्मिन् देवक्रतुवरे भवन्तं वै सुरादयः।
दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥ ४२ ॥
श्रवणात्कीर्तनाद्ध्यानात् पूयन्तेऽन्तेवसायिनः।
तव ब्रह्ममयस्येश किमुतेक्षाऽभिमर्शिनः ॥ ४३ ॥
यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गल दिग्वितानम्।
मन्दाकिनीति दिवि भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम् ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अज्ञस्यापि त्वद्यशश्श्रवणादिना मुक्तिर्भवतीति दर्शयन् स्वविलक्षणात्मत्वं प्रपञ्चयति—जीवस्येति। त्वां त्वदीहितं त्वत्कृतं विश्वञ्च अज्ञानतः जीवस्य शरीरतः पुनः पुनर्जन्मबीजतया अनर्थवहात् विमोचणं मुक्तिदं स्वयशःप्रदीपकं यः प्राज्वालयत् प्रदीपितवान् तं त्वा त्वां प्रपद्ये ॥ ३९ ॥

यद्यपि सर्वेशस्य पाण्डवानां चिकीर्षितं पृच्छामहे इति प्रश्नमपि कृपाद्योतकम् अथापि हे ब्रह्मन्! परमात्मन्। नरलोकविडम्बनं नरलोकानुकारिणं त्वाम् आश्रावये नरलोकानुकारित्वं सम्भावनया श्रावयिष्यामीत्यर्थः ॥ ४० ॥

भाषाटीका।

चन्द्रमा के साथ स्थित तारागण के समान श्रीरुक्मिणीजी आदि कृष्णकी भार्य्याओंको राज मार्ग में देख कर इन्द्रप्रस्थकी स्त्रीजन परस्पर में कहने लगीं कि श्रीपुरुषोत्तम भगवान् निज उदारहास युत लीलावलोकनकी कला मात्र मे जिन के नेत्रकों नित्य प्रति उत्सवका विस्तार करते हैं इसलिये श्रीकृष्णकी इन भार्य्याओंने पूर्वजन्म में क्या पुण्य कर्म किया है ॥ ३७ ॥

जिस २ मार्ग में श्रीकृष्ण पधारते हैं तहां नष्टपाप धारे गन्ध पुष्प ताम्बूल आदि मङ्गलीक वस्तु हाथ में लिये पुरवासी तथा स्वर्णकार आदि शिल्प कारों में श्रेष्ठ २ पुरुष समीप में आय कर श्रीकृष्णकी पूजा करते भए ॥ ३८ ॥

संभ्रम युत और प्रीति कर के प्रफुल्लित नेत्र धारे राज महल निवासीजनों सत्कारको प्राप्त होकर श्रीकृष्णमहाराज राजा के भवन में प्रवेश करते भए ॥ ३९ ॥

कुन्तीमहारानी भ्राता के पुत्र त्रिलोकी के ईश्वर श्रीकृष्णको देख कर प्रसन्न मन धारी होकर पर्य्यङ्क से उठ कर द्रौपदी सहित स्थित होकर श्रीकृष्णको मिलती भई ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

नचात्रैवानुमोदनं कार्यं किन्तु तत्राऽगन्तव्यमित्याशयेनाऽऽह तस्मिन्निति ॥ ४२ ॥

तत्राऽऽगताश्च सर्वे त्वद्दर्शनादिना पूताः भविष्यन्तीत्याह—श्रवणादिति। अन्तेवसायिनः श्वपचा अपि ब्रह्ममयस्य ब्रह्मघनमूर्तेः ईक्षा च अभिमर्शः स्पर्शनञ्च तौ विद्येते येषाम् ॥ ४३ ॥

कैमुत्यमतिशयेनाऽऽह—यस्येति। हे भुवनानां मङ्गलरूप! दिवि पाताले भूमौ च प्रथितं यस्य यशो विश्वं पुनाति कथं प्रथितं दिग्वितानं दिग्भवनानां वितानवदलङ्करणं तथा चरणाम्बु च प्रथितं पुनाति कथं तत्प्रथितम् दिवि मन्दाकिनीति अधश्च भोगवतीति इह च भूमौ गङ्गेति तस्य तवागमनात्सर्वं मङ्गलं पवित्रञ्च भविष्यतीति भावः ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स राजसूयाख्येन मखेन्द्रेण सर्वराजगणसर्वदेवगणवशीकारितया मखानां श्रेष्ठेन पारमेष्ठ्यकामस्त्वद्यजनोचितपरमसम्पत्तिकामो नृपतिस्त्वां यक्ष्यति मुहुर्गृहागतं सेविष्यते सिषेविषत इत्यर्थः। त्वां विना सर्वसम्पत्तेस्तत्कृमा अरोचकत्वादिति भावः तदुक्तं प्रथमे—

"किन्ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विज।
अधिजह्रुः प्रियं राज्ञः क्षुधितस्य यथेतरः॥" इति

तथा पारमेष्ठ्यशब्देन तदीयामैहिकमहासम्पत्तिमेवानूद्य तदनुभवसुखं तेषां तदेकचक्षुष्टुमुक्त्वाऽन्यथा वृथात्वं वक्ष्यते च—

"सभायां मयक्लृप्तायां क्वापि धर्मसुतोधिराट्।
वृतोनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा॥
आसीनः काञ्चने साक्षादासने मघवानिव।
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः॥"

इति ॥ ४१ ॥

यशस्विनः साधव इत्यर्थः ॥ ४२ ॥

पूयन्ते जात्यादिदोषात् अन्यत्तैः। यद्वा ईक्षया द्वारा अभिमर्शः स्पर्शोऽनुभवः तच्छालिनो द्रष्टार इत्यर्थः ॥ ४३ ॥

(१) नृपतिः पारमेष्ठ्यमेप्सुः इति वीर० पाठः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवं श्रवणादिमात्रस्य माहात्म्यमुक्त्वा यशःश्रवणादेर्वैशिष्ट्यं दर्शयति—यस्येति। यस्य ते तव यशः न विद्यते अवद्यादिकेष्वपि मलं यस्मात्तादृशं तथा भुवनमङ्गलं यद्दिशां वितानं सर्वोपरि शोभाकरत्वात्तादृशं तथा भुवनमङ्गलं यद्दिशां वितानं सर्वोपरि शोभाकरत्वात्तादृशञ्च प्रथितं विख्यातमेव तच्च परमपुण्यात्मकसत्ख्यातिरूपत्वाद्युक्तमेवेति भावः। अहो तव चरणाम्बु तत्रतत्र मन्दाकिनीत्यादिनामभिः प्रसिद्धं सत् विश्वं पुनाति तत्तु पादाम्बुनो दूरतः परिवर्जनीयत्वेनाऽन्यत्र प्रसिद्धेः परमाश्चर्यमिति भावः॥ ४४॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अन्तेवसायिनश्चण्डालाः ईक्षाभिमर्शिनः चक्षुषा पश्यन्तः॥ ४३—४४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किं तदित्यत आह—यक्ष्यतीति। पाण्डवो युधिष्ठिरः राजसूयाख्येन मखश्रेष्ठेन त्वामाराधयिष्यति तत्तदभिप्रेतं भवाननुमोदतां त्वया निर्वर्त्यतामित्यर्थः। अतस्तत्रगम्यताम् इति—भावः॥ ४१॥

तद्व्याजेन शिशुपालादिवधोऽपि भविष्यतीत्यभिप्रायेणाह—दिदृक्षव इति। यशस्विनः प्रसिद्धाः राजानश्चैद्यादयो दिदृक्षवः राजसूयमिति शेषः। समेष्यन्त्यागमिष्यन्ति॥ ४२॥

ततः किमत आह—श्रवणादिति। अन्तेवसायिनश्चण्डालादयोऽपि साक्षात्परब्रह्मभूतस्य तव नामश्रवणादिभिरपि कामक्रोधभयादिकृतैः पूयन्ते किमुत अक्ष्णा अभिमृशन्ति विषयीकुर्वन्तीति तथा ते शिशुपालादयः पूयन्ते इति किमु वक्तव्यं त्वां पश्यन्तो हठाच्च मुक्ता भवन्तीति भावः॥ ४३॥

कैमुत्यन्यायेन भङ्ग्यन्तरेणाऽऽह—यस्येति। हे भुवनानां मङ्गलरूप! दिवि पाताले भूमौ च प्रथितं प्रख्यातं यस्य तव यशो विश्वं पुनाति कथं प्रथितम्? दिग्वितानं दिशां वितानमुल्लोचः तद्वदलङ्करणं तथा चरणाम्बु प्रथितं दिवि मन्दाकिनीत्यध पाताले भोगवतीति इह लोके गङ्गेति च॥ ४४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पारमेष्ठ्येन उत्तमकल्पेन ब्रह्मपदप्राप्तिहेतुना वा॥ ४१-४२॥

अन्त्यावसायिनः, अन्त्यजातयोऽपि ईक्षा दर्शनमभिमर्शनं स्पर्शनादिलक्षणमेषाम् इतीक्षाभिमर्शिनः॥ ४३॥

उक्तमेव स्फोरयति—यस्येति। हे अमलयशः मङ्गलकीर्तन! यस्य तवाथ कल्याणमत एवामलं निर्दोषं यशः विश्वं पुनाति ननु मितस्य यशसो विश्वपुनानत्वं कथमित्यत उक्तं दिवीत्यादि। घटान्तर्दीपवत् अस्पष्टस्यापि कथमित्यत उक्तं दिशां वितानमिति दिशामन्तेषु विशेषण ताना विस्तारो यस्य तत्तथा तथापि न चोरवदित्याह प्रथितमिति। अथ जन्मप्रभृति श्रीमत्पादलक्षणास्पदं गता तव पादरजोवहोर्मिर्मन्दाकिनी च विश्वं पुनाति अतस्तव माहात्म्यं किं वक्ष्यामीत्यतो नमो नम इत्युपरमामीति वाक्यार्थः॥ ४४—४७॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यक्ष्यति त्वाम्॥ ४१॥

अस्यानन्तरं हृद्यराजसूयस्य चात्र फलविशेषं चादिरयूपाख्यायेन भगवत्सम्बन्धादेव ज्ञेयः। तस्मिन् क्रतुवरे इति तं क्रतुवरं ये दिदृक्षवः सुरादयो राजानश्च ते तत्र गमनमध्या त्वत् कृपया भवन्तमपि समेष्यन्तीत्यवश्यमेव गन्तव्यमित्यर्थः॥४२-४७॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

श्रवणादित्यादि। तत्र कीदृशस्य ब्रह्ममयस्य ब्रह्मपरमहः तन्मयस्य॥ ४३—४७॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदेवाह—यक्ष्यतीति। त्रिधा हि यज्ञकृतिः फलार्थाधिभौतिकी शुद्ध्यर्थाध्यात्मिकी भगवदर्थाधिदैविकीति "यज्ञेन यज्ञमयजन्त" इति श्रुत्या सैव निरूपिता तत्र प्रतिबन्धकनिवृत्तिः भगवतैव कर्त्तव्या इज्यान्तराभावात् इत्यभिप्रेत्याह—त्वां यक्ष्यतीति। "यज्ञो वै मखः" इति श्रुतेः। आधिदैविक एव यज्ञो मखो भवति प्रकरणवशात् क्षत्रियस्य राजसूयादन्यो यज्ञः श्रेष्ठो नास्ति उपरतानां क्षत्रियाणां ब्राह्मणानामेव दीर्घसत्रेष्वधिकारात् महति च बहवो विप्राः पाण्डव इति पाण्डुवाक्यात् अत्रावश्यकर्त्तव्यत्वं भगवान् सर्वभावेन सेव्यः प्राणिना तदा यदा कदाचित्तादृशी सेवा नियतकालसाधनसम्पत्तौ भवति सा सम्पत्तिः परमेष्ठिन इति नान्यस्य इति पारमेष्ठ्यकामः अतस्तथा सेवायामनधिकारमाह—नृपतय इति तत्रेज्यानुमतिः प्रयोजिका तदभावे दोषाभावात् देवतातः फलमितिपक्षे न फलं कर्मणः फलमित्यपि पक्षे देवताप्रीतिः साधनत्वेन सिद्धेति तदभावेन फलं "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इतिश्रुतेः अतः प्रजया पूज्यानुमोदनमावश्यकमिति भवाननुमोदताम् इदमनुमोदनं समीपे स्थित्वा पूजापूज्ययोः देशान्यत्वासम्भवात् अनेनैव यशः स्वर्गहेतुभूतम् अन्तःकरणशुद्धिश्च भविष्यतः॥ ४१॥

अत एकेनैव त्रैविध्यमपि सेत्स्यतीति अभिप्रायेणाह तस्मिन् देव इति द्वाभ्याम्। कीर्त्तिर्लोकद्वयं राजभिर्देवैश्च भवति तत्र यद्यपि भागाभावात् यागार्थं देवानामनागमनेऽपि त्वां दिदृक्षवः समेष्यन्ति राजानश्च स्पर्द्धिनोऽपि कौतुकार्थमागमने तु न यश इति देवेति सम्बोधनं क्रतुवरं यथा महोत्सवे देवदर्शनं महोत्सवकर्तुर्यशस्करं भवति यशस्विन इति तेषामपि यशोऽत्र मिलितं भवतीत्युक्तं भवति आदिशब्देन सिद्धादयोऽपि॥ ४२॥

## श्रीशुक उवाच ।

**तत्र तेष्वात्मपक्षेष्ववृण(ह्व)त्सु विजिगीषया ।**
**वाचःपेशैः स्मयन् भृत्यमुद्धवं प्राह केशवः ॥ ४५ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसङ्गादेव शुद्धिमप्याह—श्रवणादिति । प्रमाणं कीर्तनस्मरणान्येवोक्तानि ध्यानमेकाग्रतया स्मरणम् एवं भक्ता एव कर्मत्यागादिभिः तथात्वमापन्नाः पूर्ववासनया श्रवणादिना तद्दोषं परिहरन्ति केचित् अन्यथाप्यन्तेवसायिनां श्रवणादिसम्भवं तादृशजन्मसम्पादकदोषनाशक इति विमर्शः तवेति सम्मत्यर्थे युष्मच्छब्दप्रयोगः प्राकृतबुद्ध्या श्रवणादौ मर्यादा भक्तानां मते प्रमेयबलाभावात् न फलम् अन्यथा सर्वेषामेव नाम्नां भगवद्वाचकत्वात् कस्यापि बन्धो न स्यात् तत आह' ब्रह्ममयस्येति । ब्रह्मप्रचुरस्य परमानन्दमूर्त्तेः सच्चिद्रूपप्राचुर्यात् सर्ववेदमयस्य वा ईक्षेति शुद्धौ सामर्थ्यम् ईक्षाभिमर्शतां प्रमेयबलं साक्षात्कारसम्बन्धो हि फलरूपादिति तत्सिद्धौ साधनसिद्धिर्नान्तरीयकेति कैमुतिकन्यायेनाह-किमुतेति । अन्तेवसा ये व्यावृत्त्यर्थमीक्षाभिमर्षणयोः सह प्रयोगः ॥ ४३ ॥

भगवद्दर्शनादेः शोधकत्वं कैमुतिकन्यायेन वक्तुं चरणोदकस्य माहात्म्यमाह—यस्यामलमिति । भगवतः कीर्तिद्वयं तीर्थरूप चरणद्वयान्निर्गतं भक्तानां हितार्थं तत्रैकममलं यशः दिवि रसायां भूमौ च प्रथितं सर्वाणि कर्माणि दोषसहितानीति सर्वारम्भा हि दोषेणेति वाक्यादवगत्याह अमलमिति सन्नियोगशिष्टदोषरहितगुणत्वाद्भगवतः अतो भगवान् सर्वभुवनेषु मङ्गलरूपः भुवनमङ्गलत्वाद्वा तत्रत्यानां यशोगानं लोकत्रयेपि प्रान्तभावेषु तदभावमाशङ्कयाह-दिग्वितानमिति । दिशामाच्छादकं द्वितीयमाह—मन्दाकिनीति । दिवि मन्दाकिनी अधो भोगवती पृथिव्यां गङ्गेति चरणाम्बु कमण्डलुसम्भूतं विश्वं पुनाति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

॥ ४१ ॥

न केवलमनुमोदनमेवात्र स्थित्वा कार्यं किन्तु तत्र गन्तव्यमेवेत्याह—तस्मिन्निति ॥ ४२ ॥

ननु तेषां मद्दिदृक्षायां किं प्रयोजनं तत्राह-श्रवणादिति । ब्रह्ममयस्य ब्रह्मघनमूर्तेरिति श्रीस्वामिचरणाः ॥४३॥

तेषां मद्दिदृक्षैव किं कारणा तत्राह । यस्य तव अमल यशः दिवि रसायां भूमौ च प्रथितं दिग्वितानं दिग्भवनानां वितानवदलङ्करणं सत् विश्वं पुनात्यतः पूतान्तःकरणत्वादेव तेषां तद्दिदृक्षा अभूदिति भावः । यद्वा । यस्य यशश्चरणाम्बु च त्रिजगत् पावनं स साक्षादेव त्वं तेन राज्ञा निमन्त्रितोऽसि यज्ञे तत्र पावनवस्तूनामपेक्षणीयत्वादिति भावः ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पारमेष्ठ्यकामः परमेष्ठिनस्तव यो भावस्तत्प्राप्तिकाम इत्यर्थः । यतस्त्वां वक्ष्यति "यान्ति मद्याजिनोपि माम्" इति वचनात् ॥ ४१ ॥

भवन्तं तस्मिन् क्रतुश्रेष्ठे प्राप्तमिति शेषः । तत्र त्वया गन्तव्यमिति भावः ॥ ४२ ॥

ब्रह्ममयस्य त्वन्मयस्य जनस्य श्रवणादिना अन्तेवसायिनः अपि पूयन्ते साक्षात्तवैव ईक्षाभिमर्शिनः दर्शनस्पर्शनवन्तः सुरादयः पूयन्ते इति किमुत वक्तव्यम् ॥ ४३ ॥

हे भुवनमङ्गल ! यस्य तव दिग्वितानं दिशां सन्तापहरं शान्तिकरं च दिवि पाताले भूमौ च प्रथितं यशः विश्वं पुनाति तथा दिवि मन्दाकिनीति अधश्च भोगवतीति इह भूमौ च गङ्गेति प्रथितं चरणाम्बु विश्वं पुनाति तत्रागन्ता महां तत्रत्यानां भाग्यमित्याशयः ॥ ४४ ॥

---

### भाषा टीका ।

अति आनन्द से संभ्रम युत और आदरयुत राजायुधिष्ठिर देव देव ब्रह्मादिकन के ईश्वर श्रीकृष्णको गृह में लाय कर उनकी पूजा में क्रमको भूल गया कि किस प्रकार पूजा करूं ॥ ४१ ॥

हे राजन् ! श्रीकृष्णभगवान् पिताकी भगिनी कुन्तीका तथा ब्राह्मणादि पूज्य स्त्रीयोंका अभिवादन करते भए और द्रौपदीने तथा सुभद्रा बहनिने स्वयं श्रीकृष्णका अभिवादन किया ॥ ४२ ॥ ॥

हे भुवनमङ्गल ! जिस आपका निर्मल यश चाँदनी के तुल्य होकर सब दिशान में व्याप्त होरहा है इसी हेतु से स्वर्ग में पाताल में भूमि में विख्यात होकर वह यश विश्व को पवित्र करता है तैसेहि आपको चरणारविन्दका प्रक्षालन रूप जल स्वर्ग में मन्दाकिनी नाम से पाताल में भोगवती इस नाम से और भूलोक में गङ्गा इस नाम से विख्यात होकर विश्वको पवित्र करता है । फिर आप के साक्षात् दर्शन स्पर्शन आदि से पवित्र होने में क्या संदेह है ॥ ४३—४४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका॥

तत्रैवं नारदोक्तं तेषु वर्तमानेष्वात्मीयपक्षेषु यादवेषु जरासन्धस्य विजिगीषया अवृण्वत्सु मन्यमानेषु वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥

श्रीभगवानुवाच ।

त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित् ।
तथाऽत्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥
इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ।
निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे भगवद्याने
सप्ततितमोऽध्यायः ॥७०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चक्षुश्चक्षुर्हेतुः मन्त्रार्थानां मन्त्रसाध्यानां तत्त्ववित्परिपाकवेदिता ॥ ४६—४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अगृह्णत्सु मौनमालम्बमानेष्वित्यर्थः । पाठोऽयमसन्धिरेव संसन्धिपाठेऽगृह्णत्सु चेति क्वचित् । भूत्यमिति स्वभक्तस्य तस्य माहात्म्यविस्तारणार्थमिति भावः । यतः केशवः गोकुलसुखार्थे केशिहन्ता • तत्रत्यजनप्रिये तस्मिन् श्रीमदुद्धवेपि स्नेहविशेषवानितिभावः । अत एव वाचःपेशैः प्रकर्षेणाह—यत उद्धवं सर्वेषामुत्सवरूपमिति भावः । स्मयन् उद्धवस्येयाभिप्रायविशेषेण स्मयमानः ॥ ४५ ॥

• त्वं हि त्वमेव नोऽस्माकं यादवानां चक्षुश्चक्षुर्हेतुः सुहृन्मित्रादधिकहितकारी मन्त्रार्थतत्त्ववित् विदिति च परममिति प्रसिद्धं चक्षुषः सकाशात् आधिक्यमुक्तं मन्त्रेण भाविदूरस्थादिप्रदर्शनात् अथ अतो हेतोः अत्रास्मिन् कृत्यद्वयं यद्यदावनुष्ठेयं तद्ब्रूहि न च वक्तव्यं तदेते न गृहीष्यन्तीत्याह तदेव श्रद्दध्मः श्रद्धया गृह्णीमः गृहीष्यामः करवाम करिष्यामश्चेति अयं भक्तवात्सल्यभरेण प्रोत्साहनविशेषः ॥ ४६ ॥

उपामन्त्रितः स्नेहेन प्रार्थनावदादिष्टः भर्त्रेति तदादेशस्यावश्यपालयता सूचिता अत एव भक्त्या स्वशिरसा तस्य निदेशमाधाय शिरोबद्धाञ्जलितयाऽऽ इत्येत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अगृणत्सु जिगीषया स्वानपेक्षया अन्येषु राजसूयमगधयोरेव स्वेच्छनं कुर्वत्सु ॥ ४५—४७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रेति । इत्थं भूतराजदूता तयुधिष्ठिरदूताभ्येषु सभास्थेषु आत्मपक्षेषु यदुषु जिगीषया प्रगृणत्सु मगधजिगीषामुत्पादयितुं प्रगृणत्सु तावन्मागधं प्रत्येव गन्तव्यम् इत्येवं वदत्सु सत्सु वाचःपेशैः मृदुवचोभिरुद्धवं प्राह ॥ ४५ ॥

तदेवाह—त्वंहीति । हि यस्मात्त्वं नोऽस्माकं चक्षुस्तत्स्थानीय इत्यर्थः । सुहृत् मन्त्रार्थानामालोचनसाध्यानामर्थानां तत्त्वं याथात्म्यं वेत्सीति तथा चातोऽधुना यदनुष्ठेयं कर्तव्यं तद्ब्रूहि तद्वदुपदिष्टं कर्तव्यमर्थं श्रद्दध्मः विश्वसिमः करवाम च ॥ ४६ ॥

इतीति । इत्थं सर्वज्ञेनापि भर्त्रा भगवता मुग्धवदज्ञेनेव उपामन्त्रितः मन्त्रार्थं प्रचोदितः उद्धवः सन्देशमाज्ञां शिरसा आधाय ऊढ्वा प्रत्यभाषत प्रत्युत्तरं दत्तो इत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्ततितमोऽध्यायः ॥ ७० ॥
( श्रीविजयध्वजतीर्थरीत्या अष्टसप्ततितमोऽध्यायः ॥ ७८॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्ततितमोऽध्यायः ॥ ७० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
सप्ततितमोऽध्यायः ॥ ७० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुभयोर्दूतनारदयोः स्वस्वार्थप्रार्थनायां यज्जातं तदाह—तत्र तेष्विति । तत्र प्रसङ्गे अन्यतरदेशगमनं तेषु तत्रत्येषु सहायभूतेषु विजगीषया गृणत्सु सत्सु जरासन्धवधार्थमेव गन्तव्यमिति लौकिकबुद्धेः प्राधान्यात् नारदेच्छाकरणे सति उभयसमाधानार्थं स्वस्य मध्यस्थत्वात् उभयमताभिज्ञम् उद्धवं ब्रह्मशिवयोरपि नियन्ता सुखदाता च वचनोत्तमैः प्राह—स्वयं तमपि मोहयन् वाक्यमाधुर्यात् सादरं शृणुयात् अन्यथा सर्वेश्वरत्वं जानातीति न शृणुयादपि नारदहिताकरणे ब्रह्मपक्षहानिः जरासन्धवधे. महादेवपक्षनाश इति । यज्ञार्थमेव गमनमायाति अतोऽङ्गप्रधानयोरविरोधे क्रीडा सुखदानं भवतीति तदभिज्ञमुद्धवं सर्वसम्मतं बोधयामास ॥ ४५ ॥

भगवद्वाक्यमाह—त्वं हि न इति । सर्वज्ञस्य स्वत एव ज्ञात्वा करणमुचितं न त्वसर्वज्ञस्य वाक्यात् व्यामोहकत्वं वा स्यात् अतस्तत्परिहारार्थमुद्धवं स्वावयवत्वेन निरूपयति त्वमक्षचक्षुरिति । आधिदैविकं परमानन्दरूपं चक्षुषश्चक्षुर्वो तस्यैवायमवतार इति लोकोक्तिश्च मन्त्री ज्ञानचक्षुरिति अतो न इति बहुवचनं केवलं शास्त्रपरतां वारयितुमाह—सुहृदिति । पर्यवसानज्ञानमाह—मन्त्रार्थस्य फलस्य तत्त्वं पर्यवसानं वेत्तीति अथ अतः कारणादत्रार्थे अनुष्ठेयं ब्रूहि उभये वयं श्रद्दध्मः तदेव च करवामः अन्यतरस्याप्यश्रद्धाकरणाभावश्च वारयति ॥ ४६ ॥

उद्धवो महामन्त्री तद्वाक्यममोघं मत्वा उत्तरकथनार्थमुद्युक्त इत्याह—इत्युपामन्त्रित इति । उद्धवो हि न युद्धायुपदिश्यते ज्ञानांशत्वात् यदि ज्ञानेपि न विनियुज्येत तस्य भरणं व्यर्थं स्यात् एतत्सूचयति भर्त्रेति दोषं निवारयति सर्वज्ञेनापीति निर्देशमाज्ञां प्रति शिरसा अभाषत अङ्गीकृतवान् उत्तरं विचार्य वक्ष्यामीति उक्तवानित्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
एकविंशाध्यायविवरणम् ॥ २१ ॥ ७० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र सभायां तेषु यादवेषु आत्मीयपक्षेषु जरासन्धस्य जिगीषया हेतुना मुनेस्तद्वचः अगृणत्सु अमन्यमानेषु सत्सु वाचः वचनस्य पैर्यैरवयवैः स्वाभिप्रेतैरर्थैरुद्धवहृद्यारोपितैः स्मयमानः उद्धवं प्राहेति तस्यैव मन्त्रणाभिज्ञतोत्कर्षख्यापनार्थमिति भावः ॥ ४५-४७ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
दशमे सप्ततितमः सङ्गतः सङ्गतस्सताम् ॥ ७० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मपक्षेषु यादवेषु जरासन्धस्य विजिगीषया अगृह्णत्सु मुनिवाक्यममन्यमानेषु वाचःपेशैःपेशलवाग्भिरुद्धवमाह ॥ ४५ ॥ चक्षुःकार्या कार्य्यद्रष्टा ॥ ४६—४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्ततितमाऽध्यायार्थप्रकाशः ॥ ७० ॥

---

भाषाटीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि उस सभा में युधिष्ठिर के वृत्तान्तको श्रवण करने वारे यादव लोगोंने जरासन्ध के जीतनेकी इच्छा कर के नारदजी के कहने से श्रीकृष्ण के हस्तिनापुर गमनको जब स्वीकार नहि किया तब श्रीकृष्ण भगवान् मन्दहास करत मधुर वाणीयो से निज दास उद्धवजी के प्रति बोले ॥ ४५ ॥

हे उद्धव नेत्र के समान सब वस्तुका प्रकाश करने वारे आप हमारे हो और परम सुहृद् तथा आलोचना और उस के फल के तत्वको जानने वारे ; आपही इस वास्ते इस विषय में जो कुछ कर्त्तव्य है उसको आप कहियेगा आप के वचन में हमको विश्वास है और हम उसी के करने वारे हैं ॥ ४६ ॥

सर्वज्ञ होकरभी इस प्रकार अज्ञवत् स्वामीने जब उद्धवजीको पूछा तब श्रीकृष्णकी आज्ञाको मस्तक से धारण करके उद्धवजी बोले ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें सत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७० ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्ततितमोऽध्यायः ॥ ७० ॥



## एकसप्ततितमोऽध्यायः।

---

श्रीशुक उवाच।

इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत्।
सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥

उद्धव उवाच।

यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया।
कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥
यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो।
*(पूर्वं गन्तव्यमस्माभिरिन्द्रप्रस्थमितः प्रभो।
तत्रैव तदनुज्ञातस्तदर्थं जहि मागधम् ॥०॥)
अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥
अस्माकञ्च महानर्थो ह्येतेनैव भविष्यति।
यशश्च तव गोविन्द राज्ञो बद्धान् विमुञ्चतः ॥ ४ ॥
स वै दुर्विषहो राजा नागायुतसमो बले।
बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥
द्वैरथे सतु जेतव्यो मा शताक्षौहिणीयुतः।
ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अथैकसप्ततितम उद्धवस्य तु मन्त्रतः।
इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥
राजसूयमिषं कृत्वा भीमदुर्योधनादिपु।
कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥

देवर्षेर्मतं राजसूयगमनम् सभ्यानां मतं राजरक्षा कृष्णस्य तूभयम् ॥ १ ॥

यक्ष्यतो यागं करिष्यतः पैतृष्वस्रेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं तव कार्यं तथा शरणार्थिनां राज्ञां रक्षा च कार्या ॥ २ ॥

तत्र प्रथमं राजसूयार्थं गन्तव्यं ततो राजरक्षा कर्तव्येत्याह-यष्टव्यमित्यष्टभिः। अतो दिग्विजयहेतोः उभयार्थो राजसूयार्थः शरणागतरक्षार्थश्च ॥ ३-४ ॥

अत्युत्सुकतया सद्य एव जरासन्धं हन्तुमिच्छतो यादवानालक्ष्याऽऽह— सवाइति। अन्येषां ततो बलिनामपि यद्यपि समबल एव भीमस्तथापि तं विना भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥

ननु, स्वबलसाम्येऽपि सेनाबलं तस्याधिकमिति चेत्तत्राह- द्वैरथ इति। द्वन्द्वयुद्धे शतेनाक्षौहिणीभिर्युतो मागधो मा न जेतव्य इत्यर्थः। नन्वसौ स्वसैन्यमेव युद्धाय नियुञ्जीत कुतस्तेन द्वैरथमिति तत्राह ब्रह्मण्य इति। न प्रत्याख्याति न निराकरोति ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्येतद्भगवत उदीरितमाकर्ण्य देवर्ष्यादीनाञ्च मतम् आ

---

*वीर० पाठः।

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

सम्यक् ज्ञात्वा महामतिः सर्वेषामेव मतरक्षया प्रहर्षात् देवर्ष्यादीनां यथोत्तरं स्फीयत्वे श्रैष्ठ्यम् ॥ १ ॥

साचिव्यं यदुक्तं तत्कार्य्यं तत्र हेतुः यक्ष्यतः पैतृष्वसेयस्येति तच्च तव योग्यत्वमेवेत्याह—देव हे विद्योतमानैश्वर्य्य ! हे विचित्रक्रीडापरेति वा ऋषिणेति तत्रादावृषिवाक्यं परिपाल्यमिति भावः ॥ २ ॥

नन्वेवमपि राजभिः प्रथमनिमन्त्रणात्तेषां मरणसङ्कटापाताच्च तद्रक्षणार्थमेव प्रथमं गन्तुमुचितं यज्ञक्रिया तु पश्चादपि स्यात् तत्राह—यष्टव्यमिति । दिक्चक्रजयिनैव सता राज्ञा यद्वा दिक्चक्रजयोऽस्ति यस्मिन् राजसूये तेन अतो जरासुतस्य राजसूयचिकीर्षुद्वारैव यो जयः स उभयत्राप्यर्थो मतः ननु दुर्घटस्तद्द्वारा तज्जयः तत्राह विभो हे प्रभो त्वत्प्रभावात्सुघट एवेति भावः । जरासुतेति सन्धिस्थानविदारणस्मरणञ्च सूचितम् अतः प्रथमं राजसूयार्थमेव गन्तव्यमिति भावः ॥ ३ ॥

न केवलमुभय एवार्थः अपित्वस्माकं च यादवानामेतेन तज्जयेनैव बलवद्विद्वेषिवधरूपो महानेवार्थो भविष्यति तत्र तत्र राज्ञः कर्मभूतात् बन्धात्सकाशाद्विमुञ्चतस्तव यशास्त्वप्यस्माकं महानेवार्थ इति वदन् यादवानपि सर्वान् दृष्ट्वा स्वमन्त्रपक्षपातिनः करोति स्म बद्धान् विमुञ्चत इति पाठः क्वचित् । हे गोविन्देति भगवत्ताप्रकटनार्थं पृथिव्यामवतीर्णस्य तवैतद्युज्यत एवेति भावः ॥ ४ ॥

पाण्डवेष्वपि केन कथं जरासुतो जेतव्य इत्यपेक्षायामाह स इति त्रिभिः । वै प्रसिद्धौ बले तावन्नागायुतसमः तादृशबलिनामप्यन्येषां दुर्विषहः असह्यविक्रमः राजेति महासैन्यसम्पत्तिश्च सूचिता ॥ ५ ॥

द्वैरथ इत्यर्द्धकम् । तु एव द्वैरथे स एवैको जेतव्यः शताक्षौहिणीयुतस्तु नार्हः स्वपक्षे तस्य राजवृन्दघातनात् राजसूयसम्पत्तिनाशात् ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनात्मपक्षवर्त्त्युद्धवगतद्भिप्रायानभिज्ञः प्राह—किन्तु तदभिप्रायं जानन्नेव प्रत्यभाषतेत्याह—इतीति । तावत्सभ्यानां मतं जरासन्धजयार्थमेव गन्तव्यमित्येवंविधमभिमतं ज्ञात्वा ततः कृष्णस्य मतं राजसूययाजनार्थमेव गन्तव्यमित्येवं मतं ज्ञात्वा प्राह,तत्र हेतुत्वेन विशिनष्टि—महती श्रेष्ठा सूक्ष्मा मतिः यस्य सः ॥ १ ॥

उक्तिमेवाह दशभिः—यदिति । ऋषिणा नारदेन यदुक्तं यागं करिष्यतः पैतृष्वस्रेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं कर्त्तव्यमिति तदपि कार्यं कर्त्तव्यमेव तथा शरणार्थिनां राज्ञां च रक्षा च कर्त्तव्या ॥ २ ॥

तत्र तावद्राजसूयार्थं गन्तव्यं ततो राजरक्षा च कर्त्तव्येत्याह—यष्टव्यमित्याद्यष्टभिः । दिक्चक्रजयिना चशब्देन वक्ष्यमाणेन चेत्यस्य सङ्ग्रहः तेन युधिष्ठिरेण कर्त्रा राजसूयेन यष्टव्यं तावत्तत्साचिव्यमेव कार्यमिति भावः । दिक्चक्रजयिनेत्यनेन राजसूयस्य दिग्विजयपूर्वकत्वं तद्दशायामेव राजरक्षा च कृता भवतीत्युभयमभिप्रेतम्—

पूर्वं प्रथममस्माभिः इतः द्वारकातः इन्द्रप्रस्थं प्रति गन्तव्यम् । दिक्चक्रजयिनेत्यनेन अभिप्रेतं विशदयति—तत्रैवेति । तत्रैन्द्रप्रस्थे युधिष्ठिरेणानुज्ञात एव तदर्थं युधिष्ठिरप्रयोजनाय मागधं जहि घातय ॥ ७ ॥

ततो दिग्विजयहेतोः जरासुतजयः उभयार्थः राजसूयार्थः यः शरणागतरक्षार्थश्चेति मया मतः बुद्धः ॥ ३ ॥

अनेन राजसूयार्थगमनेनैव महान्सर्वोपिसिषाधयिषितोऽर्थो भविष्यति हे गोविन्द ! राज्ञो नृपान् बन्धाद्विमुञ्चतः मोचयतः तव यशश्च भविष्यति ॥ ४ ॥

अत्युत्सुकतया प्रथममेव जरासन्धेन सह युयुत्सून् यदूनालक्ष्याह—स वा इति । स वै जरासुतः गजानामयुतेन तुल्यं बलं यस्य सः उग्रं बलं यस्य तं भीमं विना अन्येषां सर्वेषामपि बलिनां दुःखेनापि सोढुमशक्यः भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥

किञ्च द्वैरथेन द्वन्द्वयुद्धेनैव स तु जेतव्यः न तथाऽक्षौहिणीनां शतैरपि नन्वपरिमितसैन्यपरिवृतेन सह भीमस्य कथं द्वन्द्वयुद्धं भविष्यतीत्यत आह—ब्रह्मण्य इति । सत्वित्यनुषज्यते स जरासन्धः ब्रह्मण्यः अतो विप्रैर्याचितो न प्रत्याख्याति ॥ ६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एकान्तभक्तानां भक्त्यतिशयजननाय हरेर्बन्धुकृत्याचरणलक्षणमाहात्म्यं कथयति—तत्रादौ कृष्णकटाक्षसूचिततत्कार्यविशेष उद्धवः स्वां मीतिं वक्ति, इतीति ॥ १ ॥

तद्भवाननुमोदतामिति देवर्षिणा यदुक्तं तस्यायमभिप्राय हे देव ! त्वया यक्ष्यतः यागं करिष्यतः पैतृष्वसेयस्य युधिष्ठिरस्य साचिव्यं साहाय्यं कार्यं कर्तव्यमिति किञ्च शरणैषिणां राज्ञां रक्षा च कार्या ॥ २ ॥

कार्यद्वयसाधनोपायं वक्ति—यष्टव्यमिति । तेन राज्ञा राजसूयेन यज्ञेन यष्टव्यं न कृष्यादिमेव यानमात्रेण तथापीदृक्त्वेन भाव्यमित्याह—दिक्चक्रेति । दिङ्मण्डलं जितवत तत्रामृत्वा जरासन्धः करं न ददातीति यद्वतो जरासुतवध उभयेषामर्थः प्रयोजनम् ॥ ३ ॥

युधिष्ठिरकार्यं सिद्धवत्कृत्वा स्वकार्यमभिष्टौति—अस्माकमिति एतेन जरासन्धवधेन विमुच्यतः विमोचयतः ॥ ४ ॥

दुर्बलैर्दुर्विषहोऽस्तु बलिनां सुविषह इत्यत उक्तं बलिनामिति—तर्हीदं दुःसाध्यं नेत्याह—भीमसेनेति ॥ ५ ॥

द्वैरथे द्वन्द्वयुद्धे तत्रोपायमाह—ब्रह्मण्य इति ॥ ६ ॥

---

श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः।

॥ १—७ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

द्वात्रिंशे धर्मरक्षार्थं धर्मस्थानगतिर्हरेः।
सर्वस्वमतियुक्तस्य शोभा युक्ता निरूप्यते ॥
एकाकृतिर्हरेरत्र बहुकार्यनिरूपिका।
निर्धार्यते सर्वयुक्ता धर्मे सर्वाधिकारिणी ॥

पूर्वाध्यायान्ते भगवद्वाक्यं शिरसा स्वीकृतं ततो भगवदिच्छानुसारेणैव कथनं मन्त्रित्वं व्याहन्यतेति पूर्वापरानुसन्धानार्थम् उद्धवस्य प्रकरणज्ञानपूर्वकम् उत्तरारम्भमाह—इत्युदीरितमिति। दूतवाक्ये तस्यापि विवाद इति देवर्षेः उदीरितम् इत्युक्तं भगवद्वाक्यश्रवणानन्तरमुत्तरस्य वक्तव्यत्वेपि पुनर्नारदवाक्यानुसन्धानात् तत्समानार्थमेवोद्धवोऽब्रवीत् धर्मब्राह्मणावेव पुष्टिमार्गे बाधकौ तयोः प्रतिविधानं किञ्चित् पुष्टिविरोधार्थेनेति प्रकरणार्थः विवादे हि मन्त्रिणो वचनमिति पक्षद्वयं निरूपयति—सभ्यानां मतमाज्ञाय कृष्णस्य चेति। सभ्यानां मतं युद्धार्थं गमनं मुख्यं स्वधर्मे पश्चात् दुःखाभावसुखयोः आदौ दुःखप्रतिविधातव्यमिति भगवतोप्येवं मतं चकाराद्विपरीतश्च एवं पौर्वापर्यसन्देहे निर्णयार्थमस्य बुद्धिरस्तीत्याह—महामतिरिति। भक्तिमार्गनारदयोः कोपः प्रतिविधातव्यः मर्यादा च स्थाप्या यावच्छक्यम् अतो धर्मब्राह्मणमर्यादात्रयमेकत्र विरुद्ध्यते अपरत्र भक्तिमार्ग एवैकः ॥ १ ॥

अतो बहूनामनुग्रहमिति न्यायेन वक्तव्यमिति निश्चित्य पक्षद्वयमनुवदति—यदुक्तमिति। देवेति सम्बोधनं साचिव्यं मन्त्रोपदेशः न तु युद्धेन सहायकरणम् अलौकिकप्रकारस्तु मन्त्रेण वक्तव्यः अतः साचिव्यमेव नारदेनोक्तमनुवदति कर्त्तुः शास्तुरनुज्ञातुरिति वाक्यात् तथाकरणो धर्मः पैतृष्वस्रेयकार्यकरणं लौकिकं तस्मादत्र लोकवेदविरुद्धो न भवत इति द्वयं निरूपितं द्वितीयः पक्षः शरणैषिणां रक्षा चकारात् बन्धूनां वाक्यं च, तथा सति द्वयोरैक्यं यथा भवति तथा कर्त्तव्यम् ॥ २ ॥

तत्र यज्ञो मोचने विनियोक्तुमशक्य इति मोचनमेव यज्ञे विनियोक्तव्यमिति आह—यष्टव्यमिति। दिशां चक्रं दश दिशः तत्र जयशीलेन राजसूयः कर्त्तव्यः अत एव स एव जरासन्धं घातयिष्यति यज्ञार्थं वधेतु न दोषः एवं सति ये दोषास्ते अग्रे परिहर्त्तव्याः। आदौ यज्ञार्थं तद्वधं स्थापयति अतो जरासुतजय इति तर्हि भक्तिर्माबाधित एवेत्याशङ्क्याह—उभयार्थं इति। यज्ञार्थं मोचनार्थञ्च अयं पक्षो मम सम्मतः युक्तश्चायं नारदादेः कोपाभावात् ॥ ३ ॥

अस्मिन् पक्षे दोषान् परिहरति—अस्माकञ्चेति सार्द्धाभ्याम्। पराक्रमेण जरासन्धवधे तद्धनमस्माभिः प्राप्तव्यं यज्ञार्थं वधपक्षे तु तस्याभावः पूर्वं भगवद्धनञ्च, तेनापहृतं यवनजगोत्रवं तस्य प्रत्यावृत्तिश्चकारार्थः मोचितेभ्यश्च एतत्सर्वमपि यज्ञार्थवधेनापि भविष्यतीत्याह—एतेनैव भविष्यति। तेन धनेन मोचिता भक्ताः पोषणीया इति अन्यसम्मेलनाद्यशो न भविष्यतीत्याशङ्क्याह—यशश्च तव गोविन्देति। चकारात् प्रतिज्ञा "अभयं सर्वभूतेभ्यः" इति बन्धाद्विमोचनं तद्वधमात्रेण भवति तत्पुत्रेणापि तन्मम्भवात् अतो विशेषतो मोचनंहेतुत्वेनोपदिशति। राज्ञो बन्धादिति। राज्ञा राजशरीराणि आत्मनश्च बन्धादुभयविधात् विशेषतोमोचनं तदेव विमुञ्चतस्तव ॥ ४ ॥

ननु, को विशेषः ऋषिरेव वक्तव्यः आवश्यको जरासन्धवधः तं कृत्वा समागमिष्यतीति अस्मिन् पक्षे स्त्रीभिः सह लीलया गमनं बाध्यते मर्यादायामवश्यश्चायं पक्ष इति वक्तुं जरासन्धस्वरूपमाह द्वाभ्याम्—स वै दुर्विषह इति। केनापि सोढुं न शक्यः यतो राजा क्षत्रियः अनयोर्हि प्रायेण एतद्लौकिकं बलं लौकिकमप्याह—नागायुतसम इति। बलविषये अयुतहस्तिसमः एतादृशा अन्येपि सन्तीति तद्व्यावृत्त्यर्थमाह—बलिनामपि चान्येषामिति। महाबलिनां सर्वेषामेवायं मिलितानां समः चकाराद्ब्राह्मणादिवरसिद्धमपि तस्य बलं तर्हि मर्यादायामवध्य एवेत्याशङ्क्याह— भीमं समबलं बिभेति। भीमोप्येतादृशः तथा जयस्तदग्रे वक्ष्यते ॥ ५ ॥

किञ्च तस्यान्यदपि वरप्राप्तं सामर्थ्यमस्तीत्याह—द्वैरथे स तु जेतव्य इति। द्वन्द्वयुद्धेनैव जेतव्यः न स्वपरिमिताक्षौहिणीयुक्तः अनेन तस्य सेनाधिक्यमपि सूचितम् एवं तस्य गुणानुक्त्वा एको गुणः समयविशेषे दोषत्वमापद्यत इति तदाह—ब्रह्मण्य इति स्वभावतो हि ब्राह्मणहितकारी अभ्यर्थितश्चेत् प्रत्याख्याति कर्हिचिदिति कपटं ज्ञात्वापि धर्मदाक्ष्यादिदमेकं तस्य मरणे छिद्रम् ॥ ६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

गत्वैकसप्ततितमे गृहीतोद्धवमन्त्रणः।
ससैन्यः सप्रियः कृष्णइन्द्रप्रस्थोकसोऽधिनोत् ॥

देवर्षेः सभ्यानां कृष्णस्य चकारात् राजदूतस्य च उदीरितमाकर्ण्य मत आज्ञाय महामतिरिति सर्वमतरक्षणेन सर्वप्रहर्षणात्, तत्र राजसूयार्थके गमने देवर्षेः सम्मतिः। सभ्यानां दूतस्य च जरासन्धवधार्थके कृष्णस्य तूभयत्रैव ॥ १ ॥

यक्ष्यतः यागं करिष्यतः पैतृष्वस्रेयस्य युधिष्ठिरस्य साचिव्यं साहाय्यकार्यमेव यदुक्तमृषिणा जरासन्धवधात् शरणैषिणां रक्षा च कर्त्तव्यैव या खलु सभ्यानां दूतस्य चाभिमतेति भावः ॥ २ ॥

यत्रैकेनैव कार्येण उभयं कार्यं भिद्यत सैव युक्तिः समीचीनेत्याह—यष्टव्यमिति। उभयार्थं इति राजसूयसिद्धिप्रयोजनकः राजरक्षाप्रयोजनकश्च तथाहि दिग्विजयं विना राजसूययज्ञो न भवति जरासन्धवधं विना दिग्विजयश्च न भवतीति प्रथमं राजसूयनिमन्त्रणमेवाङ्गीकर्त्तव्यं राज-

ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ।
हनिष्यति न सन्देहो द्वैरथे तव सन्निधौ ॥ ७ ॥
निमित्तं (१) परमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥
गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणञ्च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयञ्च ॥ ९ ॥
जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते ।
प्रायः (२) पाकविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रक्षानिमन्त्रणन्तु तत्रङ्गसिद्ध्यैव सेत्स्यतीति एकक्रिया द्व्यर्थकरी भविष्यतीति भावः ॥ ३ ॥

अस्माकं सभ्यानाम् । एतेनैव राजसूयार्थकगमनेनैव । महान् अर्थः जरासन्धवधलक्षणः ॥ ४ ॥

सद्य एव जरासन्धं हन्तुमत्युत्सुकान् यादवाना— लक्ष्याह—स वै इति । अन्येषां ततोऽधिकबलिनामपि यद्यपि समबल एव भीमस्तदपि तं विनेति भीमादेव तस्य मृत्युरिति बृहस्पतेः सकाशादधीतज्योतिरागमादिशास्त्रेण मयैव पूर्वविचारितत्वादिति भावः ॥ ५ ॥

भीमेनापि स द्वैरथ एव जेतव्यः शताक्षौहिणीयुतस्तु मा जेतव्यः ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकसप्ततितमे उद्धवसम्मत्येन्द्रप्रस्थं गतस्य सभार्यस्य भगवतः पार्थैः कृतमादरमनुवर्णयति—इतीति ॥ १ ॥

यक्ष्यतः यागं करिष्यतः साचिव्यं साहाय्यं कार्यं शरणैषिणां राज्ञां रक्षा च कार्या ॥ २ ॥

यष्टुकामुषिणेत्यनेन साचिव्यार्थं प्रथमं गन्तव्यं ततो रक्षा कर्तव्येति द्योतितं तदेवाह—यष्टव्यमित्यादिभिः । दिक्चक्रजयिना सता युधिष्ठिरेण कर्तो राजसूयेन यष्टव्यम् अतः दिक्चक्रजयिनः सकाशात् जरासुतजयः उभयार्थः राजसूयार्थः शरणागतरक्षार्थश्च तथाहि जरासुतवधं विना दिग्विजयासम्भवाद्राजसूययशः शरणागतरक्षा च न भविष्यतीति ॥ ३ ॥

अस्माकं मन्त्रिणाम् एतेनैव कार्यद्वयकमाश्रयणेन ॥ ४—५ ॥

शताक्षौहिणीयुतो मा न जेतव्यः ॥ ६ ॥

---

भाषाटीका ।

श्रीशुक उवाच

श्रीशुकदेवजी बोले कि महाबुद्धि मान् उद्धवजी इस प्रकार नारद जी के वचन को सुन कर और सभासदो के मत को तथा श्रीकृष्ण के मत को जानकर बोलते भए ॥ १ ॥

उद्धव उवाच ॥

हे देव ! आप की भूआ के पुत्र राजा युधिष्ठिर यज्ञ करेंगा उस की सहायता आपको अवश्य कर्त्तव्य है, यह जो नारद जी ने कहा और अपनी रक्षा करने वारों की वाञ्छा करने वारे राजान की रक्षा भी आप को अवश्य हि कर्त्तव्य है ॥ २ ॥

हे विभो सब दिशान को जीतने वारा पुरुष राजसूय यज्ञ कर सक्ता है, इसलिये प्रथम जरासन्ध का जीतना राजसूय यज्ञ का और राजान की रक्षा का कारण है ॥ यह मेरा सम्मत है ॥ ३ ॥

हे गोविन्द ! राजसूय यज्ञ के निमन्त्रण का अङ्गीकार करने से हि हम को महान् प्रयोजन होवेगा ॥ क्योंकि जरासन्ध के बांधे हुए राजान को बन्दीखाने छुड़ाने वारे आप का महान् यश होवेगा ॥ ४ ॥

इसीलिये पहले यहां से हम को इन्द्रप्रस्थ चलना चहिये ॥ इन्द्रप्रस्थ में हि राजा युधिष्ठिर से अनुमति को प्राप्त होकर आप उन के अर्थ, जरासन्ध को मारियेगा ॥५॥

और यह प्रसिद्धि है कि वह जरासन्ध बल में दश हजार हाथियों के समान है इसलिये उस के समान बलवारे भीमसेन के विना अन्य बलवान को तो दुःख से भी जरासन्ध सहने का योग्य नहि है ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भिक्षेत द्वन्द्वयुद्धं याचताम् तथापि समबलत्वात्सास्येमेव स्यादत आह—तव सन्निधाविति ॥ ७ ॥

नन्वकिञ्चित्कुर्वतो मम सन्निधानात्किं स्यादत आह—

(१) परमीशस्त्वम् । (२) कर्मविपाकेन । इति च क्वचित् पाठः ।

श्रीशुक उवाच ।
इत्युद्धववचो राजन् सर्वतोभद्रमच्युतम(नः)।
देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयत(न्) ॥ ११ ॥
अथादिशत्प्रयाणाय भगवान् देवकीसुतः ।
भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निमित्तमिति । अयमर्थः यथा तवारूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भस्तथा शर्वश्च तन्निरोधे तथात्र त्वमेव सन्निधिमात्रेण हन्ता भीमो निमित्तमात्रमिति ॥ ८ ॥

अतोऽनेनोपायेन त्वया स शीघ्रं हन्तव्य इत्याशयेनाऽऽह—गायन्तीति । जरासन्धधृतानां राज्ञां देव्यः पत्न्यस्ते विशदं कर्म स्वगृहेषु बालकलालनादौ गायन्ति, किं तत्कर्म ? स्वशत्रोर्जरासन्धस्य वधमात्मनां पतीनां विमोक्षणञ्च वत्स ! मारीशः श्रीकृष्ण एवं करिष्यतीति अत्र दृष्टान्ताः गोप्यश्च इत्यादयः यथा गोप्यः शङ्खचूडवधं स्वमोक्षञ्च गायन्ति अवतारान्तरगतं कुञ्जरपतेर्नक्रात् जनकात्मजायाश्च रावणात् पित्रोश्च कंसगृहान्मोक्षम् अत [illegible]भूतानां तासां कृपया त्वया तथैव कर्त्तव्यमिति भावः ॥ ९ ॥

किञ्च जरासन्धवध इति । भूयर्थायेति ततः शिशुपालवधादयोऽपि सुखसाध्याः भविष्यन्तीति भावः । एतच्च सर्वं भविष्यत्येवेति सम्भावयन्नाह—प्राय इति । पच्यत इति पाकः कर्म तस्य विपाकः फलं तेन राज्ञां पुण्यविपाकेन जरासन्धादीनां पापविपाकेनेति पाठान्तरं जरासन्धस्य पापविपाकेनेति तेनायं क्रतुस्तवाभिप्रेतस्तत्र गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ १० ॥

अच्युतमुपपत्त्या वृद्धम् यदुवृद्धा इति वदता अनिरुद्धादयस्तथा नापूजयन्निति सूचितम् ॥ ११ ॥

अनुज्ञाप्यानुज्ञां प्रार्थ्य गुरून् वसुदेवादीन् ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मभव इति सार्द्धकम् । तत्र तत्सोपानमार्द्धकेन ब्रह्मभव इति भवद्भ्वदीयविद्वेषनिश्चितरजस्तमःस्वभावत्वात्प्रतिग्रकाम एवात्मानं तथा ज्ञापितवानित्यर्थः । तस्मात्साक्षाद्भय भवद्भिरभ्यर्थितो कैरथं कर्हिचित्प्रत्याख्यायात् विप्रैस्तदाकारैस्त्वभ्यर्थितः, कर्हिचिन्न प्रत्याख्याति अङ्गीकुर्यादेवेत्यर्थः । यस्मादेवं तस्माद्ब्रह्मवेषेति वृकस्येव कृशमुदरं यस्येति बलिष्ठता सूचिता बलिष्ठानां हि सिंहादीनां कृशमध्यत्वं समबलत्वेपि जयकारणमाह—जयेपि हननमप्याह—हनिष्यतीति ॥ ७ ॥

नव यः, कालस्तद्रूपा शक्तिः तस्य निमित्तमात्रं द्वारीकृतमात्रं कालस्यैव विशेषणम् अरूपिणः इति सर्वसम्पादकस्यापि चेष्टाभिरलक्ष्यमाणस्येत्यर्थः । तादृशशक्तित्वञ्च युक्तमेवेत्याह—ईशस्य ईश्वरस्येति तथा हिरण्यगर्भशर्वयोर्माहात्म्यार्थं यथा त्वया तत्क्रियते तथात्रापि भीमसेनयशःप्रदानार्थमप्येवं कार्य्यमिति भावः ॥ ८ ॥

तथा स्वैकशरणानां स्वैकाशाजीवनानां तादृशदुःसहान्यथमपीत्याह—गायन्तीति । सर्वलोकास्तावत् दुष्टहननभक्तरक्षात्मकं ते विशदं कर्म गायन्ति तत्र प्रस्तुतमवधीयतामित्याह—गृहेष्विति । गृहेष्वेव स्थित्वा त्वामुद्दिश्य सदैन्यप्रार्थनया देव्यो राज्ञ्यो राज्ञां जरासन्धहतकरुद्धानां भाविनमपि स्वशत्रुवधमात्मविमोक्षणञ्च गायन्ति तत्र दृष्टान्तमिव कुर्वन् निजाभीष्टविशेषमपि विज्ञापयति—गोप्यश्च स्वशत्रुवधादिकं भूतमपि साम्प्रतं भवद्विरहरूपमहाशत्रुविस्फोटनाय गायन्ति अथ तद्रूपरक्षामेव दृढयितुमाह—कुञ्जरपतेरिति । लब्धशरणाः मोक्षेच्छया शरणमागताः मुनयो मुक्ताः वयञ्च भक्ताः कुञ्जरपतेर्गजेन्द्रस्य मोक्षणं तच्छत्रोर्नक्रस्य वधं जनकात्मजायाः मोक्षणं शत्रोरावणस्य वधं पित्रोर्मोक्षणं शत्रोः कंसस्य वधञ्च गायामः ननु देवीनां गोपीनामपीत्यर्थः । तासां तत्तदभीष्टस्याद्याप्यसिद्धत्वादिति भावः । तदेवं तत्रतत्र तदौत्सुक्यवर्द्धनतात्पर्य्यकं ज्ञेयं तत्र मुक्तानां तत्तद्गुणपरिनिष्ठितोपि नैर्गुण्य इति दर्शनात्तद्यशोमाहात्म्येनैव तथा भक्तानाञ्च अत्र पाण्डवा अपि प्रवेशिताः तस्मात्प्रस्तुतेपि सर्व एव निजाश्रितारक्षणीया इति सर्वमसमञ्जसमेव कार्य्यमिति भावः । अत्र गोपीनां परमान्तरङ्गत्वेनोत्तरोत्तरश्रैष्ठ्यविवक्षया सर्वान्तपाठयोग्येपि स्त्रीजातिप्रसङ्गात् तत्स्मरणेनात्यौत्सुक्यात् मध्यत एवोक्तिः आसाञ्च अकस्मात्प्रस्तावः श्रीमद्व्रजाद्दागमनमारभ्य प्रायेणालब्धावसरतया केनापि मिषेण मध्ये मध्ये तत्स्मारणार्थं तथा सर्वं हन्त सर्वरक्षार्थं सन्निधेन सम्प्रार्थिता एव वा कथं न स्मरसि इत्युपालम्भनप्रायार्थिनीति ज्ञेयं यदेव किल मनसि कृत्वा, राजसूयादिसम्बन्धपरम्पराप्राप्तदन्तवक्त्रवधान्त कार्य्यं समाप्य श्रीभगवान् स्वयमेव श्रीमद्व्रजं गमिष्यतीत्य तदप्युदाहरिष्यामः किन्तु महासभायां तासां प्रस्तावो गोपीसामान्यतया श्रीमद्व्रजेश्वर्य्यादीनामेव सभ्येषु मानाश्च दीपायेति ज्ञेयम् ॥ ९ ॥

उपसंहरति-जरेति । भूयर्थाय पूर्वोक्तराजसूयादिरूपाय पाकः तण्डुलपाकवत् क्रत्वनुष्ठानं तस्य विपाकेनौदनसिद्धिवत्पाण्डवानां निष्कण्टकपारमेष्ठ्यनिष्पत्तिरूपेण परिणामेन हेतुना तव चासौ क्रतुरभिमतः । प्राय इति वितर्के पाठान्तरेपि पापानां शिशुपालादीनां दुर्य्योधनान्तानां विपाकेन परिणामेन विनाशलक्षणेन हेतुनेति पाण्डवान् तादृशतात्पर्य-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

म्येन तेनेत्यर्थः। ततः प्रथमं राजसूयार्थमुद्यतं पाण्डवराजमाश्वास्य तदनुज्ञया भीमसेनेन जरासन्धं घातयित्वा राज्ञश्च मोचयित्वा राजसूयः सम्पादयितव्य इति भावः। कृष्णेति सर्वाराध्यत्वसर्वैश्वर्यत्वसर्वभूतस्थसर्वपरममहिमयनामत्वात्तेनैव सम्बोधनं परममहिमानमेवावेदयति "यस्य नाममहद्यशः" इति श्रुतेः। तस्मादत्र दासभावो नाभासीक्रियते ॥ १० ॥

प्रतीति। तादृशगिरोद्घोषेण कृतस्य तेषां पूजनस्य प्रतिरूपत्वमप्राप्तः यद्वा प्रतिपदं प्रत्यक्षरं चापूजयन् आद्रियन्त साधु साधु इति प्रीत्या शश्लाघिरे इत्यर्थः। तत्रादौ देवर्षिणा प्रतिपूजन तदभिमतसिद्धेः अन्येतु श्रीकृष्णेन यत्तच्च खलु तन्मुखेनैव वाचयित्वा स्वेन तत्पक्षग्रहणमेवेदमिति व्यवच्छिन्नं यदुवृद्धा इति तेषामेव तादृशप्रागल्भ्ये युक्तत्वात् ॥ ११ ॥

अथानन्तरं सद्य एवेत्यर्थः। श्रीमत् पाण्डवमिलनाद्यौत्सुक्यात् सम्मुहूर्त्ताद्यपेक्षामपि तत्याजेति भावः। भगवान् समग्रैश्वर्यादिमानित्यंशत्वं व्यवच्छिन्नं तत्रापि देवकीसुत इत्यसाधारण्यं दर्शितं "कृष्णस्तु भगवान् स्वयम्" इति स्वयंशब्दात् इत्यनर्गलवैभवस्मरणाच्चमत्कारो व्यञ्जितः आदिशब्दात्प्रबल्याहृणादयः विभुः परमस्वतन्त्रोपि ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भिक्षेत द्वन्द्वयुद्धमिति शेषः ॥ ७ ॥

कालस्य कालात्मनः तव सर्गनिरोधयोः तत्तत्कर्तृकयोः सर्गसंहारयोः हिरण्यगर्भः शर्वश्च निमित्तमात्रमित्यर्थः ॥ ८ ॥

राज्ञां देव्यः राजस्त्रियः गायन्तीति प्रत्यासत्त्या वर्त्तमाननिर्देशः आत्मविमोक्षणं स्वभर्तृभयनिवृत्त्या स्वतो भयनिवर्तनम् ॥ ९-१३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततः किमत आह—ब्रह्मवेषधर इति। ब्रह्मवेषधरः वृकोदरो भीमो विप्रवेषं दधत् गत्वा तं जरासुतं प्रति भिक्षेत द्वन्द्वयुद्धमितिशेषः। ततोपि किमत आह—हनिष्यतीति। द्वैरथं द्वन्द्वयोधिनं मागधं हनिष्यति सोप्यतिबलः तं कथं भीम एव हनिष्यतीत्यत उक्तम् तव सन्निधाविति। तव सान्निध्यप्रभावादेव हनिष्यति नतु स्वबलप्रभावादिति भावः ॥ ७ ॥

नन्वकिञ्चित्कुर्वतो मम सन्निधिना किं स्यादत आह·निमित्तमिति। विश्वस्य सर्गनिरोधयोः उत्पत्तिप्रलययोस्त्वं परं निमित्तमादिकारणम् अतो भीमरूपेण त्वमेव हनिष्यसीति भावः। यद्यहं परं निमित्तं किं तर्ह्यवान्तरं निमित्तमत आह—हिरण्यगर्भ इति। कालस्य कालशरीरकस्याकृपिणः प्राकृतरूपरहितस्य सर्वस्रष्टुः सर्वसंहर्त्तुश्च तव हिरण्यगर्भो ब्रह्मा शर्वः भवश्च तवेत्यशांशिभावसम्बन्धेषष्ठी विश्वसर्गनिरोधयोरवान्तरकारणमिति शेषः ८॥

कोसौ तद्वधादस्माकं लाभस्तत्राह—गायन्तीति। राज्ञां मागधरुद्धानां देव्यः पत्न्यः स्वगृहेषु बालकलालनादौ स्वशत्रोः जरासन्धस्य वधम् आत्मनामात्मवज्जीवनहेतुभूतानां पतीनां विमोक्षणं चेत्येवम्विधं तव विशदं निर्मलं कर्म चेष्टितं गायन्ति गास्यन्ति, तत्र दृष्टान्तमाह—गोप्यश्चेति। अस्य यथेत्यादिः यथा गोप्यः शङ्खचूडवधं स्वमोक्षणञ्च गायन्ति यथाचामृतारान्तरगतं नक्रात्कुञ्जरपतेर्गजेन्द्रस्य विमोक्षणं यथा वा रावणाज्जनकात्मजायाः विमोक्षणं यथा च पित्रोर्देवकीवसुदेवयोः कंसाद्विमोक्षणं लब्धशरणाः प्रपन्नाः मुनयोऽस्मदादयश्च गायन्ति तद्वदित्यर्थः ॥ ९ ॥

किञ्च जरासन्धवध इति। हे कृष्ण! भूर्यर्थाय अनेकप्रयोजनाय कल्पते ततश्चेषाद्योपि सुखसाध्या भविष्यन्तीति भावः। ततश्च राजसूयार्थगमनेनैव सर्वं सम्पत्स्यते इत्यभिप्रयन्नाह—प्रायइति। कर्मविपाकेनेत्यस्य राज्ञामित्यादिः विपच्यत इति विपाकः फलं प्रायशो जरासन्धनिरुद्धानां राज्ञां कर्मणः पुण्यस्य फलेन हेतुना क्रतुः राजसूयः तव च यशस्दीत् युधिष्ठिरस्याप्यभिमतः अतस्तावत्तत्रैव गन्तव्यमितिभावः ॥ १०॥

इतीति। सर्वतोभद्रं शुभावहम उद्धवस्य वचः श्रुत्वा अच्युतादयः सर्वे प्रत्यपूजयन्नभ्यमोदन्त ॥ ११ ॥

अथेति। दारुकः जैत्र एव आदिः(दारुकजैत्रावादी) येषां तान् भृत्यानादिशदाज्ञापयामास गुरून् वसुदेवादीन् अनुज्ञाप्यानुज्ञां प्रार्थ्य निर्गमय्येत्युत्तरेण सम्बन्धः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"तीक्ष्णश्चैव प्रचण्डश्च वृको नामनलोमतः।
स पाण्डवस्य जठरे तेन भीमो वृकोदरः ॥ " इति

हननिश्चये को हेतुरित्यत उक्तम तवेति। त्वया सह गन्तव्यं तदर्थमित्यर्थः ॥ ७ ॥

तत्कुत इति तत्राह—निमित्तमात्रमिति। काल इत्याख्यरूपं संज्ञारूपमस्यास्तीति कालाख्यारूपी तस्य ॥ ८ ॥

हे कृष्ण! तत्रेदं कर्म लोकक्षेमकरमितिभावेनाह—गायन्तीति। राज्ञां देव्यः महिष्यः चशब्दादेव्यः गृहेषु ते तव इदं कर्म गायन्ति इदमिति किं तत्राह—स्वशत्रिवति। आत्मनः स्वामिनो निरोधान्मोक्षणं कथं गायन्तीत्यतो लुप्तोपमामाह—गोप्य इति। चशब्दो यथावचनः गोप्यः यथा कुञ्जरपतेः गजेन्द्रस्य नक्राद्विमोक्षणं नक्राख्यवधञ्च यद्वा कुवलयापीडस्यात्मविमोक्षणं शरीरावियोगलक्षणं मरणं चाणूरादिस्वशत्रुवधञ्च जनकात्मजायाः सीतायाः रावणबन्धाद्विमोक्षणं रावणाख्यशत्रुवधञ्च मुनयो वाल्मीक्यादयः वयञ्च तथा पित्रोः देवकीवसुदेवयोः कंसविहितशृङ्खलायाः विमोक्षणं कंसाख्यशत्रुवधं गायामस्तथेत्यर्थः। देव्यो देवस्त्रियो गृहेषु विमानेषु स्थित्वा मोक्षणमित्यादि वा ॥ ९ ॥

किम्बहुनोक्तेनायं जरासन्धवधो ऽनेकप्रयोजनोपेत इत्याह जरासन्धेति। भूभारहरणार्थत्वेनावतीर्णत्वात्तत्र कालान्तरे दुर्योधनादिभारावरोपणहेतुत्वेनाभिमतः क्रतुरित्याह प्राय इति ॥१०॥

सर्वतोभद्रं सर्वप्रकारेण भद्रम् ॥ ११-१३ ॥

---

श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

न वयः कालस्तद्रूपा शक्तिः तस्य निमित्तं कालस्यैव विशेषणम् अरूपिणमिति सर्वसम्पादकस्यापि चेष्टाभिरलक्ष्यमाणस्येत्यर्थः ॥ ८ ॥

गोप्यश्च स्वशत्रुवधादिकमतीतं गायन्ति मुनयो गजेन्द्रजनकात्मजयोर्मोक्षणादिकं गायन्ति वयञ्च यदवः पित्रोः श्रीवसुदेवदेवक्योस्तत्तद्गायाम इत्यन्वयः ॥ ९ ॥

जरेत्यादौ कृष्णेति पाकविपाकेन कचिदनुकूलतया कचित्तु प्रतिकूलतयाभिप्रायपरिणामेनेत्यर्थः ॥ १०—१४ ॥

———

श्रीमज्जीवगोस्वामीकृतबृहत्क्रमसन्दर्भः ।

गायन्तीत्यादि । गोप्यो बलदेवपरिगृहीताः गोपाङ्गनाः यथा तव विशदं कर्म गायन्ति किन्तदित्याह स्वशत्रुवधं शङ्खचूडवधम् आत्मविमोक्षणञ्च कुञ्जरपतेः स्वशत्रुवधं ग्राहवधम् आत्मनस्तस्य विमोक्षणञ्च लब्धशरणा भक्ता गायन्ति जनकात्मजायाः यथा स्वशत्रुवधम् रावणवधम् आत्मविमोक्षणञ्च मुनयो गायन्ति पित्रोर्वसुदेवदेवक्योः, स्वशत्रुवधं कंसवधम् आत्ममोक्षणञ्च यथा वयं गायामः तथा देव्यो राजपत्न्यः पतीनां स्वशत्रुवधं जरासन्धवधम् आत्मविमोक्षणं गायन्ति अवश्यमेवैतद्द्वयं कृष्णेन कर्त्तव्यमिति त्वयि विश्वस्ता भाव्यपि भूतवद्गायन्तीत्यर्थः ॥ ६—३८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि क्षत्रियाणां किमायातमित्याशङ्क्योपायमाह—ब्रह्मवेषधरामिति । कञ्चुकाद्यभावसहितं सोपवीतवस्त्रद्वयं तिलकादिसहितं ब्रह्मवेषः यद्यपि तेजो न सम्पादयितुं शक्यं तथापि प्रार्थितदाने मारणमाह—तव सन्निधाविति ॥ ७ ॥

नन्वहं परब्रह्म चेत् तदोदासीनः सर्वात्मा च विष्णुश्चेत् पालक एव न घातकः तेजसा आप्यायनपक्षे ब्रह्मण्यस्य वैष्णवं तेजः प्रभवति अतः कथं वधइति चेत्तत्राह निमित्तं परमीशस्येति । ईश्वरः कालरूपोपि भवान् सन्निधिमात्रेणैव स्वाभीष्टसमये विश्वमेवोत्पादयसि हंसि च ब्रह्मरुद्रयोः खड्गादिवन्निमित्त एव यतः कालस्य तव कालेनाक्रोडितानामेवोत्पत्तिप्रलयौ यथा कर्मक्रोडीकृतानां पितृभ्यामौ सृष्टिप्रलययोर्निमित्तमेव नन्वहमेव चेत् सर्वदा मारकस्तदा कथं सर्वेषामनुपलम्भ इति तत्राह—अरूपिण इति । स एव त्वमिदानीं रूपमधिकमित्यर्थः ॥ ८ ॥

नन्वेवमपि तथा यशो न भविष्यतीत्याशङ्कायामाह—गायन्ति ते विशदकर्मेति । तव यशः पूर्वमेव लोकत्रयं व्याप्य तिष्ठति किमद्योत्पादनक्लेशेनेति वाक्यार्थः अनेन भगवतो भगवदीयानां वा भगवस्वाद्भगवदीयत्वाच्च सिद्धमेव यशो न नूतनमुत्पादनीयं ते विशदं कर्म हिरण्यकशिपुरावणवधादिकं रूपं देव्यो देवस्त्रियः सहजं भगवच्चरितं स स्वशत्रूणां हिरण्यकशिपुप्रभृतीनां वधम् आत्मनो बन्दीकृतानां विशेषेणाविघातो मोचनञ्च स्वस्वगृहेषु गायन्ति ते गृहेषु वा देव्यो नरकासुरगृहीताः पूर्वं तत्सर्वं योजनीयं ते राज्ञामुग्रसेनादीनां देव्यो वा भाविनि भूतवदुपचारेण वा मोक्ष्यमाणानां किञ्च अन्येपि बहवो गायन्तीत्याह—गोप्यश्चेति । चकारात्सम्बन्धिस्त्रियोपि स्वशत्रोः शङ्खचूडादेर्वधम् अविद्यालज्जादीनां वा यथा स्वस्वशत्रोः वधं गायन्ति एवं कुञ्जरपतेरपि गजेन्द्रस्य शत्रोः नक्रस्य वधं तथा जनकात्मजायाः सीतायाः शत्रोः रावणस्य पित्रोरपि देवकीवसुदेवयोः शत्रोः कंसस्य एवं प्राकृता अपि स्वस्यान्यस्य वा त्रिविधा गायन्ति तथान्येपि त्रिविधा गायन्तीत्याह—लब्धशरणा मुनयो वयञ्च कर्मिणो ज्ञानिनो भक्ताः लब्धशरणा इति विशेषणं वा सर्वत्र माभैष्टेत्यभयारावो तस्मान्मच्छरणं गोष्ठम् "एतद्व्रतंमम" इत्यादिवाक्यसहस्रैः पाण्डवा लब्धशरणा इति केचिन्मुनयोपि दण्डकारण्यवासिनः विश्वामित्रादयश्च वयं सर्वे एव भक्ताः चकारान्निर्गुणाः अपि अन्यशत्रुवधं गायन्ति तस्मात्सिद्धैव कीर्त्तिरित्यर्थः ॥ ९ ॥

नन्वलौकिकोपायेन राज्ञां मोचनं शीघ्रं कृत्वा कथं न यागार्थं गम्यत इत्याशङ्क्याह—जरासन्धवध इति । कृष्णेति कालरूपस्यैतदेव कृत्यमिति सूचितं केवलं सम्बोधनवत् कृत्वाभिनिवेशात् प्रसादात्पापक्षयार्थं वा भूर्यर्थोयेत्यनेकप्रयोजनाय भक्तिद्रोहे विनश्यतीति भक्तिमार्गसिद्धिः शरणागतरक्षाः यशः कीर्त्तिः पूर्ववैरिप्रतीकारः भूभारहरणमित्यादिसहस्रप्रयोजनानि सिद्ध्यन्ति भक्तिमार्गः सर्वेभ्योतिरिच्यते किञ्च प्रायः पाकविपाकेनेति जरासन्धकर्मणां परिपाकस्य विपाकेन समाप्त्या पापविपाकेन वा बहुद्रोहाद्राजसूयो बहिर्भूमेर्निर्वीरत्वं सम्पादयति तेन कारणेन चाप्यभिमतः क्रतुः चकारात् क्रतुश्च भूर्यर्थायोपकल्पते शिशुपालवधदुर्योधनमानभङ्गाद्यर्थत्वात् प्रकारान्तरेण वध्यो भवतीत्यनेनैव युद्धार्थमुद्युक्तः निवारितः सिद्धत्वाद्यशोपेक्षाच निवारिता ॥ १० ॥

मोचनार्थं समायातीति शङ्कायां प्रमथनाथोर्थे प्रमथमेव दद्यात् अत उद्धववाक्यमेव सर्वतोभद्रमिति भगवता तदेव गृहीतमित्याह—इत्युद्धववच इति । एवं कापट्येन वधेन किञ्चित् दूषणम् 'मायेत्यसुराः" इतिश्रुतेः । तन्न नानाभूत्वा इति कापट्यव्यतिरेकेण न दैत्यवधः सिध्यतीति न कापट्यस्वीकरणदोषाय राजन्निति सम्बोधनं अराधमोपि तादृश इति ज्ञापनार्थं सर्वतोभद्रता निरूपितैव अच्युतमिति न च्युतं कापि क्षतिर्यत्रेति भगवद्रूपोयं प्रकारः निर्दोषपूर्णगुणरूपः अत एव सर्वेषां सम्मतं जातमित्याह—देवर्षिरिति । यादवेषु वृद्धाः चकारादन्येपि ,तरुणानां परं शौर्योत्सिक्तानां नागतं मनसीति सूचितं कृष्णश्चेति चकाराद्वसुदेवादयोपि भगवद्भक्ताश्च प्रतिपूजनं साध्वसाध्विति वचनम् ॥ ११ ॥

अथ भिन्नक्रमेण लौकिकानां सुखार्थं गृहस्थितिक्लेशाभावाय निर्गमनोत्सवं निरूपयति—अथेति सार्द्धैः षड्भिः । लौकिकयेषा भाषा देवकीसुत इति स्त्रीप्रभृतीनां सुखदायकः भृत्या अन्तरङ्गसेवकाः कर्मकराः जैत्रोपि जयशीलः कश्चिद्रथयोजकः गुरून् पित्रादीन् ब्राह्मणान् वा विभुरिति सर्वकरणसमर्थः ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वसौ स्वसैन्यमेव युद्धाय नियुञ्जीत कुतस्तेन द्वैरथ्यमिति तत्राह—ब्रह्मण्य इति । न प्रत्याख्याति न निराकरोति भिक्षेत द्वन्द्वयुद्धं याचेत स एव जेष्यति चेत्तर्हि किं मयेत्यत आह—तवेति । तव सन्निधानं विना तु द्वैरथोऽपि न तं हन्तुं प्रभविष्यतीति भावः ॥ ७ ॥

ननु, अकिञ्चित्कुर्वतो मम सन्निधानात् किं स्यात्तत्राह—निमित्तमिति । तव ईशस्य यः कालस्तद्रूपा शक्तिस्तस्य यौ विश्वसर्गनिरोधौ तयोस्तत्र हिरण्यगर्भः शर्वश्च परं केवलं निमित्तमेवेत्यन्वयः । अरूपिण इति कालस्य विशेषणं कालेनैव विश्वं सृज्यते निरुध्यते च तत्र यथा सर्गे हिरण्यगर्भो निमित्तमात्रं शर्वश्च निरोधे तथैव सान्निध्यमात्रेण त्वमेव जरासन्धं हनिष्यसि भीमो निमित्तमात्रं हिरण्यगर्भशर्वयोर्माहात्म्यार्थं यथा त्वया तत् क्रियते तथात्रापि भीमसेनाय यशःप्रदानार्थमिदमप्येकं तव कार्यमिति भावः ॥ ८ ॥

दुष्टनिग्रहशिष्टपालनात्मकं तव यशो यद्यपि सद्भिर्गीयमानं पूर्वं सिद्धमेवास्ति तदपीदानीं जरासन्धे हते सति तदपि विपुलीभविष्यतीत्याह—गायन्तीति । जरासन्धबद्धानाम् राज्ञां देव्यः पत्न्यः ते विशदं कर्म स्वगृहेषु बालकलालनादौ गायन्ति, किं तत् कर्म ? स्वशत्रोर्जरासन्धस्य वधं भाविनमपि आत्मनां पतीनां विमोक्षणञ्च सर्वज्ञमुन्यादिप्रबोधितत्वाद्गायन्ति हे वत्स ! मा रोदीः कृष्णो जरासन्धं हत्वा तव पितरं मोचयिष्यतीति अत्र दृष्टान्तः यथा गोप्यः स्वशत्रोः शङ्खचूडस्य वधं तन्निरोधादात्मविमोक्षणञ्च परस्परसान्त्वनादौ गायन्ति भोः सख्यः ! समाश्वसित रुदित्वारुदित्वा मा प्राणांस्त्यक्तुमुपक्रमध्वं यः खलु तादृशशङ्खचूडाख्यमहाव्याघ्रग्रासादरक्षीत् स एव कृपासिन्धुः स्वयमेव स्मृत्वा स्वविरहमहाविपत्कालसर्पदंशादपि रक्षिष्यतीति तेन जरासन्धं हत्वा ता देव्यस्तत्पतिभिः सङ्गतीकृत्य त्वया यथा रक्षणीयाः ततश्चास्मदादयोऽपि तत्ते यशो गायाम इत्यवसरप्राप्तस्वाभीप्सितमन्त्रणार्पणं ध्वनितं किञ्च यथा देव्यो गोप्यश्च गायन्ति तथा लब्धशरणा मुनयः आत्मारामभक्ता वयं दासभक्ताश्च स्वहृदास्वदनार्थं गायामः किं तत् कुञ्जरपतेः स्वशत्रोः नक्रस्य वधं तस्मादात्मविमोक्षणञ्च जनकात्मजायाः स्वशत्रोः रावणस्य वधं पित्रोश्च स्वशत्रोः कंसस्य वधं तस्माच्चस्मादात्मविमोक्षणं चेति भोस्तपोधनाः ! मा विषीदत यथा नक्रादिभ्यो गजेन्द्रादीनुद्दधार तथैवास्मानपि संसारादुद्धरिष्यतीति भो भो वयस्याः भावकभक्ता यथैवोद्धृत्य गजेन्द्रादिभ्यः स्वसामीप्यदानेन स्वाभीष्टसेवामदात्तथैवास्मभ्यमपि दास्यतीति ॥ ९ ॥

भूयर्थथाय राजसूयसिद्धये राजवृन्दरक्षासिद्धये त्वच्चिकीर्षितशिशुपालादिवधसुखसाध्यत्वसिद्धये मद्वाञ्छितार्थविशेषसिद्धये च पाको राजसूयस्य निष्पत्तिस्तस्मिन् सति तस्य वा यो विपाकः विसदृशं फलं कुरुवंशक्षयसूचकदुर्योधनमानभङ्गः तेन हेतुना क्रतुश्च तवाभिमतः "पाकः परिणतौ शिशौ" इति विपाकः पाचनं स्वेदं कर्मणो विसदृक फलं इति च मेदिनी एषोऽर्थस्तदात्वयादवकौरवाद्यमीबुध्यतामित्युद्धवेन दुर्बोधार्थकं पदमप्रयुक्तं पापविपाकेनेति पाठे पापानां शिशुपालादीनां विपाकेन विनाशलक्षणपरिणामेन हेतुना प्राय इति वितर्के ॥ १० ॥

अच्युतं सोपपत्तिकत्वात् च्युतिरहितं यदुवृद्धा इत्यनेनानिरुद्धादयः सद्यो युद्धोत्साहवन्तस्तु नापूजयन्निति द्योतितम् ॥ ११ ॥

गुरून् वसुदेवादीन् अनुज्ञाप्य अनुज्ञां प्रार्थ्य ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भिक्षेत द्वैरथमितिशेषः ॥ ७ ॥

तव सन्निधिमात्रतः समबलत्वेपि वृकोदरो हनिष्यत्येवेत्युक्तमथ वृकोदरो निमित्तमात्रं भवानेव मुख्यो हन्तेत्याशयेनाऽऽह—निमित्तमिति—ईशस्य अखण्डैश्वर्यस्य अरूपिणः रूप्यते सृजते इति रूप्यं प्राकृतं शरीरं तद्रहितस्य सृष्टिसंहाररहितस्येत्यर्थः । कालस्य "ज्ञः कालकालः" इति श्रुतेः । कालकालस्य तव विश्वस्य सर्गनिरोधयोः अवान्तरसृष्टिसंहारयोः सृष्टौ हिरण्यगर्भः संहारे शर्वः निमित्तम् तथा जरासन्धवधे वृकोदरो निमित्तस्त्वं मुख्यस्तद्धन्तेति भावः ॥ ८ ॥

किञ्च गोप्यो मुनयः वयं यादवाश्च अनिष्टनाशपूर्वकेष्टसिद्धये यथा लब्धशरणाः तथा लब्धशरणाः श्रीकृष्णो मागधं हत्वा ऽस्मत्पतीन्मोचयिष्यतीति त्वां शरणीकृत्येत्यर्थः । राज्ञां देव्यः पत्न्यः कुञ्जरपतेः जनकात्मजायाः पित्रोर्देवकीवसुदेवयोश्च आत्मविमोक्षणं चकारात्तच्छत्रुवधं स्वशत्रुवधरूपवकादिवधञ्च ते स्वपतिविमोक्षणसम्भावनार्थं विशदं कर्म गायन्तीत्यन्वयः ॥ ९ ॥

भूयर्थथाय दिग्विजयराजविमोक्षणं शिशुपालवधाद्यनेकप्रयोजनसुखसिद्ध्यै पच्यन्ते इति पाकाः दुर्योधनापराधास्तेषां विपाकेन तस्मिन्क्रतौ सम्मानितस्यापि दौर्मनस्यरूपेण फलेन भूभारहरणनिमित्तेन तव भूभारहर्तुरपि क्रतुरभिमतः ॥ १० ॥

अच्युतं ह्यम् ॥ ११ ॥

गुरून् वसुदेवादीन् ॥ १२ ॥

---

भाषा टीका ।

और भीमसेन से भी वह जरासन्ध द्वन्द्व युद्ध में जायगा, और सौ अक्षौहिणी सेना सहित वह जीतने का योग्य नहि हैं क्योंकि उस के साथ अनेक राजान के वध होने से राजसूय यज्ञ की शोभा न होगी, और वह ब्राह्मण भक्त हैं इसलिये ब्राह्मणों से प्रार्थित होकरी कदाचित् भी वह निषेध न करेगा ॥ ७ ॥

इसलिये ब्राह्मण का वेष धारण कर भीमसेन जायकर उस के प्रति द्वन्द्व युद्ध की भिक्षा की याचना करे: आह को सन्निधि में आपके हि प्रभाव से भीमसेन द्वन्द्व युद्ध में उसको अवश्य मारेगा इस सन्देह नहि ॥ ८ ॥

आपकी सन्निधि मात्र सेहि सब कार्य्य होसकता है जैसे विश्वकी सृष्टि करने में ब्रह्मा निमित्त मात्र है और संहार करने में महादेव निमित्त मात्र है विचार किया जावे तो कर्माधीन रूप रहित कालरूपी सर्व नियन्ता आपकाहि सृष्टि आदि में कर्तृत्व है तैसेहि इहांभी भीम-

निर्गमय्यावरोधान् स्वान् ससुतान् सपरिच्छदान् ।
सङ्कर्षणमनुज्ञाप्य यदुराजञ्च शत्रुहन् ।
सूतोपनीतं स्वरथमारुहद्गरुडध्वजम् ॥ १३ ॥
ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ।
मृदङ्गभर्यानकशङ्खगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥ १४ ॥
नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ।
वराम्बराभरणविलेपनस्रजस्सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥
नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ।
स्वलङ्कृताः कटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वतः ॥ १६ ॥
बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ।
दिवांऽशुभिस्तुमुलरवं बभौ रवेर्यथाऽर्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥
अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ।
निशम्य तद्व्यवसितमाहृतार्हणा मुकुन्दसन्दर्शननिर्वृतेन्द्रियः ॥ १८ ॥

---

भाषा टीका ।

हम तो निमित्त मात्र है उस के मारने वारे तो आपहि हो ॥ ९ ॥

जिन राजनको जरासन्धने बाँध राखे हैं उनकी भार्य्या लोग रिपु शत्रु जरासन्धका बध और राजनका छुडाना इस आप के विशद कर्मको अपने २ गृहन में गान करेंगी जैसे गोपीजन शङ्खचूड के बधको और उस में अपने छुडानेको गान करती हैं जैसे अन्य अवतार में ग्राहका बध और उस में गजेन्द्रका छुडाना इस आप के कर्मको भक्तजन गान करते हैं और रामावतार में रावणका बध तथा जानकीजीका छुडाना इस आप के कर्मका गान करते हैं और जैसे कंसका बध और वसुदेवदेवकीका छुडाना इस आपके कर्मका मुनिजन और आपके शरणागत हम भक्तजन गान करतेहैं तैसेहि उन राजा लोगोंकी भार्य्या आपके चरित्रका गान करेंगी हे कृष्ण ! जरासन्धका बध अनेक प्रकारके प्रयोजनका हेतु होवेगा और यह राजसूय यज्ञ राजा लोगों के पुण्य-फल कर के जरासन्ध के पापफल करके आपको सम्मत है क्योंकि इस यज्ञ के निमित्त जरासन्ध मारा जावेगा इस वास्ते राजा लोगों के पुण्य कर्म के फल कर के जरासन्ध के पाप कर्म के फल करकेहि इस यज्ञका होना है इस वास्ते आपको भी अभिमत ही है ॥ १० ॥

श्रीशुक उवाच ।

इस लिये आप हे राजन् ! सर्वप्रकार से मङ्गल व्यापक और फल की च्युति रहित पूर्वोक्त प्रकार युक्त उद्धवजी के वचन को नारदजी तथा यदुवंशीलोगों में वृद्ध २ जन और श्रीकृष्ण जी श्लाघा करते भए ॥ ११ ॥

इसके अनन्तर सर्वव्यापक श्रीकृष्ण भगवान् वसुदेवजी से आदि लेकर निज पूज्य पुरुषोंकी सम्मति लेकर दारुक जैत्र आदि भृत्योंको प्रयाणके वास्ते आज्ञा देते भए ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवरोधान् स्वान् दारान् निर्गमय्य प्रयाणं कार-यित्वा ॥ १३ ॥

भटाः पदातयः सादिनोऽश्वारोहाः रथादिनायकैः करा-लया तीव्रया आत्मसेनया परिवृतो निराक्रमनिरगात् कुतः सकाशात् मृदङ्गादिभिर्वाद्यैः प्रघोषेण घोषिताभ्यः ककुभः ॥ १४ ॥

नृवाजीति । नृवाजिभिर्नरयानैरश्वैश्च काञ्चनशिबिकाभिश्च अच्युतं पतिमनु ययुः सुव्रताः पतिवृता वराम्बरादीनि यासां ताः ॥ १५ ॥

नरोष्ट्रादिभिर्यानैः अश्वतरी गर्दभ्यामश्वाज्जाताः अनः शकटं करेणुर्गजी परिजनयोषितो वारयोषितश्च कटकुट्यः उशी-रादितृणनिर्मितगृहाः कम्बलाम्बरादयश्चोपस्कराः कुट्यादि-रूपा यासां ताः अधियुज्य बलीवर्दादिषु तानुपस्करान् स्वं सन्नह्य ॥ १६ ॥

रवेरंशुभिश्च तद्बलं दिवा बभौ कथम्भूतम् ? तुमुलरवमाकुल-स्वनं क्षुभितैस्तिमिङ्गिलैरूर्मिभिश्च ॥ १७ ॥

मुनिर्नारदो विहायसा ययाविति शेषः ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निर्गम्येति सार्द्धकम् । अवरोधानिति तत्रस्थान् सुतशब्देन गोत्रास्तत्सम्बन्धवः कन्यकादयश्च ज्ञेयाः तादृशे महोत्सवे मिथोऽत्याज्यत्वात् परिच्छदाः पर्य्यङ्कादयः दास्यादिपरिवाराश्च सङ्कर्षणमादिमो द्वितीयव्यूहमिति योग्यता दर्शिता । तथा यदुराजमुग्रसेनमनुज्ञाप्येति नृपत्वेन पुरीरक्षार्थे तत्र स्थापनेन सम्माननार्थं तथा महिषीणां निर्गमनात्पश्चात् सङ्कर्षणयदुराजयोरनुज्ञापनं दूरतो ऽनुव्रजनात् हे शत्रुहन्निति जरासन्धवधार्थमयमेवोपायो युक्त इति शत्रुवधकारिणा भवता ज्ञायत एवेति भावः । स्वीयमसाधारणं रथं तल्लक्षणमाह गरुडेति । इतिशत्रुवर्गभयङ्करत्वं वेगगामित्वादिकञ्च सूचितम् गरुडध्वज इतिपाठेऽपि तत्रैव तात्पर्य्यम् ॥ १३ ॥

ततस्तदनन्तरं किम्वा तस्याः पुर्य्याः सकाशात् तामेव विशिनष्टि—मृदङ्गेत्यादिना । आत्मनः ममवेति तस्य बलविक्रमपरिच्छदादिभिर्भक्त्याचासाधारण्यमुक्तम् आनकः पटहः गोमुखम आनकभेदः ॥ १४ ॥

काञ्चनशिविकानां नरयानान्तर्गतत्वेऽपि पृथङ्निर्देशस्तद्विशेषापेक्षया अच्युतमिति प्रत्येकं सर्वासामग्रतः स्थित्यभिप्रायेण सुसम्वृताः सुष्ठु दूरतोऽसङ्कीर्णत्वादिना सम्यक् नैरन्तर्य्यादिना वृता वेष्टिताः अन्यैः यद्वा नर एव वाजिवच्छीघ्रगा यत्र नृरूपाः वाजाः पक्षा विद्यन्ते यत्र वा तादृशीभिः काञ्चनमयशिविकाभिः ॥ १५ ॥

नरशब्देन नरवाह्ययानानि गावो वृषाः परिजनाः रजकादयः सर्वशः सर्वानेवोपस्करान् सर्वेष्वेव वाहनेषु सर्वतोऽधियुज्य ॥ १६ ॥

तच्च बलं सैन्यमंशुभिर्निजकान्तिभिर्दिवापि रविमतिक्रम्य बभौ कीदृशैरंशुभिः बृहन्ति ध्वजादीनि येषु वराण्यायुधादीनि च येषु तैः तत्र दृष्टान्तः यथेति क्षुभितास्तिमिङ्गिलास्तदादयो येषु तैरूर्मिभिः अत्र पटाः पताकारूपाः ध्वजादीनां तिमिङ्गिलादिभिः सादृश्यम अंशूनाञ्चोर्मिभिः ॥ १७ ॥

अथ प्रयाणानन्तरमेव यदुपतिना प्रणम्य सभाजितः सन् विहायसा ययौ कथं सभाजितस्तत्राह— आहृतान्यर्हणानि नानापूजाद्रव्याणि यस्मै तथाभूतः सन्निति एवं सर्वैर्यदुभिरपि सभाजित इति भावः । किङ्कृत्वा ययौ तस्य व्यवसितं पाण्डवानां बद्धराजानाञ्च युगपन्मनोरथसम्पादनरूपं निशम्य श्रुत्वा किङ्कुर्वन् ययौ तं हृदि विदधत् तथा भावयन्नेवेत्यर्थः । यतो मुकुन्दस्य सर्वदुःखविमोचनशीलस्य सन्दर्शनमात्रेण किमुत तत्तत्सद्व्यवहारेण निर्वृतानि इन्द्रियाणि यस्य स तथेति ॥ १८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रघोषघोषि ककुभः गम्भीरघोषिककुभः दिशः प्रतीत्यध्याहारः घोषयन्तीति वा अर्थः ॥ १४—२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निर्गमय्येति । सुतैः सहितान् परिच्छदैः परिकरैः सहितान् स्वानवरोधान् दारान्निर्गमय्य पुराद्बहिर्गमयित्वा हे शत्रुहन् ! सूतेनोपनीतमानीतं रथमारुरोह ॥ १३ ॥

तत इति । द्विपा गजाः भटाः पदातयः सादिनोऽश्वारूढास्तेषां नायकैः करालया परभयङ्करया स्वस्य सेनया परिवृतः मृदङ्गादिभिर्वाद्यैर्यः प्रघोषस्तेन घोषिताः ककुभः कुर्वन्नित्यध्याहारः निराक्रमत निष्क्रान्तवान् प्रघोषघोषैरिति पाठे दिशः प्रति मृदङ्गादिभिर्यो घोषस्तेन घोषयन् ॥ १४ ॥

सैवेति । सुव्रताः पतिव्रताः वैदर्भ्यादयः पतिमच्युतं यान्तं स्वस्ववाजिकाञ्चनशिविकादिभिरनुययुः कथम्भूताः असिचर्मणी खड्गखेटौ पाण्यो येषां तैर्नृभिर्भृत्यैः सम्वृताः वराः श्रेष्ठाः अम्बरादयो यासां ताः ॥ १५ ॥

नरेति । तथा परिजनयोषितः वारयोषितश्च कटकुट्यादयः उपस्कराः कुटीशिबिरादिसाधनभूताः यासां ताः अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य नरादिभिर्यानैर्ययुरिति सम्बन्धः । तत्र नरो नरवाह्यं यानं गर्द्दभ्यामश्वाज्जाता अश्वतरी अनः शकटं करेणुर्गजी कटकुटयः उशीरादितृणनिर्मिताः गृहाः ॥ १६ ॥

बलमिति । तद्बलं ध्वजादिभिर्दिवा बभौ इति सम्बन्धः । कथम्भूतम् ? तुमलो रवः स्वनो यस्मिंस्तत् यथा रवेः सूर्यस्य अंशुभिः क्षुभिताः तिमिङ्गिलादयः तैर्ये महान्तः ऊर्मयः तैरर्णवो भाति तद्वत् ॥ १७ ॥

अथो इति । यदुपतिना कृष्णेन सभाजितो बहुमतो मुनिः नारदस्तं हृदि प्रणम्य मनसा प्रणम्येत्यर्थः । तस्य कृष्णस्य व्यवसितं वचो निशम्य आहृतं समर्पितमर्हणं यस्य मुकुन्दस्य सन्दर्शनेन निर्वृतानि सुखितानीन्द्रियाणि यस्य सः विहायसा आकाशमार्गेण निरगाद्ययौ ॥ १८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किमभूदिति तत्राह—मत इति । ककुभः दिशः सङ्घुष्टया सङ्घोषयन्त्या ॥ १४ ॥

प्रियाश्चाच्युतं पतिम् अनुययुः कथं सुसम्वृताः असिचर्मपाणिभिः नृभिः परिवृताः ॥ १५ ॥

ततो बहिर्नरोष्ट्रादिभिः परिवृताः परिजनयुतवारयोषितश्च पटकुटयः वस्त्रनिर्मितमन्दिराणि पटकुटिकम्बलाम्बराणि आदिर्येषां ते तथा तेच उपस्करा येषां ते तथा अधियुज्य संयुज्य आरोप्य वा ॥ १६ ॥

रवेरंशुभिः दिवा दिनं यथा भाति बृहद्ध्वजपटच्छत्रकवाहरणमिदं क्षुभिततिमिङ्गिलोर्मिभिरर्णवो . यथेति नरोष्ट्रादेर्निदर्शनम ॥ १७ ॥

हरेर्व्यवसितं निश्चितं निशम्यागात् ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नृपवाजीति नर एव वाजिनः शीघ्रगामित्वात् तद्वाह्य काञ्चनशिबिकादिः ॥ १५—१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

प्रथमत अवान्तःस्त्रियो निर्गमय्य अवरोधोऽन्तःपुरस्त्रियः पुल्लिङ्गनिर्देशः स्त्रीभावाभावाय सङ्कर्षणः सहायार्थे यदुराजः उग्रसेनः अनेन राजसतामसौ परित्यज्य अन्ये सर्वे निर्गता इति सूचितं प्रागुक्तमिति बहिर्मुखताभावाय प्रद्युम्नादयोऽपि कौतुकात् भगवद्रथमारुहन् भगवान् वा कौतुकात् अन्यरथमारुहत् स्त्रीभिः परिवृतो वा गच्छेत अतः सूतोपनीतं स्वरथमित्युक्तं गरुडध्वजत्वान्न सहायापेक्षा ॥ १३ ॥

ततः सेनासहितः नानाविधवाद्यसहितोऽपि दिशां प्रतिध्वनिसहितोऽपि निराक्रमत् सादयोऽश्ववाराः चतुरङ्गनायकैः सहिता दर्शनमात्रेणैव भयजनिका केवलं भगवत एव सेना ॥ १४ ॥

ततः असाधारणीनां च प्रयाणप्रकारमाह- नृपवाजीति द्वाभ्याम्। नृशब्देन नरयानं दोला वाजिनोऽश्वाः केवलाः शकटयोजिताश्च काञ्चनशिबिकाश्चतुर्दोलाः नृभिर्वाजिभिर्वा युक्ताः अच्युतं पतिमनु सुव्रताः पतिव्रताः रुक्मिण्यादयः सपुत्राः ययुः चतुर्विधालङ्करणयुक्ताः मार्गेऽपि स्वतोऽपि रक्षिताः नृभिरपि सुसम्भृताः ॥ १५ ॥

साधारणीनामाह—नरेति। नरादिभिरष्टभिः परिजना वारयोषितश्च निर्गताः गावो वृषभाः अश्वतरी अनः शकटं करेणुः करणी सर्वा एव स्वलङ्कृताः कृताः तासां जातिस्वभावसामग्रीं वर्णयति-कटकुटीति। कटा नाम कुटी कटः पटकुटीवा कम्बलादयो वृष्टिनिवारकाः तासां कृष्णमन्विति न नियमः किन्तु सर्वदा एव ॥ १६ ॥

सामान्यतो भगवत्कटके वर्णयति-समुद्रतुल्यतया बलमिति ध्वजैरायुधैः सूर्यरश्मिभिः त्रिविधैर्बभौ उपर्याच्छादकाः बृहन्तो ध्वजादयः पक्षसहितानि छत्राणि भिन्नानि वा आयुधानि आभरणानि किरीटानि कवचानि च तुल्यो रवो यन्त्रत्यन्तः शौर्यं तस्यापरिमितत्वाय यथार्णव इति क्षुभितास्तिमिङ्गिलाः ऊर्मयश्च ॥ १७ ॥

एवं निर्गम्य नारदवाक्यमिव कृत्वा ततोऽग्रे नारदं प्रेषयामासेत्याह...अथो मुनिरिति। भिन्नप्रक्रमः समाधिभाषार्थः भगवन्तं विहाय भक्तस्य पुरतो गमनमनुचितमित्याशङ्क्याह तं हृदि विदधदिति। विहायसा त्वाकाशमार्गेण तस्य भगवतो व्यवसायं गमनात्मकं निशम्य निर्धारितं श्रुत्वा बहिरस्तस्त्वानन्दपूर्णो निर्गत इति वक्तुं विशेषणद्वयम् आहृतमर्हणं यस्मै मुकुन्दसन्दर्शनेन निर्वृतानीन्द्रियाणि यस्य एवं स्वतः कार्यतश्च सिद्धो गत इत्यर्थः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अवरोधान् अवरोधस्थान् दारान् तेषामपि निमन्त्रितत्वात् सर्वोत्सुक्याच्च ॥ १३ ॥

भटाः पदातयः सादिनः अश्वारोहाः नायकाः रथिनः व्याप्नोऽपि ककुभाशाब्दो दृष्टः ॥ १४ ॥

नृवाजीति। नरयानैरश्वैः काञ्चनशिबिकाभिश्च अच्युतं पतिमनुययुः सुव्रताः पतिव्रताः ॥ १५ ॥

परिजना रजकादयः कटकुट्यः उशीरादिनिर्मिताः गृहाः तदादयः उपस्कराः परिच्छदा यासां ताः सर्वशः सर्वानेव तान् उपस्करान् अधिकृत्य उष्ट्रादिषु दृढं सन्नह्य ॥ १६ ॥

दिवा रवेरंशुभिस्तद्बलम् आयुधरत्नकिरीटादिचाकचक्ययुक्तं बभौ ॥ १७ ॥

मुनिर्नारदो विहायसा ययाविति शेषः ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥ १३ ॥

मृदङ्गादिभिर्घोषस्तेन घोषिताः ककुभः कुर्वन् निराक्रमत् निरगात् ॥ १४ ॥

नृभिर्वाजिभिश्च सहिताभिः पदातिभिरश्वारोहैश्च समावृताभिः काञ्चनशिबिकाभिरित्यर्थः। उपलक्षणञ्चैतद्गजरथादीनाम् ॥ १५ ॥

कटकुट्यः उशीरादिनिर्मिताः गृहाः कम्बलाम्बरादयश्च उपस्कराः परिच्छदा यासां ताः सर्वशस्तानुपस्करान् बलीवर्दादिषु अधियुज्य दृढं सन्नह्य नरयानानि अश्वतरी गर्दभ्यामश्वाज्जाता अनः शकटम् करेणुर्गजी नरपालादिभिः परिजनाः रजकादयः वारयोषितश्च ययुः ॥ १६ ॥

तुमुलः आकुलः रवो यस्मिन् तद्बलं ध्वजादिभिः रवेरंशुभिश्च दिवा बभौ यथा रवेरंशुभिस्तत्क्षुभितैस्तिमिङ्गिलैरूर्मिभिश्च अर्णवो भाति तद्वत् ॥ १७ ॥

मुनिः देवर्षिः तं श्रीकृष्णं प्रणम्य तमेव हृदि विदधत् मुकुन्दसन्दर्शनेन निर्वृतानि सुखितानीन्द्रियाणि यस्य सः विहायसा ययाविति शेषः ॥ १८ ॥

---

भाषा टीका।

हे शत्रुहन्! गरुडध्वज श्रीकृष्ण भगवान् बलदेवजी और उग्रसेनजीसे सम्मति लेकर पुत्रादि सहित तथा शय्यादि सहित निज भार्य्याओंको प्रथम पुरसे वाहिर प्रयाण कराय कर पश्चात् सूतने पासमें प्राप्त किए निज रथपर विराजमान होते भए ॥ १३ ॥

पश्चात् रथ गज शूरवीर सवार सेनापति इन सबसे अति भयङ्कर निज सेनासे युक्त होकर मृदङ्ग भेरी नगाडे शङ्ख गोमुख आदि बाजोंके घोषकरके सब दिशानको शब्दायमान कर श्रीकृष्ण भगवान्‌पुरसे वाहिर निकलते भए ॥ १४ ॥

पुत्रों सहित और अच्छे २ वस्त्र धारण किये तथा सुन्दर आभूषण और चन्दन माला धारण किये और हाथों में ढाल तरवार धारण करने वारे शूरवीरों करके चारों तर्फ से युक्त एतादृश रुक्मिणी आदि पटरानी मनुष्योंकी सवारी

राजदूतमुवाचेदं भगवान् प्रीणयन् गिरा।
माभैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ १९ ॥
इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ।
तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन् यन्मुमुक्षवः ॥ २० ॥
आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ।
गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥
ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ।
पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २२ ॥
तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ।
अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥ २३ ॥
गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।
अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः ॥ २४ ॥

भाषाटीका ।

में घोड़ानकी सवारी में तथा सुवर्णकी पालकी में बैठकर श्रीकृष्ण के प्रयाण के पाछे आती भई ॥ १५ ॥

सुन्दर अलङ्कार धारण किये और उशीर आदि तृणकी चटाई के करवारी तथा कम्बलसे आदि लेकर सामग्री धारी एतादृश निज भृत्योंकी स्त्री और वेश्याजन अपनी २ सामग्रीको बैल आदि पर डालकर मनुष्य सवारी ऊँटकी सवारी बैलनकी सवारी में सानकी सवारी खरनकी सवारी खिचरनकी सवारी गाड़ीनकी सवारी हथिनीयोंकी सवारी में बैठ २ कर आती भई ॥ १६ ॥

जिस में मनुष्य आदिका मिला भया शब्द होरहा है एतादृश वह सेना बड़े २ ध्वजान के पट और छत्र चमर तथा श्रेष्ठ आयुध और आभूषण किरीट कवच और सूर्य्य की किरण इन सब कर के दिन के समय में इसप्रकार से शोभायमान होता भया कि जैसे क्षोभको प्राप्त हुए मत्स्य आदि तथा तरङ्गों से समुद्र शोभायमान होवे ॥ १७ ॥

श्रीकृष्णको प्रणाम के अनन्तर श्रीकृष्ण से सत्कारको प्राप्त भए और पूजाकी सामग्री के समर्पणको प्राप्त भए श्रीकृष्ण के सम्यक् प्रकार दर्शन से मन में आनन्दको प्राप्त भए एतादृश नारदजी श्रीकृष्ण के राजसूय आदि के निमित्त गमनको देख कर और श्रीकृष्णको प्रणाम कर और हृदय में उनहिका ध्यान करत आकाश मार्ग होकर जाते भए ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

माभैष्टेति मदुक्तं राजाभिप्रायेण ॥ १९ ॥

प्रत्यैक्षन् प्रत्यैक्षन्त यद्यस्मात् मुमुक्षवः ॥ २० ॥

आनर्तादयो मार्गस्थदेशास्तांस्तीर्त्वाऽतिक्रम्य विनशनं कुरुक्षेत्रम् अतीयायातिक्रम्य ययौ ॥ २१ ॥

शक्रप्रस्थमिन्द्रप्रस्थम ॥ २२-२३ ॥

प्राणाः इन्द्रियाणि प्राणं मुख्यं प्राणमिव ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ श्रीभगवतः परमदयापारावारत्वं तादृशं शरणागतसन्त्राणव्रतपरायणत्वञ्च स्मृत्वा सुगद्गदमाह—राजेति । गिरा माभैष्टेत्यादिकयैव भीमेन घातयिष्यामि मागधमिति ॥ १९ ॥

प्रत्यैक्षन् प्रत्यैक्षन्त तदेकापेक्षकाङ्क्षाबभूवुः यत् यस्मै सन्दर्शनाय मुमुक्षवो जरासन्धान्मोक्षेच्छवो जाता इत्यर्थः ॥ २० ॥

गिरीन् नदीश्च तीर्त्वा आनर्त्तादिदेशानतीयाय पुरादीनतीयायेत्यन्वयः । सौवीरमत्राला अत्र तत्तत्मेत्ता एव ज्ञेयाः ॥ २१ ॥

ततस्तदतिक्रमणानन्तरम् अथ दृषद्वतीतरणानन्तरं श्रीद्वारकात इन्द्रप्रस्थगमनमार्गे विनशनपाञ्चालादीनामप्रमध्यवर्तित्वेपि तत्रतत्र गमनं तत्रतत्रस्थानां भक्तानां सुखसम्पादनार्थमनुषङ्गतः प्राणिनां हितार्थं गमनञ्च स्वल्पेनैव परिच्छदेन प्रस्थाय शिबिराय मुहुः शीघ्रं निवृत्तिमयं ज्ञेयम् ॥ २२ ॥

नृणां जीवमात्राणां दुर्दर्शं दुर्दर्शमपि उप समीपे आगतम् अजातशत्रुरिति परमसरलचित्तत्वं दर्शयित्वा तस्य प्रीतेः स्वाभाविकत्वं सूचितम् ॥ २३ ॥

किञ्च गीतेति । हृषीकेशमिति हृष्यो रश्मयः तद्वद्धृष्यमाणाः केशा अपि यस्य तं सकाम्या दूरतो विराजमानमित्यर्थः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रह्वा प्रेम्णा सर्वेन्द्रियवशीकारिणामित्यर्थः । अतः आदृतः सादरः आदृतो आदरार्चिताविति नानार्थवर्गे किम्वा तेनैव सगृहाश्रमीणादिना रथादवतरणादर्मा च सम्मानितः यदि कथञ्चित् मूर्च्छां गतम्प्रगतं प्राणं विना निश्चेष्टाः प्राणाः प्रत्यागतमभिगच्छेयुस्तदैवेदं सम्भवतीत्यभूतोपमा सूचिता ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राणः इन्द्रियगणः प्राणं पञ्चवृत्तिं यद्वा प्राणो जीवः प्राणं परमात्मानम् ॥ २५—२६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

राजेति । भगवान् राजदूतमुवाच, उक्तिमेवाह—माभै-ष्टेति ॥ १९ ॥

इतीति । प्रहितः प्रेषितः नृपान् प्रति यथावद्भगवदुक्तं सर्वमवदत् उवाच ते नृपा अपि शौरेर्दर्शनं प्रतीक्षितवन्तः कथम्भूताः मुमुक्षवः मागधबन्धादितिशेषः ॥ २० ॥

आनर्तेति । आनर्तादयो मार्गस्था देशास्तांस्तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रमतीयायातिचक्राम ॥ २१ ॥

दृषद्वतीं नदीं तथा सरस्वतीञ्च तीर्त्वा मत्स्यांश्च देशानतिक्रम्य शक्रप्रस्थम् इन्द्रप्रस्थम् उप समीपं जगाम तत्र पुरं प्राकारयुक्तं ग्रामस्तद्रहितः व्रजः आभीराणामावासः आकरः खनिः मरुधन्वस्यानन्तरमनुपदस्य तीर्त्वेत्यस्यातिक्रम्येत्यर्थः श्रान्यत्वात् ॥ २२ ॥

तमिति । नृणां दुर्लभं दर्शनं यस्य तं कृष्णमागतं श्रुत्वाऽजातशत्रुर्युधिष्ठिरः निरगात्पुराद्दिति शेषः ॥ २३ ॥

गीतेति । वादित्राणि वाद्यानि तेषां घोषेण वेदघोषेण च स युधिष्ठिरः कृष्णमभ्यगादभिमुखं जगाम प्राणः इन्द्रियगणः आगतं प्राणं पञ्चवृत्तिप्राणमिवेत्याभिमुख्ये दृष्टान्तः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रेम क्वेदं यातीति प्रेमयाः सोमपाश्चद्वरूपं नेयम् ॥१९-२०॥

विनशनं कुरुक्षेत्रम् आकरं रत्नाद्युत्पत्तिस्थानम् ॥ २१ ॥

दृषद्वतीं चङ्कनदीम् ॥ २२—२५ ॥

### श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

'यस्मात् शौरेर्हेतोस्ते मुमुक्षवस्तस्य सन्दर्शनं प्रत्यैक्षन् तदेकापेक्षकाश्चस्तुरित्यर्थः ॥ २० ॥

गिरीन् नदींश्च तीर्त्वा आनर्तादिदेशानतीयाय तत्रापि सूराष्ट्रीवतीयायेत्यन्वयः ॥ २१ ॥

अत्र पाञ्चालविनशने मार्गस्थावेव देशविशेषौ ज्ञेयौ न त्वन्यप्रसिद्धौ ॥ २२—४२ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो दूतसमाधानमाह—राजदूतमिति । इदं वक्ष्यमाणं वाक्यमेव तस्य प्रीतिं जनयन् माभैष्टेति वाक्यं मध्यमपुरुषबहुवचनं राज्ञः प्रति दूतेनि केवलस्यैव सम्बोधनं तथा कथनाय अन्यथा भगवतैव राजानो बोधिता इति दूतो व्यर्थः स्यात् न केवलं मोचनं किन्तु वो भद्रमपीत्याशीः हेतुभूतकर्तव्यमाह—घातयिष्यामीति ॥ १९ ॥

ततो दूतकर्तव्यतादिकमाह—इत्युक्त इति । यथावज्ज्ञातानुपूर्व्याभुतानां मनोवृत्तिमाह—तेपीति । भगवतैव मोक्तव्य इति भगवद्दर्शनमेव काङ्क्षन्तः स्थिताः अयमेव मोक्षोपायः सर्वेषामिति सूचितम् ॥ २० ॥

इन्द्रप्रस्थपर्यन्तञ्च भगवत आगमनमाह—आनर्तेति द्वाभ्याम् । स्थलजलोत्तरणप्रथमभेशात् आनर्तो द्वारकादेशः सौवीरः सुराष्ट्रदेशः मरून् मरुदेशः ततो विनशनं कुरुक्षेत्रदेशः मल्पपरिभ्रमणेनागमनं पर्वतवनाद्यभावात् यतो हरिः गिरीन् रैवतकादीन् तत्प्रभावा नदींश्च अतीयाय पादगत्यैवातिक्रान्तवान् पुरग्रामव्रजाकराश्चत्वारो भेदाः जनस्थानानाम् ॥ २१ ॥

दृषद्वती सरस्वतीच तदानीमतिगम्भीरनद्यौ दृषद्वतीसरस्वत्योर्मध्ये मुकुन्द इति पदमग्रे तत्र मोक्षं दास्यतीति सूचयति—अथेत्यग्रे शर्मगमनं सूचितं पाञ्चालदेशो मत्स्यदेशश्च मध्ये मार्गे पर्यायभेदेनेति विमर्शः शक्रप्रस्थमिन्द्रप्रस्थम् अन्वर्थसंज्ञा स्थानस्येति ज्ञापयितुं तथा वचनम् ॥ २२ ॥

ततो निकटे समागमने युधिष्ठिरस्य स्नेहपूर्वकं कृत्यमाह—तमागतमिति चतुर्भिः । नृणां प्राणिमात्रस्य दुर्दर्शमित्यलभ्यलाभोक्तिः अजातशत्रुरिति भगवद्दर्शनाधिकारः विद्यापरिजनाभिमानाविर्भावाय सोपाध्यायसुहृद्वृत इति ॥ २३ ॥

ततो निकटमागतः गीतादिसहितः यतः स प्रसिद्धः निकटागमनयोग्यः ननु भक्त्या मध्ये विकलः कथं न जातः कथमागत इति शङ्कां वारयति—हृषीकेशमिति । इन्द्रियाधिपतित्वादिन्द्रियाण्येव गतानि ननु तत्प्रयत्नः तत्र जात इत्यर्थः अत एव गमने दृष्टान्तः प्राणमिवेति बहिर्निर्गतः प्राणः यथाऽनायासेन प्राणमेव समागच्छति ततः परमादरयुक्तो जातः ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मा भैष्टेति बहुत्वं राज्ञां बहुत्वम् ॥ १९ ॥

प्रत्यैक्षन् प्रत्यैक्षन्त ॥ २० ॥

विनशनं कुरुक्षेत्रम् अतीयाय अतिक्रम्य ययौ ॥ २१—२३ ॥

प्राणा इन्द्रियाणि प्राणं यथा अभियन्ति तथा अभ्ययात् ॥ २४—२५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

माभैष्टेति बहुत्वं तत्स्वाम्यभिप्रायेण ॥ १९ ॥

यद् मागधबन्धान्मुमुक्षवः अतः प्रत्यैक्षन् प्रत्यैक्षन्त ॥२०॥

दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ।
चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनःपुनः ॥ २५ ॥
दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ।
लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥
तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेम[1]जलाकुलेन्द्रियः ।
यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥
अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ।
ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथाऽर्हतः ॥ २८ ॥
मानितो मानयामास कुरुसृञ्जयकैकयान् ।
सूतमागधगन्धर्वा वन्दिनश्चोपमन्त्रिणः ॥ २९ ॥
मृदङ्गशङ्खपटहवीणापणवगोमुखैः ।
ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आनर्त्तादीन् देशान् तीर्त्वा अतिक्रम्य विनशनं गिर्य्यादींश्च अतीयाय अतिक्रम्य ॥ २१ ॥

शक्रप्रस्थमिन्द्रप्रस्थम् ॥ २२—२३ ॥

प्राणाः इन्द्रियाणि प्राणमसुम् ॥ २४—२५ ॥

भाषा टीका ।

पश्चात् मधुर वाणी से प्रसन्न करते राजाओं के दूत से श्रीकृष्ण बोले कि हे दूत ! भय मत करो आपका मङ्गल होगा मैं जरासन्धका घात कराऊंगा इसप्रकार तु राजाओं से कह देना ॥ १९ ॥

इस प्रकार श्रीकृष्ण भगवान् ने दूत से कहा वह वहां से प्रस्थान करके राजान के प्रति श्रीकृष्ण के कहे भए वचन को यथावत् कहती भया वे राजा लोग भी जरासन्ध से तथा संसार से छूटने की इच्छा करके श्रीकृष्ण के दर्शन की प्रतीक्षा करते भए ॥ २० ॥

श्रीकृष्ण भगवान् भी आनर्त्त सौवीर मरु तथा विनशन इन देशन का अतिक्रमण करके जाने में अनेकन दीन का तथा पुर ग्राम व्रज आकरों का अतिक्रमण करकैं ॥ २१ ॥

श्रीमुकुन्दभगवान् तत्पश्चात् दृषद्वती नदी कों तीर कर अनन्तर सरस्वती कों तिरकर अनन्तर मत्स्य देशन कों अतिक्रमण करके पश्चात् इन्द्रप्रस्थ को प्राप्त होते भए ॥ २२ ॥

राजा युधिष्ठिर मनुष्यों कों जिनका दर्शन दुर्लभ है एतादृश श्रीकृष्ण को समीप में आये सुनकर उपाध्याय सहित और सुहृदयुत होकर श्रीकृष्ण को लाने के वास्ते पुर से बाहिर निकसते भए ॥ २३ ॥

अनेक प्रकारका गान और बाजेन सहित तथा बहुतसे वेद घोष सहित राजा युधिष्ठिर आदरके साथ श्रीकृष्णके सन्मुख इस प्रकारसे गए कि जैसे मूर्छाके अनन्तर चक्षु आदि इन्द्रियगण, प्राणको प्राप्त होकर चेष्टा वारे होजाते हैं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सस्वजे परिरेभे ॥ २५ ॥

रमाया अमलं निर्दोषमालयं विस्मृतो लोकव्यवहारो येन सः ॥ २६—२७ ॥

अर्जुनेन समत्वात्परिष्वक्त एव केवलं पार्थो नमस्कुर्वन् अर्जुनः कृष्णेन भुजाभ्यां धृत इति भावः । यमाभ्यां स्वाभिवादितश्चेति ॥ २८—३१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णं स्वभावत एव सर्वचित्ताकर्षके विशेषतः स्वस्य प्रियतमं सर्वप्रियगणशिरोमणिं तत्रापि चिराद्दृष्टम् अतः पुनःपुनः सस्वजे कथञ्चित्ततो निवृत्तस्यापि तृष्ण्यमावात् अथ कार्त्स्न्येन ॥ २५ ॥

तादृशं श्रीयुधिष्ठिरादीनां सौभाग्यमनुसन्दधानः प्रेमभरोदयाद्दीर्घच्छन्दसा गाथयाह—दोर्भ्यामिति द्वाभ्याम् । दोर्भ्यां परिष्वज्येति बहुधा गाढालिङ्गनं बोधयति तत्पुनरकिञ्च निवृतो

(१) जलाकुलेन्द्रिय इति—शुक० वीर० विज० पाठाः ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्रैकत्वे हेतुताभिप्रायेण रमेति रमाया अन्ये ये आलयास्ते सदोषा एव अतस्तस्या अनभिव्यक्तेस्तेषु न साक्षात् स्थितिः किन्त्वाभासमात्रेण अस्यतु निर्दोषसर्वगुणाश्रयत्वात्साक्षादेव स्थितिरिति भावः । यतो मुकुन्दस्य सर्वथा सर्वदुःखमोचनपूर्वकं परमानन्दप्रदस्य श्रीकृष्णस्य गात्रम् । अतः परिष्वङ्गेन हतमशुभं चिरविश्लेषदुःखं यस्य परां निर्वृतिं लेभे अतश्चिचत्वादिविशेषणानां यथोत्तरं परमनिर्वृतिलक्षणत्वेन श्रैष्ठ्यं नृपतिरिति सर्वश्रेष्ठस्य तस्य तादृशभावोदयेनान्येषामपि तदीयानां सर्वेषां तद्विशारदमेव सूचयति ॥ २६ ॥

मातुलेयमिति गौरवादिराहित्येन मिथः स्नेहभरः सूचितः अत एव परिरभ्य निर्वृतोऽभूत ततश्च स्मयन् प्रफुल्लमुखाम्भोजस्सन् प्रेमजलेन आकुलानि आवृतानि इन्द्रियाणि यस्य तादृशोऽभूत् अथ नकुलसहदेवार्जुनाश्च मुदा पूर्वाभ्यामपि प्रहर्षेण सम्भृतबाष्पाः सन्तः सुहृत्तममच्युतं परिरेभिरे प्रेमजलाकुलेन्द्रियाश्चाभूवन्निति योज्यम् अच्युतमिति तेषामालिङ्गननिर्वृत्या तस्यापि चिरतराभिप्रायेण अर्जुनस्य पश्चात्किञ्चित्परिरम्भेच्छया किं वा सौहार्दोद्रेकेणाकुलतया शीघ्रगमनाशक्त्या पश्चादवस्थितेः ॥ २७ ॥

एवमादौ सम्भ्रमात् कृतमालिङ्गनमात्रमुक्त्वा तत्र च सामान्यतः सर्वेषामानन्दमोहमुक्त्वा पश्चात् स्वस्थानां सतां व्यवहारपरिपाटीं वन्द्यनिम्नभव्याणां तेषु भावविशेषं सूचयन्नर्जुनं पुनरालिङ्गनात् परमसख्यं दर्शयति अर्जुनेनेत्यर्धकेन तत्र युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनमिति पूर्वोक्तानुसारेण तथावन्दनमनुक्तमपि ज्ञेयम् ॥ २८ ॥

मानिनः कुर्वादिषु मान्यानित्यर्थः । यथार्हतः यथायोग्यं सूतेति व्यार्थकम् सूतमागधगन्धर्वाः स्वस्वानुरूपैर्मृदङ्गादिभिः स्वस्वानुरूपां जगुर्ननृतुश्च तथैव वन्दिन उपमन्त्रिणश्च तुष्टुवुर्ननृतुश्च श्रीभगवांस्तु अस्माकमन्येषाञ्च सद्धर्माणां पालयिता त्वं विजयीभवेति तुष्टुवुरिति विवेचनीयं यद्वा अतिहर्षोदयेन सर्वेऽपि मृदङ्गादिभिः स्तुत्यादि चक्रुः यतोऽरविन्दाक्षं हर्षेणैव सर्वतापहरं रमामोदप्रदं हृष्टमित्यर्थः ॥ २९–३० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रेमजलाकुलेन्द्रियाः आनन्दाश्रुपिहिताक्षाः ॥ २७—३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दृष्ट्वेति । श्रीकृष्णे यः स्नेहस्तेन विक्लिन्नमार्द्रं हृदयं यस्य सः पाण्डवो युधिष्ठिरः सस्वजे आलिङ्गितवान् ॥ २५ ॥

दोर्भ्यामिति । रमायाः अमलं निर्दोषमालयं मुकुन्दस्य गात्रं भुजाभ्यामालिङ्ग्य हतमशुभं यस्य सः परां निर्वृतिमानन्दं प्राप तदेव वक्तुं विशिनष्टि—अश्रूण्यानन्दजानि लोचनयोर्यस्य हृष्यन्मुदाञ्चितलोमा तनुर्यस्य विस्मृतः लोकविभ्रमो लोकव्यवहारो येन सः ॥ २६ ॥

तमिति । मातुलस्यापत्यं श्रीकृष्णं तं परिरभ्य प्रेमजलैरानन्दाश्रुभिराकुले व्याप्ते पिहिते इन्द्रिये लोचने यस्य सः बभूवेतिशेषः । यमौ नकुलसहदेवौ किरीटी अर्जुनश्च मुदा हर्षेण प्रवृद्धानि बाष्पाणि आनन्दाश्रूणि येषां ते परिरेभिरे परिष्वक्तवन्तः ॥ २७ ॥

अर्जुनेन केवलं परिष्वक्त एव समवयस्कत्वात् यमाभ्यां त्वभिवादितश्च भगवान् ब्राह्मणेभ्यो यथावृद्धेभ्यो युधिष्ठिरादिभ्यो यथायोग्यं नमस्कृत्य स्वयञ्च तैर्बहुमतः कुर्वादीन् बहुमन्यत सूतादयो ब्राह्मणाश्च मृदङ्गादिभिस्तुष्टुवुः ननृतुर्जगुश्च तत्र सूता मागधाः ब्राह्मणाश्च उपमन्त्रिणश्च तुष्टुवुः इतरे ननृतुः जगुश्च उपमन्त्रिणः परिहासकाः ॥ २८—३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रमा श्रीरालया भूः तयोरालयं श्रीधराश्रयमित्यर्थः । विस्मृतः लोके विभ्रमाः विविधभ्रमो येन स तथा ॥ २६ ॥
प्रेमजलेन आनन्दाश्रुजलेनाकुले नेत्रेन्द्रिये यस्य तथा ॥ २७—२८ ॥

उप समीपे समेत्य मन्त्रणशीलाः ॥ २९—३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निकटे समागतस्य कृत्यमाह—दृष्ट्वेति । स्नेहेति प्रसिद्धे अन्यथा जीवस्यैव भाग्यं वर्णयितुमनुचितं भगवता कथं सङ्गीकृतमिति शङ्कां वारयितुमाह—विशेषेण क्लिन्नहृदयमिति तस्य विचाराभावेनालिङ्गने हेतुः प्रियतममिति । पुनः पुनरिति अन्तरानन्देन बहिः सम्मूढता सूचिता ॥ २५ ॥

ततो यज्जातं तदाह—दोर्भ्यामिति । रमाया अमलालयम् अनेन लौकिकन्यायेनापि दोषाभावाय सुखाय च हेतुरुक्तः मुकुन्दगात्रमिति मोक्षानन्दोऽपि ततः सर्वपापक्षयः ततः परमानन्दस्फूर्तिः अन्तर्बहिर्लोचनयोः शरीरे च तदुल्लासः ततो लौकिकमोहनिवृत्तिः ॥ २६ ॥

उत्तमाधिकारित्वादस्यैवावश्यिकृत्य ततो न्यूनं भीमकृत्यं निरूपयति—तं मातुलेयमिति । सम्बन्ध एव तस्य हृदये प्रतिभातः तथापि वस्तुसामर्थ्यान्निर्वृतः भगवत्सम्बन्धाद्धलाधिः भावे जाते स्मयन् मन्दहासं कुर्वन् तताधिकारित्वात्प्रेमजलेनाकुलानीन्द्रियाणि यस्य यमौ माद्रीपुत्रौ ततो लौकिकत्वात् भीमानन्तरं कथनं किरीटी अर्जुनः तत्र चकारः राजधर्मसम्यधर्मञ्च समुच्चिनोति परिष्वङ्गे हेतुः सुहृत्तममिति मुदा प्रवृद्धबाष्पा इत्यविचारे भगवांस्त्वच्युत इति न कापि तस्य क्षतिरित्यनुमोदनं सूचितम् ॥ २७ ॥

प्रेमकार्यं निरूप्य लौकिककृत्यमर्जुनादीनां निरूपयति अर्जुनेनेति द्वाभ्याम् । समवयाआलिङ्गनं कनिष्ठौ चेदभिवादनम् अतः अर्जुनेन परिष्वक्तः यमाभ्यां चाभिवादितः ततो भगवान् भीमादयो ज्येष्ठा इति तान् सर्वानेव नमस्करोतीत्याह—ब्राह्मणेभ्यो नमस्कृत्य अन्येभ्यश्चेति । यथार्हतः यथायोग्यतः ॥ २८ ॥

एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ।
संस्तूयमानो भगवान् विवेशालङ्कृतं पुरम् ॥ ३१ ॥
संसिक्तवर्त्मकरिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥
उद्दीप्तदीपबलिभिः प्रतिसद्म जालनिर्यातधूपरुचिरं विलसत्पताकम् ।
मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥
प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्मपतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥
तस्मिन् सुसङ्कुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३५ ॥
ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ।
यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वैर्मानितः सर्वानेव मानयामास "ये यथा मां प्रपद्यन्ते" इति लौकिकभावेन प्रपन्नान् लौकिकभावं बोधयतीति निरूप्यते कुरवः सृञ्जयाः कैकयाश्च सात्विकादिभेदा इति त्रिविधा निरूपिताः बन्धुत्वोपजीवकानुक्त्वा विद्योपजीवकानाह—सूतमागधगन्धर्वानिति । गन्धर्वा गायकाः उपमन्त्रिणः परिहासकर्तारः समीचीनाः ॥ २९ ॥

ततो भगवता मानिताः मानयामासुरित्याह—मृदङ्गेति । चकारात् क्षत्रियाद्यापि अरविन्दाक्षमिति हर्षेणैवाप्यायिताः ब्राह्मणास्तुष्टुवुः भक्ता ननृतुः जगुः कर्मिणः सामगाः ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रमायाः शोभायाः अमलं निर्दोषमालयं विस्मृतो लोकविभ्रमो लौकिकविलासो येन सः लोकातीत प्रेमानन्दरसमग्न इत्यर्थः ॥ २६—३१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभ्रमो व्यवहारः ॥ २६—३१ ॥

भाषाटीका ।

राजाका हृदय प्रेमसे आर्द्र होगया, बहुत कालके अनन्तर श्रीकृष्णका दर्शन भया इस लिये अति प्रिय श्रीकृष्णके दर्शन करके वारम्वार श्रीकृष्णसे मिलते भए ॥ २५ ॥

लक्ष्मीका निर्दोष निवास स्थान, श्रीकृष्णके दिव्यगात्रका राजाने दोनों भुजाओंसे आलिङ्गन किया इस वास्ते राजाके समस्त पाप नष्ट होगए और राजाके नेत्रों से अश्रुपात बहने लगे तथा शरीरमें रोम खड़े होगए, लोकके व्यवहारको भूलकर राजा परमानन्दको प्राप्त होगया ॥ २६ ॥

भीमसेनभी मामाकेपुत्र श्रीकृष्णको दोनों भुजासे मिलकर परमानन्दसे परिपूर्ण हुआ मन्दहास करत आनन्दके अश्रुपातोंसे आकुलनेत्र वारा होगया, और नकुल सहदेव तथा अर्जुन ये तीनों हर्षसे आनन्दके अश्रुपातवारे होकर परम सुहृद श्रीकृष्णको मिलते भए ॥ २७ ॥

अर्जुन समान अवस्थाका रहा इस वास्ते उसने श्रीकृष्णका आलिङ्गन मात्रहि किया और नकुल सहदेव दोनों श्रीकृष्णसे छोटी अवस्था के रहे इस वास्तेउनोंने श्रीकृष्ण, ब्राह्मणोंके अर्थ नमस्कार करके और वृद्ध पुरुषोंकोभी यथा योग्य नमस्कार करते भए ॥२८॥

इस प्रकार सम्मानको प्राप्त होकर कुरु सृञ्जय केकय देशके राजालोग तथा मान्यपुरुषोंको सम्मान करते भए सूत मागध गन्धर्व वन्दी उपमन्त्री लोग ॥२९ ॥

मृदङ्ग शङ्ख पटह वीणा पणव गोमुख आदि वाजेन सहित स्तुति नृत्य गान करते भए और ब्राह्मण लोगभी स्तुति करते भए ॥ ३० ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

चित्रध्वजादिभिर्विराजमानम् ॥ ३२ ॥

प्रतिसद्म उद्दीप्तैर्दीपैर्बलिभिः पुष्पादिप्रकारैश्च जुष्टं जालेभ्यो गवाक्षेभ्यो निर्गतैर्धूपैरुचिरम् विलसन्त्यः पताकाः यस्मिन् तत् मूर्धन्या मूर्ध्नि भवा हेमकलशा येषां तैः रजतमयानि रूप्यमयान्युरूणि स्थूलानि शृङ्गाणि कलशावस्तम्भूमिका येषां तैर्भवनैर्जुष्टं कुरुराजस्य धाम पुरं ददर्श ॥ ३३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं, किं पुनर्नारीणामित्यर्थः ॥ ३४ ॥

सुष्ठु आगतं तत्प्रश्नादिकं प्रियमुत्स्मयवीक्षितेनैव विदधुः ॥ ३५ ॥

उडुपसहाः चन्द्रसहचरा इत्यर्थः । अमूभिः किं पुण्यमकारि ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

पर्य्यस्तैः परिवृतः सम्यक् स्तूयमानश्च यतः पुण्यो मनोज्ञः साक्षाद्धर्मरूपो वा श्लोको यशो येषां ते युधिष्ठिरादयस्तेषां शिखामणिः भगवान् इति ॥ ३१ ॥

श्रीभगवत्प्रवेशलीलापरिकरताकृततया धन्यतमं तत्पुरं वर्णयति—संसिक्तेति युग्मकेन । मदैः स्वभावसिद्धैश्चन्दनादिगन्धतोयैश्च कल्पितैः सम्यक् सिक्तानि वर्त्माणि यत्र तत् नृमियुवतिभिर्नरनारीभिस्तदानीं नवदुकूलादिसमुज्ज्वलितगात्राभिः सतीभिर्विशेषतो राजमानं प्रतिसद्मेत्यस्योभयतोऽप्यन्वयः कुरूणां महावैभवादिना प्रसिद्धानां (पू) सर्वेषामपि साक्षाच्छ्रीकृष्णप्रेष्ठत्वेन राजा श्रीयुधिष्ठिरस्तस्य धामेति तद्योग्यतोक्ता ॥ ३२-३३ ॥

पुरस्त्रीणां च सौभाग्यं तथैव वर्णयति-प्राप्तमिति त्रिभिः । औत्सुक्येन विस्रथितः स्रस्तप्रायः केशस्य दुकूलस्य च बन्धो यासां ताः तल्प इति मध्याह्नभोजनानन्तरे केषाञ्चिद्दिवाशयनाद्रां शय्यायां निवेशात् किम्वा पाण्डवादिभिः परिरम्भणादिना शय्यासेः तदेतद्वर्णनं तदागमनश्रवणसमयपूर्वभागभागेव ज्ञेयम् ॥ ३४ ॥

—इभादिभिः सुसङ्कुले अतिव्याप्तेः उपलभ्य साक्षाद्दृष्ट्वा पश्चात् सम्यग्दर्शनार्थं पुष्पविक्षेपार्थञ्च गृहाधिरूढाः सत्यः उत उत्कृष्टः स्मयः स्मरतिव्यञ्जकं स्मितं तद्युक्तेन वीक्षितेन कटाक्षेणैव सुस्वागतं स्वागतप्रश्नादिकं विदधुः तद्धि प्रीत्यर्थं विधीयते तादृशवीक्षितेन त्वतिशयेन सा जायत इति तत्स्थाने तत्प्रयोगात् अत एव तैरपि व्याख्यातं प्रियमिति यद्वा सुस्वागतशब्देनात्र तदुपलक्षणत्वेनातिथ्यमात्रं लक्षितं यद्वा विशेषेण व्यञ्जनाय दधुश्चक्रुः ॥ ३५ ॥

मुकुन्दपत्नीः मुकुन्दसहितास्तत्पत्नीरित्यर्थः । स्त्रियोऽत्रान्तःपुरवासिन्यः पृथीत्यन्तःपुरप्रवेशार्थं निर्जनीकृत्य योषिद्भिरेवाधिष्ठिते तद्वर्हिः कक्षमार्गे तारा यथेति दृष्टान्तेन सहैव गमनादिकं द्योतयति तद्दृष्टान्तत्वञ्च तासां महाजनसङ्कुलत्वावरणदर्शनमात्रेण तत्स्फूर्त्तेरेव ननु साक्षाद्दर्शनात् यासां चक्षुषाम् उदार उत्कृष्टः सर्वानन्दप्रदो वा हासः तद्युक्तया लीलयाऽवलोककलोत्कटाक्षः अवलोकनभङ्गी वा तयोत्सवं सुखविशेषम् आ सम्यक् तनोति यतः पुरुषमौलिः पुरुषोत्तमः इत्यशेषसुन्दरगुणादिसेवितत्वमुक्तं विविधमधुरालापक्रीडासम्भवेऽपि केवलावलोककलाया एव वर्णनम् ताभिस्तस्या अपि परमदौर्लभ्येन बहुमननात् यद्वा आश्चर्यपरिहाराभिप्रायात् ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

किमकारि किञ्चकृतमाचरितम् ॥ ३६—३८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । पर्यस्तः परिवृतः पुण्यश्लोकश्रेष्ठः पुरमिन्द्रप्रस्थं विवेश ॥ ३१ ॥

तद्विशिनष्टि—संसिक्तवर्त्मेति द्वयेन । करिणां मदगन्धजलैः संसिक्तानि वर्त्माणि पुरवीथयो यस्मिंस्तत् कनकतोरणैः परिपूर्णकुम्भैश्च मृष्टः स्नापित आत्मा शरीरं यैः नवाः दुकूलादयो येषान्तैः नृभिपुम्भिस्तथाभूताभिर्युवतीभिः स्त्रीभिश्च विराजमानम् ॥ ३२ ॥

किञ्च उद्दीप्तेति । प्रतिगृहं उद्दीप्तैः दीपैः—बलिभिः पुष्पादिभिश्च जुष्टं जालेभ्यो गवाक्षेभ्यः निर्यातैः धूपैः रुचिरं विलसन्त्यः पताका यस्मिंस्तत् मूर्द्धन्याः मूर्द्धनि भवास्ते हेमकलशा येषां तैः रजतमयान्युरूणि स्थूलानि शृङ्गाणि कलधौतः स्तम्भभूमिका येषां तैश्च गृहैर्जुष्टम् एवम्भूतं कुरुराजधामेन्द्रप्रस्थपुरं ददर्श ॥ ३३ ॥

प्राप्तमिति । नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं किम्पुनर्नारीणामित्यर्थः । तं कृष्णं प्राप्तमागतं श्रुत्वा युवतयः पौरस्त्रियः सद्य एव गृहव्यापारं तल्पे पर्यङ्कं पतिञ्च विसृज्यौत्सुक्याद्विश्लथिताः केशानां दुकूलानाञ्च बन्धा ग्रन्थयो यासां ता द्रष्टुं नरेन्द्रमार्गे राजवीथीं ययुः ॥ ३४ ॥

तस्मिन्निति । गृहेषु प्रासादेष्वधिरूढा युवतयः रथादिभिश्चतुर्भिः सेनाङ्गैः सुसङ्कुले सङ्कीर्णे तस्मिन्नरेन्द्रमार्गे सभार्यं कृष्णमुपलभ्य दृष्ट्वा कुसुमैर्विकीर्य मनसा उपगुह्यालिङ्ग्य स्मययुक्तवीक्षितेनैव सुस्वागतं स्वागतप्रश्नं विदधुः चक्रुः तासामुत्स्मयवीक्षितं स्वागतप्रश्नं विदधदिवासेत्यर्थः ॥ ३५ ॥

ऊचुरिति । उडुपेन चन्द्रेण सहितास्तारा इव स्थिताः कृष्णपत्नीः पथि निरीक्ष्य स्त्रियः प्रोचुः उक्तिमेवाह किं इति अमूभिः कृष्णपत्नीभिः किमकारि किं सुकृतमाचरितं तत्र हेतुत्वेन विशिनष्टि ययासां चक्षुषां पुरुषमौलिः पुरुषोत्तमः उदारो गम्भीरो यो हासस्तद्युक्तो लीलयावलोकस्तस्य कलया लेशेन सुखं वितनोति तथाभूताभिरमूभिरिति सम्बन्धः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पर्यस्तः परिवृतः ॥ ३१—३२ ॥

चन्दनाम्बुसंसिक्तवर्त्म कुरुराजधाम ददर्शेत्यन्वयः । प्रतिसद्म प्रतिगृहम् ॥ ३३—३४ ॥

उज्झितवीक्षितेन सम्यनिरीक्षणेन ॥ ३५ ॥

उडुपसहाः उडुपेन चन्द्रेण सहिताः ताराः अमूभिः किं शुभमकारि ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दर्शनस्थानकृत्यमुपसंहरन् अग्रिमकृत्यमाह—एवं सुहृद्भिरिति । एवंभूतैः सुहृद्भिः पर्यस्तो व्याप्तः तैरेव स्तूयमानः पुरमविशत् भगवतो महत् नगराद्बहिरेव स्थातुं युक्तं कथमन्तः प्रवेशनमिति शङ्कां वारयति-पुण्यश्लोकशिखामणिरिति । पुण्यश्लोकाः युधिष्ठिरादयस्तेषां शिखामणिर्मुकुटमणिः भगवतः प्रवेशाभावे कोपि पुण्यश्लोको न प्रविशेदिति तदनुरोधेन प्रार्थनया वा प्रविष्ट इत्यर्थः । भगवत्त्वादनन्यत्वं सर्वैरेव स्तूयमानत्वाच्च लज्जा सर्वानुमोदनार्थं विशेषणम् अलङ्कृतमिति ॥ ३१ ॥

भगवत्प्रविष्टं पुरं वर्णयति द्वाभ्याम्—संसिक्तेति । करिणां मदगन्धतोयैः संसिक्तवर्त्मेति अधो वर्णितं कनकतोरणैः पूर्णकुम्भैश्चेत्युपरि, मध्ये वर्णयति—मृष्टात्मभिरिति । मृष्टा उद्वर्तनादिभिः शोधिताः आत्मानो देहा येषां नवानि दुकूलानि स्रजो माला गन्धाश्च एतादृशैर्नृभिर्युवतिभिः स्त्रीपुरुषैर्विराजमानमिति साधारणपुरुषाणां शोभा निरूपिता प्रसिद्धपुरुषाणान्तु पुरमेव शोभाकरम् ॥ ३२ ॥

साधारणं पुरं वर्णयित्वा राजगृहात्मकं वर्णयति-उद्दीप्तेति । राजगृहाः सर्वे भोगस्थानभूता इति तत्रोद्दीप्ता दीपावलयश्च पुष्पमण्डलानि पूजासाधनानि भवन्ति प्रतिसद्म सर्वेष्वेव गृहेषु ये जाला गवाक्षाः तन्मार्गेण निर्याता ये धूमास्तैः रुचिरं विलासयुक्ताः पताका यस्मिन् सात्त्विकराजसतामसोत्कर्षो निरूपितः क्रमेण पदत्रयेण गृहाणां स्वाभाविकोत्कर्षमाह—मूर्द्धन्येति । गृहमूर्द्धनि स्थितैः हेमकलशैः राजतानि रुक्मशृङ्गाणि च तैर्जुष्टं सेवितं ज्ञापकत्वेन तानि स्थितानि भयमर्थः भगवान् दूरादेव दीपविशेषैः पताकाभिः सुवर्णकुम्भैः राजतशृङ्गैश्च राजगृहमिदमिति ज्ञातवानिति ॥ ३३ ॥

ततः पुरं प्रविष्टस्य भगवतः प्रकारान्तरेण स्वरूपं वर्णयितुं तत्रत्यानामौत्सुक्यमाह—प्राप्तं निशम्येति । नराणां यानि लोचनानि लावण्यामृतसारज्ञानयुक्तानि तेषां लावण्यामृतपाने भगवान् पात्रं यत्रत्यं रूपामृतं चक्षूंषि पिबन्ति ततो रूपदर्शनेन उन्मथिताशयानां देहवैकल्यमाह—औत्सुक्येति । दर्शनानन्तरं वा योत्सुकता औत्सुक्यं तेन विश्लथिताः केशदुकूलयोः बन्धो यासां केशबन्धापगमे मनोवैकल्यं दुकूलबन्धापगमे देहकार्श्यं अन्तर्बहिः क्लेशो निरूपितः ततः पूर्वावस्थायाम् स्थातुमशक्ताः सद्य एव गृहकर्मपरित्यज्य तल्पे त्यक्त्वा क्रियाफलानि च त्यक्त्वा नरेन्द्रस्यैव मार्गे युवतयो भगवन्तं द्रष्टुं ययुः तल्पे पतीनां निरूपणाच्च ते भगवद्भक्ताः राजा तु भगवत्संमुखं गत इति पतिगृहेभ्यो राजमार्ग एव श्रेष्ठ इति तत्रैव निविष्टा येन भगवान् दृश्येतेत्यर्थः ॥ ३४ ॥

गृहाः कर्माणि पतयश्चेति वा तामसादिभेदात्त्रयः त्यागार्हा एव अर्थाद्राजमार्गो गुणातीत एव भवति अत एव तत्र गतानां भगवद्दर्शनं जातमित्याह—तस्मिन्निति । चतुरङ्गसेनासङ्कुले तस्मिन् मार्गे समार्य भगवन्तमुपलभ्य गृहाधिरूढाः सत्यः आरोहदोषपरिहाराय कुसुमैर्विकीर्य विवाहमिव कृत्वा पश्चान्मनसोपगूह्य उत्स्मयवीक्षणेन हासपूर्वकनिरीक्षणेन सुष्ठु स्वागतं विदधुः सर्वनिरूपणेन अपराधक्षमा तत्र विश्रामपूर्वकं भगवन्तं परिगृह्य प्रमाणविरोधं परिहृत्य आत्मानं भगवति योजयित्वा प्राप्तं भगवन्तं पूरितमनोरथाः दास्येनाधिकरिष्यति दास्याम इति सूचयन्त्यः मोहयन्त्यो वा स्वतःसाभिलाषं स भगवन्तं सम्यगागतमिति सम्मानितां कृतवत्य इत्यर्थः ॥ ३५ ॥

एवं भगवति स्त्रीणां भावमुक्त्वा पुरुषाणां भावमाह—तत्रतत्रेति । पौराः पुरवासिनः सर्व एव कृष्णस्य सपर्यां पूजां चक्रुः श्रेणीमुख्यानां विशेषमाह—एकशिल्पोपजीविनः वणिग्विशेषाः श्रेणीमुख्याः ते भगवता तत्तच्छिल्पसहिताः विशेषतो दृष्टाः सर्वात्मना हतैनसो जाता इत्यर्थः । मङ्गलद्रव्ययुक्तपाणित्वन्तु समानमेव सपर्या गन्धपुष्पादिभिः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुरं वर्णयति-संसिक्तेति द्वाभ्याम् । चित्रध्वजादिभिर्विराजमानं प्रतिसद्म उद्दीप्तैर्दीपैर्बलिभिः पुष्पादिभिर्जुष्टं जालेभ्यो निर्यातैधूपैरुचिरं कुरुराजस्य धामानि मन्दिराणि यत्र तत् ॥ ३२-३५ ॥

उडुपहसहाश्चन्द्रसहचरीरित्यर्थः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरं वर्णयति—संसिक्तेति द्वयेन । करिणां मदगन्धतोयैः संसिक्तानि वर्त्मानि यस्मिन् तत् चित्रध्वजादिभिर्विराजमानम् उद्दीप्तैर्दीपैः बलिभिः पुष्पादिभिश्च प्रतिसद्म प्रतिगृहं जालेभ्यः गवाक्षेभ्यो निर्गतैः धूमैरुचिरं विलसन्त्यः पताकाः यस्मिन् तत् मूर्द्धनि भवाः मूर्द्धन्याः हेमकलशाः येषां तैः रजतमयान्युरूणि स्थूलानि शृङ्गाणि कलशाधस्था भूमिका येषां तैर्भवनैश्च जुष्टम् कुरुराजस्य धाम पुरं ददर्श ॥ ३२ ॥ ३३ ॥

नरलोचनानां पानस्य पातव्यस्य रूपस्य पात्रं रूपनिधिमित्यर्थः ॥ ३४—३५ ॥

उडुपसहाः ताराधिपसहिताः तारा यथा शोभमानाः अमूभिः किमकारि किमद्भुतं पुण्यमाचरितम् ॥ ३६ ॥

---

### भाषा टीका ।

पवित्र यश वारेन के मध्यमें श्रेष्ठ श्रीकृष्ण भगवान इस प्रकार सुहृदों से युक्त होकर और सूत आदिकोंसे स्तुति को प्राप्त होते अलङ्कार किये पुरमे प्रवेश करते भये ॥ ३१ ॥

जिस पुरमें मत वारे हस्तियों के मद और गन्ध से युक्त जल करके राजमार्गों का छिड़काव होरहा है ॥ और चित्र विचित्र ध्वजाओं से तथा सुवर्ण के तोरण और जल से भरे कुम्भो से शोभाय मान वह पुर है और उज्वल शरीर वारे नवीन रेसमी वस्त्र भूषण माला सुगन्ध

तत्रतत्रोपसङ्गम्य पौरा मङ्गलपाणयः।
चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥
अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः।
ससम्भ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥
पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम्।
प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ३९ ॥
गोविन्दं गृहमानीय देवदेवेशमादृतः।
पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥
पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम्।
स्वयञ्च कृष्णया राजन् भगिन्या चाभिवन्दितः ॥ ४१ ॥
श्वश्र्वा सञ्चोदिता कृष्णा कृष्णपत्नीश्च सर्वशः।
आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४२ ॥

भाषाटीका।

धारण करने वारे पुरुष और स्त्रीयों से वह पुर शोभाय मान होरहा है ॥ ३२ ॥

श्रीकृष्ण भगवान युधिष्ठिरजीके राजधानी का देखा जाहां घरघर में प्रकाश दीप बलीन से शोभाय मान है और भवाक्ष ओंसे निकसे हुये अगरु धूप से परिमिलत है और जिनकी शिखर पर चांदी के स्थल पर सुवर्ण कलश और पताका से अलङ्कृत अनेक भवनों से भूषित राजधानी को देखा। ॥ ३३ ॥

जिनके केश पाश और वस्त्र बन्ध खुलजाते हैं ऐसी स्त्री लोग अपने घर के कार्य को तथा अपने पतीन को भी शय्या ही में छोडकर श्रीकृष्णचन्द्रके दर्शन करने को राजमार्ग में चलती भई ॥ ३४ ॥

उस राज के रास्ते में हाथी घोडा रथ इन करके भीड होने से अपने महलों पर चढि कर भार्या रुक्मिणी देवी सहित श्रीकृष्ण के दर्शन कर पुष्पनकी वर्षा करके मुस्क्यान सहित कटाक्ष से ही कुशल पूछती भई ॥ ३५ ॥

आकाश में नक्षत्रगण युत चन्द्रमा के समान श्री रुक्मिणी जी आदि पटरानी सहित श्रीकृष्णको राजमार्ग में, दर्शन कर वे स्त्री लोग आपस में कहने लगे, कि—इस श्रीकृष्णका भार्याओं ने पूर्व जन्म में क्या पुण्य किया है क्योंकि श्रीपुरुषोत्तम श्रीकृष्ण जी को मन्दहास युत लीला कटाक्ष को अनुभव करती है ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रेण्यः एकशिल्पोपजीविनां सङ्घास्तेषु मुख्याश्च ॥ ३७ ॥
अभ्युपेतोऽभिगमनेन सत्कृतः ॥ ३८ ॥
सस्नुषा द्रौपदीसहिता ॥ ३९ ॥
कृत्यं प्रकारविशेषं प्रमोदेनोपहतोऽभिभूतः ॥ ४० ॥
गुरुस्त्रीणाञ्च कृष्णया द्रौपद्या च भगिन्या सुभद्रया ॥ ४१ ॥
आनर्चाऽर्चितवती ॥ ४२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पुनरनुसन्धाय नगरवृत्तं वर्णयति—तत्रतत्रेति। हतैनसः सर्वे तदन्तरायकर्मरहितास्तत्प्रभृतिजाताः तत्स्मरणस्य सदानुगतेः चतुर्थी तादर्थ्ये ॥ ३७ ॥

अथानुक्रमप्राप्तमन्तःपुरप्रवेशवृत्तमेव वर्णयितुमाह—अन्तरिति। प्रीत्या फुल्लानि लोचनानि येषां तैः अतः सम्भ्रमस्त्वरा तत्सहितैः अभिमुखे उपेतःसत्कृतस्सन् प्रकर्षेण मधुरगमनेन तत्तत्परिकरशोभाविशेषेण चाविशत् ॥ ३८ ॥

भ्रात्रेयमिति परमस्नेहविषयत्वं तत्र त्रिभुवनेश्वरमिति परमोल्लासहेतुत्वं पर्य्यङ्कादुत्थायेति श्रीभगवत्सन्दर्शनापेक्षया प्रागेव मुख्यराजमन्दिरे समागत्योपविष्टा पश्चात्साक्षाद्दर्शनेन प्रेमोद्रेकादातुरा सती पर्य्यङ्कादुत्थातुमशकापि कथञ्चिदुत्थायेत्यर्थः स्नुषया सह वर्त्तमाना पृथा परिषस्वजे स्नुषातु तत्पश्चात् स्थित्वेव नमस्कारादिना तमादृतवतीत्यग्रे वक्ष्यते यद्यपि विद्यमानतामात्रार्थस्यसहशब्दस्य न समासः किन्त्वेकक्रियायोगेन एवेति शब्दस्मृतिस्तथाप्यत्र वक्ष्यमाणया रीत्या समासस्यार्षत्वमप्यङ्गीकार्य्यम ॥ ३९ ॥

गोविन्दं शब्दमात्रगोचरं कथञ्चित्प्राकट्येपि देवदेवानां श्रीब्रह्मादीनामपीशम् एवं परमदौर्लभ्यमुक्तम् आदृतः सादरः यद्वा कथं सम्भ्रान्तोसि ततस्ततो धावसि मयं त्वदधीन एव

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अलं पूजाप्रयासेन सुखमत्रोपविशाचिरात्त्वां पश्यानीत्येवं बहुधा कृष्णेनादृतस्सन्नृप इति सर्वकर्मकौशलादिकपूजासाधनसहायादि-सम्पन्नत्वञ्च सूचितं तथापि नाविदत् अनुसन्धातुमपि नाशक्नोत् यतः प्रमोदोपहतः ॥ ४० ॥

श्रीकृष्णस्त्वेवं तेषामत्यन्तहर्षसम्भ्रमेण व्यवहारस्यापूर्णत्वे-ऽप्यतिपूर्णत्वं मत्वाऽनन्तरकृत्यं चकारेत्याह—पितृष्वसुरिति । हे राजर्षिति अहो भाग्यं यत्तादृशकुले जातोऽसीतिभावः ॥४१॥

श्वश्र्वेति युग्मकम् । सम्यक् तत्तदनुरूपपूजाद्रव्योपदेशसहाय-वर्गनियोजनादिना मोदिता सती कृष्णपत्नीरिति कृष्णस्यैव तासामभ्यर्च्यत्वं चकारात्तत्पुत्रादिवधूः कन्याश्च सर्वश इति सर्वा एव प्रत्येकं सर्वप्रकारैश्चेत्यर्थः । शैब्यामिति मित्रविन्दाया एव विशेषणं द्वितीयतथाशब्देनानुक्तसमुच्चयार्थकेन लक्ष्मणा च गृहीता यद्वा शैब्यां शिवं शुभं तद्युक्ता सर्वसुखलक्षणां लक्ष्मणामित्यर्थः ॥ ४२—४३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भ्रात्रेयं भ्रातृपुत्रम् ॥ ३९—४० ॥

भगिन्या सुभद्रया ॥ ४१—४६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रतत्रेति । उपसङ्क्रम्य समीपमागत्य पौराः श्रेणयः एक-शिल्पोपजीविनां सङ्घाः तेषु मुख्याश्च मङ्गलानि गन्धपुष्प-ताम्बूलादिशुभद्रव्याणि पाणयोर्येषां ते कृष्णाय पूजाश्चक्रुः अतो हतं निरस्तमेनः पापं येषां तथा बभूवुरिति शेषः ॥ ३७ ॥

अन्तरिति । सम्भ्रमेण सहितैरत एव फुल्ले विकसिते लोचने येषां तैरन्तःपुरजनैरभ्युपेतोऽभिसङ्गतः राजमन्दिरं प्रवि-वेश ॥ ३८ ॥

पृथेति । पृथा कुन्ती भ्रात्रेयं भ्रातृपुत्रं कृष्णमवलोक्य प्रीतः आत्मा मनो यस्याः सा पर्यङ्कादुत्थाय स्नुषया द्रौपद्या सहिता परिषस्वजे आलिङ्गितवती ॥ ३९ ॥

गोविन्दमिति । देवानां देवो ब्रह्मा तस्यापीशं गोविन्दं गृहं प्रत्यानीय नृपो युधिष्ठिरः प्रमोदेनोपहतः अभि-भूतः परवशः इति यावत् पूजायां कृत्यं क्रमविशेषं नावि-न्दत् ॥ ४० ॥

पितृष्वसुरिति । कृष्णो भगवान् पितृष्वसुः पृथायाः गुरुस्त्रीणां पूज्यस्त्रीणां चाभिवादनं चक्रे स्वयं कृष्णया द्रौपद्या भगिन्या सुभद्रया चाभिवादितश्च ॥ ४१ ॥

श्वश्र्वा श्वशुरस्य स्त्रिया पृथया सञ्चोदिता कृष्णा द्रौपदी कृष्णस्य पत्नीः सर्वप्रकारैरानर्च पूजितवती कृष्णपत्नीरेव निर्दिशति-रुक्मिणीमित्यादिना ; शैब्यां लक्ष्मणामन्याश्चेति । एता अन्याश्चागताः स्त्रियः वस्त्रादिभिरानर्चेति सम्बन्धः मण्डन-मलङ्कारः ॥ ४२—४३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रेणीमुख्याः नगरप्रधानाः ॥ ३७—३८ ॥

भ्रात्रेयं भ्रातुः पुत्रम् ॥ ३९—४० ॥

भगिन्या सुभद्रया च ॥ ४१ ॥

श्वश्र्वा पृथया ॥ ४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पृथाविलोक्येत्यादि सस्नुषा द्रौपद्या सह उत्थिता परस्वजे इत्युत्थान एव तत्साहित्यम् ॥ ३९—४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वैः समाजनमुक्त्वा स्त्रीभिः कृतं मुकुन्दपत्नीनां पुनराह—ऊचुरिति । स्त्रीत्वभक्त्या विशेषेपि एता एव धन्या न तु वयं यद्यपि वयमुपरि तथापि भगवान् भूमौ समागत इति भूमिरेव स्वर्गमिति निरूपयन्त्यो दृष्टान्तमाहुः—यद्योडुप-सहा इति । "वेदगृहा वै नक्षत्राणि" इतिश्रुत्या तासामिन्द्रि-याणां देववद्भोगाधिक्यं सूचितं केन धर्मेणायमर्थः प्राप्तः इति तासां विमर्शनमाहुः—किमकार्यमूभिरिति । ननु किमाश्चर्यं बह्वीनामेव तथा भावादित्याशङ्क्य तासां सर्वोत्तमफलभोग-माह—यच्चक्षुषामिति । यासां चक्षुषां भगवान् स्वयमुत्सव-मातनोति भगवानेव सर्वकर्त्तेति किमाश्चर्यमिति शङ्कां वार-यितुं भगवति विशेषमाह-पुरुषमौलिरिति । नहि पुरुषोत्तमः स्त्रिया उत्सवं सम्पादयति तथा सत्युत्तमत्वमेव भिन्नं स्यात् तत्रापि उदारो यो हासः सर्वेषां माया येन सर्वपुरु-षार्थदाता तत्सहितो यो लीलावलोकः । पूर्णसर्वपुरुषार्थोपि भक्तिज्ञानसहितः उदारो गुणत्रयाणाञ्च हासलीलावलोकानां तेषामपि या कला नैपुण्यातिशयः तेन स्वसर्वस्वेनापि तासां नेत्राणामुत्सवं करोतीति तासां महती स्तुतिः ॥ ३७ ॥

पुरवासिनां कृत्यमुक्त्वा अन्तःपुरवासिनामाह—अन्तःपुर-जनैरिति । अन्तःकरणेन्द्रियशरीराणि तेषां भगवत्पराणीति वक्तुं विशेषणत्रयं प्रीत्या फुल्ललोचनैः ससम्भ्रमैरिति सम्भ्रमो देहधर्मः एवं सर्वभावैः प्रपन्नैः अभ्युपेतः सन् राजमन्दिरं प्राविशत् सन्माननाया अविच्छेदं वक्तुम् ॥ ३८ ॥

पृथादिकृतसन्माननामाह—पृथा विलोक्येति । भ्रातृपुत्रोपि कृष्णः त्रिभुवनेश्वरः महान् सम्बन्धीति प्रीतात्मा सती सस्नुषा पर्यङ्कादुत्थाय परिषस्वजे महति लज्जाभये भवतः तत्परित्यज्य परिष्वङ्गाज्ञातिदेहधर्मानिवृत्तिः पर्यङ्कादुत्थायेति सुखसाधनपरित्यागः सस्नुषेति निरन्तरत्वं अन्तःकरणप्रीत्या दोषाभावपूर्वकसर्वे गुणा निरूपिताः पर्यङ्कस्थितिः भगवत्कृपां सूचयति भगवदर्थे गृहकार्ये स्थितायां वा पर्यङ्के स्थितिः एता-वदेव ययोः कृत्यं प्रेम्णाविकलयोर्नाधिकम् ॥ ३९ ॥

ततो गृहागते भगवति राज्ञः कृत्यमाह—गोविन्द-मिति । देवमात्रेपि गृहागते महती पूजा कर्त्तव्या भगवांस्तु देवानामपि देवः तस्मिन्नभ्यागते स्वयमेव गृहमानीय पूजनीयः

कालिन्दीं मित्रविन्दाञ्च शैब्यां नाग्नजितीं सतीम् ।
अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः ॥ ४३ ॥
सुखं निवासयामास धर्मराजो जनार्दनम् ।
ससैन्यं सानुगामात्यं सभार्यञ्च नवन्नवम् ॥ ४४ ॥
तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ।
मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूजायां कर्त्तव्यायाम् आदरे विद्यमानेपि सत्यं कृत्यं कर्त्तव्यं नाविन्दत् भगवद्रूपातिरेकेण न तस्यान्यत्र पूजासाधनं द्रव्यमभावात् बलाद्विमप्रेरणे कैवल्यसम्भवात् न पूजाज्ञानं प्रमोदेन च उपहतानीन्द्रियाणि सुखासक्तानी न क्रियायां प्रवर्त्तन्त इत्यर्थः ॥ ४० ॥

एवं सर्वेषु प्रेम्णा विकलेषु सत्सु भगवत्कृत्यमाह—पितृष्वस्रुरिति । येन भगवच्चरित्रेण मोहकेन तेषां सावस्था दूरे भवति अन्यथाऽग्रिमकार्यं न स्यात् तच्चरित्रमाह स्वापेक्षया ज्येष्ठानां स्त्रीणां पितृष्वसुश्च भगवानभिवादनं चक्रे ततस्तासां देहधर्मयुक्तानां कृत्यमाह—सखश्चेति । स्त्रीत्वैकगृहत्वैकगोत्राचिभिः सर्वा एकभावमापन्ना इति वृद्धनमस्कारेभ्यासामपि देहधर्मसम्बन्धः कृष्णा द्रौपदी भगिनी सुभद्रा चकारादन्यदपि ॥ ४१ ॥

ततो भगवत्पत्नीनां पूजामाह—श्वश्र्वेति । पृथया सम्प्रेषिता कृष्णा सर्वतः सर्वप्रकारेण कृष्णपत्नीरर्चयामास तुशब्देन न्यूनाधिकभावेन पूजा निवारिता समुदायेन पूजां निवारयितुं प्रत्येकं नामान्याह—रुक्मिणयादिपदैः । सत्या सत्यभामा शैब्या लक्ष्मणा नाग्नजित्येव सती सत्या एवम् अष्टमहिष्यो नाम्ना निरूपिताः ॥ ४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रेण्य एकशिल्पोपजीविन्यो जनतास्तासु मुख्याः ॥३७—३९॥

कृत्यं समुचितप्रकारम् ॥ ४० ॥

कृष्णया द्रौपद्या । भगिन्या सुभद्रया ॥ ४१ ॥

श्वश्र्वाकृष्णा ॥ ४२-४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रेणीमुख्याः एकशिल्पोपजीविप्रधानाश्च ॥३७॥

सम्भ्रमेण स्नेहवैवश्येन सहितैः अभ्युपेतः अभिनन्दितः ॥ ३८ ॥

सस्नुषा पुत्रपत्नीसहिता ॥ ३९ ॥

प्रमोदेनोपहतोभिभूतः पूजायां क्रियमाणायां कृत्यं समुचितप्रकारम् ॥ ४० ॥

पितृष्वसुः पृथायाः गुरूणां पूज्यानां याः स्त्रियः तासाञ्च कृष्णया याज्ञसेन्या भगिन्या सुभद्रया ॥ ४१ ॥

श्वश्र्वा पृथया आनर्च अर्चितवती ॥ ४२ ॥

---

भाषा टीका ।

जहां २ श्रीकृष्ण पधारतेहैं तहां २ सत पुरुष लोग हाथमें मङ्गल वस्तुका लेकर पूजा करते भए ऐसा पुरवासजनोंने पूजित होकर राजा युधिष्ठिरके घरमें प्रवेश करते भए ॥ ३७—३८ ॥

कुन्तीराणी अपने भ्राताके पुत्र तीन लोकके नाथ श्रीकृष्णको देखकर बहुत प्रीतसे शय्यासे उठकर द्रौपदी सहित श्रीकृष्णसे मिलती भई ॥ ३९ ॥

राजा युधिष्ठिरको श्रीगोविन्दको अपने गृहमें लायकर उनको पूजा करनेका विधिको आनन्दसे भूलकर कैसा किस प्रकार करूं कर चिकितहोगया ॥ ४० ॥

हेराजन् ! श्रीकृष्णजी अपने भुआजीका तथा पूज्य स्त्रीयोंको का प्रणाम किया और द्रौपदी तथा अपनी बहनी श्रीकृष्णको प्रणाम करत भई ॥ ४१ ॥

कुन्तीने द्रौपदीको आज्ञा दई द्रौपदीने रुक्मिणी सत्यभामा भद्रा जाम्बवतीको सत्कार किया तथा औरभी श्रीकृष्णकी भार्य्याओंका सत्कार किया ॥ ४२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्याश्च याः कृष्णपत्न्योऽभ्यागतास्ता अपि ॥ ४३ ॥

प्रत्यहं नवनवं यथा भवति तथा सुखं निवासयामास ॥ ४४ ॥

कथम्भूतम् ? यः प्रेम्णा नित्यं फाल्गुनेन संयुतः अत एव तस्य सहायेन सता येन खाण्डवेन वह्निं तर्पयित्वा मयं च मयं प्रयुज्य युधिष्ठिराय दिव्या सभा कृता तं जनार्दनम् अनेन राज्ञः कृष्णोपकारानुस्मरणं दिव्यत्वात्सभाया यथा

उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया ।
विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे कृष्णस्येन्द्रप्रस्थगमनं नाम
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनोरथं सर्वावकाशसंपादनश्च दर्शितम् ॥ ४५-४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकसप्ततितमोध्यायः ॥ ७१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुखमिति च युग्मकम् । तथा निवेशने हेतुः धर्मराजः किञ्च जनैर्भक्तैः सदा द्रष्टुं याच्यत इति जनार्दनम् अतो भक्तप्रवरेण तेन तस्य तथाकर्म युज्यतैवेतिभावः ॥ ४४ ॥

तथाप्येतन्मात्रोपकारस्य निष्क्रयं राजा न मेने इत्याह—तर्पयित्वेति । हृता अर्पिता कृतेतिपाठे सम्पादिता ॥ ४५ ॥

स तु प्रियान्तरचिकीर्षयोवास फाल्गुनेन सह भटैः श्रीसात्यक्यादिभिः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुखमिति । प्रत्यहं नवनवं यथा भवति तथा सुखं निवासयामास ॥ ४४ ॥

कथम्भूतम् ? यः प्रेम्णा नित्यं फल्गुनेन अर्जुनेन सङ्गतः अत एव तस्य साहाय्येन खाण्डवेनाग्निं प्रीणयित्वा तत्र मयञ्च मोचयित्वा तं मयं प्रयुज्य राज्ञे युधिष्ठिराय दिव्या सभा आहृता आनीता येन तथाभूतं जनार्दनमितिसम्बन्धः ॥ ४५ ॥

उवासेति । मासानित्यत्यन्तसंयोगे द्वितीया राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छया फल्गुनेन सह रथमारुह्य भटैः परिवृतो विहरन् कतिचिन्मासानुवास उषितवान् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकसप्ततितमोऽध्यायः ॥ ७० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येन मयेन दिव्या सभा राज्ञे आहृता भगवदाज्ञया निर्माय दत्ता ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकसप्ततितमोऽध्यायः ॥ ७१ ॥
( श्रीविजयध्वजतीर्थटीका नवसप्ततितमोऽध्यायः ॥ ७६ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शैब्यामिति मित्रवृन्दाविशेषणं द्वितीयेन तथाशब्देनानुक्तसमुच्चयार्थकेन लक्ष्मणा च गृहीता ॥ ४३-४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

षोडशसहस्राण्यवशिष्टानि एकभावापन्नत्वात् समुदायेनाह—अन्याश्चेति । किं बहुना प्रद्युम्नादिपत्न्योपि याः काश्चन समागताः ताः सर्वा एव वासस्रक्चन्दनादिभिः आनर्चेति सम्बन्धः ॥ ४३ ॥

तात्कालिकं पूजाविशेषमुक्त्वा राज्ञः चिरकृत्यमाह—सुखं निवासयामासेति । वस्तुतस्तु सुखरूपं भगवन्तं आपयित्वा

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वयं सुखी जात इत्यर्थः । जनार्दनमविद्यानाशकं यथैव भगवतो मनःप्रीतिर्भवति तथा स्थापितवान् न केवलं भगवतः किन्तु सर्वेषामित्याह—ससैन्यमिति । भगवतश्चत्वार्यङ्गानि सैन्यं सेवकाः अमात्या भार्याश्चेति तत्सहितं प्रत्यहं नवनवं यथा भवति ॥ ४४ ॥

एवं सर्वभावेन सेवायां क्रियमाणायां लौकिकधर्माभिनिविष्टे राजनि भगवता यत् कृतं तदाह-तर्पयित्वेतिद्वाभ्याम् देवेषु अग्निः प्रधानभूत इति खाण्डवेन तमादौ तर्पयामास दैत्याधिपतिं मयञ्च मोचयामास एवं देवासुररूपाणीन्द्रियाणि स्वाधिदैविकतर्पणेन च तृप्तानि सन्ति युधिष्ठिरं सर्वथा लौकिकवैदिकभावम् तर्पयिष्यान्ति दैत्यभागस्य शीघ्रफलत्वज्ञापनाय मयकृतमुपकारमाह-येन मयेन राज्ञे दिव्या सभा कृतेतिक्त्वाप्रत्ययान्तयोः उवासेत्यनेन सम्बन्धः ॥ ४५ ॥

न केवलं कृत्वैव तं सुखीचकार किन्तु स्थित्वापीत्याह-उवासेति । कतिचिन्मासानितिकार्यतरमकृत्वा राज्ञः प्रियार्थं निरन्तरं राजसन्निधान एवोवास मासचतुष्टयमितिविमर्शः भगवतः शयनकाल एव तादृश इति निर्बन्धेन स्थितिं वारयति विहरन् रथमारुह्येति तत्रत्यान् स्वकीयांश्च प्रीणयन्निति वक्तुं फाल्गुनेन भटैर्वृत इत्युक्तं फाल्गुनस्तत्रत्योपलक्षकः भटाः स्वकीयाः उभयैर्वृतः वेष्टनेन निरन्तरं सर्वेषां सुखदानां निरूपितम् ॥ ४६ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे द्वाविंशाध्यायविवरणम् ॥ २२ ॥ ७१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रत्यहं नवं नवं यथास्यात्तथा निवासयामास ॥ ४४ ॥

येन दिव्या सभा कृता तं मयं मोचयित्वा उवास तर्पयित्वेत्यादि श्लोकद्वयेनाष्टपञ्चाशत्तमाध्यायप्रोक्तैव कथा पुनरत्रावेशादिवानुकथिता तत्रत्यायं क्रमः ॥ ४५ ॥

इन्द्रप्रस्थे खाण्डवदाहगाण्डीवादिप्राप्तिमृगया कालिन्दीप्राप्तिवार्षिकचातुर्मास्यवासाः ततो द्वारकागमनकालिन्दीमित्रविन्दादिविवाहनरकवधादिबहुकथान्त एव राजसूयमिम मन्त्रणादिकमिति ज्ञेयम ॥ ४६ ॥

इति सारार्थदर्शिन्याम हर्षिण्याम भक्तचेतसाम ।
अत्रैकसप्ततितमो दशमो ऽजनि सङ्गतः॥७१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धर्मराजः जनार्दनं प्रत्यहं नवनवं यथा भवति तथा निवासयामास ॥ ४३—४४ ॥

जनार्दनोपि राज्ञो धर्मराजस्य प्रियचिकीर्षया वह्निं तर्पयित्वा येन सभा कृता तं मयं मोचयित्वा कतिचिन्मासानुवासेति द्वयोरन्वयः ॥ ४५—४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकसप्ततितमाऽध्यायार्थप्रकाशः ॥७१॥

---

भाषा टीका ।

तथा कालिन्दी मित्रविन्दा शैब्या और पतिव्रता नाग्नजती तथा पुत्रवधूओं से आदि लेके जो अन्यभी आईहिं इन सबका वस्त्र माला कुंकुमा आदि से सन्मान किया ॥४३॥

राजा युधिष्ठिर सेना सहित भृत्यसहित भार्य्या सहित श्रीकृष्णकी प्रीति के अनुरूप दिन २ प्रति नवीन २ सत्कार पूर्वक श्रीकृष्णको निवास कराता भया ॥ ४४ ॥

श्रीकृष्ण भगवान्‌भी अर्जुन सहित इन्द्र के खाण्डव वन करके अग्निको तृप्त कराय कर जिसने राजा के लिये दिव्य सभा बनाई उस खाण्डव वन के अग्नि से जलते भये उस मयनामा दैत्यको अग्नितें छुडाय कर राजा युधिष्ठिर को प्रिय करनेकी इच्छा से अर्जुन के साथ रथ में बैठ कर शूरवीर पुरुषों से संयुक्त होकर विहार करते कुछु मास पर्य्यन्त इन्द्रप्रस्थ मेंहि निवास करते भए ॥ ४५—४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धमें इकत्तरके अध्यायकी भाषाटीका समाप्ता ॥ ७१ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ।

---

**श्रीशुक उवाच ।**

एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥
आचार्यैः कुलवृद्धैश्च ज्ञातिसम्बन्धिबान्धवैः ।
शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥

**युधिष्ठिर उवाच ।**

क्रतुराजेन गोविन्द राजसूयेन पावनीः ।
यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो ॥ ३ ॥
त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥४॥
तद्देवदेव भवतश्चरणारविन्दसेवाऽनुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥५॥
न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः सेवाऽनुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ।
दुर्जयं मागधं बुद्ध्वा भीमेनाऽघातयद्धरिः ॥

आस्थितः आसनमिति शेषः ॥ १ ॥

शृण्वतामेवेति । यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेव, ताननादृत्य कृष्णमुवाचेत्यर्थः । आभाष्य भो भो कृष्ण भक्तवत्सलेत्येवं सम्बोध्य ॥ २ ॥

विभूतीरंशान् ॥ ३ ॥

एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह—त्वत्पादुके इति । परिचरन्तीति यच्छब्दव्यवधान-मार्षम् ये परिचरन्ति देहेन ध्यायन्ति मनसा अभद्रस्य नशने नाशके गृणन्ति वाचा ते भवस्यापवर्गं मोक्षं विन्दन्ति यद्याशासते तर्ह्याशिषोपि त एव विन्दन्ति नान्ये चक्रवर्तिनोऽपि ॥ ४ ॥

भगवतो भक्तपक्षपातमाविष्कारयन्नाह-तद्देवदेवेति । तत्साक्षात्पश्यतु साक्षात् एवं निश्चितेऽपि ये कर्मादिप्रधानाः कश्चित्कुरुसृञ्जया भगवद्भक्तिं न बहुमन्यन्ते तेषां मोहनिवृत्तये ये त्वां भजन्ति यद्वा न भजन्ति तेषामुभयेषां निष्ठां स्थितिं प्रदर्शय ॥ ५ ॥

ननु रागादिरहिते मयि कथमिदं वैषम्यं स्यात्तत्राऽऽह—नेति । स्वः पर इति भेदमतिस्तव न स्यादेव कुतः ब्रह्मणो निरुपाधेः किञ्च सर्वस्याऽऽत्मनोऽतः समदृशः किञ्च स्वसुखानुभूतेः अतो रागाद्यभावादिति भावः तथाऽपि संसेवमानानामेव त्वत्प्रसादः नान्येषाम् तत्रापि सेवाऽनुरूपमुदयः फलं नत्वत्र विपर्ययोऽन्यथा भावः । यथा कल्पद्रुमस्य रागादिराहित्येपि सेवकेष्वेव फलजनकत्वं नान्येषु ॥ ६ ॥

---

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।**

एकदेति युग्मकम् । दिनकतिपयविभ्रमानन्तरं योग्यं समयं लब्ध्वेत्यर्थः । तुर्भिक्षोपक्रमे समयमेव दर्शयति—सभामध्य इत्यादि विना एतदपेक्षयैव भगवान्मध्ये तावन्तं कालं न प्रापितवान् चकाराद्भ्रातृपुत्रादिभिश्च द्वितीयचकारादन्यैश्च वृतैः ॥ १ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वाऽथवा मित्राणि तैश्च वृतः तत्रैषां युगपत्समागमो राजसूयभावात् विशेषतः सपरिवारस्यैवागतस्य श्रीभगवतो दर्शनेन नित्याकर्षणात्केषाञ्चित्सम्मन्त्राद्यर्थं राज्ञैवाह्वानाच्च चका राजसूयादीनांश्च शृण्वताम् अन्यस्तैः यद्वा आस्थितः वक्ष्यमाण-स्तुतियोग्यत्वेन विशिष्यथमासनादवतीर्य अ। सम्यक् बद्धा-ञ्जलित्वादिना भूमौ स्थितः सन् शृण्वतां शृण्वन्तु सत्स्वेव तेष्विति तेषामप्यवश्यश्रावयितव्यानां तदनुमोदनेनैवानुमोदनार्थं च इदं ॥ २ ॥

क्रतुराजेनेति दुष्करत्वमपेक्ष्यत्र च सूचितं भवतो विभूती-रिति देवादीनामपि तद्विभूतिबुद्ध्यैव यजनादात्मनोऽनन्य-परत्वं द्योतितं दैन्येन श्रीनारदवत्पारमेष्ठ्यकामत्वं निर्दिश्य तद्यजने हेत्वन्तरमाह—पावनीः त्वद्भक्तिविघ्नादिदोषनिरसनीः एवम्भूतत्वादेव हे गोविन्देति निजाशेषैश्वर्यप्रकटनार्थं भुव्यवतीर्णस्य तव भक्तानामस्माकं तादृशेच्छा युक्तेति भावः। यक्ष्ये इत्येकत्वं यजने तस्यैकस्यैव प्राधान्यात् न इति बहुत्व-न्तु भ्रात्रादिमुन्यादिसङ्ग्रहेण तेषामपि सर्वेषां तदपेक्ष-कत्वात् तच्च तव शक्त्यैव सुखरूपायामित्याशयेन सम्बोधयति प्रभो हे सर्वशक्तियुक्तेति अत एव सिद्धवन्निर्देशमेवाकरवं यक्ष्य इतीतिभावः। यद्वा नोऽस्माकं पाण्डवानां त्वदेकगतीनां प्रभो स्वामिन् अतो युक्तमेवैतदिति भावः ॥ ३ ॥

तव पादुके उपानहौ अपि किं पुनः साक्षात्त्वत्पादाब्जद्वयम् अविरतं ये परिचरन्ति एवमग्रेपि कैमुत्यमेवाभिप्रेयते ततोप्यना-यासेन ये वा कदाचिदपि ध्यायन्ति ततोप्यनायासेन येवा कदाचिदपि गृणन्ति श्रीकृष्णपादुके एव मम गतिरित्यादि कीर्त्तयन्ति मात्रं यतस्ते खल एवामङ्गलनाशने अतः शुचयो बहिरन्तर्भक्तिविघातका मलरहिताः ते भक्तिमात्रपुरुषार्था अपि यदि कथञ्चिद्भक्त्युपयुक्तत्वेन आशासते तदापवर्गं संसार-ध्वंसम् आशिषः- सर्वान् प्राकृतानप्राकृतांश्च कामान् विन्दन्ति—

"सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति" ॥ इति

स्वयं श्रीभगवद्वाक्यात् नत्वन्ये "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्यादेः उभयत्रापि हेतुः हे कमलनाभ ! हे व्यांशेन सर्वलोकाश्रयेति हे ईश ! सर्वेश्वरेति च यद्वा आशिषो विन्दन्तीत्यत्रैवाविरतमिति योज्यम् ॥ ४ ॥

ननु, कुतस्तर्हि भक्तिमाहात्म्येन त्वया परिचर्यादिकं हित्वा राजसूयमिष्यते ? तत्राह—तदिति। यस्मादेवमेव सत्यं तस्मात् हे देवदेव ! सर्वाराध्यगणानामप्याराध्य एवं यद्यपि त्वत्परिचर्ययैव सर्वदेवतृप्तिः सिद्ध्यतीति वयं जानीमस्तथा-पीत्यर्थः। तत्किमित्यतः आह—इह सर्वलोककृपामये भवदव-तारे प्रायो बहिः सम्पत्तिमात्रदर्शनचमत्कारी लोको भवतश्चरणारविन्दसेवानुभावं पश्यतु तदेव दर्शयति —ये इति। येऽमललक्षणाः कुरुसृञ्जयास्त्वां भजन्ति च उत वा येच दुर्योधनादयस्त्वां न भजन्ति तथामुभयेषां निष्ठां प्रदर्शय बहिर्मुखे-ष्वपि त्वद्भक्तिमहिमप्रदर्शनार्थमेवायमस्माकमुद्यम इति भावः। हे विभो ! सर्वमपि कर्तुं समर्थेति किमुतैतावदितिभावः सेयमानुषङ्गिकी कामना श्रीनारदवर्णितपारमेष्ठ्यकामस्त्वभि-प्रायस्तु तत्सेवोपयोग्यैनेति सङ्क्षेपादारोपितः ॥ ५ ॥

सुरतरोरिवेति तैर्व्याख्यातम्। यद्वा तस्य यथायोग्योऽयं भजतु अयोग्योयं मा भजत्विति वैषम्यं नास्ति किन्तु सम्यक् सादरं सेवमानमात्राणां सम्बन्धे प्रसाद एव स्यात् तथा तवेत्यर्थः। तथाप्यत्र तव भजने तद्वत् सेवानुरूपमेवोदयः फलं न स्यात् किन्त्वधिकोपि स्यात् दैवात्सेवावैगुण्येपि विपर्ययः फलाभावोपि न स्यात् तत्र पूर्वं—

"तुलसीदलमात्रेण जलस्य चुलुकेन च ।
विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ॥

इतिश्रीविष्णुधर्मवचनवत् अत्र भक्तेभ्य इत्युक्तत्वाज्ज्ञानवाक्य-भक्तितारतम्येनैव फलतारतम्यमितिभावः। अथोत्तरं "त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्" इत्यादिवत् अत्र विश्वास एव कारणमितिभावः ॥ ६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥१—२ ॥

विभूतीः देवान् ॥ ३ ॥

आशिषो नाशासते यदि अपवर्गं विन्दन्ति अन्ये अपवर्गात् बहिर्भूताः ॥ ४—५ ॥

स्वपरभेदमतिस्तव न स्यात्सर्वसुहृत्त्वादित्यर्थः ॥ ६—२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ जरासन्धघातनात्मकं भगवच्चेष्टितं वक्तुं प्रस्तौति—एक-देति। तृतीयान्तानां वृत इत्यनेनान्वयः ॥ १ ॥

एतेषां मुनिप्रभृतीनां शृण्वतां सतामेवाभाष्य सम्बोध्य कृष्णमिति शेषः। इदं वक्ष्यमाणमुवाच ॥ २ ॥

तदेवाह--क्रतुराजेनेत्यादि चतुर्भिः। पावनीस्तव विभूतीः विभूतिभूतान् देवान् यक्ष्ये आराधयिष्यामि तन्मदभिप्रेतं यजनं नोऽस्माकं सम्पादय निवर्त्तय ॥ ३ ॥

नन्वयं चक्रवर्तिनां मनोरथः कथं त्वया क्रियते इत्यत आह—त्वत्पादुके इति। अमङ्गं शमयतीति तथा ते तव पादुके ये जनाः परिचरन्ति देहेन ध्यायन्ति मनसा गृणन्ति वाचा ते शुचयः परिशुद्धान्तःकरणाः भवस्यापवर्गं नाशकं मोक्ष इति यावत् विन्दन्ति हे ईश ! हे कमलनाभ ! ते यद्याशिषः कामाः नाशंसते तर्हि ता अपि विन्दन्ति अन्ये परिचर्यादि-रहिताश्चक्रवर्तिनो न विन्दन्तीत्यर्थः। अतो भक्तपक्षपातिन-स्तव चरणारविन्दं समाश्रितानां नस्सर्वमनोरथपूर्तिस्सुक-रैवेतिभावः ॥ ४ ॥

एतदेव निदर्शयेत्याह—तदिति। तत्तस्मात् देवानामपि देव ! एष लोकस्तव चरणारविन्दसेवाप्रभावं पश्यतु भवत-श्चरणारविन्दसेवाप्रभावं दृष्ट्वा त्वत्पादुके इत्यादिनोक्तमर्थं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निष्ठिमोत्थित्यर्थः । तन्निष्ठां तु भक्तानाञ्च स्थितिं लोकस्य दर्शयेत्याह—ये इति । कुरूणां सृञ्जयानाञ्च मध्ये ये ऽस्मदादयस्त्वां भजन्ति उत वा ये वा दुर्योधनादयस्त्वां न भजन्ति तेषामुभयेषां निष्ठां स्थितिं प्रदर्शयाभ्युदयतदभावौ दर्शयेत्यर्थः ॥ ५ ॥

ननु, वैषम्यनैर्घृण्यादिरहितं मां किमिति विषयकृत्ये चोदयसीत्यत आह—नेति । ब्रह्मणः हेयप्रत्यनीककल्याणगुणपरिपूर्णस्य तव स्वः पर इति च भेदमतिर्न स्यात् यद्यपि नास्त्येव तत्र हेतुत्वेन विशिनष्टि—सर्वात्मनः सर्वेषामन्तरात्मनः स्वशरीरेष्वेव केषुचिद्विषयेषु स्वीयमतिः केषुचित्परकीयमतिर्न इष्टेति भावः । अत एव समदृशः समा दृक् स्वशरीरेषु सर्वेषु आत्मीयत्वबुद्धिर्यस्य तस्य किञ्च वैषम्यनिमित्तं रागद्वेषादिकं तदपि तव नास्तीत्यभिप्रयन् विशिनष्टि—स्वसुखानुभूतेः इति । स्वसुखस्य स्वासाधारणापरिच्छिन्नानन्दस्यानुभूतिरनुभवो यस्य तस्य केवलं स्वानन्दजुषो न तु रागादिजुष इत्यर्थः । तथापि संसेवमानानामेव विषयभूतानां तव प्रसादो ऽनुग्रहः तत्रापि सेवानुरूपमेव उदयः फलं यथा सुरतरोः कल्पद्रुमस्य संसेवमानेष्वेव फलप्रदत्वं नह्येतावतात्र कल्पतरौ विपर्ययो वैषम्यमस्ति तत्तद्वत् ॥ ६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राजसूययज्ञार्थाय पाण्डवानां दिशां जयो जरासन्धवधश्च श्रीनारायणप्रसादायत्त इति तन्माहात्म्यत्वेन प्रतिपादयत्यस्मिन्नध्याये तत्रादौ युधिष्ठिरः आगतं श्रीकृष्णं स्वाचिकीर्षितं विज्ञापयति—एकदेति ॥ १ ॥

आभाष्य अभिमुखीकृत्य एतेषां सर्वेषां श्रोत्रादीन्द्रियतृप्तिजनकम् इदं वक्ष्यमाणं वचनमुवाच हेत्यनेन कर्तव्यतां सूचयति ॥ २ ॥

पावनीः शुद्धिकरीः भवतः विभूतीः सन्निधानविशेषस्थानेन्द्रादिदेवताः यष्टुकामः ॥ ३ ॥

तत्कार्यं भवदनुग्रहेणैतद् साधनमित्याह—त्वत्पादुकेति । अभद्रनशनं अशुभविध्वंसनसमर्थं परिचरन्ति नित्यं पूजयन्ति "व्यवहिताश्च १-४-८२ इति छन्दसि व्यवधानेऽप्युपसर्गाणां क्रियायोगः सिद्धः प्रधान्वयमहतो महनीत्यादौ अनेन भागवतस्य वेदतुल्यत्वेनाध्येयत्वादौ तात्पर्यं दर्शयति—भवापवर्गं संसारत्यागं विन्दन्ति ननु तर्हि नानेनाभीष्टसिद्धिरिति तत्राह आशासत इति यदि ते सेवकाः आशासते आशिष ऐहिकसिद्धीः कामयन्ते तर्हि ता अपि विन्दन्ति अन्ये अनुपासका नोभयं विन्दन्तीति भयं विन्दन्तीति शेषः ॥ ४ ॥

यतो भवच्चरणसेवाफलमनुभवसिद्धं गतो लोकोपि प्रत्यक्षप्रमाणोऽस्य माहात्म्यं दृग्विषयं करोत्वित्याह—तन्निति । अपि कृष्णत्वमपि भजदभजतामुभयेषामपि जयलक्षणोत्कर्षं व्यवस्थापयेत्याह—येत्वामिति । "निष्ठोत्कर्षे व्यवस्थायां नाशेऽन्ते प्रत्याक्रयोः" इति यादवः । "अनुभावः प्रभावे स्यात्" इति ॥ ५ ॥

सर्वसमस्य हरेर्वैषम्यं मयापाद्यत इति बिभ्यदिव परिहरति—नेति । ब्रह्मणः पूर्णस्य सर्वात्मनः सर्वस्वामिनः ननु परापूर्वेषां सङ्ख्यावृणक्तीत्यादि कथमित्यत्राह—समदृश इति । यथावस्तुदर्शिनः स्वरूपसुखस्यानुभूतिरनुभवः पूर्णानन्दोदयः इति यस्य स तथा तस्य अयमपि स्वपरबुद्ध्यभावे हेतुः असुराणां दुःखोदयः सुराणां सुखोदय इत्ययं विशेषः कस्मादत्राह—संसेवेति । उदयतीत्युदयः अतोऽत्र जगति विपर्ययो न विषमो नोदेति ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

॥ १—५ ॥

एष प्रायो बहिस्सम्पत्तिदर्शनमात्रचमत्कारी बहिरङ्गादिलोकसुरतरोर्यथायोग्योऽयं मा भजत्विति वैषम्यं नास्ति । किन्तु संसेव्यमानानामेव सम्बन्धे प्रसाद एव स्यात् तथा तवेत्यर्थः तथाप्यत्र तव भजनसेवानुरूपमेवोदयः फलं न स्यात् किन्तु अधिको ऽपि स्यात् दैवात् सेवावैगुण्ये विपर्ययः फलाभावो ऽपि न स्यादित्यर्थः । "तुलसीदलमात्रेण इत्यादेः "स्वकस्वास्वधमम" इत्यादेश्च ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—३ ॥

त्वत्पादुके इत्यादि । अस्तु तावत्तव पादयोः परिचरणं तव पादुकयोरेव किं न करोतीति भावः । अस्तु दूरं त्वत्पादयोः परिचरणं ध्यानमेव किं न करोतीत्याह—ध्यायन्तीति । अस्तु ध्यानं कीर्तनमपि तयोः किं न करोतीत्याह—गृणन्तीति । भवापवर्गं संसारमोक्षं ननु भवतामपि भवापवर्ग एव भावी किमन्येनेत्याह—आशासत इत्यादि । भवापवर्गस्त्वावश्यक एव किन्तु यदि अन्यदप्याशिष आशासते तदा त एव विन्दन्ति, नान्ये अतोऽस्माकमिदानीमिदमेवेप्सितं सम्पाद्यतामिति भावः ॥ ४ ॥

ननु किमनया परमभक्तानां वः कर्मवासनया सत्यं तव भक्तानामभक्तानाञ्च मर्यादां सर्वे पश्यन्तु लोके च त्वन्महिमा चायमेव प्रकटो भवत्विति इतीरेव ननु फलान्तरकाम्ययेत्याह—तद्देवदेवेत्यादि । देवानां ब्रह्मरुद्रादीनामपि देव ! न भजन्त्युतेति दुर्योधनादीन् प्रत्याक्षेपः ॥ ५ ॥

ननु मे स्वपरभेदो नास्ति भजदभजतोरेवाहं समः किमनेन मद्वैषम्यप्रकटनेनेत्याह—न ब्रह्मण इत्यादि । तव ब्रह्मणो मूर्त्तानन्दस्य बृहतः न परभेदमतिर्न स्यादेव सत्यं यतः सर्वात्मनः अतः समदृशः यतः स्वसुखानुभूतेः स्वानन्दाभिलाषविधायकस्य किन्तु सुरतरोरिव प्रसादः 'सुरतरुर्यथा भजत एव कामान् पूरयति नाभजतः भजनमात्रंप्रति कामदत्वात्तस्य न वैषम्यं यदि यदि भजतां मध्ये कुत्रापि प्रसीदति कुत्रापि न तत्रैव वैषम्यापत्तेः तद्वत्तवापि भजनमात्रं प्रतिकामदत्वान्न वैषम्यं भजतः किल द्विजान् वा श्वपचान् वा सर्वथा

श्रीमज्जीवगोस्वामीकृतबृहत्क्रमसन्दर्भः ।

अनुपद्रुतः कुतो वैषम्यम् अतः सेवानुरूप एव सेवकानामुदयो नात्र विपर्ययव्यभिचारः ॥ ६—४८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

निरोधः सात्विकानां हि सगुणानां निरूपितः ।
धर्मप्रसङ्गे शुद्धानां तेषां दुःखं निवार्यते ॥
दुर्योधिशो जरासन्धवधः क्लेशहरो महान् ।
निरूप्यते यतः सर्वसात्विकाः सुखिनोऽभवन् ॥
त्रिविधाः सात्विकाः प्रोक्ता राजानो यादवास्तथा ।
पाण्डवाश्च ततस्तेषु द्वयोरिष्टवधः स्फुटः ॥
पाण्डवानामिष्टतायै प्रसङ्गोऽप्यत्र रूप्यते ।
भक्तानां कर्मिणाञ्चेत्स्यादिष्टं मागधनाशनम् ॥
तदैव नाशनं युक्तं ब्रह्मण्यस्य दयावतः ।
ब्राह्मणस्याप्याभरणं यज्ञार्थं हि निरूप्यते ।
ब्रह्मण्ये तत्र कोऽमर्षः क्षत्रिये विमुखे हरेः ॥

पूर्वाध्यायान्ते स्वगृहे भगवन्तं सुखेन स्थापितवानित्युक्तं ततो यदर्थं स्थापनं तद्विज्ञापनार्थं प्रसङ्गमाह—एकदात्विति द्वाभ्याम् साधारणासाधारणसम्बन्धिसहभावभेदात् एकान्ते विज्ञापनमभिमाननिवर्त्तकं न भवतीति सम्भावनायां सर्वसन्निधाने निरूप्यते एकदा शुभलग्ने तुशब्दः कालान्तरसान्निधानं वारयति आस्थितः उत्थितः धर्मार्थमेव विज्ञापनमिति ज्ञापनमिति ज्ञापयितुमादौ मुनीनां सहभावः अन्ये साधारणा ब्राह्मणास्त्रयो वर्णाः क्रमेण निरूप्यन्ते शूद्रस्तु यज्ञे अनधिकृतः भ्रातरो भीमादयः चकारात् दुर्योधनादयश्च ॥ १ ॥

आचार्याः द्रोणादयः कुलवृद्धाः भीष्मादयः ज्ञातयोऽन्ये गोत्रजाः सम्बन्धिनो विवाह्याः बान्धवा दूरस्थाः सर्वे एव तद्द्वारा ज्ञीणामभ्यनुज्ञा सिद्धेति न कस्यापि परोक्षता सर्वे सावधानाः शृण्वन्त एव स्थिताः एवकारेण व्यासङ्गो वार्यते चकारेणानुद्दिष्टानामपि आभाष्य हे कृष्ण! स्वामिन्! इत्युक्त्वा एवमभिमानपरित्यागः आश्चर्ययेति इत्युक्तम् ॥ २ ॥

विज्ञापनामाह—क्रतुराजेनेति । गोविन्देति सम्बोधनमिन्द्र एव यष्टव्य इति मर्यादास्थापनार्थं यथा राजा पुरुषाणां तथा राजसूयो यज्ञानामिति क्रतुराजत्वं यद्यपि नारदेन त्वां यक्ष्यतीत्युक्तं तथापि सर्वरूपस्य परिच्छेदः समायातीति भगवदंशानामेव विभूतिरूपाणां देवानां यागं निरूपयति—पावनीस्तव विभूतीः यक्ष्य इति । पावनीरित्याधिदैविकीः दैत्यसम्बन्धव्यावृत्यर्थं वा तत्तस्मात् तद्वा यजनं नोऽस्माकं सम्पादय सामर्थ्याय सम्बोधनम् ॥ ३ ॥

ननु, भगवद्भक्ता न किञ्चन वाञ्छन्ति पुंसां किलैकान्तभियामिति शास्त्रानुसारेणापि भगवदीयानां कार्यसिद्धिः तत्कथं प्रार्थनमित्याशङ्क्याह—त्वत्पादुक इति । यद्यपि कायवाङ्मनोभिस्त्वां प्रपन्नाः नैतादृशं वाञ्छन्ति तथापि यदि वाञ्छन्ति तदा प्राप्नुवन्ति इति सिद्धान्तस्तेषां सहजं फलं निरूपयन्ति त्वत्पादुके इति ये त्वत्पादुके भक्तिमार्गानुसारेण परिचरन्तीति कायिको व्यापारो निरूपितः ध्यायन्तीति मानसः ननु चित्तमस्थिरं योगव्यतिरेकेण कथं ध्यानसिद्धिः इत्याशङ्कां वारयितुं विशेषणमाह—अभद्रनशने इति । पादपदाशादेव चाञ्चल्ये ध्यानार्थमुद्यतस्य प्रथमस्मरणेन पापनाश उत्तरोत्तरस्मरणसिद्धिः ततः शुचयो गृणन्ति तेन कायिकोऽन्यव्यापारनिवृत्तिः सर्वपापक्षयः शुद्धिश्च तेषां प्रसङ्गात् उक्ताः अतस्ते भवस्य संसारस्यापवर्गं समाप्तिं विन्दन्ति ननु कर्मज्ञानाभावे कथं भगवद्भजनमात्रेण प्रमाणाभ्यनुज्ञाभावात् भवापवर्ग इत्याशङ्क्य सम्बोधनमाह—कमलनाभेति । भुवनकोशात्मकं कमलं नाभौ यस्य एतत्प्रवर्त्तित एव सर्वोऽपि संसार इति एतत्परिचर्यायां न प्रमाणाभ्यनुज्ञेति भावः । ते यदि बहिर्मुखाः सन्तः बालपुत्रपदाशिषः आशासते लौकिकी वैदिकी वा तदा त एव विन्दन्ति अन्ये तु कर्मादिभिः कृतमेव प्राप्नुवन्ति नाकृतमितिभावः । एकान्तधियामित्यत्रान्तर्निष्ठा एवं गृहीता इति न विरोधः प्रथमप्रवृत्तस्यैव धनादिहरणम् अन्यथा सर्वसेव्यता न स्यात् ॥ ४ ॥

ततो लोके ये स्वोत्कर्षं वाञ्छन्ति भक्ताः सन्तः भक्तिमार्गोत्कर्षार्थं वा तेषामानुगुण्यं भवता कर्त्तव्यमित्याह—तद्देवदेवेति । तथापि कस्यचिद्वधं सर्वात्मा न करिष्यतीत्याशङ्क्य सम्बोधनं हे देवदेवेति! अनेन दैत्यवधोऽभिप्रेतमिति सूचितं तत्तस्मात् कारणात् अस्योत्कर्षस्य बहिर्मुखविषयत्वादयुक्तकथनत्वमाशङ्क्य लोकप्रतीत्यर्थमाह—भवतश्चरणारविन्दसेवानुभावमिह लोकः पश्यत्विति । ननु राज्यवद्राजसूयसिद्धावपि कथमेतद्भक्तस्यैव नान्यस्येति ज्ञायते तत्राह—ये त्वां भजन्तीति । ये पाण्डवादयः त्वां भजन्ति ये वा शिशुपालदुर्योधनजरासन्धादयः त्वां न भजन्ति तेषामुभयेषां निष्ठां फलपर्यवसानं त्वमेव दर्शय मारणमानभङ्गवञ्चितत्वादयः विमुखेषु कीर्तिधनधर्मादयः सेवकेष्विति तान् सर्वान् संक्षेपतो निर्दिशति—कुरुसृञ्जयानामिति । सृञ्जयवंशाः द्रुपदस्य भगवत्पक्षपातेन पुष्टा इति या ख्यातिं परित्यज्य पाण्डवा सृञ्जयाः ख्यातिमेव मन्यन्ते तेन कौरवाः धार्त्तराष्ट्राः विमुखाः सृञ्जयाः पाण्डवा भक्ताः इति अनेन स्वस्य मात्सर्याभिनिवेशः सूचितः ॥ ५ ॥

नन्वेतदल्पदेवानां परिच्छिन्नमतीनामेव कार्यं न मे इत्याशङ्क्य सत्यं परं भक्तानुरोधेन कर्त्तव्यमिति प्रार्थयन्नाह—न ब्रह्मण इति। भगवान् स्वार्थं चेत् कुर्यात् तदैवं न कुर्यात् अन्यार्थत्वे त्वन्येच्छानुसारेणैव कर्त्तव्यम् अन्यथा भगवतः पुरुषार्थसाधकत्वं न स्यात् प्रथमपक्षमङ्गीकृत्याह—तव ब्रह्मणः सर्वसमस्य यद्यपि स्वपरभेदमतिर्नास्ति तथापि तव स्यादेव भक्तानुरोधादिति न भवेदिति विध्यर्थता वा स्वपरभेदमतिस्त्रिविधानां भवति ये देहात्मभावेन परिच्छिन्नाः ततो भोगसिध्यर्थं विषयेषु विषमदृष्टयः ततो विषयभोक्तारः भगवांस्तु नैवम्विध इति विशेषणत्रयं सर्वात्मनः समदृशः स्वसुखानुभूतेरिति अन्यार्थत्वे तु नन्वेतादृशस्यापि विषमकार्यकर्तृत्वं सदृष्टान्तमाह—संसेवतामिति । सुरतरुः स्वभावत एव तथा तया भगवानपि भगवद्धर्माभिव्यक्तिरेव सर्वत्रेति स धर्मोऽस्मदर्थे प्रकटीकर्त्तव्य इति भावः धर्मिणि तु दोषो न भविष्यति धर्मानुरोधे अतः सेवानुरूपमुदयोऽस्तु अतोऽत्र धर्मिसम्बन्धाभावान्न विपर्ययः ॥६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्विसप्ततितमे राज्ञः कार्य्ये दत्तस्वसम्मतिः ।
भीमेनाघातयत् कृष्णो मागधं प्रार्थ्य मन्त्रतः ॥

आ सम्यक्कथा स्थितः शृण्वतामित्यनादरे षष्ठी ॥ १-२ ॥

विभूतीरिति । देवादीनपि त्वद्विभूतिबुद्ध्यैव यक्ष्ये इत्यभिव्यञ्जनवत्स्वस्य तदनन्यपरत्वं द्योतितम् पावनीः त्वामालोक्यात्मनः पावयन्तीरिति त्वद्दर्शनया ता अपि कृतार्थीकर्त्तुमिति भावः । तद्यजनम ॥ ३ ॥

त्वच्चरणसरोजं पश्यतां त्वयाप्यपारकृपया आत्मसात्कृतानामस्माकं राजसूये खलु न कोऽप्याग्रहः किन्तु त्वामत्रत्याः दुष्टान्तःकरणाः केचित् परमेश्वरं न मन्यन्ते नरमेव मत्वा प्रत्युत दोषदर्शिनो निन्दन्त्येतदेवास्माकं हृच्छल्यमतो राजसूयमिषेण ब्रह्मरुद्रादीन् सर्वान् ब्रह्मर्ष्यादीनपि देवादीनपि चतुर्दशलोकस्थानाहूय काचित् सभा कर्त्तव्या तत्र सर्वाग्रिमपूजा तैर्यस्य व्यवस्थापयिष्यते स एव परमेश्वर इति साक्षाद्दर्शयित्वा हृच्छल्यं तन्निष्कासनीयमित्येवमदभीप्सितमित्याह—त्वदिति त्रिभिः । परि ये चरन्तीति यच्छब्दस्यव्यवधानमार्षम् अभद्रस्याविद्यापर्यन्तस्यापि नशनं नाशो याभ्यां ते । येषा ध्यायन्ति यथाशासते तर्हि त एव विन्दन्ति नत्वन्ये त्वच्चरणानर्चकाः सर्वेऽपि कर्मिप्रभृतयः । किन्तु त्वद्भक्ता नैवाशासते इत्यर्थः । अस्माकन्तु त्वच्चरणाश्रितानां त्वां साक्षादेव पश्यतामन्यकामनाभावे कैमुत्यमेवेति भावः ॥ ४ ॥

तत्तस्मात्तादृशसभायां वृत्तायां तैर्ब्रह्मादिभिस्तव परमेश्वरत्वे व्यवस्थापिते सति एष भूलोकस्थजनः पश्यतु ततश्च कुरुसृञ्जयादीनां मध्ये त्वामीश्वरं मत्वा ये भजन्ति ये वा प्राकृतमानुषम्मत्वा उत न भजन्ति तेषामुभयेषां निष्ठां सद्गतिमधोगतिञ्च तैरुच्यमानां त्वं दर्शय करणीयेऽस्मिन् राजसूये स्वसम्मतिप्रदानेनेति भावः ॥ ५ ॥

ननु, किं ममापि मत्सरताऽस्ति यदनुकूलानामुत्कर्षं प्रतिकूलानामपकर्षं दर्शयामीति तत्राह—नेति । स्वपर इति भेदमतिस्तव न स्यादेव कुतो ब्रह्मणो निरुपाधेः किञ्च सर्वस्यात्मनः त्वमेवान्तर्यामीभूत्वा अनादिकर्म्मप्रवाहपतितं सर्वमेव प्रति स्वकर्मणि प्रेरयसि समदृश इति त्वमेवेश्वरस्तत्तदनुरूपमेव शुभमशुभं वा फलं ददासि नतु क्वापि ते पक्षपात इति भावः किञ्च तैः सुखिभिः दुःखिभिर्वा तव न किमपि कृत्यमित्याह—स्वसुखानुभूतेः ननु तर्हि भक्तवत्सलत्वौदार्यादयो गुणाः किंविषयकास्तत्राह—संसेवतां त्वां सम्यक् सेवमानेषु तेषु प्रसादो वात्सल्यं यत एव कर्मबन्धकर्त्तनपूर्वकात्मपर्यन्तप्रदानलक्षणमौदार्य्यञ्च ते भवेत् ननु तर्ह्यायातं ममापि वैषम्यं तत्राह सुरतरोरिवेति । गुणदोषादिकमविचारयतस्तस्य स्वाश्रितमात्रे यथा प्रसादस्तथा तवापि यः कोऽपि सेवनां तत्रैव प्रसादस्तत्रापि सेवानुरूपमेव उदयः सेवातारतम्येनैव प्रसादफलस्याप्युदयतारतम्यमित्यर्थवैषम्यमेव नात्र विपर्य्ययोऽन्यथाभावस्तस्माद्वैषम्योऽपि तव स्वभक्तेषु वात्सल्यवशादेवपक्षपाते सिद्धे तेषामनुकूलप्रतिकूलेषु तथात्वानुकूल्यप्रातिकूल्ये आयाते भवति भावः ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवान् युधिष्ठिराभिप्रायमवधार्य तं कार्यसिद्ध्यर्थं जरासन्धं भीमेनाघातयदिति द्विसप्ततितमे वर्णयति—एकदेति । मुन्यादीनां शृण्वताम् आभाष्य हे भक्तमनोरथपूरकेत्यादि ! सम्बोध्य विभूतीर्देवादीन् तवं क्रतुराजं सम्पादय निवर्तय ॥ १-३ ॥

त्वदाराधनेन पुरुषार्थसिद्धिः त्वद्बहिर्मुखत्वेन सर्वपुरुषार्थाभावो यद्यप्यस्ति तथापि त्वद्विभूतियजनात्मकेन राजसूयेन कर्मणा त्वद्भक्तानामस्माकमात्मन आदरणीयत्वं त्वदभक्तानां शिशुपालदुर्योधनादीनां निरादरणीयत्वं लोकः पश्यत्वित्याह—द्वाभ्याम्-त्वत्पादुके इति । अभद्रस्यानिष्टमात्रस्य निरसने नाशके परि ये चरन्ति यच्छब्दस्य व्यवधानमार्षम् ये परिचरन्ति शरीरेण ध्यायन्ति मनसा गृणन्ति वाचा ते भवस्य संसारस्य अपवर्गं नाशं विन्दन्ति संसारान्मुक्ता भवन्तीत्यर्थः । यथाशिषः आशासते तर्हि ताः अपि विन्दन्ति अन्ये त्वद्विमुखाः भवापवर्गम् आशिषश्च न विन्दन्ति अत्राशीःशब्देन धर्मार्थकामाः गृह्यन्ते

"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥"

इत्यादिवाक्यान्यत्रानुसन्धेयानि ॥ ४ ॥

तर्हि राजसूयसम्पादनप्रार्थनायाः किं प्रयोजनमत आह तत्तस्माद्राजसूयसम्पादनाद्धेतोः चरणारविन्दसेवानुभावं त्वदादरणीयत्वम् इह सम्पादनीये राजसूये लोकः साक्षात्पश्यतु एतदेव दृढीकर्तुं प्रार्थयते कुरुसृञ्जयानां मध्ये येऽस्मदादयस्त्वां भजन्ति उत वा ये शिशुपालदुर्योधनादयो न भजन्ति तेषामुभयेषां निष्ठाम् आदरणीयतां निरादरणीयतां च दर्शय लोकान् प्रतीति शेषः ॥ ५ ॥

एवमुभयस्थितिप्रदर्शकेपि वैषम्यं नेत्याह—नेति । स्वः आदरणीयः परो निरादरणीयः इति भेदमतिः ब्रह्मणः सर्वकारणकारणस्य सर्वेषामन्तर्यामिणः समदृशः अविषमदृष्टेः स्वसुखानुभूतेः स्वानन्दपूर्णस्य न भवति यद्यपि तथापि संसेवतां संसेवमानानामेव त्वत्प्रसादः न पराङ्मुखानां तत्रापि सेवानुरूपमुदयः फलं न त्वत्र विपर्ययः सुरतरोः संसेवतामेव प्रसादो यथा भवति नैतावता तस्य वैषम्यदोषगन्धवातस्पर्शप्रसङ्गोपि तद्वदित्यर्थः ॥ ६ ॥

---

भाषाटीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—राजा युधिष्ठिर एकसमय सभा के मध्यमें मुनिजनन ब्राह्मण क्षत्रियवैश्यों सहित • भ्राताओं सहित ॥ १ ॥

आचार्य्यों सहित कुल वृद्धों सहित ज्ञाति सम्बन्धि बान्धवों सहित बैठे हुए प्रम सब के सुनतें२ हे प्रभो इस प्रकार प्रेम सहित सम्बोधन करके श्रीकृष्ण के प्रति बोलता भया ॥ २ ॥

युधिष्ठिर उवाच ।

राजा युधिष्ठिर बोले, कि हे गोविन्द ! राजसूययज्ञ करके आपके विभूतिरूप और पवित्र करनेवारे इन्द्रादि देवतानका

श्रीभगवानुवाच ।

सम्यग्व्यवसितं राजन् भवता शत्रुकर्शन ।
कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥
ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ।
सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥
विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे ।
सम्भृत्य सर्वसम्भारानाहरस्व महाक्रतुम् ॥ ९ ॥
एते ते भ्रातरो राजँल्लोकपालांशसम्भवाः ।
जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥

भाषा टीका।

आराधन मै करूंगा इस लियें हमारे इस यजन को आप सिद्ध कीजियेगा ॥ ३ ॥

हे कमलनाभ ! हे ईश ! जो सुकृतिजन पापन के नाश करने वारी आपकी पादुकानका निरन्तर सेवन करते हैं और जो इनका ध्यान करतेहैं तथा जो वाणीसे उनका उच्चारण करते हैं वे अन्तःकरण में शुद्ध होकर मोक्ष को प्राप्त होतेहैं और जो कदाचित् इस लोक परलोक के भोगन को वांछा करतेहैं तो वे उनकों भी प्राप्त होतेहै ॥ ४ ॥

हे देवदेव ! हे विभो ! इस संसार में यह प्राणियों का समुदाय आपके चरणारविन्द की सेवा के प्रभाव को देखो तथा कुरु और सृंजयों के मध्य में जो आपका भजन करतेहैं इन दोनोंन की निष्ठा को आप दिखाइयेगा कि भगवान्के भजन करने वारेन कों यह फल प्राप्त होताहै और नहि भजन करने वारेन कों यह फल मिलताहै ॥ ५ ॥

यद्यपि॰ सर्वव्यापक अनन्त कल्याण गुण सम्पन्न सबके अन्तर्यामी समदर्शी निज आनन्द रूप ज्ञानयुत आपको यह हमारा है यह पराया है इस प्रकार को भेद बुद्धि नहि है तथापि आपकी सेवा करने वारेन के ऊपर हि आपकी कृपा होतीहै,अन्य के ऊपर नहि होती ऐसा होने पर भी आपकों विषमता और निर्दयपना नहि आता क्योंकि सेवा के अनुरूप हि फल होताहै जैसे कल्पवृक्ष में विषमता न हि भी है वह सबका समानहै तथापि जो उसका सेवन करते हैं उन्हीं को कल्पवृक्ष ते फल प्राप्त होताहै अन्य को नहि देता इस वास्ते आपका प्रसाद कल्पवृक्ष के तुल्य है ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सत्यं भक्तानामेव कैवल्यादि नान्येषामित्यनुमोदमान आह-सम्यगिति। शत्रुकर्शनेति सम्बोधयन् सर्वराजविजयशक्तिं सञ्चारयति अनुभविष्यति प्रकाशति सर्वलोककल्याणो भविष्यतीत्यर्थः ॥ ७—८ ॥

किमत्र मयाऽन्येन वा सम्पादनीयं.तव तु सुकर एव राजसूय इत्याह—विजित्येति। जगतीं सर्वां पृथ्वीम् सम्भारान् यज्ञोपस्करान् सम्भृत्य सम्पाद्याऽऽहरस्व अनुतिष्ठेत्यर्थः ॥ ९ ॥

ननु नृपतिविजयादि कथं शक्यं स्यादत आह—एत इति। किञ्च आत्मवता जितेन्द्रियेण ते त्वया अहञ्च जितोस्मि वशीकृतोस्मि अकृतात्मभिरजितेन्द्रियैः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तथैव सुरतरुतोः वैलक्षण्येन तादृशानुग्रहमयवचनादिकमुदाहृत्य प्रसादमेव विशिष्य दर्शयति—श्रीभगवानुवाचेत्यादिना। अत्राप्युत्तरत्राधिक्यमुन्नेयं सम्यक् साध्वेवेदं भवता व्यवसितं निश्चितं कर्तुमिष्टं वा तच्च युक्तमेवेत्याह—हे राजन्निति ! महाराजकर्तव्यत्वात् कल्याणी उत्तमा जगन्मङ्गलकरी वा अत्र सर्वजनेषु मङ्गलजननीति निगूढो भावः लोकाननु तान् व्याप्येत्यर्थः ॥ ७ ॥

न केवलं कीर्तिद्वारा सर्वसुखप्रदोऽसौ स्वद्वारापीत्याह—ऋषीणामिति। पितॄणां देवानां च नोऽस्माकं सुहृदामपीति स्नेहभरोदयार्थं परमेश्वरदृष्टिं वारयति यद्वा विनयजन्माभ्युदेव हे प्रभो ! तत्र समर्थ ! ॥ ८ ॥

तदेव दर्शयन् प्रोत्साहयति—विजित्येतिद्वाभ्याम्। विशेषेण जरासन्धादिभ्योऽप्याधिक्येन स्वरसत एव दासतासम्पादनादिना जित्वा एवं जगतीमेव स्ववशे कृत्वा अन्यतः यद्वा स्वीयं त्वदधीनमेव महाक्रतुम् आहर ॥ ९ ॥

एत इति। तेषां प्रोत्साहनार्थं माहात्म्यं निर्दिशन्निव श्रीहस्तेनैव दर्शयति, माहात्म्यमेवाह—ते भ्रातर इति लोके नि म— किम्वदन्त्यपेक्षयैवेदमुक्तं वस्तुविचारे तु लोकपाला अंशसम्भवा येषां ते स्वयं भगवतोऽन्तरङ्गपरिकरत्वात् "यूयं नृलोके बत भूरि-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भाणाः" इत्यादेः हे राजन्निति तेभ्योऽपि तव वैष्णवं सूचयंस्तं विशेषतः प्रोत्साहयति—अहन्तु तवाधीन एवेति वदन् सर्वश्रेष्ठ्यमेव विशेषतो दर्शयति—जितोऽस्मीति । नित्यं त्वद्वश्यतयैव वर्त्ते इत्यर्थः । तत्र हेतुः आत्मा अहमेव सर्वस्वत्वेन विद्यते यस्य तेन अन्येषान्तु तदभावातिशयेन तदेव द्रढयति, दुर्जय इति. न कृतो मयि नार्पितोऽपि आत्मा चित्तं यैः ॥ १० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तस्तद्वचोऽनुमोदमानः प्राह श्रीभगवान्—सम्यगिति पञ्चभिः । हे राजन् ! हे शत्रुकर्शन ! सम्यग्व्यवसितं निश्चितं कुतः एवं व्यवसितविधानेन कल्याणी तव कीर्त्तिर्लोकाननु-चरिष्यति व्याप्ता भविष्यतीत्यर्थः ॥ ७ ॥

ऋषीणामिति । पितॄणां देवानाञ्च सुहृदां नोऽस्माकं किम्बहुना सर्वेषामपि भूतानामयं क्रतुश्रेष्ठः ईप्सितः इष्टः ॥ ८ ॥

निर्जित्येति । जगतीं सर्वां पृथ्वीं वशेकृत्वा स्वाधीनां कृत्वेत्यर्थः । सर्वान् सम्भारान् यागार्थपदार्थान् सम्भृत्य सम्पाद्य महाक्रतुं राजसूयमाहरस्वानुतिष्ठस्वेत्यर्थः ॥ ९ ॥

कथमहं जेतुं प्रभुरित्यत आह—एत इति । ते तव भ्रातरः भीमादयः लोकपालानां वाय्विन्द्रादीनामंशसम्भवाः अत एभिः सर्वे नृपाः सुजय्या एवेति भावः । किञ्च अकृतात्मभिरजितेन्द्रियैदुःखेनापि जेतुं वशीकर्तुमशक्योऽहमात्मवता मद्भक्तिप्रवणचित्तवता त्वया जितो वशीकृतोऽस्मि अतः किं तव दुस्साध्यमितिभावः ॥ १० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येन व्यवसितेन क्रतुराजेन अनुभविष्यति स त्वयाऽनुवर्त्यते ॥ ७ ॥

न केवलं तवाभीष्टोऽयमृष्यादीनां सर्वेषामपि हृदयङ्गम इत्याह—ऋषीणामिति ॥ ८ ॥

तत्रेत्थं भावमाह—विजित्येति । सर्वसम्भारान् सम्भृत्य सम्पाद्य आहरस्व कुरुष्व ॥ ९ ॥

साम्प्रतं सर्वजयो दुष्प्रापो नेति भावेनाह—एत इति । लोकपालांशैः सम्भवो येषां ते तथा योऽहम् अकृतात्मभिः अनुत्पादितमत्प्रसादैः ॥ १० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवांस्तु तेन स्वाभ्युदयो दोषो निरूपित इति सन्तुष्टः सन् चिकीर्षितस्य गुणरूपत्वं वदन्नभिनन्दति—सम्यग्व्यवसितमिति । प्रकारान्तरेण नेदं सिध्यतीति राजन्निति सम्बोधनात् राज्ञो बहिर्मुखता युक्तेति सूचितं तत्रापि कृत्वा राज्यपरिपालनमात्रतायां तथा न भवेदिति विशेषणान्तरं शत्रुकर्शनेति एवं कृते धर्मभगवत्प्रीत्यादेरभावात् यत्फलं तत् निर्दिशति कल्याणी येन ते कीर्त्तिरिति । यज्ञव्यतिरिक्तापि कीर्त्तिर्भवति परं सा न कल्याणी पुरा च भविष्यतीत्याह—लोकाननुभविष्यतीति । यज्ञक्रियामेव परिश्रम इति वर्षो निरूपितः ॥ ७ ॥

अन्येनापि धर्मेण यशो भवति तथापि राजसूय इति प्रागीप्सितं स्तौति—ऋषीणामिति । राज्ञः तथा स्वाध्यायनिष्ठताभावात् राजसूयेनैव ऋषयः प्रीता भवन्ति राजसूयकर्त्तुरेव पितर इन्द्रसभायां तिष्ठन्ति अन्येतु यमसभायां तथा देवानाम् अमृतान्धस्कप्रयोगात् विशेषतस्तः सुहृदामपि स्वकार्योत्कर्षहेतुत्वात् तथापि नोऽस्माकमेव न दुर्योधनादीनां प्रभोः कालस्यापि भूभारहरणहेतुत्वात् उद्धतहननात् सर्वेषामेव भूतानां क्रतुराट् राजसूय ईप्सितः तत्राप्ययं त्वया क्रियमाणः उत्तमप्रकारत्वात् न तु यथाविकृतः ॥ ८ ॥

अतः प्रथममेवारम्भमकृत्वा स्वाधिकारं सम्पादयेत्याह—विजित्येति । सर्वराजसूयाधिकारः सार्वभौमस्यैवाधिकारात् यत्र लोका न मन्यन्ते तस्यापि नाधिकार इति अत आह—कृत्वा तु जगतीं सर्वामेव वशे ततो यज्ञसम्भाराः साधनीयाः अन्यथा यज्ञः सम्भृतो न भवतीति तत्कालसम्भरणे समारम्भेण सर्वः समारभ्यो भवेदिति यथा जनने हस्तपादादयः यद्यपि तदा नोपयुज्यन्ते तथाप्यविकलैव भाव्यं तथा सम्भाराः तदनन्तरमाहरस्व नित्यमेव भगवद्रूपं हृदयात् प्रतिमायामिव मूलस्थानात् स्वस्मिन्नाहरणं कर्त्तव्यमिति भावः । तमाहरत्तेनायजतेति पृथङ्निर्देशात् केचिदारम्भमाहरणमाहुः, तन्न श्रौतं किन्तु महात्वेऽत्र बहिः स्वस्थानादाहरणमेव महाप्रयत्नमेव हेतुमाह— महाक्रतुमिति ॥ ९ ॥

तत्र दिग्विजये साधनं बोधयति-एते ते भ्रातर इति । तव एते भीमादिभ्रातरः लोकपालानां वाय्वादीनामंशसम्भवो येषाम् अनेन देवानां मनुष्यजयः सुगम इति दिग्विजयो निस्सन्दिग्धो निरूपितः अनेनैव जगतोवशीकरणञ्च सिध्यति राजन्निति सम्बोधनं भ्रातृणामपि सेवकत्वात् तज्जये त्वज्जय एवेति सूचयितुं यद्यपेवन्तु मन्माहिमा न भवति भगवद्रूपत्वात् स्वतन्त्रत्वाच्च भगवतः परमन्येनैवोपायेन यदि भवान् वशो भवति सोऽपि तवास्तीत्याह—जितोऽस्म्यात्मवता तेऽहमिति हृषीकेशो हि भगवान् हृषीकाणामत्यन्तजये जितो भवति तद्रूपः अनेनासिधाराव्रतं कृतमित्यन्यत्र प्रसिद्धम्—

"सर्वालङ्कारणोपेता भार्यैकशयने यथा ।
शेते सम्वत्सरं पूर्णं स्वयं पुरुषस्तथाविधः ॥
मनसापि न तां वाञ्छेत् स्पृशन्नपि शिलामिव ।
असिधाराव्रतमिदं विष्णुप्रीतिकरं महत् " ॥ इति ।

इयमेवात्मवतां मर्यादामार्गे अनेनैव प्रकारेण भगवज्जयः अकृतात्मभिरजितान्तःकरणैः ॥ १० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो मन्महिमरसमहामेघराजकत्र मम सम्मतिरस्त्येवेति स्वीकरोतीति माभिस्त्याह—सम्यगिति । शत्रुकर्षणेति सर्वांस्त्वं

न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया।
विभूतिभिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः॥ ११॥

श्रीशुक उवाच।

निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः।
भ्रातॄन् दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान्॥ १२॥
सहदेवं दक्षिणस्यामादिशत्सह सृञ्जयैः।
दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम्।
प्राच्यां वृकोदरं मत्स्यैः केकयैस्सह मद्रकैः॥ १३॥
ते विजित्य नृपान् वीरा आजह्रुर्दिग्भ्य ओजसा।
अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते॥ १४॥
श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः।
आहोपायं तमेवाद्य उद्धवो यमुवाच ह॥ १५॥
भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः।
जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः॥ १६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सर्वराजविजयशक्तिं सम्भावयति। यद्येतादृश्यापि सङ्कल्पस्याप्यनुष्ठानं लोकेऽभविष्यति तदा किमनयेति भावः। लोकान् अनु वशीकृत्य भविष्यतीति त्वत्कीर्तिरेव सर्वप्रकारेण मम निष्पादयित्रीयेति भावः॥ ७—८॥

संभृत्य सम्पाद्य। आहरस्व अनुतिष्ठ॥ ९॥

आत्मवता जितेन्द्रियेण। यद्वा आत्मा अहमेव सर्वस्वत्वेन विद्यते यस्य तेन त्वया अहमपि जितः वशीकृतः। अकृतात्मभिरजितेन्द्रियैः॥ १०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सम्यक् व्यवसिते सम्यक् निश्चितं तेन निश्चितेन लोकान् अनुभविष्यति सर्वलोकव्याप्ता भविष्यतीत्यर्थः॥७-८॥

सम्भारान् यज्ञोपस्करान् सम्भृत्य सम्पाद्य आहरस्व अनुतिष्ठ॥ ९॥

आत्मा परमात्माऽहं विद्यते यस्य तेन अकृतात्मभिः अविज्ञातपरमात्मतत्त्वैः॥ १०॥

---

भाषाटीका।

श्रीभगवानुवाच।

राजाके वचनों का श्रवणकर श्रीकृष्ण बोले, कि—हे राजन्! हे शत्रुकर्षन! आपने सम्यक् प्रकार निश्चय किया है जिस निश्चित यज्ञके अनुष्ठान से आपकी मंगलरूप कीर्ति सब लोकन में व्याप्त होजावेगी॥ ७॥

हे प्रभो! ऋषियों को पितृलोकों तथा सबहि प्राणि मात्र को यह राजसूय यज्ञ वाञ्छित है॥ ८॥

प्रथम सब राजाओं जीतकर सब पृथिवी को अपने वश में करके और यज्ञकी सब सामग्रीनकों सम्पादनकर पश्चात् आप इस यज्ञका अनुष्ठान करिये॥ ९॥

भीमसेन अर्जुन नकुल सहदेव ये आपके भ्राता लोग पवन इन्द्र अश्विनीकुमारों के अंश से उत्पन्न भए हैं और इन्द्रियनके नहि जीतने वारेन कों दुःख से भी वश्य नहि होने वारे मो को इन्द्रियन के जीतने वारे आपने वशमें करलिया है इस लिये आप को कुछभी दुष्कर नहि है॥ १०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

आस्तान्तावदेवम्भूतस्य तव परैरभिभवशङ्का अकिञ्चनमपि मत्परं कोपि नाभिभवितुं प्रभवतीत्याह—न कश्चिदिति। तेजसा प्रभावेण विभूतिभिः सैन्यादिसामग्रीभिः॥ ११॥

अयुङ्क्त नियुक्तवान् विष्णोस्तेजसोपबृंहितान् सम्वर्धितान् तेजोपबृंहितानिति छान्दसोऽर्थः॥ १२॥

नकुलादीनां मत्स्यादिभिः सहायैर्यथासङ्ख्येन सम्बन्धः॥ १३॥

कथम्भूताय यक्ष्यते यागं करिष्यते॥ १४॥

आह्रो हरिः श्रीकृष्णः॥ १५॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

ब्रह्मलिङ्गधरा ब्राह्मणलिङ्गधारिणः यतो यत्र बृहद्रथसुतो जरासन्धः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

व्यतिरेकमुखेन कैमुत्येनापि तदेव द्रढयति—नेति। भुवने कश्चिदपि तत्रापि देवो लोकपालादिरपि मत्परमात्रमपि किमुत युष्मानित्यर्थः। श्रिया शोभया ॥ ११ ॥

भगवतः सर्वैश्वर्यपरिपूर्णस्य गीतं प्रीत्या गाथातुल्यं वाक्यं इति तस्य सर्वसिद्धिकरत्वमुत्साहविवर्द्धनत्वादिकञ्च सूचितं विष्णोर्विश्वव्यापकस्य तस्य तेजसोपबृंहितानिति दिग्विजयार्थं सर्वव्यापकतया तदानीं निजतेजोर्पणात् सदैव वा तेषां तादृशत्वात् ॥ १२ ॥

कथमयुङ्क्त तत्राह—सहदेवेति सार्द्धकेन। तत्रातिवात्सल्याद्बालत्वेन प्रतीतौ श्रीसहदेवनकुलौ प्रति दक्षिणप्रतीच्योरादेशस्तत्रतत्र बहुलदुर्गमदुर्जयाभावात् सर्वदुर्गमसञ्चारित्वेन सर्वजयित्वेन च निश्चितं सव्यसाचिनमुदीच्यां महापर्वतमयत्वेन तस्या अतिदुर्गमत्वात् दुर्जयबहुलगन्धर्वदेवमयत्वाच्च अत एव सव्यसाचिनमिति सव्येनापि पाणिना धनुर्गुणाकर्षणादिना तस्य माहात्म्यं सूचितम् भीमञ्च प्राच्यां तत्समबलजरासन्धजयापेक्षया तत्तत्क्रमेणादेशो यथोत्तरमग्रजत्वेन गौरवाधिक्यात् ॥ १३ ॥

ओजसा वेगेनैव विजित्य यतो वीराः अजातशत्रव इति जितोपि कश्चित्तस्मिन् द्वेषं नाकरोत् किन्तु भक्तिमेव स्वभावतस्तस्य कस्मिंश्चिदपि द्वेषाभावात् विजयश्च केवलं राजसूयापेक्षयेतिभावः आजह्रुरित्यत्राजिग्युरिति पाठे जयतेर्द्विकर्मकत्वात् नृपान् द्रविणं विजित्येत्यन्वयः। तत्राजातशत्रवे तदर्थमिति हे नृपेति स्वपूर्वजानामपूर्वमिदमपि माहात्म्यं कर्णपुटेनापीयतामिति प्रोत्साहनम् ॥ १४ ॥

श्रुत्वा ध्यायत इति नारदेन कथितमुद्धवमन्त्रं कथमयं श्रीभगवान्नोद्दङ्कयति कथं वा प्रकारान्तरं तत्र चिन्तयतीति मनसि चिन्तयतः विचारयत इत्यर्थः। स्वतो महावीरस्वभावत्वेपि विष्णुतेजसोपबृंहितत्वेपि दिग्विजये प्रवृत्तस्य तस्य भीमस्य तु तमजित्वैवागमनं श्रीभगवत एव रह उपदेशादितिगम्यं ह हर्षे अत्र टीकायामाद्यो हरिरित्यन्वयः। श्रीकृष्णस्य सर्वाविर्भावमूलरूपत्वं सूचयति, यथा ब्रह्मसंहितायाम्—

"ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।
अनादिरादिर्गोविन्दः सर्वकारणकारणम्" ॥

इति ॥ १५ ॥

ब्रह्मलिङ्गमत्र स्नातकविप्रवेषः तद्धराः तथाच सभापर्वणि—

"तपस्विनां ब्राह्मणानां स्नातकानां परिच्छदम्।
आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः" ॥ इति

अनेन रथादिपरित्यागो ज्ञेयः त्रय इत्यत्र तत इति पाठे ततस्तदनन्तरं जरासन्धवधार्थे श्रीकृष्णेन सह भीमस्य गन्तव्यतायामर्जुनस्यापि गमने कारणं श्रीभगवता तत्रैवोदितम्—

"मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः।
मागधं सातयिष्याम इष्टिं त्रय इवाग्नयः ॥ इति

एतदपि प्रायो नयने व्याज एव वस्तुतस्तु सख्यमेव कारणं गिरिव्रजं राजगृहं हे तातेति तेषां ब्रह्मलिङ्गत्वादिना कौतुकोद्रेकात् बृहद्रथस्य सुत इति तद्वंशधरत्वप्रसिद्धिसूचनया महावीरत्वादिकं सूचितम् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

आस्तान्तावदेवम्भूतस्य तव परैरभिभवशङ्का यतोऽकिञ्चनमपि मत्परं कोपि नाभिभवितुं प्रभुरित्याह—न कश्चिदिति मत्परम् अहमेव परो यस्य तं मय्यासक्तचित्तमित्यर्थः। देवोपि तेज आदिभिर्नाभिभवेत् किमुत पार्थिवा नाभिभवेयुरिति तत्र तेजः प्रभावः श्रीः सम्पद्विभूतयः सैन्यादिसमृद्धयः ॥ ११ ॥

निशम्येति। प्रीतः अत एव फुल्लं विकसितं मुखाम्बुजं यस्य सः युधिष्ठिरः दिग्विजये निमित्ते विष्णोस्तेजसा उपबृंहितान् वर्द्धितान् भ्रातॄन् भीमादीन् प्रायुङ्क्त ॥ १२ ॥

सहदेवमिति। सृञ्जयैः सह दक्षिणस्यां दिश्यादिशत्प्रापयामास सव्यसाचिनमर्जुनं वृकोदरं भीमं मत्स्यादिभिस्सह ॥ १३ ॥

त इति। हे नृप! यक्ष्यते यागङ्करिष्यमाणायाऽजातशत्रवे धर्मराजाय ते भ्रातरः भूरि बहु द्रविणं वित्तमोजसाऽहृत्य समर्पयामासुः ॥ १४ ॥

श्रुत्वेति। जरासन्धमजितं श्रुत्वा नृपतेर्युधिष्ठिरस्य ध्यायतः चिन्तयतः सतः हरिः श्रीकृष्णो यमुपायम् उद्धवो "बलिनां मरि चान्येषां भीमं समबलं विना" इति प्राह तमेवोपायमाह ॥ १५ ॥

भीमसेन इति। ब्रह्मरूपधरा विप्रवेषधरास्ततः इन्द्रप्रस्थाद्गिरिव्रजं जग्मुः हे तात! यतो यत्र बृहद्रथसुतो जरासन्ध आस्ते तद्गिरिव्रजमिति सम्बन्धः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भवतो दुर्जयत्वेन किमस्माकमिति तत्राह—नेति। मत्परं मद्भक्तं विभूतिरुपस्करसम्पद्भिः ॥ ११ ॥

विष्णोस्तेजसा प्रभावेण उपबृंहितान् परिपूरितान् ॥ १२-१३ ॥

यक्ष्यते यष्टुकामाय ॥ १४ ॥

अत्र दिग्विजये जरासन्धो जितो मारितो वेति तत्प्रसङ्गो नाकर्णित इति राज्ञो हार्दीं शङ्कां परिहरन्निदं दिग्विजयात्प्रागेव तद्वधो वृत्त इति मात्र प्रसक्त इति वृत्तं तद्वचनमनुवदति—श्रुत्वेति। ननु दिशां जयादनन्तरं तद्वधः किं स्याद्यथास्थितमन्यथानूद्यते किमर्थमिति चेन्न निर्णयग्रन्थविरोधात् ननु पूर्वापराभावे किं प्रमाणं किं प्रयोजनमिति चेदुच्यते पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च "मोहनाथाय दुष्टानां सर्वव्यत्यास इष्यते" इत्यादिवाक्यं किञ्च

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः" इत्यादिरूपस्वक्रमं भगवत एव जरासन्धमजितं श्रुत्वा तज्जयः कथमिति व्यथितो युधिष्ठिरस्य उद्धवो यमुपायमुवाच तमाह हरिरित्यन्वयः ॥ १५ ॥

हेति सूचितमितिहासं स्पष्टयति—भीमसेनइत्यादिना । ब्रह्मलिङ्गधराः ब्राह्मणलक्षणानि बिभ्राणाः यतो यत्र ॥ १६ ॥

भगवान् सर्वरूप इति ब्रह्मलिङ्गधरत्वं न दोषः तथार्जुनेपि पूर्वजन्मनि तथाभावात् अत एव वासनया सन्न्यासिवेषः पूर्वमपि कृतः अत एवाग्रमः भीमस्यैव वेषमाह—अनुवादे त्रयाणां वेषः क्रमेण निरूप्यते वेषान्तरे समानलीलत्वं नोपपद्यत इति अतो नूतनत्वाद्भीमपुरःसराः गिरिव्रजं जग्मुः इदानीं राजगृहमिति प्रसिद्धं यतो यस्मात् कारणात् तत्र बृहद्रथसुतो जरासन्धः पतइति सतत्त्वर्थं वा ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कदाचिञ्जयारम्भे भ्रातुः कस्यचिदभिभवः किं कर्त्तव्यमित्याशङ्कायामाह—न कश्चिदिति । अहमेव परो नियन्ता स्वामी यस्य तस्य कोप्यभिभवितुं न शक्तः अभिभवस्त्रेधा भवति विषयातिक्रमेण शरीरातिक्रमेण यशोतिक्रमेण च ततो विशेषणत्रयं तेजसा यशसा श्रियेति तेजोभिभवे तं विभूयाज्ञानमेवेद्वा यशोभिभवे अकीर्त्या मृत एव श्रिया अभिभवे मानभङ्गात् साधारणान्तरार्थं राज्ञां विशेषमाह विभूतिभिर्वेति यथा भारतवर्षे शोचयात्रायामभिभवार्थमुद्यमः अक्लोक्ययात्राकाङ्क्षायां त्रिलोकीमपि जीयात् तत्र देवस्यापि जयः प्राप्नोति तादृशो देवोपि नाभिभवितुं शक्त इति वाक्यसम्भवः पार्थिवो राजा पृथिवी विकारः कथं शक्त इति मत्परत्वान्मज्जयव्यतिरेकेण न तज्जय इति ॥ ११ ॥

एवं भगवदाज्ञां प्राप्य तथा कृतवानित्याह—निशम्येति । गीतं भगवता सर्वेषां श्रुतिप्रियकरं प्रोक्तं प्रीत्युत्फुल्लमुखाम्बुजं यस्य प्रीतः स तुष्टश्चिकीर्षितं सेत्स्यतीति भगवत्स्पर्शाद्विष्णुतेजोपबृंहितः भ्रातरः पालकं हि तत्तेजो दैत्यनाशकम् ॥ १२ ॥

प्रत्येकं भगवता तेजः समर्पितमिति ज्ञापयितुं विभागेन दिग्विजयार्थं प्रेषणमाह—सहदेवमिति । दक्षिणस्यां दिशि जयार्थं सहसृञ्जयैः क्षत्रियविशेषैः सह समादिशत् प्राक्प्रकारेण दिग्विजयः तथा नकुलं प्रतीच्याम् अनन्तमुत्तरापथमिति तत्र समर्थोऽर्जुनः प्राच्यां जरासन्धादयस्तिष्ठन्ति सेनाधिक्यं बलिष्ठस्य भीमस्य च प्रेषणं कनिष्ठक्रमेण विनियोगो धर्म्यः उत्तमानामिदावशेषात् ॥ १३ ॥

तेषां कार्यसिद्धिमाह—विजित्येति । ओजसा स्वपौरुषेण ननु धर्मार्थं खेदेन वा तैर्दत्तं मन्तव्यं सर्वजयकर्तुः कथं यागाधिकार इत्याशङ्कायामाह—अजातशत्रव इति । आज्ञयैव तथा कृतवान् ननु तस्य हृदये कश्चिच्छत्रुरस्ति भ्रातॄणां वा वैषम्याभावात् कृषीवलादिव राजभ्यो द्रव्यसमानयनं स्वद्रव्येनैव याग इति अजातशत्रव इति । तादृगर्थमुक्तम् ॥ १४ ॥

एवं ब्राह्मण्यं विष्णुतेजो नाभिभवतीति जरासन्धो न जितः तस्याप्यजये यागो न भवेदिति नृपतेर्ध्यानं चिन्तारूपं पूर्वमेव भगवान् विनियुक्तमिति तस्याप्यशक्यभावनया चिन्ता तथापि तस्यापि दुःखनिवारको हरिः स्वामिन् तस्यालौकिको भयो जात इति उपायमेवाह—तथापि उद्धवोक्तमुपायमाह अन्यथा भगवान् कृत्रिमं वेषं न सम्पादयेत् ॥ १५ ॥

अर्जुनस्य तदंशत्वात् नरनारायणयोर्धर्मावतारात् पूर्णत्वात्पार्जुनस्य गमनम् अथेदानीं भगवतोपि तथा वचनमाश्चर्यं

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नात्र विपक्षैः स्वाभिभव आशङ्कनीयः । यदिदमहं साटोपं ब्रवीमीत्याह—न कश्चिदिति । मत्परं यं कञ्चन विभूत्यादिरहितमपि किं पुनस्त्वाम् ॥ ११ ॥

तेजसा उपबृंहितान् सन्धिरार्थः । तेजशब्दोऽदन्तो वा ज्ञेयः ॥ १२ ॥

नकुलादीनां मत्स्यादिभिः सहायैः यथासङ्ख्येन सम्बन्धः ॥ १३ ॥

द्रविणं समर्पयामासुरिति शेषः ॥ १४ ॥

आद्यो हरिः ॥ १५-१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहं परो यस्य स तथा तम् ॥ ११ ॥

विष्णुतेजसोपबृंहितान् सम्वर्द्धितान् सन्धिरार्थः ॥ १२—१३ ॥

यक्ष्यते यागं करिष्यते ॥ १४ ॥

आद्यो विश्वहेतुः ॥ १५ ॥

ततः स्वस्थानतः ब्रह्मलिङ्गधराः विप्रवेषधारिणः यतो यत्र ॥ १६ ॥

---

भाषा टीका ।

मेरे यथार्थ भक्त को लोक में कोई इन्द्रादि देवता भी अपने प्रभाव से अथवा यशसे अथवा सम्पत्तिसे और सेना आदि विभूति से तिरस्कार करनेको समर्थ नहि है फिर राजा लोग नहि तिरस्कार करसकता है इस में क्या कहना ॥ ११ ॥

श्रीशुक उवाच ।

श्रीकृष्ण के कहे हुए वचन का श्रवण करके प्रसन्न होकर तथा प्रसन्नता से प्रफुल्लित मुखारविन्द होकर राजा युधिष्ठिर श्रीकृष्ण के तेज करके वृद्धि को प्राप्त भ्रातानको दिग्विजय के निमित्त आज्ञा करता भया ॥ १२ ॥

सृञ्जयक्षत्रियों सहित सहदेव को दक्षिणदिशा दिग्विजय के निमित्त आज्ञा दी और मत्स्यदेश के क्षत्रियों सहित नकुलको पश्चिम दिशा दिग्विजय के निमित्त आज्ञादी तथा केकय देश के क्षत्रियों सहित अर्जुनको उत्तर दिशा के क्षत्रियों सहित भीमसेन को पूर्वदिशा के दिग्विजय के निमित्त आज्ञा दी गई ॥ १३ ॥

ते गत्वाऽऽतिथ्यवेलायां गृहेषु गृहमेधिनम्।
ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिङ्गिनः ॥ १७ ॥
राजन्! विद्ध्यतिथीन् प्राप्तानर्थिनो दूरमागतान्।
तन्नः प्रयच्छ भद्रन्ते यद्वयं कामयामहे ॥ १८ ॥
किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः।
किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥
योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्।
नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥ २० ॥
हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥

श्रीशुक उवाच।

स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि।
राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ २२ ॥

भाषा टीका।

हे नृप! वे भीमसेन से आदि लेकर चारों शूरवीर अपने पराक्रम से राजानको जीतकर सब दिशान ते बहुत सा धन लायकर आगे राजसूय यज्ञ करनेवारे राजा युधिष्ठिर के अर्थ उस धनको समर्पण करते भए ॥ १४ ॥

फकत एक जरासन्ध को अजित सुनकर राजा यह चिन्तवन करने लगा कि जरासन्ध जिस प्रकार जीत्यो जायगो इस प्रकार चिन्तवन करने वारे राजा को श्रीकृष्ण ने उसके जीतने का उनही उपाय कहा कि जो उद्धवने कहा रहा ॥ १५ ॥

हे तात! भीमसेन अर्जुन और श्रीकृष्ण ये तीनो ब्राह्मण का वेष धारण करके जहां बृहद्रथ का पुत्र जरासन्ध रहता रहा उस गिरिव्रज को जाते भए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गृहेषु वर्तमानं समयाचेरन् सम्यगयाचन्तेत्यर्थः ॥ १७—१८ ॥

नन्विदं कामयामह इति विशेषो निर्दिश्यताम् अन्यथा यस्य पुत्रादेर्वियोगो दुःसहः स कथं देयः तथा राजमण्डनं किरीटाद्यदेयं याचिष्णुभ्यः कथं देयम् तथाऽतिरक्ष्यं रक्षाभरणादियोग्यं कथं परस्मै देयमिति चेत्तत्राहुः—किं दुर्मर्षमित्यादि। अथ दृष्टान्तत्वेनार्थान्तरमाहुः—किमकार्यमिति। यथा साधूनामकार्यं नास्ति तथा तितिक्षूणां दुर्मर्षं दुःसहं नास्ति वदान्यानामत्युदाराणामदेयं नास्ति समदर्शिनां परश्च नास्ति अतः किं विशेषनिर्देशेनेत्यर्थः ॥ १९ ॥

किञ्च अर्थिभ्योऽर्थिने शुद्रकादिप्रमाणा अपि न रक्षणीया इत्याशयेनाहुः—योऽनित्येनेति। नाचिनोति न सम्पादयति स वाच्यः स निन्द्यः ॥ २० ॥

विश्वामित्रार्थावृत्त्याय हरिश्चन्द्रो भार्यात्मजादिसर्वं विक्रीय स्वयं चाण्डालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः रन्तिदेवः सकुटुम्बोऽष्टचत्वारिंशद्दिनान्यवभोजनोदकोऽपि कथञ्चिल्लब्धान्नोदकादार्थिभ्यो दत्त्वा ब्रह्मलोकं गतः उञ्छवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुम्बोऽप्यतिथिसत्कारेण ब्रह्मलोकङ्गतः शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्त्वा दिवं गतः बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्त्वा तमेवात्मसाच्चकार कपोतश्चातिथये व्याधाय कपोत्या सहाऽऽत्ममांसं दत्त्वा विमानेन दिवं गतः व्याधस्तयोः सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥ २१ ॥

ज्याहतैर्ज्याघातकिणाङ्कितैः दृष्टपूर्वान् द्रौपदीस्वयंवरादिषु ॥ २२—२३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

गृहेषु गत्वा गृहान्तः प्रविश्य यतो ब्रह्मण्यं ब्रह्मलिङ्गिन इति आतिथ्यवेलायां माध्याह्निकभोजनावसरे सम्यग्वाक्यपाटवादिना स्तुतिपूर्वकमयाचेरन् प्रयोगश्चार्ष "व्यत्ययो बहुलम्" (३ १-८५)इति छान्दससूत्रात् याच्ञायां हेतुः गृहमेधिनं गृहिधर्मपरं तत्रापि ब्रह्मण्यं गृहमेधिनामिति पाठे आतिथ्यवेलायामित्यनुषङ्गः ॥ १७ ॥

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धूर्तायुश्च त एते त्रयः अथवा किमित्येवमकार्यं दुःखं दीयत इत्याशङ्कायामाहुः—किमकार्यमिति । दुर्मेधोभिः किमकर्तव्यं यज्ञविघातमपि करिष्यन्तीति मारणमुचितमितिभावः । ननु दानं शास्त्रसिद्धं तथेषामेव विधिर्भवति तान्येव दातुं शक्यन्ते नतु निषिद्धानीति—

" आत्मा च धर्मो दासश्च धर्मपत्नी तथैव च ।
सर्वस्वञ्च प्रपन्नश्च न देयानि विदुर्बुधाः " ॥

इति विशेषनिषेधात् तत्राहुः—किं न देयं वदान्यानामिति । वदान्या दध्यङ्शिबिप्रभृतयः अयं साधारणानामेव विषयः ननु वदान्यविषयः ते ह्यात्मानमेव प्रयच्छन्ति कः सन्देहोऽन्येषु अनेन तस्य स्तुतिरपि कृता तथापि शत्रुभ्यो न देयम् अन्यथा नीतिशास्त्रं विरुद्ध्येत हीनाः शत्रवो मरणं प्रार्थयेयुरिति तत्राहुः कः परः समदर्शिनामिति । समदर्शिनां सर्वत्र ब्रह्मदर्शिनां कः परः शत्रुः सर्वस्यैवात्मत्वात् ॥ १९ ॥

तथापि देहाध्यासो दृढ इति देहव्यतिरिक्तं सर्वमेव दास्यामीत्याशङ्कायामाहुः—योऽनित्येन शरीरेणेति । अदाने अयशः नित्यं शरीरमनित्यं दानेतु यशो नित्यं शरीरं नित्यमेव यशसा नित्यं दिव्यं शरीरमिति अयशसा नारकिशरीरम् एवं तारतम्यं ज्ञात्वा अनित्येन शरीरेण सतां गेयं वैकुण्ठादिशरीरजनकं यशो नाचिनोति सर्वतोऽपगच्छन् न सञ्चिनोति यथावद्भासेन हीरकादिबन्धनं वज्रनाशो भविष्यतीति शङ्कया स्वयं समर्थोभूत्वा स वाच्यः अस्मिन् लोके निन्द्यो भवति शोच्यश्च परलोके हीनशरीरप्राप्त्या एवकारेणोत्तमशरीरशङ्कां वारयति यतः स अधुना यशस्सञ्चयमकुर्वन् कथमन्यथा करिष्यति नहि कदाचिदपि सोऽन्यथा भवति ॥ २० ॥

ननु, तथापि यत्केश्चिदपि न दत्तं तत्कथं देयमिति शङ्कायामाहुः—हरिश्चन्द्र इति । सहि सर्वस्वमपि दत्वा चण्डालत्वमङ्गीकृतवान् रन्तिदेवः पिपासया शुष्यमाणः पुल्कसायापि जलं दत्तवान् तेनोञ्छवृत्तिः क्षुधा म्रियमाणः सर्वमेवान्नं दत्तवान् श्येनकपोतसम्वादे बलिः सर्वस्वं विष्णवे व्याधो ब्राह्मणरक्षायां व्याघ्रेण भक्षितः कपोतः चोररूपातिथिसन्तर्पणार्थं तदग्नौ स्वयं पतितः सभार्य एव बहव एव अध्रुवेण शरीरेण ध्रुवं फलं गताः ॥ २१ ॥

एवं दाने प्रोत्साहं आप्तः क एत एवं धर्मवक्तार इति तान् विचार्य निश्चित्य स्वरैराकृतिभिरिति प्रथमेन त्रिभिर्वा ततश्चतुर्भिर्वाक्यानि ततो निश्चित्य प्रतिशाप्य स्वरा मेघगम्भीरा क्षत्रियाणामेव भवन्ति आकृतयः आजानुबाहुरूपाः अन्तर्बहिर्धर्मा क्षत्रियनियामका उक्ताः तत्कर्मपरत्वनियामकानाह प्रकोष्ठैर्ज्याहतैरयाति त्रिभिर्लक्षैर्भिक्षुभिर्वाचारिभिः ॥ २२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गृहमेधिनां या आतिथ्यवेला तस्यां समयाचरन् समयाचन्त ॥ १७-१८ ॥

ननु, किं कामयध्वे तद्विशेषं ब्रूत अन्यथा याचकेभ्युष्मादृशैर्यदि अतिप्रियः पुत्र एव कामितः स्यात्तदा तदतिममतास्पदस्य पुत्रविच्छेददुःखं कथं मया सोढव्यं तत्राहुः—किं दुर्मर्षमिति । विश्वामित्रादिभ्यो दशरथादेरतिप्रियपुत्रार्पणस्यापि दृष्टत्वादिति भावः । नन्वेवं प्रार्थ्यमानैः गृहस्थलोकैः यदि यूयं तिरस्क्रियध्वे तर्हि किं स्यात्तत्राहुः—किमकार्य्यमिति । ननु यदि मच्छरीरमेव युष्मत्कामितं स्यात्तदा तद्दहन्तास्पदं कथं देयं तत्राहुः—किमदेयमिति । दध्यङादौ देवप्रार्थनायां स्वशरीरदानस्यापि दृष्टत्वादिति भावः । ननु यदि यूयमेव मच्छत्रवो भवथ तदा शत्रुभ्यस्तत् कथं देयं तत्राहुः—कः पर इति । समदर्शिनां ज्ञानिनां नहि त्वय्यपि विषमदर्शनलक्षणमज्ञानं सम्भवेदिति भावः ॥ १९ ॥

नाचिनोति न सम्पादयति ॥ २० ॥

विश्वामित्रानृण्याय हरिश्चन्द्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चाण्डालतां प्राप्तोऽप्यनिर्विण्णः सह अयोध्यावासिभिः जनैः स्वर्गं गतः । रन्तिदेवः सकुटुम्बोऽप्यष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथञ्चिल्लब्धान्नोदकादिकमर्थिभ्यो दत्वा ब्रह्मलोकं गतः । शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्वा स्वर्गं गतः । बलिः सर्वस्वं विप्रवेषधारिणे हरये दत्वा तं वशे चकार । कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा विमानेन दिवं गतः । व्याधस्तयोः सत्त्वं वीक्ष्य स्वयमपि निर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो दिवमारुरोह । एवमन्येऽप्यध्रुवेणैव शरीरेण ध्रुवं चिरकालस्थायिलोकं गताः ॥ २१ ॥

ज्याहतैर्ज्याघातकठोरीकृतैः । राजन्यबन्धून् विप्रवेषेण याचकीभूतत्वाभिक्षत्रियान् दृष्टपूर्वान् द्रौपदीस्वयम्वरादिषु ॥ २२—२३ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहमेधिनां या आतिथ्यवेला तस्यां गृहेषु वर्तमानं ब्रह्मण्यं जरासन्धं समयाचरन् समयाचन्त ॥ १७—१८ ॥

ननु, भवत्कामितं यदि अदेयं स्यात्तत्कथं दास्यामीत्यत आहुः—किं दुर्मर्षमित्यादि । यथा तितिक्ष्वादीनां दुर्मर्षादिकं किं न किमपि तथा वदान्यानामुदाराणां किमदेयं न किमपि सर्वं देयमेवेत्यर्थः ॥ १९ ॥

नाचिनोति न सम्पादयति स अनैर्वाच्यो निन्द्यः दयालुभिः दुष्टपुत्रवत् शोच्यश्च ॥ २० ॥

हरिश्चन्द्रादयो बहवः अन्यत्र इह च प्रसिद्धाः अध्रुवेण शरीरेण ध्रुवं चिरकालस्थायिलोकं गताः ॥ २१—२३ ॥

---

## भाषा टीका ।

ब्राह्मण के वेषधारी वे तीनों क्षत्री दान करने के समय में उसके गृहन में जायकर गृहस्थ धर्मानुवर्त्ती तथा ब्राह्मण भक्त जरासन्ध के प्रति याचना करते भए ॥ १७ ॥

हे राजन् ! दूर देश ते आए हुए कुछ याचना करने वारे और आपके यश प्राप्त हुए हमको कामना है सो आप दीजियेगा आप का मङ्गल हो ॥ १८ ॥

राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति ।
ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥
बलेर्नु श्रूयते कीर्तिर्विततो दिक्ष्वकल्मषा ।
ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥
श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ।
जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥
जीवता ब्राह्मणार्थाय कोन्वर्थः क्षत्रबन्धुना ।
देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥
इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ।
हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥

श्रीभगवानुवाच ।

युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ।
युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ॥ २८ ॥

भाषा टीका ।

जैसें सहन शील पुरुषों को कुछ दुःसह नहि है और जैसें दुर्जन पुरुषोंको कुछ अकर्त्तव्य नहि हैं किन्तु सबहि कुकर्म करपाडते हैं और जैसें समदर्शीयों को कोई भी बन्धु अथवा पराया नहि हैं तैसे हि अति उदार पुरुषोंको कुछ भी अदेय नहि हैं किन्तु सबहि दे सकतेहैं ॥ १९ ॥

जो प्राणी स्वयं समर्थ होकर इस अनित्य शरीर से सत्पुरुषों की गान के योग्य निश्चल यश को नहि सम्पादन करता वह निन्दा के योग्य और सत्पुरुषों के शोच करने के योग्य है ॥ २० ॥

राजा हरिश्चन्द्र राजा रन्तिदेव उञ्छवृत्ति ब्राह्मण शिबिराजा राजा बलि व्याध कपोत इत्यादि बहुत से सत्पुरुष नाशवान् शरीर से निश्चल लोक को प्राप्त हो गये हैं ॥ २१ ॥

श्रीशुक उवाच ।

इस प्रकार जब जरासन्ध ने कहा तब उनके दीनता रहित आलापन से और धनुषकी प्रतिञ्चा के चिन्ह युक्त हाथ के पहुंचेन से तथा उनके दृढ आकारों से प्रथम द्रौपदी के स्वयंवर आदि में देखे भए यादना करने से उनको अधम क्षत्री जानकर जरासन्ध विचार करने लगा ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इन्द्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेः नु अहो नेति पाठे न श्रूयते इति ॥ २४ ॥

तं श्लाघते-विष्णव इति । शुक्रेण वार्यमाणोऽपि अत एव विष्णुरिति जानन्नपि ॥ २५ ॥

पतमानेन पतता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेनासम्पादयता कोन्वर्थः न कोऽपीत्यर्थः ॥ २६ ॥

एवं निश्चित्याऽऽह—हे विप्रा इति ॥ २७—२८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इदमप्यचिन्तयदित्याह—राजन्येति । बन्धवोपीत्यत्र बन्धयो इति पाठः क्वचित् ददामीत्यत्र ददानीति आत्मानं देहम् ॥ २३ ॥

नन्वेते किल शत्रव इति चेत्तह्येतीव सम्यगेव ज्ञात्वापि शत्रुभ्यो विप्रवेषमात्रेण विप्रत्वमभ्युपगम्याभीष्टदानतः श्रीबलेरिव कीर्तिविशेषसिद्धेरित्याह—बलेरिति युग्मकेन । विप्रव्याजेनेत्यत्र कश्यपादितिजातत्वेनास्य विप्रत्वमेव सङ्गच्छत इति चेत्तर्हीन्द्रस्यापि तत्प्रसङ्गेन क्षत्रियवृत्त्यातिन्द्रस्य तल्लुब्धेपक्षान्तरूपेन्द्रत्वाल्लिप्सया वामनाख्यस्य चैतन्यलुप्तमपि दम्भमयमेव विप्रत्वं गम्यत इति भावः । विष्णुनेति पश्चात्सर्वव्याप्तिस्मरणेन कीर्त्तिमेव निर्दिशति-विष्णव इति । प्रकर्षेण सम्यगात्मार्पणपर्यन्तमदात् यतो दैत्यराट् ब्रह्मत्वादिना दैत्यश्रेष्ठः महीमिति प्रथमत एव श्रीवामनदेवस्य तल्लग्नदानाभिप्रायेण ॥ २४-२५ ॥

नन्वेते तर्हि प्राणानेव याचेरन् नतु राज्यादीन् इतिचेद्दिष्ट्या देहोऽयं सफल एव वृतः तदन्यथा व्यर्थ एवेत्याह-जीवतेति । ब्राह्मणार्थायेति श्रीबल्यनुसारेण तद्वेषेष्वपि तदभ्युपगमात् तृतीयान्तं सर्वं देहस्य विशेषणं किम्वा पतता

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

देहेन कृत्वा नेहमानेन क्षत्रबन्धुना जीवता कोऽन्वर्थ इत्यन्वयः क्षत्रबन्धुनेति क्षत्रियकुलोत्पन्नेनेत्यर्थः । किम्वा ब्राह्मणार्थो सम्पादनमाधमत्वात् ॥ २६ ॥

उदारा दानशीलाः विचारेण महती वा मतिर्यस्य अतः प्रकर्षेण प्रसन्नमुखत्वादिनाह—श्रीकृष्णादीनां तत्तत्क्रमेणोक्तिर्यथापूर्वं चाकृचातुर्य्याभेच्छावात् "अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम्" इति सभापर्वोक्तश्रीयुधिष्ठिरादेशानुसारेण क्षितश्च विप्रा इति पूर्वाभिप्रायं सोपहासञ्च ॥ २७ ॥

एवं तस्य प्रतिज्ञां प्राप्य स्वयमेव प्रागल्भ्यात् भिक्षेत वृकोदर इत्युक्तवाक्यमतिक्रम्यापि याचते—युद्धमिति। हे राजेन्द्रेति तव युद्धं सम्मतमेवेति साज्ञा तत्र प्रवर्तयति यद्धीति निश्चये ततश्च यदि निश्चितमेव मन्यसे इच्छसीति चातुर्य्यासदेव द्रढयति युद्धार्थित्वे हेतुः राजन्या इति। अतो विप्रवदन्नकाङ्क्षिणो न भवामः अन्येति पाठे युद्धेतरकाङ्क्षिण इति ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इन्द्रस्य इन्द्रार्थम् ॥ २५ ॥

ब्राह्मणार्थाय जीवता विपुलं यशो नेहता इत्यन्वयः ईहता सम्पादयता ॥ २६—२८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

चिन्ताप्रकारमेवाह—राजन्यबन्धव इति चतुर्भिः। ब्रह्मलिङ्गानि विप्रवेषान् बिभ्रति दधति तथाप्येतेभ्यः दुस्त्यजमात्मानं देहमपि भिक्षितं याचितं ददामि ॥ २३ ॥

बलेरिति। इन्द्रस्येन्द्रार्थः श्रियं हर्तुमिच्छता विप्रव्याजेन विष्णुनैश्वर्याद्भ्रंशितस्य त्याजितस्यापि बलेर्वैरोचनस्याकीर्तिर्निर्दुष्टा दिक्षु व्याप्ता सा च न श्रूयते किं साऽधुनापि श्रूयत एवेत्यर्थः तं श्लाघते-विष्णव इति। जानन्नपि विचार्यमाणोऽपि शुक्रेणेति शेषः दैत्यराट् बलिः महीं प्रादाद्ददौ ॥ २४—२५ ॥

जीवतेति। पतमानेन विनङ्क्ष्यता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विमलं विपुलमिति पाठान्तरं यशः कीर्तिं नेहता नेहमानेन असम्पादयता कोऽन्वर्थः किं प्रयोजनं न किमपीत्यर्थः ॥ २६ ॥

इतीति, उक्तिमेवाह—हे विप्रा इति। वः युष्मभ्यमात्मनो मम शिरोऽपि ददामि ॥ २७ ॥

इत्थमुक्तः प्राह श्रीभगवान्—युद्धमिति। द्वन्द्वशो युद्धं द्वन्द्वयुद्धं देहि यदि मन्यसे इच्छसि तर्हि देहीति सम्बन्धः वयं राजन्या युद्धार्थिनः नत्वन्नकाङ्क्षिणो ब्राह्मणा इत्यर्थः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रूयते किं श्रूयते एवं हीतियोऽयम् इन्द्रस्य श्रियं बलाज्जिहीर्षता हर्तुकामेन विष्णुना ऐश्वर्याद्भ्रंशितस्य ॥ २४ ॥

वार्यमाणः शुक्रेणेति शेषः ॥ २५ ॥

यः क्षत्रबन्धुः पतमानेन देहेन विपुलं यशो नेहता नेहते नापादयति तेन ब्राह्मणार्थाय जीवता क्षत्रबन्धुना कोऽन्वर्थो भवति न कोऽपीति विचिन्त्य ॥ २६—२७ ॥

द्वन्द्वशो युद्धं द्वन्द्वयुद्धम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ ७—२१ ॥

तदेव सुरतरोर्वैलक्षण्येन तादृशानुग्रहवचनानुग्रहेण प्रसादमेव विशिष्य दर्शयति— श्रीभगवानुवाचेत्यादिना लोकपालाः अंशसम्भवा येषां ते। आत्मा अहमेवास्मि सेव्यत्वेन यस्य तेन मत्परायणेनेत्यर्थः। न कृतः मयि नार्पित आत्मा यैस्तैः ॥ २७-४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

राजन्यबन्धव एत इति ज्ञातवान् प्रायेण तैः सह युद्धमपि कृतमिति दृष्टपूर्वत्वात् क एते इत्यचिन्तयत् कथं क्षत्रिया एवं वेषेण समागता इति स्वधर्मनिरतत्वाभावात् राजन्यबन्धुत्वं मन्यन्ते बन्धुशब्दो वा अभेष्टक्षत्रियः आत्माऽदेयः क्षत्रियाश्चेत् स्वजात्यभिमानं परित्यज्य ब्राह्मणवेषेण याचका जाताः तदा अहं क्षत्रियाणां मानरक्षार्थं कपोतशिबिवत् आत्मानं शरीरमपि ददामि तद्वस्तुतो दुस्त्यजम् ॥ २३ ॥

कपटेन समागतस्य बलिरेव दातेति तस्य प्रशंसां सहृदयैः समागतां निरूपयति—बलेर्नु कीर्तिरिति। दैत्यांशत्वात् दैत्यकृतिरेव हृदये समायाति दिक्षु वितताति तादृशी कीर्तिस्तस्याभिलषितेति ज्ञापितम् अकल्मषा शुद्धभावयुक्ताः आत्मदानमभिप्रेत्याह—ऐश्वर्याद्भ्रंशितस्यापि सङ्कल्पस्तु प्रारम्भपूर्वमेव जातः त्रैलोक्यपरिग्रहश्च भ्रंशो बन्धनात्मकः तत्राप्येवं विष्णुर्ब्राह्मणरूपेणैव समागतः तेन मनुष्यता भक्तसद्धर्माणामनुवादः ॥ २४ ॥

एतदर्थमेव ज्ञात्वा दानमनुवदति—श्रियमिति। जिहीर्षतेन्द्रस्येति वक्तव्ये सन्धिरार्षः इन्द्रस्यार्थं राज्यश्रियं जिहीर्षते विष्णवे जानन्नपि प्रादादिति सम्बन्धः शुक्राचार्येण वार्यमाणोऽपीति यदि मां कश्चिद्वारयिष्यति तदापि दास्यामीत्येतदर्थमुक्तं दैत्यराडिति राजधर्मः 'प्रजाभिरपि कर्तव्य इति निश्चयः ॥ २५ ॥

ननु, तथापि याच्यास्तस्य तथा निश्चयः प्रतिज्ञा च पूर्वमेव तेन कृता तव तु बलिना दर्शनात् प्रतिज्ञाभावाच्च कथं न निवृत्त इत्याशङ्कायामाह—जीवतेति। अब्राह्मणार्थाय ब्राह्मणप्रयोजनाभावात्प्रयोजनान्तराय वा जीवता क्षत्रबन्धुना किं न किञ्चित्प्रयोजनान्तराय वा जीवता क्षत्रबन्धुना किं न किञ्चित्प्रयोजनमित्यर्थः। एवं जीवनवैकल्पमुक्त्वा देहवैकल्पमाह—देहेनेति। अत एव पतमानेन यस्योपचयस्तस्यापचय इति विपुलं यशो नेहता न सम्पादयता ब्राह्मणार्थप्राणत्व·

**असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ।**
**अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥ २९ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य स्वाभाविकं यैद्याःसश्रवणं स्वैतैरेवोपादिष्टं बलिधर्मास्तु स्मारिताः ॥ २६ ॥

एवं त्रिभिः कृत्वा दास्यामीति निश्चित्य प्रतिज्ञां कृतवानित्याह—इत्युदारमतिरिति । एवं बलिधर्माभिनिवेशेन उदारमतिर्भूत्वा प्रत्येकं तान् व्रियतामित्याह—दानसिद्ध्यर्थं तेषां ब्राह्मण्यं स्थापयति—हे विप्राः ! इति । कामं स्वाभिलषितं कदाचिदेते मया सह युद्धे अशक्ताः मच्छिरः प्रार्थयिष्यन्ति चेत् तदपि देयमित्याह—ददाम्यात्मशिरोपीति । वो युष्मभ्यं ब्राह्मणेभ्यः ॥ २७ ॥

एवं सत्यप्रतिज्ञस्य प्रतिज्ञां श्रुत्वा कर्त्तव्यमूढयोः भीमार्जुनयोः सतोः भगवांस्तन्मनोरथं दूरीकर्तुं कापट्यं दूरीकृत्य सत्यमाह—युद्धं नो देहीति । युद्धप्रार्थना सर्वथा युक्तेति भावः किञ्च युद्धविशेषं प्रार्थयितुमागता इत्याह—द्वन्द्वम् इति । एको भवान् त्वमस्मासु चैकः त्रयाणाम्मध्ये कोपि एतदपि न छलवाक्येनाङ्गीकारं कारयित्वा वदामः किन्तु यदि मन्यसे कथञ्चित् द्वन्द्वयुद्धे श्रद्धा भवतीति अर्थः ननु निर्बन्धेनायमर्थः स्वीकर्त्तव्यः अस्माकन्तु युद्धस्वीकारे युद्धानन्तरं जयपराजयनिर्णयः अस्वीकारेतु प्रथमत एवेति उभयथापि समीचीनम् इदमत्यन्तं स्वोत्कर्षव्यापकं वचनं किञ्च जगति द्वन्द्वयुद्धं कोपि कर्तुं न शक्त इति स्वत्समीपमागता इत्यभिप्रायेणाह—युद्धार्थिनो वयं प्राप्ता इति । देवदैत्यरक्षसामन्यतरत्वं भयात्त्वाङ्गीकरिष्यतीत्याशङ्क्याह—राजन्या इति । तर्हि ब्राह्मणवेषः किमर्थं कृत इत्याशङ्क्याह-नान्नकाङ्क्षिण इति । "ब्राह्मणो भोजनप्रियः" इति अन्नकाङ्क्षिणो ब्राह्मणा न भवामः अन्नार्थं वा न—ब्राह्मणवेषः किन्तु महान् क्षत्रियः अल्पेन सह युद्धं न करोति ब्राह्मणेन तु सह तदिच्छापूर्त्त्यर्थमल्पेनापि करोतीति ब्राह्मणवेष इत्यर्थः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु तर्हि कपटिभ्यः एतेभ्यः किं भिक्षितदानेन तत्राह बलेरिति । विप्रव्याजेन कपटिविप्रेणेत्यर्थः । अहो नेति पाठेन श्रूयते किम् अपि तु श्रूयत एव । इन्द्रस्येति बलेरित्यस्य विशेषणं । ततश्च विष्णवे विष्णुरिति जानन्नपि शुक्रेण वार्य्यमाणोऽपि ॥ २४-२५ ॥

पतमानेन पतनशीलेन देहेन ताच्छील्ये शानच् । विपुलं यशो न ईहता नेहमानेन क्षत्रबन्धुना कोऽर्थः । न कोऽपि प्रतापशीलं क्षत्रियाधमेन प्रयोजनं नास्तीत्यर्थः ॥ २६ ॥

इति एवं निश्चित्य ॥ २७-२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इन्द्रस्य श्रियं जिहीर्षता विष्णुना ऐश्वर्य्याद्भ्रंशितस्यापि नु अहो बलेः कीर्तिः श्रूयते इति सपादश्लोकान्वयः ॥ २४ ॥

शुक्रवाक्यात्त्वं विष्णुरिति जानन्नपि महीं प्रादात् ॥ २५ ॥

पतमानेन विनश्यमानेन क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेन जीवता कोन्वर्थः न कोपीत्यर्थः ॥ २६ ॥

इतीत्थमुदारमतिः ॥ २७—३१ ॥

---

भाषाटीका ।

उसने विचारा कि ये तीनो क्षत्री हैं परन्तु मेरे भय से ये तीनो ब्राह्मण के चिन्हों को धारण किये हैं इस वास्ते उनके अर्थ भिक्षा किए भए दुस्त्यज शरीर कोंभी मै दे दूंगा ॥ २३ ॥

ब्राह्मण का बहाना बनाकर इन्द्रके अर्थ त्रिलोकी सम्पत्ति को हरण की इच्छा वारे विष्णुने बलिको ऐश्वर्य्यते भ्रष्ट भी करदिया परन्तु बलिकी पवित्र कीर्त्ति सब विश्वान में व्याप्त सुनीजाती है ॥ २४ ॥

शुक्राचार्य्यने निवारण भी किया और आप भी जानता रहा कि यह विष्णु है इस परभी राजा बलि ने ब्राह्मणरूप धारी विष्णुके अर्थ पृथ्वी का दान करदिया ॥ २५ ॥

क्षण भंगुर शरीर करकें ब्राह्मण के अर्थ विपुलयश को नहि सम्पादन करने वारे अधम क्षत्रिपने जीते भए देहसे क्या प्रयोजन सिद्ध किया ॥ २६ ॥

इस प्रकार उदार मतिवारा जरासन्ध कृष्ण अर्जुन भीमसेन उन तीनोंनके प्रति बोला कि विप्रो अपने वाञ्छित पदार्थ को आप लोग मागो मैं अपने मस्तक कों भी आप के अर्थ देने वाराहों ॥ २७ ॥

श्रीभगवानुवाच ।

हे राजेन्द्र ! यदि आप यथेष्ट देनेकी इच्छा रखते हो तो हमारे अर्थ द्वन्द्व युद्ध दीजिये यह तीनो क्षत्री युद्धार्थी होकर आप के पास आए हैं हम अन्नकी काङ्क्षा वारे ब्राह्मण जाति नहि हैं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

राजन्यतामेव प्रपञ्चयति—असाविति ॥ २९—३० ॥

---

एवमावेदितो राजा जहासोच्चैः स्म मागधः।
आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ॥ ३० ॥
न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा।
मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥
अयन्तु वयसाऽतुल्यो नातिसत्त्वो न मे समः।
अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥
इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम्।
द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥
ततः समेखले वीरौ संयुक्तावितरेतरौ।
जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यतो मद्भिया समुद्रं शरणं गतः ॥ ३१ ॥

वयसाप्यतुल्यो नातिसत्त्वो नातिबलश्च अत एव देहेन मया समोऽतोऽर्जुनो योद्धा न भवेत् भीमस्तु भवेत् यतो मम तुल्यबलः ॥ ३२ ॥

प्रादाय दत्त्वेत्यर्थः ॥ ३३ ॥

समेखले युद्धाङ्गणे ॥ ३४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

हि निश्चये मात्र संशयं कुर्वित्यर्थः। कृष्णमिति त्वद्विध-प्राणाकर्षकमिति भावः। यतस्ते रिपुम् अनस्तद्वधार्थं मयैवेतो आनीताविति भावः ॥ २९ ॥

उच्चैर्जहास तेषां ब्रह्मवेषादिदैन्यदर्शनेनान्तः सन्तोषादुप-हासाच्च राजेति तन्मानिनस्तत्रासङ्कोचं दर्शयति—मागध इति तत्रामर्षो योग्यत्वेपि मगधदेशजानां तत्स्वभावत्वादिति भावः मन्दाः हे अल्पधीर्य्याः! तत एव ब्राह्मणवेषेण गमनादिति। भावः। तत्वतस्तु चिरयुद्धय इत्यर्थः। आकारप्रश्लेषेण सर्वो-त्कृष्टा इति वा ॥ ३० ॥

यतो यस्त्वामितिशेषः तत्त्वतस्तु अभीरुणेति छेदः अभीरुत्वा-देव विचित्रक्रीडार्थं स्वपुरीमपि हित्वा समुद्रं शरणं गृहं प्राप्तः कृतवान् इति ॥ ३१ ॥

अति सत्त्वो महाबलोपि वयसा तुल्यो न भवतीति तत्त्वार्थः ॥ ३२ ॥

प्रकर्षेण प्रसन्नमुखत्वादिना आ सम्यक् हस्तेऽर्पणादिना दत्त्वा महतीं भीमसेनस्य योग्यत्वात् अनुरूपेयमिति मननात् बहि-र्निर्गमः समेखलायां पौरजनेषु स्वमाहिमकौतुकदर्शनार्थ—म् ॥ ३३ ॥

संयुक्तौ युद्धेऽभिनिविष्टौ सन्तौ मिथो जघ्नतुः यतो रणे दुर्मदौ अतिमत्तौ ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

असाविति। असौ पार्थः पृथायाः पुत्रो भीमः तस्यैव वृकोदरस्य भ्राता अयोर्भीमार्जुनयोर्मातुलस्यापत्यं मां कृष्णं ते तव रिपुं जानीहि ॥ २९ ॥

एवमिति। उच्चैर्जहास अमर्षितः क्रुद्धः प्राह उक्तिमेवाह हे मन्दा इत्यादिना—हे मन्दास्तर्हि यदि युद्धं याचध्वं तर्हि इत्यर्थः वो युष्मभ्यं ददामि ॥ ३० ॥

त्वया सह न योत्स्ये तत्र हेतुत्वेन विशिनष्टि—भीरुणा युधि युद्धे विक्लवम् अधृष्टं चेतो यस्य तेन एतदेव स्मारयन्ति मथुरामिति ॥ ३१ ॥

अयं त्विति। अय वयसा अतुल्य इति छेदः अयमर्जुनस्तु वयसा न तुल्यः किन्त्वपटुः नातिसत्त्वः अनतिबलश्चातो न मम समः अतश्च योद्धा न भवेत् भीमस्तु मम तुल्यबलः अतस्तेनैव सह योत्स्य इति भावः ॥ ३२ ॥

इतीति। महतीं गुर्वीं गदां प्रादाय दत्त्वा पुराद्बहिर्निर्ज-गाम ॥ ३३ ॥

तत इति। समे निम्नोन्नत्यरहिते खले युद्धाङ्गणे संयुक्तौ वीरौ मागधभीमसेनौ रणे दुष्टो मदो ययोस्तौ जघ्नतुः ॥ ३४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बीभत्सुं बीभत्सुं प्रति स्पष्टयन्निर्दिशति—असाविति ॥ २९-३१ ॥
अतुल्यः नातिसत्त्वः न प्रशस्तपराक्रमः ॥ ३२—३४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यथा रूपमन्यथा तथा वागपि भविष्यतीत्याशङ्क्य सर्वप्रत्यभिज्ञार्थं स्वनामान्याह-असौ वृकोदर इति । वृको दशविधः प्राणः उदरे यस्येति बलञ्च सूचितं पार्थ इति स्वसम्बन्धार्थं कपटागमनार्थं वा न स्वप्रयोजकत्वाय तस्यैव भ्राता पार्थिवः अर्जुनोयं द्वितीयः हि युक्तश्चायमर्थः आकृतिसाम्यात् यदर्थमेतयोर्मातृनाम्ना निरूपणं तदाह—अनयोर्मातुलेयं मां कृष्णं जानीहि इति । तर्हि प्रसिद्धाः कथं न समागताः इत्याशङ्क्याह--ते रिपुमिति । रिपोः स्थाने कार्यपर्यन्तं वशेनैव स्थातव्यमिति नीतिः ॥ २९ ॥

एवं भगवता पार्थे निरूपिते अतिथिश्रद्धायां गतायां बालभावेनैते समागता इत्यवहेलेव तेषूत्पन्ना तत आगमनमाश्चर्यमिव मत्वा प्रथमतो हास्यमुत्पन्नमित्याह-एवमावेदित इति । आवेदनं स्वरूपख्यापनं यतो राजा राज्यमत्ता उच्चैर्जहासेति कथमेते अकस्माच्छत्रुगृहे पतिताः दैवगत्येति ननु भगवन्तं दृष्ट्वा भक्तिः कथं नोत्पन्ना वस्तुसामर्थ्यात् कथमवहेलेत्याशङ्कायामाह-मागध इति । देवदोषात् न सद्बुद्धिः तद्बुद्ध्या भवितुमर्हतीति आशङ्कायामाह-आहचेति । पूर्वं भगवदतिक्रमं श्रुत्वा अमर्षितः ततः क्रोधेन मारयिष्यामीति विचार्य स्वप्रतिज्ञाञ्च स्मृत्वा उभयथापि मारणं सम्भवतीति किमिति प्रतिज्ञा हातव्येति स्वस्य कार्यमुभयथापि समीचीनमेवेति तेषामेवोभयमथाऽसमीचीनमिति ज्ञापयितुं मन्दा इति सम्बोधनमाह—अस्तु वा तेषां मन्दत्वं स्वप्रार्थनान्तु पूरयाम्येवेत्याशयेनाह-युद्धं तर्हि ददामि व इति बहुवचनात् त्रयोऽपि भवन्त एकतो भवन्तु अहमेकत इति सूचितम् ॥ ३० ॥

तथापि द्वन्द्वतायां निर्बन्धो यदि तदाह-न त्वयेति । त्वया न योत्स्ये अभीरुणेति परमार्थः व्याजेन भीरुणेत्याह—भीरुत्वे कथमेवमागमनमित्याशङ्क्याह--युधि विक्लवचेतसेति । युद्धे चेत् स्थिरता बुद्धेर्भवेत् तदा क्षत्रियो युद्धसम्भवभूमिं परित्यज्य युद्धरहितभूमौ न गच्छेदित्याशयेनाह--मथुरां स्वपुरीं त्यक्त्वेति आपत्स्वपि स्वदेशो न त्याज्य इति ज्ञापयितुं स्वपुरीमिति मध्ये समुद्रस्थितिः समुद्रशरणागतिः दुर्गाश्रयवत् ॥ ३१ ॥

अर्जुनञ्च निराकरोति—अयमिति । अयन्तु योद्धा भवति परन्तु वयसाऽतुल्यः वयोऽत्र बलहेतुभूतम् अन्यथा भीमोपि वयसा न तुल्यः भीमार्जुनयोर्वर्षत्रयव्यवधानात् तदेव ज्ञापयितुमाह—नातिसत्वइति । यादृशे लग्ने उत्पन्ने तादृशो बलं भवति तच्च भीमबलभद्रमद्रराजादीनामेव अत एव न मे समः द्वितीयं तु बलं ममापि ब्रह्मण्यत्वादधिकमेवेति तन्मन्यते कनिष्ठ इति भीमस्यापि निराकरणे व्याजोत्तरत्वं भविष्यतीति तमङ्गीकरोति भीमस्तुल्यबलो ममेति वस्तुतस्तु नरनारायणौ परित्यज्य कालकन्यापुत्रत्वात् मुख्यप्राणं तुल्यं मन्यते सोपि दैत्यप्राणरूप इति जीवजीवेति वाक्यात् ॥ ३२ ॥

एतेषान्तु सर्वेषामभ्यनुज्ञा बलन्तु भगवतः कापि सम्भारणीयमिति तदङ्गीकारे जरासन्धकृत्यमाह—इत्युक्त्वेति । द्वन्द्वयुद्धं शरीरबलनिमित्तकमिति गदायामेव शरीरबलं योजयितुं शक्यमिति निरायुधेन युद्धं न युक्तमिति तस्मै महतीं गदां प्रादात् द्वितीयां तत्तुल्यां स्वयमादाय स्वरूपतो साधनतश्च फलरूपोभूत्वा स्थानबलं स्वगृहं स्वस्याधिकमिति स्वपुरं परित्यज्य युद्धार्थं पुराद्बहिर्निर्गतः ॥ ३३ ॥

ततो युद्धप्रकारं लौकिकमाह—ततः समेखल इति । कोमला भूमिः मेखलाशब्देनोच्यते असहायसमागमने हेतुः वीराविति संयुक्ताविति दर्शाविति समारम्भे तुल्यता निरूपिता वज्रकल्पाभ्यामिति गदामाहात्म्यं रणदुर्मदाविति ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जहासेति । ब्रह्मवेषरूपदैन्येनान्तस्सन्तोषात् । मन्दा इति हे दुर्बलाः ! युद्धपरिश्रमेणाकं मच्छिर एव कथं न गृह्णीतेतिभावः याचकविप्रवेषधारणादेव युष्माकं शौर्यम् अस्तीभूतमेव तदपि यदि तत् जिहासथ तर्हि युद्धं ददामि । अमन्दा इत्यर्थस्तु वाग्देव्याः ॥ ३० ॥

अभीरुणा महाबलवता त्वया सह युधि विक्लवेन विह्वलेन चेतसा युक्तो ऽहं न योत्स्ये स्वपुरीमपि त्यक्त्वा स्वेच्छयैव समुद्रं शरणं स्वगृहं गत इति वास्तवोऽर्थः ॥ ३१-३२ ॥

महतीमित्यतिपेलवत्वं तृणैर्मदपेक्षणीयेति बृहतीं त्वं गृहाण मम तु यथा तथा गदयापि युद्धं सेत्स्यतीति गूढगर्वव्यञ्जिका तन्योक्तिस्सूचिरिति भावः ॥ ३३ ॥

समेखले युद्धाङ्गणे ॥ ३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नातिसत्वो नातिबलः ॥ ३२ ॥

प्रदाय दत्वा ॥ ३३ ॥

समे निम्नोन्नतत्वादिदोषवर्जिते स्थले गदायुद्धरङ्गे ॥ ३४ ॥

---

भाषा टीका ।

श्रीकृष्ण हस्त से बताने लगे, कि-यह तो भीमसेन है और इस का छोटा भ्राता पृथा का पुत्र सर्वत्र विख्यात यह अर्जुन और इन दोनोंन के मामा का पुत्र तथा तेरा वैरि मो को तू श्रीकृष्ण जान लेओ॥ २९ ॥

इस प्रकार श्रीकृष्ण ने जताया राजा जरासन्ध बड़े ऊंचे स्वर से हँसा पश्चात् क्रोध होकर बोला कि हे मन्द बुद्धिओ ! यदि आपको द्वन्द्व युद्ध की हि काङ्क्षा है तो मैं युद्ध देता हूं ॥ ३० ॥

श्रीकृष्ण से बोला कि तेरे साथ युद्ध मै नहि करूंगा क्योंकि तू डरपोकना और युद्ध में विकल चित्तवारा है और तू वहि है कि अपनी मथुरा पुरी छोड़कर जो समुद्र के शरण में गया ॥ ३१ ॥

और यह अर्जुन तो अवस्था करके मोसे छोटा है तथा अति बलवान् भी नहि है इस वास्ते यह मेरे

मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ।
चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥ ३५ ॥
ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ।
गदयोः क्षिप्तयो राजन् दन्तयोरिव दन्तिनोः ॥ ३६ ॥
ते वै गदे भुजजवेन निपात्यमाने अन्योऽन्यतोंऽसकटिपादकरोरुजत्रून् ।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्व्योः ॥ ३७ ॥
इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ।
शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥
तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ।
निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥
एवं तयोर्महाराजन् युध्यतोः सप्तविंशतिः ।
दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥

भाषाटीका ।

समान नहि है इस लियें यह अर्जुन युद्ध करने वारा नहिं होगा भीमसेन तो मेरे समान वारा है इस लियें यह युद्ध करने वारा होगा ॥ ३२ ॥

जरासन्ध इस प्रकार कहकर अपनी बडी बोझा गदा कों भीमसेन के अर्थ देकर और दूसरी गदाकों आप लेकर पुरसें बाहिर निकलता भया ॥ ॥ ३३ ॥

पश्चात् नीचे ऊंचे प्रदेशरहित युद्धके निमित्त बनाए भए अखाडे में रणमें दुष्ट मदवारे दोनो वीर मिलकर परस्पर में वज्र के तुल्य गदान से प्रहार करते भए ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मण्डलानि गदायुद्धगतिभेदान् सव्यं दक्षिणञ्च यथा भवति तथा रङ्गिणोः रङ्गगतयोर्नटयोरिवेति निर्भयत्वेनोपमा ॥ ३५ ॥

चटचटेति गदयोः परस्पराघातशब्दानुकरणं वज्रस्य निष्पेषः पातस्तत्सदृशः युध्यतोर्दन्तिनोर्दन्तघातशब्द इव शुशुभे ॥ ३६ ॥

अंसकट्यादीनुपेत्य दीप्तो मन्युर्ययोस्तयोर्द्विरदयोर्गजयोरर्कशाखाभ्यां समं युध्यतोस्ते यथा चूर्णीभवतस्तद्वत् ॥ ३७ ॥

अपिष्टां चूर्णीचक्रतुः ॥ ३८ ॥

शिक्षा अभ्यासः बलं सत्त्वमोजः प्रभावः समानि तानि ययोस्तयोः ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

चरंति कदाचिदभिमुखादिकमपि चरतोः ॥ ३५ ॥

टीकायां तत्सदृशस्तच्छब्दसदृशः क्षिप्तयोः प्रहरणार्थमन्योन्यं प्रयुक्तयोः ॥ ३६ ॥

ते वज्रसारतुल्ये अपि अंसेति अत्र प्राण्यङ्गद्वन्द्वत्वेऽपि नपुंसकत्वाभाव आर्षः। यथाऽर्कशाखे चूर्णीभवतस्तथा चूर्णी बभूवतुः अन्यत्तैः तत्र गजयोरर्कशाखाभ्यां समं युध्यतोरित्यभूतोपमा ज्ञेयेति ॥ ३७ ॥

प्रहतयोर्नष्टयोः सतोः अयस्स्पर्शैः तत्तुल्यैः अपिष्टां मिथो गात्रं निर्घातो निरभ्रमहागर्जितं वज्रं वज्रपातः ततोऽपि परुषः तलेन करतलेन यत्ताडनं मिथः प्रहारः तदुत्थः ॥ ३८ ॥

एवं प्रहरतोरप्यक्षीणजवयोरिति श्रमाद्यभावेन युद्धानिवृत्तिरुक्ता ॥ ३९—४१ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जत्रव इति जत्रुष्वित्यर्थः । उपेत्य परस्परं सङ्गत्य जत्रादीन् उपेत्येति वान्वयः ॥ ३७—३९ ॥

अपिष्टां पेषणमकुर्वताम् ॥ ४०-४१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सव्यं दक्षिणञ्च यथा भवति तथा मण्डलानि गदायुद्धगतिभेदांश्चरतोः युद्धं शुशुभे रङ्गिणोः रङ्गगतयोर्गजयोरिवेति नटयोरिवेति पाठे निर्भयत्वे दृष्टान्तः ॥ ३५ ॥

ततश्चेति । चटचटेति गदयोः परस्पराघातानुशब्दानुकरणं वज्रस्याशनेर्निष्पेषः निष्पातस्तत्सदृशः युध्यतोर्दन्तिनोर्गजयोर्दन्ताघातशब्द इव शुशुभे ॥ ३६ ॥

ते वा इति । अन्योन्यतः परस्परं भुजवेगेन निहन्यमाने

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते गदे अंसादीनुपेत्य चूर्णीबभूवतुः तत्रांसः स्कन्धः दीप्तो मन्युर्ययोः गजयोरर्कशाखाभ्यां संयुध्यतोस्ते यथा चूर्णी भवतः तद्वदित्यर्थः ॥ ३७ ॥

इत्थमिति । अयस्सदृशैः कृष्णायसवन्निष्ठुरैः मुष्टिभिर्गदयोरपिष्टां चूर्णीचक्रतुः गदयोरिति कर्मणः शेषत्वविवक्षयाषष्ठी प्रहरतोरित्यत्र करणस्य कर्तृत्वविवक्षायां लटः शत्रादेशः "उगितश्च" ( ४-१-१४ ) इति ङीबभाव आर्षः । प्रहरतोर्भीममागधयोः ये गदे तयोरिति गजयोरिव मुष्टिभिः प्रहरतोः तयोः भीममागधयोः करतलताडनादुत्थः उत्पन्नः शब्दः निर्घातवज्रपरुषः वज्रनिर्घातवत्परुषः आसीत् निर्घातशब्दस्य पूर्वनिपात आर्षः ॥ ३८ ॥

तयोरिति । शिक्षाऽभ्यासः बलं सत्त्वम् ओजः प्रभावः समानि एतानि ययोस्तयोरक्षीणबलयोर्युद्धं निर्विशेषं निरुपममासीदित्यर्थः ॥ ३९—४१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रङ्गिणोः रङ्गगतयोः मण्डलं वल्गतोर्वा ॥ ३५-३६ ॥

अन्योन्ययोः परस्परसङ्गतयोः सकटिपादकरोरुजत्रून् प्रति निपात्यमाने अर्कस्य गुल्मस्य शाखे दीप्तमन्य्वोः प्रकाशितमन्युलक्षणयोः ॥ ३७ ॥

अयस्स्पर्शैः स्वमुष्टिभिर्व्यपिष्टां विपेषतुः अघ्नतुरित्यर्थः । प्रहतयोः सतोर्निर्घातवज्रवन्निष्ठुरः ॥ ३८—४१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तयोर्मण्डलानि गदायुद्धे प्रोक्तानि सव्यं दक्षिणं यथा भवति एवेत्युभयोरवधारणं चकारादुभयोः सभयं कदाचित् एवं चरतोर्युद्धं शुशुभे द्रष्टानां तद्युद्धं सुखदं जातमित्याह—नटयोरिवेति युद्धाभास एवायम् अनुकरणमिति शङ्कायामाह—रङ्गिणोरिति । रङ्गस्तयोर्वर्तत इति युद्धे रसयुक्तो नत्वाभासा इत्यर्थः ॥ ३५ ॥

लोकानां रसजननान्यथानुपपत्त्या आभास एव भविष्यतीत्याशङ्क्य युद्धे शब्दं वर्णयति—ततश्चटचटाशब्द इति । वज्रनिष्पेषो वज्रपातस्तत्सन्निभस्तत्सदृशः अन्योन्यं क्षिपतोरेव शब्दादपि महद्भयं सम्भवति सर्वेषां तेषां प्रहारेऽपि न तदिति माहात्म्यं गदयोः परित्यागशङ्काभावाय अपरित्यागाय वा दृष्टान्तः दन्तयोरिव दन्तिनोरिति ॥ ३६ ॥

गदयोरेवान्योन्यप्रहारो ननु देहयोरिति शङ्कां वारयितुं प्रहारं वर्णयति—ते वै गदे इति । गदापेक्षया देहोऽत्यन्तं कठिन इति देहस्पर्शे गदानाश उच्यते भुजजवेनान्यस्योपरि निपात्यमाने अंसकटिपादकरोरुजत्रून् षडङ्गान्युपेत्य चूर्णीबभूवतुः देहगदयोस्तारतम्यार्थं दृष्टान्तमाह—यथार्कशाखे हस्तिभ्यां निक्षिप्ते यथार्कवृक्षशाखे तदभावे भविष्यतीत्याशङ्क्याह—संयुध्यतोरिति । साधनमवयवा एवेति दृष्टान्तः द्विरदयोरिवेति नन्ववयवस्य कथं साधनत्वं प्रहारे सत्याप्यन्यथा सम्भवादित्याशङ्क्याह—तीव्रमन्य्वोरिति तीव्रो मन्युर्मन्युर्ययोः ॥ ३७ ॥

एवं गदायुद्धमुपसंहृत्य मुष्टियुद्धमाह—इत्थमिति । तयोर्गदयोः प्रहतयोः सत्यः तथापि नृवीरौ क्रुद्धौ सन्तौ अयःसदृशैः मुष्टिभिः अपिष्टाम् अन्योन्यं शरीरं पेषयामासतुः तत्रापि पूर्ववच्छब्दमाह—शब्दस्तयोरिति । तयोर्देहयोः सम्बन्धी शब्दः उभयोरिव गर्जनरूपो जातः वीररसेन तयोरेव वा वाक्शब्दः उभयोरपीत्येके अन्योऽपि तत्रशब्दो जात इत्याह—निर्घातवज्रपरुषैस्तलताडनोत्थायेति निर्घातो निरभ्रविद्युत्पातः तादृशपातयुक्तो वज्रः ततोऽपि यः परुषः तलताडनं च यो दृढः तन्मोत्थानं यस्य अनेन महाप्रहारो निरूपितः ॥ ३८ ॥

उपसंहरति—तयोरेवमिति । समतायां हेतूनाह—समशिक्षाबलौजसोरिति । युद्धे पराक्रमो बलं शिक्षा च हेतवः तत्तुल्यत्वात् युद्धे विशेषाभावः आवृत्त्याऽन्यबलक्षये युद्धे विशेषो भविष्यतीत्याशङ्क्याह—अक्षीणजवयोरिति । नृपेति सम्बोधनं विश्वासाय ॥ ३९-४१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मण्डलानि गदायुद्धगतिभेदान् सव्यं दक्षिणञ्च यथा स्यात् तथा नटयोरिति निर्भयत्वेन सदा शास्त्रविचक्षणत्वेन चोपमा ॥ ३५ ॥

चटचटेति गदयोः परस्पराघातशब्दानुकरणं । वज्रस्य निष्पेषः पातस्तत्सदृशः युध्यमानयोः दन्तिनोः दन्ताघातशब्द इव शुशुभे ॥ ३६ ॥

ते गदे अंसकट्यादीनुपेत्य चूर्णीबभूवतुः । दीप्तमन्य्वो गृहीतकोपयोः ॥ ३७ ॥

गदयोः प्रहतयोः सतोरपिष्टां परस्परं चूर्णीचक्रतुः ॥ ३८-४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सव्यं दक्षिणञ्च यथा भवति तथा मण्डलानि गदायुद्धगतिभेदान् चरतोः रङ्गिणोः रङ्गस्थयोः युद्धं शुशुभे इत्यन्वयः निर्भयत्वे दृष्टान्तमाह—नटयोरिव ॥ ३५ ॥

युद्धवेलायां दन्तयोः चटचटाशब्द इव गदयोश्चटचटाशब्दो बभूव कथम्भूतः वज्रस्य निष्पेषः पातस्तत्सदृशः ॥ ३६ ॥

अंसादीन् उपेत्य चूर्णीबभूवतुः ॥ ३७ ॥

इत्थं गदयोः प्रहतयोः चूर्णीकृतयोः मुष्टिभिः अपिष्टां शिथिलीचक्रतुः अंसादीनितिशेषः ॥ ३८—४१ ॥

---

भाषा टीका ।

कभी दक्षिण तर्फ कभी बांये तर्फ इस प्रकार गदा युद्ध के विचित्र मण्डलन के प्रति विचरने वारे जरासन्ध और भीमसेन का युद्ध इस प्रकार से शोभायमान भया कि जैसें रङ्ग भूमि में दो नटन का युद्ध शोभित होता है॥३५॥

हे राजन्! तदनन्तर चलाई भई दोनों गदान का शब्द इसप्रकार का भया कि जैसें दो लडते हुए हस्तियों के दांतन का शब्दहोता है और वज्रपात शब्द के समान अति भयंकर चट चट इस प्रकार का शब्द भया ॥ ३६ ॥

एकधा मातुलेयं वै प्राह राजन् वृकोदरः ।
न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव ॥ ४१ ॥
शत्रोर्जन्ममृती विद्वान् जीवितं च जराकृतम् ।
पार्थमाप्याययन् स्वेन तेजसाऽचिन्तयद्धरिः ॥ ४२ ॥
सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ।
दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥
तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ।
गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ ४४ ॥
एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ।
गुदतः पाटयामास शाखामिव महागजः ॥ ४५ ॥
एकपादोरुवृषणकटिपृष्ठस्तनांसके ।
एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥

### भाषा टीका ।

परस्पर में भुजान के वेगसे चलाई हुई दोनो गदा दोनोंन के कन्धा कमरि पाद कर ऊरू हाडीन में लगकर इस प्रकार चूर होगई कि जैसे अतिक्रोध वारे लडते हुए दो हस्तीन के अङ्ग में लगकर आककी डालीनका चूर होजाता है ॥ ३७ ॥

इस प्रकार जब दोनो गदा टूटगई तब क्रोध युत जरासन्ध और भीमसेन दोनो लोह के समान मुक्कान से परस्पर शरीर में मारते भए इस प्रकार परस्पर में हस्तियों के समान प्रहार करने वारे दोनोंनकी हतेरी कीच पेंटसे उत्पन्न भया शब्द गर्जना और वज्र पात के समान होता भया ॥ ३८ ॥

हे नृप ! तुल्य अभ्यास और तुल्य शरीर बल तथा तुल्य इन्द्रियबल वारे और इस प्रकार से प्रहार करने वारे और अक्षय बल वाले भीमसेन तथा जरासन्ध दोनोंन का युद्ध एक समानहि रहा ॥ ३९ ॥

हे महाराज ! रात्रि में परस्पर मित्र के समान एकहि मकान में दोनों रहते रहे इसी तरह वहा भीमसेन और जरासन्धको युद्ध करते २ सत्ताईस दिन व्यतीति होगए ॥ ४० ॥

---

### श्रीधरस्वामीकृतभावार्थदीपिका ।

जन्म शकलरूपं मृतिः पुनः शकलीभावस्ते विद्वान् जानन् जरानाम राक्षसी तत्कृतम् अचिन्तयत्कथमसौ शकलीभवेन्निति ॥ ४२ ॥

विटपं शाखां करेण विटपं गृहीत्वा हरिर्भीमस्य यथाऽहं विपटं पाटयामि तथा त्वमेनं विपाटयेति संज्ञया सङ्केतेनारिवधोपायं दर्शयामासेत्यर्थः ॥ ४३—४५ ॥

एकैकः पादादिर्ययोस्ते शकले ॥ ४६—४७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जरया राक्षस्या शकलद्वयसंयोजनेनैव कृतं पार्थमिति पृथा-पुत्रत्वेन स्नेहभरपात्रत्वं सूचितम् ॥ ४२ ॥

यत अमोघमकुण्ठितं सत्यं वा दर्शनं ज्ञानं यस्य सः इवेति वाक्यालङ्कारे ॥ ४३ ॥

यतो महासत्त्वो महाबलः किञ्च प्रहरतां वरः—युद्धे निपुण इत्यर्थः ॥ ४४ ॥

पादं शत्रोः ॥ ४५ ॥

पादादीनां यथोत्तरमूर्ध्वाङ्गत्वम् ॥ ४६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पार्थं भीमम् ॥ ४२—४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शत्रोरिति । हरिः शत्रोर्जरासन्धस्य जन्म शकलरूपं मृतिः पुनः शकलीभावः ते जरानाम राक्षसी तत्कृतं जीवितञ्च विद्वान् जानन् स्वेन तेजसा पार्थं अचिन्तयत् भीममाप्याययन्नुपबृंहयन् कथमसौ शकलीभवेत् ॥ ४२ ॥

सञ्चिन्त्येति । विटपं शाखान्तरं गृहीत्वा हरिर्भीमस्य यथा विटपं पाटयामि तथा त्वमेनं पाटयेति संज्ञया सङ्केतेनारिवधोपायं दर्शयामास ॥ ४३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्वीति । तस्याद्वैत्यं विदित्वा शत्रुं जरासन्धम् ॥ ४४ ॥

एकमिति । पदा पादेनाक्रम्य दृढमवष्टभ्यान्यं पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य महागजः शाखामिव गुदतः आरभ्य पादशाखान्ते विदारयामास ॥ ४५ ॥

एकेति । एकैकः पादादिर्ययोस्तयोस्ते शकले ददृशुः ॥ ४६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जरया राक्षस्या कृतशरीरशकलसन्धानात् जन्म तद्विघटनमरिणञ्च जानन् ॥ ४२ ॥

भीमस्यारिवधोपायं संज्ञया दर्शयामास केयं संज्ञेत्याह-विटपमिति ॥ ४२-४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आवृत्त्या जरासन्धस्य क्षीणा भविष्यतीति अभिप्रेत्य आवृत्तिः कृता तज्जरयाऽरिर्निर्मितोऽयमिति सर्वस्माद्बलं समाहृत्य जराऽसौ प्रयच्छतीति न कदाचिदप्यस्य बलक्षयः आसन्नत्वाद्भीमस्य नास्त्येव एवं तुल्यत्वं प्रयोजनं न सिद्ध्यतीति भगवान् भीममधिकबलं कृतवानित्याह-शत्रोरिति । शत्रोर्जरासन्धस्य सिद्धफलाच्छकलभूताज्जन्म शकलभूतस्यैव शकलयोश्च स्थैर्यं जराकृतेन सन्धानेनैव च जीवितं शकलयोः स्वरूपतो नाशाभावात् विश्लेषादेव मरणम् अनिबलादेव च विश्लेषः सम्भवतीति पार्थं स्वेन तेजसा आप्याययन् स्वकालशक्तिं तत्र स्थापितवानित्यर्थः ॥ ४२ ॥

कालकन्यापेक्षया कालशक्तेराधिक्यात् ततस्तस्य वधोपायमचिन्तयत् यतः सतां दुःखहर्त्ता ततो विश्लेषमेवोपायं विनिश्चित्य भीमस्य दर्शयामास चिन्तनमन्यथा न भवतीति ज्ञापनार्थमाह-अमोघदर्शनमिति । भीमस्य वा ज्ञानार्थं विशेषेण दर्शनं स्वयं भीमसम्मुखो भूत्वा विटपस्य कस्यचिच्छाखां मध्ये विपाटयन् संज्ञया अभिज्ञानेन पाटयामास एवमयं पाटनीय इति ॥ ४३ ॥

एवम्भगवत्कृपया ज्ञानक्रियाशक्तियुक्तः प्रहरतां मध्ये श्रेष्ठः अल्पयुद्धमुखेन तं भूमौ पातयामास पूर्ववदेव यथा तस्य शङ्का नोदेति मन्वेवं मारणमनुचितमित्याशङ्क्याह—शत्रुमिति । शत्रुः शातयिता, यथाकथञ्चिद्वध्यः पादयोः गृहीत्वा पातितो विक्लवता च जाता ॥ ४४ ॥

ततो मारणप्रकारमाह-एकं पादमिति । पादौ त्वविश्लिष्टौ एव अतो गुदतः पाटयामास पूर्वं तस्मिन् ब्राह्मणबुद्धिर्जातेति कालशक्त्या गृहीत इति न प्रयत्नं कमपि कृतवानिति ज्ञापयितुं दृष्टान्तमाह—शाखामिवेति । अनायासेन, दृष्टान्तो महागज इति ॥ ४५ ॥

ततस्तस्य वधः सर्वजनीनो जात इत्याह-एकपादेति । एकपादः पादादिर्यस्य पादः जानुः वृषणः कटिः पृष्ठः स्तनमसंकं भ्रूदृष्टि-



श्रोणि इत्येकरूपाणि भिन्नानि जातानि द्वादशाङ्गेष्वेव पराणि इत्याशयेनाह—बाहुरशिभूः कर्णश्च एको ययोः एतादृशे शकले सर्वा एव प्रजा ददृशुः ॥ ४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जन्म शकलरूपं मृतिः पुनः शकलीभावः । जरा नाम राक्षसी तत्कृतं जीवितं च तयोरेकीभावं विद्वान् जानन् पार्थं भीमं स्वतेजसैव प्रबलीकुर्वन् हरिरचिन्तयत् कथमस्य शकलीभावं भीमो जानीयादिति ॥ ४२ ॥

विटपं शाखां करे गृहीत्वा हरिर्भीमस्य नेत्रगोचरीभूतः सन् यथाऽहं विटपं पाटयामि तथा त्वमपीमं पाटयेति संज्ञया सङ्केतेनैव । इत्येवार्थः ॥ ४३-४५ ॥

एकैकः पादादिर्ययोस्ते शकले ॥ ४६—४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शत्रोः स्वभक्तद्विषः जन्म शकलरूपं मृतिः पुनः शकलीभावः तं जरा राक्षसी तत्कृतं जीवितं शकलयोरेकीभावञ्च विद्वान् जानन् पार्थं भीमं स्वतेजसा आप्याययन् बृंहयन् कथमसौ शकलीभवेदिति चिन्तयत् ॥ ४२ ॥

सञ्चिन्त्य तु एवमिमं पाटयेति संज्ञया सङ्केतेन विटपं शाखां पाटयन् इव भीमस्य अरिवधोपायं दर्शयामासेत्यन्वयः ॥ ४३ ॥

महासत्वो महाबलः ॥ ४४—४५ ॥

एकैकः पादादिर्ययोस्ते शकले समौ कायभागौ ॥ ४६—४७ ॥

---

भाषा टीका ।

हे राजन् ! एक दिन भीमसेन श्रीकृष्णको प्रति बोला कि हे माधव युद्धमें जरासन्धको जीतनेके वास्ते मैं समर्थ नहि हूं ॥ ४१ ॥

जब जरासन्धका जन्म भया रहा तब उसके शरीरके टुकडे उत्पन्न भए उन टुकडेन चौरास्तामें गिरवा दिये रहे वहां जरा नाम राक्षसीने दोनो टुकडेनको जोडकर दिये इससे वह जीपड़ा इस प्रकार जरासन्धको उत्पत्ति और जन्मको श्रीकृष्ण जानते रहे और यहभी जानते रहे और कि दोनों जुडे हुए टुकडानके चीरनेसे इसका मरण होगा इस वास्ते निज तेजसे भीमसेनका पोषण करत श्रीकृष्ण भगवान् चिन्तवन करने लगे ॥ ४२ ॥

अमोघ ज्ञान सपन्न श्रीकृष्ण भगवान् चिन्तवन करके वृक्षकी शाखाको चीरकर भीमसेनको इसरा किया कि जैसे मैने इस शाखाको चीरते हैं तैसे तूभी जरासन्धको चीरदेर इस प्रकार जरासन्धके वधके उपायको भीमसेनके वास्ते दर्शाने भए ॥ ४३ ॥

महा बलवान और प्रहार करने वारेनमें श्रेष्ठ भीमसेन श्रीकृष्णके प्रताप अब उपायको जानकर जरासन्धके दोनों पांव पकड़कर उसको भूमि पर गिरा देता भया ॥ ४४ ॥

हाहाकारो महानासीन्निहते मगधेश्वरे।
पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥
वीर० पाठः ( कृष्णेन च परिरब्धो विरुजो ऽभूद्वृकोदरः। )
सहदेवं तत्तनयं भगवान् भूतभावनः।
अभ्यषिंचदमेयात्मा मगधानां पतिं प्रभुः।
मोचयामास राजन्यान् संरुद्धा मागधेन ये ॥ ४८ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धे जरासन्धवधो नाम
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

भाषा टीका।

जरासन्ध के एक पांव को भीमसेन ने अपने पांव से अच्छी तरह दवाय कर और दूसरे पांव को दोनो हाथन से पकड कर जैसे हस्ती वृक्ष की डाली को चीर देता है तैसेइ हि भीमसेन ने जरासन्ध को गुदा से लेकर बीचमें से चीर दिया ॥ ४५ ॥

उस के शरीर के दो टूक होगये उन दोनोंमे मे एक तर्फ का पांव एक तर्फ का ऊरू एक तर्फ का अण्डकोश एक तर्फ की कटि एक तर्फ की पीठ एक तर्फ का स्तन एक तर्फ का कन्धा एक तर्फ की भुजा एक तर्फ का नेत्र एक तर्फ की भृकुटि एक तर्फ का कर्ण इस प्रकार के दो टुकडान को प्रजाओं ने देखे ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दुर्वृत्तत्वादसौ हतो न तु राज्याभिलाषेणेति दर्शयन्नाह- सहदेवमिति ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पूजयामासतुः साधु साध्वित्येवं वीजनादिना च सम्मानितवन्तौ जयाच्युताविति नामविशेषग्रहणं तत्साहाय्ययोग्यत्वज्ञापनाय जयस्य पूर्वनिपातस्तेषां माहात्म्याय च तत्र प्रति स्वयमच्युतेन स्वतोपि मानप्रदानाद्भ्यर्हितत्वसाम्यात् ॥ ४७ ॥

सहेति सार्द्धकम्। मागधानां पतित्वेनाभ्यषिञ्चत् कुतः भगवान् सर्वैश्वर्य्यपूर्णः भूतभावनः सर्वजगत्स्रष्टा अमेयात्मा सर्वव्यापकः प्रभुः सर्वेषामेव स्वामी चेति सर्वविभूतिमत्तया स्वयमेव तादृशराज्यपरार्द्धकोटिसृष्टिशक्तिमत्वात् तुच्छातितुच्छे तद्राज्ये ऽभिलाषाभावादित्यर्थः। यद्वा भगवानिति तद्राज्यादौ अपेक्षाराहित्यात् किञ्च भूतभावनः सर्वभूतभावनः सर्वभूतपरिपालक इति दयालुत्वात् किञ्च अमेयात्मा अपरिच्छिन्नबुद्धिः स्वयमभिषेके कृते त्वनेन तच्छ्रद्धया मदाज्ञापरिपालनादिना राजसूयादौ पाण्डवानां साहाय्यं कुर्य्यादित्याशयात् किञ्च प्रभुः समर्थः किम्वा जगदीशः तस्यैव तद्योग्यत्वादिति भावः। विशेषणानामेतेषां यथोत्तरमभिषेकहेतुत्वं श्रेष्ठम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हाहाकार इति। मगधेश्वरे निहते सति जयाच्युतौ जयोऽर्जुनः भीमं परिरभ्यालिङ्गय पूजयामासतुः बहुमन्येतां तत्र जयोऽर्जुनः कृष्णेन परिरब्ध आलिङ्गितः हेतुगर्भमिदं तस्माद्विरुजो विगतग्लानिर्बभूव ॥ ४७ ॥

दुर्वृत्तत्वादसौ मागधो हतो न राज्याभिलाषेणेति दर्शयन्नाह— सहदेवमिति। अमेयात्माऽपरिच्छेद्यस्वरूपस्वभावः। भूतानि लोकान् भावयत्यभ्युदयतीति तथा हेतुगर्भमिदम् अतस्तत्तनयं जरासन्धपुत्रं सहदेवाख्यं मगधानां देशानां पतिमभ्यषिञ्चत् तेषामधिपतिं चकारेत्यर्थः। ततो मागधेन ये सन्निरुद्धाः तान् राजन्यान् मोचयामास ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
( श्रीविजयध्वजतीर्थटीका चाशीतितमोऽध्यायः ॥ ८० ॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—हाहाकार इति । महान् सर्वैः कृतत्वात् बद्धानामपि यथा श्रवणं भवति भगवान् तथा सम्पादितवान् मगधेश्वरमरणानन्तरमेव तथा भवतीति बोधयितुं तदानन्तर्यमनुदितं ततो भीमसेनो गृहीतुं ध्वाजेनालिङ्गने प्रशंसाञ्च कृतवानित्याह—पूजयामासतुर्भीममिति । अर्जुनोपि भगवद्वशा इति द्वयोर्निरूपणं स्तोत्रेण क्षये जाते तेजोपगच्छतीति स्तुतिः जयोऽर्जुनः अच्युतश्च उभयोर्गुणः तस्मिन्न गच्छतीति तथायं वृतः ॥ ४७ ॥

ते अराजकराज्ये स्थितिरयुक्तेति अन्यस्तस्मिन् देशे स्थापयितुमशक्त इति अनुकूलस्तत्पुत्र इति सहदेवं तत्तनयं तत्रत्यानां भूतानामनुकम्पार्थमभ्यषिञ्चत् यतो भगवान् सर्वसमः ननु शत्रुं हत्वा तद्राज्यं स्वयं प्राप्तं कथं तत्तनयाय दत्तवानित्याशङ्कामाह -अमेयात्मेति । भगवान् हितमहितं वा करोतीति न कस्यापि मेयः आत्मा यस्य मागधानां स्वभावतोपि स पतिर्भवति तस्य विपरीतत्वेपि न काचित् क्षतिरिति ज्ञापयितुमाह विभुरिति यदर्थमेतावत् कृतं तदाह मोचयामासेति ननु येन निमित्तेन धृताः तदपगमाभावे कथं मोचनमित्याशङ्क्याह मागधेन संरुद्धानिति मागधस्यैव मृतत्वात् हेत्वपगमः सुतरामेव जात इत्यर्थः ॥ ४८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
त्रयोविंशाध्यायविवरणम् ॥२३॥७२॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिण्याम् हर्षिण्यां भक्तचेतसाम् ।
अत्र द्विसप्ततितमो दशमे ऽजनि सङ्गतः ॥ ७२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्विसप्ततितमाऽध्यायार्थप्रकाशः ॥७२॥

भाषा टीका ।

जरासन्ध के मरने पर महान् हाहाकार मचगया और श्रीकृष्ण तथा अर्जुन दोनो भीमसेन का आलिङ्गन कर उस की बडाई करते भए ॥ ४७ ॥

अपरिमित स्वरूप तथा प्राणियों के पालन कर्त्ता श्रीकृष्णभगवान् जरासन्ध के पुत्र सहदेवको मगधदेशों के पति करकें अभिषेक करते भए औरजराधन्ध ने जिन राजानकों रोकराखे रहे उनको श्रीकृष्णने छुडवादिये॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें बहत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ।

---

### श्रीशुक उवाच ।

अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ।
ते निर्गता गिरिद्रोण्यां मलिनामलवाससः ॥ १ ॥
क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ।
ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥
श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥
पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ।
किरीटहारकटककटिसूत्राङ्गदाञ्चितम् ॥ ४ ॥
भ्राजद्वरमणिग्रीवं निवीतं वनमालया ।
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥
जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः ।
प्रणेमुर्हतपाप्मानो मूर्द्धभिः पादयोर्हरेः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततस्त्रिसप्ततितमे मोचयित्वा नृपान् हरिः ।
राजार्हभोगैः स्वान् देशान् प्रस्थाप्य पुनरागमत् ॥
अस्मिन्ननुजरासन्धवधात्तद्गुप्तभूपतीन् ।
विमोच्य कृपया कृष्णो निजरूपमदर्शयत् ॥

ये निर्जिता जरासन्धेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गताः सन्तो घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥

क्षुधा क्षामाः कृशाः संरोधेन परिकर्शिताः क्लेशिताः ॥ २-४ ॥

भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यस्या सा ग्रीवा यस्य तम् निवीतं कण्ठलम्बितया श्यामम् पिबन्त इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ॥ ५ ॥

रम्भन्तः परिरम्भमाणा इव ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अयुते इति सार्द्धकम् । मलिन इतीन् प्रत्ययान्तम् ॥ १ ॥

ददृशुरिति त्रिकम् । घनश्याममिति वर्णमुक्त्वा तेन शोभितं तत्प्रसङ्गाद्वस्त्रं चोक्त्वा विलक्षणानि लक्षणान्याह—श्रीवत्सेत्यादिना । पद्मस्य गर्भः अन्तर्दलं तत्तुल्ये अन्तारुणे ईक्षणे यस्य तं चारु अवयववर्णाभ्यां वयःसन्धिशोभया च सुन्दरं सदा स्मेरत्वेन प्रसन्नञ्च वदनं यस्य तम् अधुना भूषणादीनि च वर्णयन्नुत्तमाङ्गस्य मुख्यशोभाहेतुत्वेन तत्प्रसङ्गादादौ कुण्डलं वर्णयति—स्फुरन्ती स्वर्णरत्नादिना श्रीगण्डाभ्यां च राजन्ती मकराकृतिनी कुण्डले यस्य तम् ॥ २—३ ॥

उपलक्षितम् उपलक्षणरूपैस्तैः परिचितं दक्षिणाधःकरमारभ्य दक्षिणावर्त्तेनाधोक्षजस्य लक्षणमिदं पद्मं कौमोदकीं शङ्खचक्रं धत्तेऽप्यधोक्षज इति सिद्धार्थसंहितातः श्रीकृष्णत्वे च ब्रह्मलिङ्गधरत्वे च तस्य तैस्तथा दर्शनं भक्त्यनुरूपाविर्भावरूपत्वात् किरीटादीनामक्रमो नानाद्रष्टीनामक्रमात् ॥ ४ ॥

चिरं क्षुत्तृष्णादिपीडितानां दैवादमृतादिप्राप्त्येव सद्यः दुःखितानां तेषां सहसा श्रीभगवत्सन्दर्शनेनात्युत्तमा तस्मिन् परमासक्तिमाह—पिबन्त इति सार्द्धकेन । इवशब्दः सर्वत्रोत्प्रेक्षायां सा च परमासक्तिं द्योतयति तस्याः प्रवृत्तिस्तु चक्षुषोर्विस्तारप्राप्त्या जिह्वायाः श्लाघावचनाय चासनादिना तत्सौरभ्यमत्तयोर्नासयोः फुल्लत्वादिना बाह्वोर्मिथस्तद्दर्शनायैव मुहुश्चालनादिना ज्ञेया अत्र बाह्वोश्चालनमात्रेण वहतामिव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गतयोर्ध्रुतुल्योक्तिः ज्ञानेन्द्रियगणेनैतयोरुक्तिस्त्वगिन्द्रियधर्मस्पर्शो मुख्यस्य तत्रैव प्रधानत्वेन श्रवणयोरनुक्तिस्तावत्तद्वचनाद्यभव-नाऽश्वतो भावशेन तत्तत्तुष्ट्यावेशाद्धूर्यत्वेन च तेषां ताद-शत्वे हेतुः इतः प्रागेवबहुतरोवचनादिना प्रपन्ना नाशितः पाप्मा सर्वोऽपि तदनालाकं हत्तुदरोऽपि वैस्ते यद्वा इतस्तच्छ्रवणादेव पाप्मा वैस्ते ॥ ५—९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

रम्भन्त परिरम्भं कुर्वन्तम् ॥ ६—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं मोचयामासापिच तैः संस्तुतस्तान् बहुमान-यामास चेत्याह त्रिसप्ततितमेन—अयुते इत्यादिना । हे अयुते अष्टौ शतानि च ये राजन्या युद्धे जरासन्धेन लीलया अनायासेन निर्जिताः गिरिद्रोण्यां सन्निरुद्धाश्च ते ततो निर्गताः सन्तो घन इव श्यामं श्रीकृष्णं ददृशुरित्युत्तरेणान्वयः कथंभूताः मलिनाः अभ्यङ्गोन्मर्दनस्नानाद्यभावान्मलानि मलिनानि वासांसि येषां ते ॥ १ ॥

क्षुधा क्षामाः कृशाः शुष्काणि वदनानि येषां ते संरो-धेन परिकर्शिताः क्लेशिताः ॥ २ ॥

कथम्भूतं श्रीवत्सोऽङ्कश्चिह्नं यस्य चारु सुन्दरं प्रसन्नं च वदनं यस्य स्फुरन्ती मकराकारे कुण्डले यस्य पद्मं रेखात्मकं हस्ते यस्य तं तथा गदादिभिरुपलक्षितं स्वासाधारणैर्धृतपद्मादिभि-श्चतुर्भिर्बाहुभिरुपलक्षितं यथा किरीटादिभिराचितं युक्तम् ॥३-४॥

भ्राजमानो वरमणिः कौस्तुभो ग्रीवायां यस्य तं वन-मालया निवीतं कण्ठलम्बितया व्याप्तम् ॥ ५ ॥

पिबन्त इवेत्यादिनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः चेतसा रम्भन्त इव परिरम्भमाणा इव हरन्त इवेति पाठान्तरम् इत्थं तेषां भगवति प्रेमातिशयः प्रदर्शितः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जरासन्धरोधादिलक्षणतपसा प्रसन्नो भगवान् पञ्चज्ञानसाध्यं स्वरूपं दर्शितवान् तदुपासकानां भक्त्यतिशयजननार्थंकृतमिति ज्ञात्वा तन्माहात्म्यं कथयत्वस्मिन्नध्याये, तत्रादौ तत्सङ्ख्यां निर्दि-शति । अयुतेति । गिरिद्रोण्यां निरुद्धास्ततो विनिर्गताः ॥१-४॥

निवीतं पर्याप्तम् ॥ ५ ॥

चेतसा आलिङ्गनार्थमीहन्तः प्रेक्षमाणा इव ॥ ६—९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १...७ ॥

पिबन्त इत्यादि ॥ ५—३५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १...३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्विंशे विमुक्तानां ज्ञानं संमोचनं तथा ।
विषयात्मसमृद्धिश्च प्राह कृष्ण इतीर्यते ॥
स्वधर्मैश्चेव युक्ताः स्युर्निरोधस्तत्रानर्थकः ।
अतः स्वालकिसिद्ध्यर्थं ज्ञानराज्ये ददौ हरिः ॥

पूर्वाध्यायान्ते निरुद्धा राजानो मोचिता इत्युक्तं तेषाम् मुक्तानां भक्त्याधिक्येन पूर्ववत् स्थितिर्निरूप्यते तत्र प्रथमं निरोधस्था-नात् निर्गममाह—

एकविंशतिसाहस्रे चत्वस्तेषां हि सम्मतः ।
ततः शतद्वयं न्यूनास्तेन पूर्वं न मारिताः ॥

एतत् ज्ञापयितुं सङ्ख्यामाह—अयुते द्वेशतान्यष्टाविति । उक्त-बन्धनबन्धनेऽपि शतद्वयं न्यूनता एतावतामेकत्र कथं स्थिति-रित्यत्र हेतुमाह—लीलया युधि निर्जिता इति । गिरिद्रोण्याः सकाशात् निर्गताः मलिनाः असंस्कृतदेहाः मलवाससोऽप्रक्षा-लितवाससः अनेन बहिःस्थितिरधमा निरूपिता ॥ १ ॥

अन्तः स्थितिं निरूपयति—क्षुत्क्षामाः रोगाद्यभावेऽपि भक्ष्याभा-वात् कृशाः अन्तः सन्तोषाभावात् शुष्कवदनाः इन्द्रियाणां पीडामाह—संरोधपरिकर्शिता इति । परितः कर्शिताः क्लिष्टाः सर्वेन्द्रियेषु जातक्लेशाः एवं बाह्याभ्यन्तरभेदेन परमापद-मापन्नाः तत्क्षणादेव सर्वनिवृत्यर्थं भगवन्तं ते ददृशुरित्याह ददृशुस्ते घनश्याममिति । यादृशमात्मानं भगवान् प्रदर्शित-वान् द्वादशलक्षणोपेतं तादृशमनुवर्णयति—घनश्यामादिभिः पदैः । मनसो हि द्वादशवृत्तयः क्लिष्टा इति सर्वक्लेशनिवृत्त्यर्थं द्वादशधर्मप्राकट्यं तत्र शुष्काणामाप्यायनार्थं घनवत्, श्याम-मिति नीलमेघः आप्यायकः अनेन देहक्लेशो निवारितः अथवा कृशव्यावृत्त्यर्थमाह—पीतकौशेयवाससमिति । पीतं वासो हि वेदात्मकं तत्रापि तत्कर्मप्रवृत्तजीवकोशनाशेन प्रादुर्भूतं निवृत्ति-बोधिका श्रुतिरिति यावत् अनेन ज्ञानसहिता वागाविर्भ-वतीति सूचितम् ॥ २ ॥

ततो वसनक्लेशाभावाय अपामोषधीनाञ्च रसरूपं पद्मं हस्ते प्रदर्शनार्थं यस्य ततो ममेत्यहङ्काराभिनिवेश इति नाशि-वृत्त्यर्थं गदाशङ्खचक्रैः उपलक्षितः स्त्रीपुंनपुंसकहेतिप्रयोगेण त्रिविधानामपि छेदनं एतावन्त एव हि ममताविषयाः उप-लक्षणत्वन्तु सकृदेव निराकरणात् पुनः प्रयोजनाभावं ज्ञापयति किरीटादिभिः पञ्चविधैरलङ्कारैः पूजितश्चक्षुः क्लेशाभावाय पञ्च-विधं हि रूपमिति नीलश्वेतपीतरक्तचित्रभेदात् अन्येषामत्रैवा-न्तर्भावः ॥ ३ ॥

श्रीवत्साङ्कमिति । पादक्लेशाभावः ब्रह्मणः पादक्लेशः तत्रैव निवारितः चतुर्बाहुमिति हस्तयोः क्रियया द्विगुणीकरणात्

**कृष्णसन्दर्शनाह्लादध्वस्तसंरोधनक्लमाः ।**
**प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पद्मगर्भवदरुणं ईक्षणे यस्येति मनसः क्लेशाभावः नासिकयोर्वा चारु प्रसन्नं वदनं यस्येति सर्वकाममपूर्णकायक्लेशनिवृत्तिः स्फुरन्मकरकुण्डलमिति श्रोत्रस्य ॥ ४ ॥

भ्राजत्प्रकाशमानो यो मणिः सग्रीवायां यस्येति ज्ञानक्रिययोर्मध्यस्थत्वेन श्रीवत्सकृतक्लेशो निवारितः निवीतं वनमालयेति व्यापिकया कान्त्या त्वक्स्पर्शक्लेशो निवारितः तादृशं भगवन्तं दृष्ट्वा सर्वेन्द्रियाण्यहमहमिकतया रूपरसगन्धस्पर्शार्थे प्रवृत्ता इति वदन् तेषां भगवति सर्वभावप्रवृत्तिमाह—पिबन्त इव चक्षुर्भ्यामिति । चक्षुषा हि रूपलावण्यामृतं पीयते दर्शनं बहिः स्थितावेव पानमन्तःप्रवेशनमिति विशेषः । उभाभ्यां पानं द्विहस्तभोजनवदत्यासक्तिबालभावं बोधयति रसग्रहणार्थमाह लिहन्त इव जिह्वयेति गौर्वत्समिव तथाभूतं भगवन्तं दृष्ट्वा तेषां तथाभावो जात इत्यर्थः ॥ ५ ॥

गन्धानुभावार्थमाह-जिघ्रन्त इव नासाभ्यामिति । पूर्ववद्व्याख्येयं स्पर्शार्थमाह रम्भन्त इव बाहुभिरिति । रम्भणमालिङ्गनं परिरम्भ इति यावत् अत्र बहुवचनं नानाविधस्पर्शग्रहणार्थमवयवगतमभिप्रेतं चतुर्भुजत्वलक्षणसारूप्यदानं वा बोधयति एवं लौकिकभावेन भगवन्तमात्मसात्कृत्वा ततस्तुताः सन्तः क्लेशनाशे ज्ञानोदये विदितभगवदैश्वर्याः नमो नम इत्येतावत् सदुपशिक्षितमिति शास्त्रानुसारेण कर्तव्यान्तराभावात् स्नेहपूर्वकं नमस्कारं कृतवन्त इत्याह—प्रणेमुरिति । प्रशब्देन स्नेहं बोधयति नमोनम इति वीप्सया स एवाभिप्रेत इति नन्वेतादृशी बुद्धिः कथमेतेषां सञ्जाता तादृशा एवेति न मन्तव्यं निरुद्धत्वादित्याशङ्क्याह—हतपाप्मान इति । दर्शनेन भोगस्मरणाभ्यां च त्रिविधमपि पापं नष्टं ततः शुद्धाः सन्तः स्वस्य ज्ञानरूपमात्मानं परब्रह्मण्यक्षरे भगवच्चरणारविन्दे योजयन्त इवान्तर्याम्यवतारभेदेनोभयत्राप्यन्तर्बहिः सायुज्यार्थे पादयोः मूर्धभिरित्युक्तं नृपा इति विचक्षणाः अनेनैव राज्यभोगार्थभावः सूचितः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रिसप्ततितमे भूपैर्मोचितैर्वीक्षितः स्तुतः ।
भक्तिप्रदो हरिः सन्तोष्यैताम् पार्थपुरीमगात् ।

ये निर्जिता जरासन्धेन निरुद्धाश्च ते गिरिद्रोण्याः सकाशान्निर्गताः ॥ १ ॥

भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्य तं निवीतं युक्तम् ॥ २-६ ॥

रम्भन्तः परिरम्भमाणाः ॥ ६-७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विमुक्तैः राजभिः संस्तुतो भगवान् तान् बहुसत्कृत्य प्रेषयामास स्वयं सहदेवेन पूजितः पार्थाभ्यां सहेन्द्रप्रस्थमगादिति त्रिसप्ततितमे वर्णयति—अयुते इति । गिरिद्रोण्याः सकाशात् निर्गतास्ते घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥

क्षुधा क्षामाः कृशाः संरोधेन कर्शिताः क्लेशिताः अत एव शुष्कवदनाः ॥ २ ॥ — ॥ ४ ॥

भ्राजत् भ्राजमानो वरमणिः कौस्तुभो ग्रीवायां यस्य वनमालया निवीतं युक्तं पिबन्त इवेत्यादीना हरेः पादयोः मूर्धभिः प्रणेमुरित्युत्तरेण सम्बन्धः ॥ ५ ॥ — ॥ ७ ॥

भाषाटीका ।

जरासन्ध ने युद्ध में लीलाकर के हि जीते हुए बीस हजार आठसो राजा लोग गिरिद्रोणी दुर्ग से निकसे वे मलिन रूप धारे तथा मलिन वस्त्र धारण किये और क्षुधा करके दुर्बल तथा जिन के कण्ठ सूख रहे और रोकने से क्लेश को प्राप्त होते भए ॥ १ ॥

उन राजा ओं ने श्रीकृष्ण का दर्शन किया वह श्रीकृष्ण मेघ के समान श्याम सुन्दर पीताम्बर धारण किये श्रीवत्स चिह्नधारी चतुर्भुज कमल के मध्य भाग के समान रक्त धारे ॥ २ ॥

मनोहर प्रसन्न मुखारविन्द वारे स्फुरायमान मकराकृति कुण्डल धारण किये हस्त में कमल के पुष्प को धारण किये शंख चक्र गदा आदि से शोभायमान ॥ ३ ॥

करीट हार कड़े कटि किंकिणी बाजू बन्दों से शोभायमान प्रकाशमान कौस्तुभ मणि को कण्ठ में धारण किये वनमाला धारण किये एतादृश श्रीकृष्ण का दर्शन उनोंने किया ॥ ४ ॥

नेत्रों से मानो पान करते हैं । जिह्वा मानो आस्वादन करते ॥ नासिकाओं से मानों सूंघते हैं । भुजान से मिलते हैं ॥ इस प्रकार भगवान् के दर्शन से नष्ट पाप वारे वे राजा लोग मस्तकों से श्री हरि के दोनो चरणों मे प्रणाम करते भए ॥ ५ ॥

श्री कृष्ण के सम्यक प्रकार दर्शन ते जो परमानन्द भया उस से उनका बन्दीखाने का दुःख नष्ट होगया इसलिये वे राजालोग हाथ जोड कर सुन्दर मधुर वाणी बोले श्री कृष्ण कि स्तुति करते भए ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णदर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते ॥ ७ ॥

राजान ऊचुः।

नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय।
प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ८ ॥
नैनं नाथानुसूयामो मागधं मधुसूदन।
अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥
राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः।
त्वन्मायामोहितोऽनित्या मन्यन्ते सम्पदोऽचलाः ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

संरोधाद्व्यथितानस्मान् घोरायाः संसृतेरपि पाहि मोचय॥८॥

ननु भवन्तो जरासन्धासूयाविष्टा इहामुत्र भोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशङ्क्य सम्प्रति न वयं तथाभूता इत्याहुः—नैनमित्यष्टभिः। हे नाथ! वयमेनं नान्वसूयामः अन्वनु दोषदृष्ट्या न पश्यामः कुत इत्यत आहुः अनुग्रह इति यद्यस्मात् ॥ ९ ॥

एतदेव व्यतिरेकेणोपपादयन्ति—राज्यैश्वर्येति। राज्यैश्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृङ्खलो नित्यं अचलाश्च सम्पदो मन्यते यद्वा अनित्याः सतीरचलाः शाश्वतीर्मन्यते ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

हृषीकेशमिति। पूर्वरीत्या सर्वेन्द्रियाप्यायनस्य किम्वा तेनैव कृपया तादृशस्तुतौ प्रवर्तनस्याभिप्रायेण गीर्भिरित्यधिकपदोपादानं तस्याध्यस्याविवक्षया नृपा इति तादृशस्तुत्या सर्वे नरा रक्षिता इति भावः ॥ ७ ॥

घोरायाः त्वद्वैमुख्यकर्तृत्वेन भयानकायाः संसृतेः पाहि कुतः प्रपन्नान् शरणागतान् नन्वस्त्यस्ति विषयभोगे सुखं मदर्पणेन कथञ्चिन्मुक्तिहेतुत्वञ्च तत्राहुः- निर्विण्णान् भूयो दुःखानुभावाद्विषयसम्बन्धाद्विरक्तान् ननु तदर्थमन्यदेवं प्रार्थयध्वं तत्राहुः देवदेवेश हे ब्रह्मादिप्रभो! इति परमेश्वरत्वेन त्वमेव तत्र योग्यो न त्वन्य इति भावः। नन्वीदृशश्चेदहं तर्हि भवद्विधद्रोहेषु कथं मुखवधानं स्यात्तत्राहुः प्रपन्नेति नन्वेवं चेत्प्रपन्नास्त्वद्भक्ता एव भवेयुस्तत्राहुः, हे अव्यय अक्षयशक्त्यादिक! तत्रापि हे कृष्ण! अहो बतेयमित्यादि प्रसिद्धतादृशमहाकीर्ते इत्यर्थः। भवत्स्वनन्ताः का हानिः प्रत्युत तव कीर्तिर्योग्या एव तु इति भावः ॥ ८ ॥

नैवमिति तैरुक्तादिति। तच्च सपरिहासं ज्ञेयं। मागधमित्यवज्ञोक्तिः। एनमिति प्रत्यक्षं दर्शयन्ति। अन्वादेशप्रयोगात्। तद्दृष्टत्वेनासूयाविषयतया मुहुर्निर्दिष्टमपि नानुसूयामः। असूयेत्यकाराभाव आर्षः। निजराज्यव्यापकत्वेन तु दोषदृष्ट्या न पश्यामः। ततः सुतरामन्यन्तु नैवेत्यर्थः। राज्याच्च्युतिरेवानुग्रहः निजदर्शनादिरूपानुग्रहस्य हेतुरित्यर्थः। हे नाथेति अधुना त्वया सनाथा अपि जाता वयमिति भावः। हे मधुसूदन! इति आदिदैत्योऽप्यसौ त्वया हतः अयं को वराकः। अस्य वधे कोवा तव महिमा। महिमातु दीनानुग्रह एवेति भावः हे विभो! सर्वं कर्तुं समर्थेति तत्रोपोद्घातकम् ॥ ९ ॥

श्रेयः तद्भक्त्यादिरूपं फलं नृपो न विन्दत एव अन्यस्तु कथंचिल्लभेतापीत्यर्थः। यद्वा नृपो नरश्रेष्ठोऽपि न विन्दते तत्र हेतुः राज्येति यतः धनादिसंपत्तीरचला मन्यते ननु प्रत्यक्षादिप्रमाणैरनित्यश्चापि कुतः स्थिरा मन्यते तत्राहुस्त्वदिति अयमेव त्वन्मायाप्रभावः इति भावः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कृष्णसन्दर्शनाय आह्लादस्तेन ध्वस्तः संरोधनश्रमो येषां ते नृपा बद्धाञ्जलयः प्रशशंसुस्तुष्टुवुः ॥ ७ ॥

प्रशंसामेवाह—नमस्त इति नवभिः। देवानां देवो ब्रह्मा तस्यापीश! अनेन परत्वमुक्तं प्रपन्नार्तिहरेत्यनेन वात्सल्यं हे अव्यय! विकाररहितेत्यनेन रागद्वेषादिराहित्यं समत्वं सर्वभूतसुहृत्त्वं च कृष्णेत्यनेन भक्तानां सुखापादनायावतीर्णत्वं प्रपन्नान् पाहीत्यनेन गोप्तृत्ववरणं ननु भवन्तो बन्धाद्विमोचिताः सुख्यन्तु किमर्थमधुना मां प्रपद्यन्त इत्यत आत्मनो विशिंषन्ति, घोरसंसृतेः घोरायाः संसृतेर्निर्विण्णानतः, संसृतेरपि भवान् पात्वित्येतदर्थं प्रपन्ना इत्यर्थः ॥ ८ ॥

ननु, भवन्तो जरासन्धासूयाविष्टाः विषयभोगलालसाश्च कथं संसृतेर्निर्विण्णा इत्याशङ्क्याधुना न वयं तथाभूताः इत्याहुः नैनमित्यष्टभिः। हे नाथ! हे मधुसूदन! एनं मागधं नाभ्यसूयामः अस्मिन् दोषानाविष्कुर्मः किन्तु गुणानेवेति भावः। कुतः इत्यत आहुः—अनुग्रह इति। हे विभो! यद्यस्मादस्माकं राज्याच्च्युतिः भवताऽनुग्रहः जरासन्धमुखेन भवता कारितोऽनुग्रहः एवेत्यर्थः ॥ ९ ॥

कथं राज्यच्युतेरनुग्रहरूपतेत्यत आहुः- राज्येति। राज्यैश्वर्याभ्यां यो मदस्तेन उन्नद्ध उच्छृङ्खलः श्रेयो न विन्दते न लभते किन्तु तव मायया मोहितः अनित्याश्चला अपि सम्पदः भोग्यभोगोपकरणादिसमृद्धीरचलाः शाश्वतीर्मन्यते एवं मन्यमानोऽन्तः स्थावरतां यातीति भावः ॥ १० ॥

---

मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ।
एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥
वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ।
घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वा ऽविगणय्य दुर्मदाः ॥ १२ ॥
त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ।
कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥
अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा ।
उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥
तं नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥
कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ १६ ॥

---

भाषा टीका ।

राज्य के ऐश्वर्य्य मद से उन्मत्त भयो राजा अपने कल्याण को प्राप्त नहि होता किन्तु आपकी माया से मोहित होकर अनित्य संपत्ति को भी अचल मानताहै ॥ ९ ॥

जैसे अज्ञानी लोग मृगतृष्णा को सरोवर आदि मानता है तैसे हि अविवेकी जन माया का कार्य्य भोग संपत्ति को तत्व; वस्तु करके देखते हैं ॥ १०—११ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च अवस्तु सद्वस्तुतया पश्यन्तीत्याहुः—मृगतृष्णामिति । वैकारिकीं, शब्दादिविकाररूपाम् अयुक्ता अविवेकिनः ॥ ११ ॥

राज्यस्य योगवियोगयोरनर्थावहत्वमस्माभिरेव दृष्टमित्याहुः वयमिति द्वाभ्याम् । श्रीमदेन नष्टा दृष्टिर्येषां ते अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्धमानाः पुरः पुरतः स्वा त्वां मृत्युमविगणय्य पुरा ये दुर्मदा वयम् ॥ १२ ॥

हे कृष्ण । त एव वयमद्य विनष्टदर्पास्ते चरणौ स्मरामः स्मर्तुमारभामहे कथम्भूताः भवतस्तन्वा मूर्त्या कालेन श्रियो विचालिताः विभ्रंशिताः अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥ १३ ॥

अत एवाथो अनन्तरं मृगतृष्णिसदृशं राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेनोपासितव्यं सेव्यं न स्पृहयामहे प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं न स्पृहयामहे कथम्भूतम् कर्णयोः रोचनं रुचिजनकमात्रम् तत्र गतस्य स्पर्धाद्यनपगमेन सुखाभावादित्यर्थः ॥ १४ ॥

यद्येवम्भूता यूयं तर्हि मम चरणौ स्मरत ततोऽनायासेन मुक्तिर्भविष्यतीति किं मदपेक्षयेति चेदत आहुः—तं न इति । त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

बाला निर्बुद्धयो हरिणादयः वैकारिकीं विकाराः शब्दादिविषयाः तद्रूपेण परिणतामित्यर्थः । वस्तुतः सत्यरूपायाः अर्थक्रियाकारित्वाद्विना मृगतृष्णातो वैलक्षण्येपि असारांशत्वे दृष्टान्तोऽयम् ॥ ११ ॥

राज्यच्युतेरनुग्रहहेतुत्वेन वयमिति युग्मकम् स्वाः ज्ञातिवत् परिपाल्या अपि प्रजाः परस्परसम्मर्देन घ्नन्तः यतो अतिनिर्घृणा महानिर्दयाः पुर इत्यवश्यं भावित्वात् पित्रादिमरणदृष्ट्यानुभूयमानत्वाच्च पुरतो वर्त्तमानमपि मृत्युं कालरूपेण संहारकं त्वां प्रभोस्तव रूपत्वादेवासौ महाप्रभाव इति व्यञ्जयितुमाह—हेप्रभो इति । अतस्तस्मात् रक्षणे कस्यापि शक्तिर्नास्तीति भावः । तथाप्यविगणय्य अनादृत्य अन्यैः तत्र योगवियोगयोरनर्थावहत्वमिति योगेनार्थावहत्वं वियोगेर्थावहत्वमित्येतद् द्वयं क्रमेण द्वाभ्यामाहेत्यर्थः ॥ १२ ॥

तद्व्यतिक्रमे तु कस्यापिशक्तिर्नास्तीत्याहुः—गम्भीरं दुर्बोधं रंहः वेगो यस्य तेन सूक्ष्मत्वाद्दुर्बोधनिर्गमप्रवेशेनेत्यर्थः । तथा दुरन्तमप्रतिकार्य्यं वीर्यं शक्तिर्यस्य तेन यतो भगवतस्तन्वा शक्त्या भगवत इत्यस्योभवतोऽन्वयः अतस्तेन कृतं यच्छ्रद्धतैवेति तया च विचारतो भवत एवानुकम्पारूपेण हेतुना विनष्टदर्पाः सन्तस्तथैव स्मराम किमर्थं तत्राहुः—कृष्ण ! हे आत्मारामादीनां सर्वेन्द्रियाकर्षकत्वेन तन्नामकेति अनेनेत्थम्भूतगुणत्वमेव महद्भिः सिद्धान्तितं वयं कथं तत्प्रयोजनं कथयेमेति भावः ॥ १३ ॥

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

मृगतृष्णिर्मृगतृष्णा मृगतृड्निरूपितमिति वोपदेवपाठे मृगतृट् मृगतृष्णा किञ्च देहमेति विभो हे स्वामिन्निति त्वयि स्वामिनि लब्धे तत्कथं रोचतामिति भावः ॥ १४ ॥

ननु तर्हि किमिच्छथेत्यपेक्षायामुपक्रमे दैन्येन परोक्षवादेनैवोक्तमपि उपसंहारे परमोत्कण्ठया स्वहृदयमुद्घाट्यैव निवेदयन्ति-तमिति । सम्यक् प्रकारं प्राप्तत्वेन कर्तुं शक्यत्वेन चादिश यथेति तत्र येन प्रकारेण तमप्यादिशेत्यर्थः । यद्वा यथावन्निजेच्छानुरूपा स्मृतिर्न विरमेत् किन्तु सदा सिद्ध्येदित्यर्थः । पूर्वं स्मृतिविघातकत्वेनैव घोरसंसृतितो रक्षणं प्रार्थितम इदानीं यदि स्मृतिः स्यात्तदा सापि भवत्वित्याहुः—इह विविध योनौ संसरतां जायमानानामपीति तत्र स्मृतेरुपायस्यैव न तु साक्षात्तस्य तत्राप्यादेशमेव न तु तत्तत्सिद्धेः प्रार्थनम् इदं विनयभरात्तस्याः अतिगौरवाद्वा किं वा उपायज्ञाने सति तत्स्थैर्ये सिद्ध्येदित्यभिप्रायेणेति पूर्ववत्सर्वथा दैन्यमेव ॥ १५ ॥

तत्प्रार्थनायामप्यात्मनामनर्हत्वादिकमनुसन्धानात्तत्सिद्ध्ये मधुरेण तत्प्रियनामसङ्कीर्तनेनोपसंहरन्तः साष्टाङ्गं प्रणमन्ति कृष्णायेति स्वयं भगवते तत्रच वासुदेवाय सर्वलोककृपया श्रीवसुदेवं प्रकटीकृत्य तस्मात्प्रकटीभूताय अत एव हरये अधिकारानपेक्षया दैत्यादीनामपि संसारदुःखहर्त्रे अपूर्वसौन्दर्यादिना सर्वमनोहराय च किञ्च स्वरूपतोपि परमात्मने तद्रूपत्वात् सर्वेषामपि निरुपाधिप्रेमास्पदायेत्यर्थः । किञ्च प्रणतानां स्वभक्तानां क्लेशो भक्तिविघ्नादिदुःखं तं नाशयति यस्तस्मै स्वभक्तिप्रवर्त्तकाय भक्तवत्सलायेत्यर्थः । तदेव विशिष्य दर्शयन्ति—गोविन्दाय । वनभ्रमणादिनापि कृतगोपालनायेत्यर्थः । नमो नम इति वीप्सया पुनः पुनः प्रणम्य बोध्यन्त ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकारिकीं मायां स्रक्चन्दनादिशब्दादिविकारात्मिकां प्रकृतिं वस्तु चक्षते प्रकृतिपरिणामरूपं भोग्यं नित्यं मन्यत इत्यर्थः ॥ ११ ॥

अस्या भूमेः इतरेतरस्पृधः परस्परं स्पर्धमानाः नष्टबुद्धय इत्यर्थः ॥ १२—१३ ॥

रुजां स्रुवा दुःखोत्पादकेन कर्णयोः रोचनं क्रियाफलमपेक्षमाण इत्यर्थः ॥ १४—१५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वन्मायामोहिताः शाश्वतीर्मन्यत इत्येतदेव सदृष्टान्तमुपपादयन्ति-मृगतृष्णामिति । मृगतृष्णा मरीचिका तामुदकाशयं जलाश्रयं नदीतटाकादिरूपं मन्यन्ते तथा ऽयुक्ताः अविवेकिनो नृपाः वैकारिकीं मायां स्रक्चन्दनादिशब्दादिविकारात्मिकां प्रकृतिं वस्तु चक्षते प्रकृतिपरिणामभोग्यं मन्यन्त इत्यर्थः । अतथाभूतायास्तथात्वावभासे दृष्टान्तः ॥ ११ ॥

तदेवं राज्यादियोगवियोगावनर्थावहत्वमुक्तं तदेतदस्माकमेवहत्वमित्याहुः—वयमिति द्वाभ्याम् । अस्या भूमेः जिगीषया परस्परं स्पर्द्धमानाः अतिनिर्घृणाः नितरां निष्कृपाः वयं पुरस्तात्पुरोवर्त्तिनमित्यर्थः । मृत्युमविगणय्य प्रजाः घ्नन्तः पुरा वै दुर्मदाः ॥ १२ ॥

ते वयमद्य हे कृष्ण ! गम्भीरं रंहः वेगो यस्य दुरन्तमपारं वीर्यं प्रभावो यस्य तेन भवतः तन्वा शरीरभूतेन कालेन विचालिता भ्रंशिता श्रीर्येषां ते तथाभूताः भवतोऽनुकम्पया हेतुभूतया विनष्टो दर्पो येषां ते तव चरणौ निरतिशयपुरुषार्थभूतौ नमाम नतिपूर्वकं शरणं प्राप्ताः स्मेत्यर्थः ॥ १३ ॥

अत इति । राज्यादियोगायोगयोरेवंविधत्वादेवास्माभिः रुजां रोगाणां स्रुवा उत्पत्तिस्थानभूतेन पतता पातिष्यमाणेन देहेन मृगतृष्णिरूपितं मृगतृष्णात्वेन निरूपितं तत्तुल्यमित्यर्थः राज्यं नोपासितव्यं न सेवितव्यम् अनेनात्मनामैहिकविषयविरागः आविष्कृतः तथा हे विभो ! कर्णयोः श्रोत्रयोरेव रोचनं प्रीत्यावहं "अपामसोमममृता अभूमः स एवैनंभूतिं गमयति" इत्याद्यर्थवादैः श्रुतिसुखमात्रावहं नत्वनुभवदशायां पतनभयशङ्कास्पदत्वेन दुःखमिश्रत्वादिति भावः । प्रेत्य लोकान्तरं प्राप्यानुभूयेति शेषः । क्रियायाः श्रौतस्मार्त्तरूपायाः फलं स्वर्गादिरूपं न स्पृहयामहे ॥ १४ ॥

तर्हि किं स्पृहयध्वे इत्यत्र तदाविष्कुर्वन्तः तदनुगृहाणेति विज्ञापयन्ति-तदिति । तत्तस्मात्सकलविषयविरक्तत्वादस्माकं तं इति छेदे तम् उपायं समादिश देहि कोसौ ? येनोपायेनास्माकमिह प्रकृतिमण्डले संसरतामपि यथा तव चरणाब्जयोर्विषयभूतयोस्स्मृतिर्न विरमेन्न विच्छिन्ना भवति तथाऽनुगृहाणेत्यर्थः ॥ १५ ॥

एवं स्वाभिप्रायमाविष्कृत्य तन्निष्पत्तिनिदानभगवत्प्रसादोपायोऽञ्जलिरेवेत्यभिप्रयन्तो मन्त्रविशेषेण नमस्कुर्वन्ति-कृष्णायेति । प्रणतानां प्रणतिमात्रं कुर्वतां क्लेशं नाशयतीति तथा तस्मै ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतमर्थं निदर्शयति—मृगतृष्णामिति । मृगतृष्णाम् अम्बरप्रदेशसंसृष्टदिवाकरकरनिकरं दृष्ट्वा उदकाशयं जलाधारं जलपूर्णमित्यर्थः । एवमयुक्ता मनोयोगाकुशलाः अज्ञाः वैकारिकीं विकारोपेताम् अनित्यां मायां "गो अश्वमहिमेत्याचक्षते" इतिश्रुतेर्महिमानं सम्पल्लक्षण वस्तु प्रतिहतिरहितं नित्यं चक्षते पश्यन्ति॥११

अस्याः जगत्याः ये वयं पुरः स्थितं मृत्युं त्वामगण्य्य स्थिताः ॥ १२ ॥

ते च वयं कालेन श्रियो विचालिता अभूम तत्तस्मात् भवतोऽनुकम्पया चरणौ स्मरामहे ॥ १३ ॥

रजोभुवा रजोगुणोत्पन्नेन शश्वत्पतता देहेन राज्यं नोपासितव्यमिति स्पृहयामहे प्रेत्य यत्क्रियाफलं स्वर्गादिकं तदपि न कामयामहे कीदृशं कर्णरोचनं श्रवणसुखजनकमापातरमणीयमित्यर्थः ॥ १४ ॥

येनोपायेन ॥ १५-१७ ॥

---

